चौखम्बा संस्कृत सीरीज

६४

श्रीवल्लभाचार्यविरचिता

# न्यायलीलावती

काशीहिन्दूविश्वविद्यालयाध्यापक

पण्डितश्रीधुण्डिराजशास्त्रिणा टिप्पण्यादिभिः सम्पादिता।



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी के संस्करण से पुनर्मुद्रित एवं प्रकाशित

चौखम्बा संस्कृत सीरीज

६४

****

श्रीवल्लभाचार्यविरचिता

# न्यायलीलावती

श्रीभगीरथठक्कुरकृतविवृतिसनाथेन श्रीवर्धमानो-
पाध्यायकृतप्रकाशेन समुद्भासिता
श्रीशङ्करमिश्ररचितकण्ठाभरणेन च समन्विता

काशीहिन्दूविश्वविद्यालयाध्यापकेन
पण्डित श्रीहरिहरशास्त्रिणा टिप्पण्यादिभिः सम्पादिता।





चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

१९९१

प्रकाशक : चौखम्बा संस्कृत सीरीज आफिस, वाराणसी
मुद्रक : चौखम्बा प्रेस, वाराणसी
संस्करण : द्वितीय, वि० सं० २०४८
मूल्य : रू० ७७-०० ( रुपये सतहत्तर )

The Publication has been brought out with the Financial assistance from the Govt. of India, Ministry of Human Resource Development.


के० ३७/९९, गोपाल मन्दिर लेन
पो० बा० १००८, वाराणसी–२२१००१ ( भारत )
फोन : ३३३४५८

अपरं च प्राप्तिस्थानम्
कृष्णदास अकादमी
पो० बा० नं० १११८
चौक, ( चित्रा सिनेमा बिल्डिङ्ग ), वाराणसी–२२१००१
( भारत )
फोन : ६२१५०

REPRINTED AND PUBLISHED FROM THE EARLIER EDITION OF CHOWKHAMBA SANSKRIT SERIES OFFICE, VARANASI.

---

CHOWKHAMBA SANSKRIT SERIES

64

****

# NYĀYA LĪLĀVATĪ

BY

VALLABHĀCHĀRYA

*With the Commentaries of Vardhamānopādhyāya, Śaṅkara Miśra and Bhagīratha Ṭhakkura*

Edited by

PANDIT HARIHARA ŚĀSTRĪ

Lecturer, Banaras Hindu University



( If any defect is found in this book, please return the copy by V. P. P. for postage to the publisher for exchange free of cost. )

CHOWKHAMBA SANSKRIT SERIES OFFICE

VARANASI–221 001

1991

K. 37/99, Gopal Mandir Lane
Post Box No. 1008, Varanasi-221001 ( India )
Phone : 333458

Second Edition
1991

Price : Rs. 77-00 ( Rs. Seventy Seven )

The Publication has been brought out with the Financial assistance from the Govt. of India, Ministry of Human Resource Development.

Also can be had from
**KRISHNADAS ACADEMY**
Oriental Publishers & Distributors
Post Box No. 1118
Chowk, ( Chitra Cinema Building ), Varanasi-221001 (India)
Phone : 62150

# भूमिका ।

## ( न्यायलीलावतीप्रकाशनोपक्रमः । )

'अतिसंक्षिप्तचिरन्तनोक्तिभिः' इति सिद्धान्तमुक्तावलीकारिकास्थस्य अतिसंक्षिप्तपदस्य व्यावृत्तिमभिदधता महादेवभट्टेन दिनकर्यां 'ननु लीलावत्यादिप्राचीननिबन्धाध्ययनेनैव कारिकावलीप्रतिपादितोऽर्थो बोद्धव्य इति किमनेन भवत्कृतविशदनिबन्धनेनेत्यत आह अतिसंक्षिप्तेति' इत्युक्तम् । अध्ययनकाल एव तदवलोक्य कोऽसौ लीलावतीग्रन्थः, कश्च लीलावतीकार ? इत्युत्कलिकाकुलेन मया कालान्तरे मोहमयीस्थनिर्णयसागरयन्त्रालयात्प्रकाशितं श्रीमद्वल्लभाचार्यविरचितं न्यायलीलावतीनिबन्धं दृष्ट्वा सैवेयं लीलावतीति गुरुमुखादवधारितम्, किन्तु प्रशस्तपादभाष्यस्य निखिलटीकानिबन्धेभ्योऽस्या दुरूहरचनावत्त्वान्मुद्रितस्य पुस्तकस्य निष्टीकत्वात्प्रायशोऽशुद्धतया च पदार्थोद्देशविभागपरीक्षाप्रकरण एव कुंठितमतिना मया प्रातःस्मरणीयास्तातकल्पा गुरुवर्यं म० म० पं० अम्बादासशास्त्रिणो भूयोभूयस्तदध्यापनार्थं प्रार्थिता अपि नायं ग्रन्थो टीकासाहाय्यं विना यथावदध्यापयितुमर्हं इति श्रुत्वा निर्विण्णेन तूष्णींबभूवे । अनन्तरमस्मत्सौभाग्येन काशीस्थराजकीयसंस्कृतपाठशालीयमुख्याध्यक्षैः दार्शनिकप्रवरैः पण्डित गोपीनाथ कविराज एम, ए महोदयैः प्रोत्साहिता हिन्दूविश्वविद्यालये उपदेशकपदमलंकुर्वन्तस्तत्रभवन्तो हरिहरशास्त्रिणो वाराणसेयचौखम्भासंस्कृतसीरीजपुस्तकमालाध्यक्षश्रीजयकृष्णदासगुप्तमहोदयानामादेशेनेमां श्रीशङ्करमिश्रकृतलीलावतीकण्ठाभरणेन, भगीरथठक्कुरविरचितविवृतिसमुद्भासित—वर्धमानोपाध्यायविनिर्मित—न्यायलीलावतीप्रकाशेन च समेतां न्यायलीलवतीं संस्कृत्य प्रकाशयितुमारेभिरे । व्याप्तिपरीक्षाप्रकरणपर्यन्तं प्रकाशितायामस्यामस्माकं विद्वज्जनसमाजस्य च दुर्दैववशतोऽकाण्ड एवोक्तविद्वद्वर्ये दिवं गते तत्कृत्ये प्रकाशकमहोदयैरहं नियोजितोऽभूवम् । एतत्संशोधनसाहाय्यकारिणामादर्शमूलपुस्तकादीनामुपलब्ध्यादिविषयः प्रथमखण्डीयनिवेदन एव प्रथमसंशोधकमहोदयैर्न्यवेद्यतस्ततिपिष्टपेषणमयुक्तं मत्वा तत्प्रतिज्ञातं टीकाप्रणेतृवृन्दसहितानां मूलकृतां कालादिनिरूपणमधिकृत्य यथोपलब्धमधुना विचारयामः ।

## ( वल्लभाचार्यसमयसंस्तवादिनिरूपणम् )

तत्र तावद्वैशेषिकराद्धान्तोक्तपदार्थपरीक्षणमूलनिबन्धरूपोऽयं वल्लभाचार्यनिबद्धो(१) न्यायलीलावतीग्रन्थः प्रशस्तदेवाचार्यकृतभाष्यवृत्त्यष्टकेष्वन्यतमो तद-

( १ ) टीकाकर्तृसमयपरिचयादिकमन्यत्र किरणावलीभूमिकादावनेकैरितिहासमर्मज्ञैर्निरूपितमित्युपेक्षितमस्माभिः ।

न्यो वेत्यनिर्णयेनैवास्माभिर्व्योमवतीसूक्तिसेतुव्याख्यानत्रयसमलङ्कृतस्य काशीस्थ-चौखम्बासंस्कृतपुस्तकमालायां प्रकाशितस्य प्रशस्तपादभाष्यस्य भूमिकायां लीलावत्यपि मुद्रितेति अतथ्यमेव प्रलपितम्, यतो कन्दलीव्याख्यातृभी राजशेखरजैनाचार्यैः पञ्जिकाख्यायां न्यायकन्दलीव्याख्यायां वक्ष्यमाणप्रकारेण भाष्यटीकाकाराणां क्रमोऽवधारितः—

'इह किल पूर्वमजिह्मब्रह्माभ्यासदूरीकृतप्रमादाय मुनये कणादाय स्वयमीश्वर उलूकरूपधारी प्रत्यक्षीभूय द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणं पदार्थषट्कमुपादिदेश, तदनु स महर्षिर्लोकानुकम्पया षट्पदार्थरहस्यप्रपञ्चनपराणि सूत्राणि रचयाञ्चकार। तेषु सूत्रेषु प्रशस्तदेवकरो भाष्यं सकृद्गुणनमात्रेण महोग्रदष्टकविषापहारदृष्टलोकोत्तरवैभवं चकार। तत्र चतस्रो वृत्तयो निर्वृत्ताः। एकां व्योमवतीनाम्नीं वृत्तिं व्योमशिवाचार्यो जुगुम्फ, द्वितीयां तु न्यायकन्दल्यभिधानां श्रीधराचार्यः सन्दर्भ, तृतीयां किरणावलीनाम्नीमुदयनाचार्यस्ततान, चतुर्थीं तु लीलावतीतिख्यातां श्रीवत्साचार्यो बबन्ध। चतस्रोऽपि गम्भीरार्थास्तत्रेमां न्यायकन्दलीं प्रारभमाणः श्रीधरदेव' इत्यादिना। एतेन श्रीवत्सकृता लीलावती वल्लभाचार्यविरचितन्यायलीलावतीतो भिन्नाऽद्यावत् केनाप्यनुपलब्धापि अवश्यं दार्शनिकसृष्टौ वर्तत इत्यवधार्यते। एवञ्चायं प्रकृतनिबन्धो न भाष्यव्याख्यारूपः किन्त्वाचार्यवर्यैर्वल्लभैः स्वप्रतिभया स्वातन्त्र्येण वैशेषिकराद्धान्तसिद्धपदार्थपरीक्षणार्थं स्वमताविष्करणार्थञ्चान्यवैशेषिकनिबन्धेभ्यो विलक्षणो नूतनशैल्या निबद्ध इति विद्वांसस्तत्पठनेन स्वयं निर्धारयिष्यन्ति। वयमपि यथामति तद्विषयमवलम्ब्यानुपदमेव विवेचयिष्यामः।

एष च मिथिलादेशजातो विद्वद्वरेण्यः लीलावत्यां किरणावलीकर्तुर्महानैयायिकस्य श्रीमदुदयनाचार्यस्य नामोल्लेखात् दशमशताब्द्यां वर्तमानात् ततोऽर्वाचीनः, द्वादशशताब्द्यारम्भे कृतस्थितिना वर्धमानोपाध्यायेन व्याख्यातत्वाच्च ततः प्राचीनो ख्रीष्टीय ९८४ तथा ११७८ वर्षयोर्मध्य आसीत्। उदयनाचार्यादीनां मैथिलेयानां नैयायिकानां मिथिलोद्भवत्वेन तत्र न्यायशास्त्रस्य बाहुल्येन प्रचाराच्च कदाचिद्वल्लभाचार्यस्यापि मैथिलत्वं सम्भाव्येत। वर्धमानोपाध्यायकृतो न्या० ली० प्रकाशः(१) रघुनाथशिरोमणिप्रणीतो न्या० ली० दीधितिः(२) शंकरमिश्रविरचितं कण्ठाभरणं(३)चेति टीकात्रयमेवास्या न्यायलीलावत्या इति मोहमय्यां मुद्रिते मूलमात्रन्यायलीलावतीनिबन्धप्रस्तावे मञ्जेश्वरामकृष्णतैलङ्गप्रवरा आहुः। तन्मन्दम्। उदयनाचार्यादर्वाचीनत्वस्य वर्धमानोपाध्यायात्प्राचीनत्वस्य चापाततोऽवधारयितुं शक्यत्वेऽपि निर्दिष्ट एव समये प्रबलप्रमाणाभावात् मैथिलेयत्वे प्रमाणसद्भावात्तत्र टीकात्रयकर्तृत्वेन चायुक्तत्वादिति ब्रूमः।

केचित्तु गङ्गेशोपाध्यायकृतात् तत्त्वचिन्तामणेः परं विश्वनाथकृतसिद्धान्तमुक्तावल्याः पूर्वं चाध्ययनाध्यापनादौ न्यायलीलावतीनिबन्ध एव न्यायवैशेषिकप्रकरणग्रन्थेषु प्रचलित आसीदिति पूर्वप्रदर्शितदिनकर्तुः केश्चित्छवीकारकृतवल्लभमतखण्डनदर्शनाद्यावगम्यतेऽतस्त्रयोदशशताब्दी चतुर्दशशताब्दी वा न्यायलीलावतीकर्तुः समय इति वदन्ति ।

तदतीवान्याय्यम्, यतः सप्तपदार्थीनिबन्धप्रणेतुः शिवादित्यस्योल्लेखात् वैशेषिकदर्शनावलम्बिनो रत्नकोशाख्यमहानिबन्धकृतस्तस्योद्धर्तुः ख्रीस्त्वीयपञ्चशताधिकैकादशशतसंवत्सरादूर्ध्वं श्रीहर्षसमकालिकतया वा द्वादशशताब्द्या अन्तिमे भागे वर्तमानस्य गङ्गेशोपाध्यायस्य तनूजन्मना ( 1250 A. D. ) त्रयोदशशताब्द्यां वसता वर्द्धमानोपाध्यायेन प्रकाशाख्यव्याख्यया समलंकृतेयं न्यायलीलावतीत्यत्र न केषाञ्चिदपि वैमत्यम् ।

वस्तुतस्तूक्तरीत्योदयनवर्द्धमानयोर्मध्यकाल एव सम्भवत्स्थितिकस्य वल्लभाचार्यस्यान्तरालिकनिर्देशाईसमयावधारणहेतोरभावेऽपि

उदयनबलभद्राभ्यां सप्तशतीशिष्यसोदराभ्यां मे ।
द्यौरिव रविचन्द्राभ्यां प्रकाशिता निर्मलीकृत्य ॥

इति शृङ्गारसप्तशत्यां गोवर्धनाचार्योक्त्या बलभद्राख्यस्तच्छिष्य एव वल्लभाचार्य इति नाम्ना विख्यातोऽभूदित्यनुमीयते । गोवर्धनाचार्यश्च

ख्यातो गोवर्धनाचार्यो उमापतिधरस्तथा ।
शरणो जयदेवश्च धोयी कविनृपः क्रमात् ।
राज्ञा लक्ष्मणसेनस्य पञ्चरत्नानि संसदि ॥

इति पञ्चरत्नोक्त्या लक्ष्मणसेनस्य राज्ञः सभापण्डिता आसन्निति निष्पद्यते । लक्ष्मणसेनसमयस्तु न्यायवार्तिकभूमिकायां म० म० विन्ध्येश्वरीप्रसादद्विवेदिभिः १०२९ शाकाब्दोऽवधारितः, तथाच तत्समकालस्य बलभद्रापरनाम्नो वल्लभाचार्यस्यापि एकादशशताब्द्येव काल इति सङ्गच्छते । एवं चाचार्यवल्लभाः गंगेशोपाध्यायसमकालीनास्तत्पूर्वकालीना एव वेति वक्ष्यामः । अत्र च गोवर्द्धनाचार्यस्य भ्रातोदयनाचार्य एव लक्षणावल्यादिनिबन्धप्रणेता इति न भ्रमितव्यम्, 'तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः' इत्यादिलक्षणावलीनिर्दिष्टसमयस्यास्य च समयस्य महदन्तरसत्त्वात् । यतश्च न्यायलीलावतीकर्तुर्वल्लभस्य केवलमाचार्य इति गुरुसम्प्रदायाधिगता बिरुदावली सर्वपुस्तकेषूपलभ्यते नैयायिकतया कुशाग्रबुद्धित्वात् रविणोपमितश्च श्रीमता गोवर्धनाचार्येणाऽतोऽपि न बलभद्रस्य वल्लभत्वसम्भावनायां काचित्क्षतिरिति । एवंसति न्यायलीलावतीग्रन्थकर्ता वल्लभाचार्य एकादशशताब्द्यामेव मिथिलादेशे बभूवेति आधुनिकानां मैथिलविदुषां राद्धान्त एव निरवद्यः प्रतिभाति ।

## ( ग्रन्थरचनाशैली विषयसमालोचनाच )

'त्रिविधा चास्य शास्त्रस्य वृत्तिः' इति समानतन्त्राचार्यप्रवरवात्स्यायनमहर्ष्युक्तिं प्रमाणयता वल्लभाचार्येण वैशेषिकसिद्धान्तसिद्धपदार्थानामुद्देशाख्यां लक्षणाख्यां च प्रवृत्तिं प्रशस्तपादभाष्यलक्षणावल्यादिनिबन्धैर्गतार्थां मन्यमानेन परीक्षाख्यैव तार्तीया प्रवृत्तिः प्राधान्येनावलम्बिताऽत्र न्यायलीलावतीनिबन्धे । तत्र च प्रथमे विभागपरिच्छेदे 'षडेव पदार्थाः' ( पृ० १० पं० १ ) इत्याद्युपक्रमेण पदार्थोद्देशविभागपरीक्षां विदधताऽऽचार्येणा(१)भाव(२)तमः(३)क्षणिक(४)शक्ति(५)ज्ञातता(६)ऽऽधाराधेयभाव(७)सादृश्याख्यानां सप्तपदार्थानामतिरिक्तत्वमाशंक्य यथा पदार्थान्तरत्वखण्डनं प्राचीनशैल्या विहितन्तथा नान्यत्र मूलनिबन्धग्रंथेपूपलभ्यत इति स्वयमेव ज्ञास्यन्ति पाठकाः । एवमेवाग्रे 'पृथिव्यादीनां द्रव्यत्वाद् गुणवत्त्वाद्वा भेदः' ( पृ० ८८ पं० १ ) इत्याद्युक्त्या पदार्थानां न्यूनत्वमपि संभवतीत्यभिप्रायेण पदार्थोद्देशविभागाक्षेपतत्समाधानपरिपाट्यपि वल्लभाचार्याणामेव नान्येषामद्ययावदुपलब्धानां वैशेषिकदर्शननिबन्धकाराणामित्यपि सुव्यक्तम् । तथा द्रव्यविभागपरीक्षायामपि केवलं पृथिव्यादिपरीक्षाक्रम एव न्यायलीलावतीकारेणावलम्बितो न लक्षणोद्देशवर्णनक्रम इत्यपि नूतनमेवान्यनिबन्धेभ्यः । तत्राप्यवयविपरीक्षायां परमाणुपुञ्जवादिबौद्धमतखण्डनप्रकारो व्यासत इहैव यादृगुपलभ्यते नान्यत्र तथा । बहिरिन्द्रियशरीरविषयाणां द्रव्यान्तरत्वाक्षेपाभिप्रायेण द्रव्यविभागपरीक्षा सृष्टिसंहारविधिस्थप्रलयपरीक्षा परमाणूनां द्रव्यान्तरत्वाक्षेपसमाधानपरलीलावतीस्थपरीक्षाप्रकरणं चातीवहृदयङ्गमं नैयायिकसचेतसाम् । एवं भूषणमतखण्डनपूर्वकं प्राचीनार्वाचीनप्रणाल्या कालदिशोः परीक्षायां क्षणिकविज्ञानसन्ततिपक्षनिरासद्वाराऽऽत्मन इतरभेदसाधने, मनस इतरभेदसाधने च वल्लभाचार्यपरिगृहीता शैली नवीनैव ।

गुणविभागपरीक्षायामपि द्वित्वादिसंख्यास्थापने भासर्वज्ञमतखण्डनं दीर्घत्वपरिमाणविशेषस्यास्वीकारो द्विपरत्वप्रतिबन्दीनिरासद्वारा द्विपृथक्त्वव्यवस्थापनमवयववर्तिना संयोगाभावेनावयविनि संयोगस्य सादेश्यव्यपदेशविषयत्वमात्रस्यैवाव्याप्यवृत्तित्वव्यवहारनिबन्धनत्वात्संयोगस्यापि वस्तुतो व्याप्यवृत्तित्वमिति च सर्वतन्त्रस्वतन्त्राणां वल्लभाचार्याणां स्वतंत्रं स्वमतमेव । एवं परत्वापरत्वयोः परीक्षायां किरणावलीकारमतनिरसनं भूषणकारमतस्य कणभक्षपक्षाक्षमामात्रविजृंभितत्वप्रदर्शनं चातीव चमत्कारकारि । प्रत्ययमात्रेषु यथार्थत्वं मन्यमानानां गुरुमततत्त्ववेदिनां मतस्य निरासोऽन्यथाख्यातिस्थापनं च विपर्ययपरीक्षायां, भूषणमतखण्डनपूर्वकमनध्यवसायस्थापना, स्वप्नाख्याविद्यास्थापनपूर्वकं बाह्यार्थभङ्गवादिमतखण्डनं, प्रत्यक्षपरीक्षायां सर्वज्ञप्रत्यक्षावधारणप्रक्रिया

चान्यत्राहष्टचरी विशेषतो विदुषां रुचिकरीति वदामः । तथा चार्वाकमतखण्डन-द्वाराऽनुमानप्रामाण्यव्यवस्थापने संक्षेपत उदनाचार्योक्तानुपाधिस्वरूपव्याप्तेः पूर्वपक्षी-यैकमात्रव्याप्तेश्च निरासपूर्वकं कात्स्न्र्येन साधनस्य साध्यसंबंधरूपव्याप्तिस्वरूपस्य निरूपणे तज्ज्ञापकानुपाधिकत्वकथनेऽत्यतिप्राचीना प्रौढयाऽऽया च निबन्धनशैली गंगे-शोपाध्यायकृतामतिविस्तृतां व्याप्तिनिरूपणरीतिमत्यतिशेतेऽतो गङ्गेशोपाध्यायाद्वल्ल-भाचार्याः पूर्वकालीना इत्युक्तौ न किञ्चिदप्यसमञ्जसं स्यात्। तत्र तावल्लीलावती-निबद्धस्य 'नापि साध्याभावविरोध' ( पृ० ९०० पं० १ ) इत्येकपूर्वपक्षि-व्याप्तिनिरूपणस्यैव कृत्स्नः पूर्वपक्षिव्याप्तिसमुदायो गंगेशोपाध्यायेन स्वमतिवै-भवेन प्रसारितोऽन्ते चानौपाधिकत्वरूपव्याप्तिस्थापनं टीकाकृदभिमतोक्तविधव्याप्ति-निरासश्चोभयत्रापि समान इति च न्यायलीलावतीं निभृतमवलक्ष्यैवांशोऽयमेतावतीं दुरूहतां नव्यशैल्या प्रापित इति प्रतिभाति । यतस्तत्पुत्रेण वर्धमानोपाध्यायेन न्यायलीलावतीकारप्रदर्शितस्य 'का पुनर्व्याप्तिः ? साधनस्य साहित्यं का-त्स्न्र्येन' ( पृ० ४९६ पं० १ ) इति ग्रन्थस्य व्याख्यानं विदधता 'नन्वेकव्य-क्तिकव्याप्तौ न कात्स्न्र्यार्थः, अनेकव्यक्तिकेऽपि स लधूमसम्बन्धस्य प्रत्येकं वह्न्यावभावः, अत एव न कृत्स्नेन साध्येन साधनस्य सम्बन्धो व्याप्तिः, विषमव्याप्ते तदसम्भवाच्च' (पृ० ४९६ पं० १७) इत्याद्यारभ्य सिद्धा-न्त्यभिमततदर्थप्रदर्शनपर्यन्तं, तत्त्वचिन्तामणौ धृतस्य 'नापि कात्स्न्र्येन सम्बन्धो व्याप्तिः एकव्यक्तिके तदभावात्, नानाव्यक्तिकेऽपि सकलधूमसम्ब-न्धस्य प्रत्येकवह्न्यावभावात, अत एव न कात्स्न्र्येन साध्येन सम्बन्धो व्याप्तिः विषमव्याप्ते तदभावाच्च' ( क० मु० पु० पृ० ३ पं० २३ )-इत्यादिपाठस्यैव 'अत्रोच्यते' इत्यादिग्रन्थपर्यन्तं प्रायश आनुपूर्व्यैवोल्लेखः कृतः । एवं सिद्धान्तलक्षणीये—'यत्संबंधितावच्छेदकरूपवत्वं यस्य तस्य सा व्याप्तिः, तथाहि धूमस्य वह्निसम्बन्धित्वे धूमत्वमवच्छेदकं धूममा-त्रस्य वह्निसम्बन्धित्वात्, वह्नेस्तु धूमसम्बन्धे न वह्नित्वमवच्छेदकं धूमासम्बन्धिनि गतत्वात्, न ह्यतिप्रसक्तमवच्छेदकं संयोगादौ तथा-त्वादर्शनात्, किंत्वार्द्रेन्धनप्रभववह्नित्वं धूमसंबन्धितावच्छेदकं, ता-दृशं च व्याप्यमेव । यद्वा यत्समानाधिकरणान्योन्याभावप्रतियोगि यन्न भवति तेन समं तस्य सामानाधिकरण्यम्' ( पृ० ४९८ पं० ८ ) इत्यादिग्रन्थेन न्यायलीलावतीप्रकाशे प्रदर्शिते व्याप्ती अपि तत्त्वचिन्तामणिस्थ ( क० मु० पु० पृ० ९—६ )सिद्धान्तव्याप्तिलक्षणद्वयावानुपूर्व्याऽक्रमं समुद्धृते । व्याप्तिवत्तर्कविषयः सिद्धान्तोऽपि न्यायलीलावतीनिबद्धो चिन्तामणिसम्वादीति सूक्ष्मदृष्ट्या विचार्यमाणेऽवश्यं बुद्धिमारोहतीति कृतमप्रासंगिकविचारेण ।

एवमग्रेऽपि वैशेषिकमतसिद्धप्रमाणद्वयस्थापनाय शब्दादिमानान्तरभङ्गविकल्पे

किरणावलीकारमतखण्डनम्, अनुपलब्धिनिरासे मीमांसकमतखण्डनप्रौढप्रदर्शन-पूर्वकमभावतद्विभागपरीक्षाक्रमश्च वल्लभाचार्याणामाचार्यत्वमन्वर्थयतीत्यत्र न कश्चित्सन्देहः । अपवर्गपरीक्षायामत्यभावप्रसङ्गसङ्गतायां वेदान्तित्रिदण्डिभट्टाद्यभिमतमुक्तिपदार्थनिरसनपूर्वकं दुःखप्रागभावरूपापवर्गस्य पुरुषार्थत्वसाधनं, द्व्यवयववादिजैनमतखण्डनपूर्वकं पंचावयवस्थापनं, हेत्वाभासपरीक्षणान्ते स्मृतेर्मानान्तरत्वनिरासपूर्वकं युक्त्याऽतीन्द्रियस्यापि गुरुत्वस्येन्द्रियप्रवृत्तिविषयत्वसाधनं चाचार्यवल्लभस्यालौकिकमेवान्यत्रानुपलंभात् । तथाऽग्रे प्रोक्षणादिजन्यसंस्कारखण्डनपूर्वकन्तत्त्रैविध्यस्थापनं शब्दे द्रव्यत्वसाधकानुमाननिरासपूर्वकं गुणत्वस्थापनं, स्फोटवादिवैयाकरणमतखण्डनं च यद्यप्यन्यत्रोपलभ्यते, तथापि रूप्यादिचतुर्विंशत्यतिरिक्तगुणाक्षेपसमाधानपूर्विका गुणनियमनशैली नान्यत्र कुत्रचिदीदृशी भाष्यादिप्राचीननिबन्धेषूपलभ्यत इत्ययमपि विशेषो गुणपरीक्षायामतीव हृदयङ्गमः ।

कर्मविभागपरीक्षान्तेऽतद्व्यावृत्तिरेव जातिर्नान्या वस्तुभूतेति बौद्धमतखण्डनरीतिः, परापरातिरिक्तसामान्याक्षेपसमाधानप्रकारश्च, प्राचीनवैशेषिकारहस्योद्घाटनपरोऽतीवप्रौढपाण्डित्यप्रकाशको न्यायलीलावतीकाराणाम् । एवमेव समवायपरीक्षायां विशेषणताविशेष्यतयोः स्थलविशेषान्तर्भावेण स्वरूपभेदकथनपूर्वकं समवायस्य वैशेषिकमतेऽप्रत्यक्षत्वेऽपि समानतन्त्रषोडशपदार्थमतमाश्रित्य महताऽऽडम्बरेण प्रत्यक्षत्वव्यवस्थापनं च विभागपरिच्छेदेऽत्यन्तमुपादेयो न्यायलीलावत्याः गौरवव्यविधायको भागविशेषः । व्यतिरेकिरूपवैधर्म्यज्ञानाधीनस्य व्यावृत्तत्वेन पदार्थज्ञानस्यैव तत्त्वज्ञानत्वात् व्यतिरेक्यनुमानपरीक्षापूर्वकं 'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्' इत्यभियुक्तोक्तेर्विवेचनद्वारा सकलपदार्थानां प्रातिस्विकलक्षणवर्णनस्यान्ते संशयस्य महर्षिवात्स्यायनोद्योतकराभिमतपंचत्रिधत्वत्रैविध्यखण्डनपूर्वकं परमन्यायाचार्यवाचस्पतिमिश्रमतखण्डनं भूषणमतनिरासपूर्वकं प्रमाणसामान्यलक्षणं च वैधर्म्यपरिच्छेदे वल्लभाचार्येण स्वमतिप्रागल्भ्यादवोट्टङ्कितम् ।

साधर्म्यस्यान्वयिहेतुत्वेनात्मतत्त्वावबोधकत्वात्तत्परिच्छेदेऽस्तित्वादिसाधर्म्यपरीक्षणान्ते हेतुफलभावानङ्गीकारे आत्मादितत्त्वाव्यवस्थितौ न निःश्रेयसप्राप्तिरिति सङ्गत्या द्रव्यादिप्रक्रियापरिच्छेदे सिंहावलोकनन्यायेन द्व्यणुकसिद्ध्याक्षेपसमाधानयुक्तीनां पिठरपाकमापक्षितां पीलुपाकयुक्तीनां च प्रदर्शनद्वारा पाकजप्रक्रियावर्णनम्, अन्ते द्वित्वाद्युत्पत्तिप्रक्रियाक्षेपसमाधानाय संख्याप्रक्रियाप्रदर्शनम्, 'बाधकाभावात् द्व्यणुकपरिमाणमेव त्रसरेणुपरिमाणजनकमस्त्वि'त्याक्षेपस्य 'चातुर्विधमपि जन्यपरिमाणं संख्यापरिमाणप्रचयजन्यमि'ति भाष्याक्षेपस्य च समाधानार्थं परिमाणप्रक्रियाप्रदर्शनम्, द्विपृथक्त्वसाधनाय पुनः पृथक्त्वप्रक्रियाया संयोगविभागादिपरीक्षणाय च संयोगादिसंस्कारान्तप्रक्रियायाश्चान्ते प्रदर्शनमित्येव-

मेकविधस्यापि पदार्थस्य स्थलान्तरे वर्णनात्मिका सूत्रकारशैली वल्लभाचार्येण किमिति समवलम्बितेति स एव जानात्यस्य प्रयोजनम् ।

## ( न्यायलीलावत्या भाष्यातिशायिविषयत्वम् ) ।

एवञ्चोक्तरीत्याऽभावादिनिरूपणं प्रगाढपाण्डित्येन विवेचयता वल्लभाचार्येण न्यायलीलावतीनिबन्धः प्रशस्तपादीयधर्मसंग्रहापरपर्यायभाष्यनिबन्धविषयातिशायित्वाद्दार्शनिकसृष्टौ प्रख्यातिं नीतस्तत्त्वचिन्तामण्यादिमहानिबन्धाऽध्ययनाऽध्यापनात्पूर्वकालमारभ्य मिथिलायां वङ्गदेशे च पठनपाठनादावत्यन्तप्रचलितो बभूवेति श्रूयतेऽवधार्यते च तदुपरिलिखिताभिस्तद्देशीयप्रसिद्धनैयायिकैर्व्याख्यानपरम्पराभिर्यतोऽत्राऽद्यावत्

( १ ) न्यायलीलावतीविवेकः ( पक्षधरमिश्रकृतः ) (1275) A. D
( २ ) न्या० ली० रहस्यम् (मथुरानाथतर्क० कृतम् ) (1570) A.D.
( ३ ) न्या० ली० विभूतिः (रघुनाथशि० कृता)(1477-1547)A. D
( ४ ) न्या० ली० प्रकाशः ( रामकृष्णभट्टाचार्यकृतः )
( ५ ) न्या० ली० वर्धमानेन्दुः ( वाचस्पतिमिश्र ) (1450) A. D
( ६ ) न्या० ली० कण्ठाभरणम् ( शङ्करमिश्रकृतम् ) (1450) A. D
( ७ ) न्या० ली० प्रकाशः ( वर्धमानोपाध्यायकृतः ) (1250)

इति सटीकाः पुरातन्य उपलभ्यन्ते । प्रकाशव्याख्यानस्यापि मथुरानाथतर्कवागीशकृतं रहस्यं( १ ) रघुनाथशिरोमणिकृता दीधितिः ( २ ) भगीरथठक्कुरकृता विवृति( ३ )श्चेति तिस्रो व्याख्या विहिताः ।

## ( उपसंहारः । )

एवमुक्तविशेषैरत्युत्कृष्टस्याऽस्य न्यायलीलावतीनिबन्धस्य दुर्घटे संशोधनकार्येऽस्मदीयमित्रवरैः व्याकरणाचार्यैः पण्डितप्रवरहारानचन्द्रशास्त्रिभिर्विषमस्थलाक्षरसंयोजनव्याख्यादिना सम्यगनुगृहीतोऽस्मि, तथा काशीश्वरराजकीयसंस्कृतपाठशालाध्यक्षपण्डितगोपीनाथकविराजमहोदयैश्च वल्लभाचार्याणामैतिह्यविषये बहुप्रबोधितोऽभूवन्तेनैतयोरुपकृतिं शिरसा वहन् यदत्र प्रमादादिजन्यं दोषजातं दृश्येत तत्सहृदयैः सद्भिः क्षन्तव्यम् इति प्रार्थ्यते—

वसन्तोत्सवः । १९९० | विदुषामनुचरः । ढुण्ढिराजशास्त्री ।

श्रीमद्वल्लभाचार्यकृतन्यायलीलावतीनिबद्ध—

# प्रकरणानां सूचीपत्रम् ।

## ( १ ) विभागपरिच्छेदे —

पृष्ठात् पृष्ठान्तम्

## (२) वैधर्म्यपरिच्छेदे—



## (३) साधर्म्यपरिच्छेदे—



## (४) प्रक्रियापरिच्छेदे—



७५ प्रकरणानि ।

॥ श्रीः ॥

# सटीकन्यायलीलावत्या विषयानुक्रमणिका ।

## ( १ ) पदार्थोद्देशपरीक्षाप्रकरणे—

## ( ८ ) शरीरपरीक्षाप्रकरणे—

## ( १२ ) परमाणुपरीक्षाप्रकरणे—

## ( १३ ) आकाशपरीक्षाप्रकरणे--



## ( १४ ) कालपरीक्षाप्रकरणे--



## ( १५ ) दिग्परीक्षाप्रकरणे--

( १८ ) संख्यापरीक्षाप्रकरणे--

## ( १९ ) परिमाणपरीक्षाप्रकरणे--



## ( २० ) पृथक्त्वपरीक्षाप्रकरणे--

## ( ४२ ) अपवर्गपरीक्षाप्रकरणे—

## ( ४४ ) न्यायपरीक्षाप्रकरणे—

## (५६) सामान्यतद्विभागपरीक्षाप्रकरणे—



## (५७) विशेषपरीक्षाप्रकरणे—

( ५९ ) व्यतिरेकिविशेषपरीक्षाप्रकरणे—

## ( ६१ ) पदार्थलक्षणप्रकरणे—



## ( ६२ ) द्रव्यलक्षणप्रकरणे—



## ( ६३ ) गुणलक्षणप्रकरणे—

### (६६) द्रव्यप्र० द्व्यणुकसिद्धिप्रकरणे—

## (७३) परत्वापरत्वप्रक्रियाप्रकरणे—



## (७४) ज्ञातताप्रक्रियाप्रकरणे—



## (७५) संस्कारप्रक्रियाप्रकरणे—

# निवेदनम्



श्रीकण्ठाश्लिष्टतनुर्हृत्तवलिदानवविजृम्भमानश्रीः ।
कौमारजन्महेतुर्गौरी वा शौरिरस्तु भव्याय ॥ १ ॥
लङ्केशपूज्यचरणं मुकुन्दवल्लभमुमासमायुक्तम् ।
शशिखण्डशोभिशिरसं परमेशमनादिमीडेऽहम् ॥ २ ॥
संस्कृतपाठागारे काशीस्थे राजकीये ये ।
विद्यावदातचरिताः प्रभुपदमध्यास्य राजन्ते ॥ ३ ॥
मित्रवरैस्तैः श्रीमद्गोपीनाथकविराज इत्याख्यैः ।
प्रोत्साहितोऽहमासं लीलावत्याः प्रकाशकार्य्येऽस्मिन् ॥४॥
तैरेव मुद्रणार्थं ग्रन्थागाराददायि टीकाभिः ।
आदर्शमूलपुस्ती कृपया जीर्णापि संशुद्धा ॥ ५ ॥
श्रीराजेश्वरशास्त्री 'तरङ्गिणी'पूरणेन विख्यातः ।
पुस्तकमेकं विवृतेर्भागीरथ्या ददाति स्म ॥ ६ ॥
किन्तु द्वावपि विवृतिग्रन्थौ नितरामशुद्धिभिर्ग्रस्तौ ।
क्वचिदपि लिपिरवलुप्ता पत्राणां कीटदष्टत्वात् ॥७॥
तदपि परस्परयोगात् कथमपि निर्णीय पाठमायासैः ।
सन्निधे बुधवृन्दानां प्रकाश्यतेऽयं सुसन्दर्भः ॥८॥
श्रीमद्वामाचरणन्यायाचार्य्यैः प्रसिद्धविद्वद्भिः ।
सुगृहीतनामधेयैः श्रीशङ्करतर्करत्नैश्च ॥ ९ ॥
पाठविनिर्णयकर्म्मण्यनेकवारं व्यधायि साहाय्यम् ।
आवश्यककार्य्याणि स्वानि जहद्भिर्मयि स्नेहात् ॥१०॥
सर्व्वेष्वेषु मनीषिष्वादिमखण्डप्रकाशकालेऽस्मिन् ।
हार्द्दिककृतज्ञताया निवेदनेनोद्वहामि सन्तोषम् ॥११॥

संस्कृतपुस्तकमालाप्रचारकर्म्मव्रतैकनिष्ठो यः ।
जनयति बुधजनचित्ते नित्यं नवनवमुदास्वादम् ॥१२॥
परिशेषे चास्माकं विलसतु तस्मिन् शुभाशिषां राशिः ।
श्रीलजयकृष्णदासे श्रेष्ठिकवर्य्ये ससोदर्य्ये ॥१३॥
शारीरास्वास्थ्यान्मे सुतरां मनसोऽपि चञ्चलत्वेन ।
त्रुटयोऽनेका जाताः क्षम्यन्तां साधुभिः क्षमासारैः ॥१४॥
यस्य कटाक्षक्षेपाद् भवन्ति लोके समस्तकार्य्याणि ।
कृपया तस्य पुरारेर्निर्विघ्नं पूर्य्यतां ग्रन्थः ॥१५॥
राखालदासनाम्नो गौतममूर्त्तेर्गुरोः पदाम्भोजम् ।
संसेव्य लब्धविद्यो हरिहरशास्त्री निवेदयति ॥१६॥
वसुवेदनागचन्द्र (१८४८) प्रमाणशाके पिनाकभृत्पुर्य्याम् ।
श्रीहिन्दुविश्वविद्यासद्मनि शुक्लाष्टमीदिने पौषे ॥१७॥*



* मुलकृतामपि टीकाप्रणेतृवृन्दस्य कालादिः ।
विदुषां विचारणार्थं पश्चिमखण्डे निरूप्येत ॥

वल्लभाचार्यकृता

# न्यायलीलावती

## नाथः सृजत्यवति यो जगदेकपुत्रः

### शङ्करमिश्रकृत–न्यायलीलावतीकण्ठाभरणम्

पितुर्व्याख्यां कृत्वा मनसि भवनाथस्य कृतिनो
वयं लीलावत्याः प्रथयितुमिहोक्तिं व्यवसिताः।
तदेतस्मिन् कर्म्मण्यतिगुरुणि गौरीपरिवृढे
दृढा भक्तिः शक्तिं जनयतु यथा स्याम निपुणाः॥

कर्त्तव्यविघ्ननिराचिकीर्षया कृतं मङ्गलं शिष्यशिक्षायै निबध्नाति-नाथ इति। तस्मै पुरुषोत्तमाय नमः। पुरुषोत्तम इति निर्द्धारणषष्ठ्य-

### वर्द्धमानोपाध्यायकृत–न्यायलीलावतीप्रकाशः

एकत्र शूलमपरत्र विसप्रसूनमन्यत्र कृत्तिरितरत्र च पीतवासः।
तत्पातु वर्ष्म शशलक्ष्मकलाकिरीटनिष्पिष्टकैटभहृदोर्मम वाञ्छितानि।
न्यायाम्भोजपतङ्गाय मीमांसापारदृश्वने।
गङ्गेश्वराय गुरवे पित्रेऽत्रभवते नमः॥ २॥

विशिष्टशिष्टाचारानुमितकर्त्तव्यताकं विघ्नविघातकं मङ्गलं नमस्कारं निबध्नाति—नाथ इति। यद्यपि पुरुषाणामुत्तम इत्यत्र न निर्धा-

### भगीरथठक्कुरकृता–न्यायलीलावतीप्रकाशविवृतिः।

सद्योदलितदैत्येन्द्रदलद्वयदिदृक्षया।
विस्फारितं दिक्षु चक्षुर्नारसिंहं नमाम्यहम्॥ १॥

आसेविता गुणवतापि निगूढभावा लीलावती गुणवती न मुदं तनोति।
एतत्प्रकाशविवृतिच्छलतस्तदस्या भावं भगीरथसुधीः सरलीकरोति॥

ग्रन्थारम्भे विघ्नविघाताय कृतं मङ्गलं तत्र शिष्याणां शिष्टाचारविषयत्वरूपलिङ्गज्ञानाय निबध्नाति—एकत्रेति। यत्रेत्यध्याहारः। वर्ष्मेत्येकवचनेनाग्रे द्विवचनेन च हरिहरात्मकशरीरलाभः।

अप्रामाणिकत्वनिरर्थकत्वशङ्कापरिहाराय प्रमाऽथमाचरणं फलं च मङ्गलस्य दर्शयति–विशिष्टेति। यद्यपीति। यद्यपि पुरुषोत्तमपदस्य योगार्थानपेक्षरूढिस्वीकारे समासविकल्पोयमसङ्गतः तथापि योगार्थस्याभा-

प्रीत्या ततः परमनिर्वृतिमादधाति ।
तस्मै नमः सहजदीर्घकृपानुबन्ध-
लब्धत्रितत्त्वतनवे पुरुषोत्तमाय ॥ १ ॥

---

न्यायलीलावतीकण्ठाभरणम्

भावात् समासः जातिगुणक्रियाभिरेकदेशपृथक्करणस्य निर्द्धारण-स्याविवक्षितत्वात् । निर्द्धारणाविवक्षायामेव सप्तमीतत्पुरुषो वा । उत्तमत्वमेव पुरुषत्वेन विशेषणीयमेवेति कर्मधारयो वा । यस्मात् क्षरमतीतोऽहमित्यादिगीतापद्यं पञ्चमीतत्पुरुषव्यवस्थापकत्वेनोक्त-मनादेयं तदर्थासमर्पकत्वात् । अनेन हेतुनाऽहं पुरुषोत्तमोस्मी-त्येतावन्मात्रस्य तदर्थत्वात् । यः कार्य्यजातरूपं जगत् सृजति सृष्ट्वा चावति परिपालयति । एकस्मिन् पुत्रे या प्रीतिस्तयाऽवतीति स-म्बन्धः । जगत्पदस्य संसारिमात्रविवक्षायामाह—परमेति । निर्वृतिः सुखं दुःखाभावश्च । तत्राद्यस्य परमत्वं दुःखासम्भिन्नत्वं अन्त्यस्य दुः-खप्रागभावासहवृत्तित्वम् । कृपा निरुपधिपरदुःखप्रहाणेच्छा तस्याः सहजत्वमनागन्तुकत्वमनुत्पन्नत्वमिति यावत् । दीर्घत्वमविनाशित्वं कृपाया अनुबन्धः सृष्टिस्थितिसंहारसहकारिणां पौनःपुन्येन समवधा-नम्, तेन लब्धास्त्रितत्त्वरूपास्तनवो ब्रह्मविष्णुशिवात्मिका येन तस्मै । ग्रन्थकृता स्वपित्रे पुरुषोत्तमनाम्ने नतिः कृतेत्यपि वदन्ति ।

न्यायलीलावतीप्रकाशः

रण इति षष्ठीसमासनिषेधः स्यात्, पुरुषश्चाऽसावुत्तमश्चेति कर्म-

न्यायलीलावतीप्रकाशविवृतिः

ने रूढ्यर्थविरोधे वा केवलरूढिस्वीकार इह तु न तथेत्याशयेन नम-स्यताप्रयोजकरूपलाभानुरोधेन च योगपुरस्कारमभ्युपेत्य विकल्पो-ऽयं कृत इति ध्येयम् । पुरुषश्चासाविति । ननु विशेषणविशेष्यभावस्य काम-चारादिदमयुक्तम् । न च विशेष्यतावच्छेदकावच्छिन्नमध्ये व्यावृत्तिबो-धकं विशेषणं न चेह पुरुषत्वं तथा सर्वज्ञत्वादिरूपोत्तमत्वव्यापकत्वादि-ति वाच्यम् । उत्तमपदस्योत्कर्षवत्त्ववाचकत्वात् तस्य च घटादिसा-धारण्येन पुरुषत्वाव्याप्यत्वादन्यथा परस्परव्यभिचाराभावेन कर्म्मधा-रयानुपपत्तेः । विशेषणं विशेष्येणेतिसूत्रेऽन्यतरपदेनैवापरसम्बन्धि-लाभे यदुभयपदोपादानं तेन परस्परव्यभिचार एव कर्म्मधारयसाधु-त्वमितिज्ञापनात् । न चोत्कर्षवत्त्वं न घटादिसाधारणमेकामिति वा-

न्यायलीलावतीप्रकाशः

धारये विशेषणत्वादुत्तमपदस्य पूर्वनिपातापत्तिः। पुरुषेषूत्तम इत्यत्र निर्धारणसप्तमीसमासे न निर्धारण इत्यस्य वैयर्थ्यप्रसङ्गः, तत्र षष्ठी

न्यायलीलावतीप्रकाशविवृतिः

शब्दसाम्येऽपि नार्थसाम्यमिति वाच्यम्, उत्कर्षशब्दप्रवृत्तिनिमित्तत्वेन नानोत्कर्षाणामनुगमे तद्धत्त्वस्याप्यनुगतत्वात्। एतेन कर्मधारयसमास एवात्र परस्परव्यभिचाराभावादसम्भवीत्यत्रैव तात्पर्य्यमिति मिश्रमतमपास्तमिति चेत् मैवम्, विशेषणं हि विधेयं तच्चाज्ञातं न चेहोत्तमत्वेन ज्ञाते पुरुषत्वमज्ञातं किन्तु पुरुषत्वेन ज्ञाते उत्तमत्वमिति तदेव विधेयम्। अतस्तदेव विशेषणम्। न च कस्यचिद्वैपरीत्येनापि ज्ञानमिति न नियम इति वाच्यम्, नमस्यताप्रयोजकत्वेन प्रकृते उत्तमत्वज्ञानस्यापेक्षिततया तज्ज्ञाने सति पुरुषत्वज्ञानस्याकिञ्चित्करत्वेन तदसम्भवात्। यत्तु उत्पलनीलमित्यादिप्रयोगापत्त्या नैवं विशेषणविशेष्यभावे कामचार इति मतं तत्तुच्छम्। तथा विवक्षायां तथाप्रयोग इष्टापत्तेः। अन्यथा चन्द्रमुखमुखचन्द्रपदयोरुभयोः साधुत्वानुपपत्तेः। यत्तु लोकप्रसिद्धमेव यद्विशेषणं तद्वाचकमेव पदं सूत्रे विशेषणपदार्थः, तच्चेहोत्तमत्वमेवेति मतं तत्र लोकपदस्य यावदेकदेशविकल्पग्रासात्। वयं तु उत्तमत्वमत्र सर्व्वज्ञत्वादिकमेव तस्यैव नमस्यताप्रयोजकत्वात्। तच्च पुरुषत्वव्याप्यमेवेति न पुरुषत्वस्य विशेषणता, विशेष्यतावच्छेदकसमानाधिकरणात्यन्ताभावप्रतियोगिन एव विशेषणत्वादिति नात्र कामचारः। न चैवं कर्मधारयाशङ्कैव न, परस्परव्यभिचाराभावादिति वाच्यम्। ज्ञापकेनापि विशेष्यतावच्छेदकव्यभिचारमात्रलब्धेरन्यथा शिंशपा वृक्ष इति प्रयोगानुपपत्तेः। अत एव शिंशपा इत्यादिकमेव प्रत्युदाहरणं वृत्तिकारो दर्शयति स्मेति ब्रूमः। पुरुषेष्विति। तदर्थकतत्पदसाधुत्वनिषेधो हि निषेधसूत्रप्रयोजनम्। तादृशपदं च यदि विभक्त्यन्तरसमासेनापि निष्पन्नं तदा सूत्रवैयर्थ्यमिति भावः। इदं चापाततो दूषणम्। वस्तुतः स्वरविशेषनिषेधार्थमेव षष्ठीसमासनिषेधकसूत्रोपपत्तेर्न सप्तमीसमासनिषेधे तात्पर्य्यम्, तस्य सप्तमीसमासे हि पूर्व्वपदे प्रकृतस्वर एवावतिष्ठते षष्ठीसमासे तु पूर्व्वपदस्योदात्तत्वं भवतीति भाष्यकारादिस्वरसात्। तदुक्तं त्रिधा हि भिद्यते शब्दोऽर्थतो रूपतः स्वरतश्चेति॥ अतएव कुसुमाञ्जलिप्रकाशे सप्तमीविग्रह एव प्रदर्शितः। यत्तु स्वरभेदस्य वेदविष

न्यायलीलावतीप्रकाशः

सप्तम्योरभेदात्, तथाऽन्यत्र निर्धारणमेव नाऽस्तीति षष्ठीसमास एव
नराणां क्षत्रियः शूरतम इत्यादाविव समुदायापेक्षया जातिगुणक्रिया
भिरेकदेशस्याऽपृथक्करणात् । यद्वा पञ्चमीतियोगविभागादत्र समा-
सः । पुरुषेभ्य उत्तमः पुरुषोत्तमः । यस्मात्क्षरमतीतोऽहमक्षरादपि
चोत्तमः । अतोऽस्मि वेदे लोके च प्रथितः पुरुषोत्तम इति गीतासु
भगवद्वचनात् । तस्मै पुरुषोत्तमाय नमः । पुरुषोत्तमत्वमेव नमस्का-
र्यताप्रयोजकं रूपम् । अन्यदप्याह । यो नाथः प्रभुः, जगत् कार्यजातम्,
सृजति जनयति । ततः सृष्टेरनन्तरम् अवति अनिष्टनिवृत्तिद्वारेण

न्यायलीलावतीप्रकाशविवृतिः

यत्वेनास्य निषेधस्य तदविषयत्वमिति मतं तत्तुच्छम्, सूत्रस्य लोक-
वेदोभयसाधारणतया वेदमादायैव सार्थकत्वादिति दिक् । तथापीति ।
निर्धारणप्रयोजकरूपस्य समस्यमानपदादन्यत उपस्थितौ सत्यामेव
समासनिषेधः, भवति च नराणां क्षत्रियः शूरतम इत्यत्र समस्यमानन-
रक्षत्रियपदादन्येन शूरपदेन निर्द्धारणप्रयोजकरूपलाभो न चात्र तथा ।
न चैवं नरशूर इत्यपि स्यात्, वृत्तिकारस्य तज्जातीयमात्रोदाहरणप्र-
दर्शनेन तथासूत्रतात्पर्यनिश्चयादिष्टापत्तेः । यद्वेति । पञ्चमी भयेनेति सूत्रे
यद्यपि भयहेतुनैव पञ्चमीसमासविधिस्तथापि प्रयोगानुरोधेन पञ्चमी-
त्येतावन्मात्रं व्यवच्छिद्यावधिपञ्चम्यन्तेनापि समासः साधुरित्यर्थः ।
योगविभागः सूत्रव्यवच्छेदः । न चैवं पञ्चमीसमासेनापि नरशूर इत्यपि
स्यादिष्टापत्तेः । मिश्रास्तु उत्तमत्वस्येव शूरत्वस्य सावधित्वाभावादेव
नात्र स प्रसंगः । अतएव नरशूर इतिप्रयोगाभावमेव हृदि निधाय
पूर्वापरितोषेणायं कल्प इत्याहुः । तच्चिन्त्यम् । शूरस्येवोत्तमस्यापि
निरवधित्वात्, उत्तमत्वस्येव शूरत्वस्यापि सावधित्वात् । अन्यथा
तस्मादयं शूर इतिप्रयोगानुपपत्तेः । तस्मात्पूर्वापरकल्पयोरुभयत्र
नरशूर इतिप्रयोगे इष्टापत्तिरेव शरणम् । यस्मादिति । द्वाविमौ पुरुषौ
लोके क्षरश्चाक्षर एव चेतिगीतादर्शनादक्षरपदस्य पुरुषवाचकत्वात्
पुरुषोत्तमत्वलाभः । ननु परमनिर्वृत्याधानमेवावनमपीति पौनरुक्त्य-
मत आह—अनिष्टेति । विरोधीत्यर्थः, तेन "सृष्ट्यवनयोः कार्यमात्रे संभ-
वेपी"त्यग्रिमग्रन्थाविरोधः पौनरुक्त्यपरिहारश्च, अनिष्टपदस्य दुःख-
परत्वे तदुभयदोषापत्तेः । ननु प्रीतिः सुखं तज्ज्ञानं वा द्वयमपि

द्रव्यं नाकुलमुज्ज्वलो गुणगणः कर्माधिकं श्लाघ्यते
जातिर्विप्लुतिमागता न च पुनः श्लाघ्या विशेषस्थितिः ।
सम्बन्धः सहजो गुणादिभिरयं यत्रास्तु सत्प्रीतये
सान्वीक्षानयवेश्मकर्मकुशला श्रीन्यायलीलावती ॥ २ ॥

---

न्यायलीलावतीकण्ठाभरणम्

ग्रन्थे स्वप्रेयसीनाम योजयन्नेव प्रेक्षावतां प्रवृत्तयेऽभिधेयं श्लाघनीयविशेषणेन विशिंषन्नाह-द्रव्यमिति। न्यायः पञ्चावयववाक्यं स एव लीला तद्वतीति ग्रन्थनाम। प्रेयसीपक्षे न्यायेन उचितमार्गेण या लीला तद्वतीत्यर्थः। स्वाभिन्येव विलासं बिभ्रतीत्यर्थः। श्रीपदमुभयत्रोत्कर्षद्योतनाय। सतां मुमुक्षूणां प्रीतये प्रमोदाय ग्रन्थः। सतां विदग्धानां प्रीतये प्रियास्तु। ग्रन्थे द्रव्यपदार्थो नाकुलो नाविस्पष्टः अन्यत्र द्रव्यं भाजनादि अलङ्कारादि वा। नाकुलं न विपर्य्यस्तत्। ग्रन्थपक्षे गुणगणो रूपादिसमूहः उज्ज्वलोऽन्योन्यासङ्कीर्णतया व्युत्पादितः अन्यत्र गुणगणः शीलसौन्दर्य्यादिरूप उज्ज्वलो मनोरमः। ग्रन्थे च कर्म-

न्यायलीलावतीप्रकाशः

करोति पक्रपुत्रे या प्रीतिः अनुजिघृक्षा, तया परमां दुःखासहवृत्ति निर्वृतिं सुखं दुःखाभावं चादधाति। सृष्टध्यवनयोः कार्यमात्रे सम्भवेऽपि परमनिर्वृतेरसम्भवादत्र जगत् संसारिमात्रम्। सहजा आगन्तुकहेत्वजन्या, अतएव दीर्घा उत्तरकालानवच्छिन्ना या कृपा निरुपधिपरदुःखप्रहाणेच्छा, तया अनुबन्धेन पौनःपुन्येन सृष्टिस्थितिसंहारकरणाय लब्धास्त्रितत्त्वस्वरूपाः ब्रह्मविष्णुशिवात्मिकास्तनवो येन, तस्मै। अथ च ग्रन्थकृता स्वपित्रे पुरुषोत्तमनाम्ने नमस्कारो निबद्धः। तत्र सहजा दीर्घा उर्वी या कृपा तदनुबन्धेन वशीकृतास्त्रितत्त्वतनवो ब्रह्मादयो येनेत्यर्थः। अन्यत् तुल्यमेव ॥

प्रेक्षावतां प्रवृत्त्यङ्गमभिधेयमाह—द्रव्यमिति। न्यायः समस्तरूपोपेतं

न्यायलीलावतीप्रकाशविवृतिः

भगवति नास्तीत्यत आह—प्रीतिरनुजिघृक्षेति। आगन्तुकेति। यद्यपि हेत्वनपेक्षत्वेनैव सम्यक् तथापि. पितृपक्षसाधारण्यार्थमागन्तुकत्वं विशेषणं स्वरूपनिर्वचनार्थं वा। तथा च स्वेच्छावशादत्र शरीरपरिग्रहो न तु धर्माधर्माभ्यामिति भावः।

समस्तेति। समस्तरूपोपेतलिङ्गप्रतिपादकमित्यर्थः। प्राप्यते कान्त-

न्यायलीलावतीकण्ठाभरणम्

पदार्थो द्रव्यादिपदार्थादधिकं श्लाघास्पदम् । अन्यत्र कर्म्म गृहादिपरिकर्म्म प्रियचेतोहरणचेष्टा वाऽधिकं यथा स्यादेवं श्लाघ्यते । ग्रन्थे जातिपदार्थो नापोहादिरूपतया विप्लुतिमन्यथासिद्धिमागतो विप्लुतिर्जातीनां परस्परसांकर्य्यं वा । अन्यत्र जातिर्ब्राह्मणत्वमाचारभ्रंशादिना विप्लुतिमागता । ग्रन्थे विशेषपदार्थस्थितिः श्लाघ्या अन्यत्र विशेषस्थितिर्योषिदन्तरापेक्षया वैलक्षण्यं श्लाघ्यम् । ग्रन्थे गुणादिभिर्गुणकर्म्मसामान्यविशेषैः सहजो नित्यः सम्बन्धः समवायोऽस्ति अन्यत्र प्रागुक्तगुणयोगः सहजः प्रयत्नानपनेयः । ग्रन्थेऽन्वीक्षा न्यायशास्त्रं तदेव वेश्म तस्य कर्म्म परिकर्म्म तत्र कुशला तथा चान्वीक्षायामपीयमुपकरिष्यतीत्यर्थः । यद्वा अन्वीक्षात्वं श्रवणानन्तरमननार्थं यो नयो न्यायः स एव वेश्म तत्कर्म्मणि परिकर्म्मणि तद्दूषणनिरासकुशलेत्यर्थः । अन्यत्रान्वीक्षात्वं पुनरवलोकनार्थं नयेन नीत्या यद्वेश्मकर्म्म परिकर्म्म चित्रादिलिखनं तत्र कुशला दक्षेत्यर्थः ।

न्यायलीलावतीप्रकाशः

वाक्यम्, स एवाऽस्य शास्त्रस्य लीला तद्वतीतिग्रन्थनाम । तत्र श्रीपदेनोत्कर्ष उक्तः । सा इयं सतां प्रीतयेऽस्तु । अथ च श्लेषतो ग्रन्थकृतः प्रेयसी लीलावती । नीयते प्राप्यते कान्तचेतोऽनयेति न्यायः तादृशी या लीला तद्वती सा सतः प्रियस्य प्रीतये भवति । यत्र ग्रन्थे । प्रियापक्षे तु एकत्र द्रव्यं नाऽऽकुलम् न सदोषं व्याख्यातम् । अन्यत्र तु धनं न सदोषम् । एकत्र गुणगणो रूपादिसङ्घ उज्ज्वलः प्रमापितः । अन्यत्र गुणानां शीलादीनां गणो दोषासम्भिन्नः । एकत्र कर्म उत्क्षेपणादि अधिकं द्रव्यादिभ्य पृथक् श्लाघ्यते प्रशंसाविषयः । अन्यत्र कर्म गृहव्यापारः । अधिकमिति क्रियाविशेषणम् । एकत्र जातिः पदार्थविशेषः विप्लुतिं साङ्कर्यं न गता । अन्यत्र जातिर्ब्राह्मणत्वं सतीत्वाद्विप्लुतिं परपुरुषसम्बन्धात्(१) सदोषत्वं न गता । एकत्र विशेषाणां

न्यायलीलावतीप्रकाशविवृतिः

चेत इति स्वायत्तं क्रियत इत्यर्थः । परपुरुषसंसर्गादिति सदोषत्वे हेतुः । तस्य न्यायस्य शास्त्रं वेश्मेत्यन्वयः । स्त्रीपक्षे अन्वीक्षेत्यादिव्याख्यानं क्वचिन्नास्ति तत्र तस्यान्वीक्षा पश्चाच्चिन्ता स्वामिनि देशान्तरस्थे गृहचिन्ता नयो नीतिश्च वेश्मकर्म गृहव्यापारः, तत्र कुशलेत्यर्थः ।

(१) संसर्गादिति 'विवृति'कृद्धृतः पाठः ।

न्यायलीलावतीप्रकाशः

अन्त्यानां स्थितिः व्यवस्था श्लाघया प्रशंसाविषयः। अन्यत्र विशेषस्योत्कर्षस्य स्थितिस्तादृशी। एकत्र गुणादिभिर्गुण्याद्यैः सहजः सम्बन्धः समवायो ग्रन्थप्रतिपाद्यत्वेनाऽस्ति। अन्यत्र प्रागुक्तगुणैः सम्बन्धः सहजः अकृत्रिमः स्वाभाविकः। श्रवणादनु पश्चादीक्षणमन्वीक्षा मननहेतुर्न्यायः, स एव नीयतेऽनेनेति व्युत्पत्त्या नयः शास्त्रं तस्य वेश्म, तस्य न्यायाधारत्वात्। तस्य कर्म परिकर्म दूषणनिरासादि, तत्र कुशला दक्षा। नय इत्यत्र श्रिणीभुवोऽनुपसर्गे इति घञि प्राप्ते कृत्यल्युटो बहुलमिति बाहुलकात् एरजित्यच्।

इह पदार्थानां सामान्यतः प्रयोजनसम्बन्धेऽवगते के ते इति विशेषाकाङ्क्षायां द्रव्यगुणेत्यादितद्विशेषाभिधानमेतावन्त एव पदार्था इत्यवधारणपरविभागार्थकम्। सामान्यजिज्ञासायां तद्विशेषवचनस्येतरव्यवच्छेदपरत्वेन व्युत्पत्तिसिद्धत्वात्। तच्च न यद्यपि शब्दविधया विभागे मानम्, युक्तिशास्त्रत्वविरोधात्, मानान्तरात्तत्प्रतिपादने च परीक्षायास्तत्परत्वावश्यकत्वे तत एव न्यूनाधिकसङ्ख्याव्यवच्छेदः सिद्ध इत्येतस्याऽपि तत्र तात्पर्ये मानाभावः सामान्य-

न्यायलीलावतीप्रकाशविवृतिः

ननु षडेवेत्यस्य सूत्रस्य भाष्यस्य वा अभावाद्विकल्पोऽयमाश्रयासिद्ध इत्यत आह—इहेति। सामान्येति। कियन्त इत्याकाङ्क्षायां विशेषाभिधानस्य तदितरविशेषनिषेधप्रत्यायकत्वव्युत्पत्तेरित्यर्थः। कियन्तो घटा इत्याकाङ्क्षायां चत्वार इत्युक्ते पञ्चमाभावप्रतीतेरिति भावः। सामान्यधर्मावच्छिन्नस्य विशेषाकाङ्क्षेति सामान्येत्युक्तम्। तत्र च तात्पर्यविषयावधारणविकल्पोऽयमिति भावः। युक्तीति। शब्दादेव तत्सिद्धौ पदार्थान्तरनिरासकयुक्त्यननुसरणापत्तेः। तथा च तादृशव्युत्पत्तिः प्रकृते असिद्धा तन्मूलीभूतस्य तथाविधवक्तृतात्पर्यानुमानावश्यम्भावस्याग्रे युक्तिसहस्रदर्शनबाधितत्वादिति भावः। मानान्तरात् परीक्षाप्रयोजकमानान्तरात्। परीक्षाया इति। एवं च परीक्षायास्तत्परत्वावश्यकत्वे तन्निर्वाहकप्रमाणादेव व्यवच्छेदप्रत्ययोपपत्तौ विभागवाक्यस्यापि तत्र तात्पर्यं कल्पयित्वा तन्निर्वाहकं च मानान्तरकल्पनमपि गौरवपरास्तमित्यवधेयम्। ननु परीक्षया कथं तत्सिद्धिरत आह—सामान्येति। सामान्यलक्षणस्यातिव्याप्तिनिरासेऽधिकसङ्ख्याव्यवच्छेदस्य विशेषलक्षणानाञ्च परस्परसङ्कीर्णत्वव्युदासे न्यूनसङ्ख्याव्यवच्छेदस्य लाभा-

न्यायलीलावतीप्रकाशः

दिलक्षणपरीक्षयाऽधिकसंख्याव्यवच्छेदस्य विशेषलक्षणपरीक्षया च न्यूनसङ्ख्याव्यवच्छेदस्य लब्धत्वात्, तथापि पदार्थमुद्दिश्य द्रव्यादित्व-विधानादुद्देश्यस्य व्याप्यत्वाद्विधेयस्य व्यापकत्वाद्विधेयस्य व्याप-कत्वेन समानैव प्रतीतिरिति लोकव्युत्पत्तिसिद्धत्वान्न तत्र तात्पर्यं कल्प्यम्। न च पदार्थत्वं नैकं सामान्यम्, येन विभागः स्यात्, किन्तु पदानामर्थौ वाच्यस्तत्त्वम्, वाच्यत्वं च पदानामर्थानां च भेदाद्भिन्नमेवेति वाच्यम्। सर्वत्र पदार्थानुगतमतेरनुगतस्य तस्य सिद्धेः, नाऽयं पदार्थ इत्यभिधान एवैतत्पदार्थत्वापदार्थत्वाभ्यां व्याघातात्। तथाऽपि न तद्भावरूपम्, अभावेऽपि वृत्तेः, नाऽभाव-

न्यायलीलावतीप्रकाशविवृतिः

ति भावः। नात्र तात्पर्यं कल्प्यमपि तु शब्दस्वाभाव्यादेव व्यवच्छेदप्रतीति-रित्याह—तथापीति। औत्सर्गिके हि तात्पर्यमौत्सर्गिकम्, न तु कल्प्यम्, यथा गङ्गापदस्य पूरे। आपवादिके तु कल्प्यम्, यथा तस्यैव तीरे। तदिहो-क्तव्युत्पत्त्यां शब्दस्वाभाव्येनौत्सर्गिकतया न तत्कल्प्यमिति भावः। एतेन पदार्था द्रव्यादय इति वाक्यं पदार्थत्वद्रव्यत्वाद्योः सामानाधिकरण्यं बोधयतु पदानां पदार्थसंसर्गमात्रबोधे सामर्थ्यात्, न तु नियतसा-मानाधिकरण्यं नियतत्वादीनामुपस्थापकाभावादिति परास्तम्। औ-त्सर्गिकतात्पर्यगम्यनियतसामानाधिकरण्यरूपविशेषलाभात्, न-रपतिपदान्नररूपस्य नरपतेरिव। न च तथापि नियतत्वप्रकारिका धीर्न स्यादिति वाच्यम्, तदभावेऽपि क्षतेरभावात्, नरपतिपदान्नर-त्वप्रकारकप्रतीतिविरहवत्। न च सामानाधिकरण्यमपि न प्रकार-तया भातं किन्तु संसर्गतयेति कथं तस्य विशेषपरत्वम्? यदि चानुप-स्थितमपि सामानाधिकरण्यं प्रतीतिप्रकारस्तदा नियतसामानाधि-करण्यमेव तथा स्वीक्रियतामिति वाच्यम्, तात्पर्यविशेषेण पदार्थ-विशेषभानवत् संसर्गविशेषभानस्याप्यविरोधात्। केचित्तु व्युत्प-त्तिबललभ्यं नियतसामानाधिकरण्यं प्रकार एव नरपतिपदजन्य-प्रतीतौ नरत्ववत् प्रतीतिबलेन पदानुपस्थितस्यापि प्रकारत्वस्वीका-रात्। अस्तु वा तत्र लक्षणा, प्रतीत्यनुरोधात्। अथ वा व्युत्पत्तेस्तात्पर्य-मात्रग्राहकत्वं तन्निर्वाहश्चानुमानादेवेत्याहुः। न च द्रव्यत्वादेः प्रत्ये-कमव्यापकत्वात् कथं व्याप्यव्यापकभावप्रतीतिरिति वाच्यम्, अन्य-तमत्वावच्छिन्नव्यापकताया एव व्युत्पत्तिबललभ्यत्वात् तज्ज्ञानं च संसर्गतया प्रकारतया वेति दिक्।

न्यायलीलावतीप्रकाशः

रूपम्, विधित्वेन प्रतीतेः। प्रतियोग्यनुपपत्तेश्चेति न युक्तम्, अस्माच्छब्दादयमर्थों बोद्धव्य इतीश्वरज्ञानरूपसङ्केतात्मकत्वात्तस्य। तच्च ज्ञानमनादिनिधनरूपं सर्वगोचरमेकमेव, तत्सम्बन्धश्चाऽर्थेर्विषयत्वलक्षणः। अवधारणार्थो व्यवच्छेदः। तत्रैवकारस्य व्यवच्छेदमात्रे शक्तिः, विशेषणविशेष्यक्रियावाचकसमभिव्याहारात् अयोगान्ययोगात्यन्तायोगव्यवच्छेदाश्च प्रतीयन्त इति व्युत्पत्तिरिति मतमयुक्तम्। उपस्थितपदार्थेष्वेव समभिव्याहारव्युत्पत्तेः संसर्गभेदस्य प्रतीतेः, न तु ततः पदार्थोपस्थितिरपि, प्रकृते च व्यवच्छेदमात्रात् प्रतियोगिमात्रलाभेऽप्ययोगान्ययोगात्यन्तायोगरूपप्रतियोगिविशेषा-

न्यायलीलावतीप्रकाशविवृतिः

अस्मादिति। अन्यत्र यद्यपीश्वरेच्छा सङ्केत इत्युक्तं तथापि ज्ञानरूपत्वेऽप्यविरोध इत्याशयेनेदमुक्तम्। तत्सम्बन्धश्चेति। यद्यपि सम्बन्धिद्वयात्मकमेव विषयत्वमिति विषयाननुगमेनाननुगतमेव तथापि ज्ञानमात्रमेव सम्बन्धोऽत एवातीतानागतविषयेऽपि ज्ञातो भातोऽयमिति व्यवहारस्तु ज्ञानध्वंसवैशिष्ट्यानवैशिष्ट्यज्ञानम्, यत्र त्वेकतरसत्त्वेऽपि न विशिष्टधीस्तत्रोभयसम्बन्धावगाही, यथाधिकरणध्वंसयोः, अतएव बौद्धाधिकारप्रकाशे ज्ञानमेव सम्बन्ध इत्युक्तम्। अस्तु वा सम्बन्धिद्वयात्मकविषयत्वं तथापि नाननुगमो विशिष्टधीजननयोग्यतया विषयस्याप्यननुगतत्वादिति दिक्।

ननु नियमपरत्वेऽपि विभागस्य व्यवच्छेदविकल्पोऽसङ्गत एवेत्यत आह—अवधारणार्थ इति। नियमशरीरान्तर्गत इत्यर्थः। ननु नान्ययोगव्यवच्छेदादौ शक्तिर्येनैवकारार्थत्वाक्षेपस्तत्र घटेत, किन्तु व्यवच्छेदमात्र एव, लाघवादित्यत आह—तत्रेति। प्रतियोगिमात्रेति। आक्षेपतः प्रतियोगिमात्रलाभाभ्युपगमेऽपीत्यर्थः। यद्यपि विरोधिव्यवच्छेद एवकारार्थः, विरोधित्वं च विरोधित्वेनोपस्थितत्वमुपस्थितिश्च सर्वनामशब्द इव तटस्थोपलक्षणमिति सम्भवत्येव, तथापि शङ्खः पाण्डर एवेत्यत्र पाण्डरविरोधी नेतिवत् पार्थ एवेत्यत्रापि विरोधी नेतिप्रत्ययापत्तिः, शक्तौ तुल्यायां समभिव्याहारादन्वयनियमात्। न हि शक्तौ तुल्यायां क्वचिद्विरोधप्रतियोगिकव्यवच्छेदः, क्वचिद्विरोध्याश्रयकव्यवच्छेदः प्रतीयते। शक्तिवैचित्र्ये तु वक्ष्यमाणक्रमादर एवास्तां कुतः

षडेव पदार्था इति नियमव्यवच्छेद्यं प्रतीतं न वा अप्रतीतं

न्यायलीलावतीकण्ठाभरणम्

वैशेषिकशास्त्रे पदार्थविभागमवधारणफलकमाक्षिपति—षडेवेति। अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरज्ञानेन तदिच्छया वा विषयविषयीभावलक्षणः सम्बन्धः पदार्थत्वम्, तच्च ज्ञानेच्छयोरेकैकत्वादेकमेव षोढा भिद्यते विभागश्च न्यूनाधिकसङ्ख्याव्यवच्छेदफलकस्तेन षडेव पदार्था इति। अत एवकारस्य व्यवच्छेदमात्रमर्थोऽन्ययोगादिप्रतियोगिलाभस्तु समभिव्याहारविशेषाद् व्युत्पत्तिबलायातः शाब्दे त्वन्वयबोधे व्युत्पत्तिबलादपदार्थोऽपि भासत एवान्यथाऽयोगान्ययोगात्यन्तयोगेषु शक्तित्रयकल्पनागौरवं स्यात् न न्यायश्चानेकार्थत्वमिति न्यायात्। तथा च समभिव्याहारस्तात्पर्य्यमात्रग्राहकः एवकारो नानार्थ इत्ययुक्तम्। तथा च षट्त्वस्य विशेष्यतावच्छेदकत्वं पदार्थत्वस्य विशेषणत्वमुररीकृत्य विशेष्यसङ्गतस्य चान्ययोगव्यवच्छेद-

न्यायलीलावतीप्रकाशः

नुपस्थितेः, किन्तु व्यवच्छेदत्रये शक्तिभेद एव, समभिव्याहारविशेषात्तत्र तात्पर्यविशेष उन्नीयते इति युक्तम्। तत्राऽन्ययोगव्यवच्छेदमवधारणार्थमाक्षिपति—षडेवेति। न च पदार्थमुद्दिश्य षट्त्वविधानात्तद्विशेषणं तत्समभिव्याहृतश्चैवकारोऽयोगव्यवच्छेदार्थ इत्यन्ययोगव्यवच्छेदोऽपदार्थः, पदार्थश्चाऽयोगवच्छेदोऽत्र वाच्य इति तेनैव गतार्थ इति वाच्यम्। यथा पदार्थे द्रव्यत्वादिवैशिष्ट्यमज्ञातं ज्ञाप्यत इति तस्य विधेयता, तथा द्रव्यादिष्वपि पदार्थत्वव्यवच्छेदस्य प्रतिपाद्यत्वात् व्यवच्छेद्यपदेन चाऽत्र व्यवच्छेदार्हं तदधिकरणमेव विवक्षितं न तु तत्कर्म, तस्य पदार्थत्वरूपस्य प्रमितत्वात्। तथा च द्रव्यादिषड्भिन्नस्याऽप्रमितेः तत्र पदार्थत्वं न निषेध्यम्, अधिकरणज्ञानं विना निषेधाज्ञानादित्यर्थः। निषेधः प्रतिषेधज्ञानमित्यर्थः। सप्तैवेत्येवकारस्य नाऽधिकसङ्ख्याव्यवच्छेदोऽर्थः, अपि तु

न्यायलीलावतीप्रकाशविवृतिः

शब्दान्तरेऽपि सर्वनामसाधारण्यकल्पनेति भावः। किन्त्विति। न चायोगव्यवच्छेदादेः शक्यत्वे पदार्थैकदेशान्वयस्वीकारापत्तिः। चैत्रस्य मातेत्यत्रेव प्रकृतेऽपि तत्स्वीकारात्। न चायोगप्रतियोगिनः पाण्डरत्वस्य पाण्डरपदात् विशेषतयोपस्थितेः कथमयोगान्वय इति, वाच्यम्; पाण्डरत्वस्य लक्षणया स्वतन्त्रोपस्थि-

न्यायलीलावतीकण्ठाभरणम्.

कत्वं सम्भाव्य दूषयितुं विकल्पयति—प्रतीतं न वेति। अन्ययोगव्यवच्छेदो विशेष्यादन्यत्र विशेषणयोगव्यवच्छेदः यथा पार्थ एव धनुर्द्धर इत्यत्र भीमादौ धनुर्द्धरत्वयोगो व्यवच्छिद्यते। एवं च द्रव्यादिषड्भ्यो विशेष्येभ्योऽन्यद्यदि प्रतीतं तदा तत्र पदार्थत्वव्यवच्छेदोऽनुपपन्नः। पदार्थत्वव्यवच्छेदो हि पदार्थत्वव्यवच्छित्तिप्रत्ययः स चाधिकरणज्ञानतन्त्रः सद्भ्यामभावो निरूप्यत इति सिद्धान्तात्, अधिकरणं च षड्भिन्नमप्रतीतमेवेत्याह—सुप्रतीतं चेति(१)। व्यवच्छेद्यं व्यवच्छेदकर्म्म पदार्थान्तरमेवावधारणव्यवच्छेद्यं तद्व्यवच्छेदश्च पदार्थव्यवच्छेदमुखेनेत्यन्यदेतत्। तथा च व्यवच्छेद्यं व्यवच्छेदाधिकरणमित्यपव्याख्यानम्। तथा च षडेव पदार्था इत्यवधारणेन व्यवच्छेद्यः सप्तमपदार्थः स चेन्न प्रतीतस्तदा तत्र पदार्थत्वव्यवच्छेदो न शक्य इत्यर्थः। यद्वा अन्ययोगव्यवच्छेद इत्यत्रान्यस्य विशेषणेन सह योगस्य सम्बन्धस्य व्यवच्छेदः स च पदार्थ एवेत्यत्रान्यो भीमादिः प्रसिद्धस्तस्य विशेषणयोगो व्यवच्छिद्यत इति युक्तं प्रकृते तु न तथेत्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

तेः। समभिव्याहार इति। न च तात्पर्यस्य पुरुषेच्छाधीनतया विशेषणसङ्गतैवकारादपि क्वचिदन्ययोगव्यवच्छेदप्रतीत्यापत्तिरिति वाच्यम्, अनादितात्पर्यस्यैवात्र नियामकत्वात्। यदि प्रोक्तरस्थात्वेनेव विशेषणसङ्गतैवकारत्वादिना शक्तिस्तदा शङ्कैव नोदेतीति(२) ध्येयम्। मिश्रास्तु व्यवच्छेदमात्रे शक्तिर्लाघवात् अयोगादिलाभस्तु पाण्डरादिपदालक्षणया स्वतन्त्रोपस्थितये प्रतियोगित्वोपस्थितये च लक्षणायास्त्वयापि तत्र स्वीकारात। अत एव पदार्थैकदेशान्वयप्रसङ्गोऽपि न, अत एवौत्सर्गिको विशेष्यान्वयोऽपि समर्थितो भवति। एवं च पाचकादिपदे रूढिस्वीकारोऽपि सङ्गच्छते। अन्यथा कृतियोग्यताशक्तप्रत्ययपदार्थैकदेशकृत्यन्वयस्य तत्र(३) बाधात। अतएव च सन्ध्याकालेऽकरणे विशेष्येऽन्वेति, न तु करणे विशेषण इत्यपि सङ्गच्छते। अन्यथा तत्रापि विशेषणान्वयाविरोधात्। न च स एवायमित्यत्र सर्वनाम्नि लक्षणाया अस्वीकारादयं कल्पो नोचित(४) इति वाच्यम्, तत्र भेदानुभवेन(५) त्वयाप्येवकारस्य शक्त्यन्तरस्वीकारादिति वदन्ति। अत्र केचित्। पाण्डरपदस्यायोगलक्षणायां पाण्डरत्वमेव न प्रतीयेत

(१) अप्रतीतं चेदिति साधुः पाठः।
(२) शङ्कापि नेति पाठान्तरम्।
(३) तत्राबाधादिति पाठान्तरम्।
(४) न सङ्गच्छते इति पाठान्तरम्।
(५) अत्राभेदानुभवेनेत्यन्यः पाठः।

चेत् कथं निषेधः। प्रतीतं चेत्सप्तैव। पदार्थेषु सप्तत्वं नास्तीति चेन्न। आन्तर्गणिकभेदेन सत्त्वात्। षड्लक्षणयोगितया नास्तीति चेन्न। षड्लक्षणयोगिष्वेव सप्तत्वप्रसक्तेरप्रकृतत्वेन प्रतिषेधे अ-

---

न्यायलीलावतीकण्ठाभरणम्

ननु प्रतीतेऽन्यत्र विशेषणयोगो व्यवच्छिद्यत इत्यत आह—प्रतीतं चेदिति। सप्तैवेति न षडेवेत्यर्थः। ननु षडेवेति सप्तमः पदार्थो निषिध्यते तच्च पदार्थेष्वप्रतीतेषु सप्तत्वस्य प्रतीतस्य निषेधेनापि निर्वहतीत्याशङ्कते—पदार्थेष्विति। घटादिषु पदार्थेषु सप्तत्वस्य सत्त्वात् तन्निषेधानुपपत्तिरिति परिहरति—नेति। अन्तर्गणो विशेषगणस्तत्र भवो भेद आन्तर्गणिकः। ननु प्रसिद्धा द्रव्यादयः षट् पदार्थाः सप्त न भवन्तीति ब्रूम इति शङ्कते—षड्लक्षणेति। य एव पदार्थाः षट् त एव सप्त इति केन प्रसञ्जितं येन निषेधोऽयमर्थवान् भवेत् तथा च तत्र सप्तत्वनिषेधो ममाप्यभ्युपगत इति परिहरति—षड्लक्षणयोगिष्वेवेति।

न्यायलीलावतीप्रकाशः

षट्त्वमात्रव्यवच्छेदः। ननु पदार्थेषु सप्तत्वस्याऽयं निषेधो न तु सप्तमस्य, सप्तत्वं च प्रसिद्धमेवेत्याह—पदार्थेष्विति। उभयसिद्धपदार्थमात्रेऽयं निषेधः, द्रव्यत्वाद्येकैकलक्षणयोगित्वेनैकीकृतेषु षट्सु वा ? तत्र नाऽऽद्य इत्याह—आन्तर्गणिकेति। घटादिषु सप्तत्वादिव्यवहारदर्शनादित्यर्थः। अन्त्यं शङ्कते—षड्लक्षणेति। तथाविधापेक्षाबुद्धिविषयत्वमत्र सप्तत्वम्, सङ्ख्यायास्तत्राऽभावनियमात्। यदि पराभ्युपगमेन तत्रैव सप्तत्वप्रसक्तिः कृता स्यात् तदा तद्व्यवच्छेदः सप्रयोजनः स्यात्, न चैवमिति परिहरति—षड्लक्षणयोगिष्वेवेति। ननु द्रव्यत्वाद्युपाधिषट्के

न्यायलीलावतीप्रकाशविवृतिः

युगपद्वृत्तिद्वयविरोधादिति वदन्ति। तन्तुच्छम्, विशिष्टलक्षणयैव तस्याप्युपस्थितेः। केचित्तु तथा सति पाण्डरत्वायोगव्यवच्छेद एव पाण्डरादिपदस्य लक्षणास्तु तात्पर्यमात्रमेवकार इति वदन्ति, तदपि न(१) एवं सति निपातमात्र एव तादृशपर्यनुयोगापत्तेः। एवमपि नानाशक्तेरस्वीकाराच्चेति। एतदतिरिक्त इत्यस्याधिकरणपरत्वे नियमव्यवच्छेद्यमित्यादिना सङ्कर इत्यत उपाधिपरतया तद्व्याचष्टे—ननु द्रव्यत्वेति।

---

(१) सम्यगित्यधिकं द्वितीयपुस्तके।

विवादात् । एतदतिरिक्ते नास्तीति चेन्न । प्रतीत्यप्रतीतिभ्यां व्याघातात् । भावानां षड्लक्षणपरित्यागो नास्तीति नियमार्थ इति चेन्न । षण्णां तत्त्वादेव । सर्वेषामिति चेन्न । षड्लक्षणयोग्याभि-

---

न्यायलीलावतीकण्ठाभरणम्

षड्लक्षणावच्छेदेन षण्णामेकत्वानामाश्रयेष्वेवेत्यर्थः। एतदतिरिक्त इति । षड्लक्षणयोग्यतिरिक्ते सप्तत्वं नास्तीत्यर्थः । तदरिक्तप्रतीतिश्चेत्तदा सप्तत्वप्रतीतिरस्त्येवाप्रतीतौ निषेधानुपपत्तिरित्याह—प्रतीतीति । द्रव्यत्वादीनां षण्णां लक्षणानां विरोधी यः पदार्थत्वव्याप्य उपाधिस्तदवच्छेदेन सप्तत्वं निषिध्यत इति शङ्कार्थ इत्येके । षण्णां लक्षणानां विशेषणत्वं पदार्थत्वस्य च विशेष्यत्वं विशेषणसमभिव्याहृतस्य एवकारस्य विशेष्ये विशेषणायोगव्यवच्छेदोऽर्थः। तथा च पदार्थानां षड्लक्षणपरित्यागो व्यवच्छेद्यस्तेन पदार्थाः षड्लक्षणाक्रान्ता एवेति नियमात् सप्तमः पदार्थोऽर्थाद्व्यवच्छिन्नो भवतीति शङ्कते—भावानामिति । प्रसिद्धाः षड् भावाः षड्लक्षणपरित्यागिनो न भवन्त्येवेति सिद्धसाधनमाह—षण्णामिति । तत्त्वादेव षड्लक्षणयोगव्यवच्छिन्न-

न्यायलीलावतीप्रकाशः

द्रव्यत्वादिविरोधिपदार्थत्वव्याप्योपाधिमन्तर्भाव्य सप्तत्वं न वर्त्तते इति नियमार्थ इत्याह—एतदतिरिक्त इति । तथाविधोपाधेरप्रतीतौ न तमन्तर्भाव्य सप्तत्वनिषेधः, प्रतीतौ वा तन्निषेधोऽशक्य इत्याह—प्रतीतीति। ननु पदार्थत्वमुद्दिश्य षट्त्वविधानात् षडेवेति विशेषणसङ्गत एवकारः षड्लक्षणायोगनिषेधं ब्रूते इति नोक्तदोष इत्याह—भावानामिति । अभावबुद्धौ प्रतियोगिज्ञानवदनुयोगिज्ञानमपि हेतुः, तत्र यदि षडेवाऽनुयोगिनस्तदा सिद्धसाधनमित्याह—षण्णामिति । नन्वभावव्यक्तयः षड्लक्षणायोगव्यवच्छेदव्याप्या इत्यर्थात् सप्तमपदार्थाभावः स्यादि-

न्यायलीलावतीप्रकाशविवृतिः

द्रव्यत्वादीति । द्रव्यत्वादिषट्काभावसमूहसमानाधिकरण(१)भावत्वसमानाधिकरणोपाधिमित्यर्थः । तेन प्रत्येकविरुद्धगुणत्वव्याप्यरूपत्वाद्युपाधिमादाय न बाधः न वा अभावत्वादिकमादाय बाधो न वा व्याप्यत्वविवेचने व्यर्थत्वमिति भावः । व्यवच्छेदव्याप्या इति व्यवच्छेदसमानाधिकरणानि न तु तद्विरुद्धाश्रया इति यावदित्यर्थः । व्याप्य-

---

(१) 'भावत्वसमानाधिकरणे'ति नास्ति द्वितीयादर्शपुस्तके ।

प्रायेण सर्वशब्दप्रयोगे तत्त्वादेव। अतिरिक्ताभिप्रायेण च व्याघातात्। सामान्याकारे असिद्धत्वात्। अपि च प्रत्येकलक्षणाभि-

न्यायलीलावतीकण्ठाभरणम्

त्वादेव। ननु षडेव भावाः षड्लक्षणाक्रान्ता इति न ब्रूमः, येन सिद्धसाधनं स्यादपि तु सर्वे भावाः षड्लक्षणाक्रान्ता इति, तथा च न सिद्धसाधनं न वा सप्तमपदार्थप्रसक्तिरित्याह—सर्वेषामिति। सर्वशब्दस्य बुद्धिस्थाशेषवाचकतया यदि षडेव बुद्धिस्थास्तदा सिद्धसाधनमेव षडतिरिक्तं यदि बुद्धिस्थं तदा सप्तमपदार्थस्यावश्यकत्वेन षड्लक्षणायोगव्यवच्छेदो व्याहत एवेत्याह—षडलक्षणेति। ननु षट्त्वं सर्वत्वं वा न विशेषणतावच्छेदकं अपि तु सामान्यतो भावत्वमात्रं तथा च भावत्वावच्छिन्नं षड्लक्षणाक्रान्तमेवेत्युक्ते क्व सिद्धसाधनं क्व वा सप्तमपदार्थप्रसङ्ग इत्याशङ्क्याह—सामान्येति। भावत्वेन प्रकारेण यदि षडेव विषयीक्रियन्ते तदा सिद्धसाधनम्। षडतिरिक्तविषयतायां च सप्तमप्रसक्तिरेवेत्यर्थः। किं च भावेषु षण्णां लक्षणानां

न्यायलीलावतीप्रकाशः

त्याह—सर्वेषामिति। सर्वशब्दस्य विधेयव्याप्यत्ववाचित्वादिति भावः। व्याप्यत्वं तदवच्छेदकभावत्वसम्बन्धप्रतीत्यैव प्रतीयत इति यत्र स प्रतीतस्तत्रैव प्रत्येतव्यम्, स च षट्त्वेन प्रतीत इति न सिद्धसाधनमेवेत्याह—षड्लक्षणेति। अथ षड्भिन्नभावेऽपि स प्रतीतस्तदा तद्व्यवच्छेदोऽशक्य इत्याह—अतिरिक्तेति। ननु चाऽविवक्षितविशेषे भावत्वाक्रान्ते षड्लक्षणपरित्यागनिषेधो विवक्षित इति नोक्तदोष इत्यत आह—सामान्याकार इति। सामान्यज्ञानस्य विशेषभाननियतत्वेन यदि द्रव्यादिष्वेव विशेषेषु तन्निषेधः, तदा सिद्धसाधनम्, अथाऽतिरिक्ते

न्यायलीलावतीप्रकाशविवृतिः

शब्दस्य सम्बन्धार्थतायां व्यक्तिष्वसम्भवः तद्वृत्तिधर्मपरत्वे च व्यक्तिपदस्य तदवच्छेदकभावत्वेत्याद्यग्रिमग्रन्थविरोधः। ननु व्याप्यत्वं मूले न श्रूयत इत्यत आह—सर्वशब्दस्येति। विधेयविरुद्धानधिकरणत्ववाचित्वादित्यर्थः। 'सामान्याकारे सिद्धत्वा'दिति शङ्कां(१) नञनन्तर्भावान्तर्भावाभ्यां सिद्धसाधनाधिकरणाप्रतीतिपरतया व्याचष्टे—सामान्यज्ञानस्येत्यादि। नञन्तर्भावेणेत्यस्य इत्यर्थ इत्यत्र हेतुता समुदितत्व-

(१) फक्किकामिति पाठान्तरम्।

प्रायेण परित्यागस्य सत्त्वात् । समुदितानामप्येकत्रासत्त्वेऽयोग-

---

न्यायलीलावतीकण्ठाभरणम्

यदि प्रत्येकमयोगो व्यवच्छेद्यस्तदा द्रव्ये गुणलक्षणायोगस्य सत्त्वेन व्यवच्छेदो न शक्यः सत्त्वे वा सर्वेषां सर्वलक्षणसत्त्वं स्यादित्याह— अपि चेति । समुदितानां द्रव्यादिलक्षणानामयोगो यदि व्यवच्छेद्य-स्तदा एकत्र समुदितलक्षणसत्त्वं स्यात् तदा सर्वं सर्वजातीयं भवेदिति समुदितायोगनिषेधानुपपत्तिरित्याह—समुदितानामिति। समु-दितताल्लक्षणाप्रतीत्यैव तदयोगव्यवच्छेदानुपपत्तिरित्यर्थः । न च गुणादिलक्षणसहितं द्रव्यलक्षणं द्रव्ये नास्तीति व्यासज्यवृत्तिप्रति-योगिकाभावरूप एव समुदितनिषेध इति वाच्यम्, तादृशाभावानभ्यु-पगमात्, अभ्युपगमे वा तस्य केवलान्वयित्वेन निषेधानुपपत्तेरित्यर्थः। ननु न प्रत्येकलक्षणायोगः समुदितायोगो वा व्यवच्छेद्यः किन्तु अ-न्यतमलक्षणपर्य्यवसाने सप्तमपदार्थनिषेधः स्यादित्याशङ्क्याह—

न्यायलीलावतीप्रकाशः

विशेषे तदा नञन्तर्भावेनाऽप्रसिद्धत्वादधिकरणस्य न निषेधनिरूप-णमित्यर्थः । किञ्चाऽधिकरणवत्प्रतियोग्यप्ययोगव्यवच्छेदस्य न वि-चारसह इत्याह—अपि चेति । प्रत्येकं षड्लक्षणपरित्यागनिषेधेऽभ्युपग-म्यमाने सर्वेषां सर्वजातीयत्वं स्यादिति द्रव्यत्वपरित्यागस्य गुणादौ सत्त्वाद् द्रव्यत्वाद्येकैकपरित्यागो निषेद्धुमशक्य इत्यर्थः । समुदिताना-मिति । द्रव्यादिलक्षणानामिति शेषः । समुदितत्वस्यैकत्वसत्त्वादेकस्य प्रतियोगिनोऽप्रसिद्ध्या तन्निषेद्धुं न शक्यत इत्यर्थः । न च व्यासज्य-प्रतियोगिकतैव समुदितत्वम् । व्यासज्यप्रतियोगिकस्याभावस्या-

न्यायलीलावतीप्रकाशविवृतिः

स्येति षड्लक्षणायोगानां समुदाय एकाधिकरण्यं तच्च न प्रसिद्धमि-त्यर्थः। एवं च समुदितानामयोगानामिति मूलार्थ इति भावः। ननु नैका-धिकरण्यमयोगानां समुदितत्वम् अपि तु मिलितषड्लक्षणप्रतियोगिक-त्वं लक्षणे च मेलनं व्यासज्यवृत्तिर्धर्म इत्यत आह—न च व्यासज्येति । केचित्तु लक्षणानामेवैकाधिकरण्यं समुदितत्वमिति पूर्वफक्किकार्थम-भिप्रेत्य व्यासज्यप्रतियोगिकतैवेत्यत्र स्वार्थिकः प्रत्ययः समुदितनि-षेधत्वमेव वा समुदितत्वमित्यर्थ इत्याहुः । अतिरिक्तस्येति स्वरूप-निर्वचनम्। ननु घटपटौ न स्त इत्यत्र प्रतीतिबलादेव सोऽङ्गीकर्त्तव्य-

निषेधानुपपत्तेः । अन्यतमाभिधाने तु सर्वेषामेव विपक्षेऽभावदर्शनेन व्याघातात् ।

अभावश्च वक्तव्यो निःश्रेयसोपयोगित्वात् भावप्रपञ्चवत् ।

---

न्यायलीलावतीकण्ठाभरणम्

अन्यतमेति । अन्यतमत्वं षट्सु यद्येकमनुगतं तदा द्रव्यलक्षणायोग एव गुणेष्विति तद्व्यवच्छेदोऽशक्यः । यदि च षड्लक्षणान्यान्यत्वं तदा षड्लक्षणापेक्षया यावदन्यल्लक्षणं तत् सप्तमपदार्थे वाच्यं तथा च सर्वेषां षण्णामपि लक्षणानां विपक्षे सप्तमपदार्थेऽभावदर्शनेनायोगदर्शनेन तद्व्यवच्छेदो व्याहत इत्यर्थः ।

पदार्थविभागे न्यूनत्वं दोषमाह—अभावश्चेति । ननु निःश्रेयसोप-

न्यायलीलावतीप्रकाशः

तिरिक्तस्यानभ्युपगमात्, अभ्युपगमे वा तस्य केवलान्वयित्वान्निषेधोऽशक्य इति भावः । ननु नैकैकस्य समुदितस्य वा द्रव्यादिलक्षणस्यायोगनिषेधः किं त्वन्यतमस्येति नोक्तदोष इत्यत आह—अन्यतमेति । द्रव्यत्वादीनां गुणादौ परित्यागस्य प्रामाणिकत्वात्तन्निषेधव्याघातः । अथान्यतमलक्षणासहवृत्तितत्परित्यागनिषेधस्तदा सर्वेषां लक्षणानां विपक्षे सप्तमपदार्थेऽभावदर्शनेनान्यतमलक्षणासहवृत्तिपरित्यागदर्शनेन व्याघातः तज्ज्ञानं विना तत्र तस्याज्ञानात् ज्ञाने वा तत्सिद्ध्यापत्तेरित्यर्थः । अन्यतमत्वं यद्येकव्युदासेनान्यदभिधीयते तदा तस्यायोग एकस्मिन्न वर्तत इति तन्निषेधोऽशक्यः । विपक्षत्वं चैकदेशापेक्षया बोद्धव्यमित्यर्थ इत्यन्ये । किं चाभावस्य षड्भिन्नस्य पदार्थस्य प्रामाणिकत्वाद्विभागव्याघात इत्याह—अभावश्चेति । वक्तव्यः

न्यायलीलावतीप्रकाशविवृतिः

इत्यत आह—अभ्युपगमे वेति । तस्येति । द्रव्यत्वादिषट्कप्रतियोगिकतथाविधाभावस्येत्यर्थः । कथं व्याघात इत्यत आह—तज्ज्ञानमिति । सप्तमपदार्थज्ञानं विनेत्यर्थः । तथा च कारणं विनापि कार्यमिति व्याघात इति भावः । तद्भिया तज्ज्ञानाभ्युपगमे तत्सिद्ध्यापत्तौ विभागव्याघात इत्याह—ज्ञाने वेति । षडेव पदार्था इति वदतोऽभावोऽस्त्येवेत्यभिमानेन सर्वमिदं दूषणं तदभिमानखण्डनं च सिद्धान्ते करिष्यत्येवेति रहस्यम् । अभावाभ्युपगमे त्वाह—किं चेति । गुणादेरित्युपलक्षणं अभा-

कारणाभावेन कार्याभावस्य सर्वमतसिद्धत्वादुपयोगित्वसिद्धेः। न चेदेवं भावोऽपि कश्चिन्नाभिधातव्य इति पञ्चैवाभिधातव्याः पारतन्त्र्यादिति चेन्न, समवायादेरप्यनभिधानप्रसङ्गात्।

---

न्यायलीलावतीकण्ठाभरणम्

योगिपदार्थविभागोऽयं तथा चाभावस्य तदनुपयोगिनोऽनभिधानं न दोषायेत्यत आह—निःश्रेयसोपयोगित्वादिति। ननु अभावो नोक्तो निःश्रेयसाऽनुपयोगित्वादिति हेतुरेवासिद्ध इत्यत आह—कारणेति। दुःखकारणशरीराद्यभावेन दुःखाभावः स एव निःश्रेयसमिति कथं नाभावस्य निःश्रेयसोपयोगित्वमित्यर्थः। किं च मोक्षोऽपि अभावरूप एवेत्यभावविभाग आवश्यक इति भावः। निःश्रेयसहेतुत्वेऽपि अभावस्यानभिधाने दोषमाह—न चेदिति। पञ्चैवेति। षडभिधाननियममात्रं व्यवच्छिनत्ति। ननु स्वतन्त्रपदार्थमात्रविभागोऽयं परतन्त्राभावानभिधानेऽपि न दुष्ट एवेत्याह—पारतन्त्र्यादिति। पारतन्त्र्यमितरनिरूपणाधीननिरूपणत्वं यदि तदा समवायोऽपि न विभक्तव्यः। अथ विशेषणत्वं तदा न कोऽपि पदार्थो विभज्यः सर्वेषां यथायथं विशेषणत्वादित्याह—समवायेति। समवेतत्वमिह विकल्पनीयमपक्षवृत्तित्वात्।

न्यायलीलावतीप्रकाशः

पृथक् विभक्तव्यः। ननु निःश्रेयसोपयोगिपदार्थविभागोऽत्रेति न तदनुपयोग्यभावो विभक्त इत्यत आह—निःश्रेयसेति। मिथ्याज्ञानाद्यभावानां मोक्षोपायतया तत्रोपयोगादित्यर्थः। वस्तुतो मोक्षस्याभावरूपतया सोऽभ्यर्हित इति विभागार्ह इति भावः। पञ्चैवेति। एवकारः षडभिधाननिषेधपरः। ननु चापरतन्त्रः पदार्थोऽत्र विभक्तव्यः, अभावश्च न तथेत्याह—पारतन्त्र्यादितीति। पारतन्त्र्यं न विशेषणत्वं सर्वानभिधानापत्तेः, नापि समवेतत्वं गुणादेरप्यनभिधानप्रसङ्गात्, नापि परज्ञानाधीनज्ञानविषयत्वं संयोगसमवायादेरनभिधानापत्तेरित्याह—समवायादेरिति। नन्वत्र पदार्थो द्विविधो भावोऽभावश्चेति पदार्थविभाग आर्थः शाब्दश्च, भावरूपाः द्रव्यादयः षडिति विभक्तविभाग इति नोक्तदोष

न्यायलीलावतीप्रकाशविवृतिः

वाभिधानप्रसङ्गश्चेत्यपि द्रष्टव्यम्। ननु नञर्थोल्लेखोऽस्त्येव नञर्थघ-

तमस्तु(१) भावान्तरं(२) निषेधत्वेनानवभासमानत्वात् । बाधकाभावेन(३) चारोपानुपपत्तेः । आलोकाभावे(४) चाक्षुष-

न्यायलीलावतीकण्ठाभरणम्

ननु नायं पदार्थमात्रविभागो येनाभावानभिधानं दोषः स्यात्, किन्तु भावमात्रविभाग इत्यत आह—तमश्चेति । मेयान्तरं भावान्तरम् । नन्वालोकाभाव एव तम इत्यत आह—निषेधत्वेनेति । नञर्थोपरागेणेत्यर्थः । नन्वारोपितं पृथिवीरूपमेव तमो, न मेयान्तरम्, अत आह—बाधकाभाव इति । ननु तमसो भावान्तरत्वे आलोकाभावदशायां चाक्षुषत्वमेव बाधकम्, न हि भावस्तदानीं चक्षुषा गृह्यत इत्यत आह—आलोके चेति । विलक्षणमेव भावान्तरं तमो यद्ग्रहे चक्षुरालोकं नापेक्षते

न्यायलीलावतीप्रकाशः

इत्यत आह—तमश्चेति । ननु तमो न भावः किन्त्वालोकाभावः, तमःकाले तस्यावश्योपेयत्वादित्यत आह—निषेधत्वेनेति । नञर्थोल्लेखेनेत्यर्थः । वस्तुतो नीलरूपचलनाद्याश्रयतया तस्यानुभवाद् भावत्वमेव तस्योचितमिति भावः । ननु नीलादि तत्रालोकाभाव एवारोप्यत इत्यत आह—बाधकाभावे चेति । आलोकाभाव इति । तमो यदि रूपवत्स्यात् आलोकानपेक्षचक्षुर्ग्राह्यं न स्यात् घटवत्, नीलरूपवद्वा, भावग्रहे आलो-

न्यायलीलावतीप्रकाशविवृतिः

टित एव प्रलयपदादिवत् तमःपदादिशक्तेरित्यरुचेराह—वस्तुत इति । तमःप्रतीतिगोचरनीलरूप एव यथाश्रुते व्यभिचारात्, अन्यथा तर्कमाह—तमो यदीति । आलोकसापेक्षचक्षुर्ग्राह्यत्वे परमाण्वादावनैकान्त इत्यतो नञ्द्वयगर्भमापाद्यं मानुषेति चक्षुर्विशेषणमतो न विडालादिनयनग्राह्यघटादिना व्यभिचारः । नीलेति । न च नीलरूपवदिति दृष्टान्तानुपपत्तिः आपादकस्य तत्राभावादिति वाच्यम्, तमस्यारोपितस्य नीलरूपस्य व्यतिरेकदृष्टान्तत्वात् । न च ग्राह्यत्वं ग्रहणविशेष्यत्वमेव वाच्यमन्यथाऽभेदेन तमस्यारोपिते नीलरूपवति व्यभिचारादिति कथमापाद्यव्यतिरेकस्तत्रेति वाच्यम्, संसर्गस्यैव सर्वत्रारोप्यत्वमितिमतेनैतदभिधानादिति मिश्राः । तत्रेदं चिन्त्यम् ।

(१) तमश्चेति प्रकाशकृदादिसम्मतः पाठः । (२) मेयान्तरमिति कण्ठाभरणधृतः पाठः । (३) बाधकाभावे चेति प्रकाशादावुद्धृतः पाठः । (४) आलोके चेति पाठः कण्ठाभरणे ।

त्वं नास्तीति बाधकमिति चेन्न, तस्यालोकाभावव्यञ्जनीय-त्वात् । अन्यथारोपानुपपत्तेः । भावत्वे यदि द्रव्यान्तरं नवैवेति

न्यायलीलावतीकण्ठाभरणम्

इत्याह—तस्येति । प्रत्युत आलोकाभाव एवास्य व्यञ्जक इत्यर्थः । वा-स्तवनीलरूपवत्त्वे तमस आलोकाभावे चाक्षुषत्वं बाधकमित्यपि शङ्कार्थमाहुः । आलोकाभाववादिमतेऽपि तत्र नीलरूपारोपानुपपत्ति-रेव, न हि रूपारोपे चक्षुरालोकं नापेक्षत इत्याह—अन्यथेति । ननु दशमद्रव्यमेव तमोऽस्तु, तथा च न विभागव्याघात इत्याह—भावत्व-

न्यायलीलावतीप्रकाशः

कापेक्षस्यैव चक्षुषः सामर्थ्यात् । तथा च तमो न रूपवत् तेजोऽनपेक्ष-चक्षुर्ग्राह्यत्वात् आलोकाभाववदिति नीलरूपवत्त्वे बाधकमित्यर्थः । अत्रालोकाभावाव्यञ्जनीयत्वमुपाधिरित्याह—तस्येति । तमस्तु तद्व्यङ्ग्य-मित्यर्थः । अन्यथेति । यदि नैव तर्ह्यभावत्वे तमस आलोकं विना नी-

न्यायलीलावतीप्रकाशविवृतिः

यदि न विशेष्यत्वपर्यन्तं ग्राह्यत्वं तदा प्रतियोग्यधिकरणादौ व्यभि-चार इति तथाविवक्षावश्यकत्वे कथमापाद्यव्यतिरेकस्तत्रेति । तस्मा-न्नीलरूपवादिति न दृष्टान्तान्तराभिधानं किं त्वापादकान्तराभिधानम् । अत एव नीलरूपवत्त्वे बाधकमित्यग्रिमग्रन्थोऽपि सङ्गच्छत इति ध्ये-यम् । बाधकं विपरीतबाधक(१)मिति तदनुग्राहकं मानमाह—तथा चेति । न चात्राभावपक्षत्वे सिद्धसाधनमतिरिक्तपक्षत्वे चाश्रयासिद्धिर्बाधो वेति वाच्यम्, आलोकानपेक्षचक्षुर्ग्राह्यत्वस्य पक्षतावच्छेदकस्यो-भयसिद्धा पक्षव्यक्तिविकल्पस्यादोषत्वात् । न च तन्मते अंशतः सिद्धसाधनं तदवच्छिन्नयावद्व्यक्तेः पक्षीकरणात् । अत एव हेतुपक्ष-तावच्छेदकाभेदनिबन्धनसिद्धसाधनाप्रसङ्गोऽपि यावद्बाधघटितस्यैव हेतुत्वात् । वस्तुत आलोकाजन्यनीलविशिष्टचाक्षुषसाक्षात्कारविष-यत्वमेव पक्षतावच्छेदकमिति नांशतः सिद्धसाधनम्, न वा हेतुपक्ष-तावच्छेदकयोरभेद इति तमसस्तन्मते तामसेन्द्रियवेद्यत्वपक्षे च चक्षुःपदं रूपप्रतीत्यसाधारणकारणेन्द्रियपरं गोलकपरं वा । रूपभे-देन च पक्षस्यापि दृष्टान्तत्वमभेदानुमान इवाविरुद्धमिति दिक् । अत्रेति । न च तन्मते तमोवृत्तिनीलरूपकर्मादिषु साध्याव्यापकत्व-

(१) प्रमापकमिति द्वितीयपुस्तके पाठः ।

व्याघातः। अद्रव्यान्तरत्वं सर्ववादिनिषिद्धम्। अथ गुणान्तरं चतु-र्विंशतित्वव्याघात इति मेयान्तरमेव तमः। अत्रैव सङ्ग्रह श्लोकः—

नाभावोऽभाववैधर्म्म्यान्नारोपो बाधहानितः।
द्रव्यादिषट्कवैधर्म्म्याज्ज्ञेयं मेयान्तरं तमः॥

---

न्यायलीलावतीकण्ठाभरणम्

इति। नवैव द्रव्यानि उद्दिष्टानि लक्षितानि परीक्षितानि च, तद्व्या-घात इत्यर्थः। तर्हि नवस्वेवान्तर्भवतु तथा च रूपवत्त्वक्रियावत्त्वा-दिकमप्युपपद्यत इत्यत आह—अद्रव्यान्तरत्वमिति। नवान्तर्भूतत्वमित्यर्थः। निःस्पर्शत्वान्न वायुपर्य्यन्तान्तर्भावः, अनित्यत्वाच्च नाकाशादिष्वन्त-र्भावः इत्यर्थः। अभाववैधर्म्म्यादिति। निषेधार्थतयाऽभासमानत्वं वैधर्म्यं न तु नीलरूपवत्त्वं तथा सति द्रव्यत्वे मेयान्तरत्वभङ्गः। नन्वारोपितनी-लरूपमेव तमः स्यादत उक्तं—नारोप इति। ननु द्रव्यादिषु षट्सु तदन्त-

न्यायलीलावतीप्रकाशः

र्भावारोपो न स्यात् नीलतद्विशिष्टसाक्षात्कारे चक्षुष आलोकापे-क्षस्यैव सामर्थ्यादित्यर्थः। 'अद्रव्यान्तरत्वं' न द्रव्यान्तर्भूतत्वमित्यर्थः। सर्वेति। गन्धस्पर्शशून्यत्वान्न पृथिवी नीलत्वान्न जलादीति त्वयाप्यनु-मतमित्यर्थः। अत्र न कर्मान्तरमित्यपि द्रष्टव्यम्। मेयान्तरत्वं षडतिरि-क्तभावत्वं तेन अभावेन मेयान्तरेण न सिद्धसाधनम्। अभाववैधर्म्यं भावत्वसाधकः पूर्व्वोक्तो हेतुः।

न्यायलीलावतीप्रकाशविवृतिः

मिति वाच्यम्, द्रव्याभावान्यतरत्वरूपपक्षधर्मावच्छिन्नसाध्यव्याप-कत्वात्। व्यञ्जकत्वं च विषयत्वातिरिक्तरूपेण। अतो विषयीभूयस्त्व-व्यञ्जे आलोकाभावे न साध्याव्यापकत्वम्। साधनाव्यापकत्वमाह—तमस्त्विति। न कर्मान्तरमिति। उत्क्षेपणादेरन्यदिदं न कर्म्मेत्यर्थः। तेन नाप्रसिद्धिः। षडतिरिक्तेति। अत्रापि षडतिरिक्तमिदं भावत्वाश्रय इति साध्यमतो नाप्रसिद्धिः। अभाववैधर्म्यं भावत्वमपि तस्य च हेतुत्वे साध्याविशेष इति विशेषपरतामाह—अभाववैधर्म्यमिति। ['पूर्वोक्तो हेतुः' निषेधेनाप्रतीयमानत्वम्। (१)]

(१) एतन्मध्यस्थपाठो द्वितीयादर्शपुस्तके नास्ति।

क्षणावच्छेदकश्चोपाधिः क्षणिक इति षट् पदार्थाः । विधर्मे-ष्यतोऽपि नियमासिद्धिः ।

शक्तिश्च मीमांसकानाम् । अत्रैव संग्रहश्लोकः—

न्यायलीलावतीकण्ठाभरणम्

भावः स्यादत आह—द्रव्यादीति । आलोकनिरपेक्षचक्षुर्ग्राह्यत्वं द्रव्यादि-षट्कवैधर्म्यम् ।

क्षणेति । स्वाधेयो यः कादाचित्कोऽभावः प्रागभावः प्रध्वंसो वा तत्प्रतियोग्यनाधारः पलकलाक्षण इत्युच्यते कालोपाध्यव्या-पकः कालोपाधिर्वा तदवच्छेदकः क्षणमात्रस्थायी पदार्थो वाच्यो न चैतादृशो द्रव्यादिषु मध्ये कोऽपीति तस्यावश्यकाभ्युपगन्तव्य-स्यासंग्रहाद्विभागव्याघात इत्यर्थः ।

शक्तिश्चेति । मीमांसकानामिवास्माकमपि सेति तदसङ्ग्रहात् विभा-

न्यायलीलावतीप्रकाशः

क्षणेति । कालोपाध्यव्यापकः कालोपाधिः क्षणः स्वाधेयका-दाचित्काभावप्रतियोग्यनाधारो वा तदवच्छेदकत्वं नानेकक्षणाव-स्थायिन इत्यर्थात् तावन्मात्रकालवृत्तित्वलाभः, इदमेव षट्पदार्थ-वैधर्म्यमित्यर्थः । मीमांसकानां यथा तथास्माकमपीति शेषः ।

न्यायलीलावतीप्रकाशविवृतिः

कालोपाधीति । कालोपाधिरव्यापकोऽघटको यस्येत्यर्थः । अन्येषां द्विक्षणाद्यात्मकोपाधीनां क्षणघटितत्वान्नातिव्याप्तिशङ्का । व्योमाद्याति-व्याप्तिवारणाय चरमकालोपाधिपदम् । यद्वा कालोपाधिरव्यापको यस्येत्यर्थः । व्यापकत्वं तु तदधिकरणपर्याप्त्यधिकरणताकत्वम् । न च क्षणाधिकरणे अन्यस्याधिकरणता पर्याप्यते । यद्वा कालोपाधे-रव्यापक इत्यर्थः । द्विक्षणात्मकोपाधिः क्षणस्यैव व्यापकः क्षणस्तु न कस्यापि, विद्यमान एव दण्डादौ क्षणस्यानियमात् । अत्र च कल्पद्वये व्यापकत्वं भेदगर्भमतो नासम्भवः । स्वाधेयेति । स्वं लक्ष्यत्वाभिमतो धर्मी तदाश्रयौ यौ कादाचित्काभावौ प्रागभावप्रध्वंसौ तत्प्रतियो-ग्यनाधारत्वमित्यर्थः । द्विक्षणात्मके कालोपाधौ तु नैवं प्रतिक्षणं कस्यचिदुत्पत्तिः कस्यचिच्च विनाश इत्यभ्युपगमात् । ध्वंसादिप्रति-योगिघटादिनाऽसम्भववारणाय स्वाधेयेत्यभावविशेषणम् । अत्यन्ता-

न द्रव्यं (१)गुणवृत्तित्वात् गुणकर्मबहिष्कृता ।
सामान्यादिषु सत्त्वेन सिद्धा भावान्तरं हि सा ॥

अत एव ज्ञाततापि वैशिष्ट्यं च । कथमन्यथा भावाभाव-

---

न्यायलीलावतीकण्ठाभरणम्

गव्याघात इत्यर्थः । द्रव्याद्यनन्तर्भावं शक्तेराह—न द्रव्यमिति । सामान्यादिवृत्तित्वे सकलपदार्थवैधर्म्यं सत्येव द्रव्यगुणकर्म्मवैधर्म्यं गुणवृत्तित्वमप्युक्तम् । सूचितमीमांसकयुक्तीनामेव सङ्ग्रहाय श्लोकोऽपि । ज्ञातता वैशिष्ट्यं च यथा भट्टानां तथास्माकमपि, तथा च तदसङ्ग्रहेऽपि विभागव्याघात इत्याह—अतएवेति । भावान्तरमित्यनुषज्यते । ज्ञाततायां च ज्ञातो घट इत्यादिप्रतीतिर्मानं स्फुटमिति तदुक्त-

न्यायलीलावतीप्रकाशः

तेन तदुक्तयुक्तिः सूचितेति न सङ्ग्रहश्लोकत्वविरोधः । अत एवेति ।

न्यायलीलावतीप्रकाशविवृतिः

भावमादायासम्भव इति कादाचित्कपदम् । न च प्रागभावगर्भमेव सम्यक्, तदपेक्षयास्य लघुत्वात् । न च महाप्रलये लक्षणद्वयमतिप्रसक्तमिति वाच्यम्, लीलावतीकारेण तदनभ्युपगमात् । मतान्तरे तु कालोपाधिपदस्यैव तदन्यपरत्वमिति न प्रथमलक्षणातिप्रसक्तिः । कादाचित्काभावपदं च प्रागभावपरमिति न द्वितीयलक्षणातिव्याप्तिः । न च द्वितीयलक्षणे तथा सति महाप्रलयाव्यवहितपूर्वक्षणेऽव्याप्तिः स्वाधेयभावप्रतियोगिकप्रागभावानधिकरणत्वस्य विवक्षितत्वात् । न चैवं कादाचित्काभावगर्भतयैव सम्यक् प्रागभावगर्भत्वेऽप्यदोषात् । प्रागभावत्वस्य गन्धानाधारसमयवृत्त्यभावत्वरूपतया कादाचित्कत्वाघटितत्वादिति दिक् । ननु भवतः शक्त्यनभ्युपगमात् तामादाय विभागव्याघातदेशनानुपपन्नेत्यत आह—यथेति । यया युक्त्येत्यर्थः । संग्रहेति । सङ्ग्रहत्वं पूर्वोक्तोपनिबन्धनत्वं पूर्वयुक्त्यन-

---

(१) अत्र च पक्षतावच्छेदकसामानाधिकरण्यमात्रेण साध्यसिद्धेरुद्देश्यत्वात् प्रत्याश्रयं शक्तेर्भिन्नतया हेतोर्भागासिद्धत्वेऽपि न क्षतिः । शक्तित्वं न द्रव्यत्वादिव्याप्यं गुणादिवृत्तिवृत्तित्वादित्यत्र तात्पर्य्यमित्यप्याहुः ।

न्यायलीलावतीकण्ठाभरणम्

ङ्गथ वैशिष्ट्ये प्रमाणमाह—कथमन्यथेति । भावाभावयोरिति । संयोगस-मवायाभ्यां वैशिष्ट्यं तेषु न हि तौ भावाभाववृत्ती, तथा च घटाभाव-वद्भूतलमिति प्रतीतिरेव वैशिष्ट्ये प्रमाणमित्यर्थः । ननु वैशिष्ट्ये-ऽप्यभाववैशिष्ट्यं प्रतीयते तत्र च वैशिष्ट्यान्तराभ्युपगमेऽनवस्था स्यादिति तत्र स्वरूपसम्बन्धेनैव वैशिष्ट्यव्यवहार इति प्राथमिको-

न्यायलीलावतीप्रकाशः

पूर्वोक्तयुक्तेरित्यर्थः । ज्ञातताऽपि भावान्तरमित्यनुषज्यते, ज्ञातो घट इति विशिष्टप्रतीतेर्विशेषणविशेष्यसम्बन्धं(१) विनानुपपत्तेरिति भावः । कथमन्यथेति । घटाभाववद्भूतलमिति विशिष्टधीर्विशेषणवि-शेष्यसम्बन्धनिमित्ता यथार्थविशिष्टज्ञानत्वात् दण्डीतिज्ञानवदिति संयोगसमवायबाधे तदतिरिक्तसम्बन्धो वैशिष्ट्यमित्यर्थः । ननु वै-शिष्ट्ये वैशिष्ट्याभ्युपगमेऽनवस्थानाद्यथा प्रमेयत्वादिवैशिष्ट्यधीः स्व-

न्यायलीलावतीप्रकाशविवृतिः

भिधानाद्विरुद्धमिति युक्तिसूचनेनापास्तमित्यर्थः । भावान्तरमिति । षड-तिरिक्तेऽयं भावत्वाश्रय इत्यर्थः । आश्रयासिद्धिनिरासायाह—ज्ञातो घट इति । यथार्थेति प्रमेत्यर्थः । तेन नेश्वरज्ञाने मन्मते व्यभिचारः, तस्य प्रमाऽप्रमाऽ(२)न्यत्वात् । यत्तु जन्यपदेन तद्वारणमिति तन्न, परमते व्यावृत्त्यप्रसिद्ध्या व्यर्थविशेषणत्वात् । न च विशिष्टज्ञानत्वं वैशिष्ट्यविषयकज्ञानत्वमिति साध्याविशेष इति वाच्यम् स्वरूपस-म्बधात्मकवैशिष्ट्यमादाय हेतोरुभयासिद्धत्वात् । नचैवं तेनैवार्थान्त-रं विशेषणविशेष्यान्यसम्बन्धस्य साध्यत्वात् । न चैवं बह्वत्र व्यभि-चार इति वाच्यम्, तेन तत्र सर्वत्र वैशिष्ट्यस्वीकारात् । विशेषण-ज्ञानजन्यत्वमेव वा विशिष्टज्ञानत्वमिति दिक् ।

[प्रमेयत्वादीति । प्रमाविषयत्वरूपस्य प्रमेयत्वस्य प्रमावैशिष्ट्य-रूपत्वादिति भावः । ](४)

---

(१) विशेषणं विनेति वक्तव्ये विशेष्यसम्बन्धयोराभिधानं दृष्टान्तार्थतया । तथा च यथा विशे-ष्यसम्बन्धयोरभावे न विशिष्टधीस्तथा विशेषणाभावेऽपीत्यर्थः । विशेषणाभावे विशेषणविशेष्ययोः सम्बन्धस्याप्यभावात् तदधीनाया विशिष्टप्रतीतेरप्यनुपपत्तेरिति वार्थः । इति दीधितिः ।

(२) प्रमान्यत्वादिति पाठान्तरम् ।

(४) [ ] एतन्मध्यस्थ पाठो द्वितीयादर्शपुस्तके नास्ति ।

र्योर्वैशिष्ट्यस्यावगमः । यथा वैशिष्ट्ये तथा स्वरूपेणैवेति, चेन्न समवायापलापप्रसङ्गात् । अधिकस्तत्र प्रवाहो हीयते न प्रतीयमान इति चेन्न, अभावेऽपि तुल्यत्वात् । बाधोऽत्रास्तीति चे-

---

न्यायलीलावतीकण्ठाभरणम्

ऽपि तद्व्यवहारस्तत एवास्तु किं वैशिष्ट्येनेत्याह—यथेति । समवायेति । इह रूपसमवाय इति प्रतीतिर्यथा स्वरूपसम्बन्धेन तथा तन्तुषु पट इत्यपि तेनैव स्यादिति समवायोऽपि न सिध्येदित्यर्थः । ननु प्रतीयमानः समवायोऽपह्नोतुमशक्यः न हि तन्मात्राभ्युपगमेऽपि अनवस्थेत्याह—अधिक इति । तर्ह्यभावेऽपि तद्वैशिष्ट्यं तन्मात्रमस्तु प्रतीयमानत्वात् तदधिकः प्रवाहस्तत्रापि हीयतामित्याह—अभावेऽपीति । ननु प्रामाणिकैर्वैशिष्ट्यानभ्युपगमो बाधाधीन एवेति कश्चिदत्र बाधो भविष्यतीत्याह—बाध इति । यदि बाधोऽत्र तदा प्रामाणिकैरभिधीयेतैव

न्यायलीलावतीप्रकाशः

रूपेणैव तथाऽत्रापि स्यादित्याह—यथेति । तर्हि यथेह गोत्वमितीहधीनिमित्तं समवायस्तथेह गोत्वसमवाय इत्यनुभवात्तत्रापि समवायान्तरं स्यात् । अथ तत्र स्वरूपमेव निमित्तं तदेह गोत्वमित्यत्रापि तथा स्यादिति समवायोऽपि न सिध्येदित्याह—समवायेति । ननु समवाये समवायान्तरं नोपेयतेऽनवस्थानात्, गोत्वसमवायस्तु प्रतीतत्वादभ्युपेयोऽनवस्थाया मानाभावस्य मूलत्वादित्याह—अधिक इति । तर्हि घटाभाववद्भूतलमित्यत्र वैशिष्ट्यानुभवाद्वैशिष्ट्यमस्तु वैशिष्ट्येऽनुमानाभावात्तदभाव इत्याह—अभावेऽपीति । तुल्यत्वाद्वैशिष्ट्यस्वीकारस्य वैशिष्ट्ये वैशिष्ट्यास्वीकारस्य चेत्यर्थः । अत्रेति । वैशिष्ट्यस्वीकारे तदनभिधानादिति वैशिष्ट्याभावसाधकमानस्याभिधातुमशक्यत्वादि-

न्यायलीलावतीप्रकाशविवृतिः

'प्रतीतत्वात्' प्रमितत्वात्, न तु प्रत्यक्षत्वात् । एतद्दर्शने समवायस्याप्रत्यक्षत्वादिति (१)ध्येयम् । अतएवाग्रे मानाभाव इति सामान्यत एवोक्तम् । वैशिष्ट्येति । वैशिष्ट्याभावसाधकस्य मानत्वेन व्यवस्थापयितुमश-

---

(१) अस्वीकारादिति पाठान्तरम् ।

न्न। तदनभिधानात्। ततो भावाभावयोरपि तत्स्वीकारो दुर्वार एव। दण्डी पुरुष इति प्रतीतेश्च। शब्दमात्रमिदमिति चेन्न, इहायमित्यादावपि(१) तथात्वप्रसङ्गात्।

---

न्यायलीलावतीकण्ठाभरणम्

तदनभिधानात्तद्विरह एवात्रेत्याह—नेति। बाधाभावाद्वैशिष्ट्यं प्रामाणिकमेवेत्युपसंहरति—तत इति। न केवलमभावे वैशिष्ट्यप्रत्ययानुरोधात् वैशिष्ट्यं स्वीकुर्मः, किन्तु भावाविशिष्टप्रत्ययोऽपि तत्र प्रमाणम्। न च संयोगेनान्यथासिद्धिः तमादायापि समूहालम्बनस्य दुष्टत्वादित्याह—दण्डीति। ननु दण्डी पुरुषो दण्डविशिष्टः पुरुष इत्यर्थानुरोधी शब्दो न वैशिष्ट्ये प्रमाणमित्याह—शब्देति। तर्हि इहायमित्यपि शब्दमात्रं न समवाये प्रमाणमित्याह—इहायमिति। कुण्डे दधी-

न्यायलीलावतीप्रकाशः

त्यर्थः। तत इति। प्रमाणबलाद्भावयोः समवाय इव भावाभावयोरपि सम्बन्धान्तरं वैशिष्ट्याख्यमभ्युपेयं समवायाभावादित्यर्थः। न च भावाभावयोः सम्बन्ध एव नास्ति अभावस्यापक्षधर्मत्वेन हेतुत्वानापत्तेः भूतले घटसंसर्गो नास्तीति देशविशेषनियताभावव्यवहारानुपपत्तेश्च। न च प्रतियोगिदेशनियमात्तन्नियमः, तदन्यदेशताव्यवहाराभावापत्तेरिति भावः। यत्रापि संयोगस्तत्रापि वैशिष्ट्यमभ्युपेयं विशेषणविशेष्यवत्तयोर्वैशिष्ट्यस्यानुभवादित्याह—दण्डीति। न च दण्डपुरुषसंयोगा एव तद्विषयः दण्डपुरुषसंयोगा इतिप्रतीत्या सह विशेषाभावादिति भावः। शब्दमात्रमिति। मात्रपदेनार्थसंस्पर्शयमुक्तम्। इहायमिति। इह गोत्वमित्यत्रापीहेतिधीनिमित्तं समवायो न सि-

न्यायलीलावतीप्रकाशविवृतिः

क्यत्वादित्यर्थः। अभावस्येति। पक्षसम्बन्ध एव हि पक्षधर्मतेत्यर्थः। न तु तद्वृत्तित्वाभावप्रतियोगित्वमभावस्य पक्षधर्मतेत्यरुचेराह—भूतल इति। तदन्येति प्रतियोगिदेशान्यदेशताव्यवहारस्या(२)त्यन्ताभावे एवमप्यसमर्थनादित्यर्थः। न च प्रतियोग्यपि एव नियामकः अभावसम्बन्धमन्तरेण प्रतियोग्यभावस्यैवाभावादिति भावः। प्रतिज्ञा... साध्यसिद्धि-

---

(१) 'त्यादेरपि'। (२) प्रतियोगिदेशताव्यवहारस्येति द्वितीयपुस्तके पाठः।

आधाराधेयभावश्च मेयान्तरम्। संयोगसमवायावेव सप्तमीप्रथमाभ्यामभिलप्यमानसम्बन्धिनौ तद्व्यहारहेतू इति चेन्न,

---

न्यायलीलावतीकण्ठाभरणम्

ति प्रतीतिबलादाधाराधेयभावोऽपि सम्बन्धोऽधिकस्तदनभिधानात् विभागव्याघात इत्याह--आधारेति। न च संयोगवैशिष्ट्याभ्यामन्यथासिद्धिस्ताभ्यामुभयत्राधारत्वमाधेयत्वं वा प्रतीयेत न तु नियतप्रतीतिः स्यादिति भावः। सिद्धान्तान्तरेणान्यथासिद्धिं विवक्षन्नियताधारत्वाधेयत्वप्रतीतौ नियामकं शङ्कते--संयोगेति। सप्तम्यन्ते सम्बन्धिनि आधारत्वप्रतीतिः प्रथमान्ते त्वाधेयत्वप्रतीतिरित्यर्थः। सप्तमीप्रथमाभ्यां सम्बन्धिनौ नाभिलप्येते, किन्तु तयोराधाराधेयत्वे प्रत्याय्येते सेयं विचित्रा प्रतीतिराधाराधेयभावसम्बन्धमन्तरेणानुपपन्ना न हि विषयवैचित्र्यमन्तरेण प्रतीतिवैचित्र्यमित्याह—नेति। यद्वा इहायमिति प्रतीत्या सप्तमीप्रथमयोरभिलापः क्रियते

न्यायलीलावतीप्रकाशः

च्चेत्, तत्रापि शब्दमात्रत्वाभिधानसम्भवात्। अथाबाधितप्रतीतिबलात्तत्सिद्धिः तदा वैशिष्ट्यमपि तथेत्यर्थः। आधारेति। न द्रव्यं गुणवृत्तित्वादित्याद्युक्तयुक्त्या तस्य पदार्थान्तरेऽनन्तर्भावादित्यर्थः। न च वैशिष्ट्यं तत्र आधाराधेययोरन्योन्यवैशिष्ट्यस्योभयवृत्तित्वादाधारत्वाधेयत्वयोश्चैकैकवृत्तित्वात् नापि सम्बन्धेनान्यथासिद्धिः तस्याप्युभयवृत्तित्वादिति भावः। ननु सम्बन्धस्योभयाश्रितत्वेऽपि यतः सम्बधिनः सप्तमी तत्राधारव्यवहारो यतस्तु प्रथमा तत्राधेयव्यवहारः स्यादित्याह—संयोगेति। सप्तम्यर्थस्य संयोगित्वस्योभयवृत्तित्वेऽपि कुण्डे बदरमित्यत्र बदरशब्दान्न सप्तमी अनभिधानादित्यर्थः। एवमिह गोत्वमित्यत्रापि समवायो न सिद्ध्येदुक्तरीत्यान्यथासिद्धेः। अथ श-

न्यायलीलावतीप्रकाशविवृतिः

ब्दतो हेतुं पूरयति--न द्रव्यमिति। पदार्थान्तरे क्लृप्तपदार्थे(१)। सम्बन्धेन संयोगादिना। ननु सप्तम्यर्थस्य संयोगादेरुभयाश्रितत्वे सप्तमीप्रयोग एव किं नियामकमत आह—सप्तम्यर्थस्येति। परम्परासम्बन्धेन द्रव्या-

---

(१) क्लृप्तपदार्थान्तरे इत्यर्थ इति पाठान्तरम्।

इहायमितिप्रतीतिवैचित्र्यात् । शब्दमात्रत्वे तु सम्बन्धापलापप्रसङ्गात् ।

सादृश्यं च(१) गुणवृत्तित्वान्न द्रव्यगुणकर्मात्मकम् । नापि सामान्यम् । तद्धि व्यक्तिदर्शनमात्रवेद्यं वा प्रतियोगिग्रहणवेद्यं वा ।

---

न्यायलीलावतीकण्ठाभरणम्

सैव वः प्रतीतिः कथं स्याद् यद्याधाराधेयभावो न भवेदित्यर्थः । उच्चारणमपि नार्थप्रतीत्यधीनं न वा उच्चारणात् प्रतिपाद्यस्य काचिदभिमतार्थप्रतीतिरिति यदि तदेह तन्तुषु पट इत्याद्यपिप्रतीतिबलात् त्वदुपगतोऽपि सम्बन्धो न सिद्ध्येदित्याह—शब्दमात्रत्व इति । सादृश्यं च पदार्थान्तरं न विभक्तमिति पुनर्विभागव्याघातमाह—सादृश्यं चेति । सादृश्यस्य पदार्थान्तरवैधर्म्यमाह—गुणवृत्तित्वादिति । भवति हि यथा शङ्खस्य रूपं तथा पटस्येतिप्रतीतिबलाद्गुणवृत्तित्वमस्येत्यर्थः । ननु सामान्यमेव सादृश्यमित्यत आह—नापीति । व्यक्तिः

न्यायलीलावतीप्रकाशः

वद्दानुसन्धानेऽपि तत्प्रतीतेर्न सा शब्देनोपपाद्यते तद्याधारत्वादावपि तथेत्याह—इहायमिति । प्रतीतिवैचित्र्येऽपि यदि विषयशून्यशब्दमात्रस्वीकारस्तदा गोत्वसमवेतमित्यादिप्रयोगोऽप्येवं समर्थयितुं शक्यत इति समवायादिरपि न सिद्ध्येदित्याह—शब्दमात्रत्वे त्विति ।

अस्ति तावदबाधितसदृशबुद्धेः सादृश्यं तन्न द्रव्यादित्रयात्मकं(२) गुणसमवेतत्वादित्याह—सादृश्यमिति । अतएव न विशेषसमवायात्मकमित्यपि द्रष्टव्यम् । व्यक्तिः सादृश्याश्रयः प्रतियोगिन इति प्रतियोगिज्ञानस्य सादृश्यधीहेतुत्वादित्यर्थः । न सादृश्यज्ञानं प्रतियोगिज्ञानं हेतुः सामान्यरूपतया तस्य निष्प्रतियोगिकत्वात् शब्दप्रयोगात्मकत-

न्यायलीलावतीप्रकाशविवृतिः

देरपि गुणवृत्तित्वाद्यभिचार इत्यत आह—गुणसमवेतत्वादिति । अत एवेत्यनेनापि गुणसमवेतत्वमेवानुकर्षणीयम् । यथाश्रुतमौलहेतुपरामर्शे समवायेन व्यभिचारात् । प्रतियोगिनोऽपि व्यक्तित्वेन विकल्पास-

---

(१) 'त्रयं तु गु' ।
(२) विषयित्वादिना द्रव्यादेरपि गुणवृत्तित्वादाह—गुणसमवेतत्वादिति । इति दीधितिः ।

नाद्यः। प्रतियोगिनोऽनवभासे सादृश्यबुद्धेरभावात्। अस्त्येव च बुद्धिर्न व्यपदेशभागिनीति चेन्न, ब्राह्मणत्वा(१)देरपि निर्वि-

न्यायलीलावतीकण्ठाभरणम्

सादृश्याश्रयो गवयादिः प्रतियोगी सादृश्यनिरूपको गवादिः। प्रतियोगिन इति। सादृश्यस्यान्वयव्यतिरेकाभ्यां प्रतियोगिनिरूपणाधीननिरूपणत्वसिद्धेरित्यर्थः। अस्त्येवेति। प्रतियोगिग्रहणमन्तरेणापि सादृश्यं ज्ञायते न तु व्यवह्रियत इत्यर्थः। एवं सति ब्राह्मणत्वजातेरपि विशुद्धमातापितृजयोनित्वव्यङ्ग्यत्वात् सविकल्पकमात्रवेद्यत्वं सिद्धान्तो-

न्यायलीलावतीप्रकाशः

व्यवहारे तु तत् हेतुरित्याह—अस्त्येवेति। इदमनेन सदृशमिति सादृश्यानुभवात्प्रतियोगिज्ञानं विना तदज्ञानात् तस्य तद्धीहेतुत्वान्न निष्प्रतियोगिकसामान्यं सादृश्यम्, अन्यथा ब्राह्मण्यं (२)विशुद्धयोनिजत्वव्यङ्ग्यमतस्तज्ज्ञानं विना निर्विकल्पके तन्न भासते तज्ज्ञाने च सविकल्पकसामग्र्येवेत्यपि सिद्धान्तो व्याहन्येत। विशुद्धयोनिजत्वज्ञानस्य ब्राह्मण्यव्यवहारमात्रहेतुतया तज्ज्ञानाहेतुत्वे निर्विकल्पकेऽपि तद्भासत इत्यस्यापि वक्तुं शक्यत्वादित्याह—ब्राह्मण्यादेरिति।

न्यायलीलावतीप्रकाशविवृतिः

कृतिरत आह—व्यक्तिरिति। अन्यथा ब्राह्मण्यमिति। अत्र जातिर्व्यञ्जकवित्तिवेद्या न तु तद्धीजन्यवित्तिवेद्या, युगपदेव शिरःपुरुषत्वयोर्ग्रहादितिमते तज्ज्ञानं विनेत्यस्य तद्विषयतां विनेत्यर्थः। तज्ज्ञाने चेत्यस्य तद्विषयत्व इत्यर्थः। सविकल्पकसामग्र्येवेत्यत्र पूर्वमिति शेषः। तथा च विशुद्धमातापितृजन्यत्वस्य ब्राह्मण्यधीविषयत्वे शुद्धनिर्विकल्पके ब्राह्मण्यं न भासत इति सिद्धान्तः, स चैवं भज्येतेति प्रकरणार्थः। यदि च तद्ग्रहसामग्रीत्वेन त्वया कारणत्वं वाच्यमिति लाघवेन तद्ग्रहस्यैव कारणत्वं प्रत्यक्षविशेषे विशेषदर्शनस्येवेति मतम्, तदा यथाश्रुत एव ग्रन्थः। शिरःपुरुषत्वप्रतीतियौगपद्यधीस्तु भ्रम इति

(१) ब्राह्मण्यादेरिति प्रकाशसम्मतः पाठः।

(२) अविदितचरं पुंसि प्रहरावधि निराक्षणेऽपि ब्राह्मण्यादिसन्देहात्, अन्वयव्यतिरेकाभ्यां विशुद्धमातापितृजन्यत्वज्ञानं हेतुः। न चैवं ब्राह्मण्यादिविशिष्टज्ञानार्थं तन्निर्विकल्पकमावश्यकमिति वाच्यम्, व्यक्तिसविकल्पकस्यैव तदंशे निर्विकल्पकरूपत्वात्, तावतापि सविकल्पकमात्रवेद्यत्वाक्षतेः। इति दीधितिः।

कल्पकबुद्धिवैद्यत्वापत्तेः । नान्त्यः । अवयवसामान्यानां प्रागेव ज्ञानात्सामान्यस्य च सामान्यान्तरेऽभावात् । सादृश्यव्यवहाराभावापत्तौ मेयान्तरत्वादिति । मैवम् ।

भावत्वाधिष्ठिताः सर्वाः प्रत्येकं व्यक्तयो मताः ।

---

न्यायलीलावतीकण्ठाभरणम्

ऽपि भज्येत तद्व्यवहारमात्रे तदपेक्षेत्यपि वक्तुं सुकरत्वादित्यर्थः। अवयवेति। सामान्यान्येव भूयांसि गुणावयवकर्म्मणाम्। भिन्नप्रधानसामान्यव्यक्तं सादृश्यमित्यभ्युपगमात् सादृश्यं सामान्यं भवदवयवगतमेव भविष्यति। तद्ग्रहे च न प्रतियोगिग्रहापेक्षा व्यक्तिग्रहमात्रव्यङ्ग्यत्वात्तस्येत्यर्थः। सादृश्यस्य सामान्यत्वे बाधकान्तरमाह—सामान्यस्येति। यथा गोत्वं नित्यं तथाऽश्वत्वमपीतिप्रतीतेः सामान्येऽपि सादृश्याभ्युपगमात्। न च सामान्यं सामान्यवृत्तीति पदार्थान्तरमेव सादृश्यमित्यर्थः। भावत्वेति।

न्यायलीलावतीप्रकाशः

व्यवहर्त्तव्यज्ञाने व्यवजिहीर्षायां च सत्यां व्यवहारेऽन्यापेक्षा न दृष्टचरी, न च द्रव्यग्रहणसमकालं तत्परिमाणग्रहेऽपि तत्र दीर्घत्वह्रस्वत्वव्यवहार तथा दृष्टं तयोः परिमाणान्तरतया प्रतियोगिज्ञानव्यङ्ग्यत्वात् तत्काले तदग्रहादिति भावः। अवयवेति। प्रागेव प्रतियोगिज्ञानादितिशेषः। अवयवेत्युपलक्षणं गुणकर्मसामान्यानामपि प्रतियोगिज्ञानात्प्रागेव ज्ञानात् न तदात्मकमित्यपि द्रष्टव्यम्। ननु सादृश्यरूपतया तस्य ज्ञाने प्रतियोगिज्ञानं हेतुः स्यादित्यत आह—सामान्यस्येति। यथा गोत्वं नित्यं तथाऽश्वत्वमिति जातावपि सादृश्यानुभवान्न जात्यात्मकं सादृश्यमिति भावः। भावत्वेति। अनेन भावमात्रस्यायं विभक्तविभागो न

न्यायलीलावतीप्रकाशविवृतिः

भावः। निर्युक्तिकसिद्धान्तव्याकोपमात्रं न दूषणमत आह—व्यवहर्त्तव्येति। तयोः परिमाणान्तरतयेति। जातिविशेषविशिष्टपरिमाणात्मकतयेत्यर्थः। तथा च व्यवहर्त्तव्यतावच्छेद(क)विशिष्टे व्यवहर्त्तव्यज्ञानस्य व्यवहारकारणतया व्यवहर्त्तव्यज्ञान एव तदपेक्षणमिति भावः। केचित्तु अणुमहदादिभावेन परिमाणस्य चतुर्विधतया यथाश्रुत एव ग्रन्थार्थ इत्याहुः। तारत्वादेरुत्कर्षरूपतया जातित्वेन व्यक्तिग्रहणकाले ग्रहणेऽपि तारश-

द्रव्यादिषट्कविच्छेदमेलकेन विवर्जिताः ॥

भावत्वाधिष्ठानैकैकव्यक्तिमात्रे षड्लक्षणानां मिलितोऽयोगो व्यवच्छिद्यते न तु मिलितानामयोगः । अयोगश्चान्यत्राव-

---

न्यायलीलावतीकण्ठाभरणम्

द्रव्यादीति भावप्रधानो निर्देशस्तेन भावव्यक्तयः षण्णां द्रव्यत्वगुणत्वादीनां ये विच्छेदा अत्यन्ताभावास्तेषां यो मेलकस्तेन विवर्जिता इत्यर्थः । ननु भावसमुदाये षड्लक्षणाभावमेलकसत्त्वात् तन्निषेधे बाध इत्यत उक्तं प्रत्येकं व्यक्तय इति समुदायस्य समुदायिभ्योऽन्यत्वपक्षेऽनन्यत्वे तु प्रत्येकमिति व्यर्थम् । कारिकार्थमाह—भावत्वेति । अभावे मिलितो योऽयोगः प्रसिद्धो भावव्यक्तिषु निषिध्यते न तु मिलितानामिति षण्णां लक्षणानामेकत्रासत्त्वेन मिलनासम्भवादित्यर्थः । अन्यत्रेति । अभाव इत्यर्थः । अत्र भावव्यक्तिषु ।

न्यायलीलावतीप्रकाशः

तु पदार्थमात्रस्येत्युक्तम् । द्रव्यादीति । भावव्यक्तयः प्रत्येकं द्रव्यादिषड्लक्षणात्यन्ताभावमेलकशून्या इत्यर्थः । मिलितोऽयोग इति । अभावे तत्प्रसिद्धिः । न त्विति । मिलितलक्षणात्मकप्रतियोग्यप्रसिद्धेरित्यर्थः । ननु भावत्वेन षडेव द्रव्यादिव्यक्तयो विवक्षितास्तदन्या वा ? आद्ये सिद्धसाधनम्, न च सप्तमभावनिषेधः, अन्त्ये चाप्रसिद्धिः मेलकश्चात्र षडभावमात्रवृत्तिधर्मः कश्चित् षडेव वा अभावाः । आद्ये सिद्धसाधनं न हि षडभवामात्रवृत्रिधर्मो भाववृत्तिः तादृशधर्माप्रसिद्धिश्च । प्रसिद्धावपि(१) तस्याभावः सिद्ध्यतु न तु मेलकिनां तावतामभावानामभावः । अथ(२) मेलकाभावो न मेलकिनामभावं विनेति मेलकि-

न्यायलीलावतीप्रकाशविवृतिः

ब्दप्रयोगरूपव्यवहारेऽवधिज्ञानापेक्षेत्यपि न वाच्यं तत्रापि व्यवहर्त्तव्यतावच्छेदकस्य प्रवृत्तिनिमित्तीभूतस्य सजातीयसाक्षात्कारेत्यादेरवधिज्ञानज्ञेयत्वात् व्यवहर्त्तव्यतावच्छेदकस्यापि व्यवहर्त्तव्यत्वादिति भावः । षट्त्वावच्छिन्नेऽत्यन्ताभावमेलकसत्त्वाद्बाध इत्यत आह—प्रत्येकमिति । अन्त्य इति । षडेवाभावा इति पक्ष इत्यर्थः ।

---

(१) बुद्धिविशेषविषयत्वं न दुर्लभमित्यत आह—प्रसिद्धावपीति ।

(२) अथेति । परम्परासम्बन्धेन धर्म्मस्याभावः परम्पराघटकधर्म्याभावं विना नेत्यर्थः ।

न्यायलीलावतीप्रकाशः

नामप्यभावः सिद्ध्यति तर्हि मेलकिनामभावानामेकैकानामभावे विधीयमाने क्वचिद्बाधः क्वचित्सिद्धसाधनं द्रव्यत्वाभावाभावस्य गुणादौ बाधितत्वात् द्रव्ये तु सिद्धसाधनात्। अन्त्ये च मेलकोपादानवैयर्थ्यं प्रत्येकमिति च व्यर्थं न हि मिलितासु व्यक्तिषु षट्कविच्छेदमेलकः पदार्थान्तरस्वीकारापातात्। अथ व्यासज्यप्रतियोगिकोऽयमन्य एवाभावो घटवत्यपि घटपटौ न स्त इत्यनुभवात्, यत्र च स्वाभावमात्रप्रतियोगिकोऽभावस्तत्रैवाभावाभावस्य भावरूपत्वम्, तत्र व्यासज्यवृत्तिधर्मसमानाधिकरणप्रत्येकपर्यवसितप्रत्येकप्रतियोगिताका-

न्यायलीलावतीप्रकाशविवृतिः

वैयर्थ्यमिति। षट्त्वावच्छिन्नमपि द्रव्याद्येव तत्र च मिलितायोगासत्त्वादिति भावः। पदार्थान्तरेति। मिलितव्यक्तीनां पदार्थान्तरत्वापातादित्यर्थः।यथा घटवत्यपि घटपटोभयाभावस्तथा द्रव्यत्वाद्यत्यन्ताभावादिमत्यपि षण्णामभावानां निषेध इति न बाधसिद्धसाधने इत्याशङ्कते—अथेति। ननु षडभावाभावसत्त्वे प्रत्येकं षड्लक्षणापत्तिरभावाभावस्य भावत्वादत आह—यत्र चेति(१)। अव्यासज्यवृत्तिप्रतियोगिताकस्यैवाभावाभावस्य भावात्मकत्वमिति भावः। प्रतियोगितावच्छेदकावच्छिन्नेनैव च सममभावस्य विरोधो न प्रतियोगिमात्रेणान्यथा विशिष्टाभावोऽपि न स्यादिति पूर्वपक्षितुराशयः। प्रतियोगिता स्वरूपसम्बन्धात्मिका प्रत्येकपर्यवसिनेति प्रत्येकस्यैव विरोधित्वं प्रतियोगिताया विरोधित्वरूपत्वादित्यभिप्रेत्याह—व्यासज्यवृत्तीति।

---

एतावता तादृशधर्म्माश्रयाणां द्रव्यत्वाद्यभावानामभावः साध्य इति पर्य्यवसितम्। तत् किं द्रव्यत्वाद्यभावत्वेन साध्यता किं वा तादृशधर्म्मावच्छिन्नप्रतियोगिताकाभावत्वेन तत्र तादृशो धर्म्मः प्रत्येकपर्य्यवसितवृत्तिर्व्यासज्यवृत्तिर्वा विवक्षितः? तत्राद्यं निराकरोति तर्हीति। पक्षतावच्छेदकावच्छेदेन साध्यसाधनेऽशंतो बाधः, सामानाधिकरण्येन तथात्वेऽशंतः सिद्धसाधनं, द्वितीये त्वप्रसिद्धिः, तृतीयं पुनरवलम्ब्य वक्ष्यति—"भावत्वं वा षड्लक्षणाभावषट्काभावव्याप्यमिति।" षट्काभावः षट्त्वावच्छिन्नप्रतियोगिकाभावः। स पुनरतिरिच्यतां न वेत्यन्यदेतत्। व्युत्पादितं च व्यासज्यवृत्तिधर्म्मस्य प्रतियोगितावच्छेदकत्वमनुमानदीधितौ। यद्वा यत्किञ्चिदेकधर्मिघटितसम्बन्धेन तदभावो विवक्षितः, धर्म्मिसामान्यघटितसम्बन्धेन वा? आद्यं निराकरोति—तर्हीति। द्वितीये त्वप्रसिद्धिरिति।—इति दीधितिः।

(१) ननु षट्त्वावच्छिन्नप्रतियोगिताकस्य द्रव्यत्वाद्यभावस्यातिरिक्तत्वेऽत्यन्ताभावाभावस्य भावत्वनियमो व्याहत इत्यत आह—यत्र चेति। इत्यपि कश्चित्।

गतोऽत्र समारोप्य निषिध्यते भूतले चैत्रवत्। ततश्च षड्लक्ष-

न्यायलीलावतीकण्ठाभरणम्

ननु भावव्यक्तिषु प्रसक्तिरेव नास्ति कुतो निषेध इत्यत आह— समारोप्येति। आरोपरूपैव प्रसक्तिरित्यर्थः। भूतल इति। यथा गृहवर्त्ति-नश्चैत्रस्य भूतले प्राङ्गनादौ समारोपपूर्वको निषेधप्रत्यय इत्यर्थः। शुक्तौ रजतत्वमारोप्य नेदं रजतमिति बाधावतारादनेन दृष्टान्तेन सर्व्वाभावप्रत्ययानामारोपपूर्वकत्वमुन्नेयमिति भावः। ननु कीदृशेन एवकारसमभिव्याहारेणायमर्थो लभ्यत इत्यत आह—ततश्चेति। षड्-

न्यायलीलावतीप्रकाशः

भावादेव तादृशबुद्ध्युपपत्तौ तदनभ्युपगमात्। अथ गुणादिषट्पदार्थ-भिन्नं द्रव्यत्वायोगो नास्ति कर्मादिभिन्नं गुणत्वायोगो नास्तीत्य-योगव्यवच्छेदार्थः गुणादिषट्काभिन्नं द्रव्यभेदो नास्तीत्यन्ययोगव्य-वच्छेदार्थः। तत्र गुणादिषट्कपदार्थभिन्नत्वेन यदि द्रव्यमेव विवक्षितं तदा सिद्धसाधनम्, अन्यस्य चाप्रसिद्धिरित्यधिकरणविकल्पग्रासात् गुणाद्यभावपञ्चकसाहित्यं द्रव्यादन्यत्र नास्ति तस्य द्रव्य एव प्र-सिद्धेः। यद्वा गुणाद्यभावपञ्चकं द्रव्यत्वव्याप्यमित्यपि न, तत्रापि हि द्रव्यादन्यद्यदि गुणाद्येव विवक्षितं तदा सिद्धसाधनं अन्यच्चेत्तदा सिद्ध्यसिद्धिव्याघातः। अत्राहुः भाववृत्त्यत्यन्ताभावप्रतियोगित्वं न षड्लक्षणपर्यवच्छिन्नम्, यद्वा भाववृत्तिगुणाद्यभावपञ्चकसाहित्यं न द्रव्यत्वाभावस्थ, द्रव्यत्वं वा भाववृत्त्यभावपञ्चकव्यापकम्, भाव-वत्वं वा षड्लक्षणाभावव्याप्यमित्यवधारणार्थः। समारोप्येति। न चा-

न्यायलीलावतीप्रकाशविवृतिः

मूलोक्तायोगान्ययोगव्यवच्छेदौ संसर्गाभावान्योन्याभावरूपव्य-वच्छेद्यभेदेन कथंचिदुपपादयति—अथेति। अभावमादाय षट्त्वं बो-ध्यम्। गुणाद्यभावेति। गुणाद्यन्योन्याभावेत्यर्थः(१)। अन्यथा समवाये तदत्यन्ताभावपञ्चकसत्त्वाद्बाधापत्तेरित्यवधेयम्। अन्यत्रेत्यभाव इति शेषः। यद्वेति। भावत्वसामानाधिकरण्यावच्छिन्नं गुणाद्यन्योन्याभाव-पञ्चकमित्यर्थः। द्रव्यत्वव्याप्यत्वं द्रव्यान्यावृत्तित्वमित्यग्रिमदोषोऽत्र-पि लगतीति ध्येयम्। भाववृत्तीति। धर्मिपक्षतायां पक्षाविकल्पभयेनानु-

(१) गुणादिपदं वा गुणत्वादिपरम्।

गतधर्मपक्षता। षड्लक्षणावच्छेद्यं च षड्लक्षणत्वावच्छेद्यत्वमन्यथा षड्लक्षणानामेव प्रतियोगितयाऽसङ्गत्यापत्तेः। अभावे षड्लक्षणाभाव इत्यनुभवाद्बाध इत्यत उक्तं भाववृत्तीति। तच्चाभावविशेषणम्। न च षट्त्वावच्छिन्नात्यन्ताभावो द्रव्येऽपि वर्तत एव एकसत्त्वेऽपि द्वयमिह नास्तीतिप्रतीतेस्तथा च बाध इति वाच्यम्, तस्य पूर्वमेव दूषितत्वात्। न चैवं भाववृत्तीति व्यर्थं सप्तमभावानिषेधश्च षट्त्वस्य प्रतियोगितानवच्छेदकत्वादिति वाच्यम् प्रतियोगितापरं न व्यासज्यवृत्तिरिति घटशून्ये द्वित्वावच्छिन्नविरहवत् षट्शून्ये षट्त्वावच्छिन्नाभावाविरोधात्। अत एवाधिकरणभेदेनाभावभेदाभावात्। स एवाभावोऽभावेऽपीति भाववृत्तिपदोपादानेऽपि दोषतादवस्थ्यमित्यपास्तम्। भावेऽन्यतरप्रतियोगिसत्त्वेन तदनभ्युपगमात्। नतूक्तानुगतधर्मस्यापि भावघटितत्वाद्विकल्पस्तदवस्थः, न च भावत्वसमाधिकरणाभावप्रतियोगित्वं धर्मीति वाच्यम्, भावत्वसामानाधिकरण्यं हि भावत्वाधिकरणाधिकरणत्वमिति विकल्पग्रासतादवस्थ्यात्। नैवम्। व्यक्तिघटितत्वेऽपि सामान्येन रूपेण तत्प्रवेशे दोषाभावात्। अन्यथा कर्तृजन्यत्वानुमानेऽपि प्रसिद्धाप्रसिद्धकर्तृघटितत्वाविकल्पेन साध्यस्य(१) बाधाप्रसिद्ध्यन्यतरापत्तेः। एवं च मूलमपि सम्यगेव पक्षतावच्छेदकोभयसिद्धत्वे पक्षविकल्पस्यादोषत्वात् अन्यथा साध्यतदभाववत् पक्षविकल्पस्यापत्तेरिति। व्यासज्यवृत्तिधर्मः क्वापि प्रतियोगितावच्छेदको न भवतीतिमते लक्षणान्तरमाह—यद्वेति। अभावपदमन्योन्याभावपरम्। यद्यपि भाववृत्त्यभावपञ्चकस्यैवाभाववृत्तितया तत्सामानाधिकरण्यं द्रव्यत्वाभावे अस्त्येवाधिकरणभेदेनाभावभेदाभावात् तथापि भावरूपाधिकरणावच्छेदेनाभावपञ्चकसाहित्यं द्रव्यत्वाभावे निषेध्यमिति भावः। द्रव्यत्वं वेति। भाववृत्तित्वावच्छिन्नगुणाद्यन्योन्याभावपञ्चकव्यापकमित्यर्थः(२)। भावत्वं वेति। ननु षण्णामभावानां षडेव वाऽभावा व्यापकतया विवक्षिताः षट्त्वावच्छिन्नप्रतियोगिक एक एव वाऽभावस्तथा। नाद्यः। द्रव्यादौ गुणाद्यभावाभावा(३)-

(१) साध्ये तस्येति पाठान्तरम्।

(२) द्रव्यत्वत्वं न तादृशाभावप्रतियोगितावच्छेदकमिति वार्थः।

(३) गुणत्वाद्यभावाभावेति पाठान्तरम्।

णवदेव भावजातीयं मेयं(१) वाच्यमेवेतिवत् अयोगव्यवच्छेदस्य

न्यायलीलावतीकण्ठाभरणम्

लक्षणवत्त्वं षोढा लक्षणवत्त्वमेको धर्म्मः स च प्रत्येकलक्षणवत्त्वेनैव षण्णां भावानां नवानां गुणवत्त्वमिव प्रत्येकगुणवत्तया तदयोगश्चा-भावे प्रसिद्ध इह भावजातीये व्यवच्छिद्यत इत्यर्थः। ननु विशेषस्य भावजातीयस्याव्यभिचारे षड्लक्षणवत्त्वस्य कथं विशेषणत्वम्? न चेद्विशेषणत्वं तदा तत्सङ्गततया एवकारस्य कथमयोगव्यवच्छेद-कत्वम्? विशेष्यं व्यभिचारि चेत् तदा सत्तैव भावा इत्यतोऽनुरूपं दृष्टान्तमाह—प्रमेयं वाच्यमेवेतिवदिति। उपरञ्जकत्वेऽपि न दोष इत्यर्थः। तथापि दृष्टान्ते कथं अयोगस्याप्रसिद्धस्य व्यवच्छेद इति चेन्न विशे-ष्यतावच्छेदकधर्म्मस्य विशेषणतावच्छेदकधर्म्मव्याप्यत्वस्यैवात्र एवकारार्थत्वात् दार्ष्टान्तिकेऽपि तथात्वात् अयोगव्यवच्छेदार्थक-

न्यायलीलावतीप्रकाशः

रोपस्य हेतुत्वे मानाभावः, इदमिदं न नेदमिहेत्यनुभवस्यैव मान-त्वात्। यद्वा आरोपितरजतत्वायामेव शुक्तौ नेदं रजतमिति रजतत्वा-भावः प्रतीयते नान्यत्रेत्यन्वयव्यतिरेकयोस्तत्त्वात्। ततश्चेति। भावा-भावभेदात् पदार्थविभाग आर्थः भावविभागः शाब्दः। तथा चाभावे षड्लक्षणाभावः प्रसिद्धो भावेषु निषिध्यते इति नाप्रसिद्धिः। प्रमेयमिति।

न्यायलीलावतीप्रकाशविवृतिः

सत्त्वेन व्यभिचारात्। नान्त्यः। व्यासज्यवृत्तिप्रतियोगिताकाभावा-नभ्युपगमादिति चेत्, न। षड्लक्षणाभावषट्कनिष्ठाधेयत्वनिरूपि-ताधारत्वाभावव्याप्यं भावत्वमित्यर्थात्। द्रव्येऽभावपञ्चकसत्त्वेऽपि तदाधेयता न षट्त्वेनावच्छिद्यते अतिरिक्तवृत्तित्वात् षट्त्वस्य। अभावे तु तदाधेयता षट्त्वेनैव व्यासज्यवृत्तिधर्म्मस्य अभावप्रति-योगितानवच्छेदकत्वेऽपि आधेयतावच्छेदकत्वाविरोधात्। व्यास-ज्या(२)वृत्तिप्रतियोगिताकाभाववादिमतेनैवेदमित्येके। इदमिदं नेति। इतरसामग्रीतौल्येऽपि कदाचिद्घटान्योन्याभावस्य कदाचिद्घटत्वात्य-न्ताभावस्य प्रतीतेरभेदेन घटारोपस्य संसर्गेण घटत्वारोपस्य च कारणत्वमित्यर्थः। यद्वेति। यद्यपीदं न सर्वत्रानुभवसिद्धं तथापि क्व-

(१) प्रमेयमिति प्रकाशादिधृतः पाठः। (२) व्यासज्यवृत्तीति द्वितीयपुस्तके पाठः।

पदार्थान्तरे भावत्वं नास्तीत्यन्ययोगव्यवच्छेदस्य वा विभागार्थत्वात् ।

अभावस्य च समानतन्त्रसिद्धस्याप्रतिषिद्धस्य न्यायदर्शने

---

न्यायलीलावतीकण्ठाभरणम्

त्वं च समभिव्याहारबलप्रतीयमानमादायेति विवक्षितत्वात् । पदार्थान्तर इति । षड्लक्षणवदेव भावजातीयं नान्यदित्यन्ययोगव्यवच्छेदोऽपि सम्भवतीत्यर्थः । ननु भावजातीयत्वेन षण्णामेवाभिधाने सिद्धसाधनमन्यथा चाप्रसिद्धिरेवेति चेन्न गुणवदेव द्रव्यमित्याद्ययोगव्यवच्छेदस्यापि एवमप्यनुपपन्नत्वप्रसङ्गात् । द्रव्यत्वनियतसामानाधिकरण्यबोधनमेवायोगव्यवच्छेद इति चेत् तुल्यं प्रकृतेऽपि । इदमत्राकूतम्—पदार्थो द्विविधो भावोऽभावश्च । षोढा द्रव्यादिरिति विभक्तविभागे भावत्वं षड्लक्षणवत्त्वानधिकरणानधिकरणत्वम् । भावत्वं च सत्तासम्बन्धित्वं सत्तासंम्बन्धश्च समवायेन त्रयाणामेकार्थसमवायेन सामान्यविशेषयोः स्वरूपसम्बन्धेन सत्तासमवाययोरविशिष्टः । ननु विभक्तविभागश्चेदयं तदाऽभावविभागो न श्रूयते इति तं समर्थयति—अभावस्येति । 'तेषु न लक्षितलक्षणात्वा' दित्यादिसूत्रे न्यायदर्शने समानतन्त्रेऽभावस्य व्युत्पादितत्वादत्र च तदप्रतिषेधात् परमतमप्रतिषिद्धमनुमतमितिन्यायेन सूत्रकृतस्तत्राभ्युपगमोन्नयनात् । न्यायेति । यथा गोतमेन मनस इन्द्रियत्वं नोक्तमप्रतिषेधादभ्युगतं चेत्यर्थः । तर्हि अप्रतिषेधादन्यत्राभ्युपगमोऽस्तु किं पदार्थान्तरव्युत्पादनेनेति न शङ्कनीयम्, द्रव्यादिपदार्थानामुद्देशलक्षणपरीक्षारूपं शाब्द(स्त्र?)मेवेदं पृथक् न स्यात्, तथा च तत्त्वज्ञानार्थताभङ्गो निःश्रेयसहेतुताप्यस्य

न्यायलीलावतीप्रकाशः

प्रमेयत्वसमानाधिकरणात्यन्ताभावप्रतियोगि न वाच्यत्वमित्यर्थः । वाच्यत्वायोगस्याप्रसिद्धेः । पदार्थान्तरे अभाव इत्यर्थः । ननु चाभावस्य सूत्रकारेणाविभजनादप्रामाणिकत्वमेव तस्यानुमीयते (१)तत्कथं तत्रायोगप्रसिद्धिरित्यत आह—अभावस्य चेति । न ह्येवं द्रव्यादीनामप्यनभिधानं प्राप्तम्, तेषामपि समानतन्त्रेऽभिधानादित्यत आह—

(१) तदनुमतामित्युन्नीयते इति पाठान्तरम् ।

मानसेन्द्रियतासिद्धिवद्ग्राम्यविरोधात् अभ्युपगमसिद्धान्तासिद्धत्वात् ।

नीलं रूपमिति प्रतीतिश्च तमोविषयिणी यद्यपि अपसारितबाधा तदा (१)रूपमेव तमो, न द्रव्यादिवैधर्म्यम् । अथ

---

न्यायलीलावतीकण्ठाभरणम्

भज्येत, न हि परमताभ्युपगममात्रेणैव तन्निर्वहेत् । अभ्युपगमेति । सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तानां मध्येऽभ्युपगमसिद्धान्तस्यापि समानतन्त्रोक्तत्वादित्यर्थः ।

तमसः पदार्थान्तरत्वं निरस्यति—नीलं रूपमिति । नीलं रूपं तम इतिप्रतीतिर्नीलरूपं तम इति वा । आद्यमाह—नीलमिति । द्वितीयमाह—

न्यायलीलावतीप्रकाशः

अभ्युपगमेति । द्रव्यादिविभागाकरणे पृथक्शास्त्रत्वानुपपत्तिः । न च तत्तदनभ्युपगतपदार्थनिषेधप्रणयनेन तदुपपत्तिः कल्पनागौरवापत्तेः । विनिगमकं च भावनिरूपणाधीननिरूपणत्वमवसेयमित्यर्थः ।

तमसो भावान्तरत्वं दूषयति—नीलमिति । तदारोप एवेति । तथा च न ततो विषयसिद्धिरबाधितबुद्धेरेव तत्सिद्धेरित्यर्थः । स्वप्नावभा-

न्यायलीलावतीप्रकाशविवृतिः

विवन्वयव्यतिरेकाभ्यां बाधकं विना सामान्यतः कारणत्वकल्पनेऽन्यत्राप्याहार्यारोपकल्पनमिति भावः । वस्तुतः प्रतियोग्यारोपस्यानुगतस्याभावप्रमां प्रति गुणत्वेन हेतुत्वेन यद्विशेषयोरितिन्यायात्सामान्यहेतुतेति कल्पनेति विशेषनिषेधो लघुः विशेषनिषेधेन च शेषविधिर्गुरुर्निषेधप्रतिपादनस्योभयगर्भत्वादित्यर्थः । तद्ध्वंसाय एवाभिधीयतां शास्त्रे भावस्यैव चाभ्युपगमसिद्धान्तत्वमस्त्वित्यत आह—विनिगमकं चेति । तत्रापि लाघवमेव विनिगमकमिति भावः । मूलोक्तयुक्त्या तमस आलोकाभावत्वासिद्धावपि भावान्तरत्वनिषेधः सिद्ध्यत्येवेत्याशयेनाह—तमसो भावान्तरत्वमिति । ननु चलतीतिबुद्धिरेव भावत्वसाधि-

(१) नीलमित्यधिकः पाठः कण्ठाभरणसम्मतः प्रतीयते ।

सरूपवद्बाधा तदा आरोप एव, स्वभावभातनीलिमवत् । अथ रूपाश्रयत्वबुद्धिस्तमसि तदा बाधाबाधाभ्यां न पदार्थान्तरत्वम् । क्षणावच्छेदकश्चोपाधिरन्त्यशब्द एव । स चोपान्त्यशब्दना-

---

न्यायलीलावतीकण्ठाभरणम्

अथ इति । बाधाबाधाभ्यां प्रकारान्तराभावादित्यर्थः । न चाबाधितनीलरूपवत्त्वप्रतीत्या जलाद्यष्टकभेदसिद्धौ निर्गन्धत्वेन पृथिवीभेदाद् दशमं द्रव्यमिदमिति वाच्यम्, इदानीं पदार्थान्तरत्वमात्रस्यैव निरसनीयत्वेनाभिमतत्वात् द्रव्यत्वेऽपि प्रकृतविभागव्याघाताभावात् साधयिष्यते चाभावत्वमस्येति भावः ।

क्षणावच्छेदकोपाधिना प्रसक्तं पदार्थातिरेकं परिहर्तुमेकदेशिमतमुपन्यस्यति—क्षणेति । शब्दाजनकत्वं शब्दस्यान्त्यत्वम् । ननु कथमस्य क्षणावच्छेदकत्वमत आह—स चेति । चो हेतौ नाशसामग्रीसमवहितस्यैव तस्योत्पादात् क्षणमात्रस्थायित्वं तस्येत्यर्थः । उत्पादकसामग्र्येव यदि विनाशिका तदाऽन्त्यशब्दोत्पादनाशयोर्यौगपद्यमापद्यमित्या-

न्यायलीलावतीप्रकाशः

तेति नीलभ्रममात्रोपलक्षणम् । तदा बाधेति । नीलरूपवत्प्रतीतिर्यद्यबाधिता तदा पृथिव्येव तमः, अथ बाधिता तदा न ततो विषयसिद्धिः । न च ततोऽन्यत्तस्य भावत्वसाधकमस्तीत्यर्थः । वस्तुतस्तत्र बाधकमेव वक्ष्यत इति भावः ।

अन्त्य इति । शब्दाजनक इत्यर्थः । स चेति । चो हेतौ ।

न्यायलीलावतीप्रकाशविवृतिः

केत्यत आह—वस्तुत इति । तथा चालोकाभाव एव तम (१)इति भावः ।

महाप्रलयानङ्गीकर्त्तृमते अन्त्यशब्दाप्रसिद्धेराह—शब्दाजनक इति ।

---

(१) "न चैवमस्माभिरभ्युपगम्यते तमःशब्द निर्विषय इति । तमःशब्दस्य सविषयत्वे सूत्रव्याघातः । द्रव्यगुणकर्म्मनिष्पत्तिवैधर्म्याद् भाभावस्तम इति । न सूत्रार्थापरिज्ञानात् निराकृततेजःसम्बन्धीनि द्रव्यगुणकर्म्माणि तमःशब्देनाभिधीयन्ते तस्मान्न सूत्रव्याघातः ।"—इति न्यायवार्त्तिककाराः ।

"तस्माद् रूपविशेषोऽयमत्यन्तं तेजोऽभावे सर्वतः समारोपितस्तम इति प्रतीयते ।"—इति न्यायकन्दलीकृतः ।

"अन्धकारस्तु तेजोविशेषसामान्याभावः ।"—इति सामान्यलक्षणायां दीधितिकाराः । अत्र जगदीशः—"तेजोविशेषेति । महाप्रभात्वावच्छिन्नाभाव इत्यर्थः । उद्भूतानभिभूतरूपवन्महातेजःसामान्याभावस्तु नार्थः, अनुद्भूतत्वाभावाद्यात्मकस्योद्भूतत्वादेरतीन्द्रियतया तद्घटितधर्मावच्छिन्नाभावस्यायोग्यत्वेन प्रत्यक्षायोगात् ।"

क्यः। न च तस्यैवोत्पादनाशहेतुत्वे युगपद्विनाशोत्पादप्रसङ्गः, अन्त्य-शब्दसहकृतस्यैव तस्य नाशहेतुत्वात् । एतेन प्रध्वंसाहेतुकत्वमपास्तम् । अत्र च टीका—'यथान्त्य उपान्त्येन' इति कार्यकारण-विरोधिव्याख्यानावसरे इत्येके । तन्न । एवं सति ज्ञानादिषु द्वि-

---

न्यायलीलावतीकण्ठाभरणम्

शङ्कयाह—न चेति । विनाशसामग्र्यां प्रतियोगिनोऽन्त्यशब्दस्यापि प्रवेशात् तद्विलम्बात् क्षणमात्रं विलम्ब इति न यौगपद्यमित्याह—अन्त्येति । ननु क्षणिकस्यैव भावी विनाश इति किन्तस्य कारणान्तरा-पेक्षया तथा चाहेतुक एव तद्विनाशोऽस्त्वित्यत आह—एतेनेति । प्रध्वं-सस्याहेतुकत्वमपास्तमित्यर्थः । नाशहेतोरुपान्त्यशब्दस्य प्रतियोगि-नश्च प्रामाणिकत्वादिति भावः । एकदेशी स्वोक्ते "गुणकिरणावली"-कारसम्मतिं दर्शयति—अत्र चेति । 'टीका' किरणावली । ननु तत्र नैतदु-क्तमित्यत आह—कार्येति । कार्यस्य कारणं विरोधीति पाकजप्रक्रियाया-मेक एवाग्निसंयोगो रूपादिकमुत्पादयिष्यति नाशयिष्यति चेति द-र्शयता यथा अन्त्य उपान्त्येनेति दर्शितमित्यर्थः । एवमिति । अन्त्यशब्द आकाशवृत्तिज्ञानादिकं नावच्छिन्द्यादित्यर्थः । ननु व्यधिकरणोऽपि

न्यायलीलावतीप्रकाशः

तथा च नाशकसमवहितस्यैव तस्योत्पादादुत्पत्त्यव्यवहितो-त्तरक्षण एव नाशान्नानेकक्षणावस्थयित्वमित्यर्थः । अन्त्यशब्देति । ध्वंसे प्रतियोगिनो हेतुत्वादिति भावः । एतेनान्त्यशब्दसहितोपान्त्य-शब्दनाशकत्वेन । [ प्रध्वंसाहेतुकत्वमिति । प्रध्वंसस्य अहेतुकत्वं प्रति-योग्यतिरिक्तकारणानपेक्षत्वमर्थः । अपास्तमिति । उपान्त्यापेक्षणा-दिति ।] 'टीका' गुणकिरणावली । तत्र पाकजप्रक्रियायामेकस्योत्पादक-त्वनाशकत्वे यथोपान्त्यस्यान्त्ये इत्युक्तम् । क्वचित्कार्यकारणाविरोधीति पाठः । तत्राविरोधिनं दर्शयित्वा तद्विरुद्धत्वेन कार्यकारणविरोधोऽपि दर्शित इत्यवसरार्थः । एवं सतीति । अन्त्यशब्दाप्रतिसन्धानेऽपि(१) क्षण-व्यवहारादन्य एवायमुपाधिर्वाच्य इत्यर्थः । ननु तत्रापि नोपाधेर-

न्यायलीलावतीप्रकाशविवृतिः

एतेनेति । हेतुद्वयसूचनायोभयोपादानम्, दार्ष्टान्तिकाभावे दृष्टान्तानुप-

---

(१) तदप्रतिसन्धानेऽपीति दीधित्यनुसारी पाठः।

त्रिक्षणावस्थायित्वव्यवहारो न स्यात्। देशान्तरोदीरितान्त्यश-ब्दोपाधिकोऽसाविति चेन्न, उपाधेरनिश्चयेनान्यत्र निश्चयेन व्य-वहारानुपपत्तेः। अवष्टब्धदेशविभागाभावोपहितः सूर्यपरिस्पन्द इत्यन्ये। स्पन्दस्य स्वरूपाभेदेऽपि विभागाभावविभागतत्पूर्वसंयो-गनाशोत्तरसंयोगात्मकोपाधिचतुष्कान्यतमः क्षणव्यवहारहेतुरि-त्यपरे। तथा च टीका—'निमेषस्य चतुर्थो भागः क्षण' इति। तन्न।

---

न्यायलीलावतीकण्ठाभरणम्

शब्दः कालद्वाराऽवच्छेत्स्यतीत्याह—देशान्तरेति। उपाधिनिश्चयाधीन उपहितप्रत्ययस्तदनिश्चयेन कथं तत् स्यात् तन्निश्चयश्च न प्रत्यक्षा-दिनेत्याह—उपाधेरिति। मतान्तरमाह—अवष्टब्धेति। विभागाभावोऽत्र विभागप्रागभाव उक्त इति स्फोरणार्थमवष्टब्धेति। अवष्टब्धः संयुक्त इत्यर्थः। स्वजन्यविभागप्रागभावावच्छिन्नः सूर्य्यपरिष्पन्दः कालमव-च्छिद्य ज्ञानादौ क्षणिकत्वव्यवहारं करोतीत्यर्थः। अवान्तरप्रलये क्षणगणनास्ति न तु सूर्य्यपरिष्पन्द इत्यनुशयेन मतान्तरमाह—स्प-न्दस्येति। स्वजन्यविभागप्रागभावाच्छिन्नः स्पन्दः स्वनाश्यसंयोगस-मवहितो विभाग उत्तरसंयोगप्रागभावसहितः पूर्व्वसंयोगनाशः स्व-नाश्यकर्म्मसहित उत्तरसंयोग इति चत्वार उपाधय इत्यर्थः। प्रलये

न्यायलीलावतीप्रकाशः

भाव इत्याह—देशान्तरेति। स्वरूपसन्नेवोपाधिर्न क्षणव्यवहारहेतुः किन्तु तन्निश्चयः स नास्त्येवेत्याह—उपाधेरिति। अवष्टब्धेति। अवष्टब्धः संयुक्तो देशस्तस्य विभागाभावः। अवष्टब्धग्रहणात् न प्रागभावरूपस्तदुपहितः। तथा च स्वजन्यविभागप्रागभावविशिष्टः (१) स्पन्दः क्षणोपाधिस्त-स्यैकक्षणमात्रस्थायित्वादित्यर्थः। न चैवं विभागोत्पत्तौ तन्नाशात् क्षणव्यवहारो न स्यात् प्रलयकाले च रवेरभावादतो मतान्तर-माह—स्पन्दस्येति। संयोगनाश इत्यत्रोत्तरदेशसंयोगप्रागभावसहित

न्यायलीलावतीप्रकाशविवृतिः

पत्तौ यश्चेत्ययुक्तमतस्तदुपदर्शयति—तत्र पाकजेति। अवष्टब्धेति। अनेन

---

(१) स्वजन्येति। विभागस्याव्याप्यवृत्तित्वाद्। आरम्भकसंयोगप्रतिद्वन्द्विविभागजनकस्य कर्म्मणोऽवयवान्तरनाशाद् विभागनाशेऽप्यनुवृत्तेश्चोक्तं प्रागभावेति। इति दीधितिः।

त(अ?)भावस्वरूपं वोपाधिः, कर्मस्वरूपं वा, तयोः संबन्धो वा। नाद्यौ। तयोरनेककालव्यापित्वात्। नान्त्यः (न तृतीयः ?)। तस्या·

---

न्यायलीलावतीकण्ठाभरणम्

चाणुकर्म्मण एव उपाधित्वादिति भावः।

[स्पन्दस्येति। संयोगनाश इत्यत्र उत्तरदेशसंयोगप्रागभावसहित· इति शेषः। कर्म्मणः स्वजन्याविभागप्रागभावसहितस्य, विभागस्य स्व· नाश्यसंयोगसहितस्य, संयोगनाशस्य च उत्तरदेशसंयोगप्रागभाववतः, कर्म्मणश्च स्वजन्योत्तरसंयोगसहितस्य क्षणावच्छेदकोपाधित्वम्, न झुककयोर्द्वयोः पूर्व्वापरकालताधीसम्बन्ध इत्यर्थः, प्रलये चाणुकर्म्म· णस्तथाभाव इति भावः।] निमेषोऽक्षिपक्ष्मस्पन्द एकः। अभा· वस्वरूपमिति। विभागप्रागभावस्वरूपम्। उपलक्षणं चैतत् पू· र्व्वसंयोगनाशाद्योऽपि त्रयो द्रष्टव्याः। न तृतीय इति। तृतीयपक्षस्या· पि पूर्व्वदोषेणैव दुष्टत्वे पृथक् दोषाभिधानं तदुभयस्वरू· पस्थैर्य्याधीनमेव तदुभयसम्बन्धस्यापि स्थैर्य्यमिति कृत्वा। ननु तदुभयस्वरूपादन्य एव तदुभयसम्बन्धः क्षणमात्रस्थायी कश्चित्

न्यायलीलावतीप्रकाशः

इति शेषः। कर्मणः स्वजन्यविभागप्रागभावसहितस्य विभागस्य स्वनाश्यसंयोगसहितस्य संयोगनाशस्य चोत्तरसंयोगप्रागभा· ववतः, कर्मणः स्वजन्योत्तरसंयोगसहितस्य क्षणावच्छेदकोपा· धित्वं न झुककयोर्द्वयोर्द्वयोः पूर्वापरकालभावी सम्बन्ध इत्यर्थः। प्रलये चाणुकर्मणस्तथाभाव इति भावः। दूषयति—अत्रेति। तस्येति। स्वरूपमेव तयोः सम्बन्धस्तच्चानेकक्षणवृत्त्येवेत्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

दि· स्वनाश्यसंयोगसमानकालत्वं विभागाभावस्य सूचितमिति स प्रागभाव एव पर्य्यवस्यतीति भावः। अन्यविभागप्रागभावोपधानमन्य· दापीति विशेषयति—स्वजन्येति। संयोगनाश इत्युपलक्षणम्, विभागः स्वनाश्यसंयोगसहित इत्यपि द्रष्टव्यम्।

नेककालव्यापित्वे क्षणव्यवहारविरोधात् । एकक्षणावस्थायित्वे च क्षणिकत्वापत्तेः। समानाधिकरणौ सूर्यसंयोगविभागावित्यन्ये। तन्न, एतद्रूपद्वयं वा क्षणोपाधिरनयोः सम्बन्धो(१) वा एतेषां मेलको वा । नाद्यौ । तयोरनेककालव्यापित्वात् । न तृतीयः ।

---

न्यायलीलावतीकण्ठाभरणम्

स्यादित्यत आह—एकक्षणस्थायित्व इति । न चापाद्याविशेषः स्वाधिकरणक्षणोत्तरानुत्तरत्वविशिष्टस्वाधिकरणक्षणाव्यवहितोत्तरक्षणवृत्तिध्वंसप्रतियोगित्वेन स्वसमानकालीनकादाचित्काभावप्रतियोग्यसमानकालीनत्वस्यापादनात् । समानाधिकरणाविति ।स्वनाश्यसंयोगसमानकालीनो विभागः स्वनाशकविभागसमानकालीनसंयोगो वेत्यर्थः । एवं च नातिप्रसंगः। एतद्रूपद्वयमिति । उक्तसंयोगविभागद्वयमित्यर्थः । एतेषामिति । संयोगविभागसम्बन्धानामित्यर्थः । तयोरिति । स्वरूप-

न्यायलीलावतीप्रकाशः

एकेति । न चात्र साध्याविशेषः स्वसमानकालीनकादाचित्काभावप्रतियोग्यसमानकालीनत्वमेककालावस्थायित्वम्, क्षणिकत्वं च स्वाधिकरणक्षणोत्तरानुत्तरत्वविशिष्टस्वाधिकरणक्षणोत्तरक्षणवृत्तिध्वंसप्रतियोगित्वमित्यर्थात् । समानाधिकरणाविति । स्वनाशकसंयोगसमानकालीनो विभागः स्वनाशकविभागकालीनश्च संयोग इत्यर्थः । तेन नातिप्रसङ्गः। सिद्धान्ती स्वपक्षे दोषमभ्युपेत्य पूर्वपक्षेणं क्षणिकपदार्थसिद्धौ

न्यायलीलावतीप्रकाशविवृतिः

स्वसमानेति । अत्रात्यन्ताभावमादायासम्भववारणाय कादाचित्केत्यभावविशेषणम् । प्रतिक्षणं कस्यचिदुत्पत्तिरित्यादिसिद्धान्ताच्चेदं नेयम् । चरमध्वंसस्तु महाप्रलयानङ्गीकारान्नास्त्येवेति न तत्रातिव्याप्तिशङ्का, तत्स्वीकारे तु भावत्वमपि विशेषणम् । केचित्तु तदतिव्याप्तिवारणाय(२)कादाचित्काभावपदं प्रागभावपरमित्याहुः । तच्चिन्त्यम् । चरमक्षणिकाव्याप्तेः । स्वाधिकरणेति । स्वं लक्ष्यम् । अग्रिमप्रतीकमात्रं घटादावतिव्याप्तमिति विशिष्टपर्यन्तं चरमक्षणविशेषणम् ।(३)

---

(१) 'योः समवायो' वा । (२) 'व्याप्तेर्निरासाय' ।

(३) 'न तु प्रथमक्षणविशेषणमित्याधिकः पाठो द्वितीयपुस्तके ।

तस्यैव क्षणिकत्वस्वीकारात् । सत्यं, किं पुनः क्षण(१) सिद्धौ

---

न्यायलीलावतीकण्ठाभरणम्

द्वयसम्बन्धयोरित्यर्थः । तस्यैवेति । मेलकस्यातिरिक्तस्य क्षणिकत्व-स्वीकारप्रसङ्गादित्यर्थः । एकदेशिनां मते तु पूर्वपक्षिणोक्तानि दूष-णानि अङ्गीकृत्य सिद्धान्ती पृच्छति--सत्यं किं पुनरिति । क्षणसाधकेनैव

न्यायलीलावतीप्रकाशविवृतिः

क्षणद्वयावस्थायिज्ञानादावतिव्याप्तिः स्वाधिकरणक्षणानुत्तरत्वमात्रे चासम्भव इत्युत्तरानुत्तरत्वपर्यन्तम् । न चाग्रिमस्वाधिकरणक्षणोत्तर-पदवैयर्थ्यं ध्वंसस्य प्राक्कालावृत्त्याऽर्थगत्यैव तल्लाभादिति वाच्यम्, ध्वंसपदस्य कादाचित्काभावपरतया प्रागभावमादाय कार्यमात्राति-व्याप्तेरिति मिश्राः । केचित्तु ध्वंसपदं न स्वध्वंसपरं किन्तु सामान्यपर-मिति(२)प्रागभावध्वंसात्मकघटादिप्रतियोगितया ध्वंसेऽतिव्याप्तिवार-णाय तदिति वदन्ति । अत्र मिश्राः । घटध्वंसे पटो नेतिप्रतीत्याऽ-भावाधिकरणकाभावान्तरानभ्युपगमेन घटध्वंस एव पटाभाव इत्या-गतम् । एवं च पटोत्पत्त्यव्यवहितोत्पन्नघटध्वंसप्रतियोगिनि पटेऽ-तिव्याप्तिरिति ध्वंसपदस्य स्वध्वंसपरत्वावश्यकत्वे कथमुक्ताति्व्या-प्तिसम्भवो येन विशेषणमर्थवदिति दूषणं प्रयच्छन्ति । तच्चि-न्त्यम् । अधिकरणान्तरस्वीकृतस्यैव पटात्यन्ताभावस्य घटध्वंसे पटो नेतिप्रतीत्या विषयीकरणे कुतो घटध्वंसस्य पटात्यन्ताभावात्मक-त्वम्, येन स्वध्वंसपरं ध्वंसपदमिति तस्य सामान्यपरत्वात् । यत्तु वृत्तिपदस्य व्यापकत्वमर्थः इति स्वकाले प्राक्काले च तद-भावादसम्भववारणाय स्वाधिकरणक्षणोत्तरेति(३) । तन्न, तथा सति विशिष्टपर्यन्तव्यर्थतापत्तेः । चरमक्षणिकाव्याप्तिश्चैतन्मते तदनभ्युपग-मादेव निरस्या । यत्तु चरमक्षण(पद?)स्य कालोपाधिमात्रवाचकतया महाप्रलयेऽपि चरमध्वंसात्मककालोपाधिसत्त्वान्न तत्रातिव्याप्तिरिति मतम्, तदबोधात् । एवमपि स्वाधिकरणक्षणोत्तरत्वाप्रसिद्धेरिति ।

---

(१) 'क्षणिकत्वसि' ।

(२) अत्र ध्वंसपदेन स्वपरसाधारणो भावाभावसाधारणो ध्वंसो विवक्षित इत्यर्थः ।

(३) विशेषण मित्यधिकं द्वितीयादर्शपुस्तके ।

मानं, क्षणवेदनम् । किं क्षणवेदनम् । अस्तमितपूर्वापरभाववस्तु-
वेदनं वा क्रियावेदनं वा(१) तदुभयसंसर्गवेदनं वा । नाद्यान्त्यौ ।
असिद्धेः । नापरौ । तयोः स्थिरत्वात् । नानाक्षणवर्तिनो घटादय

---

न्यायलीलावतीकण्ठाभरणम्

प्रमाणेन तदवच्छेदक उपाधिरपि कश्चित् विषयीकर्त्तव्यः, स च प-
रिगणितपदार्थ एवान्तर्भविष्यतीति न तदनुरोधेन पदार्थान्तरस्वी-
कार इति भावः । पूर्व्वपक्ष्याह—क्षणवेदनमिति । प्रत्यक्षमेव तत्र प्रमा-
णमिति भावः । प्रत्यक्षस्यालम्बनं पृच्छति—किमिति । अस्तमितेति । पूर्व्वा-
परभावः कार्य्यकारणभावः । तथा च तस्य न किञ्चित् कारणं न वा
किञ्चित् कार्य्यं तादृशस्य जगद्विलक्षणस्य वस्तुनो वेदनमित्यर्थः।यद्वा
स्वसमानकालीनकादाचित्काभावप्रतियोग्यसमानकालीवस्तुवेदनमि-
त्यर्थः । क्रियावेदनमिति । सूर्य्यादिस्पन्दवेदनमित्यर्थः। तत्कार्येति। क्रियाकार्य्यो
विभागस्तस्य प्रागभाववेदनमित्यर्थः । तत्संसर्गेति (२)क्रियाविभागप्रा-
गभावयोर्यः संसर्गस्तद्वेदनमित्यर्थः । नाद्यान्त्याविति। न जगद्विलक्षणं वस्तु
न वा क्रियया सह विभागप्रागभावस्य संसर्गः केनचिन्मानेन विष-
यीक्रियते इत्यर्थः । तयोरिति । क्रियातज्जन्यविभागप्रागभावयोरित्यर्थः ।
ननु यदि क्षणवेदनं नास्ति तदा नानाक्षणवर्त्तिनो घटादय इतिविशि-

न्यायलीलावतीप्रकाशः

मानं पृच्छति—सत्यं किं पुनरिति । अस्तमितेति । स्वसमानकालीनप्रागभा-
वप्रतियोग्यसमानकालीनवस्तुवेदनमित्यर्थः । क्रिया स्पन्दः तत्कार्यो
विभागः । असिद्धेरिति । तादृशे वस्तुनि मानाभावात्प्रत्यक्षस्येन्द्रिय-
सम्बन्धाधीनत्वात् उत्तरकाले विषयस्यासत्त्वात् तस्य च वर्त्तमाना-
र्थग्राहित्वात् नाप्यनुमानं व्याप्तेरसिद्धेरित्यर्थः । ननु क्षणवेदनस्य न

न्यायलीलावतीप्रकाशविवृतिः

यथाश्रुते व्योमादावतिप्रसङ्गोऽत आह—स्वसमानेति । तदुभ-
यसंसर्गस्य तदुभयरूपत्वे तयोः स्थिरत्वादित्येव दूषणमतिरिक्तत्वे
च तुल्य एवाद्यन्तयोर्दोष इत्यभिप्रेत्यासिद्धिं विवृणोति—तादृश इति ।

---

(१) तत्कार्य्यप्रागभाववेदनं वा तत्संसर्गवेदनं वेत्येवं पाठः कण्ठाभरणादिसम्मतः ।

(२) तदुभयसंसर्गेति पाठ आदर्शमूलसम्मतः ।

इति प्रत्यक्षादेव क्षणनिरीक्षणमस्तीति चेन्न, क्रमिकसंयोगविभागाद्युपाधित एव तत्प्रतीतेः। अनुमानादस्तीति चेन्न, लिङ्गाभावात्। क्षणप्रयोगात्तदनुमानमस्तीति चेन्न, निरूपिते वस्तु-

---

न्यायलीलावतीकण्ठाभरणम्

ष्टानुभवाधीनोऽभिलाप एव न स्यात्, तथा च प्रत्यक्षादेव क्षणवेदनं कार्य्येण कारणमपीन्द्रियसन्निकर्षाद्युन्नेष्यत इत्याह—नानेति। अयं विशिष्टानुभवः क्रमवत्संयोगविभागव्यवच्छेदं घटस्य विषयीकरोति न तु त्वदभिमतं क्षणं तत्काले सन्निकर्षाभावात्, तदनन्तरं च विषयस्यैवाभावात् सम्बद्धवर्त्तमानस्यैव प्रत्यक्षविषयत्वात् प्रतीतेरन्यथोपपत्त्या प्रत्यक्षसामग्र्यन्तरकल्पनस्याप्यनवकाशादित्यभिप्रायेणाह—क्रमिकेति। ननु आनुमानिकं क्षणवेदनं स्यादित्यत आह—अनुमानेति। क्षणमात्रस्थायिना व्याप्तिग्रहाभावात् पक्षधर्म्मताग्रहाभावात् व्याप्तः पक्षधर्म्मो लिङ्गं प्रकृते न सम्भवतीत्याह—नेति। ननु क्षणपदं कस्यचित् वाचकं पदत्वात् गवादिपदवदित्यनुमानं स्यादित्याह—क्षणेति। यदि पदं प्रयुज्येत तदा लिङ्गं भवेत् प्रयोगश्च सङ्केतग्रहाधीनो न क्षणपदार्थोपस्थितिं विनात्यन्योऽन्याश्रय इत्याह—नेति। ननु शब्दोऽर्था-

न्यायलीलावतीप्रकाशः

लिङ्गभावेन क्षणे मानत्वं येन विषयाज्ञाने तदज्ञानात् क्षणानुमितिः स्यात् किं तु घटज्ञानवत् स्वरूपसदेव मानमित्याह—नानेति। उक्तयुक्त्या न क्षणिकस्य प्रत्यक्षत्वमिति क्रमिकाविशिष्टसंयोगादिरुपाधिरेव तद्विषय इत्याह—क्रमिकेति। लिङ्गाभावादिति। व्यापकानिरूपणे व्याप्त्यज्ञानादित्यर्थः। अतिरिक्तं च वैशिष्ट्यं त्वया नाभ्युपेयत इति भावः। क्षणप्रयोगादिति। नयनाद्यात्मकव्यवहारस्य क्षणेऽसम्भवात् क्षणशब्दप्रयोगस्तत्र मानमित्यर्थः। निरूपित इति। विषये निरूपि-

न्यायलीलावतीप्रकाशविवृतिः

तथा च विषयाज्ञाने क्षणवेदनस्याज्ञानात् न लिङ्गत्वमिति भावः। स्वरूपासिद्धिदेशनाभ्रमं वारयति—व्यापकेति। व्यापकस्य क्षणस्याज्ञाने व्याप्त्यज्ञानादित्यर्थः। ननु कर्मणि विभागप्रागभावस्य यद्वैशिष्ट्यं तत्प्रतीतमेव व्यापकं भविष्यतीत्यत आह—अतिरिक्तं चेति। भट्टैः

नि क्षणशब्दप्रयोगः, तस्माच्च तदनुमानमितीतरेतराश्रयात्। न च प्रत्यक्षानुमानयोरभावे मानान्तरावकाशः। ततो मानाभावान्नास्त्येव क्षणिकः क्षणः इति। किं तदा तद्व्यपदेशबीजम्। ज्ञानविशेषः। कस्तस्य विषयः। कर्मरूपं(१) तज्जनित(२)विभागप्राग-

न्यायलीलावतीकण्ठाभरणम्

पत्तिर्वा क्षणवेदकोऽस्तु इत्यत आह—न चेति। तन्निरासप्रमाणावष्टम्भोऽत्र मूलम्। सिद्धान्ती स्वपक्षमुपसंहरति—तत इति। क्षणिकपदार्थान्तरावच्छेद्यः क्षणः कालोपाधिविशेषो नास्तीत्यर्थः। पूर्व्वपक्षी पृच्छति—किमिति। न हि व्यपदेशोऽप्यपह्नोतुं शक्य इति भावः। उत्तरं ज्ञानविशेष इति। कस्तस्येति। ज्ञाने विषय एव विशेषो न च तादृशो विषयस्त्वयाऽभ्युपगम्यत इति भावः। उत्तरं कर्म्मस्वरूपमिति।

न्यायलीलावतीप्रकाशः

ते शब्दप्रयोगरूपव्यवहारनिरूपणं ततश्च विषयसिद्धिरित्यन्योन्याश्रय इत्यर्थः। नास्त्येवेति। क्षणव्यवहारहेतुः क्षणिकार्थो नास्त्येवेत्यर्थः। कारणमात्रप्रश्नस्यातितुच्छतयाऽसाधारणकारणं पृच्छति—किं तदेति। अन्यासाधारणकारणाभावात् क्षणशब्द एव तदनुमापक इति भावः। उत्तरं—ज्ञानविशेष इति। क्षणव्यवहारे व्यवहर्त्तव्यज्ञानविशेषः कारणमित्यर्थः। विषयविशेषनियतस्य ज्ञानस्य व्यवहारविशेषजनकत्वमिति विषयविशेषं पृच्छति—कस्तस्येति। उत्तरं कर्मेति। आक्षिपति—

न्यायलीलावतीप्रकाशविवृतिः

परमतिरिक्तं वैशिष्ट्यं तत्राङ्गीक्रियते न तु क्षणरूपातिरिक्तपदार्थवादिना त्वयाऽपीत्यर्थः। यैरप्यङ्गीक्रियते तैरपि नित्यमिति न तस्य क्षणिकत्वमिति भावः। केचित्तु न व्यापकनिरूप्यं व्याप्तिवैशिष्ट्यं ब्रूमः किं त्वतिरिक्तमेव व्यापकानिरूप्यं तदित्यत आह—अतिरिक्तं चेति। अर्थो भावश्च पूर्वोक्त एवेति वदन्ति। एवं चेयं फक्किका किमितीत्यनन्तरमत्र तु तल्लिखनं प्रमादा(३)दिति मिश्राणां लिखनं चिन्त्यम्।

अन्त्यशब्दस्य क्षणिकस्य स्वीकारात् सामान्यनिषेधोऽयुक्त इत्यत आह—क्षणव्यवहारहेतुरिति। पूर्वोक्ते(४)रिति शेषः।

(१) 'कर्म्मस्वरूपम्'। (२) तज्जन्येति कण्ठाभरणधृतः पाठः।
(३) प्रामादिकं तल्लिखनमिति पाठान्तरम्। (४) पूर्वोक्तयुक्तेरिति पाठान्तरम्।

भावादिरूपश्चोपाधिः। केवलेऽपि तद्बुपाधावुपाधिमति च तद्व्यवहारप्रसङ्गः। विशिष्टमिति चेन्न। किं वैशिष्ट्यं, ज्ञानविशेषस्तस्य

न्यायलीलावतीकण्ठाभरणम्

अतिप्रसङ्गवारणाय तस्यावच्छेदकमाह—तज्जन्येति। मिलितौ द्वौ विषयौ न च तयोरन्यदा सत्त्वमिति नातिप्रसङ्ग इति भावः। ननु विशकलिताभ्यां कर्म्मविभागप्रागभावाभ्यां यदि क्षणव्यवहारः स्यात् तदा तदवस्थ एवातिप्रसङ्ग इति विशिष्टे तदुभयविषयत्वं वाच्यं वैशिष्ट्यं चातिरिक्तं त्वया नाभ्युपगम्यत इति एकग्रन्थेन पूर्व्वपक्षवाद्याह—केवल इति। किं वैशिष्ट्यमित्यन्तेन। सिद्धान्त्याह—ज्ञानविशेष इति। विलक्षणज्ञानमेव वैशिष्ट्यं न तु पदार्थान्तरं क्लृप्तस्य ज्ञानस्यैव विशिष्टव्यवहारार्पकत्वे सम्भवति पदार्थान्तरकल्पनाया गौरवपराहतत्वादिति भावः। एवं च ज्ञानविशेषं स्पन्दविभागप्रागभावौ च विषयीकुर्व्वत्तज्जं[illegible]विशिष्टव्यपदेशं करोति। स च ज्ञानविशेषो विशिष्टव्यवहारान्यथानुपपत्त्या सिद्धो जीवनयोनियत्न इव

न्यायलीलावतीप्रकाशः

केवलेऽपीत्यादि किं वैशिष्ट्यमित्यन्तेन। केवल उपाधौ विभागप्रागभावादिमात्रज्ञाने उपाधिमति च केवलकर्ममात्रज्ञाने च सति क्षणव्यवहारप्रसङ्ग इत्यर्थः, अक्षादिपदवत् क्षणशब्दस्य नानार्थत्वापत्तिश्चेति भावः। ननु विभागप्रागभावादिविशिष्टं कर्म तद्विषय इति नोक्तो दोष इत्याह—विशिष्टमिति। वैशिष्ट्यमन्यत्र विशेषणविशेष्यसम्बन्धः, स चात्र नास्तीत्यभिप्रेत्याह—किमिति। ज्ञानविशेष इति। विजातीयज्ञानमि·

न्यायलीलावतीप्रकाशविवृतिः

[उत्तरमित्यनन्तरं ददातीति शेषः। एवमग्रेऽपि।(१)] अक्षादिपदवदिति। स्वजन्यविभाग (प्राग?) भावादिलक्षणार्थभेदादिति भावः। विजातीयं ज्ञानमिति। क्षणमात्रस्थायिपदार्थाभावाद्विजातीयं ज्ञानमेव सार्वलौकिकक्षणव्यवहारहेतुरिति भावः। एतेन ज्ञानस्यापि व्यवहारविशेषजनकतानियामको विषयविशेष एवेति विषयविकल्पस्तदवस्थ इति परास्तम्। वैजात्यस्यैव व्यवहारविशेषौपयि(क?)त्वात्। ननु व्यवहर्त्तव्यज्ञाने विषयात्मक एव विशेषो व्यवहारौपयिक इत्यत आह—

(१) [ ] एतन्मध्यस्थपाठो द्वितीयपुस्तके नास्ति।

न्यायलीलावतीप्रकाशः

त्यर्थः। तच्च स्वसामग्र्यधीनं कदाचिदेव तथा च विजातीयज्ञानविशेषविषयौ कर्मतज्जन्यविभागप्रागभावौ क्षणशब्दप्रयोगविषयः, क्षणशब्दप्रयोगरूपश्च व्यवहारो ज्ञानविशेषविषयताप्रतिसन्धायकज्ञानविशेषादित्युक्तं भवति। यत्तु ज्ञानं विशिष्यतेऽनेनेति ज्ञानविशेषो विषयविशेष एव तथा हि यदि विशिष्टमतिरिक्तं न स्यात् तदा समूहालम्बनाविशेषो विशिष्टबुद्धेः स्यात् स च विषयविशेषोऽन्योन्याभावविशेष एव, अभावत्वेनैवाभावज्ञाने प्रतियोगिधीः कारणमिति तदभावेऽप्यभावो भासत एवेत्युक्तम्। तन्न, वैशिष्ट्यमात्रस्यात्राप्रस्तुतत्वेनानिर्वचनात् क्षणव्यवहारहेतुज्ञानविषयस्य तद्विशेषस्यैव स्वरूपकथनात् समूहालम्बनाच्च विशिष्टज्ञानस्य विशेषः कारणकृतः कार्यकृतः प्रकारकृतो वेति वैशिष्ट्याख्ये विशिष्टज्ञानविषयविशेषे माना-

न्यायलीलावतीप्रकाशविवृतिः

क्षणशब्दप्रयोजकरूपश्चेति। विजातीयज्ञानविषयतापन्नकर्मविभाग(प्राग?)भावयोर्व्यवहर्त्तव्यतया ज्ञानस्यापि व्यवहर्त्तव्यकोटिप्रवेशात्तद्विषयकज्ञानादेव व्यवहार इति व्यवहर्त्तव्यज्ञाने विशेषो विषयकृतोऽस्त्येवेत्यर्थः। यद्यपि सम्बन्धस्थानीयं ज्ञानं नाना(१)क्षणवृत्ति तथापि सामग्रीविशेषप्रसूततया व्यवहारविशेषार्थकमिति भावः। यदि विशिष्टमिति। वैशिष्ट्यमित्यर्थः। स चेति। अतद्व्यावृत्तिरूप इत्यर्थः। नन्वेवमदण्डिज्ञाने दण्डिज्ञानं दण्डिज्ञाने चादण्डिज्ञानमित्यन्योन्याश्रय इत्यत आह—अभावत्वेनैवेति। वैशिष्ट्येति। तथा चार्थान्तरमिति भावः। यद्यपि सामान्यनिर्वचनमपि विशेषपरमेवेति नार्थान्तरं तथाप्यभावप्रत्यक्षमात्रं प्रत्येव प्रतियोगिधीः कारणमिति तदभावे तन्न भासेत(२)किं च तदादायापि समूहालम्बनसम्भवान्न तद्भेदकतया तत्सिद्धिः। सिद्धौ वा तस्यान्योन्याभावात्मकस्य नित्यतया न क्षणव्यवहारहेतुत्वम्, अन्यथा कोऽपराधः कर्मविभागप्रागभावादीनामित्यत्र तात्पर्यम्। कथं तर्हि समूहालम्बनविशिष्टज्ञानयोर्भेद इत्यत आह—समूहालम्बनाच्चेति। कारणविशेषज्ञानं कार्यमतद्व्यावृत्तिबोधः। एतदुभयमपि कार्यतावच्छेद(३)काधीनमित्यरुचेराह—प्रकारकृत इति। विशिष्टज्ञाने दण्डः प्रकारः समूहा-

(१) 'नान्त्य' (२) 'भासेत' ।

(३) 'ककारणतावच्छेदके'ति द्वितीयादर्शपुस्तकेऽधिकः पाठः ।

चान्यदाभावान्न व्यवहारः । तदभावश्च तत्सामग्रीविरहात् ।

रवेः स्पन्दः क्षणस्तस्य नानाक्षणविशिष्टता ।
क्रमिनानाविधोपाधिसम्बन्धः परिकीर्त्यते ॥

---

न्यायलीलावतीकण्ठाभरणम्

श्वासप्रश्वासान्यथानुपपत्त्येत्युक्तं भवति । तस्य चेति । वैशिष्ट्याख्यज्ञान- विशेषस्येत्यर्थः । ननु कथमन्यदा तदभाव इत्यत आह—तदभावश्चेति । आत्ममनोयोगविशेषोपहिता तत्सामग्र्यपि भिन्नैवेत्यर्थः । यत्तु वै- शिष्ट्यमतद्व्यावृत्तिरेव ज्ञानविशेषपदेनोक्ता तदनङ्गीकारे च विशिष्ट- ज्ञानात् समूहालम्बने विशेषो न भवेदिति केषांचिद्व्याख्याने कैश्चिद्वै- शिष्ट्यमात्रस्याप्रस्तुतत्वात् समूहालम्बनाच्च विशिष्टज्ञानस्य कार- णकृतः कार्य्यकृतः प्रकारकृतो वा विशेष इत्यादिदूषणमुक्तम् । तन्न, वै- शिष्ट्यस्य क्षणव्यवहारोपपादकत्वेनैव प्रस्तुतत्वात् समूहालम्बनात् प्रकारादिकृतो विशेषो न स्यादित्यापादने प्रकारादिकृतो विशेषस्तत्रे- त्ययुक्तत्वात् दण्डपुरुषसंयोगा इत्यत्र दण्डत्वादिकं दण्डी पुरुष इत्यत्र दण्डित्वमिति वैशिष्ट्यविषयतामन्तरेण न स्याद्वैचित्र्यमि- त्येवापादितं तत्र च प्रकारकृतो भेद इत्ययुक्तमभिधानम् । न च वै- शिष्ट्याख्ये मानाभावः, अन्योऽन्याभावस्य सर्व्वाभ्युपगतत्वात् स एव तद्व्यावृत्तिस्तदुक्तमाचार्य्येण—तद्व्यावृत्तिर्वैशिष्ट्यमिति । विकीर्ण- मर्थं कारिकाभिः सङ्गमयति—रवि( वे ? ) रिति । क्षण इति । क्षणा- वच्छेदक उपाधिरित्यर्थः । विभागप्रागभावादिविशिष्ट इति शेषः । ननु तत्रैव कथं क्षणचतुष्टयावस्थायित्वव्यवहार इत्यत आह—त- स्येति । क्रमवत्संयोगादिसम्बन्ध एव स्पन्दस्य नानाक्षणवैशिष्ट्यमि- त्यर्थः । असम्बद्धेषु तत्त्वेषु स्पन्दविभागप्रागभावादिषु ज्ञानमेव सम्ब- न्धफलार्पकं विशिष्टव्यवहारजनकमित्यर्थः । ननु ज्ञानं सम्बन्धफलं

न्यायलीलावतीप्रकाशः

भावाच्च । अन्यदेति । केवलोपाधिज्ञानकाले केवलोपाधिमज्ज्ञानकाले चेत्यर्थः । रवेः स्पन्द इति । विभागप्रागभावाद्युपाधिविशिष्ट इति शेषः । केवलस्पन्दस्यानेककालवृत्तित्वात् । नन्वेवं रविस्पन्दे कथं क्षणच- तुष्टयस्थायित्वव्यवहारस्तत्रैव तदवृत्तेरित्यत आह—तस्येति । क्रमवद्भि-

असम्बद्धेषु तत्त्वेषु ज्ञानं सम्बन्धवस्तुनः ।
स्वभावनियमेनैव तत्सम्बन्धफलार्पकम् ॥
अतिप्रसङ्गदोषस्य निराकरणकारणम् ।
वैशिष्ट्यमिति निर्व्यूढ तदेवात्र व्यवस्थितम् ॥

---

न्यायलीलावतीकण्ठाभरणम्

विशिष्टव्यवहारं कथमर्पयेदत आह—स्वभावेति । सम्बन्धवदिति । यथा सम्बन्धस्य विशिष्टव्यवहारार्पकत्वे स्वभावो नियामकस्तथा ज्ञानविशेषस्यापीत्यर्थः । सम्बन्धफलार्पकं ज्ञानमेव वैशिष्ट्यं निर्व्यूढमित्यग्रिमकांशेनान्वयः । ननु ज्ञानमेव वैशिष्ट्यमित्यश्रुतकल्पनमत आह—तदेवात्रेति । अतिप्रसङ्गदोषनिराकरणे प्रकारान्तरानुपपत्त्याऽत्र सिद्धान्ते तदेव व्यवस्थितं तद्व्यवस्थापितमित्यर्थः । एकदेशिनः सूत्रविरुद्धं युक्तिसिद्धमभ्युपगच्छन्तो नापसिद्धान्तेन दूष्यन्त इति

न्यायलीलावतीप्रकाशः

भागप्रागभावाद्युपाधिचतुष्कसम्बन्धात्तत्र क्षणव्यवहार औपचारिक इत्यर्थः । अतिरिक्तक्षणाभ्युपगमेऽपि तत्र क्षणिकव्यवहार औपचारिक इत्यभ्युपेयं तत्रैव तद्वृत्तेरिति भावः । ननु विशिष्टव्यवहारस्यान्यत्र सम्बन्धजन्यत्वाज्ज्ञानविशेषो न तद्धेतुरित्यत आह—असम्बद्धेष्विति । यथा विशेषणविशेष्ययोः सम्बन्धो वैशिष्ट्याख्यः फलं विशिष्टव्यवहारं जनयति, तद्वदसम्बद्धेष्वपि वस्तुषु स्पन्दविभागप्रागभावादिषु ज्ञानमेव विजातीयं सम्बन्धफलं विशिष्टव्यवहारं जनयतीत्यर्थः । अतिप्रसङ्गेति । यथा अतिरिक्तमपि वैशिष्ट्यं स्वविशिष्टव्यवहारं वैशिष्ट्यान्न जनयति तत्रैव तद्वृत्तेः, किं तु स्वभावादेव, अत एव नातिप्रसङ्गः, तथा

न्यायलीलावतीप्रकाशविवृतिः

लम्बने सोऽपि विशेष्यीभूय(१)भासते । प्रकारत्वं च ज्ञाननिरूपितः स्वरूपसम्बन्धविशेषः । तत्र च नियामकं जनकीभूतज्ञानविषयत्वमिति दिक् । औपचारिक इति । इदमापाततो वस्तुतः सूर्यकर्मापि स्वस्मिन् वर्तत एवेति प्रतीतिबलादेवोपेयं प्रमेयत्वे प्रमेयत्ववत् । संयोगसमवायाभ्यामेव हि स्वाधारत्वं स्वस्य विरुध्यते(२), अत एव घटात्यन्ताभा-

(१) विशेषणीभूयेति द्वितीयपुस्तके पाठः (२) 'विरुध्येत' ।

स्वविषयेणोपाधिना तद्वता वा सहकृतं क्षणज्ञानं विशिष्टव्यवहारसमर्पकम् । यदा तु तदुभयसहकारिसम्पन्नं न भवति तदा केवलव्यवहारं करोति न विशिष्टव्यवहारमिति ।

---

न्यायलीलावतीकण्ठाभरणम्

भावः । कारिकात्रयार्थं निष्कृष्य दर्शयति—स्वविषयेणेति । उपाधिना प्रागभावादिना । तद्वता स्पन्देन । वाकारः समुच्चये, उपाध्युपाधिमतोर्गुणप्रधानभावं प्रत्यनास्थायां वा । तथा च स्पन्दविभागप्रागभावसमसमयोत्पन्नज्ञानाधीनः क्षणव्यवहार इत्यर्थः । तदुभयेति । यदा स्पन्दमात्रं विभागप्रागभाववैशिष्ट्याख्यज्ञानाभ्यां सहितं न भवतीत्यर्थः । एवं च सति एकस्मिन् क्षणे नानाकर्म्माण्यादाय नानाक्षणव्यवहारः स्यात्, नानोपाधिघटितत्वे क्षणपदस्य नानार्थतापत्तिः, ज्ञानानुल्लेखे क्षणानुल्लेखापत्तिः, इदानीमिदानीमितिप्रतीत्यापत्तिश्च—इत्याद्युक्तानदूषणमपास्तम्, स्वजन्यविभागप्रागभावसहकृतरविस्पन्दत्वेनानुगमात् वैशेषिकमते समवायानुल्लेखेऽपि विशिष्टप्रतीत्यभ्युपगमात् ज्ञानविशेषस्य च सम्बन्धस्थानीयत्वात् इदानीमिदानीमित्यस्य प्रसञ्जकाभावात् प्रलये च ब्रह्माण्डान्तरवर्त्तिरविस्पन्दस्य सत्त्वात् सर्व्वदा क्षणव्यवहारानुपपत्तिर्ज्ञानविशेषविरहादिति ।

न्यायलीलावतीप्रकाशः

ज्ञानविशेषोऽपीत्यतोऽत्र दर्शने प्रकृते तदेव वैशिष्ट्यमिति निर्व्यूढमङ्गीकृतम्, व्यवस्थितं स्थिरीभूतमित्यर्थः । एतेन सम्बन्धसादृश्यात् न कथं तत्फलजनकं ज्ञानं न ह्यन्यसादृश्यादन्यकार्य्यमन्यस्माद् भवतीत्यपास्तमिति भावः । तद्वता वेति । वा शब्दः समुच्चये अनास्थायां वा । उपाधितद्वद्बुद्धेर्विशिष्टव्यवहारजनकत्वे किमुपाधिविषयत्वं तन्त्रं त-

न्यायलीलावतीप्रकाशविवृतिः

·वे घटो नास्तीति प्रतीतिः सार्वलौकिकीति रहस्यम् । एतेनेति । ज्ञानस्यैव सम्बन्धत्वाभ्युपगमेनेत्यर्थः । अनास्थायां वेति । विश्वविलक्षणज्ञानस्यैवातिप्रसङ्गभञ्जकत्वे (१)विषयावच्छेदमन्तरेण ज्ञानानिरूपणे विषयस्य निरूपकतायामनास्था द्रष्टव्या । ननु ज्ञानेऽपि कारणं शब्द·

(१) 'कत्वेन'।

न्यायलीलावतीप्रकाशः

द्बुद्धिषयत्वं वेत्यत्रानास्थेत्यर्थः। ननु क्षणव्यवहारोऽनुगतोऽननुगते-नोक्तनिमित्तेन निर्वाहयितुमशक्यः कर्मैवानुगतं तत्तदुपाधिविशिष्टं तन्निमित्तमित्यपि न युक्तम्, तथापि विशेषणांशाननुगमेन विशिष्ट-स्याननुगमात्। यच्च क्षणवेदनं न क्षणे मानं क्रियादेः स्थिरत्वेना-तद्विषयत्वात् अस्तमितपूर्वापरभावस्य च वस्तुनस्तद्विषयस्यासिद्धेः क्षणव्यवहारश्च तत्र न मानमन्योन्याश्रयादित्युक्तं तन्न क्रियादेरक्ष-णिकत्वेऽपि परस्परोपश्लेषेण व्यवहारगोचरत्वात् न ह्युक्तयोर्द्वयोः क्षणान्तरसम्बन्धः अन्यतरवैकल्यात्। नाप्यन्योन्याश्रयः। व्यवहारो हि ज्ञानं शब्दप्रयोगो वा। नाद्यः, न हि ज्ञाने निरूपिते विषयनिरूपणं कि-न्तु ज्ञानमेव तथा। नान्त्यः, शब्देन स्वकारणज्ञानाक्षेपात् ज्ञानमेव विषयसिद्धिरिति तवाप्यनुमतमन्यथा क्वापि किं चिन्न सिद्ध्येत्। का-रणं च तत्र पूर्वपूर्वसंस्कारसहितं प्रत्यक्षमेवान्यद्वेत्यन्यदेतत् कार्यस्य सम्प्रतिपत्तेः। यदपि विषयस्याऽतथात्वेऽपि ज्ञानविशेषात् क्षणव्य-वहार इति तदसत्। ज्ञानोल्लिखितविषयानादरे वाह्यापलापापत्तेः। न च बाधाबाधाभ्यां व्यवस्था बाधस्यापि प्रमात्वेन तद्विषयेऽप्यना-श्वासात्। नापि ज्ञानविशेषो वैशिष्ट्यं ज्ञानानुल्लेखे क्षणोल्लेखानुप-पत्तेः। नापि स्वविषयेण सहकृतं ज्ञानं विशिष्टव्यवहारे हेतुर्ज्ञानेन व्यवहारजनने स्वविषयानपेक्षणात् अनागतादौ व्यभिचारात्।

न्यायलीलावतीप्रकाशविवृतिः

एवेत्यन्योन्याश्रय एवेत्यत आह—कारणं चेति। 'तत्र' शब्दकारणे ज्ञाने। कार्य्यस्येति। (१)ज्ञानोल्लिखितेति। विजातीयज्ञानविशेषेणैवापुरस्कृतविष-येन व्यवहारसिद्धौ वाह्यापलापापत्तेरित्यर्थः। बाधस्यापीति। तत्रा-प्यवास्तवेनैव(२) विशेषेण तदभावव्यवहारसम्भवादिति भावः। ननु संयोगादिवत् ज्ञानविशेषोऽपि सम्बन्धतया व्यवहर्त्तव्यकोटि-प्रविष्ट एवेति न विषयापलाप इत्यत आह—नापीति। विजातीय-ज्ञानस्वीकारे च चाक्षुषत्वादिना सङ्करः खण्डप्रलये च ज्ञानाभावात् क्षणिक(३)व्यवहारानापत्तिरित्यपि बाधकं द्रष्टव्यम्। स्वविषयेणेति।

(१) शब्दलक्षणकार्य्यस्येत्यर्थ इत्यधिकः पाठो द्वितीयादर्शपुस्तके।
(२) 'प्यवान्तरेणैव'। (३) 'क्षण'।

न्यायलीलावतीप्रकाशः

अत्राहुः । स्वजन्यविभागप्रागभावसहितं कर्मैव क्षणः प्रलयेऽप्यणुकर्मणः सत्त्वात् । यद्यपि कर्मविभागप्रागभावयोः स्थायित्वमेव तथाप्युक्तद्वयावच्छेदो न क्षणान्तरेऽन्यतरवैकल्पादिति नातिप्रसङ्गः । न च स्वरूपमेव तयोः सम्बन्धस्तच्च स्थिरमेवेति युक्तम्, सम्बन्धान्तरं वि-

न्यायलीलावतीप्रकाशविवृतिः

तथा च न बाह्यापलापापत्तिरिति भावः । स्वजन्येति । यद्यपि स्वनाश्यसंयोगसहितविभागादेरिति(१)विनिगमकाभावेन क्षणव्यवहारहेतुत्वमित्यननुगम(२)स्तथापि स्वजन्यविभागपदं(३)चरमकारणमात्रपरं तेन स्वकार्यप्रागभावोपहितं चरमकारणं क्षण इत्यर्थः । चरमकारणं विभागे कर्म पूर्वसंयोगनाशे विभागः । सति कर्मणि(४) संयोगनाशः सति तन्नाशे उत्तरसंयोगे कर्म । प्रागभावश्च भावस्याभावो ध्वंसस्य(भाव) रूपः प्रतियोगीत्यन्यदेतत् । न च विभागप्रागभावो(५)पहितकर्मत्वादिना भाने उक्तानुगतरूपाभावात्कथं क्षणव्यवहार इति वाच्यम्, प्रातिस्विकरूपेणैव ज्ञानस्य व्यवहारकारणत्वात् उक्तस्य प्रकारस्य स्वरूपसत एव विषयत्वानुगमकत्वात् । न चैकस्य कर्मणो विभागतदभावोपधानं विरुद्धं समयभेदेन वाच्यम् । तथा चान्योन्याश्रयः सति तदुपधाने क्षणरूपसमयभेदात्सति च समयभेदे तदुपधानादिति वाच्यम्, विभागाभावोपहितकर्मान्तरावच्छिन्नकालभेदेन विभागतदभावोपधानादेव तत्रापि कर्मान्तरमेवावच्छेदकम्, अनवस्था च प्रामाणिकी न दोषाय । यद्वा विभागकालान्यकालस्यैव विभागप्रागभावावच्छेदकत्वं न तु क्षणस्य । न चोत्तरकालमपि विभागप्रागभावोपधानापत्तिस्तदा तत्कर्मण एवाभावात् । तत्कर्मत्वसमानाधिकरणस्यैवोक्तस्य नियामकत्वात् । अत एवावयवाभावेन संयोगान्तरावच्छेदेनाकाशे संयोगवृत्तावपि द्विष्ठतयाऽवच्छेदकसंयोगस्यान्यत्र वृत्तावपि नावच्छेद्यवृत्तिः, तत्समानाधिकरणस्यैव संयोगस्यावच्छेद्यसंयोगवृत्तिनियामकत्वादिति । सम्बन्धान्तरमिति । न च योग्यतावच्छेदकरूपालाभः विभागकालान्यकालीनत्वस्य कर्मणि तन्निष्ठविभागप्रतियोगित्वस्य प्रागभावे तथात्वात् । यो-

(१) 'देरपि' । (२) 'त्यनुगम' । (३) स्वकार्य्यमात्रपरं कर्म्मपदमित्यधिकः पाठो द्वितीयादर्शपुस्तके । (४) संयोगे पूर्वेत्यधिकः पाठः द्वितीयपुस्तके । (५) 'गाभावो' ।

न्यायलीलावतीप्रकाशः

ना विशिष्टधीजननयोग्यत्वरूपस्य तस्य क्षणिकत्वात्। न वान्यतर-वैयर्थ्यं नाप्यननुगमः। न चैवमेकक्षण एव नानाक्षणव्यवहारप्रसङ्गः नानाकर्मणामेकदाप्युत्पत्तेरिति युक्तम्, एकस्मिन् क्षण इति ह्येकस्मिन्नुक्तरूपे कर्मणि वा तदेकावच्छिन्ने काले वा। आद्ये आपादकाभावः। नान्त्यः, विशेषणभेदेऽपि विशेष्यस्याभेदात्। अन्यथानेकदण्डादिमतश्चैत्रस्यापि नानात्वापत्तेः। नानाक्षणवृत्तिर्व्यवहारः क्षणघटितकाष्ठामुहूर्त्तादिव्यवहारश्च क्रमिकक्षणानेवादाय, इदानीं स्वजन्यविभागप्रागभावसहितं कर्मेत्यादि तु कर्मान्तरावच्छिन्नं कालमादायेति नात्माश्रयः। यद्वा रूपवति रूपमितिवत् तदुपलक्षित एव काले तद्वृत्तिः न हि तद्रहिते। तन्न, विरोधात्। न चैवमिदानीमिदानीमिति स्यात् विशिष्टस्येदानीमर्थस्यैकत्वादिति।

न्यायलीलावतीप्रकाशविवृतिः

ग्यता च प्रत्ययोपहितैव सम्बन्धः स्वरूपयोग्यतामात्रस्यान्यदापि सत्त्वेनातिप्रसङ्गादिति केचित्। तच्चिन्त्यम्। एवं सति प्रतीतेः प्रतीत्यविषयत्वेन तदन्यत्वेन(१)सम्बन्ध(२)विषयकत्वप्रसङ्गात् तदजन्यत्वप्रसङ्गाच्च। तस्माद् द्वित्वपर्याप्त्यधिकरणं सम्बन्धिद्वयमेव सम्बन्धः। यच्च ज्ञानं वर्त्तमानत्वेन तदुभयमवगाहते, तत् क्षणव्यवहारे हेतुः। तदुभयजन्यं सत्ताद्विषयकमेव वा ज्ञानं तथा। तदुभयासहकृतमित्यत्रापि सहकारिपदार्थो निरुक्तान्यतरात्मक एव वाच्यः। तथा चोपलक्षणीभूतज्ञानविषयतापर्याप्त्यधिकरणं काल एव क्षण इति दिक्। क्षणिकत्वात्। ज्ञानोपधानीभूय क्षणव्यवहारे हेतुत्वादित्यर्थः। आपादकाभाव इति। नानाकर्मात्मनो नानाक्षणस्यैकदा वृत्तावप्येकस्मिन् कर्मणि नानाक्षणव्यवहारे आपादकाभावः इत्यर्थः। विशेषणभेदेऽपीति। विशेषणभेदस्याप्रयोजकत्वादुपाधिविशिष्टकर्म्मावच्छिन्नकालत्वेनैव क्षणव्यवहारगोचरत्वात्। तथा चापादकाभावः प्रकृतेऽपीति भावः। विशिष्टस्येति। विशिष्टाविशिष्टभेदेन भवत्येव इदानीं काल इति प्रतीतिरिति भावः। वस्तुतस्तु अस्मिन् काले अयं काल इति प्रत्ययो भवत्येव। इदानीमिदानीमिति शब्दप्रयोगस्तु न भवति द्वयोरप्यधिकरणत्वेनोपस्थित्या आधाराधेयभावाप्रतिपादकत्वादनभिधानानिर-

(१) 'तदजन्यत्वेन'। (२) 'सम्बन्धा'।

शक्तिरपि न (१)पदार्थान्तरम् । प्रमाणाभावात्(२) । अर्था-

न्यायलीलावतीकण्ठाभरणम्

न च शक्तिरपीति । शक्तिपदवाच्यं वस्तु न पदार्थान्तरमित्यर्थः । कारणत्वस्यैव सामान्यविशेषस्य शक्तिपदार्थत्वादिति भावः । प्रमाणाभावादिति । षट्पदार्थभिन्नत्वे प्रमाणाभावादित्यर्थः । ननु बुद्धेः स्वरूपशक्तिर्बुद्धित्वमेव तच्च दाहादाहदशायां तुल्यमिति यदभावाद् दाहाभावस्तदवश्यमङ्गीकर्त्तव्यमिति सामग्र्यां सत्यामदाहोऽन्यथानुपपन्न इति पदार्थान्तरत्वेऽर्थापत्तिरेव प्रमाणमिति शङ्कते--अर्थापत्तिरत्रेति । अन्यथानुपपत्तिरर्थापत्तिरन्यथोपपत्त्या निवर्त्तेत इति त्वदभिमतार्थापत्ति-

न्यायलीलावतीप्रकाशः

शक्तिरपीति । यद्यपि मानाभावादिति हेतुराश्रयासिद्धो व्यधिकरणश्च तथापि कारणानि न स्वजन्यानुकूलाद्विष्टातीन्द्रियभावभूतधर्मवन्ति तथात्वेनाप्रमीयमाणत्वादिति विवक्षितम्, आत्मनि तादृशादृष्टप्रसिद्धेः । अर्थापत्तिरिति । यादृशादेव करतलानलसंयोगादेकदा दाहो दृष्टस्तादृशादेव मण्यादिसमवधाने दाहाभावो दाहप्रयोजकाभावं विनाऽनुपपद्यमानस्तं कल्पयति तेन विना तदभावानुपपत्तेरित्यर्थः । न च प्रतिबन्धकाभावेनान्यथोपपत्तिः उत्तेजके सति प्रतिबन्धकसत्त्वेन तद्व्यभिचारात् । न चोत्तेजकाभावविशिष्टप्रतिबन्धकाभावः कारणं तस्य विशेषणविशेष्यतदु-

न्यायलीलावतीप्रकाशविवृतिः

भसत्वाच्चेति तत्त्वम् । ननूक्तहेतोरात्माधिकरणमत आह—व्यधिकरणश्चेति । एवमपि पक्षधर्मताज्ञानाभावादनुमानाभाव इति भावः । कारणानीति । वस्तुमात्रपक्षतायां पण्डापूर्वादौ परकर्त्तृकांशतः सिद्धसाधनोद्भावनापत्तिरिति कारणानीत्युक्तम् । उष्णस्पर्शादिकमादाय बाध इत्यत उक्तं—अतीन्द्रियेति । अदृष्टवदात्मसंयोगमादाय बहुत्र बाध इत्यद्विष्टेति । अव्यासज्यवृत्तीत्यर्थस्तेन न भावभूतपदव्यर्थता । प्रतिबन्धकाभावमादाय बाध इति भावभूतेति । न चातीन्द्रियपदेनैव तद्वारणं भट्टमतेऽभावस्यानुपलब्धत्वेनातीन्द्रियत्वादस्मन्मतेऽपि दुरदृ-

(१) न च शक्तिरपीति कण्ठाभरणसम्मतः पाठः । (२) मानाभावादिति प्रकाशोद्धृतः पाठः ।

न्यायलीलावतीप्रकाशः

भयाभावेष्वनुगतत्वादिति वाच्यम्, विशिष्टस्यातिरिक्तस्यानभ्युपगमेनाननुगमात्। न च विशिष्टविरोधित्वमनुगतम्, विरोधो हि न परस्पराभावव्याप्यत्वं तदाक्षेपकत्वं वा विशेषणाद्यभावस्य विशिष्टाभावत्वे तदव्याप्यत्वादतदाक्षेपकत्वाच्च अभेदे तयोरभावात्। न च व्यासज्यप्रतियोगिकोऽन्य एवाऽभावः, क्लृप्तेनैवोपपत्तेस्तादृशाभावानभ्युपगमादित्युक्तम्। अभ्युपगमे वा केवलप्रतिबन्धकसत्त्वेऽपि तदभावा-

न्यायलीलावतीप्रकाशविवृतिः

द्युरूपप्रतिबन्धकाभावस्यातीन्द्रियत्वात्। वस्तुतस्तु(१) अतीन्द्रियत्वं न साक्षात्काराविषयत्वं स्वमतेऽप्रसिद्धेः। नापि लौकिकसाक्षात्काराविषयत्वं परमते प्रतियोग्यप्रसिद्धेः। किन्तु संयोगादिपञ्चकजन्यसाक्षात्काराविषयत्वं तच्च सर्वमते सर्वत्राभावे। तथा च मण्याद्यभावव्यावर्त्तनायैव भावभूतपदम्। तथापि गुरुत्वादिकमादायांशतो बाध इत्यत उक्तं—स्वजन्यानुकूलेति। तदर्थश्च स्वनिमित्तकानुकूलत्वमतो न पूर्वदोषतादवस्थ्यम्। न चैवमप्यदृष्टादिकमादायात्मादावंशतो बाध इति वाच्यम्, तदन्यस्यैव पक्षत्वात्। एवमन्यत्रापि यत्र बाधः प्रतिभाति तदन्यस्यैव पक्षत्वम्। यद्वा यदादाय बाधस्तदन्यत्वमेव साध्ये प्रतियोगिविशेषणं वा। न च दृष्टान्ताभाव आत्मनो व्यतिरेकदृष्टान्तस्यैव सम्भवात्। मन्मते घटादेस्तन्मते पण्डापूर्वादेरन्वयदृष्टान्तस्य च सम्भवाच्च। विशिष्टस्येति। प्रतियोगिभेदेनैवाभावभेद इत्यभिमानः। व्यापकत्वमनुमापकत्वमाक्षेपकत्वमर्थापादकत्वम् (२)। एतच्च मतभेदेन। प्रतियोगितावच्छेदकभेदादप्यभावभेद इत्याशयमाशङ्क्य निराकरोति—न चेति। उत्तेजकाभावप्रतिबन्धकमात्रप्रतियोगिकव्यासज्यवृत्तिप्रतियोगिकाभावत्वेन हेतुत्वम्, व्यासज्यवृत्ति(३) प्रतियोगिकमण्यभावत्वेन वा। आद्ये दोषमाह—क्लृप्तेनैवेति। प्रतियोगिताया व्यासज्यवृत्तित्वे मानाभाव इति भावः। अन्त्ये त्वाह—केवलेति। उत्तेजकाभावविशिष्टमणिसत्त्वेऽपि घटादिकमादाय तादृशाभावसत्त्वाद्दाहापत्तेरित्यर्थः। एत-

(१) 'वस्तुतोऽतीं'।

(२) व्याप्यत्वमनुमापकत्वम्। आक्षेपकत्वार्थौ व्यापकत्वमिति पाठो द्वितीयपुस्तके।

(३) 'वृत्तीति' नास्ति द्वितीयपुस्तके।

पत्तिस्तत्र(१) मानमिति चेन्न, अन्यथैवोपपत्तेः। मणिमन्त्रादि-ना दाहप्रतिपक्षभूतस्य क्षेत्रज्ञसमवायिनोऽदृष्टभेदस्योत्पादनात्। अग्न्यन्तरेणापि तर्हि तस्य पुरुषस्य दाहो न स्यादिति चे-न्न, प्रतिनियताग्निसाध्यदाहप्रतिपक्षभूतस्यैवादृष्टस्य(२)जननात्। औषधिं(३)लिप्तकाष्ठादिषु कथमदाह इति चेन्न, तत्राप्यौषधले-

न्यायलीलावतीकण्ठाभरणम्

राभासेत्याह—अन्यथैवेति। अन्यथोपपत्तिमाह—मणीति। प्रतिबन्धकेन शक्तिविघाते सामग्र्यन्तरेणाप्रतिहतशक्तिना दाहः सम्भवति दाह-प्रतिपक्षादृष्टोत्पादे तु तस्य नवस्याग्न्यन्तरेणापि दाहो न स्यादि-ति शङ्कते—अग्नीति। यथा मानवोऽग्निविशेषस्य शक्तिं प्रतिहन्ति त-थाऽदृष्टमपि वह्निविशेषसाध्यमेव दाहं प्रतिहन्तीति परिहरति—प्र-तिनियतेति। काष्ठस्याचेतनत्वात्तत्रादृष्टानुत्पत्तेः कथमदाह इति श-ङ्कते—औषधेति। न हि स्वनिष्ठमेवादृष्टं प्रतिबन्धकं किन्त्वन्यनिष्ठम-पि तदुद्देशेनोत्पादितमिति परिहरति—तत्रेति। यत्र काष्ठेऽयमौषध-

न्यायलीलावतीप्रकाशः

दाहापत्तेः। न हि यत्रैकमेव तत्र त्रयमिह नास्तीति न प्रतीयते, तस्य समुदायविरोधिनो यावत्समुदायिसद्भाव एव विरहादिति भावः। अन्यथैवेति। न च शक्तावप्रतीतावेवकारव्यवच्छेद्याभावः, वक्ष्यमाणादृष्ट विशेषाभावेनोपपत्तेरित्येवंपरत्वात्। मणिमन्त्रादिनेति। उत्तेजके च सति दाहस्तज्जन्यादृष्टेन समानाधिकरणेन दाहप्रतिपक्षादृष्टनाशात् न तु तदभावविशिष्टदाहप्रतिपक्षादृष्टाभावः कारणं विशिष्टाभावकारणत्वे बाधस्योक्तत्वादिति भावः। तत्रापीति। स्वयमौषधलिप्तकाष्ठादावदा-

न्यायलीलावतीप्रकाशविवृतिः

देव विशदयति—न हीति। मिश्रास्तु। एकमेवेत्यस्यैकेत्यर्थः(४) तथा च मन्त्रसद्भावेऽपि उत्तेजकाभाव[मणिप्रतियोगिकतादृशाभाव(५)]-सत्त्वे दाहापत्ते(६)रित्यर्थः। न च मन्त्रप्रतियोगिकतादृशाभावस्यापि कारणत्वात् कथमेवमिति वाच्यम्, तावत्प्रतिबन्धकप्रतियोगिक-स्यैवाभावस्य कारणत्वे पूर्वदोषानतिवृत्तेः मन्त्रसत्त्वेऽपि तादृश-

(१) 'तत्र'। (२) 'स्योत्पादनाव। औ०'। (३) 'औषधलि०'।
(४) केवलेत्यस्यैकेत्यर्थ इति द्वितीयपुस्तके। (५) [ ] एतन्मध्यस्थपाठो द्वितीयपुस्तके नास्ति।
(६) दाहोत्पत्तेरिति द्वितीयपुस्तके।

पकारिपुरुषसमवेतादृष्टस्य दाहप्रतिपक्षभूतस्योत्पादनात्। प्रति-
पक्षसन्निधानोत्पादकादृष्टविशेषस्य वा दाहप्रातिकूल्यं, अदृष्टवि-

न्यायलीलावतीकण्ठाभरणम्

योगस्तत्रादाहः काष्ठप्रयोजनिनामदृष्टादौषधप्रयोगोत्पादितादिति
भावः । ननु शौचाशौचदशायां नैकत्रादृष्टोत्पत्तिः सम्भव-
ति उभयत्र व्यभिचारात्। न वा श्रुतिर्मण्यादिसमवधानस्यादाहज-
नकादृष्टोत्पत्तिप्रतिपादिकास्तीत्यनुशयेनाह—प्रतिपक्षेति । अदृष्टस्य
सर्व्वोत्पत्तिनिमित्तकारणत्वेन प्रतिपक्षसमवधानं प्रत्यपि अदृष्टस्य
कारणत्वादिति भावः। ननु तददृष्टं पूर्व्वमप्यासीदिति तदानीमदाहः
स्यादित्यनुशयेनाह—अदृष्टविशेषेति। ननु करतलानलसंयोग स विशेषो

न्यायलीलावतीप्रकाशः

दृश्यादाहप्रयोजनिनामदृष्टादिति भावः। ननु मण्यादिसंसर्गस्यादृष्ट-
जनकत्वे मानाभावः, भावे वा तज्जनकशौचाचमनादेः साधारणका-
रणस्याप्यन्वयः स्यात्। न चाशुचेरेव तत् कर्त्तव्यं शौचे सति तदभा-
वापत्तेः। शौचाशौचयोरन्यतरानन्वयश्चासम्भावित एव अधर्मरूपत्वे
च तत्र प्रेक्षावतामप्रवृत्तिः स्यादत आह—प्रतिपक्षेति । सर्वोत्पत्तिम-
तामदृष्टजन्यत्वात् पूर्वशौचे सत्येव तस्योत्पादनाच्च नोक्तदोष इत्य-
र्थः। नन्वेवमपि तादृशादृष्टान्मण्याद्यप्रयोगेऽपि दाहानापत्तिः न ह्य-
दृष्टे सत्यवश्यं प्रतिपक्षसन्निधिरिति नियमः, अग्रिमकाल एव प्रति-
पक्षसन्निधिदर्शनात्तदसिद्धेरभावादित्यत आह—अदृष्टविशेषेति । सं-

न्यायलीलावतीप्रकाशविवृतिः

मन्त्राभावसत्त्वादत एवोक्तं न होति(१)। तत्प्रतिबन्धकप्रतियोगिकता-
दृशतावदभावकारणत्वे च गौरवात्। तदपेक्षया लाघवेन एकस्याः
शक्तेरनुगतविशिष्टाभावस्य वा प्रयोजकत्वकल्पनादिति वदन्ति। एव-
कारव्यवच्छेद्येत्युपलक्षणम्, अन्यत्वप्रतियोग्यलाभोऽपि द्रष्टव्यः।
अधर्मेण शौचाशौचान्यतराङ्गकत्वमित्यधर्मरूपतायां बाधकान्तरमाह—
अधर्मरूपत्वे चेति। सर्वोत्पत्तिमतामिति। तथा च प्रतिपक्षसन्निधापकमदृष्टमाव-
श्यकमिति भावः। ननु मण्याद्यप्रयोगकाले तददृष्टसत्त्वेऽपि(२) न
मानमित्यत आह—अग्रिमेति। (३)यद्यपि चिरकालीने एकस्मिन्नेव क-

(१) 'नहीत्यादि'। (२) 'सत्त्वे'। (३) कार्य्यदर्शनेतीत्यधिकः पाठो द्वितीयपुस्तके।

क्षेपार्जितकरतलानलसंयोगस्य वा दाहप्रतिपक्षत्वम् । स च वि-
शेषो दाहादाहाभ्यामेव कल्पयिष्यते । विवादास्पदं स्वरूपमात्र-

न्यायलीलावतीकण्ठाभरणम्

योग्यानुपलब्धिबाधित इत्यत आह—स चेति । दाहप्रतिकूलो विशेष इत्यर्थः । अदाहेनेतिवक्तव्ये दाहग्रहणं दाहानुवृत्तावाकस्मिकादादाहात् स्फुटतरो विशेषो गृह्यत इत्येतदर्थम् । न चैवं सति मण्याद्यन्वयानुविधानं न स्यादिति वाच्यम्, संयोगविशेषस्यापि मण्यादिसमवहित-स्यैव दाहप्रतिकूलत्वकल्पनादिति भावः । शक्तावनुमानमाशङ्कते—विवादेति । वह्निर्दाहानुकूलातीन्द्रियाद्विष्ठधर्म्मसमवायी न वेति विप्रतिपत्त्यास्पदमित्यर्थः । अत्राद्येन स्थितिस्थापकेन द्वितीयेनोष्णस्पर्शेन तृतीयेनादृष्टवदात्मसंयोगेन चतुर्थेन विशेषणनाभावेनान्यथासिद्धिर्निराक्रियते । एतदेव साध्यत्वेन प्रतिजानीते—स्वरूपमात्रेति । स्वरूपमात्रसत्त्व-

न्यायलीलावतीप्रकाशः

योगे योग्यानुपलम्भात्तदभावः योग्यव्यक्तिवृत्तित्वेन जातेर्योग्यत्वादित्यत आह—स चेति । सत्यपि योग्यत्वे व्यञ्जकाग्रहात्तदग्रह इत्यर्थः । न चैवमसत्यपि प्रतिबन्धके क्वचिद् दाहः सत्यपि चोत्तेजके दाहो न स्यादिति वाच्यम्, कार्यदर्शनमानकत्वे तस्य सत्येव प्रतिबन्धके उत्तेजकाभावे च तत्कल्पनात् । 'प्रहरं मा दहे' त्यत्र च मन्त्रप्रयोक्तृभिमतः काल एव प्रतिबन्धकः । यद्वा संयोगभेद एव तत्रापि कल्प्यत इत्यर्थः । स्वरूपमात्रेति । एकवृत्तीत्यर्थः । तेनादृष्टवदात्मसंयोगेन नार्था-

न्यायलीलावतीप्रकाशविवृतिः

रतलानलसंयोगे विद्यमाने प्रतिबन्धकसत्त्वासत्त्वाभ्यामेवमदाहदाहानुपपत्तिस्तथापि वह्नेराशुविनाशितया संयोगस्यापि तत्र नानात्वमेव । नं च भेर्याकाशसंयोगे चिरकालीने शब्दोत्पत्त्यनुत्पत्ति(१)समर्थनं कथमिति वाच्यम्, तत्रापि विजातीयवायुसंयोगस्यैव तदुपपादकत्वादेवमन्यत्रापि फलबलेन कल्पनीयमिति भावः । प्रहरमिति । न चाभिप्रायस्य विशेषणत्वे तन्नाशे दाहापत्तिरुपलक्षणत्वे चातिप्रसङ्ग इति वाच्यम्, तस्य स्वविषयीभूतप्रहरोपलक्षकत्वात् । आसन्नसमयस्य स्ववृत्तिसमाप्त्युपलक्षकतावादिति भावः । एकवृत्तीति । स्वाश्रयान्योन्या-

(१) 'शब्दोत्पत्त्यनुपपत्तेः'

सम्बन्ध(१)सापेक्षं जनकत्वात् आत्मवदिति चेन्न, अत एव सं-
स्कारादृष्टसापेक्षत्वप्रसङ्गात्। तत्रात्मत्वमुपाधिरिति चेत्तुल्यं प्र-

न्यायलीलावतीकण्ठाभरणम्

स्रमेकवृत्तीत्यर्थः। * * * भिन्नकारणत्वेन पक्ष इति। तथा च नांशतः
सिद्धसाधनं न च पक्षतावच्छेदकनानात्वे तत् पक्षनानात्व एव तदौचि-
त्यात्। अत एवेति। जनकत्वादेवेत्यर्थः। तत्रेति। संस्कारादृष्टसापेक्षत्वे सा-
ध्ये इत्यर्थः। प्रकृतेऽपीति। त्वदनुमाने चात्मत्वस्य उपाधित्वात् अदृष्टसापे-
क्षत्वेन सिद्धसाधनमपि द्रष्टव्यम्। संयुक्तसमवायेनादृष्टस्यापि वह्न्यादि-
स्वरूपमात्रसम्बद्धत्वात्। यद्यपि वीजादीनामप्युक्तसाध्यवत्तायामात्मत्वं
साध्याव्यापकं तथापि स्वमात्रसमवेतातीन्द्रियसापेक्षमिति साध्ये स्व-
पदेन वह्न्यादिसमभिव्याहारात् तत्तदभिधाने सत्यात्मत्वस्योपाधि-
त्वं द्रष्टव्यम्। शक्तेर्जनकत्वं परेण यद्यभिधीयते तदा दोषान्तरमाह—

न्यायलीलावतीप्रकाशः

न्तरं कार्यानुकूलत्वेन साध्यविशेषणान्न स्यन्दानुकूलस्थितिस्थापके-
नार्थान्तरं अतीन्द्रियत्वेन विशेषणान्नोष्णस्पर्शेनार्थान्तरम्। अत्रादृष्टा-
पेक्षत्वेन सिद्धसाधनम्। अदृष्टं ह्यात्मनि स्वरूपमात्रसम्बद्धमपेक्षणीयं
च कारणैः पक्ष एव तथासम्बद्धोऽप्रसिद्ध एवेति दूषणे सत्येवाह—
अत एवेति। तुल्यं प्रकृतेऽपीति। नन्वात्मत्वं नोपाधिः वीजादौ सर्वत्रादृष्टापे-

न्यायलीलावतीप्रकाशविवृतिः

भावासामानाधिकरण्यमेकवृत्तित्वम्। कार्य्येति। स्वनिमित्तकारणके-
त्यर्थः। तेन नोक्तदोषतादवस्थ्यम्। कार्य्यपदेन दाहो वा विवक्षितः।
ननु स्थापनानुमाने स्वरूपमात्रसम्बन्धत्वं पक्षमात्रसम्बन्धत्वमुक्त-
मतो नोक्तदोष इत्यत आह—पक्ष एवेति। यद्यपि स्वमात्रसमवेतेति
करणे स्वपदस्य समभिव्याहृतपरतया नायं दोषः, तथाप्यननुग-
मभयेन स्वपदस्य पक्षदृष्टान्तान्यतरपरत्वेऽयं दोषः। अत्राहेत्यनन्तर-
मत एवेति पाठस्ततस्तुल्यमिति फक्किकालिखनम्। तत्र नन्वात्मत्व-
मित्याक्षेप इति द्रष्टव्यम्। क्वचिदाहेत्यनन्तरस्तत्रात्मत्वमिति पाठस्त-
त्रैव च नन्वात्मत्वमित्याक्षेप इति ब्रूमः। तथा सति ह्यत एवेति

(१) म्बन्धातीन्द्रियसा०।

न्यायलीलावतीप्रकाशः

क्षया साध्याव्यापकत्वात् । अत्राहुः । अत्र यदि द्रव्यं पक्षस्तदाऽवयविनि स्पन्दानुकूलस्थितिस्थापकेन नित्यद्रव्ये च योगिसाक्षात्कारानुकूलविशेषपदार्थेन सिद्धसाधनं गुणपक्षत्वे च द्रव्यत्वमुपाधिः । यद्वा

न्यायलीलावतीप्रकाशविवृतिः

सिद्धान्त्यनुमाने सिद्धसाधने सत्येवात्मत्वमुपाधिमाहेति प्रकाशार्थः स्यात्, स एवायुक्तः । तत्र स्वरूपसम्बन्धेतिपदाभावाददृष्टं हीत्यादितद्विवरणासङ्गतेः । तत्र संस्कारसापेक्षत्वस्यापि साधनेन निरुक्तसिद्धसाधनानवकाशाच्च । किञ्च पूर्वपक्षफक्किकायामाक्षेपे पूर्वपक्षिण एव सिद्धान्तो युक्त इति कथं तदा स्वीय एव स्थापनानुमाने यदिद्रव्यमित्यादिना दूषणोद्भावनं घटेत । न चात एवेत्यादिसिद्धान्त्यनुमान एव सिद्धसाधनोद्भावनं यदीत्यादिनेति वाच्यम्, तत्र संस्कारादृष्टयोर्विशिष्यैव साध्यत्वात् । किञ्च यद्वेत्यादिना सिद्धान्तान्तरावतारोऽप्यसङ्गतः स्यादिति । केचित्तु आहेत्यनन्तरं तुल्यमित्येव पाठ इति वदन्ति । साध्याव्यापकत्वादिति । एतच्च यथाश्रुतसाध्याभिप्रायेण । विवक्षितसाध्यस्य वीजादावभावात् । यदि चैकवृत्तिपदस्याव्यासज्यवृत्तित्वमर्थस्तदा धर्मत्वादिमत्यदृष्टे यथा विवक्षितसाध्याव्यापकत्वमपि द्रष्टव्यम् । अत्र यदीति । इदमपि कार्य्यानुकूलत्वं यथाश्रुतमेव साध्यप्रविष्टमित्यभिसन्धाय । यदि च यथा विवक्षितं कार्य्यानुकूलत्वं तथा, तदोक्तमदृष्टेन सिद्धसाधनमप्रयोजकत्वं च दूषणं द्रष्टव्यम् । योगीति । विशेषपदार्थविशिष्टनित्यद्रव्यसाक्षात्कारविषयत्वेन(१)उभयोरपि हेतुत्वादिति भावः । एतच्च वर्त्तमानगोचरसाक्षात्कारमात्रस्यैव विषयजन्यत्वमिति मतेन । गुणपक्षत्व इति । यद्यपि द्रव्यपक्षतायामप्ययमुपाधिः सम्भवत्येव, उपाधेर्नित्यनिर्द्दोषत्वात्, तथापि सत्प्रतिपक्षोत्थापकतयोपाधेर्दोषत्वम् । द्रव्यपक्षतायां च न द्रव्यत्वमुपाधिस्तद्व्यतिरेकस्य पक्षावृत्तित्वादित्यभिप्रायेणेदम् । यद्यप्येवमपि मूलोक्त उपाधिरसमाहित एव, तथापि आत्मत्वमुपाधिरिति मूले द्रव्यत्व(२)मेवोपाधिरित्यर्थ इति भावः । ननु गुणोऽप्यदृष्टसापेक्षतया साध्यसत्त्वेनोपाधेः साध्याव्यापकत्वं पूर्वोक्तक्रमेण वाऽदृष्टे साध्याव्यापकत्वमित्यरुचेरपरितोषनिबन्धनमेवाग्रिमग्रन्थ-

(१) रे विष' । (२) 'त्वमुपा'

कृतेऽपि । शक्तेरपि शक्त्यन्तरापेक्षायामनवस्थितेः । अनपेक्षत्वे तथैव(१) व्यभिचारात् । जननशक्तियोग्यत्वं जनकत्वमिति चे-

---

न्यायलीलावतीकण्ठाभरणम्

शक्तेरपीति । जनकतावच्छेदकत्वाभ्युपगमे नायं दोषो हेतोरेव तत्रा-भावात् । अनवस्थितिरित्यपसिद्धान्तमुपलक्षयति । तथैवेति । ननु शक्ति-जन्यजनकत्वस्य शक्तिसापेक्षत्वस्य शक्तावपि सत्त्वान्न व्यभिचारो न वेयं व्यभिचारादेशना सम्भवत्युपजीव्यविरोधात् न हि व्यभिचार-स्तन्नये तत्प्रमाणादन्येन सिद्धमिति चेन्न त्वदनुमानस्य स्वविरो-ध्यत्वोपस्थापकत्वेनाप्रमाणत्वमिति विवक्षितत्वात् । परो व्यभिचारमु-द्धरति—जननेति । शक्तौ च न जननशक्तियोगित्वमात्माश्रयानव-

न्यायलीलावतीप्रकाशः

पूर्वापरितोषेणाह—शक्तेरपीति । अपसिद्धान्तश्चेति शेषः । तथैवेति । ननु सापेक्षत्वं तज्जन्यजनकत्वं तच्च शक्तावस्त्येव न हि शक्तिजन्यजनक-त्वं न शक्तौ विरोधात् । किं च शक्तिस्वीकारोऽनेनैव प्रमाणेन । तथा च शक्त्या तद्दूषणे उपजीव्यविरोधः । मैवम्, प्रतिपक्षाद्दृष्टाभावेना-न्यथोपपत्तेरनुमानमप्रयोजकम् । यद्वा याऽनुमितिः स्वहेतुव्याप्तिविरो-धिनमर्थं साधयति सा न प्रमेत्यनुमितेरेवाप्रमात्वमनेनोद्भाव्यत इति भावः । शक्तौ मानाभावेऽपि साधकबाधकमानाभावात् संशयः स्या-

न्यायलीलावतीप्रकाशविवृतिः

मवतारयति—यद्वेति । ननु सापेक्षत्वमिति । न च शक्तेर्जनकतावच्छेदक-तया शक्तिजन्याप्रसिद्धेर्नैवमिति वाच्यम्, तथा सति जनकत्वहे-त्वभावादेव तत्र व्यभिचाराभावादिति भावः। ननु तज्जन्यजनकत्वमा-त्रं न साध्यमतीन्द्रिये रूपादौ स्वेनैवान्यथासिद्ध्या शक्तिसिद्ध्यनाप-त्तेरपि तदाश्रयत्वे सतीति विशिष्टमित्यरुचेराह—किञ्चेति । नन्वेवं दो-षान्तरसम्भवेऽपि मौलं व्यभिचारोद्भावनमसमर्थितमेवेत्यत आह—याऽनुमितिरिति । तथा च नेह प्रतिबन्धार्थं व्यभिचारोद्भावनं मौल-मपि तु जातानुमितेरप्रामाण्यप्रतिपादनार्थमित्यर्थः । यद्यपि शक्ति-मादाय व्यभिचार इति विषयाबाधादेव नानुमितेरप्रामाण्यम्, तथा-

---

(१) तथैव ब्ये०।

न, असिद्धेः । तस्माद्विवादाध्यासितं न निजरूपमात्रसम्बन्धाद्दाती-न्द्रियसापेक्षं प्रमाणेन तथानुपलभ्यमानत्वात् । यत्प्रमाणेन य-

---

न्यायलीलावतीकण्ठाभरणम्

स्थाभ्यामित्यर्थः । शक्तेरसिद्धेर्हेतोरसिद्धिरिति परिहरति--ने-ति । साधकबाधकप्रमाणाभावात् शक्तौ संशयप्रसङ्गबाधकमुपन्यस्या-पन्यति—तस्मादिति । वह्निर्न दाहानुकूलाद्विष्ठातीन्द्रियधर्म्मसमवायी-त्यर्थः । प्रमाणेनेति । सम्भावितयोरर्थापत्त्यनुमानयोरपास्तत्वादिति

न्यायलीलावतीप्रकाशः

द्विति बाधकमाह—तस्मादिति । ननु हेतुः स्वरूपासिद्धः न ह्यत्र न प्र-माणमिति परेणाभ्युपेयते त्वया वा साधयितुं शक्यते अन्यथैवं सर्व्वं सर्व्वत्र बाध्येत। मैवम् । प्रतिबन्धकसत्त्वे सति यदभावात् कार्याभा-वः स न सप्तपदार्थबहिर्भूतः कार्यजनकत्वात् सम्प्रतिपन्नवदिति विवक्षितत्वात् । अत्र वदन्ति । मण्यादिप्रयोगजन्यादृष्टं प्रतिबन्धक-मिति न युक्तं किं तु मण्यादिरेव तथा प्रथमोपस्थितत्वादुपजीव्यत्वा-ल्लाघवाच्च । न च प्रतिबद्धान्यस्य कारणस्य तत्त्वमिति कारणताव-च्छेदकत्वादकारणमेव मण्याद्यभावः सामान्येनान्वयव्यतिरेकवत्तया गृहीते सति कार्यानुत्पत्तौ सहकारिभेदस्य कल्पनात् तद्विशेषस्याक

न्यायलीलावतीप्रकाशविवृतिः

पि त्वया शक्तेः शक्त्यन्तरं विनैव यथा जनकत्वं स्वीक्रियते अन्य-थाऽनवस्थानात् तथा कारणान्तरेऽपि स्यादित्यप्रयोजकत्वे पूर्वमुक्ते तात्पर्य्यम् । ननु प्रसाध्याङ्क एव हेतुरत आह—त्वया वेति । सिद्ध्य-सिद्ध्या व्याघातादिति भावः । अन्यथेति । स्वयं प्रमाणानभ्युपगममा-त्रेणैव वस्तुविरहसाधन इत्यर्थः । स नेति । समस्तपदार्थान्तर्गत इत्य-र्थो यथाश्रुते प्रतियोग्यप्रसिद्धेः । कार्य्येति सम्पातायातम् । जनक-त्वमप्यनुकूलत्वमात्रं कारणतदवच्छेदकसाधारणम्, अन्यथाऽन्य-तरासिद्धेरिति स्मर्त्तव्यम् । मण्यादीति । इदमुपलक्षणम्, तज्जनका-दृष्टमदृष्टविशेषार्जितकरतलानलसंयोगश्चेत्यपि द्वयं द्रष्टव्यम् । हेतो-रपि दृष्टेनैवोपपत्तेरित्यपि द्रष्टव्यम् । न चेति । यद्यपि तथाकार-णत्वेऽपि वाऽदृष्टप्रतिबन्धकत्वसिद्धिरिति शङ्केयमनुपपन्ना, तथापि तटस्थस्य मुरारिमिश्रस्य शङ्केयम् । सामान्येनेति । वह्नित्वावच्छिन्नेनेत्यर्थः ।

न्यायलीलावतीप्रकाशः

स्पनात्तुपजीव्यविरोधात् सहकारिप्रत्याख्यानापत्तेश्च व्यक्त्यैक्ये चास-

न्यायलीलावतीप्रकाशविवृतिः

'सति' विद्यमाने। उपजीव्येति। विशिष्टस्यापि कारणताग्रहे प्रथम कारणताग्रहो बीजम्। अन्यथा यस्मिन् सत्यपि कार्य्याभावे यदुत्तरत्वे कार्य्यं तत्राद्यस्याहेतुत्वमुत्तरस्यैव हेतुत्वं कल्प्येत। तथा च प्राथमिकसामान्यावच्छिन्नकारणताग्रहविरोध इत्यर्थः। नन्विदमसङ्गतं धर्म्मिकारणताग्रहमात्रस्योपजीव्यत्वात् तदवच्छेदकत्वग्रहस्य दैवागतत्वात्। उपजीव्यत्वेऽपि तस्यापरित्यागात, अधिकामितिम्यायादित्यरुचेराह—सहकारीति। एककारणपरिशेषापत्तेरित्यर्थः। विनिगमकाभावेनोभयहेतुत्वस्यान्यत्रेवात्रापि समानत्वादिति भावः। नन्वेवं दण्डत्वदृढत्वयोरुभयोरपि जनकत्वमस्तु दृढत्वस्य जनकत्वे तत्रावच्छेदकान्तरकल्पनागौरवमिति यदि तदा प्रकृतेऽपि समानम्। अत्र मिश्राः। स्वरूपयोग्यतायावदाश्रयभाविनी सा चावच्छेदकावच्छिन्नयावदाश्रयभाविनी सा चावच्छेदकावच्छिन्नकारणस्वरूपाऽवच्छेदकस्वरूपा वोभयथाप्यवच्छेदके सत्येव वर्त्तत इति। यावदाश्रयभाव्येवावच्छेदकमपीत्यवच्छेदकान्तराकल्पनालाघवात् तत्र भ्रमिजनकत्वरूपं यावदाश्रयभाविदृढत्वमवच्छेदकम्, प्रतिबन्धकाभावसाहित्यं तु न तथा, कादाचित्कत्वात्। न चैवमपि दण्डस्यावच्छेदकत्वे वैपरीत्यमेवास्त्विति वाच्यम्, साक्षात्सहकारिसमवधानासमवधानाभ्यां विनिगमनासम्भवादिति वदन्ति। न चैवमालोक(१)स्याप्युक्तविनिगमनया हेतुत्वं तु न स्यादिति वाच्यम्, तदुत्कर्षेण प्रत्यक्षोत्कर्षात्तस्य हेतुत्वाद्विषयत्वेन कारणतावश्यम्भावाच्चेति। व्यक्त्यैक्ये चेति। एकव्यक्तिक आकाशादौ प्रतिबद्धेतरत्वाभावादित्यर्थः। अन्योन्याभावस्य व्याप्यवृत्तित्वा(२)दिति भावः। यद्यपि भेरीसंयोगादेरेव तथा जनकत्वस्वीकारे देशभेदेन शब्दोत्पत्त्यनुत्पत्ती तत्र समर्थयितुं शक्येत, तथाप्याकाशकारणतायां स्वरूपमात्रनिबन्धनायामन्यत्रापि दृष्टान्तेन तथा कारणता कल्प्यत इत्यत्र तात्पर्य्यम्। अत्यन्ताभावावच्छेदकत्वपक्षे यद्यपि नेदं दूषणं तस्याप्यव्याप्यवृत्तित्वात, तथापि तत्र पूर्वकमेव

(१) 'के रूपस्याप्यु'। (२) 'त्वाभ्युपगमादि'।

था नोपलभ्यते न तत्तथाभूतं, यथा नीलं न पीतं रूपम् ।

---

न्यायलीलावतीकण्ठाभरणम्

भावः । ननु अर्थापत्तावुक्तान्यथोपपत्तिर्न सम्भवति न हि मणिजन्यमदृष्टं दाहविरोधि अनुपस्थितत्वात् किन्तु मणिरेवान्वयव्यतिरेकशालित्वात् । अत एव करतलानलसंयोगविशेषोऽप्यव्याप्तः । न च मण्यादेरेव दाहप्रतिबन्धकत्वे तदभावस्यैव दाहकत्वमिति शक्तिसिद्धि·

न्यायलीलावतीप्रकाशः

म्भवात् । अथ मण्यादिसंसर्गाभावो न हेतुः, न हि करादौ मण्याद्यत्यन्ताभावो नास्ति संयोगात्यन्ताभावो वा मणेः स्वावयववृत्तित्वात्, संयोगस्य चाव्याप्यवृत्तित्वादिति चेन्न, इह भूतले घटो नास्तीतिवत् संसर्गावच्छिन्नप्रतियोगिकस्याभावविशेषस्य सति प्रतिबन्धके तत्राभावात् स च समयविशेषावच्छेदेन संसर्गितयाऽत्यन्ताभाव एव अतिरिक्त एव(१)वेत्यन्यदेतत् । न चैवं प्रतिबन्धके सति तज्जातीयव्यक्त्यन्तराभावमादाय कार्योत्पत्तिप्रसङ्गः सामान्याभावस्य कारणत्वात् तस्य च यत्किञ्चित्प्रतियोगिसत्त्वे विरहात् तावतामभावानां कूटस्यैव वा कारणत्वात् । अत एव न प्रतिबन्धकाभावत्वेन कारणत्वमन्योन्याश्रयात् कारणीभूताभावप्रतियोगिन एव प्रतिबन्धकत्वादित्यपास्तम्, मण्याद्यभावकूटत्वेन कारणत्वात् । न च विशिष्टाभावनिरुक्तिः विशे·

न्यायलीलावतीप्रकाशविवृतिः

दूषणमिति मन्तव्यम् । अथेति । अन्योन्याभावस्तु हेतुत्वेन शङ्कितोऽपि न, मणिसत्त्वे तदन्योन्याभावमादाय हेतुतापत्तेरिति हृदयम् । अत्यन्ताभावस्यापि समयविशेषणाश्रयसम्बन्धे प्रागभावादिविलोप इत्यरुचेराह—अतिरिक्तो वेति । जन्याभावत्वेनैव च ध्वंसविभजनान्न विभागव्याघात इति भावः । सामान्येति । प्रतिबन्धकत्वावच्छिन्नप्रतियोगिकसामान्याभावस्येत्यर्थः । ननु प्रतिबन्धकत्वं कारणीभूताभावप्रतियोगित्वमित्यन्योन्याश्रयः।न च कार्यानुत्पादप्रयोजकत्वं प्रतिबन्धकत्वमिति वाच्यम्, अनुत्पादस्य प्रागभावात्मकतयाऽ(२)साध्यत्वादित्यरुचेराह—कूटस्यैवेति । मण्याद्यभावकूटस्य मण्यभावत्वादिना जनकत्वादित्यर्थः । विशेषणेति । न चैवं क्षणरूपोपाध्यवच्छिन्नघट·

---

(१) 'अतिरिक्तो वे'ति विवृतिधृतः पाठः । (२) 'भावरूपतया' ।

न्यायलीलावतीकण्ठाभरणम्

रिति वाच्यम्, एवं सत्युत्तेजककालेऽपि दाहो न स्यात् प्रतिबन्धकाभावस्य सहकारिणोऽभावात्। न च प्रतिबद्धेतरवह्नित्वेनैव कारणत्वे किं शक्त्येति वाच्यम्, एवं सति सहकारिणामुच्छेदप्रसङ्गात्; दण्डादिसमवहितचक्रत्वेनैव कारणत्वसम्भवात्। न च न केवलः प्रतिबन्धकाभावः कारणं किन्तूत्तेजकाभावविशिष्टो, न चोत्तेजककाले तदभाववैशिष्ट्यमिति वाच्यम्, एवं हि विशिष्टाभावः कारणं स च विशेषणविशेष्यतदुभयाभावेषु नानुगत इत्यननुगमापत्तिरेकशक्तिमत्तया ऽनुगमे सिद्धं नः समीहितम्। विशेषणाद्यभावेषु विशिष्टविरोधित्वमनुगमकमिति चेन्न, विशिष्टस्यानभ्युपगमात्। अभ्युपगमे वा विशिष्टविशेषणाद्यभावयोर्न परस्परविरहात्मत्वं विरोधः, तथा सति विशेषणादेरेव विशिष्टत्वं स्यात्। नापि परस्परविरहव्याप्यत्वं नीलपीतादिवत् परस्परविरहस्य परस्पराक्षेपकत्वं वा नित्यत्वानित्यत्ववत्, विशेषणाद्यभावस्यैव विशिष्टाभावरूपत्वेनाभेदे व्याप्यव्यापकभावाभावात्। मण्यादिकाले च न मणिप्रागभावप्रध्वंसौ तदत्यन्ताभावश्च करादौ सार्वत्रिक इति मणिसमवधानदशायामपि दाहापत्तिस्तदन्योऽन्याभावेऽप्येवम्। किं च मणेः सत्त्वेऽपि मन्त्राभावाद् दाहापत्तिः, न हि एकजातीययावत्कारणसमवधानं तन्त्रम्। तथा च सकलदण्डोपस्थितौ परं घटोत्पत्तिः स्यात्। मन्त्रादेश्चाशुविनाशिनोऽभावादनुपदमेव दाहः स्यात्, न तु प्रहरादिपर्यन्तमदाहः। प्रतिबन्धकाभावस्य कारणत्वेऽन्योऽन्याश्रयः कारणीभूताभावप्रतियोगित्वस्यैव प्रतिबन्धकत्वात्। मण्याद्यभावकूटत्वेनापि कारणता मण्यादीनां प्रतिबन्धकत्वमगृहीत्वा ग्रहीतुं न शक्यते, अप्रतिबन्धकरासभाद्यभावस्यापि तत्कूटप्रवेशसम्भवात्। रासभादीनामप्रतिबन्धकत्वान्नैवमिति चेत् तर्हि प्रतिबन्धकत्वं मण्यादीनां गृहीत्वैव तदभावकूटस्य कारणत्वग्रह इति कथं नान्योऽन्याश्रयः। अत एवोत्तेजकाभावादिविशेषणावच्छिन्नप्रतिबन्धकाभावत्वेनैव न कारणता अन्योऽन्याश्रयात्। अत एव उत्तेजकाभावप्रतिबन्धकयोर्विशेषणविशेष्ययोः सम्बन्धाभावो ऽनुगतो न दाहकारणं तयोः सम्बन्धान्तराभावात् स्वरूपसम्बन्धस्य च स्वरूपद्वयात्मकस्याभावयोरननुगमात्। मैवम्। प्रतिबन्धकत्वं हि कार्यानुत्पत्तिव्याप्यसमवधानत्वम्। उत्तेजकाभावविशिष्टप्रतिबन्ध-

न्यायलीलावतीकण्ठाभरणम्

काभावस्य कारणत्वमुत्तेजकाभावावच्छिन्नप्रतियोगिकप्रतिबन्धका-भावस्येति यावत् । प्रतियोगितावच्छेदकभेदेनाभावभेदाभ्युपगमात् । एवं च नान्योऽन्याश्रयाननुगमौ । स चाभावोऽत्यन्ताभाव एव संस-र्गावच्छिन्नप्रतियोगिकोऽन्यो वा उत्पादविनाशशीलः सामान्याव-च्छिन्नप्रतियोगिकश्चासौ कारणमिति नैकसत्त्वे दाहापत्तिः । एवं चा-र्थापत्तावन्यथोपपत्तावनुमानमपि दुष्यं तत्रापि साध्ये भावभूताधि-पदप्रक्षेपात् प्रतिबन्धकाभावेनान्यथासिद्धिर्निरसनीया । तथा च व्यर्थविशेषणत्वमवैयर्थ्ये वा शक्तिभिन्नतद्भिन्नानन्तपदार्थशक्तिसि-द्धिप्रसङ्ग इति ।

ननु विषये ज्ञाते न ज्ञाततावधीयते यन्निबन्धनो ज्ञातो घट इति

न्यायलीलावतीप्रकाशः

षणावच्छिन्नप्रतियोगिकस्य विशेष्याभावस्य तदुभयसम्बन्धाभाव-स्य वा विशिष्टाभावत्वात् । प्रतीतिवैलक्षण्यात् तस्य केवलविशेषणवि-

न्यायलीलावतीप्रकाशविवृतिः

नाशस्वीकारे क्षणभङ्गापत्तिस्तादृशक्षणभङ्गस्येष्टत्वात् , तद्विशेष्य-तावच्छेदकावच्छिन्ननाशस्य प्रतिक्षणभाविनोऽस्वीकारात् ।

नव्यास्तु(१)लाघवात्प्रतियोगिमात्रेणैव सममभावस्य विरोध इति तत्र क्षणस्यैव नाशो न घटस्य प्रतिबन्धकाभावस्थलेऽप्युत्तेजकाभाव-विशिष्टस्य मण्यन्तरस्यैवाभाव इति । तदयुक्तम् । तथा सति तत्र विद्यमानस्य मणेरभावात् (२) सत्यप्युत्तेजके दाहातापत्तेः । न च स मणि (३) रप्रतिबन्धक एवमुत्तेजकोपनयपूर्वमपि तत्र दाहापत्तेः । न च विशेषणावच्छिन्नविशेष्यविरहवत् विशेष्यावच्छिन्नविशेषणवि-रहोऽपि हेतुरित्यविनिगम उभयहेतुत्वस्वीकारात् शक्त्यपेक्षया ल-घुत्वादिति । पक्षान्तरमाह—तदुभयेति । नन्वेवमपि विशिष्टाभाव एवेति क्वचिद्विशेष्यसम्बन्धाभावात्मा क्वचिद्विशेषणतदुभयप्रतियोगिकत्वा-भावात्मेत्यननुगमः । तत्रापि सम्बन्धाभावस्वीकारेऽनवस्थेति । अत्र मिश्राः । विशेष्यविशेषणसम्बन्धाभाव एव विशिष्टाभावः । न चायमपि विशिष्टाभावात्मेति तद्दोषतादवस्थ्यं सम्बन्धस्य विशेष्याभावाप्रसिद्ध्या विशेषणप्रतियोगित्वरूपविशेषणमात्राभावस्याननुगतत्वात् । न च वि-

(१) 'नवीनास्तु' । (२) 'णेरभावाभावात्' । (३) 'णिः प्रतिबन्धक एव न तूत्तेजको०' ।

न्यायलीलावतीप्रकाशः

शेष्याभावे तदुभयाभावे च साधारणत्वात्। एतेन कारणानि स्वज-न्यजनकादृष्टातीन्द्रियभावभूतधर्मवन्ति कारणत्वादात्मवत्। तत्रादृष्टं तथा सिद्धमिति सामान्यतः। भट्टमतेऽनुपलब्धिगम्यत्वात्तदभावोऽप्य-तीन्द्रिय इति तद्व्यावृत्त्यर्थं भावभूतेति विशेषणम्। विशिष्य तु वह्निर्दा-हानुकूलातीन्द्रियाद्दृष्टधर्मसमवायवान् दाहजनकत्वादात्मवत्। अनु-कूलत्वं च कार्याभावव्याप्याभावप्रतियोगित्वं कारणतदवच्छेदकसा-

न्यायलीलावतीप्रकाशविवृतिः

शेष्यसम्बन्धाभाव एव विशेषणे हेतुरस्तु विशेष्याणां मणीनामानन्त्ये-न तत्सम्बन्धाभावस्याननुगततया उत्तेजकाभावसम्बन्धाभावस्य ल-घुत्वात् अधिकरणभेदेऽपि उत्तेजकाभावस्यैकत्वात्।अस्तु वा विशेषण-विशेष्यप्रतियोगिकत्वाभावसम्बन्धो दाहकारणं तस्यैकत्वादिति। केचि-त्तु सम्बन्धत्वावच्छिन्नाभावो विशिष्टाभावः। सम्बन्धत्वं च विशिष्ट-धीजननयोग्यत्वम्। तच्च क्वचित्संयोगादिनिबन्धनं क्वचित् स्वरूपस-म्बन्धनिबन्धनम्। एवं च मणेः प्रतिबन्धकत्वं समानाधिकरणाभावस्य च दाहकारणत्वं निर्वहतीति वदन्ति। कारणानीति। वस्तुमात्रपक्षतायां पण्डापूर्वादौ बाध इति कारणानीत्युक्तम्। अनित्यत्वमपि विशेषण-मतो न प्रागभावगर्भानुकूलत्वपक्षघटितसाध्यासत्त्वान्नित्यकारणे-ऽशतो बाधो न चात्मादावंशतः सिद्धसाधनम्। न चैवमपि कारण-तावच्छेदकतत्तद्धर्ममादायातीन्द्रियकारणेंऽशतः सिद्धसाधनमिति वाच्यम्, अनुकूलत्वस्य प्रागभावगर्भस्य निर्वचने तदप्रसङ्गात्। साध्ये च स्वजन्यत्वं स्वनिमित्तकारणकत्वमतो न गुरुत्वादिमति कारणेंऽशतः सिद्धसाधनम्। तदन्यस्यैव वा पक्षत्वम्। तथा सति (१) तज्जन्यत्वादिविशेषणं ताद्रूप्यसिद्धये। जनकत्वं चानुकूलत्वम्। क्वचित् पाठ एव तथा। वह्निरिति। दाहानुकूलत्वं ताद्रूप्यसिद्धये। कार-णन्त्वनुकूलत्वं यदि जनकत्वं तदा बाधो (२) यदि च कार-णतावच्छेदकत्वं तदा दृष्टान्तासिद्धि(३)रत आह—अनुकूलत्वं चेति। अ-

(१) स्वजन्यत्वादिविशेषणं तद्रूपासिद्धये इति पाठो द्वितीयपुस्तके।

(२) मीमांसकैः शक्तेः कारणताभ्युपगमात्।

(३) दृष्टान्तस्यादृष्टवदात्मनः स्वतः परतश्चासिद्धिरदृष्टस्य कारणतावच्छेदकतायाः केनाप्यनभ्यु-पगमात्।

नापि ज्ञातता। निराकरिष्यमाणत्वात्। नापि वैशिष्ट्यम्।

न्यायलीलावतीकण्ठाभरणम्

तत् पदार्थान्तरं स्यादित्यत आह—नापीति । नापि वैशिष्ट्यमिति । प-

न्यायलीलावतीप्रकाशः

धारणमिति नासिद्धिः स्वतः परतो वा। न चात्मत्वमुपाधिः सामान्यानुमाने अन्त्यशब्दध्वंसकारणकालाकाशयोः*साध्याव्यापकत्वात्। विशेषे दाहानुकूलौष्ण्यवति तेजोद्व्यणुके साध्याव्यापकत्वादित्यनुमानं शक्तिसाधकमित्यपास्तम्, प्रतिबन्धकाभावेनान्यथोपपत्तेर्भावभूतेतिविशेषणवैयर्थ्यात्। अन्यथा शक्तिसिद्ध्यनन्तरं शक्तिभिन्नत्वेन साध्यविशेषणात्, तत एव शक्तिभिन्नधर्मसिद्ध्यापत्तेरिति संक्षेपः। विस्तरस्तु "कुसुमाञ्जलिप्रकाशे"।

ज्ञातो घट इति विशिष्टबुद्धेर्विशेषणविशेष्ययोः स्वरूपमेव सम्बन्धो हेतुः, अन्यथा ज्ञानेन ज्ञातताधानेऽपि नियमो न स्यादतीतादौ तदसम्भवश्चेत्याशयेनाह—नापीति। तदननुभवात् सप्तमपदार्थत्वेनेति शेषः । न हि वैशिष्ट्यानुभव एव नास्ति दण्डीतिवत् घटाभाववद्भूतलमिति प्रतीतेः । ननु विशिष्टव्यवहारत्वेन विशेषणविशेष्यसम्बन्धस्य निमित्तस्यानुमानं क्लृप्तसम्बन्धबाधे त-

न्यायलीलावतीप्रकाशविवृतिः

श्चाभावपदं प्रागभावपरम्। व्याप्यत्वं च कालगर्भम्। इदं च समाधिसौकर्यात्। वस्तुतः कारणतावच्छेदकत्वमनुकूलत्वम्। न चाप्रसिद्धिः। धर्मत्वादिकमादायादृष्टस्य दृष्टान्तत्वात्। न च गुणगतजात्यनङ्गीकारे नैवमिति वाच्यम्, परमते धर्मत्वादिकं स्वमते तु शक्तिमादायादृष्टस्य दृष्टान्तत्वसम्भवादिति रहस्यम्। अन्त्येति। न चात्मत्वमपि कालेऽस्त्येवेति वाच्यम्, तस्य समवायेनोपाधित्वमित्याशयात्। प्रतिबन्धकाभावेनेति। इदमुपलक्षणं प्रत्यक्षत्वरूपपक्षधर्मावच्छिन्नयथाविवक्षितसाध्यव्यापकस्यात्मत्वस्य सामान्यानुमाने, शुद्धसाध्यव्यापकस्य च द्वितीयानुमाने उपाधित्वसम्भवाच्चेत्यपि द्रष्टव्यम्। इदमेवाभिसन्धायाह—विस्तर इति।

---

* तव मत इत्यादिः। शब्दानां मीमांसकैर्नित्यत्वाभ्युपगमात्।

घटाभावभूतलयोस्तदननुभवात् । इह भूतले घटो ना-स्तीति व्यपदेशमात्रम् । असति सम्बन्धेऽत्र घटाभावो नान्यत्रे-ति व्यपदेशे किं नियामकम् । एतद्भूतलसम्बन्धेन प्रतियो-गिना अभावनिरूपणम् । दण्डिपुरुष इत्यत्र तु गुरुत्वप्रतिबन्ध-

---

न्यायलीलावतीकण्ठाभरणम्

दार्थान्तरमिति शेषः । व्यपदेशमात्रमिति । वस्त्वननुरोधी व्यपदेश इत्यर्थः । ननु व्यपदेशस्यैव प्रतिनियतत्वात् वैशिष्ट्यं स्वीकरणीयमित्या-शङ्कते—असतीति । यत्र प्रतियोगी समारोप्यते तदेवेहेति व्यपदेशभा-जनं भवति । समारोपश्चाहार्य्यः, स्वरसवाही चेति । विशिष्टबुद्धौ न विशेष इति परिहरति—एतदिति । एतद्भूतलसम्बन्धित्वेनारोपिते-नेत्यर्थः । वस्तुतस्तु अभावभूतलयोः स्वरूपसम्बन्धो ज्ञानविशेष एव वा वैशिष्ट्यम् । ननु अभावविशिष्टप्रतीत्यनुरोधाद्वैशिष्ट्यं मा सिद्ध्यतु, भावविशिष्टधीरेव समूहालम्बनाद्विलक्षणा वैशिष्ट्ये प्र-णमित्यत आह—दण्डेति । समूहालम्बने विशेष्यस्य विशेषणाधारत्वं न

न्यायलीलावतीप्रकाशः

नैव सम्बन्धान्तरे पर्यवस्यतीत्यत आह—इहेति । व्यपदेशमात्रमिति । मा-त्रपदेन सम्बन्धनैरपेक्ष्यमुक्तम् । एतद्भूतलेति । एतद्भूतलसम्बद्धत-यारोपितेनेत्यर्थः । अत्यन्ताभावे प्रतियोग्यधिकरणयोः सम्बन्धा-भावात् । न चैवमेतद्भूतलनिष्ठतया ज्ञातप्रतियोगिनिरूप्यत्वस्यैवा-भावेनाधिकरणसम्बन्धरूपत्वाद्व्यपदेशमात्रमित्यनेन विरोधः, एत-स्य व्यपदेशनियामकमात्रतयाऽभिधानेन व्यपदेशविषयानभिधाय-कत्वात् । तथा च यत्सम्बद्धतयारोपितेन प्रतियोगिनाऽभावो निरू-प्यते तत्र सप्तमी प्रयुज्यत इति तात्पर्यम् । दण्डीति । दण्डी पुरुष इ-

न्यायलीलावतीप्रकाशविवृतिः

सप्तमपदार्थत्वेनेति । सम्बन्धिद्वयभिन्नत्वेनेत्यर्थः । सम्बन्धनैरपेक्ष्यमिति सम्बन्धिद्वयातिरिक्तसम्बन्धनैरपेक्ष्यमित्यर्थः । तेन प्रागुक्तम् "न हि वैशिष्ट्यानुभव एव नास्ती"त्यादिना न विरोधः । तथा चेति । इदं च यथाश्रुतमूलानुसारेणोक्तम् । वस्तुतः स्वरू-पसम्बन्धस्यैव नियामकत्वे तात्पर्य्यमतो न "न हि वैशिष्ट्ये"त्या

कत्वं पुरुषस्य दण्डाधारत्वं प्रतीयते व्यपदेशमात्रं वा । विप-
रीतस्तु न व्यपदेशोऽनभिधाननिरस्तत्वात् । तद्धि तस्य
विशेषणं विशेष्यं च तत्सम्बन्धफलार्पकम् ।

---

न्यायलीलावतीकण्ठाभरणम्

भासत इति विशेषः । ननु दण्डीत्यत्राधारत्वानुभवो नास्तीत्यनुश-
येनाह—व्यपदेशमात्रमिति । तर्हि पुरुषी दण्ड इत्यपि स्यात् नियाम-
काभावादत आह—विपरीत इति । अप्रयोगादेवाप्रयोग इति भावः ।
इदानीं व्यपदेशप्रतिनियममुपपादयति—विशेषणमिति । यद्वस्तुतो वि-

न्यायलीलावतीप्रकाशः

त्यत्र वैशिष्ट्यं न प्रतीयते अपि तु दण्डाधारत्वम् । तच्च दण्डगुरुत्वप्र-
तिबन्धकत्वमित्यर्थः । न च गुरुत्वप्रतिबन्धकत्वं गुरुत्वकार्यपतन-
हेत्वभावप्रतियोगिसंयोगवत्त्वम्, तच्च दण्डस्याऽप्यस्तीति सोऽप्या-
धारः स्यात्, प्रतिबध्यगुरुत्वानाश्रयत्वे सतीति विशेषणात् । यद्वा
दण्डीत्यत्र संयोगमात्रं विशेषणतयाभिमतं न तु पराभिमतं पदार्था-
न्तरमित्याह—व्यपदेशमात्रं वेति । नन्वेवं संयोगाधारत्वाविशेषात् पु-
रुषी दण्ड इत्यपि व्यपदेशः स्यादित्यत आह—विपरीतस्त्विति । पूर्वेषां
प्रयोगाभावादाधुनिकानामप्रयोग इत्यर्थः । विशेषणमिति । न च प्राक् ज्ञा-
नविशेषो वैशिष्ट्यमित्युक्तमिदानीं च विशेषणाद्यात्मकं तदुच्यत
इति विरोधः, उभयोर्यः सम्बन्धो वैशिष्ट्यं तत्फलार्पकं ज्ञानरूपं वै-
शिष्ट्यमिति कीर्तितम् । तयोः कयोरित्यपेक्षायामुक्तं विशेषणं विशेष्यं
चेत्यर्थात् । ननु यथार्थविशिष्टज्ञानस्य विशेषणविशेष्यसम्बन्धनि-
मित्तकत्वादभावे संयोगबाधेऽतिरिक्तं वैशिष्ट्यं सम्बन्धः सिद्ध्येत्
अन्यथा समवायोऽपि न सिद्ध्येत् तत्रापि ज्ञानविशेषेणोपपत्तेः । व्य-
पदेशमात्रत्वे तु निरर्थकत्वापत्तिः । न च स्वरूपसम्बन्धेन सिद्धसा-
धनं तस्य तत्तत्सम्बन्धिरूपत्वेनाननुगतत्वात् । नाप्येतद्भूतलसम्ब-
न्धेनेत्याद्युक्तं नियामकं अभावं प्रत्यधिकरणोल्लेखस्यान्येन सम्बन्धे-

न्यायलीलावतीप्रकाशविवृतिः

दिना विरोध इति ध्येयम् । वैशिष्ट्यम् अतिरिक्तवैशिष्ट्यम । विशे-
षणतेति । इदं च संयोगप्रकारकज्ञानमभिसन्धाय, अन्यथा तु दं-

ज्ञानरूपं स्वसामर्थ्याद्वैशिष्ट्यमिति कीर्तितम् ॥

---

न्यायलीलावतीकण्ठाभरणम्

शेषणं यश्च विशेष्यं तयोर्यत् सम्बन्धफलं विशिष्टव्यपदेशा-
द्दि तदर्पकं तज्जनकं ज्ञानरूपमेव ज्ञानविशेष एवेत्यर्थः ।
तथा च विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रह-
कृतं विलक्षणज्ञानं प्रतिनियतव्यपदेशहेतुरिति भावः । ननु
संयोगाद्यविशेषेऽपि कुत एवमित्यत आह—स्वसामर्थ्यादिति । स्वभा-
वविशेषात्तादृशादित्यर्थः । ननु ज्ञानविशेषोऽनुपलम्भबाधितः विशि-

न्यायलीलावतीप्रकाशः

ष्टव्यवहारहेतुश्च ज्ञानविषययोर्वैशिष्ट्यमन्तरेणानुपपन्नः । स्वरूपसम्ब-
न्धश्च स्वरूपाणामानन्त्यादनन्त इति सकलाभावसाधारणं वैशिष्ट्य-
मेवमभ्युपेयमिति चेन्न तथा सति तद्वत्यपि तदभाववैशिष्ट्यधीप्रस-
ङ्गात् तदितराभावस्य वैशिष्ट्येन तत्राभ्युगमात् । न च समवायप्र-
तिबन्दी वैशिष्ट्ये सर्व्वेषामभावानां वैशिष्ट्यस्याभ्युपगमेऽनवस्था-
पसिद्धान्तौ तेनैव तद्व्यवहारे स्वात्मवृत्तित्वं तत्र स्वरूपसम्बन्धेन
नानुपपादनात् । तथा हि एतद्भूतलसम्बन्धः प्रतियोगी तदभाव-
वश्चेत्येव स्यान्न त्वभाववद्भूतलमिति दण्डी पुरुष इत्यत्रेत्यपि न
युक्तम् । आधारत्वाभिधानेऽपि वैशिष्ट्यस्यानुभूयमानस्यानुपपाद-
नात् तस्य ततोऽन्यत्वात् । नाप्यनभिधानं तथा विवक्षायां पुरुषी द-
ण्ड इत्यस्य प्रयोगस्य सम्भवात् । न हि पूर्वेषां प्रयोग आधुनिक-
प्रयोगहेतुः, पूर्वप्रयोगमज्ञात्वाऽपि वाक्यार्थज्ञाने विवक्षायां चाभिन-
वकाव्यादिप्रयोगात् । नापि ज्ञानरूपं वैशिष्ट्यमचाक्षुषत्वाद्यापत्तेः ।
अत्राहुः । वैशिष्ट्यस्य समवायवदेकत्वे घटाभाववति पटवति पटा-
भावधीप्रसङ्गः घटाभाववैशिष्ट्यस्यैव पटाभाववैशिष्ट्यरूपत्वात् ।
न च पटाभाववैशिष्ट्यसत्त्वेऽपि पटाभावो नास्ति तस्य तद्भिन्नत्वादि-
ति वाच्यम्, पटाभावाभावस्याभावत्वे वैशिष्ट्येन सम्बन्धेन तत्र

न्यायलीलावतीप्रकाशविवृतिः

सर्गाविषयेति द्रष्टव्यम् । एवं च व्यपदेशमात्रमितिमूलंस्यातिरिक्त-
वैशिष्ट्याभानमात्रे तात्पर्य्यम् । तस्येति । अन्यथा समवायोऽपि न सि-
द्ध्येदिति भावः । पटाभावाभावस्येति । तथा च पटाभावाभावाग्रहे-

न्यायलीलावतीप्रकाशः

सत्त्वात् । भावत्वे च पटस्य प्रतिबन्धकत्वे पटाभावस्य पटाभावधी-हेतुतापत्तेः, तस्य च वैशिष्ट्यसम्बन्धेन तत्र सत्त्वात् । वैशिष्ट्यस्य प्रत्यभावव्यक्ति नानात्वे विशिष्टबुद्धौ नैकः सम्बन्धो निमित्तमिति तत्तदभावविशिष्टज्ञाने तत्तत्स्वरूपा विशेषणतैवाननुगता निमित्तम-स्तु किमनन्तवैशिष्ट्येनेति ।

न्यायलीलावतीप्रकाशविवृतिः

नापि (१)तत्र वैशिष्ट्यसत्त्वमावश्यकमिति भावः । नन्वेवं समवाय-स्यैकत्वे वायौ रूपविशिष्टप्रत्ययोत्पत्तिस्तथापीति चेन्न तस्य रूपान-धिकरणस्वभावत्वात् । न चैवं श्यामघटे भाविरक्तरूपविशिष्टप्रत्य-यापत्तिः तद्रूपस्य तदानीमभावात् । प्रत्यक्षे विषयस्यापि कारण-त्वात् । पटाभावस्यैव (२) तदान्यत्र विद्यमानत्वात् । न च तथापि कथं न तत्र पटाभावविशिष्टधीरिति वाच्यम्, कालविशेषावच्छेदेनैव तस्याधिकरणविशेषसम्बन्धात्मकत्वात् । न चैवं वैशिष्ट्यस्यापि क-दाचिदेवाधिकरणविशेषसम्बन्धात्मकत्वमिति वाच्यम्, सम्बन्धा-भावे तथाऽदर्शनात् । न चान्यत्र स्वरूपसम्बन्धेनैतद् दृष्टमिति वा-च्यम्, एवमपि तत्तत्कालवैशिष्ट्यस्य (३) सम्बन्धत्वेऽननुगमतौ-ल्ये क्लृप्तस्यैव स्वरूपस्य सम्बन्धत्वकल्पनात् । समवायस्थले त्व-नुगतस्य समवायस्य सम्बन्धत्वेऽप्यधिकरणस्वाभाव्यादेव प्रत्ययो-पपत्तेरित्युक्तत्वादिति । मिश्रास्तु वैशिष्ट्यस्वीकारे ध्वंसनाशाप-त्तिः, नित्यसम्बन्धिकारणनाशत्वेनैव नाशकत्वात् । न च समवायि-नाशत्वेन नाशकता समवायत्वस्य जातेरभावे नित्यसम्बन्धस्यैव तथात्वात् । एतच्च(४)समवायान्यत्वविशेषणे गौरवात् । [ न चाख-ण्डस्यैव समवायस्यावच्छेदककोटिनिवेश इति वाच्यम्, किञ्चिद्ध-र्मोल्लिङ्गितायाा एव व्यक्तेरवच्छेदकत्वदर्शनादित्यधिकः पाठो द्वितीया-दर्शपुस्तके । ] न च जन्यभावत्वं नाश्यतावच्छेदकमतो न ध्वंसनाश इति वाच्यम्, प्रागसत्त्वसमधारण(५)स्य कादाचित्कत्वमात्रस्यैव ला-घवेन तथात्वात् । न चैवं तथापि ध्वंसनाशापत्तिः, नाशकाभावात् । नित्यस्येत्यादिव्याप्तौ च नित्यपदस्यैव कालिकपरत्वात् । अन्यथा

(१) 'पटाभावानुरोधेनापि' । (२) 'तस्य च तस्यैव तदा' । (३) 'कालविशिष्टवैशिष्ट्यस्य' । (४) 'तत्र' । (५) 'एप्यस्य' ।

आधारत्वं तु गुरुत्वप्रतिबन्धकत्वं क्वचित्समवायिकारणत्वमभिव्यञ्जकत्वं वेत्यूहनीयम् । अन्यथा तस्योभयवृत्तित्वेनोभय·

न्यायलीलावतीकण्ठाभरणम्

तद्व्यवहारे प्रथमवैशिष्ट्यस्यापि किमङ्गीकारेणेति विशेषात्। निरस्ता चेयं "मणिमयूखे" विस्तरेण ।

आधारत्वमिति । प्रतिबध्यपतनानाश्रयत्वे सति पतनप्रतिबन्धकसंयोगवन्मूर्त्तत्वम् । तर्हि पटे शौक्ल्यमिति धीर्न स्यादित्यत आह—क्वचिदिति। कुथं तर्हि गवि गोत्वमित्याधारत्वधीरित्यत आह—व्यञ्जकत्वञ्चेति(१)। सामान्यतो विशेषणवत्त्वं आधारत्वम्। विशेषणत्वं चाधेयत्वम्। विशेषणवत्ता च क्वचित् समवायेन क्वचित् संयोगेन क्वचित् स्वरूपसम्बन्धेन यद्यपि, तथापि अनेनोपाधिनानुगतधीः। अत एव दध्नि कुण्डमिति न धीः कुण्डस्य दधिविशेषणत्वेनाप्रतीतेः । प्रतीतौ वा

न्यायलीलावतीप्रकाशः

गुरुत्वेति । यथा कुण्डे दधीत्यत्र । तन्तुषु पटः पट शुक्ल इत्यत्र समवायिकारणत्वम् । समवायित्वं कार्येऽपि वर्त्तत इति तद्व्यावर्त्तनार्थं कारणेत्युक्तम् । समवायिकारणस्य क्वचिदभिव्यञ्जकत्वेऽपि क्वचि

न्यायलीलावतीप्रकाशविवृतिः

चरमक्रियाध्वंसस्य प्रतिबन्धकाभावत्वेन समानाधिकरणक्रियां प्रति योग्यत्वेऽपि कुतो न फलोपधानमिति वदन्ति । तच्चिन्त्यम् । गुणत्वावच्छिन्नप्रतियोगिकसम्बन्धिनाशत्वेनैव नाशकत्वात्(२)। न चैवं गौरवम्। तथापि(३)ध्वंसाप्रतियोगित्वरूपनित्यत्वविवेचने(४)गौरवादिति । नवीनास्तु । अभावनिरुपिताधारताप्रयोजकसम्बन्धवत्त्वमेवादिति । भावे तु नैवं गोत्वे गौरितिप्रभावाधिकरणताप्रयोजकमनुगतत्वात् । भावे तु नैवं गोत्वे गौरतिप्रत्ययापत्तेरित्यननुगतमेवाधारताप्रयोजकमिति वदन्ति। तत्तुच्छम्। अनुगतभावाधिकरणत्वनियामकनिर्व्वाहाय भाव एव स्वरूपसम्बन्धस्वीकारे वैपरीत्यापत्तेरिति दिक् ।

क्वचिदभिव्यञ्जकत्वेऽपीति । अभिव्यञ्जकत्वं तद्विषयकप्रतीतौ नियमतो विषयत्वम् । नह्य रूपादिकं प्रति घटादेरस्त्येवेत्य-

(१) "अभिव्यञ्जकत्वं वेति" मूलानुसारी पाठः ।

(२) गुणत्वावच्छिन्नसम्बन्धिनाशकत्वात् । (३) तथापि । (४) 'त्वनिर्वचने गौ०' ।

न्यायलीलावतीकण्ठाभरणम्

तथा प्रतीतावपीष्टत्वात् । आश्रयासिद्धिरपि तद्विशेषणवत्त्वासिद्धिरेवानुगता । भूतले घटाभाव इत्यत्रापि अभावस्यैव विशेषणत्वम् । अत एव सन्निकर्षोऽपि स एव । ननु सम्बन्ध एव कश्चिदाधारत्वं स्यादित्यत आह—अन्यथेति ।

ननु सामान्यवृत्तित्वात् सामान्यादिभिन्नं सादृश्यं पदार्था-

न्यायलीलावतीप्रकाशः

न तथेति तस्य पृथगुपादानम् । यथा समवायिकारणत्वेऽप्याकाशस्य नाभिव्यञ्जकत्वम् । इह गवि गोत्वमित्यत्र व्यक्तेरभिव्यञ्जकत्वम् । अन्यथेति । एकवृत्तित्वानङ्गीकार इत्यर्थः । अनुगतं त्वाधारत्वं धर्मसम्बन्ध एव, धर्मश्च कुडस्य दधि, तन्तूनां पटो, व्यक्तेश्च गोत्वम् । तत्सम्बन्धस्य त्वप्रत्ययेनाभिधानम् । स च क्वचित्संयोगः क्वचित्समवायः क्वचिद्विशेषणता । सम्बन्धस्योभयवृत्तित्वाद्दध्याद्यपि कुण्डाद्याधारः स्यादित्यत्र क्वचिदिष्टापत्तिः, कुण्डे दधीत्यनया च प्रतीत्या दध्यादिकं प्रति कुण्डादेर्धर्मतानुल्लेखान्न तथा प्रतीतिः, कुण्डसंयोगो दध्नीत्यादौ तथा प्रतीयत एव कुडस्याधेयकोटिप्रविष्टत्वात् । विशिष्य तु

न्यायलीलावतीप्रकाशविवृतिः

र्थः । धर्म्मसम्बन्ध इति । आकाशं च यदि निरधिकरणं तदा धर्मत्वमत्र वृत्तिमत्त्वम् । क्वचिदिति । प्रतीताविति शेषः । विशिष्येति । संयोगेन सम्बन्धेन गुरुणो द्रव्यस्य पतनप्रतिबन्धकत्वमित्यर्थः(१) । दण्डादावतिव्याप्तिवारणाय सत्यन्तम् । पुरुषस्यापि कदापि कदाचित् प्रतिबध्य(२)पतनाश्रयत्वात्तत्तत्पदम् । पुरुषान्तरस्यापि तदाधारत्वप्रसङ्गवारणाय द्वितीयं तत्तत्पदम् । पतनप्रतिबन्धकत्वं संयोगाधारस्य पुरुषस्यापीति पुरुषावयवेऽतिव्याप्तिवारणाय संयोगपदम् । मेघादिपतनप्रतिबन्धकसंयोगवत्त्वमीश्वरस्यापीति तत्राप्याधारत्वव्यवहारः प्रसज्येतेति मूर्त्तपदम् । पतनप्रतिबन्धकत्वं च पतनप्रागभावप्रयोजकत्वं न तु पतनकारणीभूताभावप्रतियोगित्वं मूर्त्तपदव्यर्थतापत्तेः । न च पतनविशेषगर्भत्वे यदपतितमेव नष्टं तत्राप्रसिद्ध्या तदाधारत्वे लक्षणाव्याप्तिः । एतस्य विशेषलक्षणत्वेन तस्यात्रालक्ष्यत्वात् । अत एवं पतनाश्रयत्वगर्भतयापि नात्माश्रयः, तद(न्य?)-

(१) 'णो द्रव्यस्येत्यर्थः' । (२) 'तिबन्ध प० ।'

त्रापि सप्तमी स्यात् । एकवृत्तित्वे च सम्बन्धत्वव्याकोपः ।

---

न्यायलीलावतीप्रकाशः

तत्तत्प्रतिबध्यपतनाश्रयान्यत्वे सति तत्तत्पतनप्रतिबन्धकसंयोगवन्मूर्त्तत्वमाधारत्वम्, ईश्वरश्चामूर्त्त इति नाधारः । न च सहैव कुण्डेन पतति दध्नि तदसम्भवः, तदा कुण्डस्य तदनाधारत्वात् पतनविशेषप्रतिबन्धकत्वाद्वा अननुगतमेव वाऽधारत्वम् । आधारशब्दश्च गोशब्दवदनेकार्थः । अनुगतधीश्च शब्दमात्रानुगमात् । न चैवमधिकरणताभेदे सत्याश्रयासिद्ध्यादेर्भेदप्रसङ्गः, यत्र येन रूपेण सिद्धिर्विवक्षितागमकत्वाय तत्र तदपगम इत्यनुगमात् । सर्व्वनाम्नामनुगतेन रूपेण बुद्धिस्थत्वादिना तत्तद्विशेषप्रतिपादकत्वमिति व्युत्पत्तेः । एवमाधेयत्वमपि वाच्यमिति सम्प्रदायविदः ।

न्यायलीलावतीप्रकाशविवृतिः

स्यैव लक्ष्यत्वात् । मिश्रास्तु । पतनप्रतिबन्धकतावच्छेदकावच्छिन्नतत्तत्संयोगवत्त्वं विवक्षितम् । प्रतिबन्धकतावच्छेदकं क्वचित् स्वाधिकपरिमाणनिविडद्रव्यसंयोगत्वम् । यथा दण्डसंयोगादौ । क्वचित्प्रान्तवर्त्तिसमानपरिमाणसमुदितसंयोगत्वम् । यथा गृहधारकस्तम्भसंयोगादौ । क्वचिज्जलविशेषसंयोगत्वम् । यथा नौकादिधारकजलसंयोगादौ । सर्व्वत्र प्रतिबन्धकतावच्छेदकत्वमनुगमक(१)मित्याहुः । एतेन धर्मत्वमेवाधेयत्वं सामान्यतो, विशिष्य तु प्रतिबध्यपतनाश्रयत्वं तद्योग्यत्वं वेत्यपि सूचितम् । तदा कुण्डस्यानाधारत्वे दध्नः पृथक्पातापत्तिरित्यरुचेराह—पतनविशेषेति । कुण्डावच्छिन्नदेशसंयोगरूपेत्यर्थः । तदपगम इत्यनन्तरमाश्रयासिद्धिरिति शेषः । "तदपगमः" सिद्ध्यपगमः । ननु यत्तदन्तर्भावेन निरुक्तमप्यननुगतमेवेत्यत आह—(सर्वना?)म्नामिति । अनुगतसम्भवेऽननुगतं हेयमत्र विशेषाधारत्वस्याननुगमेऽपि सामान्याधारत्वमादायैव पदप्रवृत्तिरित्यस्वरसादाह—सम्प्रदायविद इति । यथाश्रुतग्रन्थानुसारिण इत्यर्थः ।

नन्वतिरिक्तसादृश्यस्य पदार्थान्तरत्वनिषेधे आश्रयासिद्धिः ।

---

(१) 'त्वमनर्थकमि०' ।

नापि सादृश्यम् । तद्धि सामान्यादेरनेकवृत्तित्वम् । तच्चै-
कव्यक्तिग्रहणसमयेऽगृहीतमपि प्रतियोगिग्रहेऽवगम्यत इति सिद्धं

---

न्यायलीलावतीकण्ठाभरणम्

न्तरं स्यादित्यत आह—नापि सादृश्यमिति । पदार्थान्तरं सामा-
न्य एव तदन्तर्भावादिति शेषः । सामान्यादौ तत् प्रतीतिः
कथं स्यादत आह—सामान्यादेरिति । तत्रापि अनेकवृत्तित्वमेव उपा-
धिसामान्यं सादृश्यमित्यर्थः । यत्तु सामान्यादेरनेकवृत्तित्वमित्य-
नेकवृत्ति सामान्यमेवादूरविप्रकर्षादुच्यते इति व्याख्यानं तदयुक्तम् ।
सामान्येऽनेकवृत्तित्वविशेषणासम्भवात् सम्भवव्यभिचारे च वि-
शेषणस्य सार्थकत्वात् । तर्हि व्यक्तिमात्रग्रह एव तद् भासेत न तु
प्रतियोगिज्ञानमपेक्ष्येतेत्यत आह—तच्चेति । तद्भिन्नत्वे सति तद्ग-
तभूयोधर्म्मवत्त्वस्योपाधेः सादृश्यत्वेन प्रतियोगिग्रहापेक्षग्रह-
त्वमित्यर्थः । रामरावणयोरिवेत्यादौ तदीययुद्धानुकारेण
सादृश्यमिति भावः । सिद्धमिति । अयोगव्यवच्छेदान्ययोगव्य-

न्यायलीलावतीप्रकाशः

नापीति । सदृशबुद्धौ विशेषणतया भासमानं न पदार्थान्तरमि-
त्यर्थः । तद्धीति । यद्यप्येवं सामान्यादिः सदृशः स्यान्न तद्वान् गवादि-
स्तथाप्यनेकवृत्तिसामान्याद्येव सादृश्यम् । अनेकवृत्तित्वं त्वदूरवि-
प्रकर्षेणोक्तम् । ननु सामान्यं निष्प्रतियोगिकं सादृश्यं तु सप्रतियो-
गिकं तेन सदृशं इत्यनुभवादित्यत आह—तच्चेति । यद्यपि सामान्य-
मप्रतियोगिकं तथापि तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्य-
मतो विशेषणांशस्य सप्रतियोगिकत्वात्तद्विशिष्टमपि तथेत्यर्थः ।
सामान्यं च जात्युपाधिसाधारणं तेन सामान्ये सामान्यान्तराभावे-

न्यायलीलावतीप्रकाशविवृतिः

सामान्यरूपस्य च तन्निषेधे सिद्धसाधनमत आह—सदृशेति । तथा
चोभयसिद्धत्वेन रूपेण पक्षतेति नोक्तकल्पावकाशः । "अदूरविप्र-
कर्षः" स्वसम्बन्धिवृत्तित्वम् । तद्भिन्नत्व इति । तदसाधारणधर्म्मशून्यत्व
इत्यर्थः । तस्य च तत्पदार्थनिरूपणाधीननिरूपणत्वं सप्रतियोगित्वम् ।
यथाश्रुते भेदस्य पृथक्त्वरूपस्य सावधितया तस्मात्सदृश इतिप्र-

षडेव पदार्था इति । विचारासहत्वाच्च । तथाहि तत्स्पर्शवन्न वा । नेति पक्षे एकवृत्ति न वा । आद्ये द्रव्यत्वम् । द्वितीये गुणकर्मविशेषान्यतमत्वम् । शेषे संयोगसामान्यसमवायविभागान्यतमत्वम् । गुणवृत्तित्वादि गुणादित्वे न स्यादिति चेत्, गुण-

न्यायलीलावतीकण्ठाभरणम्

च्छेदाभ्यामधिकव्यवच्छेदः पर्य्यवसन्न एवेत्यर्थः । विचारेति । सादृश्यादीनां पदार्थान्तरत्वं विचारं न सहत इत्यर्थः । तमेव विचारमुपक्रमते—तदिति । "परस्परविरोधे हि न प्रकारान्तरस्थितिः । नैकतापि विरुद्धानामुक्तिमात्रविरोधतः ॥" इति भावः । आद्य इति । स्पर्शवत्त्व इत्यर्थः । द्वितीय इति । निःस्पर्शत्वे सत्येकसमवेतत्व इत्यर्थः । शेष इति । निःस्पर्शत्वे सत्यनेकवृत्तित्व इत्यर्थः । समवायस्यानेकवृत्त्वं स्वरूपसम्बन्धेन । भावत्वे सत्येतत् द्रष्टव्यम् । भावस्याप्यनेकवृत्तित्वाभ्युपगमात् । गुणेति । आद्येनादिपदेन धर्म्मवृत्तित्वादेः, द्वितीयेन

न्यायलीलावतीप्रकाशः

ऽपि लक्षणरूपोपाधिसत्त्वात् सदृशव्यवहार इति भावः । शेष इति । निस्पर्शैकवृत्तित्वशून्य इत्यर्थः । अत्र संयोगपदमनेकवृत्तिगुणोपलक्षणम् । समवायपदं च समवाय्युपलक्षकम् । तेन द्वित्वादिव्योमादीनां नाभावः । नन्वात्मनोऽपि नवमद्रव्यत्वसाधने एतादृशपरिशेषापत्तिः, न, अस्य परिशेषस्यैतत्कोटिचतुष्टयान्तभूतत्वेन सादृश्यस्य द्रव्यादिषट्कान्तर्भूतत्वानुमानपरत्वात्, आत्मनि चाष्टद्रव्यनियतरूपाभावेन परिशेषानवतारात् । गुणवृत्तित्वादीति । सादृश्यं न गुणः, गुण-

न्यायलीलावतीप्रकाशविवृतिः

त्वयापत्तेः । यथाश्रुते द्वित्वादावाकाशादौ व्यभिचारादाह—अत्रेति । तथा चाजहत्स्वार्थलक्षणया संयोगपदं व्यासज्यवृत्तिगुणपरम् । समवायपदं चावृत्तिपरमित्यर्थः । आत्मनि चेति । यद्यपि आत्मा द्रव्यं सत् स्पर्शवन्न वा । आद्ये पृथिव्याद्यन्यतमत्वमन्त्ये व्योमाद्यन्यतमत्वमिति कोटिद्वयान्तर्भावेणाप्यत्राष्टद्रव्यान्तर्भावः साधयितुं शक्य एव । तथापि तद्धर्म्मस्येच्छादेरष्टद्रव्यावृत्तित्वात् तस्य पार्थक्यम । न त्वेवमत्रेत्यर्थः । द्रव्यकर्मेत्याद्युपलक्षणम्, अभावविशेषवहिर्भा-

वृत्तित्वादि गुणादित्वे न स्यादिति किं प्रसङ्गमात्रम्, अथ गुणवृत्तित्वादेः स्वीकृतपदार्थातिरेकसाधनम् । नाद्यः । स्वतन्त्रतर्कस्यादूषकत्वात् । नेतरः । उक्तरूपचतुष्टयबहिर्भावस्य

---

न्यायलीलावतीकण्ठाभरणम्

च कर्म्मत्वादिसङ्ग्रहः । सादृश्यधारत्वं वैशिष्ट्यादीनां यदि गुणादित्वं वक्तव्यं तदा गुणादिवृत्तित्वं तेषां न स्यादित्यर्थः । प्रसङ्गेति । प्रसङ्गस्तर्कः । मात्रपदेन प्रमाणानुपग्रह उक्तः । गुणवृत्तित्वादेरिति । सादृश्यादि न गुणो गुणवृत्तित्वादित्याद्यनुमाननेन षट्पदार्थावर्हिभावसाधनमित्यर्थः । स्वतन्त्रेति । दूषणस्यापि प्रमाणोपग्रहसापेक्षत्वादन्यथातिप्रसङ्गादिति भावः । नन्वात्माश्रयान्योऽन्याश्रयादिः स्वतन्त्र एव तर्को दूषणमिति चेन्न, आत्माश्रयादिभिन्नस्य स्वातन्त्र्येण दोषत्वाभावादितिभावात् । यदि गुणः स्यात् गुणवृत्तिर्न स्यादित्यादेरपि स्वातन्त्र्येण दोषत्वं स्यादिति चेन्न, एतस्य विपर्य्यये पर्य्यवसन्नत्वेन स्वीकृतपदार्थातिरिक्तसाधनं वेति द्वितीयविकल्पप्रवेशात् । उक्तरूपेति । स्पर्शवत्त्वं निःस्पर्शैकवृत्तित्वं निःस्पर्शानेकवृत्तित्वं स्ववृत्ति-

न्यायलीलावतीप्रकाशः

समवेतत्वात् । नापि सामान्यं सामान्यवृत्तित्वात् । न समवायः समवायवृत्तित्वात् । द्रव्यकर्मवर्हिभावस्तूभयसिद्ध इत्यर्थः । स्वतन्त्रेति । स्वातन्त्र्यं तर्कस्यानुग्राह्यमानासहकृतत्वम् । यद्यपि द्रव्याद्यन्तर्भावसाधने व्याघातापादकतया तर्कमात्रमपि दूषणं भवत्येव तथाप्यनेन विचारेणोक्तान्तर्भावप्रदर्शनद्वारा सादृश्यवहिर्भावसाधने बाधकमुच्यते, तत्र च वहिर्भावसाधनमेव दूषणं न तु स्वतन्त्रतर्क इत्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

वोऽपि द्रष्टव्यः । यद्यपीति । द्विविधस्तर्कः । साधको दूषकः(१) । तत्राद्यस्यैवानुग्राह्यमानापेक्षा न चरमस्येति भावः । तथापीति । नात्र सिद्धान्तिनः सादृश्यान्तर्भावसाधनं मुख्यतोऽभिमतमपि तु बहिर्भावसाधनबाधकतयेति निरुक्ततर्केणान्तर्भावसाधननिषेधेऽपि बहिर्भावासिद्धौ तत्साधकं मानान्तरमास्थेयम् । न च तदस्तीत्य-

---

(१) 'कश्च' ।

षट्पदार्थातिरेकित्वस्य विरोधादशक्यसाधनत्वात् ।

---

न्यायलीलावतीकण्ठाभरणम्

त्वं चेत्युक्तरूपचतुष्टयम् । चतुर्थी च कोटिराक्षेपलभ्या विभुचतुष्को- पग्रहाय । पदार्थातिरेकित्वस्येति पूर्व्वविवरणम् । यद्वा उक्तरूपचतुष्टयवहि- र्भावस्येति । सति सप्तम्यर्थे षष्ठी । ननु सङ्ख्याया गुणादिवृत्तित्वात् पदार्थान्तरत्वमेवं महत्त्वपृथक्त्वयोरपि । भवति हि महानेकः शब्दः पृथगिति प्रतीतिरिति चेन्न, अग्रे निरसनीयत्वात् ।

ननु स्वत्वं पदार्थान्तरमस्तु । न हीदं गुणः गुणेऽपिवृत्तेः । प्रतीयते हि अरुणैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणातीतिश्रुतेरारुण्यस्या- पि साधनत्वम् । न चास्वत्वास्पदेन क्रयः सम्भवति प्रमाणं चात्र प्रत्यक्षमेव । भवति हि चैत्रस्येदं धनमिति चाक्षुषी प्रतीतिः, चैत्रक- र्त्तृकक्रियादिज्ञानस्य सापेक्षचक्षुर्वेद्यत्वेऽबाधकत्वात् । न हि इन्द्रियापा- तमात्रेण ब्राह्मणत्वं वालत्वं च न गृह्यते इति न तयोश्चाक्षुषत्वम् । अस्तु वा प्रतिग्रहादिज्ञानसहकृतमनोवेद्यत्वम् । न च प्रतिग्रहादिज्ञानस्य प्रमाणान्तरत्वापत्तिः, क्रयप्रतिग्रहादिज्ञानानामेवावच्छेदकाभावात् इन्द्रियलिङ्गशब्दादीनां तत्सत्त्वात् ज्ञानत्वस्य चातिप्रसञ्जकत्वात् । यद्वा प्रतिग्रहादिक्रिया प्रतिग्राह्यप्रतिग्राहकनिष्ठसम्बन्धजनिका कर्त्तृकर्म्मनिरूप्याक्रियात्वात् गमनवदित्यनुमानमेव स्वत्वे प्रमाणम् । न च कर्त्तृकर्म्मभावेन सिद्धसाधनं चैत्रो गां प्रतिगृह्णाति चैत्रस्य गौः स्वमिति प्रतीतिभेदात् । न च चैत्रो ग्रामं त्यजतीति व्यभिचारः कर्त्तृ- कर्म्मनिष्ठकिञ्चिज्जनकत्वस्य साध्यत्वात्त्यजिक्रियाया अपि विभागज- नकत्वात् । किं च प्रतिग्रहादेराशुविनाशितया चिरभाविनि योगफ- लाजनकत्वादान्तरालिकस्वत्वाद्यव्यापारासिद्धिः, तं विना विनियोगा- सिद्धेः । क्रियाध्वंसादिना चान्यथासिद्धौ यागानुभवयोरपि अपूर्व्व- संस्कारव्यापारवत्ताभावप्रसङ्गः । चौर्य्यमपि स्वत्वजनकमेवेति चोर-

न्यायलीलावतीप्रकाशः

उक्तरूपेति । तत्स्पर्शवन्न वेत्यादीत्यर्थः । वहिर्भावस्य विवरणं षट्पदार्था- तिरेकित्वस्येति ।

न्यायलीलावतीप्रकाशविवृतिः

भिसन्धायैतदुक्तमिति भावः । पौनरुक्त्यभयादाह—वहिरिति ।

न्यायलीलावतीप्रकाशः

ननु स्वत्वं पदार्थान्तरमस्तु। तद्धि न सामान्यादित्रयात्मकमु-त्पत्तिविनाशशालित्वात्। नापि द्रव्याद्यात्मकं गुणेऽपि वृत्तेः। अथ तत्र मानाभावः। तथा हि तत्र प्रत्यक्षं न मानम्। तद्धि न वाह्यं स्व-त्वास्पदग्रहेपि तत्र संशयादस्वमितिविपर्ययाच्च। नापि मानसं मनसो वहिरप्रवृत्तेः। स्वत्वमवाह्यमेव वाह्यं तु धनं तस्य निरूपकमात्र-मिति चेन्न, उक्तोत्तरत्वात्। प्रतिग्रहादिज्ञानसहकृतमनोग्राह्यमिति चेन्न, प्रतिग्रहादिज्ञानस्य मानान्तरतापत्तेः। यदेवासाधारणं सहका-र्यासाद्य मनोवहिर्गोचरां प्रमां जनयति, तस्यैव मानान्तरत्वात्। नापि प्रतिग्रहादिक्रिया धनप्रतिग्रहीत्रादिसम्बन्धजनिका कर्त्तृकर्म-

न्यायलीलावतीप्रकाशविवृतिः

असहनतया 'विरोधा'दिति फक्किकामव्याख्यायैव शङ्कते—नन्विति। क्वचित्फक्किकाव्याख्यानन्तरमेवायमाक्षेप इति क्रमः। गुणेऽपीति। अरु-णयेत्यत्रारुण्यगुणस्य क्रयसाधनत्वं प्रतीयते। न च स्वत्वानाश्रयत्वस्य तथात्वं युज्यते परवस्तुस्वत्वोत्पत्त्युपाधिकपरस्वत्वापादनार्थकत्या-गकर्म्मत्वाश्रयस्य क्रयसाधनत्वादिति भावः। गुणकर्म्मानात्मकत्व-मप्युक्तहेतुनैव साधनीयमिति द्रष्टव्यम्। वाह्यं त्विति। तस्य चोपनी-तस्यापि भानमिति भावः। उक्तेति। धनज्ञाने संशयाभावापत्तेरित्य-र्थः। प्रतिग्रहादीति। तथा च व्यञ्जकाभावात् संशय इत्यर्थः। प्रतिग्रहा-दिज्ञानस्येति। यद्यप्यवाह्यस्वत्वविशेष्यकमुपनीतधनविशेषणकं च ज्ञा-नं मनसा जन्यत इति न प्रतिग्रहादिज्ञानस्य मानान्तरता। वहिर्विव-शेष्यकप्रमायां मनःसहकारिणस्तत्त्वात्(१)। स्वत्वविशेषणक(२)-ज्ञानं च उपनयसहकृतमनोजन्यं प्रमाणान्तरजन्यं च क्वचित्। न चोपनयस्य प्रमाणान्तरता निर्व्यापारत्वादन्यथा कविकाव्यमूलज्ञा-नजनकोपनयस्यापि तथात्वापत्तेस्तथापि स्वत्वमज्ञात्वा प्रतिग्रहत्व-मेव ज्ञातुमशक्यं तद्घटितत्वात्तस्येति न प्रतिग्रहादिव्यङ्ग्यं स्वत्वमि-त्यत्र तात्पर्य्यमिति मिश्राः। केचित्तु। धननिष्ठस्य स्वत्वस्य प्रतीय-मानतया वक्ष्यमाणक्रमेण च तस्योपपत्त्या नावाह्यं स्वत्वमित्यत्र ता-त्पर्य्यमित्याहुः। नापीति। न चास्य सम्बन्धस्योभयीयतायामिदं ममे-तिवदस्याहमिति स्यादिति वाच्यम्, तस्योभयनिरूप्यत्वेऽप्येकस्या-

(१) नस्तथात्वात्। (२) धनविशेष्यकेत्यधिकः पाठो द्वितीयपुस्तके।

न्यायलीलावतीकण्ठाभरणम्

स्य तत्र क्रमेण विनियोगः। न च तद्धनविनियोगे शास्त्रशिष्टवि-भागाभाव(१)प्रसङ्गः, द्यूतोत्कोचादिसाधारण्यात्। न च पूर्वस्वा-मिना चौरापहृतधनानाच्छेदप्रसङ्गः, तदाच्छेदस्यापि श्रौतत्वात्, कु-सीदधनविनियोगवत् चोरितविनियोगे शास्त्रशिष्टविगानाभावाच्च। न च स्वत्वस्य स्वरूपतस्तद्विनियोगकारणत्वं तदा तदज्ञानदशा-यां विनियोगानध्यवसायो न स्यात् ज्ञातस्य कारणत्वे क्रयाद्युपाय-विषयत्वज्ञानमेव तन्त्रं तदन्तरेण स्वत्वस्याप्यज्ञानादिति वाच्यम्, स्वत्वसाधकप्रमाणस्य दर्शितत्वात्, ज्ञायमानस्यैव तस्य विनियोग-जनकत्वात्। तज्ज्ञानं च प्रतिग्रहादिज्ञानमन्तरेणेत्यन्यदेतत्। अत एव विनियोगरूपेषु साधनताज्ञानादेव प्रवृत्तौ किं स्वत्वेनेति परास्तम्, तज्ज्ञानस्यान्वयव्यतिरेकाभ्यां कारणत्वावधारणादिति पूर्वपक्षसङ्क्षेपः।

अत्रोच्यते। स्वत्वस्योत्पाद्यत्वे कारणाननुगमः। न हि प्रति-ग्रहादावैकरूप्यमस्ति येन कारणताऽवच्छिद्यते। शास्त्राविरुद्धार्जनो-पायविषयत्वं चेत् तदा तदेवास्तु स्वत्वं किमविवेकेन। एवं स-त्युत्पादविनाशप्रत्ययस्तत्र कथमिति चेत् उपाध्युपधानानुपधा-नाभ्यां दण्डित्वस्येव दण्डसम्बन्धासम्बन्धाभ्याम्। विनियोगश्च त-ज्ज्ञानाधीनः। तच्च ज्ञानविषयत्वमिव चिरस्थायि। आगमान्तरान-न्तरितार्जकागमविषयत्वमेव स्वत्वमनुगतम्। आगमश्च धनार्ज्जन-हेतुः क्रिया प्रतिग्रहादि(२)। तदुक्तम्—"सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जय" इत्यादि(३)। अत एव दर्शिते प्रत्यक्षानुमानेऽप्यन्य-थासिद्धे। आगमनिषिद्धो द्यूतोत्कोचादिरनापदि कृष्यादिः प्रत्यवाय-हेतुस्तदर्ज्जिते च विनियोगं प्रति न विशेषः। चौर्य्यमपि तथा। अत एवा "स्तेयमग्नये काष्ठ" मित्यादिना काष्ठादिस्तेयस्य प्रत्यवायाभाव उक्तः। अरण्यफलादौ च उपादानमेवागमः। न च क्रीत्वा दत्तेऽपि स्वत्वं स्यात् तत्रागमान्तरानन्तरितत्वाभावात्। क्वचित् स्वत्वे स-

(१) 'विगानाभा'०।

(२) अत एव "आगमोऽभ्यधिको भोगा" दिति याज्ञवल्क्यवचनव्याख्यानावसरे मिताक्षराकाराः—"स्वत्वहेतुः प्रतिग्रहक्रयादिरागमः।" (२।२९)

(३) "प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च॥" इति शेषः। मनु—१०।११५

न्यायलीलावतीकण्ठाभरणम्

त्यपि यथेष्टविनियोगप्रतिबन्धो वाचनिकः। यथा—"एको ह्यनीशः (शः १) सर्व्वत्र दानाधमन(१)विक्रय"(२)इत्यादौ, "सा यथा काममश्नीयात् दद्याद्वा स्थावराद्दत"(३)इत्यादौ च। यदि च स्वत्वं कार्य्यं स्यात्तदा द्रव्यं गुणः कर्म्म चेति विकल्पं न सहेत। क्रयादिष्वागम आरण्यकफलादौ समान इति।

न्यायलीलावतीप्रकाशः

विरूप्यक्रियात्वात् गमनवदित्यनुमानं तयोः स्वस्वाख्ये सम्बन्धे साध्ये कर्तृकर्मभावेन सम्बन्धेन सिद्धसाधनात्। न च गन्तृग्रामसंयोगवत् साक्षात्सम्बन्धः साध्यः, ग्रामं त्यजतीत्यादावनैकान्तिकत्वात्। न हि तत्र त्यागक्रियया कर्तृकर्मणोः साक्षात्सम्बन्धो जन्यते। नाप्यर्जितेषु सर्व्वत्र स्वमितिप्रयोगोऽनुगतधर्मनिमित्तकोऽनुगतशब्दप्रयोगत्वात् गोशब्दप्रयोगवदित्यनुमानम्, अक्षाद्यनुगतप्रयोगेऽनैकान्तात् तत्रापि चाक्षादिपदवाच्येऽनुगतधर्मस्वीकारापत्तेः। अथ प्रतिग्रहा-

न्यायलीलावतीप्रकाशविवृतिः

श्रयत्वादपरस्य च प्रतियोगित्वादन्यथा व्याप्त्यादावप्यगत्यापत्तेरिति भावः। धनप्रतिग्रहीत्रादीति प्रकृताभिप्रायम्, कर्तृकर्मेति बोध्यम्। अन्यथा दृष्टान्तासङ्गतेः। कर्तृकर्मेति। अस्तिक्रियायां स्वध्वंसप्रागभावानवच्छिन्नसत्त्वरूपायां कर्तृनिरूप्यायां कर्म्मशून्यतया कर्म्मसम्बन्धाजनिकायां व्यभिचार इति कर्म्मपदम्। घटं जानामीत्यत्र विषयरूपकर्म्मनिरूप्यायां ज्ञानक्रियायां व्यभिचार इति कर्तृपदम्। सा च नात्मनिरूप्येति तद्वारणम्। क्रियापदं तु अविगीतक्रियापरम्, चौर्यादिक्रियाव्यभिचारवारणाय क्रियापदस्याविगीतक्रियायामेव लोकप्रसिद्धेः। अत एव चौर्य्ये अक्रीतिव्यपदेशः। गमनवदिति। उत्तरसंयोगावच्छिन्नस्पन्दस्य(४) संयोगवद् द्विष्ठतया उभयनिरूप्यत्वमिति भावः। सिद्धसाधनादिति। कर्तृव्यापार्य्यकरणव्यापारविषयत्वरूपपरम्परासम्बन्धेनेत्यर्थः। ग्राममिति। विभागस्य द्विष्ठतया विभागा-

(१) 'आधमनं बन्धकत्वेन ख्यातमिति "दायभागतत्त्वे" रघुनन्दनः।
(२) "दायभगतत्वे" रघुनन्दनभट्टाचार्य्येण व्यासवचनत्वेन धृतम्।
(३) "दायभागे" जीमूतवाहनधृतनारदवचनम्।
(४) 'गमनस्ये'त्यधिकः पाठो द्वितीयपुस्तके।

न्यायलीलावतीप्रकाशः

नन्तरं यथेष्टविनियोगदर्शनात्तयोः कार्यकारणभावः, स च न साक्षात्सर्वत्र प्रतिग्रहादीनां आशुविनाशित्वात्, विनियोगस्य कालान्तरभावित्वात्। नापि ध्वंसद्वारा, स्मृतेरप्यनुभवध्वंसजन्यत्वापत्तौ संस्कारापलापापत्तेः। प्रतियोगिध्वंसयोरेकत्राजनकत्वात् न तथेति तुल्यम्। तस्मात् प्रतिग्रहादिजन्यो धर्मविशेषः कल्प्यते। स च धनगतः स्वामिनिरूप्यस्तस्य च विक्रयादिना नाश इति मतम्। तन्न, चौर्यानन्तरं यथेष्टविनियोगात्तत्रापि स्वत्वकल्पनापत्तेः। न चेष्टापत्तिः चौर्य्योपात्तधने यथेष्टविनियोगे शास्त्रशिष्टविगानानुपपत्तेः, स्वत्वाश्रयत्वाद्विनियोज्यस्य। अपि च तस्य धर्मस्य स्वरूपसतो यथेष्टविनियोगहेतुत्वे मयेदमर्जितमितिज्ञानाभावेऽपि यथेष्टविनियोगापत्तेः। तादृशज्ञानविशेषितस्य च तस्य तद्धेतुत्वे लाघवादावश्यकत्वाच्च तादृशज्ञानस्यैव तद्धेतुत्वापत्तौ तस्यैवासिद्धेः। अत एव प्रतिग्रहादौ नेष्टसाधनताज्ञानं विना प्रवृत्तिरिष्टं च यथेष्टविनियोगान्नान्यत् तेषां चाशुविनाशितया साक्षात् तद्धेतुत्वाभावात् तज्जन्यं धर्मान्तरमस्तीत्यपास्तम्। किञ्च स्वत्वस्य यथेष्टविनियोगहेतुत्वे मानाभावः, विनियोगरूपायाः प्रवृत्तेरिष्टसाधनताधीजन्यतया तन्निरपेक्षत्वात्। न च तद्धर्मविशिष्टस्यैवेष्टसाधनत्वमिति वाच्यम्, स्वत्वास्पदानास्पदयो-

न्यायलीलावतीप्रकाशविवृतिः

वच्छिन्नस्पन्दरूपस्य त्यागस्योभयनिरूप्यत्वादिति भावः। न च तदुभयनिष्ठसाक्षात्सम्बन्धधर्ममात्रजनकत्वं साध्यं तथापि संयुक्तत्यादौ व्यभिचारादिति भावः। धनगत इति। फलोपपादकस्य व्यापारस्य लाघवेन तत्सामानाधिकरण्यकल्पनादिति भावः। ननु विभागानुपपत्ति(१)र्न स्वत्वबाधिका स्वत्वाश्रयेऽपि शब्दबलेन विनियोगनिषेधात्, सत्यन्वये सर्वस्वदाननिषेधवदित्यरुचेराह—अपि चेति। (२) आदिपदसंगृहीतापेक्षया बहुवचनम्। तादृशेति। क्रीतत्वादिविषयकेत्यर्थः। परकीयेति। यद्यपि बलवदनिष्टाननुबन्धीष्टसाधनत्वं स्वत्वविशिष्टस्यैव तथापि स्वत्वोत्पादकत्वाभिमतप्रतिग्रहादिध्वंसविशिष्टस्यैव तथात्वं न तु पदार्थान्तरकल्पना युक्तेति भावः।

---

(१) 'गानुपपत्तिर्न'। (२) 'तेषा चेती'त्यधिकः पाठो द्वितीयपुस्तके।

न्यायलीलावतीप्रकाशः

विनियोगे फले विशेषाभावात् । न हि परकीयस्वत्वास्पदान्नभक्षणे न बुभुक्षा प्रशाम्यति । मैवम् । शब्द एव हि स्वत्वे मानम् । तथा हि या क्रिया क्रयप्रतिग्रहादिः स्वत्वहेतुत्वेन धर्मशास्त्रेण बोध्यते तत एव तदुपात्ते धने स्वत्वमुत्पद्यते । चौर्यादि तु न तथेति न तदुपात्ते स्वत्वम् । अत एव स्वत्वे सत्यपि यथेष्टविनियोगनिषेधोऽपि शाब्द एव यथा—

"विभक्ता वाऽविभक्ता वा दायादाः स्थावरे समाः ।
नैकः कुर्यात् क्रयं दानं परस्परमतं विना ॥"(१)

इत्यनेन सुतानामसम्मतौ दानविक्रयादिनिषेधः स्मर्य्यते ।

यथा वा—

"सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते ॥"(२)

न्यायलीलावतीप्रकाशविवृतिः

अत एवेति । यत एव स्वत्वं शाब्दमत एव तद्बलेन स्वत्वे सत्यपि कचिद्विनियोगविशेषनिषेधोऽपि शाब्द इति भावः । स्थावरादृत इति । एतच्च पतिदत्तमात्रविषयम् । अन्यथा

"सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितम् ।
दाने च विक्रये चैव यथेष्टं स्थावरेष्वपि" ॥ (३)

इत्यनेन विरोधापत्तेः । यद्व्यतिरेकेणेति । अत्रासम्भवनिश्चयोऽभावापादनं यदीदं न क्रियेत यथेष्टं न विनियुज्येतेत्यादिरूपम् । विनियोगोपायविषयत्वं चौरगृहीतेऽपीति शास्त्राविरुद्धत्वमुपायविशेषणम् । तावन्मात्रं च क्रीत्वा विक्रीतेऽपि गतमतीतेऽपि क्रये तद्विषयतायाः स्वयमुपगमादिति यद्व्यतिरेकेणेत्यादि । न च तत्र क्रीतत्वव्यतिरेकप्रयुक्तो विनियोगाभावनिश्चयः किन्नाम विक्रीतत्वप्रयुक्तः(४) । ननु विषयत्वं विशेषणमुपलक्षणं वा । आद्ये क्रियाया आशुविनाशित्वेन उत्तरका-

(१) "दायभागतत्त्वे" रघुनन्दनेन किञ्चिदन्यादृशानुपूर्व्या व्यासवचनतया धृतम् ।

(२) तत्रैव तेन कात्यायननारदयोर्वचनत्वेन समुद्धृतम् । सुदायेभ्यः पितृमातृभर्त्तृकुलसम्बन्धिभ्यो लब्धं सौदायिकम् ।

(३) "दायभागे" जीमूतवाहनधृतकात्यायनवचनम् ।

(४) प्रयुक्तत्वं स्वरूपसम्बन्धविशेषः ।

न्यायलीलावतीप्रकाशविवृतिः

लभ्रस्वत्वापत्तिः। नोपलक्षणं क्रीत्वा विक्रीते प्रसङ्गतादवस्थ्यात्। न च तत्र तादृशापादनाभावादेव न तद्विशिष्टं स्वत्वमिति वाच्यम्, तादृशापादनस्य विशेषणतायां सुप्तस्य स्वत्वोच्छेदापत्तिरित्युपलक्षणत्वे प्रसङ्गसम्भवात्। अत्र मिश्राः। आपादनयोग्यतैव लक्षणप्रविष्टा। योग्यता च शास्त्राविरोध्युपायान्तरानन्तरितत्वमेव। एवं च शास्त्राविरुद्धविनियोगोपायसमानकालीनशास्त्रविरोधिविनियोगविरोध्युपायप्रतियोगिकयावदनादिसंसर्गाभावत्वं स्वत्वम्। क्रयेण स्वत्वमिति व्यपदेशस्तु सुवर्णेन धनीतिवत् सामान्यविशेषभावादुपपादनीयः। विक्रयेण तन्नाश इतिव्यपदेशस्तु यत्किञ्चित्समुदायिनाशेनैव समुदायनाशव्यवहारादुपपादनीयः। न च स्त्रीसौदायिकाव्याप्तिः, तत्र यथेष्टविनियोगाभावादिति वाच्यम्, तद्विनियोगोपायविषयत्वं तद्विनियोगप्रयोजकीभूत(१)स्वत्वविषयत्वरूपमित्याशयात्। वस्तुतः सौदायिके यथेष्टविनियोगयोग्यत्वमेव। अत एव दानं तत्र सिद्ध्यत्येव पुरुषस्तु प्रत्यवैति निषेधबलादन्वये सति सर्वस्वदानवदतिथावभोजिते स्वीयान्नभोजनवच्च। इदं च स्वत्वं पत्न्यादावपि दानविषयत्वात्(२)। अत एव तत्र दानादिनिषेधोऽपि। तद्दानं न भवत्येव। किन्तु दानप्रतिरूपकम्। दानप्रतिषेधस्तु यथेष्टविनियोगात्मकस्वत्वनिषेधपर एव। विनियोगविशेषस्तु स्वत्वेऽसत्यपि वचनबलादेवेत्यपि कश्चित्। न चैवं कृष्यार्जितधने निषिद्धप्रतिग्रहार्जितधने च ब्राह्मणस्य स्वत्वं न स्याच्छास्त्रविरोधादिति वाच्यम्, उपायत्वे कृष्यादीनां शास्त्रविरोधेऽपि तदुपात्तधनविनियोगस्याविगानात्। तस्यैव च लक्षणप्रवेशात्। चौर्ये तूपायत्व इव विनियोगोऽपि विगानमेव। यत्तु कृष्यादौ नोपायत्वविगानमपि तु तस्मिन्नुपाये ब्राह्मणादिविषयत्वविगानमित्यविगीतोपायत्वमेव तत्रेति। तन्न। तथा सत्यनन्यगतिकतायां मातापित्रादिभरणार्थं नित्यदेवपूजार्थं च भक्ष्यपुष्पचौर्ययोरपि शास्त्राविरोधादन्यत्रापि चौर्यादिना स्वत्वापत्तेः। एवं भुजात्कृते राज्ञः स्वत्वबोधनादन्यत्रापि तत्र स्वत्वापत्तेः। न च शास्त्रविरो-

(१) तत्स्वरूपमि। (२) ननियतत्वात्।

न्यायलीलावतीप्रकाशः

इत्यनेन स्थावरे स्त्रीणां भोग एव स्वत्वं न दानविक्रययोः ।

अत्रोच्यते । स्वत्वं न यथेष्टविनियोगविषयत्वं स्वं नियुज्यते न तु विनियोगात् स्वं भवति विनियोगात् पूर्वं साधारण्यापत्तेः। विनियोगाविषये स्वेऽस्वत्वापत्तेश्च । किन्तु यद्व्यतिरेकेण यथेष्टविनियोगासम्भवनिश्चयः शास्त्राविरुद्धतदुपायविषयत्वरूपं यथेष्टविनियोगयोग्यत्वं स्वत्वम् । तदुपायानां क्रयप्रतिग्रहादीनां क्रियात्वेनास्थिरत्वेऽपि तद्विषयत्वं स्थिरमेव । ज्ञाननिवृत्ताविव तद्विषयत्वम् । अत एव

न्यायलीलावतीप्रकाशविवृतिः

यस्य परस्वं नाददीतेत्यादिप्रतियोगिप्रसिद्ध्यधीनग्रहस्य स्वत्वनिरूपणस्यादात्माश्रय इति वाच्यम्, शास्त्रविरोधस्य न कलञ्जमित्यादावेव प्रसिद्धेः । 'सप्त वित्तागमा धर्म्या' इत्यनने धर्म्यत्वस्य शा(स्त्रा ? ) निषिद्धत्वाच्चेति वदन्ति । वस्तुतः क्रयादिध्वंस एव स्वत्वं क्रयादीनां च शास्त्राविरुद्धविनियोगोपायत्वमेवानुगमकं क्रयादिसमानकालीनविरोध्युपायप्रतियोगिकयावदनादिसंसर्गाभावसाहित्यं च विशेषणम् । एवं च क्रयजन्यत्वव्यवहारस्तत्रोपपद्यते । विक्रयनाश्यत्वव्यवहारस्तु पूर्व(१)एवोपपाद्यः । न ( च ? ) क्रयकाले स्वत्वानापत्तिः सम्प्रदानस्वीकारविशिष्टस्यैव दातृच्छाविशेषस्य तत्रापि स्वत्वतया यथा न प्रथमक्षणे स्वत्वं तथा द्वितीयक्षणेऽपीति सम्भवात् । अतिरिक्तस्वत्ववादिमतेऽपि क्रयोत्पत्तिकाले(२)असम्भवाच्च।

केचित्तु क्रयकालेऽपि स्वत्वमित्यभिसन्धिना शास्त्राविरुद्धविनियोगप्रयोजकीभूतोपायप्रागभावविरोधिमत्त्वं स्वत्वम् । विरोधी च क्रयादिस्तद्ध्वंसः । क्रयादिजन्यव्यवहारश्चैकदेशान्वयादेवेत्याहुः। न च क्रीत्वा विक्रीते तदापत्तिः विरोध्युपायान्तरानन्तरितत्वस्य(३) विशेषणत्वात् । न चार्जितेषु प्रमीतस्य स्वत्वापत्तिस्तत्र मरणस्यैव पुत्रादिविनियोगप्रयोजकस्य व्यवधायकत्वादिति दिक् ।

ज्ञाननिवृत्ताविति । यथातीतस्यैव ज्ञानस्य व्यवहारप्रयोजकत्वमेवमुक्तक्रमेणातीतस्य (४) क्रयादेर्विनियोगप्रयोजकत्वमित्यर्थः । भवत्वेवं तथाप्यस्मन्मतेऽपि नाननुगमो विनियोगोपायत्वेनैवानुगमादि

(१) 'पूर्ववदेवोप' ।

(२) ले च तदसम्भ । (३) 'विरोध्युपायानन्तरितत्वस्य' । (४) तस्यैव क्र ।

न्यायलीलावतीप्रकाशः

न तद्धत्पदार्थान्तरत्वम् । न च क्रयादीनामननुगमाद्योग्यताननुगमो लक्षणदोषः, स्वत्वस्य पदार्थान्तरत्वेऽपि तद्धेतूनां क्रयादीनामननुगमात् तत्कारणताभङ्गापत्तेः । अथ तृणारणिमणिन्यायेन कारणताग्रहः । एवं तर्हि क्रयादीनां प्रत्येकमेवोपायत्वे गृहीते उपायविषयत्वं योग्यतालक्षणमक्षुण्णमेव । अवश्यं हि क्रयादीनां स्वत्वोपायत्वेन प्रसिद्धानामेकरूपकार्यं प्रति मिथोऽव्यभिचारिणां कारणतानिर्वाहकानुगमार्थं शास्त्राविरुद्धत्वाद्येकमनुगमकं वक्तव्यम् । ननु यदि क्रयाद्युपायापगमेऽपि तद्विषयताऽस्ति तदा यत् क्रीत्वा विक्रीतं गृहीत्वा दत्तं वा तत्रापि तद्विषयताऽस्त्येवेति तत्र विक्रेत्रादिस्वत्वमपि व्यवह्रियेत । न । न ह्युपायविषयत्वमात्रं योग्यता किन्तु स्वव्यतिरेकप्रयुक्तयथेष्टविनियोगासम्भवनिश्चयसहकृतम् । तत्र च न पूर्वक्रयव्यतिरेकप्रयुक्तो विनियोगासम्भवः, किन्तु विक्रयदत्तत्वप्रयुक्त एव । पदार्थान्तरत्वपक्षेऽपि दूषणसाम्यात् । सा च योग्यता क्रयाज्जायते विक्रयान्निवर्तते । एका योग्यता नश्यत्यन्या त्वन्यस्योत्पद्यते । तत्किं योग्यता नाना । कः संशयः । तत्तद्व्यतिरेकप्रयुक्तत्वविशेषितविनियोगासम्भवनिश्चयभेदेन योग्यताभेदात् । प्रतियोगितावच्छेदकविशेषिताभावभेदवत् । अत एव चौरादिना गृहीते पूर्वस्वामिनः स्वत्वं वर्त्तत एव । न हि पूर्वागमव्यतिरेकप्रयुक्तस्तत्र विनियोगासम्भवः किं तु

न्यायलीलावतीप्रकाशविवृतिः

त्याह—एवमिति । वस्तुतोऽवान्तरवैचित्र्येऽपि यद्विशेषयोरित्यादिन्यायेनासति बाधके सामान्यसामग्री त्वयाऽपि वाच्यैवेत्यनुगम उभयसाधारण एवेत्याह—अवश्यं हीति । शास्त्रेति । शास्त्राविरुद्धविनियोगप्रयोजकत्वमित्यर्थः, यथाश्रुते ब्राह्मणकृष्यादावव्याप्तेः । अत एवेति । यत एव यावद्दानादिसंसर्गाभावघटितं स्वत्वमित्यर्थः । न हि पूर्वागमेति । येन पूर्वस्वामिनः शास्त्राविरुद्धविनियोगोपायविषयता पूर्वनिरुक्ता चौरगृहीते न स्यादिति शेषः(१) । किं त्विति । तच्च शास्त्राविरुद्धमेवेति शास्त्राविरोधिविरोध्यनन्तरितत्वमपि पूर्वोपाय इति भावः । तथा च विक्रीत(२)वैषम्यमिति बोध्यम् । यत्तु तत्र चौरस्यैव स्वत्वमन्यथा

---

(१) ति भावः । (२) 'विक्रीतेति द्वितीयपुस्तके नास्ति ।

नन्वेवमपि न्यून(१)त्वम् । तथाहि क्षित्यादिकं द्रव्यत्वाद्

---

न्यायलीलावतीकण्ठाभरणम्

एवमपीति । अतिरिक्तपदार्थनिषेधेऽपि न्यूनत्वं विभागस्य दुष्टत्वमित्यर्थः । तथा च पृथिव्यादिनवकसङ्ग्राहकैकरूपाभावे न्यूनत्वात् दुष्टत्वं द्रव्यगुणकर्मणां मिथोभेदकाभावे चाधिकत्वात् दुष्टत्वमिति भावः । क्षित्यादिकमिति । क्षित्यादिनवकं गुणादिपञ्चभ्यो द्रव्यत्वात्

न्यायलीलावतीप्रकाशः

चौरादिगृहीतत्वप्रयुक्तः, औपादानिकस्वत्वविषयेऽपि तथैव । आरण्यककुशादिष्वप्युपादानव्यतिरेकप्रयुक्त एव हि विनियोगासम्भवनिश्चयः । तेनौपादानिकं स्वत्वमुच्यते । इति संक्षेपः ।

"विरोधात्" व्याहतत्वादित्यर्थः(२) । तथा हीति । द्रव्यादित्रिकं मिथोव्यावर्त्तकधर्माभावान्न मिथोभेद इति न पदार्थषट्कविभागः समीचीनः । किं च पृथिव्यादिरूपाद्युपग्राहकद्रव्यत्वगुणत्वाभावेन तेषां प्रत्येकं वक्तव्यतायां द्रव्यादिपदस्यैकैकपृथिव्यादिपरत्वे न्यून

न्यायलीलावतीप्रकाशविवृतिः

द्रव्यमस्वामिविक्रीतं पूर्वस्वामी समाप्नुयादित्यत्र पूर्वपदवैयर्थ्यापत्तिरत एव च हिरण्यादौ विनियोगो निःशङ्कमन्यथाचौरग्रहणमूलकत्वशङ्काया निःशङ्कप्रवृत्त्यनुपपत्तिरिति मतम् । तन्न, तत्रोत्तरस्वामिपदस्य यथोक्तविनियोक्तृमात्रपरतया पूर्वपदस्य सार्थकत्वान्निःशङ्कप्रवृत्त्यनुरोधेन च चौरादिग्रहणा(३)मूलकत्वनिश्चयाभावसहकृतस्य क्रयादेर्विनियोगोपायत्वस्वीकारादन्यथा चोरस्वत्वानिश्चितवाक्येऽस्वामिपदानन्वयापत्तेरविगानेन शिष्टानां चौरगृहीतक्रियापत्तेश्चेति दिक् ।

हेत्वाभासलक्षणो विरोधो नात्रेत्यत आह—व्याहतत्वादिति । न्यूनतेति(४) । मूले विभजनीयस्य विभागस्य चेत्यर्थ इति प्रथमं विभजनीयस्य न्यूनतामाह—द्रव्यादित्रिक इति । विभागस्य न्यूनतामाह—किं चे-

---

(१) 'नता । त'

(२) उक्तरूपचतुष्टयबहिर्भावस्य विरुद्धत्वात् षट्पदार्थातिरिक्तत्वं साधयितुं न शक्यते, उक्तरूपचतुष्टयान्तर्भावस्यावश्यकत्वादिति. 'उक्तरूपचतुष्टये'त्यादिमूलस्य शिरोमणिकृता व्याख्या ।

(३) ०हणमूल० । (४) आदर्श'प्रकाश'ग्रन्थे एतत्प्रतीकानुसारी पाठो नास्ति ।

गुणवत्त्वाद्वा भिद्यते । नाद्यः । तदसिद्धेः । अनुगतमतेः सन्दिग्धत्वात् । स्वातन्त्र्यधीरिय(१)मिति चेन्न, शब्देऽपि तत्सत्त्वात्। समवेतत्वेनैव(२) चावयविनामवसायात् । नापि गुणवत्त्वात् । सङ्ख्यादिसाधारण्यात् रूपादिषु गुणत्वस्यैकस्यासिद्धेः । भिन्न-

---

न्यायलीलावतीकण्ठाभरणम्

गुणवत्त्वाद्वा भिद्यते इत्यर्थः । तदसिद्धेरिति । द्रव्यत्वजातेरसिद्धेरित्यर्थः। ननु द्रव्याकारानुगतमतिरेव द्रव्यत्वे प्रमाणमित्यत आह—अनुगतेति । न हि लौकिकपरीक्षकसाधारणी द्रव्याकारानुगतमतिराकाशादावित्यर्थः । परविप्रतिपत्त्या वा सन्देहस्तत्रेति वार्थः । ननु स्वतन्त्रमिदमित्यनेनाकारेण या धीः सैव द्रव्याकारानुगतधीरिति शङ्कते—स्वातन्त्र्येति । स्वाश्रयानुपरक्तधीः स्वातन्त्र्यधीः शब्दसाधारणी न द्रव्यत्वव्यवस्थापिकेत्याह—शब्देऽपीति । उक्तस्वातन्त्र्यधीर्द्रव्ये नास्त्येवेत्याह—समवेतत्वेनेति । द्वितीयं भेदकं निराकरोति—नापीति । संख्यादीति। संख्यादिना गुणेन गुणकर्म्मणोरपि गुणवत्त्वमित्यर्थः । भवति हि चतुर्विंशतिर्गुणाः पञ्च कर्म्माणीति धीरिति भावः । यदि रूपादिचतु-

न्यायलीलावतीप्रकाशः

त्वम्, पृथिव्यादीनां चैकत्वे व्याघात इत्यर्थः । 'अनुगतमति'र्द्रव्यमिति प्रत्यक्षमित्यर्थः । सन्दिग्धत्वाद् वादिविप्रतिपत्तेरिति शेषः । 'इयं'द्रव्येष्वनुगतमतिरित्यर्थः । स्वातन्त्र्यधीर्यद्याश्रयत्वबुद्धिस्तदा गुणादिसाधारण्यम् । अथाश्रयाभानेऽपि भासमानत्वं तदा शब्दगन्धादिसाधारण्यमित्याह—शब्देऽपीति । अथानाश्रितत्वबुद्धिः सा तदा वैपरीत्यमेवेत्याह—समवेतत्वेनैवेति । संख्यादीति । रूपादौ संख्यादेः संख्यादौ च

न्यायलीलावतीप्रकाशविवृतिः

ति । ननु पृथिव्याद्येकमेवेति न तत्रोपसंग्राहकापेक्षेत्यत आह—पृथिव्यादीनां चेति । व्याघातो नवत्वव्याघातः । प्रत्यक्षसिद्धवैधर्म्यव्याघातो वा । अथाश्रयेति । एतादृशवस्तुविषयक(३ मित्यर्थोऽन्यथा बुद्धिविकल्पा-

---

(१) स्वातन्त्र्यधीविषयत्वरूपमेव हि द्रव्यत्वं भेदकमभिमतमित्यर्थः ।
(२) इदं च समवायप्रत्यक्षतावादिमतेन । इतरथा वृत्तिमत्त्वेनेत्यर्थः ।
(३) ०यकत्वमि० ।

रूपस्य भागासिद्धेः । आदित्वस्यैव प्रतिक्षेपात् । अन्यतमत्वस्य

---

न्यायलीलावतीकण्ठाभरणम्

विंशतौ गुणत्वमेकमनुगतं स्यात्तदा क्षित्यादिनवकभेदकं गुणवत्त्वं भवेत्तदेव तु नास्तीत्याह—रूपादिष्विति । ननु गुणत्वासिद्धौ गुणवत्त्वमनुगमकं माऽस्तु रूपवत्त्वमेव भेदकमस्त्वित्यत आह—भिन्नरूपस्येति । आकाशादीनामपि पक्षत्वे तत्र रूपवत्त्वादेरासिद्धेरित्यर्थः । ननु रूपवत्त्वादिकं भागासिद्धं न तु रूपादिमत्त्वमपि कस्यचित् द्रव्यस्य किंचिद्गुणसत्त्वादित्यत आह—आदित्वस्येति । आदिपदं प्रकारवाचि प्रकारश्च गुणत्वमेव स्यात्, तच्च गुणत्वस्यैवासिद्धेरिति पूर्वोक्तेनैव प्रतिक्षिप्तमित्यर्थः । ननु रूपवत्त्वरसवत्त्वाद्यन्यतमत्वमेव द्रव्यभेदकं स्यादत आह—अन्यतमत्वस्येति । आदिपदमानिर्द्धारितमेकमाह । तथा च रू-

न्यायलीलावतीप्रकाशः

पृथक्त्वादेः सत्त्वेन गुणवत्त्वस्य साधारण्याद्विरुद्धत्वादित्यर्थः । किंच गुणवत्त्वं गुणत्वाश्रयवत्त्वं वा रूपवत्त्वमिति प्रत्येकं वा रूपादिमत्त्वं वा रूपाद्यन्यतमवत्त्वं वा । आद्ये रूपादिष्विति । रूपादौ गुणाकारानुगतप्रतीत्यभावादित्यर्थः । द्वितीये भिन्नेति । तृतीये आदित्वस्येति । प्रकारवाचिन आदिशब्दस्यानुगतधर्माभावेनाप्रवृत्तेः प्रत्येकगुणपरत्वे तस्य भागासिद्धेः समुदायपरत्वे चासिद्धेरित्यर्थः । चतुर्थे अन्यतमेति । अन्यतमत्वं हि समभिव्याहृतपदार्थमध्ये किंचिद्वृत्तित्वे सति किंचिदवृत्तिधर्मवत्त्वम् । तथा च भागासिद्धिः पक्षीकृतेषु नवसु

न्यायलीलावतीप्रकाशविवृतिः

सङ्ख्यापत्तेः। सपक्षघटितं साधारण्यं केवलव्यतिरेकिणि न सम्भवतीत्यत आह—विरुद्धत्वादिति । साध्यानवगतसहचारः साध्याभावसहचारी विरुद्ध इति मतमाश्रित्येदमुक्तम् । किं चिदिति । सत्यन्तं स्वरूपनिर्वचनपरम् । यद्यपि एतावता तादृशधर्म एवान्यतमत्वं तथापि तादृशो धर्मो यत्र (१)तत्त्वं तादृशधर्म्मवत्त्वमेवाभिमतमत एव क्वचित्पाठोऽपि तथेति भावः । तादृशो धर्मो रूपत्वादिः संयोगत्वादिर्वा । अन्त्ये व्यर्थविशेषणतैवेति प्रथमं भागासिद्धिमाह–तथा चेति ।

---

(१) यस्य ।

न्यायलीलावतीकण्ठाभरणम्

पवत्त्वरसवत्त्वादावेव पर्य्यवस्येत, तच्च भागासिद्धमेवेत्यर्थः। नवा-नां समवायिकारणत्वेनैक्यमाशङ्क्य गुणकर्म्मणोरसमवायिकारणत्वे-

न्यायलीलावतीप्रकाशः

तेषामसत्त्वादित्यर्थः। यद्यपि भागासिद्धौ भागान्तरे साधनाभावात् साध्यसिद्ध्यभावस्य दूषकताबीजस्यात्राभावः, भागान्तरे साध्य-साधकस्य जलत्वादेः सत्त्वात्, न वा भागासिद्धिः पृथिव्याद्यन्या-न्यत्वस्य (१)विवक्षितत्वात्। तथापि पृथिव्यादिव्यक्तीनां प्रत्ये-कमुपस्थापयितुमशक्यत्वात् पृथिवीत्वादिना तत्तदुपस्थितिर्वाच्या सा च पृथिवीत्वाद्यसिद्ध्या न सम्भवति। [समवायीति।(२)] रूपादेः संख्यादिसमवायिकारणत्वे विरुद्धं(३) चेत्यभिसन्धिः [एकत्व इति।(२)]

न्यायलीलावतीप्रकाशविवृतिः

अन्यतमत्वमन्यान्यत्वं रूपादिनिष्ठमित्यपि व्यर्थविशेषणग्रस्तमेवेति नाशङ्कितम्। ननु नोक्तं दूषकताबीजमपि तूद्देश्यतल्लिङ्गकनवप-क्षकानुमितिप्रतिबन्धकत्वम्। अन्यथा हेत्वन्तरस्य साध्यसाधकस्य विद्यमानत्वेनास्यादोषत्वे व्यभिचारादेरप्यदोषत्वमित्यरुचेराह—न-वेति। स्वातन्त्र्येणैवायं हेतुरितरभेदसाधकत्वेनाशङ्कितो न तु गुण-वत्त्वविकल्पशेषत्वे। तथा सति रूपाद्यन्यान्यतमवत्त्वस्य शङ्कितुमु-चितत्वादिति ध्येयम्। ननु पृथिव्याद्यन्यान्यत्वमेव साध्यमिति साध्याविशेषः। न च पृथिवीत्वाद्यन्यान्यधर्मवत्त्वं हेतुरिति वाच्यम्, तथा (सति ?) "पृथिव्यादिव्यक्तीना"मित्यग्रिमग्रन्थालग्नकतापत्ते-रिति। मैवम्। गुणादिप्रतियोगिकान्योन्याभावस्य साध्यत्वात्। अ-न्ये तु 'विवक्षितत्वा'दिति साध्यतावच्छेदकत्वेन विवक्षितत्वादिति नानुपपत्तिरिति वदन्ति।

रूपादेरिति। रूपादेः संख्यागुणयोगात् द्रव्यत्वावश्यकत्वे

(१) 'रूपाद्यन्यान्यत्वस्य' वि.।

(२) एतत्प्रतीकद्वयानुसारी पाठ आदर्शमूले न दृश्यते। परन्त्वत्र "समवायिकारणत्वेनैकत्वे—समवायिकारणत्वलक्षणैकरूपेण विभजने" इतिदीधितिग्रन्थदर्शनाच्च तत्पाठस्त्रुटित इत्यनुमीयते।

(३) विरुद्धं चात्र व्यभिचारित्वम्, तथा च द्रव्यं भिद्यते, समवायिकारणत्वादित्यत्र रूपादौ व्यभिचार इति भावः।

भागासिद्धेः। (१)असमवायिकारणत्वेन(२) गुणकर्मणोररूप्येकत्वे षडेवेति नियमानुपपत्तेः(३)। कार्याश्रयत्वं यज्जातिपुरस्कारात्त-

---

न्यायलीलावतीकण्ठाभरणम्

नैक्यमापाद्य विभागव्याघातमाह—समवायीति।(४)ननु कार्य्याश्रयत्वमाकस्मिकं स्यात् असत्येकस्मिन्नवच्छेदक इति यत्तदवच्छेदकं तद्रूव्यत्वमित्याशङ्कते—कार्य्येति। अवच्छेदकं विनापि कार्य्याश्रयत्वं स्यात् अन्यथाऽकार्य्याश्रयत्वं गुणकर्म्मणोरेका जातिरवच्छिन्द्यात्। एवं

न्यायलीलावतीप्रकाशः

गुणादिव्यावर्त्तकैकजातिमत्त्व इत्यर्थः। असमवायिकारणत्वेनेति। एतच्चासमवायिकारणत्वेनैक्येऽपि गुणत्वकर्मत्वाभ्यामवान्तरभेदसम्भवान्न पदार्थत्वसाक्षाद्व्याप्योपाधीनामयं विभाग इत्यभिप्रेत्योक्तम्। षडेवेति। यद्यपि षडेवेतिनियमस्याधिकसंख्याव्यवच्छेदकत्वात् न्यूनत्वेऽपि नानुपपत्तिः, तथापि षडाश्रयो विभागः षट्त्वाभावेनाश्रयासिद्धः, अन्त्यावयविरूपादौ विनश्यदवस्थकर्मणि चासमवायिकारणत्वाभावात्। तेषामाधिक्येऽधिकसंख्याव्यवच्छेदोऽप्यनुपपन्न इत्यप्याहुः।

कार्याश्रयत्वमिति। आनन्त्यव्यभिचाराभ्यां व्यक्तौ तदसम्भवा-

न्यायलीलावतीप्रकाशविवृतिः

पृथिव्याद्यन्यान्यत्वमादाय्यकमिति रूपादिभिन्नत्वसाध्यासत्त्वे व्यभिचारलक्षणविरोधादित्यर्थः। केचित्तु रूपाद्यन्यतमत्वमेव हेतुरस्त्वित्याशङ्कायामेवेयं फक्किका। तथा च रूपादावप्युक्तसाध्यासत्त्वादुक्तहेतुसत्त्वाच्च व्यभिचार इत्यर्थ इत्याहुः। कश्चित्तु समवायिकारणत्वेनेतिमूलधारणानन्तरामियं फक्किकेति क्रमस्तथा सति सुगमैव। तथापीति। एवकारस्याधिकव्यवच्छेदपरत्वेऽपि षडित्यस्यानुपपत्ति(५)रेवेति भावः। 'इत्यपी'त्यरुचौ। तद्बीजं तु तत्रापि स्वरूप-

---

(१) प्रकाशादीधितिधृतप्रतीकानुसारेणात्र कश्चित् पाठस्त्रुटित इत्यनुमीयते।
(२) असमवायिकारणवृत्तिसत्तान्यजातिमत्त्वमित्यर्थः। तेनात्मविशेषगुणानां नासंग्रहः।
(३) पदार्थानां पञ्चत्वेन षट्त्वायोगात्।
(४) एतत्प्रतीकानुसारी पाठ आदर्शमूले न दृश्यते। (५) पत्तेरिति भा०।

द्रव्यत्वं भेदकमिति चेन्न, तां विनापि(१) तदुपपत्तेः । अकार्यजात्याश्रयत्ववत्कारणत्वमसति बाधके सामान्य एव पर्यवस्यतीति चेन्न, स्पर्शसमवायिकारणतया क्षित्यादिषु प्रतिनियतसामान्यापत्तेः । नापि गुणत्वं, तस्योपदेशं विनाऽप्रतीतेः । उपदेश-

---

न्यायलीलावतीकण्ठाभरणम्

द्रव्यादित्रयाणां जात्याश्रयत्वं जात्यन्तरेणावच्छिद्येतेत्याह—तद्विनेति। ननु यथाङ्कुरकारणत्वं वीजत्वं तथा नवानां समवायिकारणत्वमपि द्रव्यत्वं स्यादित्याह—कारणत्वमिति । शब्दकारणत्वं च नाकाशत्वं जातिर्बाधकादित्यर्थः । एवं सति स्पर्शसमवायिकारणत्वं चतुर्षु एका जातिः स्यादित्याह—स्पर्शेति । नवानां भेदकं निराकृत्य चतुर्विंशतेर्भेदकं निराचष्टे—नापीति । तस्येति । न हि गुणाकारानुगता मति-

न्यायलीलावतीप्रकाशः

दित्यर्थः । अकार्येति । आश्रयपदेन प्रत्येकमन्वयात् अकार्याश्रयत्ववत् जात्याश्रयत्ववदित्यर्थः । ननु कार्यसमवायिकारणतावच्छेदकतया नवस्वेको धर्मः, स च बाधकाभावाज्जातिः, आनन्त्यव्यभिचाराभ्यां व्यक्तौ तद्ग्रहाशक्यत्वादित्याह—कारणत्वमिति । एवं पृथिव्यादिचतुर्षु स्पर्शसमवायिकारणतावच्छेदकत्वेनैका जातिः स्यात् । अथ यदर्थं यत्कल्प्यते तस्यान्यथासिद्धिरेव कल्पनीये बाधिका तदा द्रव्यत्वेऽपि तुल्यमित्याह—स्पर्शेति । ननु माभूद्द्रव्यत्वं गुणादितो भेदकं गुणत्वाद्द्रव्यादेर्गुणानां भेदसिद्धौ गुणवत्त्वमुपाधिर्द्रव्याणामितरभेदसाधकं स्यादित्याशङ्क्य गुणत्वासिद्धिमाह—नापीति। रूपादिषु गुणाकारानुगता धीर्नास्तीत्युपदेशसहकृतेन्द्रिय-

न्यायलीलावतीप्रकाशविवृतिः

योग्यताऽस्त्येव फलाभावस्तु जनयितव्यस्य समवायिकारणाभावादिति व्यर्थविशेषणत्वादाह—अकार्येति । जातेरकार्यत्वेऽपि गोवृषन्यायेन पृथगुपन्यासः । तत्तत्स्पर्शं (२) प्रति पृथिवीत्वादिनैव कारणत्वमिति यदि तदा तत्तद्गुणं प्रत्यपि तुल्यमिति शङ्कोत्तराभ्यामाह—अथेति। गुणत्वखण्डनमर्थान्तरमत आह—नन्विति । पूर्वं जात्युपाधिसाधा-

---

(१) 'तद्विनापि' । (२) उद्भूतस्पर्शं ।

श्च गुणशब्दसङ्केतो, न चासौ व्यक्तिषु शक्यो, व्यभिचारात् । नाप्युपलक्षणान्तरेण । कर्मव्यावृत्तेरशक्यत्वात् । तदन्यत्वस्यानपेक्षितव्यावृत्तिरूपत्वेन रसान्यत्ववदनादेयत्वादिति त्रयाणामेकीभावेन षडेव पदार्था इति चेन्न, कालाकाशादीनां संयोगवि-

न्यायलीलावतीकण्ठाभरणम्

रस्ति रूपादावित्यर्थः । ननूपदेशव्यङ्ग्यैवाऽस्तु सेत्यत आह—उपदेशश्चेति । यथा गन्धवती पृथिवीत्युपदेशो नियतधर्म्मपुरस्कारेण तथा प्रकृते न नियतो धर्म्म इत्यर्थः । ननु सामान्यवानगुणो गुण इत्यत्रान्योऽन्याश्रयोऽपि सामान्यवान् स्पर्शरहितो गुण इत्युपदेशः स्यादित्यत आह—कर्म्मेति । ननु कर्म्मान्यत्वेन विशेषितः स्याद्यमत आह—तदन्यत्वस्येति । कर्म्मणो विपक्षत्वनिश्चय एव तदन्यत्वेन विशेषणमुचितम् । भूषणादिमते च कर्म्मणोऽपि गुणत्वेन विशेषणमिदमनुपपन्नं भवेदन्यथा रूपाद्यन्यत्वेनापि विशेषणं सुलभं स्यादित्यव्यवस्थितिरित्याह—अनादेयेति । त्रयाणां द्रव्यगुणकर्म्मणां परस्परव्यावर्त्तकधर्म्माभावेन एकीभावे चत्वार एव पदार्था इति विभागेऽधिकं दोषः । क्षित्यादिनवकरूपादिचतुर्विंशत्युत्क्षेपणादिपञ्चकेषु ग्राहकैकरूपाभावात् न्यूनो विभाग इत्युपसंहरति—इतीति ।

दोषद्वयपरीहाराय नवानामेकमवच्छेदकं गुणादिभ्यो भेदकं सा-

न्यायलीलावतीप्रकाशः

ग्राह्यं तद् रत्नत्वव्याप्यजातिवदिति वाच्यम, तत्राह—उपदेशश्चेति । ननु जातिमात्रसमवायित्वादिनाऽनुगतधर्मेण सङ्केतग्रहः स्यादित्यत आह—नापीति । न च कर्मान्यत्वेन तद्विशेषणीयम्, कर्मणो हि विपक्षत्वनिश्चय एव तद्व्यावृत्त्यर्थं विशेषणमुचितम् । न च कर्मगुणत्ववादिनस्तथा । यदि च स्वानपेक्षिततत्वमात्रेण तदन्यत्वं विशेषणं तदा परेण रसान्यत्वेनापि तद्विशेष्यं स्यादित्याह—तदन्यत्वस्येति ।

न्यायलीलावतीप्रकाशविवृतिः

रणेनैवानुगतगुणत्वमात्रखण्डनमिदानीं तु जातिरूपगुणत्वखण्डनमित्यपौनरुक्त्यम् । आदिपदेनैव दिशो लाभे बहुवचनमयुक्तं विभा-

न्यायलीलावतीकण्ठाभरणम्

धयति—कालेति । संयोगजनकत्वेन विभागजनकत्वेन चेत्यर्थः । तथा कालाकाशादयः सत्तेतरजातिमन्तः संयोगजनकत्वात् विभागजनकत्वाद्वा कर्म्मवदिति विवक्षितम्। संयोगविभागाभ्यां च न व्यभिचारस्तत्रापि साध्यसत्त्वात् । द्रव्यत्वव्याप्यजात्याऽन्यथासिद्धिर्माभूदिति कालाद्युपादानं तेषां तज्जात्यभावात् । न च त्रितयमात्रनिष्ठा सा स्यादिति वाच्यम्, पृथिव्यादिषट्त्वं कालादिनिष्ठसत्ताव्याप्यजाति-

न्यायलीलावतीप्रकाशः

कालाकाशादीनामिति । कालादित्रयं सत्ताव्याप्यजातिमत् संयोगजनकत्वात् कर्म्मवत् । न च त्रितयमात्रवृत्तिजातिसिद्धावर्थान्तरं पृथिव्यादिषट्कं कालवृत्तिसत्ताव्याप्यजातिमत् संयोगजनकत्वादाकाशवदिति पृथिव्यादिवृत्तित्वसिद्धेः । ननु विभुत्वमत्रोपाधिः । न च काले सा जातिर्न कालमात्रवृत्तिरेकव्यक्तिकसामान्याभावात् तदन्यत्र वर्त्तमाना मूर्त्तेऽपि सम्भाव्यत इति साध्याव्यापकत्वमिति वाच्यम्, तथापि सन्दिग्धोपाधेरपरीहारात् । मैवम् । विभुत्वमनवच्छिन्नपरिमाणवत्त्वं तत्रानवच्छिन्नपदं पक्षमात्रव्यावर्त्तकमिति

न्यायलीलावतीप्रकाशविवृतिः

गपदवैयर्थ्यं चेत्यन्यथा प्रयोगमाह—कालादीति । व्याप्यपदं भिन्नपरम् । यद्यपि कालाकाशयोरेका परा चात्मादिकमादाय दिशीत्यर्थान्तरं तथापि लाघवादेकजातिसिद्धिरिति भावः । पृथिव्यादीति। पृथिवीत्वादिनाऽर्थान्तरं माभूदिति कालवृत्तीति । न चैवमपि सप्तवृत्तिजात्याऽर्थान्तरम्, जातिसङ्करभयेन तदप्रसङ्गात् । अत एव पूर्वानुमानमपि साध्यप्रसिद्ध्यर्थमुपयोगि । क्वचित्तु कालवृत्तिपदं नास्ति तत्र च कालादित्रयवृत्तिजातेः पूर्वानुमानेन सिद्धौ लाघवादेकामेव तां विषयीकरोतीयमनुमितिर्न तु पृथिवीत्वादिकं गौरवात् । नापि षड्वृत्तिजातिमक्लृप्तत्वादित्याशयः । सत्तयाऽर्थान्तरवारणाय व्याप्यपदम् । तच्च भिन्नपरम् । गुणवत्त्वादिनाऽर्थान्तरवारणाय जातिपदम् । संयोगेति । (१)समवायित्वादित्यर्थो यथाश्रुते विभागध्वंसे व्यभिचारात् । समवायिकारणत्वविवक्षायां च कारणपदवैयर्थ्यादिति भावः । विभुत्वमिति । व्यभिचारोन्नायकश्चायमुपाधिः । सत्प्रतिपक्षतायां

(१) संयोगसमवायित्वा० ।

न्यायलीलावतीकण्ठाभरणम्

मत् समवायिकारणत्वात् आकाशवदिति तत्रापि तत्सिद्धेः समवायिकारणतावच्छेदकजात्यनङ्गीकारे नियामकमन्तरेण तदाकस्मिकं स्यादिति विपक्षबाधकं चात्र द्रष्टव्यम्। पूर्व्वोक्तां प्रतिबन्दीं निराचष्टे-

न्यायलीलावतीप्रकाशः

पक्षेतरत्वात् तथाप्यर्थान्तरत्वम्। पृथिव्यादिष्वेका जातिरस्ति न वेति विवादो न तु कालादित्रयमेकजातिमन्न वेति। द्रव्यत्वापरजात्यनुमितिश्चैवं स्यात्। किं च संयोगजनकत्वं यदि तत्समवायिकारणत्वं तदा दृष्टान्तासिद्धिः तदसमवायिकारणत्वं चापक्षधर्मः। तन्निमित्तकारणत्वं च दृष्टान्ते नास्ति, अभावे अनैकान्तिकत्वं च।

अत्राहुः। द्रव्यमिति प्रत्यक्षं तावत्सर्वसिद्धम्। तच्च यथा पृथिव्यां तथा जलतेजसोरपीत्युभयसाधारणं निमित्तं सिध्यति। तच्च न पृथिवीत्वादिकं एकदेशवृत्तित्वात्। न गुरुत्वादिकं तदज्ञानेऽपि धूमादौ द्रव्यमितिप्रत्यक्षात्। तच्च जातिः, तथात्वे बाधकाभावात्। इत्यतीन्द्रियेऽपि वाय्वाकाशादौ संयोगजनकत्वात्तदनुमेयम्। न चाप्रयोजकत्वं संयोगमात्रं कार्यमात्रमेव वा प्रति समवायिकारणं किं चिद्वाच्यम्। अन्यथा कारणान्तरम-

न्यायलीलावतीप्रकाशविवृतिः

व्यतिरेके भागासिद्धेरित्यवधेयम्। पक्षेतरत्वादिति। पक्षमात्रव्यावर्त्तकविशेषणवत्त्वादित्यर्थः। न चैवमप्यतीन्द्रियत्वादिकमुपाधिः स्यादेवेति वाच्यम्, संयोगसमवायिकारणतावच्छेदकत्वेन नवस्वेकजातिसिद्धौ विपक्षबाधकेन हेतोः साध्यव्याप्यतयोपाधेः साध्याव्यापकत्वादिति भावः। कालादित्रयमित्यत्र दोषमाशङ्कते—तथापीति। अर्थान्तरत्वमप्राप्तकालत्वम्। प्रकृतानुकूलतया नार्थान्तरमत आह—द्रव्यत्वापरेति। तादृशजातौ विपक्षबाधकाभावान्न तत्सिद्धिरित्यरुचेराह—किं चेति। कारणत्वसामान्यमेव हेतुरित्यरुचेराह—अभाव इति। (संयो ?) ग (प्राग ?) भावे संयोगध्वंसे चेत्यर्थः। एवं चोपजीव्यानुमानखण्डने षट्पक्षकानुमानमप्यर्थतः खण्डितमिति भावः। संयोगजनकत्वात् संयोगसमवायित्वादित्यर्थः। कार्यमात्रमिति। यद्यपि नवपक्षकानुमानादप्युक्तहेतुना लाघवादेका जातिरेव सिध्यति उद्देश्यप्रतीत्यासिद्ध्या च नांशतः सिद्धसाधनं तथापि सम्भवप्राचु-

भागजनकत्वेन कर्मवत्सत्तेतरजातिमत्त्वासिद्धेः । पृथिव्यादौ तु स्पर्शसमवायिकारणत्वनिर्वाहकजातिस्वीकारे जातिसङ्करप्रसङ्गो बाधकः । न च कर्मत्वमसिद्धम् । चलतीत्यनुगताकारवेदनवेद्य-

न्यायलीलावतीकण्ठाभरणम्

पृथिव्यादाविति । स्पर्शसमवायिकारणतावच्छेदिका जातिर्जलपरमाणौ नास्ति जलत्वञ्च तेजसि नास्ति जलावयविनि द्वयमप्यस्तीति साङ्कर्यमित्यर्थः ।वस्तुतः स्पर्शत्वं नित्यानित्यवृत्तितया कार्य्यतावच्छेदकं न भवति । कार्य्यस्पर्शमाश्रित्येदमुक्तम् । ननु कर्म्म दृष्टान्तीकृतं न च तत्र सत्तेतरजातिमत्त्वं साध्यमिति साध्यवैकल्यमत आह—न चेति । चलतीत्यनुगतमतिः सर्व्वसाक्षिणीत्यर्थः । अनुगतधीवेद्यत्वं जातित्व-व्यापकं तन्निवृत्तौ द्रव्यत्वं जातिर्न स्यादित्याशङ्क्य रत्नत्वे व्यभिचाराभयं

न्यायलीलावतीप्रकाशः

पि न स्यात्, तद्गर्भत्वात्तन्निमित्तासमवायिकारणयोः । तच्चा-नुगतधर्मावच्छेद्यमन्यथा व्यभिचारादकारणत्वापत्तेः । स चानुगत औत्सर्गिको जातिरूप इति विपक्षे बाधकात् स्पर्शसमवायिकारणत्वा-वच्छेदकत्वेनापादितां जातिं दूषयति—पृथिव्यादाविति । जलत्वं विना सा जातिः पृथिव्यादौ तां विना जलत्वं परमाणावित्येकत्र जलावयवि-नि परस्परात्यन्ताभावसमा(ना?)धिकरणजात्योः सङ्करापत्तिरित्यर्थः । न च जलपरमाणावपि सा जातिरस्त्येव समानाधिकरणस्पर्शस्य च प्रतिबन्धकत्वान्न तत्र स्पर्शोत्पत्तिः, स्वरूपयोग्ये च कार्यानवश्यम्भा-

न्यायलीलावतीप्रकाशविवृतिः

र्येणेदमुक्तम् । कार्याकार्येत्यत्र कार्यपदं सम्पातायातम् । ननु नित्य-स्येत्यादिव्याप्तेरङ्गीकारे जलत्वमपि न परमाणौ, अनित्यस्नेहसमवा-यिकारणतावच्छेदकतयैव तत्सिद्धेः। व्याप्त्यनङ्गीकारे(१)स्पर्शसमवा-यिकारणतावच्छेदकजातिरपीत्युभयथापि न साङ्कर्यम् । न च नाना-जातीयद्रव्यवृत्ति[२]गुणत्वावान्तरजातेर्न द्रव्यवृत्तिजातिनियामक-त्वमन्यथा वेगसमवायिकारण [ तावच्छेदक ? ] तथापि पञ्चस्वेक-

( १ ) तदनङ्गीकारे । ( २ ) गुणवृत्तीत्यधिकः पाठो द्वितीयपुस्तके ।

न्यायलीलावतीप्रकाशः

वादिति वाच्यम्, नित्यस्य स्वरूपयोग्यस्य सहकारियोग्यतावश्य-म्भावात्। एतच्च स्पर्शत्वस्य कार्य्याकार्य्यवृत्तित्वेन कार्यतानवच्छेदकत्वेऽप्यनित्यस्पर्शत्वस्य तथात्वमभ्युपेत्योक्तम्। चलतीतिप्र(त्य?)-क्षसिद्धं कर्मत्वमित्यर्थः। न च संयोगविभागाश्रयत्वमात्रालम्बनेयं

न्यायलीलावतीप्रकाशविवृतिः

जात्यापत्तेरिति वाच्यम्, संयोगसमवायिकारणतावच्छेदकतया द्रव्यत्वसिद्धिविरोधात्। न च कतिपयद्रव्यगुणवृत्तिजातावयं नियमोऽप्रयोजकत्वात्। वेगप्रयोजकजातेरपि पूर्वपक्षिणापादनीयत्वेनोक्तस्याबाधकत्वात्। मैवम्, जलसमवायिकारणतावच्छेदकत्वेनैव जलत्वसिद्धावुक्तव्याप्तिस्वीकारे जातिसङ्करात्। न चैवमपि वेगप्रयोजकतया पञ्चस्वेकजातौ न बाधकमिति वाच्यम्, फलोपहितमात्रवृत्तिधर्मस्यैव गुणत्वसाक्षाद्व्याप्यजात्यवच्छिन्नकार्यताप्रातियोगिकसमवायिकारणतावच्छेदकत्वमितिनियमादुत्पन्नविनष्टे च वेगानुत्पत्त्या पञ्चसाधारणजात्यसिद्धेः। संस्कारत्वं च (न?) जातिरिति वेगत्वस्य साक्षाद्व्याप्यत्वात्। दैशिकपरत्वप्रयोजकतयाऽपि नोक्तजातिसिद्धिरुभयपरत्वसाधारणैकजात्यभावे तस्यापि साक्षाद्व्याप्यत्वात् क्षणद्वयावस्थायिनि असमवायिकारणविलम्बेन परत्वानुपपत्तेश्चोक्तनियमस्यैव निरोधात्(१)। यदि चोक्तनियमेऽप्रयोजकत्वं तदाऽस्तु पञ्चसाधारणी जातिः कर्मसमवायिकारणतावच्छेदकतयाऽपि तस्या आवश्यकत्वात्।

केचित्तु जलशब्दशक्यतावच्छेदकत्वेन जलत्वसिद्धौ स्पर्शप्रयोजकजातौ सङ्कर इति वदन्ति। मिश्रास्तु। द्रव्यानुगतबुद्धेरेव द्रव्यत्वं सिद्ध्यति उपाध्यननुसन्धानेऽपि तथाप्रतीतेः। स्पर्शवत्त्वप्रतीतिस्तु नोपाध्यननुसन्धाने येन तयाऽपि जातिराक्षिप्येत इति वदन्ति। तत्रेदं चिन्त्यम्। एवमपि कारणतावच्छेदकतया चतुःसाधारणजातौ बाधकानभिधाने उक्तबाधकानुसरणे आकरोक्तसाधकमेव किमिति परित्यक्तमिति।

(१) व विरोधात्।

त्वात् । न चानुगतबुद्धिगम्या जातिस्तदपायाद् व्यावर्तते । गृहीत-समयस्य रत्नतत्त्ववद्ज्ञानात्(१) । प्रतारणैवेय(२)मिति चेत् ? न, रत्नशास्त्रेऽपि प्रतारणापत्तेः । तदार्षमिति चेत्तुल्यम् । न चेदेव-

---

न्यायलीलावतीकण्ठाभरणम्

व्याप्तिरिति परिहरति—न चेति । एषेति । उपदेशसहकृतेन्द्रियग्राह्यता जातेरिति प्रतारणेत्यर्थः । आर्षमिति । ऋषिप्रणीतमित्यर्थः । यद्यपि ऋषिप्रणीतत्वादेव यदि विश्वासस्तदा युक्तिशास्त्रत्वविरोधस्तथापि प्रणयनप्रयोजिकाया युक्तेर्ऋषिणापि स्वप्रामाण्यदर्शनाय दर्शनीयत्वादिति भावः । द्रव्यत्वसाधकानुमाने विपक्षबाधकमाह—न चेदेवमिति । समवायिकारणता यद्येकव्यक्तिमात्रनिष्ठा स्यात्तदा व्यक्त्य-

न्यायलीलावतीप्रकाशः

प्रतीतिः श्येनसंयोगविभागवति स्थाणावपि तदापत्तेः । द्रव्याकारानुगतबुद्ध्यभावमभ्युपेत्याह—न चेति । गृहीतसमयस्येति । वस्तुत उपदेशं विनापि रत्नविशेषेऽनुगतधीरस्त्येव शब्दविशेषवाच्यत्वं परमुपदेशात् प्रतीयते । न च येनानुगतरूपेणोपदेशस्तेनान्यथासिद्धिः, जातौ बाधके सत्येवोपाधिस्वीकारात् । न चैवं वैपरीत्यमेव स्यात् उपाधेः क्लृप्तत्वादिति वाच्यम्, साक्षात्सम्बद्धधर्मस्यावच्छेदकत्वे बाधके सत्येव परम्परासम्बद्धस्य तथात्वाल्लाघवादिति भावः । समवायिकारणत्वनियामकद्रव्यत्वाभावे व्यक्तितः कारणत्वानिरूपणे व्यभि-

न्यायलीलावतीप्रकाशविवृतिः

श्येनेति । श्येनविभागस्य स्वनाश्यसंयोगसमानकालत्वादिति भावः । न च विभागपूर्वसंयोगस्तदालम्बनं विभज्य संयुक्ते श्येने सति तथाप्यतिप्रसङ्गात् । न च विभागाव्यवहितोत्तरवर्तिश्येनसंयोगस्तथा । एकदेशावच्छिन्नस्थाणुविभागानन्तरं तज्जनककर्मणैवापरदेशान्तरावच्छेदेन श्येनसंयोगवति स्थाणौ तथाप्यतिप्रसङ्गात् । संयोगप्राक्कालिककर्मण एव विभागप्रत्यय इति वैपरीत्यस्यापि सुवचत्वाच्च । वस्तुतः कर्माभावे संयोगविभागयोरेवानुत्पत्तिरिति भावः । साक्षादिति ।

(१) ज्ञावाव । (२) 'नैवेषेति' ।

मकव्यक्तिजनकत्वे व्यक्त्यन्तरे तद्बुद्धिविरहापत्तिः। भावे वा सर्वव्यक्तिष्वतिप्रसङ्गः। कतिपयव्यक्तिनिष्ठत्वं तु यदि जातिमन्तरेण तदा नियतानामेव व्यक्तीनां समानाकारविकल्पजननसामर्थ्यादेकजातीयताव्यवहारोऽस्त्विति जात्यपह्नवप्रसङ्गः। गुणत्वं च रूपादयो रूपत्वादिव्यतिरिक्ता(वा?)न्तरजातिमन्तः सामा-

---

न्यायलीलावतीकण्ठाभरणम्

न्तरे तदभावापत्तिरित्यर्थः। ननु कतिपयव्यक्तीनामेवायं स्वभावो यत्ता एव समवायिकारणं न गुणादिव्यक्त्योऽपीत्यत आह—कतिपयेति। एवं सति सास्नादिव्यक्तीनामेव स्वाभाव्यात् गवाकारानुगतमतिजनकत्वे किं गोत्वादिनेत्यर्थः। गुणत्वं चेति। नासिद्धमिति शेषः। साधकमाह—रूपादय इति। रूपत्वादीति। रसत्वमधुरत्वाद्युपग्रहः। अ-

न्यायलीलावतीप्रकाशः

चारात् कारणत्वव्यवहारविलोप इत्याह—न चेदेवमिति। सर्वव्यक्तिष्विति। गुणकर्मादिष्वपीत्यर्थः। कतिपयेति। समवायिकारणत्वस्येति शेषः। समानाकारविकल्पो गौरित्याद्यनुगतव्यवहार इत्यर्थः। सामर्थ्यात् स्वभावादित्यर्थः। रूपत्वादीति। आदिपदाद् रूपत्वव्याप्यरसत्वतद्व्याप्यजातिपरिग्रहः। न च नानैव जातिः सिध्येत्, लाघवादेकस्या एव सिद्धेः। नापि द्रव्यकर्मवृत्तिः सा सिध्येदित्यर्थान्तरम्, सा जातिर्न-

न्यायलीलावतीप्रकाशविवृतिः

अन्यथा जातिमात्रापलापे तद्घटितोपाधेरपि विलयापत्तेरिति भावः। नापीति। द्रव्यवृत्तिः कर्म्मवृत्तिरिति प्रत्येकमाशङ्का। अन्यथा सत्तया सहान्यूलानतिरिक्तव्यक्तिकताप्रसङ्गेन शङ्कानुत्थानादित्यवधेयम्। सा जातिरिति। न चाप्रयोजकत्वं रूपमात्रवृत्तित्वस्य तत्राप्रयोजकत्वात् अन्यथा रूपत्वसिद्धेन सत्ताया अपि तद्वृत्तित्वापत्तेरिति वाच्यम्, संयोगविभागेत्यादिवक्ष्यमाणस्य चतुर्विंशतिगुणमात्रवृत्तिजातिसाधकस्य विपक्षबाधकत्वात्। द्रव्यगुणोभय (वृत्ति ?) जातौ च मानाभावात्। द्रव्यमात्रे (च) तादृशजातिसाधनं बाधितम्,

न्यवत्त्वात् कर्म्मवत् । उपदेशश्च यत्र सामान्यवत्त्वे सति संयोगवि-
भागात्मककार्यद्वयाभावस्तद् गुणत्वव्यञ्जकमित्यसाधारणव्यञ्जक-
विषयोऽतो नान्योन्याश्रयः । यत्र विशुद्धसन्ततिजन्यत्वं तत्र

---

न्यायलीलावतीकण्ठाभरणम्

वान्तरत्वं सत्ताव्याप्यत्वम् । तथा च रूपं रूपत्वतद्व्याप्येतरसत्ताव्या-
प्यजातिमत् जातिमत्त्वात् द्रव्यवत् कर्म्मवच्चेति साधनार्थः । ननु
तथापि कथमनुगतधीरुपदेशं विनेत्यत आह—उपदेशश्चेति । सामा-
न्यवत्त्वं जातिमत्त्वम् । संयोगविभागात्मककार्य्यद्वयाभाव इति । उभयाजनक-
त्वमित्यर्थः । सामान्यवान् संयोगविभागोभयसमवायिकारणत्वासम-
वायिकारणत्वशून्यो गुण इत्युपदेशः पर्य्यवस्यति । एवं च न कर्म्म-
साधारण्यं न वा गुणो गुण इत्युपदेशे योऽन्योन्याश्रयः स इहे-
त्यर्थः । यद्वा संयोगविभागोभयकारणताविरोधिनी सामान्यसमा-
नाधिकरणकारणता गुणत्वव्यञ्जिका । न चादृष्टेश्वरज्ञानादौ तदुभय-
निमित्तकारणे गुणत्वं न स्यादिति वाच्यम्, निमित्तकारणतान्यतदुभ-
यकारणत्वस्य विवक्षितत्वात् । तदुभयसमवायिकारणत्वं तदुभयास-
मवायिकारणत्वं निमित्तकारणतातिरिक्ततदुभयकारणत्वभिन्नसामा-
न्यसमानाधिकरणकारणत्वं च जातिव्यञ्जकम् । तथा च द्रव्यत्वं क-
र्म्मत्वं गुणत्वं च जातित्रयं सिद्ध्यति । न च तदुभयसमवायिकारण-
त्वभिन्नकारणतावच्छेदकतया गुणकर्म्मसाधारणी तदुभयासमवायि-
कारणताभिन्नकारणतावच्छेदकतया च द्रव्यगुणकर्म्मसाधारणी च
एका जातिः सिद्ध्येदिति वाच्यम्, अननुभवात् । अनुभवानुसारेणैव
व्यवस्थापकानुसरणात् । अन्यथा यावति रूपकारणता तावत्येका
यावति स्पर्शकारणता तावत्यपरा जातिः स्यादेवं गुरुत्वपरत्वापरत्वा-
दिसमवायिकारणतावच्छेदिका च जातिः स्यादिति । उपदेशव्यङ्ग्यत्वे
जातेर्दृष्टान्तमाह—यत्रेति । नन्वेवं द्रव्यगुणकर्म्मसाधारणमर्थत्वमपि

न्यायलीलावतीप्रकाशः

द्रव्यकर्मवृत्तिः रूपवृत्तिसत्तान्यजातित्वात् रूपत्ववदिति बाधकात् ।

ब्राह्मण्यमितिवत् अर्थत्वमपि स्यादिति चेन्न, तस्य सत्तासम्ब-

---

न्यायलीलावतीकण्ठाभरणम्

जातिः स्यादित्यत आह—अर्थत्वमिति । अन्यथा त्रयाणामर्थशब्दवा-च्यत्वे किं प्रवृत्तिनिमित्तं स्यादिति भावः । सत्तावत्त्वमेवोपाधिरर्थ-त्वमिति परिहरति—नेति। प्रवृत्तिनिमित्तमप्ययमेवोपाधिरिति भावः।

न्यायलीलावतीप्रकाशः

ननु चाप्रयोजकं सामान्यवत्त्वं द्रव्यमात्रे द्रव्यगुणयोर्वा द्रव्यत्वतद्व्या-प्यान्यसत्ताव्याप्यजात्यनुमितेरपि तत एवापत्तेः । न च द्रव्यत्व-कर्मत्वान्य(१)सत्तासाक्षाद्व्याप्यजातिमत्त्वमुपाधिः साध्यव्यापकताग्रा-हकमानाभावात् । भावे वा गुणत्वसाधकेऽपि रूपाद्यवृत्तिजातिमत्त्व-मुपाधिः स्यात् । न चास्योपाधेर्द्रव्यकर्ममात्रवृत्तित्वात् द्रव्यत्वकर्म-त्वदृष्टान्तेन साध्याव्यापकत्वमनुमेयम्, अप्रयोजकत्वात् । न च सा-मान्यवत्त्वाविशेषेऽपि संयोगविभागलक्षणविरुद्धाविरुद्धकार्यकारित्वा-द्गुणकर्मणोर्वैजात्यं साध्यम् । रूपादीनां ह्येकजातीयकार्यकारित्वेनैकजा-तीयत्वं साध्यते कर्मविलक्षणकार्यकारितया तद्वैजात्यं वा । आद्ये व्यभिचारः । द्रव्यकर्मणोस्तथात्वेऽपि वैजात्यात् सत्तया सिद्धसा-धनं च । अन्त्ये रूपादीनामेकजातीयत्वासिद्धेरर्थान्तरम् । सामान्ये

न्यायलीलावतीप्रकाशविवृतिः

अन्यूनातिरिक्तव्यक्तिकजात्यनङ्गीकारादत आह—द्रव्यगुणयोर्वेति । न च द्रव्यत्वगुणत्वान्येति । क्वचिद्गुणत्वस्थाने कर्मत्वेति पाठः । स च द्रव्यकर्मणोरिति पूर्वफक्किकापाठपक्षे सत्तामादाय साधन-व्यापकत्वमिति सत्ताव्याप्येति । पृथिवीत्वादिकमादाय तथात्वमि-ति साक्षादिति । गुणवत्त्वमुपाधिमादाय तथात्वमिति जातीति । द्रव्यत्वादिकमादाय तथात्वमिति अन्यत्वपर्यन्तम् । न चास्येति । अ-व्यवहितोपाधेरित्यर्थः । द्रव्यकर्ममात्रवृत्तित्वं द्रव्यकर्मेतरावृत्तित्व-मात्रमन्यथा दृष्टान्ते साधनवैकल्यापत्तेरिति ध्येयम् ।

विरुद्धेति । यथायोग्यमत्रान्वयः । एकजातीयेति । अविरुद्धत्वेनैवैकजा-तीयत्व(२)मिति भावः । व्यभिचार इति । विरुद्धत्वेनैवैकजातीयत्वादिति

---

(१) द्रव्यत्वगुणत्वान्य । (२) 'यत्वादि' ।

न्धित्वपर्यायत्वात्। अन्यथा बुद्धित्वज्ञानत्वादिनानासामान्यापत्तेः। न चात्र व्यतिरेकशङ्का निरुपाधित्वादिति न न्यूनम्। षडेव पदार्था इत्युद्देशः।

---

न्यायलीलावतीकण्ठाभरणम्

ननु अर्थत्वं जातिरेव किं न स्यादित्यत आह—अन्यथेति। सत्तया सह अन्यूनानतिरिक्तव्यक्तिकत्वमेवास्य जातित्वे बाधकमित्यर्थः। तर्हि सत्त्वैव जातिः कथं स्यादिति नाशङ्कनीयम्, अनुगतमतिबलेन तज्जातित्वस्य सर्व्वसिद्धत्वात् त्रयाणामर्थपदाभिधेयत्वस्य वैशेषिकपरिभाषामात्रसिद्धत्वात्। ननु रूपादयो रूपत्वादिव्यतिरिक्तावान्तरजातिमन्त इत्यत्र विपक्षे बाधकं नास्तीत्यत आह—न चात्रेति। व्यभिचारशङ्काप्युपाधिशङ्कया स्यात्। सा च योग्यायोग्योपाधिनिरासेन निरस्तेत्यर्थः। नवानां द्रव्यत्वेनैकत्वे चतुर्विंशतेश्च गुणत्वेन एकत्वे पञ्चानां कर्म्मत्वेन एकत्वे साधिते निरस्तमाधिक्यमिति न न्यूनं षडेव पदार्था इत्याह—इतीति।

न्यायलीलावतीप्रकाशः

व्यभिचारश्च, अदृष्टेश्वरज्ञानादौ विरुद्धकार्यकारितया गुणत्वाभावापत्तेः।

अत्राहुः। संयोगविभागोभयासमवायिकारणत्वसमवायिका-

न्यायलीलावतीप्रकाशविवृतिः

भावः। नन्वेवमप्यविरुद्धकार्यमात्रकारणत्वेनैकजातीयत्वसाधनमविरुद्धमेवेत्यरुचेराह—सत्तयेति। अर्थान्तरमिति। रूपत्वादिकमादायैव पर्यवसानादिति भावः। अत्राहुरिति। मूलानुमाने विपक्षबाधकमिति शेषः। संयोगविभागेत्यसमवायिकारणत्वमात्रान्वयि। एवं च समवायिकारणत्वोभयासमवायिकारणत्वशून्य इत्यर्थः। अनेन च कर्मणो द्रव्यस्य च का(वा?) रणं तत्रापि संयोगजसंयोगविभागजविभागकारणयोः संयोगविभागयोरेवाव्याप्तिवारणाय उभयोपादानम्। ईश्वरज्ञानसंग्रहायासमवायीति। सामान्यादावतिव्याप्तिवारणाय जातिमतीति। न चा(च?)प(पा?)रिमाण्डि(ण्ड?) ल्यासंग्रहस्तत्र कारणत्वाभावादिति वाच्यम्, महत्त्वजात्यभावसाक्षात्कारे प्रत्यासत्तिघटकतया तस्यापि

न्यायलीलावतीप्रकाशः

रणत्वशून्ये जातिमति यत्कारणत्वं तदसति बाधके जातिरूपधर्मावच्छेद्यमिति गुणत्वं सामान्यमवश्यमङ्गीकार्यं रूपत्वादीनां मिथोऽव्यभिचारात्। सत्तायाश्चातिप्रसञ्जकत्वात्। एवं च रूपान्तरेण कारणतया द्रव्यकर्मसाधारणी यदि जातिः सिध्यति सिध्यतु। संयोगविभागौ प्रति समवायिकारणतया नवसु द्रव्यत्वम्। तदुभयं प्रत्यसमवायिकारणत्वेन पञ्चसु कर्मत्वं तेनैव द्रव्यकर्मविभागः सङ्गतः। यद्वा निमित्तकारणतातिरिक्तेन रूपेण या संयोगविभागोभयकारणता तद्विरोधिनी या सामान्यसमानाधिकरणा कारणता सा गुणत्वव्यवस्थापिका। द्रव्ये च न तादृशकारणताविरोधिनी कारणता, क्वचिद्

न्यायलीलावतीप्रकाशविवृतिः

कारणत्वात्। रूपान्तरेणेति। निमित्तकारणतातिरिक्तेन संयोगविभागोभयकारणत्वेन संयोगविभागोभयासमवायिकारणत्वशून्यवृत्तिकारणताभिन्नजातिसमानाधिकरणत्वेन वेत्यर्थः। जातिसमानाधिकरणसमवायिकारणताभिन्नकारणत्वावच्छेदकत्वेन गुणकर्मणोरप्येकजातिसिद्धौ सङ्करभयादयं प्रसङ्ग एव नेत्याशयेनाह—यदीति। तया जात्या विभागे नवत्वव्याघात इत्यत आह—संयोगविभागाविति। अभावद्वयगर्भतयाऽपरितुष्यन् कल्पान्तरमाह—यद्वेति। अत्रेश्वरज्ञानादिसंग्रहाय निमित्तकारणतातिरिक्तेनेति विशेषणम्। संयोगविभागसङ्ग्रहायोभयेति। उभयकारणता च स्वरूपयोग्यता, तेन न विनश्यदवस्थकर्मण्यतिव्याप्तिः। जात्यादिवारणाय सामान्यसमानाधिकरणेति। ननु क्वचित्संयोगे विभागे च निमित्तत्वाद् द्रव्यस्यातिव्याप्तिरत आह—क्वचिदिति। क्वचिदेव संयोगे निमित्तत्वं न तु सर्वत्र(१) समवेते संयोगे विभागे च समवायित्वान्न तद्विरोधिनी कारणता द्रव्यस्येति भावः। यद्वा क्वचिन्निमित्तकारणत्वेन हेतुना तादृशकारणताविरोधिनी कारणतेति न। कुतः? समावेशात्। समवायिकारणत्वेन सममिति योजना। ननु कल्पद्वयमप्ययुक्तं कार्याविशेषितायाः कारणताया जात्यव्यवस्थापकत्वात्। चतुर्विंशतिगुणसाधारणस्य च कार्यस्याभावादिति।

अत्र मिश्राः। कार्यविशेषोऽपि कारणतायामनुगमार्थमाद्रियते

(१) स्वसमवेतसंयोगविभागे च सम०।

न्यायलीलावतीप्रकाशः

द्रव्यस्य तन्निमित्तकारणत्वेन समावेशात् । सामान्यस्य तादृशी कारणतापि न सामान्यसमानाधिकरणा । न चैवं समवायिकारणता·

न्यायलीलावतीप्रकाशविवृतिः

प्रकृते चैकरूपमेव कारणतायामनुगमकमिति किं कार्यविशेषादरेण । अत एव समवायिकारणतावच्छेदकतयैव द्रव्यत्वसिद्धिरुपेयते । न चैवं प्रकारान्तरेणानन्तजात्यापत्तिः । द्रव्यकर्मोभयवृत्तिजातौ बाध· कस्य वक्ष्यमाणत्वात्सामान्यादौ तत्त्वस्यैव(१) बाधकत्वात् । विना च बाधकमिष्टापत्तेरिति वदन्ति । तच्चिन्त्यम् । एवं सति रसरूपादिसमा· नाधिकरणतानुरोधेनापि जात्यापत्तेः,स्पर्शसमानाधिकरणकारणतानु· रोधेनापि चतुःसाधारणजातिसिद्धौ पूर्वग्रन्थविरोधाच्च । आपादि· तजातीनां व्याप्यव्यापकभावेन सङ्करशङ्काया अभावात् । न चैवं ग· न्धासमानाधिकरणद्रव्यत्वसमानाधिकरणकारणतानुरोधेनापि जाति· सिद्धौ सङ्करान्नवा जातय इति वाच्यम्, असमवायिकारण· त्वेन कतिपयगुणकर्मसाधारणजातिसिद्धौ सङ्क(र?)स्य गुणत्वेऽपि तुल्यत्वादिति ।

केचित्तु द्रव्यत्वाभिव्यक्तिरेवानुगतं कार्यमिति तदप्ययुक्तम् । तादृशकार्यकारणतापि निर्विशेषितैव वा(२)जातिनिय(या ?) म· (मि?) का, विशेषणान्तरविशिष्टा वा । आद्ये कर्मसाधारण्यापत्तिः, अन्त्ये चातिप्रसङ्ग एव, रूपत्वासमानाधिकरणैकरूपकारणतानुरो· धेन तद्भिन्नगुणेष्वेक(३)जात्यापत्तेः । तस्माद् गुणपदशक्यतावच्छे· दकत्वेन तत्सिद्धिरसति बाधके पदवाच्यतायामनुगतजातिनिमित्त· त्वादिति तात्पर्यम्(४) । वस्तुतः प्रत्यक्षमेव गुणत्वे मानमित्यग्रे 'उपदे· शश्चे'त्यादिमूल एव व्यक्तमिति ।

सामान्यस्येति । सामान्यादेरित्यर्थः । समवायिकारणतातिरिक्तेति । सम·

---

(१) तस्यैव । (२) द्वितीयादशपुस्तके वाकारो नास्ति । (३) 'णेष्वेव जा'।

(४) शक्यतावच्छेदकत्वेन जातिसिद्धौ विभुपदशक्यतावच्छेदकतया विभुचतुष्टयमात्रवृत्तिजाति- सिद्धिप्रसङ्गः स्यादिति दीधितिकृद्भिस्तथा जातिसिद्धिर्नाभ्युपेयते, तेषां मते शक्यतावच्छेदकाननुगमो न दोषायेति । परन्तु रघुदेवभट्टाचार्य्येण शिरोमणिकृत-"पदार्थतत्त्वनिरूपणे" गुणत्वजातिख- ण्डनपरग्रन्थव्याख्यानावसरे 'इदमत्र बोध्यम् । असति बाधके गुणपदशक्यतावच्छेदकत्वेन गुण- त्वजातेः सिद्धौ बाधकाभावः ।......इदं 'पूर्णाय परमात्मने' इत्यत्रेश्वरे आत्मपदव्यपदेशं कुर्वतो दीधितिकृतोऽपि सम्मतम् । अन्यथा आत्मपदशक्यतावच्छेदकत्वं विना ईश्वरसाधारणात्मत्वजाता युक्त्यन्तराभावेन तथा व्यपदेशाऽसङ्गतः स्यादिति" । इति स्वहस्तितम् ।

न्यायलीलावतीप्रकाशः

तिरिक्तकारणत्वेन गुणकर्मणोरेका जातिः सिद्ध्येत् तस्य जात्यव्यव-स्थापकत्वात्। अन्यथा निमित्तकारणतातिरिक्तकारणत्वेन संयोग-मन्तर्भाव्य जातिसिद्धौ जातिसङ्करापत्तिः। गुणत्वे प्रत्यक्षं मानमाह—उपदेशश्चेति। संयोगेति। विभागपूर्वकसंयोगासाधारणकारणत्वाभावो गुणत्वव्यञ्जक इत्यर्थः। तेन संयोगस्येश्वरज्ञानस्यादृष्टस्य चोभयज-नकत्वेपि न तत्र गुणत्वाभावः। नान्योन्येति। गुणत्वेनानुगतधर्मेणोपदेश-सिद्धिः, ततश्च गुणत्वसिद्धिरित्यन्योन्याश्रयो नैवमित्यर्थः। अर्थत्वम-पीति। जातिरिति शेषः। सत्तेति। सत्तया सहान्यूनानतिरिक्तवृत्ति त्वान्नार्थत्वं जातिरित्यर्थः। अत्रेति। द्रव्यत्वगुणत्वसाधकमान इत्यर्थः। निरुपाधित्वादिति। निरुपाधावावश्यमव्यभिचारास्थितेरित्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

वायिकारणताविरोधीत्यर्थोऽन्यथा द्रव्यसाधारण्यापत्तेः। अत्र सामा-न्यवत्त्वे सतीति विशेषणम्। अन्यथेति। यद्यपीयं जातिः पदार्थत्रय(१) एव स्यादिति गुणकर्मवृत्तिजातिव्यापकत्वादेव न संकीर्णता (२) तथापि ज्ञानाद्यवृत्तित्वेन तदव्यापकतया पूर्वजातिसङ्कीर्णेति द्रष्टव्यम्। संयोगमिति। संयोगादिकमित्यर्थः। 'जातिसिद्धौ' द्रव्यत्वजातिसिद्धौ। यद्यपि कर्मवृत्तित्वेनैव सङ्करसम्भवे संयोगमन्तर्भाव्येति व्यर्थम्, तथापि संयोगमादायापि सङ्करः सम्भवत्येवेत्येतदुक्तम्। केचित्तु संयोगमन्तर्भाव्य संयोगं समानाधिकरणीकृत्येत्यर्थस्तथा चैतत्पदम-हिम्नैव द्रव्यवृत्तित्वसिद्धिरित्याहुः। तन्न। एवं सति कर्मवृत्तित्वा-देः साङ्कर्यप्रयोजकस्यानुपन्यासात् (३)। यद्यप्येवं कार्याविशेषित कारणताया (४) जात्यव्यवस्थापकत्वे गुणत्वव्यवस्थापनमप्यशक्यं तथापि सति विपक्षबाधके कारणताया जातिव्यवस्थापकत्वं विपक्षबाधकं च क्वचिदन्यत् प्रकृते चानुगतगुणव्यवहार एव विव-पक्षे बाधकम्। न चानुशङ्कितजातावेतादृशं चानुगतकार्यं वा विपक्ष-बाधकमस्तीति हृदयम्।

यथाश्रुतस्येश्वरज्ञानादावव्याप्तेराह—विभागेति। अत्रासाधार-णपदेनादृष्टवदात्मसंयोगस्येश्वरज्ञानादेश्च साधारणस्य(५) संग्रहः।

(१) र्थत्रयेऽपि स्या। (२) कीर्णा त.। (३) स्यानुपदं न्यासात्। (४) कार्येण विशेषितकारणतायाः। (५) साधारणकारणस्य।

पृथिवी तावत्पृथिवीत्वजातियोगान्न भिद्यते, तत्र माना-
भावात् । पृथिवीत्यनुगतव्यवहारादिति चेन्न, घृतादौ तदभावा-
त् । तत्रापि निपुणेनोपलभ्यते इति चेत्, न, जलादावपि तुल्य-
त्वात् । सन्देहेऽपि भागासिद्धत्वात् । गन्धवत्त्वात् तदनुमानमिति
चेन्न, तस्य वाय्वादिसाधारण्यात् । वाय्वादावौपाधिकी गन्धप्रती-
तिरिति चेन्न, चम्पककर्पूर(१)भागानामनागमनात् । आगमने(२)

न्यायलीलावतीकण्ठाभरणम्

ननु एतावता पदार्थविभागः समाहितो नवैव द्रव्यानीति तु न युक्त-
मिति शङ्कते—पृथिवी तावदिति । जलादित्रयोदशभेदः पृथिव्याः पृथिवीत्व-
जात्या न सम्भवति पृथिवीत्वजातौ मानाभावादित्यर्थः । घृतादाविति ।
न हि लौकिकानामत्र पृथिव्याकारोऽनुगत प्रत्यय इत्यर्थः । ननु परी-
क्षकानां तावदस्तीत्यत आह—तत्रापीति । कस्यचित् सिद्धान्तिनो नि-
पुणस्य करकारूपजलादावपि पृथिवीव्यवहार इत्याह—जलादाविति ।
यद्वा सुगन्धि जलमिति प्रतीत्या जलेऽपि पृथिवीत्वव्यवहार इत्य-
र्थः । यद्वाऽतद्गुणसंविज्ञानबहुव्रीहिणा सुवर्णाद्युक्तं तदनुमानमिति
घृतादौ पृथिवीत्वानुमानमित्यर्थः । सुरभिः समीरण इतिप्रतीतिब-
लमाश्रित्याह—तस्येति । गन्धवत्त्वं गन्धसमवायित्वमभिमतं वायौ
च गन्धस्य संयुक्तसमवाय इत्याह—औपाधिकीति । कर्पूरादिरुपाधि-
र्वाच्यः, स च न वायुसंयुक्तो दृश्यते येन तथा स्यादित्याह—कर्पूरे-
ति । ननु सूक्ष्मा एव कर्पूरादिभागा वायुसहचारिण इति न दृश्यन्ते

न्यायलीलावतीप्रकाशः

नवत्वं द्रव्याणां मिथोभेदकसिद्धाविति भेदकमाक्षिपति—पृथिवीति ।
घृतादाविति । तथा च भागासिद्धिरिति भावः । निपुणेनापि घृतादौ
पृथिवीत्वानुभवोऽसिद्ध एव । तादृशोऽपि यदि गमकस्तदा जलादा-
वपि तत्सिद्ध्येदित्याह—जलादाविति । सन्देहेऽपीति । घृतादौ पृथिवीत्वे
सन्देहेऽपि भागासिद्धिसन्देहादिति भावः । औपाधिकीति । चम्पका-
द्युपाधेरन्वयव्यतिरेकानुविधानादिति भावः । चम्पकेति । इन्द्रियाणां

(१) कर्पूरचम्पकेति कण्ठाभरणसम्मतः पाठः । (२) आगमने वेत्यपि पाठः ।

न्यायलीलावतीकण्ठाभरणम्

इत्यत आह—आगमने वेति । उपलभ्यमानगन्धाश्रया भागा यदि दूरोपलभ्यमानचम्पकयुतसिद्धाः स्युश्चम्पकावयवा न स्युरित्यर्थः । चम्पकविभागहेतुक्रियावन्तो यदि स्युश्चम्पकावयवा न स्युरिति

न्यायलीलावतीप्रकाशः

प्राप्यकारितया अनागतचम्पकभागानां गन्धाग्रहणादिति भावः । आगमने वेति । विवादाध्यासिताश्चम्पकावयवा यदि चैत्रघ्राणसंयुक्तत्वेऽसति (१) चैत्रघ्राणग्राह्यगन्धाधिकरणानि भवेयुः, चम्पकाव-

न्यायलीलावतीप्रकाशविवृतिः

संयोगसङ्ग्रहाय विभागपूर्वकेति । न च विभागविशिष्टेत्येव सम्यगिति वाच्यम्, हिमवद्विन्ध्ययोर्न विभाग इति संयोगस्यापि विभागकारणतया संयोगाऽव्याप्तेः । संयोगश्च संयोगं जनयित्वा विभागं जनयतीति तत्सङ्ग्रहः । असाधारणत्वं च (१) संयोगमात्रवृत्तिधर्म्मावच्छिन्नकार्य्यताप्रतियोगिककारणताश्रयत्वम्, न तु तन्मात्रकारणत्वम् । व्यावर्त्त्यद्रव्यकर्मणोरतथात्वेन प्रतियोग्यप्रसिद्धेः । जातिसामानाधिकरण्यं च मूलोक्तमेव विशेषणमतो न जात्यादावतिव्याप्तिशङ्का । यद्यप्येवं स्पर्शवत्त्वादिव्यङ्ग्यमपि सामान्यं स्यादेव तथापि रूपादौ गुणत्वानुभववत् न पृथिव्यादौ तादृशजात्यनुभव इति हृदयम् ।

अवयवानामागमनं दलच्छिद्रतापादकमिति व्यधिकरणमतोऽन्यथा तर्कमाह—विवादाध्यासिता इति । चैत्रघ्राणग्राह्यगन्धाधिकरणानीत्यर्थः । आपाद्ये चम्पकपदं तद्देशवृत्तिचम्पकपरम्, अतो नाघ्रायमानचम्पकान्तरावयवे तस्मिन्नेव वा चम्पके आनीयाघ्राते सति तदवयवे व्यभिचारः । सत्यन्ते च चैत्रपदमेतद्देशवर्त्तिपरम् । तेन चैत्रेण गत्वाघ्राते तद्देशवर्त्तिचम्पकावयवे न व्यभिचारः । न चैवमपि तस्माच्चम्पकादाकृष्या(२)घ्राते तदवयवे व्यभिचार इति वाच्यम्, वैयधिकरण्यमात्रपरिहाराय विवक्षेति । सच्छिद्रत्वापादानस्यैवाभिप्रेतत्वेनापाद्ये चम्पकपदस्याच्छिद्रचम्पकपरत्वात् । अच्छिद्रत्वं च योग्यावयवविगमस्तथा तत आकृष्यानीतेऽवयवे तस्य सच्छिद्रत्वादच्छिद्रावयवाभावोऽस्त्यवेति न व्यभिचारः ।

(१) चैत्रघ्राणासंयुक्तत्वे सतीति विवृतिसम्मतः पाठः ।

(२) असाधारणकारणत्वं च ।

(३) ०कृष्यानीयाघ्राते ।

चम्पकदलानां सच्छिद्रत्व(१)प्रसङ्गात्(२)। कर्पूरे च भवनोदर-मधिवासयति माषकादिन्त्रुटिप्रसङ्गात्। न चापरपरमाणुप्रवेशात्तुल्या-गन्धपरत्वमिति(३) वाच्यम्, एकमाषस्या(४)क्षयताप्रसङ्गात्। ना-पि पाकजः स्पर्शः, पाकजत्वासिद्धेः। पार्थिवविशेषगुणत्वात्तत्सि-

न्यायलीलावतीकण्ठाभरणम्

द्धौ प्रसङ्गः। कर्पूरे [चे?]ति। माषकमिति। कर्पूरं यदि वाय्वाकृष्टकतिपयभागं स्यात् न्यूनं स्यादित्यर्थः। अपरापरपरमाणुप्रवेशान्न त्रुटिरित्याश-ङ्क्याह—न चेति। एकेति। माषकमितं कर्पूरं यदि भागान्तरपूरितं स्यात् पूर्वाधिकगुरुत्वाधिकरणं स्यादित्यर्थः। नापीति। पृथिव्या इतरभेदक इति शेषः। अत्र स्वरूपासिद्धिमाह—पाकजत्वेति। पृथिवीस्पर्शः पाक-जः तद्विशेषगुणत्वादितिसिद्धेर्न स्वरूपासिद्धिरित्याह—पार्थिवेति।

न्यायलीलावतीप्रकाशः

यवा न स्युरित्यर्थः(५)। कर्पूरे चेति। प्रचुरतरभागाविगमश्च तावद्गुरुत्वाधि-करणं चेति व्याहतमित्यर्थः। नापीति। भेदक इति शेषः। पाकानन्तरं घटादिरूपादौ वैजात्यानुभववत् संख्यादौ तदननुभवादपाकजत्वप्रती-

न्यायलीलावतीप्रकाशविवृतिः

अत्र च सत्यन्तं गत्वाघ्राते तदवयवे व्यभिचारवारणाय। न चाग्रि-मदलस्थचैत्रविशेषणमेवैतद्देशवर्त्तित्वमास्त्विति वाच्यम्, तस्य प्रयो-गान्तरत्वेन यथोक्तदोषाभावात्। यदि चाग्रिमचैत्रविशेषणमेव तत् पदं तदा व्याप्तिग्रहौपयिकत्वेन सत्यन्तसार्थकता। अप्राप्तस्यैव गन्ध-स्य ग्रहे तत्सच्छिद्रत्वाभावेन व्याप्त्यसिद्धिशङ्कायाश्चैत्रघ्राणसंयो-गित्वप्रयुक्तग्रहणविषयगन्धाधिकरणत्वविशिष्टे आपादकेऽप्रसङ्गात्। न च सत्यन्तमात्रमेव सम्यगिति वाच्यम्, परमाणुमात्रस्य चम्प-कात्प्रच्युतौ नानिष्टमिति योग्यावयवविगमपर्यन्तस्यापाद्यतया चम्प-

---

(१) सच्छिद्रत्वं च पूर्वापेक्षया न्यूनावयवत्वम्।

(२) सच्छिद्रताप्रसङ्गादिति पाठान्तरम्।

(३) ०ति न्याय्यम्०

(४) ०स्याश्रय०।

(५) चैत्रघ्राणसंयुक्तचम्पकभागवारणायासत्यन्तम्। तत्रैव चम्पक इति पूरणीयम्। तथा च यदि तत्र चम्पके चैत्रघ्राणसंयोगाभावदशायां चैत्रघ्राणग्राह्यगन्धाधिकरणानि स्युः, तदा तच्चम्प-कावयवा न स्युः, तच्चम्पकस्यासत्त्वकाले च न संयोगाभाववत्त्वम्। इति दीधितिः।

द्धिरिति चेन्न, व्यावर्त्यजलरूपसंख्यादीनामपाकजत्वाप्रतीतौ विशेषणवैयर्थ्यात्। अवैलक्षण्यात्तत्प्रतीतौ तु अत्रापि तद्विपर्ययावसायात्

---

न्यायलीलावतीकण्ठाभरणम्

पार्थिवपदव्यवच्छेद्यं जलरूपादि विशेषपदव्यवच्छेद्यं च संख्यादि तदा स्याद्यदि तेषां विपक्षवृत्तित्वनिश्चयः स्यादिति। न चैवमित्याह—व्यावर्त्येति। अवैलक्षण्यादिति। जलरूपादयः संख्यादयश्चाग्निसंयोगात् पूर्वं यथाऽनुभूतास्ततो विलक्षणास्तदनन्तरं नानुभूयन्त इति तेषामवैलक्ष्यण्यादपाकजत्वमिति यदि तदा पृथिवीस्पर्शोऽपि पाकानन्तरं विलक्षणो नानुभूयत इति स कथं पाकजः स्यादित्यर्थः। अत्रापीति। पार्थिवस्पर्शोऽपीत्यर्थः। अवैलक्षण्यं च पाकजपूर्वापरसा-

न्यायलीलावतीप्रकाशः

तिरित्याह—अवैलक्षण्यादिति। 'तत्प्रतीतौ' संख्याद्यपाकजत्वप्रतीतौ। 'अत्रापि' पार्थिवस्पर्शेऽपि। विपर्ययावसायादपाकजत्वनिश्चयादित्यर्थः। अवैलक्षण्यं च स्वासमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिसमानाधि-

न्यायलीलावतीप्रकाशविवृतिः

कच्युतपरमाणौ व्यभिचारात्, तस्य विगतयोग्यावयवतद्देशवर्त्तिचम्पकावयवत्वात्। न चैवमपि विशेष्यदलस्थचैत्रपदव्यर्थता, योगिनमादायोक्तव्यभिचारप्रसङ्गेनायोगिपरस्य तस्य ग्रहणगतलौकिकत्वे तात्पर्यादिति मिश्राः।

अत्रेदं चिन्त्यम्। आपादयितृमते वायोरेव गन्ध इति कथं चैत्रघ्राणग्राह्यगन्धाधिकरणत्वेन पक्षता चम्पकावयवानाम्। न च तेन रूपेण वायोरेव पक्षता तत्रापादकस्यासिद्धत्वेनापादकत्वासम्भवात् परमात्रसिद्धस्यैव तथात्वमिति। तस्मादिदमत्र सारम्। वृक्षस्थितचम्पकावयवत्वेन पक्षता, अन्यच्च पूर्वोक्तमेव सम्यगिति। नवीनास्तु चैत्रघ्राणग्राह्यगन्धाधिकरणानि यदि तद्देशवर्त्यच्छिद्र(१)चम्पकावयवाः स्युरेतद्देशवर्त्तिचैत्रघ्राण( । १ )संयुक्तत्वे सति चैत्रघ्राणग्राह्यगन्धाधिकरणानि न भवेयुरिति व्यत्यासेन प्रयोगमाहुः। तन्न सच्छिद्रत्वप्रसङ्ग इतिमूलाननुसारित्वादिति दिक्।

स्वेति। 'स्वं' वैलक्षण्याश्रयाभिमतो धर्मो गन्धादिः। तदसमाना-

(१) ०वर्त्तिसच्छिद्रचम्प।

न्यायलीलावतीप्रकाशविवृतिः

धिकरणा द्रव्यत्वसाक्षाद्व्याप्या जातिर्जलत्वादिः, तत्समानाधिकरणो गुणः स्नेहादिः, तदवृत्तिरथ च सुरभित्वादिनानाजातिव्यापिका जातिर्गन्धत्वादिस्तच्छून्यत्वमवैलक्षण्यमित्यर्थः। तथा च स्पर्शे तादृशजात्यभावादवैलक्षण्यम्। न च शीततरत्वादिव्यापकशीतत्वादिकमादाय शीतस्पर्शादावव्याप्तिरेतस्यापाकजत्वव्याप्यस्य निरुक्त्या तथा सत्यपि दोषाभावात्। व्यापकव्यभिचारस्यादोषत्वात्। न च कठिनतरत्वादिजातिमादाय पृथिवीस्पर्शेऽप्यसम्भव इति वाच्यम्, काठिन्यस्य पूर्वपक्षिणा संयोगभेदत्वस्वीकारात्। न चैवमपि कठिनसंयोगे ज्ञानशब्दादौ चाव्याप्तिरिति वाच्यम्, व्यापकव्यभिचारस्यादोषत्वादित्युक्तत्वात्। द्रव्यत्वसाक्षाद्व्याप्यपदं तु परमाणुवृत्तिनीलासमानाधिकरणघटत्वादिसमानाधिकरणनीलवृत्तितया नीलत्वस्य नीलेऽतिव्याप्तिवारणाय। व्योमपटान्यतरत्वमादाय तद्दोषतादवस्थ्यमिति प्रथमजातिपदम्। वायुस्पर्शविलक्षणैव पृथिवीस्पर्शवृत्तिजातिरित्यभिसन्धिना पृथिवीस्पर्शे अव्याप्तिवारणाय नानाजातिव्यापकपदम्। न चैवमपि नानापदं व्यर्थमेवेति वाच्यम्, स्वस्यापि स्वव्यापकत्वेन पूर्वदोषावारकत्वात्। न च पाकजन्यघृतसुवर्णद्रव्य(व?)त्वादावप्येतत्सत्त्वे व्यभिचार इति वाच्यम्, तत्रापि तारतम्यव्यापिकायाः अग्निसंयोगप्रयुक्तात्यन्तानुच्छेदोच्छेदप्रयोजकजातेः सत्त्वात्। गुणत्वव्याप्यपदं प्रथमगुणपदं च सम्पातायातम्। चरमजातिपदं तु पृथिवीगुणत्वमादाय पृथिवीस्पर्शेऽव्याप्तिवारणायेति।

अत्र वदन्ति। स्पर्शापाकजत्ववादिमते पृथिवीस्पर्शमात्रवृत्तिजातौ मानाभावेन नानाजातीत्यादिपदमनर्थकमिति। तस्मात्पदवैयर्थ्यभयेन समव्याप्त्यभिप्रायकमेवेदम्। न चैवं ज्ञानसुखादावव्याप्तिः पाकप्रयोज्यनानाजातेर्नानाजातिपदेन विवक्षणात्। तादृशरूपत्वादिसत्त्वात् जलरूपादावव्याप्तिरिति अवृत्तीत्यन्तं चरमजातिविशेषणम्। पृथिवीरूपादौ च नीलत्वादिकमादायैव वैलक्षण्यं तत्रापि साक्षात्पदजातिपदे पूर्ववदेव गुणपदं तु सम्पातायातम्। विशिष्टाभावतया च न व्यर्थता। नानापदजातिपदे स्फुटार्थे। अव्यर्थता च तयोर्विशिष्टाभावसम्पादकतयैव। गुणत्वव्याप्यपदमपि स्फुटार्थम्। चरमजाति-

बाधः। विशेषगुणत्वं च एकद्रव्यवृत्तित्वं(१) कतिपयद्रव्यवृत्तित्वं

---

न्यायलीलावतीकण्ठाभरणम्

म्यम्। स्वासमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिसमानाधिकरणगुणावृत्तिनानाजातिव्यापकगुणत्वव्याप्यजातिशून्यत्वं तदित्यपि वदन्ति। पूर्वहेतौ विशेषणासिद्धिमाह—विशेषगुणत्वं चेति। एकद्रव्यवृत्तित्वमिति। द्रव्यविभाजकोपाधिमात्रव्याप्यवृत्तिगुणत्वव्याप्यजातिमत्त्वमित्यर्थः। कतिपयेति। द्रव्यविभाजकोपाधिव्यभिचारित्वमित्यर्थः।

न्यायलीलावतीप्रकाशः

करणगुणावृत्तिनानाजातिव्यापकगुणत्वव्याप्यजातिशून्यत्वम्। एकवृत्तित्वं द्रव्यत्वव्याप्यविभक्तोपाधिव्याप्यमात्रवृत्तिगुणत्वव्याप्यजातिमत्त्वं

न्यायलीलावतीप्रकाशविवृतिः

पदं च पूर्ववदेव। पाकपदं च स्पर्शवन्मात्रवृत्तितेजःसंयोगपरम्, अतो नाग्निसंयोगासमवायिकारणकशब्दवृत्तिजातिव्यापकशब्दत्ववति विभागजशब्देऽव्याप्तिश्च। न चैवं पाकजशब्देऽतिव्याप्तिः, अपाकजत्वस्यापि निरुक्तपाकघटितत्वात्। पाकप्रयोज्यत्वसमव्याप्तं(२) चेदमतो न घटादिरूपेऽव्याप्तिः। न चैवं पाकप्रयोज्यजातिशून्यत्वमेव सम्यक् यथोक्तविशेषणविशेष्यभावे वैयर्थ्याभावादित्याहुः।

केचित्तु पृथिवीरूपरसगन्धानामेव विलक्षणत्वेन तद्भिन्नयावद्वृत्त्यवैलक्षण्यं निर्वाच्यमिति नैमित्तिकद्रवत्वे पृथिवीसुवर्णयोः परस्परविजातीयेऽव्याप्तिवारणाय गुणत्वव्याप्यपदं विशेषगुणत्वव्याप्यपरमिति वदन्ति।

एकवृत्तित्वं संख्यादावतिव्याप्तमतस्तदर्थमाह—द्रव्यत्वेति। द्रव्यत्वव्याप्यो विभक्तोपाधिः पृथिवीत्वादिस्तद्व्याप्यो गन्धादिस्तन्मात्रवृत्तिगुणत्वव्याप्यजातिर्गन्धत्वादिस्तद्वत्त्वम्। निविडसंयोगत्वमादाय पृथिवीवृत्तिसंयोगव्यभिचार इति गुणत्वव्याप्यपदम्। तदर्थश्च गुणत्वसाक्षाद्व्याप्यत्वम्। अत एव स्वरूप(पा?)सिद्धिरपि सङ्गच्छते। अन्यथा पृथिवीस्पर्शमात्रवृत्तिजातिसत्त्वेन तदसङ्गत्यापत्तेः। पाक·

---

(१) एकवृत्तित्वमिति प्रकाशानुसारी पाठः।
(२) पाकप्रयोज्यत्वसमव्यापकं चे.।

वा। नाद्यः। स्पर्शस्यानेकद्रव्यवृत्तित्वात्। पाकजत्वविशेषा(१)-न्नैवमिति चेन्न, तस्यैवासिद्धेः। द्वितीये तु वेगेनैव व्यभिचारात्(२)। ततः पृथिवीमात्रभेदग्राहकप्रमाणाभावात् पृथिवी नेतरेभ्यो भिद्यते [इति]। नैवम्। अस्ति तावद्गन्धं प्रति गन्धवतां समवायिकारण-

---

न्यायलीलावतीकण्ठाभरणम्

आद्ये स्वरूपासिद्धिमाह—स्पर्शेति। द्रव्यचतुष्टयवृत्तित्वादित्यर्थः। यदि कतिपयद्रव्यवृत्तिगुणत्वं विशेषगुणत्वं तत्राह—वेगेनेति। तस्य सामान्यगुणत्वाभ्युपगमादित्यर्थः। पूर्वपक्षमुपसंहरति—तत इति।

पृथिवीत्वमितरभेदकं साधयितुं पीठमारचयति—अस्ति तावदिति। तथा च गन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वजातिसिद्धि-

न्यायलीलावतीप्रकाशः

स्वरूपासिद्धमित्याह—स्पर्शस्येति। एकोपादेयत्वं सामान्यगुणे व्यभि-चारीति शेषः(३)। अस्ति तावदिति। ननु मण्यादौ गन्धो योग्यानुपलम्भ-बाधितः, न च घर्षणात्तत्रापि गन्धोपलम्भः, घर्षकगन्धविलक्षणगन्धा-ननुभवात्। नापि पाकजरूपवत्त्वेन गन्धमनुमाय गन्धज्ञानसहकृते-न्द्रियेण तत्र पृथिवीत्वग्रहः, अतीन्द्रिये मानाभावात्, तस्य जला-दावपि सुवचत्वात्। अत्राहुः। लाघवाद् य एवावयवाः मणिमारब्धव-न्तस्त एव तद्भस्मारभन्ते। तत्र च गन्ध उपलभ्यत एव। तथा च ग-न्धवदारम्भकत्वान्मणिपरमाणुर्गन्धवानिति गन्धवदारभ्यत्वेन मण्या-द्यपि गन्धवदेव। स चोद्भूतो नास्तीत्यनुद्भूतः कल्प्यते। न चो-

न्यायलीलावतीप्रकाशविवृतिः

जत्वविशेषणादित्यग्रिममूलस्यालग्नकत्वमाशङ्क्य पूरयति—एकोपादे-यत्वमिति। एकवृत्तित्वं यद्येकोपादेयत्वमभिमतं तदा व्यभिचार इत्यर्थः। एवं चाग्रिममूलमेव तद्व्यभिचारोद्धारपरमिति भावः। नापीति। एतच्च गन्धमात्रस्यैव व्यञ्जकत्वमिति मतमवलम्ब्य। वस्तुतः पाकजज्ञानसहकृतेन्द्रियेणापि तस्य ग्रहसम्भवादित्यव-धेयम्। अतीन्द्रिय इति। न च पाकजरूपेण तदनुमानमप्रयोजकत्वादिति भावः। गन्धवदारभ्यत्वेनेति। विजातीयगन्धवदसहकृतगन्धवदारभ्य-

---

(१) पाकजत्वविशेषणान्नै०। (२) ०चारः। (३) भावः।

त्वम्। न चैतन्नानाव्यक्तिनिष्ठम्, सति भावमात्रस्याहेतुत्वात्मक-त्वात्(१)। सावधारणस्य(२) च व्यभिचारात्तासु सिद्धेः। ततस्त-त्प्रयोजकजातियोगित्वमास्थेयम्। तदेव [च] पृथिवीत्वम्। न च

---

न्यायलीलावतीकण्ठाभरणम्

रित्यर्थः। ननु घटत्वादिनैव तदवच्छिद्यतामित्यत आह—न चेति। घटे सति गन्धो भवतीत्यन्वयग्रहेऽपि घटं विना न भवतीतिव्यतिरे-काभावान्न घटत्वादीनां समवायिकारणतावच्छेदकत्वमित्यर्थः। त-र्हि द्रव्यमात्रमेव गन्धसमवायिकारणं स्यादित्यत आह—साधारणेति। तास्विति। पृथिवीव्यक्तिषु गन्धसमवायिकारणत्वसिद्धेरित्यर्थः। किं चात इत्यत आह—तत इति। मण्यादावपि गन्धोऽस्ति परन्त्वनुद्भू-तः, कथमन्यथा भस्मनि गन्धोपलम्भः। न हि यैः परमाणुभिर्मणि-रारभ्यते तद्भिन्नेन तस्य भस्मारभ्यत इति युक्तं कल्पनागौरवा-पातात्। उद्भूतगन्धैः कथमनुद्भूतगन्धारम्भ इत्यत्र तु तप्ततैलगतं तेज एव निदर्शनम्, अनुद्भूतरूपेण तेजसा तत्र उद्भूतरूपतदार-म्भात्। किं च क्वचित् पाकाद्रूपादि विलक्षणं दृश्यते जलादौ तु न दृश्यत इति तदाश्रयगतं वैजात्यमावश्यकम्। नीलादिरूपाम्लादिरस-समवायिकारणतापि जात्यवच्छेद्येति सिद्धं पृथिवीत्वमित्यर्थः। अथ समवायिकारणत्वं च शब्दसमवायिकारणत्ववन्न जात्यवच्छेद्यं अदृष्टवत्त्वेनैवावश्यकेन तदवच्छेदादिति न क्षेत्रज्ञमात्रानिष्ठमात्मत्वं जातिः, धर्म्मिग्राहकमानेन ईश्वरस्याप्यात्मत्वेनैव सिद्धेः।

वायुना चम्पकादिभागानयने सच्छिद्रतापत्तिं कर्पूरेऽल्पतापत्तिं

न्यायलीलावतीप्रकाशः

द्भूतगन्धेनानुद्भूतगन्धानारम्भः, अतितप्ततैलादावनुद्भूतरूपतेज-सोद्भूतरूपतदारम्भवदविरोधात्। जलादौ च तदसम्भवान्नातिप्र-

न्यायलीलावतीप्रकाशविवृतिः

त्वेनेत्यर्थः। तेन गुणविरोधेन निर्गन्धे न व्यभिचारः। अतितप्तेति। एत-च्चोद्भूतत्वादेरदृष्टभेदप्रयोज्यत्वेनानियममभ्युपेत्य। वस्तुत उद्भू-तादेवोद्भूतमितिनियमेऽपि पाकेन परमाणावनुद्भूतगन्धनाशे उ-

---

(१) तुत्वात्०। (२) साधारणस्येति कण्ठाभरणधृतः पाठः।

न्यायलीलावतीप्रकाशः

सङ्गः। अपि च पाकाद्रूपादीनां परावृत्तिरुत्पत्तिश्च दृश्यते, जलादौ च नियमेन न दृश्यते, इत्याश्रयविशेषप्रयुक्तोऽयमिति परिशेषे घटत्वा- दीनां व्यभिचारात् सकलघटादिव्यापकजलादिव्यावृत्ततद्योग्यता- घटकरूपसिद्धिः। तच्च बाधकाभावाज्जातिः। एवं नीलादिरूपाम्ला- दिरससमवायिकारणतावच्छेदकतयाऽपि तत्सिद्धिः। न चैवं सुखसम- वायिकारणत्वेन संसार्यात्मनिष्ठा आत्मत्वव्याप्या जातिः स्यात्, इष्टापत्तेः। न चैवं नवैव द्रव्याणीति व्याहतं ज्ञानवत्त्वेन विभागात्। आत्मनस्तु नित्यद्रव्यत्वेन(१)द्रव्यत्वव्याप्यव्याप्यजात्यभावसाधने विप- क्षे बाधकाभावः। सुखसमवायिकारणत्वमात्मत्वावच्छेद्यमेव अदृष्टाभा-

न्यायलीलावतीप्रकाशविवृतिः

द्भूतगन्धारम्भात्तदारब्धे भस्मनि उद्भूतगन्धाविरोधः। न च निर्ग- न्धपरमाणोरेव सगन्धभस्मारम्भः, पाकजगन्धे पूर्वगन्धनाशस्यान्व- यव्यतिरेकाभ्यां कारणत्वावधारणात्। तैलस्थलेऽपि तादृशतेजो- न्तरप्रवेशादेव तादृशतेजोनिष्पत्तिरिति स्मर्त्तव्यम्। पाकादिति। पाक- प्रयोज्यरूपजनकतावच्छेदकत्वेन पृथिवीत्वसिद्धिरित्यर्थः। यथाश्रु- ते पाकजरूपस्य परमाणुमात्रवृत्तितया पृथिवीत्वस्य तदनवच्छेद- कत्वात्। अत एव घटत्वादीनामवच्छेदकत्वशङ्कया तन्निराकरणम- पि युक्तम्। एवमिति। नीलादियोग्यतावच्छेदकजातेः शुक्लादिमत्यप्य- विरोधादिति भावः। न चैवमिति। यद्यपि सुखसमवायिकारणतावच्छे- दकजात्यभ्युपगमेऽपि तद्व्यापकात्मत्वजात्यैव विभागादियमाशङ्का निर्बीजा, तथापि तज्जातौ मानाभाव इत्यभिमानादियमाशङ्का। ज्ञानव- त्त्वेनेति। आत्मपदशक्यतावच्छेदकतया सिद्धेनात्मत्वेनेत्यर्थः। अतो न द्रव्यत्वव्याप्यव्याप्येत्याद्यग्रिमग्रन्थविरोधः। केचित्तु ज्ञानव- त्त्वेनेति यथाश्रुतमेव, सकलात्मवृत्त्यात्मत्वं जातिर्नास्त्येव। अग्रे च द्रव्यत्वव्याप्यपदं द्रव्यविभाजकोपाधिपरमित्याविरोध इत्याहुः। क- चित्तु द्रव्यत्वव्याप्येत्यनन्तरं व्याप्यपदशून्यः पाठः। स चायुक्तः। तथा सति परमाणौ स्फुटव्यभिचारसम्भवे विपक्षबाधकाभावावलम्बनप्र- यासानुपपत्तेः(२)। न च सुखसमवायिकारणतावच्छेदकजातिस्वी- कारे जलावयविनि स्नेहसमवायिकारणतावच्छेदकजात्यापत्तिरिष्ट-

(१) द्रव्येति सम्पातायातम्। (२) पातिः।

गन्धवत्त्वमेवातिप्रसङ्गीति वाच्यम्, अनिलादौ चम्पकगान्धिकर्पूरगन्धीत्युपाधिभेदसम्भेदेनैव(१) कुङ्कुमारुणा तरुणीत्यादिवत् तत्प्रतीतेः(२)। न चैवमव्ययतापत्तिरिति वाच्यम्, अङ्कुरदशामारभ्य यथान्वहमदृष्टाकृष्टैर्भागैरुपचयाद्विविधशाखाभिराकाशदेशव्यापकत्वं तरोर्न तु च्छेदे सति, तथेहापीत्यतो विशेषात्। अत एव न चम्प-

---

न्यायलीलावतीकण्ठाभरणम्

च निरस्यति—अङ्कुरेति। अदृष्टवशात् क्वचित् पूरणं क्वचिन्नेति नातिप्रसङ्ग इत्यर्थः। अत एवेति। अदृष्टवशात्तत्रापि दलपूरणमित्यर्थः। औ-

न्यायलीलावतीप्रकाशः

वान्नेश्वरे सुखमित्यपि वदन्ति। अनिलादाविति। न च चम्पकगन्धीत्यत्र चम्पकस्येव गन्धोऽस्तीत्यर्थे उपमानाच्चेत्यनेन समासान्तविधानाच्चम्पकगन्धभिन्नगन्धवत्त्वं प्रतीयत इति वाच्यम्, उपाधेरन्वयव्यतिरेकात्तस्यैव वायोर्दूरे निर्गन्धत्वेन प्रत्यभिज्ञानाच्च। तथेहापीति। फलेन सामग्र्यनुमानस्य तुल्यत्वादित्यर्थः। अत एवेति। न च तरोराध्यात्मिकवायुना पार्थिवावयवानामन्तर्नयनाज्जलतेजोभ्यां च तस्य पाकाद्वृक्षवृद्धिः, च्छेदे तु तदभावाद्वृद्ध्यभावः। कर्पूरे चाध्यात्मिकवायोरभावाद्वैषम्यमिति वाच्यम्, फलेन सामग्र्यनुमानस्य तुल्यत्वादित्युक्तत्वात्। उपाध्यज्ञानेऽपि सुरभिर्वायुरितिप्रतीतेर्वायौ गन्धः

न्यायलीलावतीप्रकाशविवृतिः

त्वादिति भावः। नित्यस्य स्वरूपयोग्यस्य सहकारियोग्यतावश्यम्भावादिदमयुक्तमित्यनुशयोऽपि नासूचितः। उपाधेरिति। प्रयोगसमर्थनं तु गन्धव्यक्तिविशेषसादृश्यमादायेति भावः। केचित्तु चम्पकस्य गन्धः चम्पकगन्धः सोऽत्रास्तीति सम्बन्धीयेन (मत्वर्थीयेन?) तत्साधुत्वमित्याहुः। अङ्कुरदशामिति मूलम्। इदं तु समाधिसौकर्यादुक्तम्। वस्तुतस्तु यथा दीपारम्भकसामग्र्यैव परितोविसारि अनुद्भूतस्पर्शमुद्भूतरूपं प्रभाख्यद्रव्यमारभ्यते, तथा चम्पकाद्यारम्भकसामग्र्याप्यनुद्भूतरूपस्पर्शमुद्भूतगन्धचम्पकपरितोविसारिद्रव्यमारभ्यते। अत एवानुकूलेऽपि वायौ न दूरे गन्धग्रहः, चम्पक-

---

(१) ०धिसम्बन्धेनैव कु०। (२) ०णीतिवत् तत्प्र०।

कादौ सच्छिद्रतापत्तिरिति(१) । वायोर्गन्धवत्त्वे उद्भूतस्पर्शस्य(२) चाक्षुषतापत्तेः । रूपवत्त्वं प्रयोजकमिति चेन्न, गुणादावभावात् । न च स्पर्शोऽप्यपाकज एव, सुखास(श)कादौ सतततपनकरसम्भेदे

न्यायलीलावतीकण्ठाभरणम्

पार्थिकत्वमुक्त्वापि वायोर्गन्धवत्त्वे बाधकान्तरमाह—वायोरिति । उद्भूतगन्धवत्त्वे सति उद्भूतस्पर्शवत्त्वं द्रव्यचाक्षुषत्वव्याप्यमित्यर्थः । अवैलक्षण्यात् स्पर्शेऽपि पाकजत्वं नास्तीति यदुक्तं तत्राह—न चेति । स्पर्शोऽपि पाकजः पृथिव्यामितरभेदसाधक इत्यर्थः । पाकजत्वाय वैलक्षण्यमाह—सततेति । सुखाशकं त्रिपुषीफलम् (३) । आदिपदात् कपि-

न्यायलीलावतीप्रकाशः

स्वाभाविकः स्यादित्यत आह--वायोरिति । उद्भूतस्पर्शस्येति । प्रत्यक्ष स्पर्शस्येत्यर्थः । अतो न परमाणौ व्यभिचारः । महत्त्वेन हेतुर्विश्लेष्य इत्यन्ये न च चक्षुरसन्निकृष्टविनष्टेन व्यभिचारः, चक्षुर्योग्यताया आपाद्यत्वात् । रूपवत्त्वमिति । न च रूपवत्त्वस्यैव चक्षुर्ग्राह्यत्वे योग्यतावच्छेदकतया साध्यत्वात्तस्य चानुपाधित्वादिति वाच्यम्, रूपवत्त्वस्यैव योग्यतारूपत्वेन साध्यत्वात् स्वरूपेणोपाधित्वाविरोधात् । गुणादाविति । यद्यपि साधनावच्छिन्नसाध्यव्यापकत्वे नायं दोषस्तथाप्युपाधेरप्यापादयितुं शक्यत्वात् साधनव्यापकत्वमस्त्येवेति भावः । सुखाशकादाविति(४) । अयमर्थः । अस्ति त्वचा परामृष्टेषु तत्तद्वस्तुस्पर्शेषु पाकानन्तरं सुकुमारकठिनतरतमादिधीः सार्वलौकिकी, तत्रान्वयव्यतिरेकाभ्यां तेजःसंयोग एव प्रयोजकः । न चावयविनि निविडः संयोगः संग्रहाख्य एव तस्य विषयः, तस्य द्वीन्द्रियग्राह्यतया

न्यायलीलावतीप्रकाशविवृतिः

भागानयने दूरेऽपि गन्धग्रहः स्यात् । समीप इव दूरेऽपि सामग्र्यास्तुल्यत्वादिति शूलपाणिमिश्रा वदन्ति ।

अवैलक्षण्यादपाकजत्वमिति प्रागुक्तम्, तच्चासिद्धमिति प्रतिपादयन्नाह--अयमर्थ इति । तस्येति । न च त्रसरेणुसंयोगवदेकेन्द्रियग्राह्यत्वं

(१) ०त्तिरपि । (२) ०त्त्वे प्रत्यक्षस्पर्शवतश्चा० ।

(३) त्रपुसं कण्टकिफलमिति भावप्रकाशः । शशा इति भाषा ।

(४) कर्कटीविशेष इति प्राचीनटिप्पणी ।

स्पर्शभेदस्य प्रतीतेः । अन्यत्रापि च तीव्रसुकुमारादिभावेन विशेषप्रतीतेः । यत्र तु न प्रतीयते विशेषस्तत्रापि पार्थिवस्पर्श-

न्यायलीलावतीकण्ठाभरणम्

कच्छु(१)प्रभृतिपरिग्रहः । यत्र त्विति । पाषाणादावित्यर्थः । न च सुकुमारादिरवयवसंयोगभेद एव न तु स्पर्शभेद इति वाच्यम्, त्वङ्मात्रवेद्यत्वात् संयोगग्रहेऽपि कठिनसुकुमारादिसंशयादिति भावः । तत्रापीति ।

न्यायलीलावतीप्रकाशः

चक्षुषाऽपि तद्ग्रहापत्तेः । न चेष्टापत्तिः, चक्षुषा तद्ग्रहेऽपि स्पर्शविशेषसंशयात् अन्धकारेऽपि तत्प्रतीतेः । अवयवसंयोगस्यावयविन्यवृत्तेस्तद्गतत्वप्रतीतेर्भ्रमत्वापत्तेश्चेति स्पर्शविशेष एव तद्विषय इति । तत्रापीति । पृथिवीस्पर्शः तेजःसंयोगजन्यः प्रतिनियतेन्द्रियग्राह्यपृथिवीगुणत्वात् गन्धवत् । न च त्वगवेद्यत्वमुपाधिः, तेजोवयविनि साध्याव्यापकत्वात् । न च साधनावच्छिन्नसाध्यव्यापकः

न्यायलीलावतीप्रकाशविवृतिः

तस्येति वाच्यम्, त्रसरेणोरेकेन्द्रियग्राह्यतया तत्र तथात्वादत्र तु आश्रयस्य द्वीन्द्रियग्राह्यत्वादिति भावः । अन्धकारेऽपीति । अन्धकारास्थितपदार्थेऽप्यालोकावस्थितसुखाशकवत्काठिन्यप्रतत्यापत्तेरित्यर्थः । तथा च तेजःसंयोगानुविधायितया संयोगादन्यदेव काठिन्यमिति भावः । यत्तु अन्धकारे धर्मिणि तत्प्रतीतेर्नैविड्यप्रतीतेः । तथा च तत्रापि कठिनोऽयमन्धकार इति प्रतीतिः स्यादिति भाव इति । तदयुक्तम् । इष्टापत्तेः । केचित्तु अन्धकारपदं चक्षुर्व्यापारोपलक्षकं(२) तथा च त्रसरेण्ववच्छेदेनान्धकारे यदा घटादेक त्वचा गृह्यते तदा संयोगग्रहाभावेपि काठिन्यप्रतीतिरिति संयोगादन्यदेव काठिन्यमित्यर्थ इत्याहुः । अवयवगतसंयोगविशेषस्यैव काठिन्यरूपत्वेऽवयविनि कठिनप्रतीतिर्न स्यात्स्याद्वा भ्रान्ता, अवयवसंयोगस्यावयविन्यभावादित्याह—अवयवेति । तेज इति । तेजःसंयोगप्रयोज्यत्वं तेजःसंयोगजन्यजातीयत्वं वा साध्यमतो न कणादमतेऽवयविस्पर्शे अंशतो बाधो न वाऽवयविरूपादौ व्यभिचारः(३) । हेतुरपि प्रतिनियतेन्द्रियग्राह्यजातिमत्पृथिवीगुणत्वमतो न परमाणुस्पर्शे भागासिद्धिर्न वा

(१) कपिकच्छुः शूकशिम्बी, आलकुशीति भाषा । Cowhage इत्याङ्गलभाषायाम् ।

(२) चक्षुर्व्यापारविरहोपलक्षकं । (३) यथाश्रुतसाध्ये पक्षहेत्वोः पृथिवीपदं पृथिवीपरमाणुपरमिति न तत्र तत्र बाधव्यभिचारौ ।

त्वेनैव रूपादिवदनुमानम् । न चैवं तोयादौ प्रसङ्गः । तज्जा-

न्यायलीलावतीप्रकाशः

पक्षेतरत्वात् । न च साधनावच्छिन्नसाध्यव्यापको रूपवदिन्द्रियग्रा-ह्यगुणत्वव्याप्यजातिमत्त्वमुपाधिस्तुल्ययोगक्षेमत्वात् । न च सन्दि-ग्धोपाधिः, उक्तविपक्षबाधकाद्धेतोः साध्यव्याप्यत्वेनोपाधेः साध्या-व्यापकत्वात् । यद्यपि पाकजस्पर्शो नेतरभेदसाधकः अवयविनि भागासिद्धेः, तथापि पाकजत्वमग्निसंयोगासमवायिकारणकवृत्तिगु-णत्वव्याप्यव्याप्यजातिमत्त्वं तथेति संक्षेपः ।

सा चेयं यदि परमाणुरूपैव स्यात् गन्धोऽतीन्द्रियस्वान्न पृथिवी-

न्यायलीलावतीप्रकाशविवृतिः

त्रसरेणुविभागे व्यभिचार इति ध्येयम् । पक्षेतरत्वादिति । यद्यपि स्प-र्शत्वादेरपि व्यावर्त्तनादिदमयुक्तं न च साधनावच्छिन्नमध्ये पक्षमा-त्रव्यावर्त्तकत्वं तथाविधस्यानुपाधित्वे वायुप्रत्यक्षानुमाने रूपवत्त्व-स्यानुपाधितापत्तेस्तथापि साध्यव्यापकताग्राहकमानाभावे तात्प-र्यम् । न चेति । तेजोवयविनि साध्याव्याप्तेराह--साधनावच्छिन्नेत्यादि । साधनव्यापकतापरिहाराय रूपवदित्यादि । सत्तामादाय मास्तु स दोष इति गुणत्वव्याप्येति । रूपभिन्नगुणत्वादिकमादाय तद्दोषवार-णाय जातीति । उक्तेति । सौकुमार्यप्रत्ययानुपपत्त्यादेरित्यर्थः । तथा-पीति । गुणत्वमादाय संख्यादावतिव्याप्तिरिति गुणत्वव्याप्यपदम् । स्पर्शत्वमादाय जलस्पर्शेऽतिव्याप्तिरिति द्वितीयव्याप्यपदम् । यद्य-प्येवमप्यनुष्णाशीतत्वमादाय वायुस्पर्शे शुक्लत्वमादाय जलरूपे चा-तिव्याप्तिस्तथापि गुणत्वपदेन स्पर्शत्वमेवोक्तमत एव संयोगशब्द-योरपि नातिव्याप्तिः । मिश्रास्तु गुणत्वपदेन प्रतिनियतेन्द्रियग्राह्यता-वच्छेदकजातिरेवोक्ता शब्दातिव्याप्तिवारणाय च मूर्त्तमात्रवृत्तित्वं संयोगविशेषणमिति वदन्ति । परमाणुस्पर्शवायुस्पर्शान्यतरत्वमादा-यातिव्याप्तिरिति जातीति । उक्तजातिमत्त्वं स्पर्शे पाकजत्वं तद्वत्त्व-मितरभेदे हेतुरिति मन्तव्यम् । अणुमनोऽस्वीकारपक्षे अणुमात्रवृत्ति-

न्यायलीलावतीकण्ठाभरणम्

पृथिवीस्पर्शः अग्निसंयोगासमवायिकारणकगुणवृत्तिगुणत्वव्याप्य-जातिमान् प्रतिनियतेन्द्रियग्राह्यपृथिवीगुणत्वात् गन्धवत् । अन्यथा

तीये क्वचिदपि विशेषाप्रतीतेः। तस्मादेभिरेव लक्षणैः पृथिवीतरेभ्यो भिद्यते इति सर्वं रमणीयम्।

सा चेयमवयवजन्या न त्वणुसंहतिमात्रम्। स्थूलप्रत्ययस्य

---

न्यायलीलावतीकण्ठाभरणम्

पिठरे पाकजस्पर्शाभावात् भागासिद्धिः स्यादिति भावः। एभिरिति। पृथिवीत्वगन्धवत्त्वपाकजस्पर्शवत्त्वादिभिरित्यर्थः।

सा चेयं द्विविधेति भाष्ये पृथिवीविभाग उक्तस्तमवयविनि परविप्रतिपत्तिं निरस्य समन्वयति—सा चेयमिति। परमाणुमात्ररूपत्वे गन्धादीनामतीन्द्रियत्वात् न पृथिवीत्वव्यवस्थापकत्वं स्यादित्युपोद्घात इत्यप्याहुः। तथा च स्थूलत्वेन भासमाना पृथिवी द्रव्यसमवेता न तु परमाणुपुञ्जरूपेत्यर्थः। परमाणुः स्वभिन्नोपादेयोपादानं न वा स्पर्शवत्त्वमणुत्वव्याप्यं न वेति विचारारम्भकः संशयः। इदं स्थूलमिति प्रत्यक्षमेवावयविनि प्रमाणमित्याह—स्थूलेति। स्थौल्यं च परिमाणविशेषः प्रती·

न्यायलीलावतीप्रकाशः

त्वव्यवस्थापक इत्यौपोद्घातिकसङ्गत्याह—सा चेयमिति। यद्यप्यवयवत्वं द्रव्यसमवायिकारणत्वं सज्जन्यत्वं परेषां परमाणुजन्यपरमाणावस्त्येवेति विवादाभावः। न चावयवसमवेतत्वं तत्र, सर्वपृथिवीपक्षीकरणे परमाणौ तदभावात्। तथाप्यवयविवृत्तिजातिमत्त्वं तद्विवक्षितम्। न त्विति। न मनोवदणुमात्रवृत्तिजातिमतीत्यर्थः। अत्र द्रव्यत्वमणुत्वव्याप्यं न वा परमाणुः स्वभिन्नोपादेयोपादानं न वेति

न्यायलीलावतीप्रकाशविवृतिः

जातिमत्त्वमप्रसिद्धमित्यन्यथा तामाह—अत्रेति। [(१)तदभावात्। अवयवसमवेतत्वाभावात्। पार्थिवपरमाणुसमूहः पृथिवी भवत्येवेत्यत आह—न मनोवदिति।] विधिप्रसिद्धिरणुवृत्तिरूपे निषेधप्रसिद्धिस्तु गुणवृत्तिधर्मे। स्वभिन्नेति। स्वपदं पक्षीभूतपरमाणुपरं तद्भिन्नस्य यदुपादेयं तदुपादानमित्यर्थः। परमाण्वन्तरे विधिप्रसिद्धिर्व्यतिरेकप्रसिद्धिस्तु तन्मते [अलीकं मन्मते] गुणादौ। संयोगादेरनभ्युपगमान्न तेन सिद्धसाधनम्।

---

(१) [ ] एतचिह्नमध्यस्थपाठो द्वितीयादर्शपुस्तके नास्ति। तत्पाठस्तु 'मन्तव्य'मित्यनन्तरमेव युक्तः।

परमाणावनुपपत्तौ तदतिरिक्तवस्त्वालम्बनत्वात् । तथा हि अणवो नापरोक्षबुद्धिविषयाः, परमसूक्ष्मत्वादेकाणुवत् ।

---

न्यायलीलावतीकण्ठाभरणम्

तिसाक्षिकः, स चावयविन्येव, न परमाणौ ।

ननु परमाणव एव स्थूलप्रत्ययविषयाः स्युरित्यत आह--तथा हीति । अणवो न योगधर्माजन्यजन्यस्वविषयकसविकल्पकाजन्यजन्यप्रत्यक्षविषया इति साध्यार्थः । परमसूक्ष्मत्वादिति । महत्त्वानधिकरण-

न्यायलीलावतीप्रकाशः

संशयः। स्थूलप्रत्ययस्येति । तदन्याविषयस्येति शेषः(१)। अतो नार्थान्तरम्। अवयविसाधकत्वेन प्रत्यक्षस्यैवोपन्यासात् , अत्रापक्षधर्मत्वस्यानुमानदूषणस्याभावः। स्थौल्यं च नानेकद्रव्यवृत्तित्वं द्व्यणुकेऽतिप्रसङ्गात् ,किं तु बहुद्रव्यवृत्तिद्रव्यत्वम् । अवयवद्वयारब्धेऽपि परम्परया तदस्त्येव । द्रव्यत्वं स्थौल्यसमानाधिकरणं न वेति संशयः। परस्य द्रव्यत्वे तत्प्रसिद्धिः। परमाणौ तदनुपपत्तिमाह--तथा हीति । एकः स्थूलोऽयमिति

न्यायलीलावतीप्रकाशविवृतिः

वस्तुतः स्वभिन्नेत्यनन्तरं द्रव्यपदं पूरणीयमिति भावः । ननु परमाणुविषयकत्वाभावेऽपि नावयविविषयकत्वं गुणादिविषयत्वेनान्यथासिद्धेरित्यत आह—तदन्येति । परमाण्ववयव्यन्याविषयस्येत्यर्थः । तद्विषयकत्वं च तदविशेष्यकत्वमतो न रूपादिविषयकत्वेनासिद्धिः । नार्थान्तरमिति । गुणादिविषयतया नान्यथासिद्धिरित्यर्थः । सा चेत्यादि साध्ये स्थूलेत्यादिहेतोर्वैयधिकरण्यमाशङ्क्याह—अवयवीति । 'अभावः' अप्रसङ्गः । किं त्विति । आद्यद्रव्यपदं समवायिपरमतो न द्रव्यपदवैयर्थ्यम् । न वा वृत्तिपदस्याश्रितत्वमात्रार्थकतया कालमादाय द्व्यणुकेऽतिप्रसङ्ग इति भावः । द्रव्यपदं च त्रित्वादावतिप्रसङ्गवारणाय । द्रव्यत्वमिति । स्थौल्यमत्र बहुसमवेतत्वमात्रम् । द्रव्यत्व इति । द्रव्यवत्त्व इत्यर्थः । परस्यावयव्यनभ्युपगमेन यथाश्रुते विरोधात् । केचित्तु सामान्यविप्रतिपत्तेः प्रागेव दर्शितत्वात् प्रकान्तत्वेन स्थूलपृथि-

---

(१) ज्ञानाकारविशेषमेव स्थौल्यप्रत्ययोऽवगाहत इत्यस्त्वित्यत आह—तदन्येति । बाह्यान्येत्यर्थः। नीलत्वादेरिव स्थौल्यस्यापि बाह्याकारत्वेनानुभवादिति भावः। परममहानेव स्थूलप्रत्ययविषयोऽस्तु इत्याशङ्कया कार्यद्रव्यान्याविषयस्येति शेष इति प्राभाकरः । इति दीधितिः ।

विशिष्टोत्पादादैन्द्रियकत्वमिति चेन्न, तदनभिधानात्। तथा हि* किं चक्षुरादिभिः सहोत्पादो विशिष्टोत्पादः, उत तद्दर्शनजनकतयोत्पादः, अथ तद्दर्शनविषययोग्यतयोत्पादः। नाद्यौ। चक्षुरादिवदणूनां प्रतिभासविरोधात्। दृश्यता तु महत्त्वं वा अव-

न्यायलीलावतीकण्ठाभरणम्

द्रव्यत्वादित्यर्थः। विशिष्टोत्पादविरहमत्रोपाधिमाह--विशिष्टेति। प्रत्येककारणैश्चक्षुरादिभिरेकस्मिन् क्षणे सहोत्पाद इति प्रथमविकल्पार्थः। परमाणुविशेषस्तथोत्पद्यते यथा स्वविषयं प्रत्यक्षं जनयतीति द्वितीयविकल्पार्थः। काचिदेव परमाणुव्यक्तिर्दर्शनायोग्या भवति स्वाभाव्यादिति तृतीयविकल्पार्थः। चक्षुरादिवदिति। सहोत्पादे चक्षुराद्यपि प्रत्यक्षं स्यादित्यर्थः। तृतीये त्वाह—दृश्यतेति। द्रव्यदृश्यताया महत्त्वव्याप्तिरित्युपाधेः साधनव्यापकत्वमित्यर्थः। ननु स्वरूप-

न्यायलीलावतीप्रकाशः

प्रत्यक्षं न परमाणुविषयं प्रत्यक्षत्वादात्मप्रत्यक्षवदिति साधनार्थः। अतो न परमाणुमात्रपक्षत्वेंऽशतः सिद्धसाधनम्। नन्वेकस्य परमाणोरप्रत्यक्षत्वेपि तत्समूहः प्रत्यक्षः स्यात्, दूरे एकधान्याप्रत्यक्षत्वेऽपि तद्राशेः प्रत्यक्षवत्। न। तत्रैकधान्यस्य स्वरूपयोग्यत्वात्। उक्तसाधने विपक्षे बाधकाभावात् न व्याप्तिरित्यभिप्रेत्याह—विशिष्टेति। 'तदनभिधानात्' विशिष्टस्य निर्वक्तुमशक्यत्वादित्यर्थः। तृतीयं कल्पं दूषयति—दृश्यता त्विति। ननु तव अदृश्यविशेषद्व्यणुकस्य दृश्यजनकत्ववत् मम चादृश्यनिर्विकल्पकात्मकसमनन्तरप्रत्ययस्यैव दृश्यसविकल्पकजनकत्ववददृश्यविशेषस्यैव दृश्यविशेषजनकत्वमस्तु

न्यायलीलावतीप्रकाशविवृतिः

वसाधनार्थमयमारम्भ इति विप्रतिपत्तौ द्रव्यत्वपदं द्रव्यवृत्तिपृथिवीत्वपरमतो जलाद्यवयविसिद्धिदशायां(१) द्रव्यत्वे प्रसिद्धिरतो यथाश्रुत एव ग्रन्थ इत्याहुः। प्रत्यक्षत्वादिति। लौकिकसाक्षात्कारत्वादित्यर्थः। न च व्यावर्त्याप्रसिद्धिस्तन्मते प्रसाध्याङ्गत्वादिति भावः। नन्विति।

* आरोपविषयस्यायोग्यत्वादैन्द्रियक आरोपोऽपि न सम्भवतीत्याह—तथा हीत्यादि। इति दीधितिः।

(१) जलाद्याकारसिद्धिदशायामित्यपि पाठः।

यवित्वं वाऽणूनां न सम्भवति। स्वरूपभेदस्तु अदृश्यरूपसन्ततौ यदि नयनादिसाहित्येनोत्पद्यते [तदा] अदृश्येन्द्रियादिसन्ततौ दृश्येन्द्रियक्षणप्रसवप्रसङ्गः। केषाञ्चिदेवादृश्यानां दृश्यजननशक्तिनियमात् न दृश्यजनकत्वं सर्वेषामिति चेन्न, अणुरूपस्य दर्शनविषयताविरोधे स्वरूपविशेषस्यानुपाधित्वात्। धूमस्वभावभेदस्येव दहनजन्यत्वे। तथा च पारमर्षं सूत्रम्—"नातीन्द्रियत्वादणूनामिति"। [गौ०सू०२।१।३६। अस्य सूत्रैकदेशस्य "सेनावनवद्ग्रहणमिति चे" दित्यादिः।] स्थूलावभासानुपपत्तेश्च। ननु किं पूर्वापरादिदेशमवष्टभ्य दृश्यानामेव परमाणूनां सत्त्वं स्थौल्यं एकस्यैव वा तावद्देशव्यापित्वम्। तत्राद्यं तावत्परमाणुषु सम्भवत्येव। द्वितीयस्य तु नास्त्येवावभासो यस्यानुपपत्तिरिति

---

न्यायलीलावतीकण्ठाभरणम्

भेद एव दृश्यताप्रयोजकः स्यादित्यत आह—स्वरूपेति। एवं सति चक्षुरादेरपि कदाचित् प्रत्यक्षं स्यादित्यर्थः। 'क्षणो' व्यक्तिः। सन्तानविशेषे तादृशस्वरूपभेदो न तु सर्वसन्तताविस्यत आह—केषांचिदिति। अणुत्वस्यायोग्यत्वव्याप्यतया निरुपाधित्वेन उत्पादविशेषस्यातन्त्रत्वादित्यर्थः। धूमत्वावच्छेदेनैव वह्निव्याप्यत्वे धूमविशेषस्यानुपाधित्ववत् अन्यथा विशेषस्योपाधित्वे सकलानुमानोच्छेद इत्यर्थः। अणुत्वावच्छेदेनैवातीन्द्रियत्वमित्यत्र सूत्रकृन्मतमाह—तथा चेति। अभ्युपेत्याह—स्थूलेति। परमाणोः प्रत्यक्षत्वेऽपि स्थौल्यं नानुभूयेतेत्यर्थः। दृश्यपरमाणुसमूहस्य नानादेशव्यापित्वं स्थौल्यमनुभूयत एवेति न विरोधः। स्थौल्यान्तरन्तु अनुभवबाधितमिति शङ्कते—नन्विति। बहूनां परमाणूनां स्थौल्यबुद्धिविषयत्वं चेत्तदा एकत्व-

न्यायलीलावतीप्रकाशः

इत्याह—केषांचिदेवेति। परमाणुमात्रस्यातीन्द्रियत्वे स्वरूपविशेषः साध्याव्यापकत्वान्नोपाधिरित्याह—अणुरूपस्येति। उक्तयुक्तिमेव

चेन्न, एक[:?]स्थूल इत्यनुभवात् । एक इति विकल्पमात्रमिति चेन्न, अणूनां यथानुभवं निश्चयविषयत्वे अनेकतानिश्चयप्रसङ्गात् । अयथानुभवं(१) तु निश्चयविषयत्वे सर्वत्र प्रत्यक्षोपप्लवप्रसङ्गात्(२)। दीपशिखासन्ततावेकत्वनिश्चयवत् स्यादिति चेन्न, तत्र वि-

---

न्यायलीलावतीकण्ठाभरणम्

सामानाधिकरण्यं न प्रतीयेतेत्याह—नेति । अनुभवो वस्तुव्यवस्थापकस्तस्यैकप्रमाणत्वात्, विकल्पस्तु वस्त्वननुरोधी न प्रमाणमिति शङ्कते—एक इति । अयं सविकल्पकार्थो निश्चयो निर्विकल्पकानुगतस्तदननुगतो वा । आद्ये निश्चयोऽपि पारमार्थिकानेकत्वविषयः सार्थत्वे त्वेकत्वविषयः । द्वितीये सर्वसविकल्पकानाश्वास एव स्यादित्याह—अणूनामिति । नन्वनेकत्रापि एकत्वधीः प्रदीपसन्ततौ दृष्टा, तद्वदियमपि एकत्वधीः स्यादित्याह—दीपेति। परिमाणभेदेन तत्राश्रयभेदस्थितावेकत्वधीर्विरुद्धधर्माध्यस्तविषयेति सा भ्रान्ता प्रकृते विरुद्धाध्यासो नास्तीति परिहारमाह—नेति । न चैकत्वधीरसत्

न्यायलीलावतीप्रकाशः

युक्त्यन्तराभिधानार्थमवतारयति—स्थूलेति । एक इति । नन्वेकः स्थूल इति ज्ञानमसत्ख्यातिः समूहव्यावृत्तस्यैकत्वस्य क्वाप्यसिद्धेः एको धान्यराशिरितिज्ञानवत् त्वयापि भ्रमरूपमेवेदं वाच्यम्, अवयवावयविसमूहस्यानेकत्वात् । अत्राहुः । तव समूहभिन्नज्ञान एव एकत्वमस्तीति नासत्ख्यातिः, बाधकस्य निराकरिष्यमाणत्वात्, मम चावयवावयविसमूहेऽप्येकोऽवयवी स्थूलोऽस्ति न त्वदभिमते परमाणाविति वैषम्यम् । 'यथानुभवं' यथानिर्विकल्पकं 'निश्चयः' सविकल्पकं तस्यैव निर्विकल्पकव्यवस्थापकत्वादित्यर्थः । अनावृतवृत्तिरवयवी यद्यावृतवृत्तिः स्यादनावृतवृत्तिर्न स्यादित्यादयस्तर्का आश्रयासिद्धिविपर्ययापर्यवसानात् दुष्टा इति स्फुटतयोपेक्ष्यान्य-

न्यायलीलावतीप्रकाशविवृतिः

यद्यप्येक इति विकल्पमात्रमित्यग्रेतनमूलपरयमाशङ्का तथापि निर्विकल्पकानपेक्षमेवेदमसत्ख्यातिरूपं शशशृङ्गप्रतीतिवदित्यधुना शङ्काशयः । ज्ञान इत्युपलक्षणमेकपरमाणावित्यपि द्रष्टव्यम् । एकत्वप्रसिद्धावपि विशिष्टस्यालीकत्वात् असत्ख्यातित्वं स्यादित्यत

---

(१) ०भवस्तु नि० । (२) प्रसङ्गः।

रुद्धधर्मसंसर्गात् । अत्र तु तद्विरहात् । अत्रा[प्या]वृता[वृत-त्वा] नावृतत्वविरुद्धधर्मसंसर्ग इति चेन्न, अर्धावरणेऽप्यव-यविनोऽनावृतैकरूपत्वात् । अनावृतैकस्वभावत्वे (१) अर्धावृते प्राग्वत् तत्स्थौल्योपलम्भ(२)प्रसङ्ग इति चेन्न, विचारासह-त्वात् । स्थौल्यमवयविरूपं वा तद्धर्मरूपं वा । तत्राद्यं प्रतीयत

न्यायलीलावतीकण्ठाभरणम्

ख्यातिरेव पारमार्थिकस्यैकत्वस्य क्वाप्यभावादिति वाच्यम्, विज्ञान एव एकत्वस्य पारमार्थिकत्वात् । प्रकृते विरुद्धधर्म्माध्यासं शङ्कते—अत्रापीति । अर्द्धावृतस्यैवावयविन आवृतत्वमनावृतत्वं च विरुद्ध-मित्यर्थः । आवृतादवयाविनोऽनावृतोऽन्यस्तद्विरुद्धधर्म्मवत्त्वादित्या-दावाश्रयासिद्धावपि समाध्यन्तरमाह—अर्द्धेति । अवयवी तत्रोपल-भ्यमानत्वादनावृत एवान्यथा इन्द्रियसन्निकर्षविरहे तदुपलम्भ एव न स्यादित्यर्थः । एवं सति अनावरणदशायां यथा स्थौल्यमुपलब्धं तथाप्यावरणदशायामप्युपलभ्येतेत्याह—अनावृतेति । अवयविस्वरूपं यदि स्थौल्यं तदा इष्टापत्तिस्तद्धर्म्मोऽपि यदि परिमाणं तत्रापी-ष्टापत्तिर्महत्त्वविशेषश्चेत्तदा भूयोऽवयवच्छेदेनावयविसन्निकर्षस्य त-द्व्यञ्जकतया तदभावादर्द्धावृतस्य स्थौल्यं नोपलभ्यत इत्याह—स्थौल्यमिति । अर्द्धावृतस्य महत्त्वरूपपरिमाणविशेषोपलम्भमापाद्य

न्यायलीलावतीप्रकाशः

दाह—अर्द्धावरणेऽपीति । अवयविनीन्द्रियसम्बद्धे तत्सम्बन्धविच्छेदक-घनद्रव्याभावादित्यर्थः । अवयविग्रहे यद्यवयवेन्द्रियसन्निकर्षो हेतुः स्यात् तदा परमाणुमात्रानन्तरितस्याप्यवयविनो ग्रहापत्तिरिति

न्यायलीलावतीप्रकाशविवृतिः

आह—बाधकस्येति । अवयविग्रह इति । यद्यपि द्वितीयविकल्पस्योप-क्रान्तत्वादिदमयुक्तं तथाप्यवयविग्रह इत्युपलक्षणं तत्परिमाणग्रहे इ-त्यपि द्रष्टव्यम् । यद्यप्यर्द्धावृतेऽपि भूयोऽवयवेन्द्रियसन्निकर्षोऽस्त्ये-वान्यथा तत्रावयविग्रहोऽपि न स्यात् तथापि परिमाणग्रहे तद्वृत्ति-सामान्यग्रहे वा यावदवयवसन्निकर्षो व्यञ्जकस्तदभावात्तदग्रह इत्यत्र तात्पर्यम् । परमाणुमात्रानन्तरितस्येति । परमाणुमात्रावच्छेदेनेन्द्रियसम्ब-

(१) ०करूपत्वे अ० । (२) स्थौल्यप्रतीतिप्र० ।

एव । द्वितीयं तु तत्परिमाणं परिमाणसामान्यविशेषो वा अभिव्यञ्जकभूयोऽवयवेन्द्रियसन्निकर्षमोषान्न प्रतीयते, न त्ववयविन आवरणात् । अवयवि[स्व]रूपावभासेऽप्यनावरणादशावदर्धावरणेऽपि द्विहस्तत्रिहस्तत्वादिकं(१) प्रतीयेतेति चेन्न, द्विहस्तावच्छेद्यपरिमाणसमवायो वा तथाविधावयवसमवायो वा । अवयविनो द्विहस्तात्रिहस्तादि (२) धर्मभूतं न धर्मिमात्ररूपम् (३) ।

---

न्यायलीलावतीकण्ठाभरणम्

दीर्घत्वोपलम्भमापादयति पूर्व्वपक्षी—अवयवीति । अत्रापि पूर्व्ववत् समाधिमाह—नेति । वस्तुतो विशिष्टमहत्त्वदीर्घत्वग्रहे तत्रावरकद्रव्यसंयोग एव प्रतिबन्धकस्तेन भूयस्त्वं यावत्त्वं बहुत्वं वेति विक-

न्यायलीलावतीप्रकाशः

भूयस्त्वेन तद्विशेष्यमित्याह—भूयोऽवयवेति । ननु भूयस्त्वं यदि यावत्त्वं तदा व्यवहितकिञ्चिदवयवस्यापि अवयविनो न ग्रहः स्यात् बहुत्वमात्रस्य तत्त्वे नाना स्थाने परमाणुमात्रानन्तरितोऽप्यवयवी गृह्येत । अत्राहुः । तादृशावरकद्रव्यमेव तत्रावयविग्रहप्रतिबन्धकं कारणान्तरविलम्बेन कार्यानुत्पत्तौ कारणत्वस्याप्रत्यूहत्वात् । नन्वनावरणदशावत द्विहस्तत्वादिजातिमत्परिमाणविशिष्टस्यावयविनो ग्रहप्रसङ्ग इत्याह—अवयविरूपेति । पूर्व्वं स्थौल्यपदेन महत्त्वं परिमाणमुक्तमधुना दीर्घत्वमाह—द्विहस्तेति । अवयविग्रहे तत्परिमाणग्रहे च तद्गतजातिविशेषस्य तावदवयवग्रहव्यङ्ग्यतया तदभावादेवाग्रह इत्याह—द्विहस्तेति । नन्ववयवेषु कम्पमानेषु यद्यकम्पोऽवयवी तदा

न्यायलीलावतीप्रकाशविवृतिः

ह्रस्यत्येर्थः । अवयविन इत्युपलक्षणं तत्परिमाणस्य चेत्यपि द्रष्टव्यम् । तादृशेति । यद्यपि सामग्रीवशादेव यत्र नानापरमाण्ववच्छेदेन संयोगस्तत्र प्रतिबन्धकाभावादवयविग्रहापत्तिस्तथापि नानापरमाण्ववच्छेदेन संयोगेन स्थूलावयवावच्छेदेनापि संयोगो विना प्रतिबन्धकमावश्यक इति भावः । वस्तुतः स्थूलावयवावच्छेदेन संयोगे हे-

---

(१) द्विहस्तत्वैकद० । (२) द्विहस्तादिकं ध० । (३) धर्म्मिस्वरूपम् ।

धर्मिप्रतीतावपि च धर्माणामप्रतीतिर्व्यञ्जकाभावादुपपत्स्यते । अस्तु तर्हि सकम्पत्वनिष्कम्पत्वमिति चेन्न, भागभागिनोर्भिन्नसामग्र्यधीनकम्पत्वेन भागानां कम्पित्वेऽपि (१) भागिनो निष्कम्पैकस्वभावत्वात् । चलाचलयोर्युतसिद्धिप्राप्तिरिति चेन्न, भेदो वा युतसिद्धिरसम्बन्धो वा । नाद्यः । इष्टत्वात् । न द्वितीयः । चलाचलत्वेऽपि नित्यसम्बन्धबलेनासम्बन्ध(२)विरोधात् ।

---

न्यायलीलावतीकण्ठाभरणम्

रूपानवकाशः । विरोधान्तरं शङ्कते—अस्त्विति । पाण्यवच्छेदेन शरीरं सकम्पं चरणावच्छेदेन निष्कम्पमनुभूयते तदेकत्वे न स्यात् । न हि कर्माप्यव्याप्यवृत्तीति भावः । तत्र शरीरं निष्कम्पं पाणिमात्रं सकम्पमिति नैकत्र द्वयमिति परिहरति—भागभागिनोरिति । एवं सत्यवयवावयविनौ युतसिद्धौ स्यातामित्याह—चलाचलयोरिति । इष्टत्वादिति । भागभागिनोर्भेदस्य मयाऽभ्युपगमादित्यर्थः । असम्बन्धश्चेदापाद्यते तत्र नित्यसम्बन्धविरह उपाधिरित्याह—चलाचलत्वेऽपीति । स्थाणुश्येनयोश्चलाचलयोरसम्बन्धो

न्यायलीलावतीप्रकाशः

किञ्चिदवयवावच्छेदेन तत्र कम्पो नोपलभ्येत । अथ स कम्पते तदा प्रदेशान्तरोऽपि अकम्पो नोपलभ्येतेति अकम्पोऽपि स्वीकर्त्तव्य इति विरोध इत्याह--अस्त्विति । अवयविकम्पस्य सकलावयवकम्पनियतत्वात् क्वचिदवयवकम्पेऽपि अवयवी निष्कम्प एवेत्याह—भागभागिनोरिति । न च संयोगवत्कर्माप्यव्याप्यवृत्ति भवत्विति वाच्यम्, अवयविनि यथोक्तेनैवोपपत्तेः अवयवेषु सकलावच्छेदेनैवोपलम्भात् । ननु वस्त्रोदकवत् चलाचलयोरवयवावयविनोर्युतसिद्ध्यापत्तिरित्याह—चलाचलयोरिति । परस्य गुणगुणिनोरभेदादेव न व्यभिचारः । नित्येति ।

न्यायलीलावतीप्रकाशविवृतिः

तुरित्यत्रैव तात्पर्यम् । प्रतिबन्धकाभावकारणत्वापेक्षयाऽवच्छेदकमात्रकल्पनायां लाघवादिति । द्विहस्तेतिफक्किकालिखनानन्तरमवयविरूपेतिफक्किकाधारणं लिपिप्रमादात् । तटस्थः शङ्कते—न च संयोगेति । अवयविनीति । व्याप्यवृत्तिजातीयताविरोधादिति भावः ।

---

(१) कम्पितत्वेऽपि । (२) ॰न्धबलेनैवासम्बन्धिवि॰ ।

अनित्यसम्बन्ध एव युतसिद्धिरिति चेन्न, चलाचलत्वस्य तेन प्रतिबन्धाभावात्। अत्र हि तेन व्यभिचारानुपलम्भो वा प्रतिबन्धनिश्चयहेतु (१) र्व्यभिचारे बाधकं वा । नाद्यः। भौमत्वस्य लौह (२) पाश्यत्वेनैव व्यक्त्यन्तरे व्यभिचारानुपलम्भेऽपि (३) तच्छङ्कया नियमनिश्चयहेतुत्वाभावात्। नेतरः। तदसिद्धेः। अन्यथा चलाचलयोर्वस्त्रोदकवन्न भागभागिकल्पना-

न्यायलीलावतीकण्ठाभरणम्

नास्तीति व्यभिचारोऽपीति भावः। परमतेनैव उपपादयति—अनित्येति। यदि अवयवावयविनौ चलाचलौ स्यातां तदा अनित्यसम्बन्धवन्तौ स्यातां श्येनस्थाणुवदित्यर्थः। अत्र गुणगुणिभेदसिद्धौ तत्र व्यभिचार इत्याह—नेति। द्रव्यत्वेन विशेषणेऽपि मार्त्तण्डभूमण्डलाभ्यां व्यभिचार इति भावः। अनित्यसम्बन्धयोग्यता चेदापाद्या तत्राह—अत्र हीति। चलाचलयोरनित्यसम्बन्धयोग्यतापि यदि व्यभिचारानुपलम्भान्निश्चीयते तदा पार्थिवत्वलोहलेख्यत्वयोरपि तन्निश्चयः स्यादित्याह—भौमेति। व्यभिचारानुपलम्भस्य नियमनिश्चयहेतुत्वाभावादित्यर्थः। तदसिद्धेरिति। विपक्षबाधकतर्कासिद्धेरित्यर्थः। यदि सहचारदर्शनमात्राद्व्याप्तिनिश्चयस्तत्राह—अन्यथेति। त्व-

न्यायलीलावतीप्रकाशः

यद्यपि बाधस्तर्केऽननुगुण एव तथापि विद्यमानयोरसम्बन्धो साध्ये नित्यसम्बन्धाभाव उपाधिरित्युक्तं भवति। वस्तुतो गुणगुणिभेदसिद्धौ रूपादौ व्यभिचार इति भावः। अनित्येति। यद्यपि अनित्यसम्बन्धो बौद्धस्य स्वतोऽसिद्धस्तथापि पराभिमतनित्यसम्बन्धाभाव एव तेनाप्यापाद्यते तेन पूर्वोक्तोपाधौ साधनव्यापकत्वमुक्तं भवति। न चावयवी न निष्कम्पः संयोगविभागयोरेव कम्पत्वात् तयोश्च तत्र प्रत्यक्ष-

न्यायलीलावतीप्रकाशविवृतिः

तथापीति। इदमुपलक्षणं तर्कमूलव्याप्तिविरोधितया प्रकृते बाधोऽपि विगुण एवेत्यपि द्रष्टव्यम्। ननु नित्यसम्बन्धोऽपि परस्याप्रसिद्ध एवेत्यत आह—पराभिमतेति। तथा चासत्ख्यात्युपनीत एव

(१) यद्धेतुर्वा व्य०। (२) लोहपा०। (३) ०रानिश्चयेऽपि।

गोचरत्वमपि स्यात्। आक्रान्तदेशविभागेऽपरदेशावष्टम्भः कम्पो भागिनि प्रत्यक्षसिद्धः, पाणौ भागान्तरे [तु]नैवमिति चेन्न, [अत्र?] आक्रान्तदेशभेदेनैव केनचिदसंयोगेऽपि केनचित् संयोगोपपत्तेः (१)। अस्तु तर्हि महारजनसंयोगासंयोगौ विरोध इति चेन्न, विकल्पानुपपत्तेः। किं यस्य संयोगसमवायित्वं तस्य तदभावसमवायित्वं विरुध्यते, अथ यस्य संयोगजनकत्वं तस्याभाव(२)-जनकत्वं, उतैकस्य संयोगतदभावावच्छेदकत्वं, उभयावच्छे-

---

न्यायलीलावतीकण्ठाभरणम्

न्मते चलाचलत्वाद्दुग्धोदकयोर्नावयवावयविभावकल्पनेति तन्तुपटयोरपि तथा स्यात्तथा च सहचारदर्शनमप्रयोजकमिति भावः। ननु कम्पो न संयोगविभागाभ्यामन्यस्तौ चलाचलौ पाण्यवच्छिन्ने भागिन्यनुभूयेते न तु भागान्तरावच्छिन्ने भागिनि चरणाद्यवच्छिन्ने शरीर इत्याह—आक्रान्तेति। संयुक्तदेशविभागे सतीत्यर्थः। संयोगविभागौ त्वया नाभ्युपगम्येते एव, तदभ्युपगमेऽपि न विरोधो देशावच्छेदभेदेनैव एकस्य तदुभयोपपत्तेरित्याह—अत्रेति। रक्तारक्तविरोधस्त्वया महारजनसंयोगासंयोगाभ्यां समाधेयस्तथा च स एव दुःसमाधेयो न ह्येकस्यैव पटस्य महारजनेन सह संयोगस्तदभावश्च सम्भवतीत्याह—अस्तु तर्हीति। एवं संयोगतदभावयोः समवायि न भवति तदुभयजनकं वा न भवति तदुभयावच्छेदकं वा न भवति तदुभ-

न्यायलीलावतीप्रकाशः

त्वादित्याह—आक्रान्तेति। 'पाणौ' पाणिस्थे। 'भागान्तरे' भागान्तरस्थे भागिनीत्यर्थः। आक्रान्तदेशभूतलादिभेदेन एकस्मिन् केनचित्संयोगेऽपि केनचित्तदभावो न विरुद्ध इत्याह—आक्रान्तदेशभेदेनेति। एकत्र संयोगतदभावयोश्चाविरोधं वक्ष्याम इति भावः। विरोध इति। विरुध्य-

न्यायलीलावतीप्रकाशविवृतिः

प्रतियोगीति हलथम्। एकत्रेति। एकप्रतियोगिकयोरपीत्यध्याहार्यम्। एवं चैकप्रतियोगिकयोरेव चेन्न विरोधस्तदा सुतरां भिन्नप्रतियोगिकयोरिति भावः। संयोगतदभावाद्यंशे सिद्धसाधनमत आह—

---

(१) केनचित् संयोगेऽपि केनचिदस०। (२) तस्य तदभावज०।

द्यत्वं वा। नाद्यौ। असिद्धेः। न तृतीयः। महारजनस्यैक-स्योभयावच्छेदकत्वात्। न तुरीयः। ज्ञानस्यैवोभयावच्छेद्य-त्वात्। किञ्चिदेव केनचिन्निरूप्यते स्वरूपनियमादिति चेत्तु-ल्यम्। (यदि) भावाभावावेकेनैव निरूप्येते सर्वेषामेव भावा-भावानामेकदेशनिरूप्यत्वं भवेदिति चेन्न, भावाभाववैचित्र्या-

---

न्यायलीलावतीकण्ठाभरणम्

यावच्छेद्यं वा न भवतीति विकल्पार्थः। नाद्याविति। संयोगात्यन्ता-भावस्य समवेतत्वजन्यत्वयोरनभ्युपगमात्। महारजनस्येति। महारजनं हि संयोगं साक्षादवच्छिनत्ति संयोगद्वारा च तदभावमपीत्यर्थः। संयोगतदभावाविहेति समूहालम्बनज्ञानमुभयावच्छेद्यमेवेत्याह—ज्ञानस्येति। ज्ञानं विषयी धर्मः, स च उभाभ्यां विरुद्धाभ्यामप्यव-च्छेत्तुं शक्यः, न त्वेकः पटो महारजनतत्संयोगाभ्यामित्याह—किंचिदेवेति। अनुभवो ह्यत्र नियामकः, स च यथा ज्ञाने तथा संयो-गतदभाववद्धर्मिण्यपि पटादावित्याह—तुल्यमिति। संयोगस्य स्वा-भावसामानाधिकरण्यं तथा रूपरसादेरपि स्यादिति शङ्कते—सर्वेषा-मिति। न ह्येकं वस्तु यथा तथाऽन्यदपीति नियमस्तथा सति जगद्वै-चित्र्यमुच्छिद्येतेत्याह—नेति।

न्यायलीलावतीप्रकाशः

तेऽनेनेति विरोधो विरुद्धधर्माध्यासः। 'अवच्छेदकत्वं' विशेषणत्वम्। 'उभयं' संयोगस्तदभावश्च। 'अवच्छेद्यत्वं' विशेष्यत्वम्। असिद्धेरिति। अ-भावस्य समवायनिषेधात् संयोगात्यन्ताभावस्याजन्यत्वादित्यर्थः। ज्ञानस्येति। संयोगतदभावविषयस्येत्यर्थः। भवतु ज्ञानस्योभयनिरूप्य-त्वं न त्वर्थान्तरस्येत्याह—किञ्चिदेवेति। तुल्यमिति। दर्शनस्योभयत्राविशे-षादित्यर्थः। एकेनेति। आश्रयेणेत्यर्थः। कुतो विशेषात संयोगात्यन्ता-भावः प्रतियोगिसमानाश्रयो न रूपाद्यत्यन्ताभाव इत्याह—सर्वेषामिति। रूपाद्यभावानामित्यर्थः। अभावत्वाविशेषेऽपि यथा कश्चिदन्योन्याभावः कश्चित्संसर्गाभावः, तथा प्रतियोगिभेदादेवात्रापि व्यवस्थेत्याह—वैचित्र्यादिति।

न्यायलीलावतीप्रकाशविवृतिः

रूपाद्यभावानामिति। रूपादितदभावानामित्यर्थः। गङ्गाजलादौ शुक्ल-

द्विति मूकीभव । (इति) पृथिवी ।

शुक्लमेव रूपमपामिति न सङ्गच्छते, नीलिमादेरप्युपलम्भात् । औपाधिकं तच्चन्द्रमसीव शैत्यमिति चेन्न, बाधकाभावात् । अन्यथा धर्मधर्मिव्यवहारविरहापत्तेः । वियति विक्षिप्तानामेव कालिन्दीजलानां धवलिमप्रतीतिर्बाधिका इति चेन्न, तत्रापि तेजस एव धवलिम्न उपाधिभावसम्भवात् ।

---

न्यायलीलावतीकण्ठाभरणम्

भाष्यकारीयोद्देशक्रमानुरोधेन पृथिवीं निरूप्य जलं निरूपयति–शुक्लमेवेति । अभास्वरशुक्लमात्ररूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमपीतरभेदसाधकमित्यर्थः । नीलिमादेरिति । कालिन्दीजलादाविति शेषः । औपाधिकमिति । पार्थिवौपाधिकमित्यर्थः । श्वैत्यं वास्तवं नैल्यमौपाधिकमिति न विनिगमकमित्याह—बाधकाभावादिति । नियामकमन्तरेणापि तदौपाधिकत्वं वाच्यं तत्राह—अन्यथेति । भूमिष्ठमेव जलं नीलमनुभूयते न त्वाकाशस्थमपीत्युपाधिरेव स्फुट इत्याह—वियतीति । वियन्निष्ठजलश्वैत्यमेवौपाधिकं स्यात् तत्रापि तेजस उपाधेः सम्भवादित्याह—नेति । यद्यपि अन्यगततया भासमानधर्माश्रय उपाधिर्जवाकुसुमादिस्तथाप्यत्र धर्म्म एवोपाधिरुक्तः ।

न्यायलीलावतीप्रकाशः

नीलिमादेरिति । कालिन्दीजलादाविति शेषः । औपाधिकमिति । संसृष्टपृथिवीश्यामत्वौपाधिकमित्यर्थः । चन्द्रमसीवेति । यद्यपि(१) चन्द्रकराणामनुद्भूतस्पर्शतया शैत्यं नानुभूयते तथाप्यागमाच्चन्द्रमण्डले शैत्यं प्रतीयत इति भावः । तेजस इति । यद्यपि यद्धर्मोऽन्य-

न्यायलीलावतीप्रकाशविवृतिः

स्यैवोपलम्भादाह—कालिन्दीति । संसृष्टेति । मूलानुसारितया श्यामतोपाधिरुक्ता वस्तुतो पृथिव्येवोपाधिरिति ध्येयम् । एकत्र कारणाभि-

---

(१) असन्निकृष्टे चन्द्रमसि शैत्यप्रत्यक्षासम्भवेनापि प्रभाणां शैत्येन शैत्यमनुमातव्यम्, प्रभावतः प्रभासजातीयस्पर्शवत्त्वात् । चन्द्रमःपदं वा चन्द्रप्रभापरं वाच्यम् । क्वचिच्च मूले चन्द्रमहसीत्येवं पाठः । तत्राह—यद्यपीति । इति दीधितिः । नयनेन प्रकारान्तरेण वोपस्थिते किरणे त्वचा शैत्यारोपो वायाविवेत्यपि वदन्ति ।

नीलिमापि तर्हि प्रतीयेत, घटादाविव तेजोमध्यवर्तिनीति चेन्न, पित्ताभिभूततेजसः श्वैत्यवन्नीलिम्नोऽप्यप्रतीतेरुपपत्तेः । स्फटिकादिवद्वा ।

नापि मधुर एव रसो, नियामकाभावात् । तिक्ता-

न्यायलीलावतीकण्ठाभरणम्

वास्तवश्चेत् नीलिमैव जले तदा सोऽपि वियति प्रतीयते । न हि तेजोरूपेण नीलिम्नोऽभिभवो नीले घटादौ दृश्यते इत्याह--नीलिमापीति । ग्राहकदोषादपि तदा नीलिमोपलभ्यते इति स्यादित्याह--पित्तेति । यथा पित्ताभिभूतनायनतेजसा पुरुषेण तेजःश्वैत्यं वास्तवमपि नोपलभ्यते, तथा नीलिमापि कुतश्चित् करणदोषान्नोपलभ्यत इत्यर्थः । ग्राहकदोषमभिधाय ग्राह्यगतमाह—स्फटिकादीति ।

अपां मधुर एव रस इत्याक्षिपति—नापीति । नियामकेति । मधुरं जलमिति लौकिकप्रतीत्यभावादित्यर्थः । ननु रसवत्त्वे सति तिक्तादिसत्तयाऽनुपलभ्यमानत्वादेव माधुर्यं स्यादित्याह—तिक्तादीति । तर्हि वैपरीत्ये

न्यायलीलावतीप्रकाशः

निष्ठतयाऽवभासते स उपाधिः, यथा जपाकुसुमं स्फटिक इति तेज एवोपाधिः, तथापि योऽन्यधर्मोऽन्यगतत्वेन भासते स उपाधिरिति मतमाश्रित्य धवलिमैवोपाधिरुक्तः । घटादाविति । नीलिमवतीति शेषः । विचित्रस्वभावत्वाद्वस्तूनां क्वचिदनभिभवेऽपि क्वचिदभिभवः(१) स्यादित्याह—पित्तेति । स्फटिकेति । जवाकुसुमसन्निधौ स्फटिकश्वैत्याभिभववत्, अत्रापि नीलिमाभिभव इत्यर्थः । दोषाणां करणगतत्व विषयगतत्वभेदेन प्रकारद्वयमुक्तम् । नियामकेति । जले रसो नानुभूयत एव । यदि च शर्करावन्माधुर्याननुभवेऽपि तिक्तादिवैलक्षण्यान्माधुर्यं तदा शर्करामाधुर्यवैधर्म्यात्तिक्तत्वमेव रसस्य किं न स्यादित्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

भवादन्यत्र विषयाभिभवाद् दृष्टान्तदार्ष्टान्तिकवैषम्यादभिभवकाचित्कतामात्रेण दृष्टान्ततेत्याशयेनाह--विचित्रेति । ननु यस्यामेवोल्ब-

(१) "अभिभवश्च नाम मन्दस्य पटीयसो ग्रहणादग्रहण"मिति न्यायवार्त्तिकम् (२।२।१।४) । "अभिभवश्च बलवत्सजातीयसम्बन्ध" इति तत्त्वचिन्तामणौ प्रत्यक्षखण्डम् (७४५ पृ०)

दिविलक्षणवेदनमेव माधुर्यवेदनमिति चेन्न, मधुरत्वा(१)दि-
विपरीत(२)वेदनमेव हि तिक्तादिवेदनमित्यपि तुल्यत्वात् ।
क्वचिदुल्वणतापि स्यादिति चेत् , तुल्यं मधुरतायामपि । षड्-
विपरीतवेदनेऽरसत्वमेव स्यादिति चेन्न, अनुष्णाशीतस्पर्शव-
त्सप्तमेनाप्युपपत्तेः । जम्बीरकरवीररसादावम्लतिक्तवेदनाच्च ।

---

न्यायलीलावतीकण्ठाभरणम्

किमुत्तरमित्याह––मधुरादीति । क्वचिदिति । जलत्वस्य तिक्तरससमानाधि-
करणत्वे स्फुटतरतिक्तरससामानाधिकरण्यं स्यादित्यर्थः । ननु तिक्ता-
दिकं तावन्नोपलभ्यत इत्युभयसिद्धं माधुर्य्यमपि जले यदि न स्यात्तदा
नीरसमेव तत् स्यादित्याह—षडिति । यथा शीतोष्णस्पर्शयोरनुपलम्भे-
ऽपि अनुष्णाशीतस्पर्शवती पृथिवी तथा माधुर्य्यादीनामपि अनुप-
लम्भेऽपि जलं विलक्षणरसवदेव स्यादित्याह––नेति । मधुररसवत्त्वे
तिक्तादिविलक्षणवेदनस्य हेतावसिद्धिमाह––जम्बीरेति । यद्वा क्वचि-
दुल्वणतापि स्यादित्यत्र इष्टापत्तिमाह––जम्बीरेति । यज्जातीयं क्वचित्
यदभाववत्तज्जातीयं सर्व्वमेव यदि तदभाववत्तदा दोषमाह—

न्यायलीलावतीप्रकाशः

क्वचिदिति । जलत्वं यदि तिक्तरससमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्य-
जातिः स्यात् , उल्वण(३)तिक्तरससमानाधिकरणं स्यादित्यर्थः ।
अनुष्णाशीतेति । आतिरेक्यमात्रे दृष्टान्तः, न तु सप्तमत्वेऽपि तात्पर्यम् ।

न्यायलीलावतीप्रकाशविवृतिः

णतिक्तरसस्तस्यामेवोल्वणतिक्तरसवत्त्वमापाद्यं तज्जातीयायां वा ।
आद्येऽसम्भव एव । अन्त्ये सत्तामादाय सिद्धसाधनमत आह––
जलत्वमिति । आत्मत्वे व्यभिचार इति समानाधिकरणान्तम् । तत्रापि
स्वमते जलत्वे व्यभिचार इति तिक्तपदम् । रसपदं स्फुटार्थम् । अनु-
ल्वणतिक्तरसवन्मात्रवृत्तिजातौ व्यभिचार इति साक्षात्पदम् । अनु-
ल्वणतिक्तरसवदात्मान्यतरत्वे व्यभिचार इति जातिपदम् । इदं
चापादनं स्वमतावष्टम्भेनान्यथा तन्मते करवीररसादिवृत्तित्वेनेष्टा-
पत्तेरित्यवधेयम् । आपादकं पूरयति––यदीति । वायौ व्यभिचारान्न

---

(१) मधुरादिवि० । (२) विलक्षणवे० । (३) "स्पष्टं स्फुटमव्यक्तमुल्वण" मित्यमरः ।

स्वाश्रयप्रत्यासत्त्या तदुपलम्भ इति चेत् (१), आप्यत्वे बाधकाभावात् । अन्यत्र तद्विरहेणैवापामुपलम्भादिति चेन्न, पृथिव्या अपि मधुरताया आप्यत्वापत्तेः । अन्यत्र तद्विरहेणैव क्षितेरुपलम्भात् । स्नेहवत् ।

नापि शीत एव स्पर्शः । मध्यन्दिने जलस्यौष्ण्यस्योपलम्भात् । तैजसं तदौष्ण्यमिति चेन्न, रूपाध्यक्षताव्याप्यत्वात्(२) स्पर्शप्रत्यक्षतायाः(३) । वारिस्थतेजोरूपं

---

न्यायलीलावतीकण्ठाभरणम्

पृथिव्या अपीति । स्नेहवदिति । स्नेहविनाकृता घटादिरूपा पृथिवीति यथा घृतादौ स्नेह औपाधिक इत्यर्थः ।

तैजसमिति । अनुद्भूतरूपोद्भूतस्पर्शं वारिस्थं यत्तेजस्तदौपाधिकमित्यर्थः । स्पर्शाध्यक्षताया इति । तेजःस्पर्शाध्यक्षताया इत्यर्थः ।

न्यायलीलावतीप्रकाशः

स्वाश्रयेति । संयुक्ताम्लादिरसाश्रयपार्थिवौपाधिकी तत्प्रतीतिरित्यर्थः । तद्विरहेणेति । अम्लादिव्यतिरेकेणेत्यर्थः । यज्जातीयं यद्व्यतिरेकेणोपलभ्यते तज्जातीयस्य तद्रूपत्वं यद्यौपाधिकं तदायं दोष इत्याह—पृथिव्या अपीति । स्नेहवदिति । तैलादिस्नेहवदित्यर्थः । एतच्च सिद्धान्तमतमाश्रित्योक्तं 'घृतेऽपि दर्शना'दित्यनेनाग्रे स्नेहस्यापि पार्थिवत्वेनाक्षेप्यत्वात् ।

अनुद्भूतरूपोद्भूतस्पर्शं वारिस्थं तेजस्तदीयः स्पर्शो वारिस्थत्वेनानुभूयत इत्याह—तैजसमिति । रूपाध्यक्षत्वेति । एतच्च शीतोष्ण(४)भिन्नस्पर्शस्याभावात् निःस्पर्शो वायुरिति मतमाश्रित्योक्तम् ।

न्यायलीलावतीप्रकाशविवृतिः

मूलोक्तव्याप्तिः सङ्कुचतेऽत आह—एतच्चेति । आदिरिति । प्रथमभाग

---

(१) ति चेन्न, (२) प्यात्वात् ।

(३) स्पर्शाध्यक्षतायाः इत्यपि पाठः । तैजसप्रत्यक्षस्पर्शस्य प्रत्यक्षरूपव्याप्यत्वादित्यर्थः ।

(४) शीतोष्णेति पाकजजातीयस्याप्युपलक्षणम् ।

प्रत्यक्षमिति चेन्न, तिमिरे उष्णोदकचाक्षुषतापत्तेः। तदा कचित्स्वभावतोऽप्युष्णतोपलभ्येतेति चेन्न, कनकादिद्रवत्ववत् नैमित्तिकत्वेनाप्युपपत्तेः। रूपस्य तेजःसंयोगाजन्यत्वे कथं स्पर्शस्येति चेन्न, रूपस्य तादृशत्वे द्रवत्वेऽपि तुल्यत्वात्।

नापि स्वाभाविकं द्रवत्वम्। करकादावभावात्। अस्त्येव त-

---

न्यायलीलावतीकण्ठाभरणम्

उष्मा च न तेज इति भावः। तिमिर इति। उद्भूतरूपस्य तेजसो नयनसहकारित्वसम्भवादित्यर्थः। तदेति। यदि स्वाभाविकमौष्ण्यं जले स्यादित्यर्थः। कनकेति। निमित्ताधीनोत्पत्तिकतया निमित्तकादाचित्कत्वात् स्पर्शोत्पत्तेश्च कादाचित्कत्वमित्यर्थः। ननु यत्र रूपं तेजःसंयोगजन्यं तत्रैव स्पर्शोऽपि तथा, पृथिव्यां तथा दर्शनादिति कथं जलस्य स्पर्शमात्रं तेजःसंयोगजन्यं स्यादित्याह—रूपस्येति। कथं स्पर्शस्येति। तेजःसंयोगजन्यत्वमिति शेषः। तर्हि रूपं सुवर्णे न तेजःसंयोगजन्यमिति द्रवत्वमपि तादृशं न स्यादित्याह—रूपस्येति। करकादा-

न्यायलीलावतीप्रकाशः

यद्वा तैजसत्वेन विशेषणीयम्। तदेति। यदि स्वाभाविकमौष्ण्यमित्यादिः। 'स्वभावतः' तेजःसम्बन्धं विनेत्यर्थः। यथा कनकघृतद्रवत्वं तेजःसम्बन्धं विनाऽनुपपद्यमानमपि स्वाभाविकं तथा जलस्यौष्ण्यमपीत्याह—कनकादीति। स्पर्शपाकजत्वं समानाधिकरणरूपपाकजत्वव्याप्त(१)मित्याह—रूपस्येति। विपक्षे बाधकाभावेन प्रतिबन्दीमाह—रूपस्येति। 'तादृशत्वे' पाकजत्वे। एवं कनकरूपस्यापाकजत्वे द्रवत्वमपि तथा स्यादित्यर्थः। किं च श्रीखण्डेऽपि शीतस्पर्श उपलभ्यते। न चाघृष्टस्यानुष्णाशीतत्वानुभवादपामेव स इति वाच्यम्, जलसंयो-

न्यायलीलावतीप्रकाशविवृतिः

इत्यर्थः। समानाधिकरणेति। अत्र समानाधिकरणपदं स्फुटार्थं व्याप्यपदेनैव तल्लाभात्। यद्वा व्याप्यपदं कालिकव्याप्त्याश्रयपरमिति सामानाधिकरण्यलाभायैतत्पदम्। अपीति। अत इत्यर्थः।

---

(१) पाकजरूपसामानाधिकरण्यव्याप्तमित्यर्थः। पाकजस्पर्शः पाकजरूपव्याप्त इति तु फलितार्थः। इति दीधितिः।

ऽपि परं तत्प्रतिबद्धमिति-चेन्न, घृतादावपि तुल्यत्वात्। तैलेऽपि सत्त्वाच्च। तत्राप्ययमेव द्रवत्वमिति चेन्न, तत्रापूसम्बन्धे(१) तैलस्य दहनप्रतिकूलतापत्तेः। उपष्टम्भकमाहात्म्यान्नैवमिति चेन्न, तप्ततपनीयद्रवत्वेऽपि(२) पार्थिवतापत्तेः। उक्तयुक्तेरेवाग्निसंयोगाविनाश्यतापत्तेः(३)। यद्भूयाद्विरुद्धं तत्तत्कथं तदनुकूलं स्यादिति चेत्तुल्यम्।

नापि स्नेहोऽपामेव घृतेऽपि दर्शनात्। आप्यभागस्य

---

न्यायलीलावतीकण्ठाभरणम्

विति। तथानुपलम्भादिति भावः। घृतादाविति। घृतेऽपि सांसिद्धिकमेव द्रवत्वं काठिन्यदशायान्तु प्रतिबद्धमित्यपि वक्तुं सुकरमित्यर्थः। सांसिद्धिकद्रवत्ववत्त्वस्य जललक्षणस्यातिव्याप्तिमाह—तैलेऽपीति। जलसम्बन्धौपाधिकं तदित्याह—तत्रेति। तैलं यदि जलसम्बद्धं स्यात्तदा तैलादग्निनाशः स्याद्विपरीत्यमेव दृष्टमित्याह—तत्रेति। ननु तैलभागस्य पार्थिवस्यायं महिमा यत् तत्सम्बद्धं जलं न दहनप्रतिबन्धकमित्याह—उपष्टम्भकेति। एवं तर्हि सुवर्णद्रवत्वमपि पार्थिवं स्यादग्निसंयोगानाश्यत्वमपि तस्योपष्टम्भकमाहात्म्यादेव स्यादित्याह—तप्तेति। 'उक्तयुक्ति'रुपष्टम्भकमाहात्म्यम्। उपष्टम्भकसन्निकर्षादपि न दहनप्रतिकूलमेव स्यादित्याह—यदिति। तर्हि द्रवत्वमपि नाग्निसंयोगनाश्यमेव स्यादित्याह—तुल्यमिति।

स्नेहवत्त्वं जललक्षणमाक्षिपति—नापि स्नेह इति। घृतेऽतिव्याप्तिमाह—घृतेऽपीति। घृते स्नेहस्य जलौपाधिकत्वमाह—आप्येति।

न्यायलीलावतीप्रकाशः

गस्यैव शीतस्पर्शोत्पादकत्वे विरोधाभावात्। अन्यथा घर्षकजलापेक्षया घृष्टस्य शीततरत्वानुपपत्तेरिति भावः। तैलेऽपीति। पार्थिवेऽपि तैले स्वाभाविकं द्रवत्वमिति न तल्लक्षणमित्यर्थः। तत्रेति। जलद्रवत्वस्य तथात्वादित्यर्थः। ननु पार्थिवं द्रवत्वमग्निसंयोगनाश्यमिति न तत्तथेत्यत आह—उक्तयुक्तेरिति। उपष्टम्भकमाहात्म्यादित्यर्थः। तुल्यमिति। यदग्निसंयोगनाश्यं तत्कथमग्निसंयोगानाश्यं स्यादिति तपनीयद्रवत्वेऽपि तुल्यमित्यर्थः। आप्यभागस्येति। संयुक्तसमवायात्तत्र

---

(१) तत्राप्यसम्बन्धे। (२) द्रवत्वस्यापि। (३) श्यत्वोपपत्तेः।

स इति चेन्न, द्रवत्वस्यापि तथात्वप्रसङ्गात् । क्षितिपयसो-रभेदे गन्धानुपलम्भो बाधक इति चेन्न, नियतावान्तरजाति-वृत्तित्वेनाप्युपपत्तेः । अभेदः कथमिति चेन्न, भेदप्रतिपादक-

---

न्यायलीलावतीकण्ठाभरणम्

नेति । यदि जलं पृथिव्यभिन्नं स्यात्तदा जलेऽपि गन्ध उपलभ्यते, न चोपलभ्यते तस्माज्जलं न पृथिवीत्याह—क्षितीति । यथा पृथिवीत्वे सत्यपि नैमित्तिकं द्रवत्वं घृतादावेव न घटादौ, तथा पृथिव्यन्तरवि-शेषे चम्पकादावेव गन्धो न जलेऽपीति त्वदुक्ततर्कमूलव्याप्तौ विप-क्षबाधकाभाव इत्याह—नियतेति । ननु गन्धवत्त्वेनाभेदः स्यात् तच्चे-ज्जले त्वया नेष्यते तदा त्वदभिमतस्तयोरभेदो न स्यादित्याह—अभेद इति । भेदप्रतिपादकेति । जलत्वस्यानुगतस्य करकादिसाधारण्याभावात् । स्नेहसमवायिकारणतावच्छेदकत्वस्य घृतादिसाधारण्यात् स्नेहत्व-स्य कार्य्याकार्य्यवृत्तितया कार्य्यतानवच्छेदकत्वात् अनित्यस्नेहत्व-स्य तथात्वेन तत्समवायिकारणतावच्छेदकतया अवयविनि जा-तिसिद्धौ परमाणुः स्वोपादेयवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमानिति

न्यायलीलावतीप्रकाशः

स्नेहोपलब्धिरित्यर्थः । समवाये बाधके सत्येव तथात्वमित्यभिप्रेत्याह—द्रवत्वस्येति । ननु किञ्चिद्भेदसाधनदूषणेऽपि साधनान्तराद्भेदः स्यादित्याह—क्षितीति । यथा पृथिवीविशेषे सौरभं न तन्मात्रे तथा गन्धोऽपि स्यादित्याह—नियतेति । भेदप्रतिपादकेति । जलत्वजातेरप्यभावात् करकासाधारणानुगतमतेरभावात् । न च विलयनदशायां तत्रापि तत्प्रतीतिः, विलीनस्य करकातो द्रव्यान्तरत्वात् । न च शीतस्प-

न्यायलीलावतीप्रकाशविवृतिः

यथा पृथिवीति । यद्यप्येवमपि गन्धनियामकजातिस्वीकारे (१)तेनैवेतर-भेदरक्षा भवत्येव तथापि जलादिभिन्नस्यैव कस्यचिन्निर्गन्धत्वे गन्धनियामकजात्या विभागे आधिक्यं स्यादिति ( त? )या विभागो न( कर ? )रणीयस्तथा सतीदमुक्त(२)मिति ध्येयम् । ननु जलत्वं जातिरेवेतरभेदसाधिकास्तु इत्यत आह--जलत्वेति । तत्रापीति ।

---

(१) 'रे तेनैव विभागे इतरत्वरक्षाभ' । (२) 'तीदमयुक्तमि' ।

मात्राभावादिति मूकीभव । जलमेतन्न पृथिवीति चेन्न, घृतमेतन्न पृथिवीत्यत्रापि तुल्यत्वात् । मैवम् । शुक्लमेव रूपमभास्वरमपां

---

न्यायलीलावतीकण्ठाभरणम्

साधारणी जातिरिति चेन्न, जलपरमाणोः पक्षत्वे तत्र जलत्वस्यैवाभावात् । परमाणुमात्रपक्षत्वे मनसि भागबाधात् । स्नेहवन्मात्रवृत्तिसंयोगासमवायिकारणता च स्पर्शवन्मात्रवृत्तिसंयोगासमवायिकारणतावदतिप्रसक्ता । अन्यथा चतुष्टयसाधारणी एका जातिः स्यादिति भावः । शुक्लमेवेति । औष्ण्यासमानाधिकरणशुक्लमात्ररूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं नीलासमानाधिकरणभास्वरशुक्लरूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं वा जलत्वमित्यर्थः तथा च स्फटिकादावतिव्याप्तिः । कालिन्दीजलादौ नैल्यमेव

न्यायलीलावतीप्रकाशः

शीत तत्र जलत्वानुमानं सांसिद्धिकद्रवत्वाभावेन तत्प्रतिरोधात । नापि(१) स्नेहसमवायिकारणत्वावच्छेदकत्वाज्जलावयविनि तत्सिद्धौ जलपरमाणौ स्वोपादेयवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमनुमेयं स्नेहत्वस्य कार्याकार्यवृत्तितया कार्यतानवच्छेदकत्वात् । नापि स्नेहवन्मात्रवृत्तिसंयोगसमवायिकारणतया तत्सिद्धिः, स्पर्शवन्मात्रवृत्तिसंयोगसमवायिकारणतयापि जात्यापत्तेरिति भावः । शुक्लमेवेति । न च स्फटिकेऽतिव्याप्तिः(२) अपाकजत्वेन विशेषणेऽपि पार्थिवावयविनि व्यभिचार इति वाच्यम्, अभास्वरशुक्लरूपभिन्नरूपसमानाधिकरणद्रव्यत्वव्याप्यजात्यनाधारत्वे सति रूपवत्त्वस्य विवक्षित-

न्यायलीलावतीप्रकाशविवृतिः

करकायामपीत्यर्थः । स्नेहत्वस्येति । न चानित्यस्नेहत्वं तथास्त्विति वाच्यम्, एवमपि परमाणुसाधारण्यायास्तस्या असिद्धेः तस्य नित्यत्व योग (ग्य ?) त्वे फलोपधानावश्यम्भावापत्तेरिति भावः । अभास्वरेति । तेजस्यतिव्याप्तिवारणाय प्रथमविशेषणम् । पृथिव्याम-

---

(१) परमाणुवृत्तित्वं निराकरोति—नापीत्यादिना । आरम्भकत्वादनुमेयम् । वस्तुतः क्षितिपयसोर्भेदासिद्धौ घृतत्वादेरिव जलत्वस्यापि न द्रव्यत्वसाक्षाद्व्याप्यत्वसिद्धिः । अतएव प्रत्यक्षस्य जलत्वस्य जन्यवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वेन न परमाणुवृत्तित्वानुमानमिति ध्येयम् । इति दीधितिः ।

(२) स्फटिकपरमाणावतिव्याप्तिः । इत्यपि पाठः ।

लक्षणमिति। न च तेजसा नीलिमाभिभवः। घटादावभावात्। न च स्वाच्छ्ययोगात् स्फटिकवदिति वाच्यम्, इन्द्रनीलादावभावात्। रसोऽपि मधुर एव। काषाय(१)द्रव्येण जलमाधुर्यस्योपलम्भा-

---

न्यायलीलावतीकण्ठाभरणम्

प्राकृतं रूपं तच्च वियति विक्षिप्ततेजोरूपाभिभूतमिति यत् परेणोक्तं तत् दूषयति—न चेति। एवं सति घटनैल्यमपि तेजोरूपेणाभिभूयेतेत्यर्थः। स्वच्छस्यैव द्रव्यस्य तेजोरूपेण रूपमभिभूयते न तु घटादेरपीति शङ्कते—न चेति। इन्द्रनीलेति। सूर्यालोकानभिभाव्यतायामस्वच्छत्वमुपाधिरिन्द्रनीलरूपे साध्याव्यापक इत्यर्थः। एवं च प्रदीपप्रभयोत्पलनैल्याभि ऽपि न दोषः। रसोऽपीति। तिक्तरसासमानाधिकरणमधुररस-

न्यायलीलावतीप्रकाशः

त्वात्। व्योमक्षिप्तकालिन्दीजलनीलिम्नस्तेजोरूपेणाभिभव इति दूषयति—न चेति। अत्र सूर्यालोकेन नीलरूपं नाभिभूयत इति विशिष्य व्याप्तिः, प्रदीपप्रभया नीलोत्पलनीलिम्नोऽभिभवात्सामान्यतो व्यभिचारात्। न च विशेषव्याप्तावप्यस्वच्छत्वमुपाधिः साध्याव्यापकत्वादित्याह—न चेति। रसोऽपीति। न च शर्करायां व्यभिचारः अपाकजत्वेन पूर्ववद्विशेषणत्वादिति वाच्यम्, मधुररसभिन्नरसस-

न्यायलीलावतीप्रकाशविवृतिः

तिव्याप्तिवारणाय शुक्लेति। रसादिकमादाय जलेऽसम्भववारणाय भिन्नपदोत्तररूपपदम्। द्रव्यत्वमादाय तद्वारणाय द्रव्यत्वव्याप्येति। पृथिवीजलान्यतरत्वमादाय तद्वारणाय जातीति। प्रदीपेति। न च प्रदीपस्याव्यञ्जकत्वमात्रं न त्वभिभावकत्वं 'प्रदीपैर्व्यज्यते जातिर्न तु नीरजनीलिमे'त्यभिधानादिति वाच्यम्, तथा सति दीपालोकमध्यवर्त्तिनीरजनीलिम्नश्चन्द्रालोकेन प्रकाशापत्तेः। अनभिभूतस्यैवाभिभावकत्वमतो न प्रदीपसन्निधाने दिवापि तदनुपलम्भ(२)इति भावः। साध्याव्यापकत्वादिति। सूर्यालोकानभिभाव्यत्वलक्षणसाध्यस्येन्द्रनीलवृत्तिरूपे सत्त्वादुपाधेश्चासत्त्वादित्यर्थः। पूर्ववदिति। तद्विशेषणेऽपि पार्थिवावयविनि व्यभिचारादित्यर्थः। मधुरेति। जलत्वमा-

---

(१) कषायद्र०। (२) तदनुपलम्भ इ०।

त् । तथा हि स्नातकस्य हरीतकीरसस्वादानन्तरं(१)वाराणसी-परिसरे कमण्डलुपरिस्खलदमलजाह्नवीजल(२)विमलधारासु म-

---

न्यायलीलावतीकण्ठाभरणम्

समानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वमित्यर्थः । स्वरूपासिद्धिमाशङ्क्याह—कषायेति । नन्वेवं रसनमाप्यं रूपादिषु मध्ये रसस्यैव व्यञ्जकत्वात् सक्तुरसाभिव्यञ्जकजलवदित्यनुमानं कषायद्रव्येण व्यभिचारात् भज्येत। न च स्वीयरूपव्यञ्जकत्वान्न व्यभिचार इति वाच्यम्, तथा च दृष्टान्ते साध्यवैकल्यापत्तिः। मैवं पार्थिवरसाभिव्यञ्जकत्वस्य हेतुविशेषणत्वेनाभिमतत्वात्। न च कषायद्रव्यं पार्थिवं रसमभिव्यनक्तीति न तेन व्यभिचारः। न च कर्कटीभक्षणानन्तरं जलं तैक्त्यमु-

न्यायलीलावतीप्रकाशः

मानाधिकरणद्रव्यत्वव्याप्यजात्यनाधारत्वे सति रसवत्त्वस्य विवक्षणात् । योग्यानुपलब्धिबाधं निरस्यति—कषायेति । नन्वेवं रूपाद्यव्यञ्जकत्वे सति रसव्यञ्जकत्वं रसनाप्यत्वसाधकं कषायद्रव्य एव व्यभिचरेत् । न च स्वीयरूपव्यञ्जकत्वात्तत्र हेत्वभावः, सक्तुरसाभिव्यञ्जकोदकस्यापि स्वीयरूपव्यञ्जकत्वाद् दृष्टान्तस्य साधनवैकल्यापत्तेः । पररूपाव्यञ्जकत्वं तत्रापि समानम् । न च कषायद्रव्यं जलरसोत्पादकं मधुररसस्य सकलजलसाधारण्याभावापत्तेः । कर्कटीभक्षणानन्तरं जलपाने तिक्तरसस्यानुभवात्तत्र तिक्तरसस्याव्याप-

न्यायलीलावतीप्रकाशविवृतिः

दायासम्भववारणाय भिन्नान्तम् । द्रव्यत्वमादाय तद्वारणाय द्रव्यत्वव्याप्यमिति । क्वचित्साक्षात्पदमस्ति तत्र जातित्वावच्छिन्नाधारत्वं न विवक्षणीयमपि तु यत्किञ्चित्तादृशजात्यनाधारत्वमिति । शर्करादावतिव्याप्तिवारणाय तत्पदमिति ध्येयम्। रूपादीति । आदिपदं स्पर्शाद्यव्यञ्जकत्वगर्भहेत्वन्तरावाप्तये । पररूपेति । यद्यपि लुप्ताक्षरमसीनीलिम्नि जलस्य व्यञ्जकतया दृष्टान्तत्वमेवमप्ययुक्तमेवेति वाच्यम्,(१)पटादिरूपाव्यञ्जकत्व(स्य१)विशिष्यैवो(३)पादानात्।केचित्तु(४)

---

(१) हरीतकीस्वादा० । (२) जलाविरलधा० ।
(३) त्वस्य तत्रैवोपा० । (४) कश्चित्तु ।

धुराकारा मनीषोन्मिषति। न च कषायद्रव्यस्यैव तत्। रसा-

न्यायलीलावतीप्रकाशः

त्तेः। अत्राहुः। रसनाप्यत्वसाधके पार्थिवरसाभिव्यञ्जकत्वं साधकमतो न जलरसव्यञ्जककषायद्रव्येण व्यभिचारः। कषायद्रव्यान्यत्वेन वा हेतुर्विशेष्यः। तिक्तरसश्च कर्कट्या एव केवलेऽपि कर्कटीफले तिक्ततोपलम्भात्। तदेकदेशे तिक्ततोपलम्भात् अवयवरसजातीयस्यावयविनि वृत्तेः। यद्वा कर्कटीभक्षणेन रसनाग्रवर्त्तिपित्तक्षोभैः क्रियते तदीयतिक्तत्वं तत्रोपलभ्यत इति वैद्यकादवगतमत एव जलपानं विनापि तत्र तिक्ततोपलम्भः। मधुरा हरीतकीत्यनुभवात् तदीय एव मधुररसोऽनुभूयते न जलस्येत्यपि नास्ति। स्वरूपयोग्यहरीतकीरसान्तराणामपि रसनेन संयुक्तसमवायाविशेषात्तद्ग्रहापत्तेः, सामग्रीसत्त्वेऽपि कार्याभावस्य व्याहतत्वादित्याह—न चेति।

न्यायलीलावतीप्रकाशविवृतिः

पररूपस्पर्शाव्यञ्जकत्वमेव हेतुर्न च रूपपदव्यर्थता अखण्डाभावादित्याहुः(१)। पार्थिवेति। अत्रापि परपदं प्रवेश्यमन्यथा स्वीयरसव्यञ्जकतया व्यभिचारतादवस्थ्यात्। द्रव्यत्वं च हेतौ प्रवेशनीयमन्यथा सन्निकर्षे व्यभिचारात्। न चेदमन्योन्याश्रयग्रस्तं रसनाप्य(२)साधकस्य हेतुत्वानुपपत्त्या हि परेण जलनीरसत्वं साध्यते। तथा च जले रसवत्त्वसिद्धौ पार्थिवत्वं हेतोर्विशेषणमन्यथा व्यावर्त्याप्रसिद्धेस्तद्विशेषणे च हेतुत्वानुपपत्तिलक्षणबाधकनिरासे जले रसवत्त्वसिद्धिरिति वाच्यम्, रसत्वावच्छिन्नव्यञ्जकत्वहेतौ तात्पर्यात्। अवच्छिन्नत्वाविशेषणादेव नोपनीतज्ञानमादायान्यत्र व्यभिचारः। तत्र ज्ञातत्वस्य व्यञ्जकता(३)वच्छेदकत्वात् जले सक्तुरसत्वस्य तथात्वेन रसत्वस्यापि तथात्वादिति मिश्राः। वस्तुतस्त्वनयैवारुच्याह—कषायेति। मिष्टकर्कटीभक्षणे न तदुपलम्भ इत्यत आह—तदेकदेश इति। वृन्तसन्निहितावयव इत्यर्थः। तथाप्यवयविनि किमायातमत आह—अवयवेति। नन्ववयवान्तरस्य मधुररसवत्त्वादवयवी तत्र नीरसश्चित्ररसवान् वा स्वीकरणीय इत्यवयवान्तरभक्षणे कथं तिक्ततोपलम्भ इत्यरुचेराह—यद्वेति। तदीय एवेति। तदीय एवेत्यवयवरसेन परम्परासम्ब-

(१) इत्याह। (२) प्यत्वसा०। (३) व्यञ्जकताव०।

न्तराणामप्युपलम्भापत्तेः। न च जलेनैव तत्र माधुर्यमुत्पाद्यते।

---

न्यायलीलावतीकण्ठाभरणम्

पलभ्यत इति तिक्तमपि जलं स्यादिति वाच्यम्, तैक्त्यस्य कर्कटीगतत्वेन पूर्वमप्युपलम्भात्। रसनाग्रवर्त्तिक्षुभिततिक्तभागस्यैव वा तत् तैक्त्यम्। न च जलेनैवेति। अग्निसंयोगस्यैव सत्यवयविनि परमाणौ वा

न्यायलीलावतीप्रकाशः

एतच्च हरीतक्यवयवानां नानारसत्वमभ्युपेत्योक्तं न तु हरीतक्यामेवाव्याप्यवृत्तिनानारससमवायः, व्याप्यवृत्तिजातीयताविरोधात्। न च षड्रसा हरीतकीतिव्यवहारात्तत्र चित्र एव रसः, गुणविरोधेनाऽवयविनि नानारसैरनारम्भात्। चित्ररूपावयविनि तु नीरूपत्वेनाप्रत्यक्षतापत्तेरनन्यगत्या तथा स्वीकारात्। विजातीयरूपासहकृतस्यैव नीलादेर्नीलाद्यारम्भकत्वात् गुणविरोधाभावात्। अत्र त्ववयविनो नीरसत्वे बाधकाभावात्, रसनस्य द्रव्याग्राहकत्वात्, षड्रसव्यवहारस्य च तत्तद्रसकार्य्यजनकत्वेन गौणत्वात्। ननु मधुररसमात्राधिकरणद्रव्यान्तरोत्पादात् विलक्षणरसोत्पत्तौ रसान्तराणामभिभूतत्वाद्वा नोक्तदोष इत्याशयेनाह—न चेति। द्रव्यान्तरे तावन्माना-

न्यायलीलावतीप्रकाशविवृतिः

भावादुक्तम्। एवमग्रेऽपि हरीतकीरसेत्यत्र। इदं च हरीतक्यवयवानामित्याद्याकरेऽनुपदमेव व्यक्तीभविष्यतीति भावः। अव्याप्यवृत्तीति। विषयिधर्मिभिन्ने चायं नियमोऽन्यथेश्वरज्ञानमादाय व्यभिचारात्। न चेति। यद्यपि षड्रसत्वव्यवहाराच्चित्ररसो न सिध्यति तथापि तादृशव्यवहारस्य परम्परासम्बन्धेनोपपत्त्यर्थमवयवानां षड्रसत्वे चित्ररूपवच्चित्ररसोऽप्यवयविनि स्यादिति भावः। अत्र त्विति। न च स्पार्शनप्रत्यक्षानुरोधेन चित्रस्पर्शापत्तिरिष्टत्वात्। न च रसवती हरीतकीतिप्रतीत्या चित्ररसस्यापि सिद्धिः। मधुरा हरीतकीतिप्रतीतिवद्रसप्रतीते(१)र्गुणविरोधबाधकेन परम्परासम्बन्धालम्बनत्वादिति भावः। प्रभाकरोपाध्यायास्तु हरीतकी चित्ररसवै(सै?)वेत्याहुः। ननु जलसाहित्येन पाकात्कारणगुणादेव वा तदुत्पादेन पूर्वोक्त(२)-

---

(१) ॰ वदुक्तप्रतीतेर्गु॰। (२) पूर्वोक्तानियमावि॰।

पृथिवीरसस्याकारणगुणपूर्वकस्य पाकजत्वनियमात्। न च हरी-तकीमाधुर्यस्य प्रकर्ष एवाम्भसा व्यज्यते । तदीयकषायादि-रसानां जलानभिव्यङ्ग्यत्वदर्शनात् । ततो घृतस्य कुङ्कुमगन्धा-भिव्यञ्जकतावदस्यापि जलमाधुर्यव्यञ्जकत्वम् । यदि वा शर-

---

न्यायलीलावतीकण्ठाभरणम्

पार्थिवरसोत्पादकत्वादित्यर्थः । तदीयकषायादीति । यद्यपि नानारस-समवायो न हरीतक्यां व्याप्यवृत्तिताविरोधात् विजातीयैरनारम्भा-च्च । पटप्रत्यक्षतान्यथाऽनुपपत्त्या तच्चित्ररूपाभ्युपगमः, चित्ररसा-नभ्युमगमे च नानिष्टम् । न च पार्थिवविशेषगुणस्य सर्व्वपृथिवीसा-धारण्यनियमभङ्गापत्तिरिष्टत्वात् । न चैवमिच्छाद्यपि पार्थिवे श-रीरे स्यात्तत्र बाधकान्तरसत्त्वात् । षड्रसा हरीतकी तु (ति?) व्यव-हारस्तु तद्रसकार्य्यकारितया । द्रव्यान्तरेण जलमाधुर्य्यानभिव्यक्तौ नियतशक्तिमत्त्वं दृष्टान्तेनोपपादयति—तत इति । अस्यापीति । कषाय-द्रव्यस्यापीत्यर्थः । स्वाभाविकस्थितये माधुर्य्यानुभवं स्वाभाविक-माह—यदि वेति । तिक्तादिरसवत् मधुरतावैलक्षण्यानुभवोऽपीति

न्यायलीलावतीप्रकाशः

भावः । हरीतकीरसश्च पाकज इत्यत्रापसिद्धान्तः । परमाणुरसस्यैव पाकजत्वात् कारणगुणप्रक्रमेण तु तदुत्पन्नावयवानां नानारसत्वा-द्गुणविरोधेन तदनारम्भादवयवी नीरस एवेत्युक्तम । अतस्तत्र जलेन न मधुररसारम्भः, तथा च तदवयवगता विजातीयरसा युग-पत्प्रतीयेरन्नित्युक्तमित्यभिप्रेत्याह—पृथिवीति । न च हरीतकीति । हरीतकीशब्दस्तदवयवपरः । एतच्च सर्वेषां रसानां जलव्यङ्ग्यत्वेऽपि जलविशेषमभिप्रेत्योक्तम् । तथा चेतररसदृष्टान्तेन मधुररसस्य जला-नभिव्यङ्ग्यत्वमनुमेयमिति भावः । 'अस्यापि' कषायद्रव्यस्यापीत्य-र्थः । शरदीति । ननु रसान्तराप्रतीतिमात्रं तत्र, न तु माधुर्यानुभवः ।

न्यायलीलावतीप्रकाशविवृतिः

नियमविरोध इत्यत आह—हरीतकीरस इति । 'जलव्यङ्ग्यत्वेऽपि' रसने-न्द्रियलक्षणजलव्यङ्ग्यत्वेऽपि । 'जलविशेषं' योग्यं जलम् । यद्यपीदं सिद्धान्तफक्किकोपरि वक्तुमुचितं तथापि न चेत्यनेन सिद्धान्तपर्य-

दि विमलजलदव्यूहानिर्गलविगलदमलजलभारधारासारसञ्चा-रिनभस्तलनिहितविमलभाजनसम्भृतमपगतविविधोपाधिव्याधिस-म्भेदममृतद्रवप्रतिममानन्दजनकमम्भोऽनुभूयते। किं वा जलरस-स्य मधुरता(१)वैलक्षण्यं किमनुभूयमानजातिविरहः, उत शर्क-रादिमाधुर्यवैजात्यम्, अथ तेनैकजातीयताविरहः, उत मधुर-शब्दावाच्यत्वम् [वा]। नाद्यः। अनुभवबाधितत्वात्। नेतरः। अविवादात्। न तृतीयः। उत्कटसादृश्याद्यननुभवेऽपि मधुरता-

---

न्यायलीलावतीकण्ठाभरणम्

यत् परोक्तं तत्राह—किं वेति। जलीयरसे या जातिरनुभूयते तद्विरहो वा शर्करादिमाधुर्य्यभिन्नजातीयत्वं वा शर्करादिरसवृत्तिजातिशून्य-त्वं वेति विकल्पत्रयार्थः। अनुभवेति। न हि या जातिर्यत्रानुभूयते तद्विरह एव तत्रेत्यर्थः। अविवादादिति। जलमाधुर्य्यस्य मयाऽपि वि-लक्षणत्वोपगमादित्यर्थः। उत्कटेति। वैलक्षण्येऽपि मधुरत्वसामा-न्यस्य तत्रोपगमादित्यर्थः। अवान्तरसामान्येऽपि महासामान्याभा

न्यायलीलावतीप्रकाशः

न च नीरसे सौहित्या(२)र्थिनस्तत्र प्रवृत्त्यनुपपत्तिः, अन्तःशैत्यार्थेनापि तदुपपत्तेः, नीरसपवनभक्षणेऽपि सर्पाणां प्रवृत्तेश्च। न च मनुष्या-णां नीरसभक्षणेऽप्रवृत्तिरिति व्याप्तिरिति वाच्यम, तावता रसमा-त्रसिद्धावपि मधुररसासिद्धेः। तस्मात्पूर्वोक्तमानावष्टम्भेनेदमुक्तं नियामकाभावादिति दूषयति—किं वेति। अनुभूयमानेति। जलरस एव या जातिरनुभूयते तद्विरह इत्यर्थः। 'एकजातीयता' गुणत्वव्या-

न्यायलीलावतीप्रकाशविवृतिः

न्तप्रतीकधारणमेवेत्यदोषः। तस्मादिति। इदमभ्युगमवादेन। वस्तुतो रसान्तरस्य सर्वप्राणिसाधारणस्य स्पृहाविषयत्वाभावे सर्वप्राणिसा-

---

(१) मधुरभावैव०। (२) सौहित्यं तर्पणं तृप्तिरित्यमरः।

म्रात्रस्याम्रादिसाधारण्यस्यानुभवात् । अन्यथा मेरुसर्षपयोरपि सत्ताविलयापत्तेः । न तुरीयः । व्यवहारबाधितत्वात् । न च पृथिव्यां(१) मधुरता आप्या । शुष्यत्सु शर्करादिषु माधुर्यापकर्षस्यानुपलम्भात् । शुष्यति पुनर्द्रव्ये(२)स्नेहापकर्षात् । नाप्युष्णः स्पर्शः । औपाधिकत्वात् । मेदस्विस्वेदार्पकतेजसीव रूपानवभासे-

---

न्यायलीलावतीकण्ठाभरणम्

वे विपक्षदण्डमाह—अन्यथेति । व्यवहारेति । मधुरं जलमिति व्यवहारस्य सार्वलौकिकत्वादिति भावः । पृथिवीमाधुर्य्यस्याप्यत्वं परापादितं दूषयति—न चेति । उपाध्यपगमे औपाधिकस्यापगमनियमात् प्रकृते तु वैपरीत्यमित्याह—शुष्यत्स्विति । घृतादौ स्वाभाविकस्नेहे बाधकमाह—शुष्यतीति । उष्णोदके स्वाभाविकमौष्ण्यं परापादितं दूषयति—नापीति । औपाधिकत्वादिति । तेजःसन्निकर्षोपाधिकत्वादित्यर्थः । तर्हि ते-

न्यायलीलावतीप्रकाशः

प्यव्याप्यजात्या । अन्यथेति । अवान्तरजात्यनुभवव्याप्तो न परजात्यनुभव इत्यर्थः । पृथिव्या अपि मधुरताया आप्यत्वापत्तेरित्युक्तं दूषयति—न च पृथिव्या इति । औपाधिकस्योपाध्यपकर्षेऽपकर्षोपलम्भनियमादित्यर्थः । प्रत्युत शुष्यत्कशेरुणि जलापगमे माधुर्योत्कर्षोपलम्भादिति भावः । स्नेहप्रतिबन्दीं दूषयति—शुष्यतीति । यथा यथा घृतादौ शोषस्तथा तथा स्नेहापकर्षोपलम्भादौपाधिकस्तत्र स्नेह इत्यर्थः । औपाधिकत्वादिति । उपाध्यन्वयानुविधानस्य अनन्यथासिद्धत्वादिति भावः । श्रीखण्डक्षोदेन घर्षकजलस्यैव प्रकृष्टं शैत्यमभिव्यज्यते । यद्वा श्रीखण्डान्तर्वर्तिजलस्यैव घर्षणाद्बहिर्भूतशैत्यातिशय उपलभ्यते, अघृष्टश्रीखण्डस्पर्शविजातीयस्पर्शानुभवात् । पवनादे-

न्यायलीलावतीप्रकाशविवृतिः

धारणप्रवृत्त्यैव मधुररसत्व(३)मिति द्रष्टव्यम् । प्रकृष्टं शैत्यमिति । शीतत्वावान्तरजातिविशिष्टं शैत्यमित्यर्थः । प्रतीतजलस्पर्शे प्रकर्षकल्पने मानाभाव इत्यरुचेराह—यद्वेति जलसंयोगस्यैवेत्यादि प्रागुक्तं दूषयति—पवनादेरिति । ननु तेजःसंयोगादेव लघुस्पर्शिरश्मित्वत्यंत

---

(१) पृथिव्या म० । (२) ति द्रव्ये पुनः स्ने० । (३) मधुररसत्वमि० ।

ऽपि स्पर्शप्रतीतेरविरोधात् । आप्यद्रवत्वस्यापाकजत्व(१)व्याप्त-
त्वात् । (न च) कनकद्रवत्ववन्नैमित्तिकत्वं, न च घृतद्रवत्वप्रति-
बन्दीग्रहः(२) । तस्याप्यत्वे पाकापेक्षाविरोधात् । तैले चाप्यभाग-

---

न्यायलीलावतीकण्ठाभरणम्

जोरूपमप्यनुभूयेतेति यत्तु परेणोक्तं तत्राह—मेदस्वीति । 'मेदस्विनः'
स्थूलास्तेषां प्रस्वेद उष्मणा भवति । स चोद्भूतस्पर्शोऽनुद्भूतरूप-
स्तथैव जलस्थं तेज इत्यर्थः । आप्यद्रवत्वस्य स्वाभाविकत्वादाह—आ-
प्येति । अपाकजत्वनियमादिति । अनग्निसंयोगजत्वनियमादित्यर्थः । घृतेऽपि
द्रवत्वमाप्यं स्यादिति परापादिते दोषमाह—न चेति । 'पाकापेक्षा' तेजः-
संयोगापेक्षा । तर्हि तैलेऽपि नाप्यं द्रवत्वमन्यथा तद्द्रवत्वं दहन
प्रतिकूलं स्यादिति परोक्तं दूषयति—तैले चेति । स्नेहप्रकर्षाधीनं तैल-

न्यायलीलावतीप्रकाशः

द्रव्यान्तरशैत्याभिव्यञ्जकत्वदर्शनात् । द्रव्यान्तरात्पृथिवीशैत्योत्पाद-
स्य क्वाप्यदर्शनादिति भावः । रूपाध्यक्षताव्याप्यत्वात् स्पर्शाध्यक्ष-
ताया इत्यत्र व्यभिचारमाह—मेदस्वीति । करकादवभावादिति दूष-
यति—आप्यद्रवत्वस्येति । तेजःसम्बन्धेनापां द्रवत्वादर्शनात् प्रत्युत तन्ना-
शोपलम्भात्तदपाकजमित्यर्थः । न च हिमपिण्डस्याग्निसं-
योगेन विलयनादत्र बाधः । अपाकजत्वेऽपि निमित्तान्तरादुत्पत्तिः
कथं निराकरणीयेति वाच्यम्,. नैमित्तिकद्रवत्वस्य तेजःसंयोगज-
न्यत्वनियमात् । यज्जातीयं चाग्निसंयोगजन्यद्रवत्वाश्रयस्तज्जातीयं
तदभावे पिण्डीभूतमुपलभ्यते यथा घृतादीति व्याप्तेश्च जलजातीयं
चातथात्वात् । करकायां च शीतस्पर्शवत्त्वेन जलत्वानुमानम् । न
चासांसिद्धिकद्रवत्वेन प्रतिरोधः, तस्यासिद्धेः । अदृष्टविशेषात्तत्प्रति-
बन्धे काठिन्योपलम्भादिति भावः । तस्येति । आप्यद्रवत्वस्य तेजः-
संयोगाजन्यत्वादित्युक्तमिति भावः । तत्राप्सम्बन्ध इति दूषयति—
तैले चेति । स्नेहप्रकर्षाभावस्तत्रोपाधिरिति भावः । तैलद्रवत्वस्य पा-

न्यायलीलावतीप्रकाशविवृतिः

आह—यज्जातीयं चेति । हिमपिण्डे च स्वाभाविकमेव द्रवत्वं करका-

---

(१) अपाकजत्वनियमादिति कण्ठाभरणधृतः पाठः । (२) ०त्वप्रतिबन्धाग्रहः ।

स्य स्नेहप्रकर्षवत्त्वेन दहनानुकूलत्वात्। आप्यमेव द्रवत्वं घृतद्रवत्वस्य पाकजत्वेन पार्थिवत्वात्। एवं च स्नेहोऽपामेव। घृतस्नेहः पार्थिवः भौमानलेन्धनत्वादिति चेन्न, प्रकर्षविशेषादेव

---

न्यायलीलावतीकण्ठाभरणम्

जलभागस्य दहनानुकूलत्वमित्यर्थः। तर्हि घृतद्रवत्वमप्याप्यं स्यात् दहनानुकूलता च तैलवत् स्नेहप्रकर्षाधीना स्यादित्यत आह—घृतद्रवत्वस्येति। भौमानलेन्धनत्वादिति। वायुभिन्नत्वे सति भौमानलोपचयहे-

न्यायलीलावतीप्रकाशः

र्थिवत्वे बाधकमाह—घृतेति। तैलद्रवत्वस्य पार्थिवत्वे घृतद्रवत्ववत् पाकजत्वापत्तिरित्यर्थः। एवं चेति। [ एवं च ] घृतद्रवत्वस्य पाकजत्वादाप्यद्रवत्वस्य चातथात्वान्न द्रवत्वप्रतिवन्दिरिति घृतस्नेहोऽपामेवेति सिद्धे स्नेहस्तल्लक्षणं सिद्धमित्यर्थः। भौमेति। ननु चेन्धनत्वं न निमित्तत्वं वायुनाऽनैकान्तात्। न चानलदाह्यत्वेन तद्विशेष्यम्। दाहो हि रूपपरावृत्तिर्वा भस्मीभावो वा उभयस्यापि स्नेहावृत्तित्वेनापक्षधर्म्मत्वम्। अत एव च नानलनाशहेतुनाशप्रतियोगित्वे सत्यनलहेतुत्वमिन्धनत्वम्, अनलावयवे गतत्वात्। न च हेतुत्वं निमित्तत्वमभिप्रेतम्, अनलस्येन्धननाशनाश्यत्वे मानाभावात्। इन्धननाशानन्तरं ह्यनलान्तरं नोत्पद्यते पूर्वानलस्त्ववयवक्रियाविभागन्यायेन नश्यति। तस्माद्घृतस्नेहाश्रयो न जलं दहनानुकूलत्वात् काष्ठवदित्यभिप्रायकोऽयं ग्रन्थः। अत्र स्नेहानाधारत्वमुपाधिः। घृतस्नेहाश्रयो यदि जलं स्यात् भौमानलेन्धनं न स्यादित्यत्र च स्नेहप्रकर्षविशेषाभाव उपाधिरित्याह—प्रकर्षेति। जलत्वमपि भेदकं जलशब्दसङ्केत-

न्यायलीलावतीप्रकाशविवृतिः

दिवदिति भावः। समवायित्वमवयवित्वं चासिद्धमेवेति सिद्धवदाह—निमित्तत्वमिति। अत एवेति। अपक्षधर्मत्वादेवेत्यर्थः। वक्ष्यमाणयुक्त्याऽनलस्येन्धननाशानाश्यत्वादित्यर्थः। व्यभिचारोऽपीत्याह—अनलावयव इति। व्यभिचारोद्धारेऽपि अपक्षधर्मत्वं तदवस्थमेवेत्याह—अनलस्येति। वस्तुतो घृतस्येन्धनत्वं न तदीयस्नेहस्येति स्वरूपासिद्धिरिति भावः। दहनेति। भौमदहनेत्यर्थः। तेन न दिव्यानलानुकूलजले व्यभि-

स्नेहस्य दहनानुकूलतोपपत्तेः ॥ (इति) जलम् ।

---

न्यायलीलावतीकण्ठाभरणम्

तुत्वादित्यर्थः । तदुपचयहेतुत्वं च तदुत्कर्षापकर्षप्रयोजकोत्कर्षापकर्षवत्त्वम् । अन्यथा इन्धनत्वं यदि निमित्तत्वं तदा वायावतिव्याप्तिः । अनलदाह्यत्वे सतीति विशेषणे दाहस्य स्नेहावृत्तित्वात्पक्षधर्म्मत्वम् । न हि रूपपरावृत्तिर्वा भस्मीभावो वा स्नेहे सम्भवति । अनलनाशहेतुनाशप्रतियोगित्वेन विशेषणे स्वरूपासिद्धिः । न हि स्नेहनाशादनलो नश्यति, अपि त्ववयवनाशात्तत्संयोगनाशाद्वा । अनलावयवे व्यभिचारश्चेत्यादिदोषः स्यात् ।

न्यायलीलावतीप्रकाशः

ग्रहो न व्यक्तिमात्रे न वा व्यक्तिविशेष इत्यनुगतधर्मस्य बाधकाभावाज्जातित्वात् । अनित्यस्नेहत्वस्य कार्यतावच्छेदकत्वेनोक्तगत्या तत्सिद्धेर्वेति भावः ।

न्यायलीलावतीप्रकाशविवृतिः

चारः । तथाप्यनुकूलत्वे(१) तदन्यत्वेनापि हेतुविशेषणम् । अनित्येति । न च परमाणुसाधारणं जलत्वं तथापि न सिद्धमिति वाच्यम्, तस्यापि स्वरूपयोग्यत्वात् । समानाधिकरणस्नेहस्य(२) च प्रतिबन्धकतया फलाभावः, नित्यस्येत्यादिव्याप्तिस्तु नाभ्युपेयत एवेति । मिश्रास्तु । अतिप्रसङ्गो ज्ञातः प्रतिबन्धक इति पूर्वं परमाणुवृत्तित्वाज्ञानाद्गुरुकारणतावच्छेदकतया जलत्वसिद्धौ स्वोपादेयद्व्यणुकवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वेन परमाणुवृत्तित्वानुमानेऽतिप्रसङ्गज्ञानं तावच्छेदकत्वकल्पनां बाधते उपजीव्यविरोधादपि तु अनित्यत्वमवच्छेदके विशेषणं कल्प्यते पूर्वात्यागेनोपजीव्यविरोधाभावादितिवदन्ति । वयं तु जलसमवायिकारणतावच्छेदकतयैव जलत्वसिद्धिः, अन्त्यावयवी च जलस्य नास्त्येव । न च तथा सति जलीयशरीरेऽन्त्यावयवित्वगर्भशरीरलक्षणाव्याप्तिः । तत्रान्त्यावयविपदस्य करादिवारकस्य फलानुपहितमात्रपरत्वादिति ब्रूमः ।

---

(१) तस्याप्यनु० । (२) ०स्नेहस्य तत्प्रति० ।

शुक्लमेव भास्वरं च रूपं तेजस इत्यसङ्गतम् । अग्नेररुणादिरूपोपलब्धेः । कनकरूपस्य चाभास्वरत्वात् । संयोगिपार्थिवाभिभूतत्वेन (१) तत्राभास्वरत्वमिति चेन्न, पार्थिवरूपस्य तेजोरूपानभिभावकत्वात् । अन्यथा घटादावपि तथाभावप्रसङ्गेन रूपप्रत्यक्षत्वविरोधात् (२) । अनुद्भूतं तदिति चेन्न, अग्रहणप्रसङ्गात् ।

---

न्यायलीलावतीकण्ठाभरणम्

शुक्लमिति । भास्वरमिति जलव्यावृत्तये । भास्वरत्वं च रूपप्रकाशकत्वव्यङ्ग्या रूपगता जातिः । अव्याप्तिमाह—कनकेति । न हि तद्रूपेण पररूपं व्यज्यत इत्यर्थः । गुरुत्वासमानाधिकरणरूपवत्त्वं कनकोष्माद्यव्यापकं औष्ण्यसमानाधिकरणरूपवत्त्वं चन्द्रचामीकराद्यव्यापकमिति भावः । तथाभावेति । घटादिरूपस्यापि तेजोरूपाभिभावकत्वे तेजोभिन्नस्य रूपं क्वापि न गृह्येतेत्यर्थः । अनुद्भूतं तदिति । कनकरूपमित्यर्थः । अग्रहणेति । कनकरूपस्येति शेषः । उद्भूतरूपस्पर्शयो-

न्यायलीलावतीप्रकाशः

शुक्लमेव रूपं जलस्यापीत्यत उक्तं भास्वरं चेति । भास्वरत्वं च जातिविशेषो रूपान्तरप्रकाशकत्वव्यङ्ग्यः । अभास्वरत्वादिति । व्यञ्जकाभावेन भास्वरत्वानुपलम्भादित्यर्थः । अत एव न गुरुत्वासहचररूपं तल्लक्षणं कनकोष्मादावभावादिति भावः । अन्यथेति । घटादिरूपेणालोकरूपाभिभवादुद्भूतानभिभूतरूपसहकारितेजोविरहात्सर्वरूपाप्र-

न्यायलीलावतीप्रकाशविवृतिः

भास्वरत्वं चेति । शुक्लपदं चैवं स्वरूपकथनपरम् । चामीकरादावनुपलम्भ(३) हेतुकवैमत्यनिराकरणायेति ध्येयम् । 'व्यञ्जकाभावेन' रूपान्तरप्रकाशकत्वाभावेन । 'अत एव' अव्यापकत्वादेव । तदेवाह—कनकेति । कनके विशेषणाभावादुष्मणि विशेष्याभावाच्च विशिष्टाभाव इत्यर्थः । अनुद्भूतं च रूपं नास्तीत्यभिमानः । स्पर्शाप्रत्यक्षताया अनुक्त्वा तान्निबन्धनदूषणापादनमयुक्तमित्याशङ्कायां व्याप्तिबलेनैव स्पर्शाप्रत्यक्षतासिद्धिरिति कस्यचिन्मतं निराकृत्यानुद्भूत-

---

(१) पार्थिवरूपाभि० । (२) ०न रूपाप्रत्यक्षतापत्तेः । (३) ०दावुपलं० ।

रूपं न गृह्यत इति(१) चेन्न, रूपस्पर्शयोस्तैजसयोश्चाग्रहे कनकद्रव्यस्याप्रत्यक्षतापत्तेः। अभास्वरमिति(२) चेत्, सिद्धमीहितम्(३)। नाप्युष्ण एव स्पर्शः। पद्मरागादितेजसामनुष्णाशीतत्वात्। पार्थिवौपाधिकी सा (स्पर्श) प्रतीतिरिति चेन्न, रूपानवभासे तदनवभासात्। अन्यथा वायौ (४)स्पर्शविलयात्। औष्ण्यमेवैतदनुद्भूतमिति चेत्, (५)अनुष्णाशीत-

न्यायलीलावतीकण्ठाभरणम्

द्वयोरपि द्रव्यप्रत्यक्षताप्रयोजकत्वमभ्युपेत्याह—रूपस्पर्शयोरिति अन्यथानुपपत्त्या सिद्धान्तिनोऽभ्युपगममाशङ्कते—अभास्वरमिति। कनकरूपमिति शेषः। अपर आह—सिद्धमिति। कनकं लक्षणमव्यापकं कनकेऽतैजसत्वं वा सिद्धमिति भावः। तेजोलक्षणान्तरं दूषयति—नापीति। रूपानवभास इति। पार्थिवोद्भूतस्पर्शस्य उद्भूतरूपसामानाधिकरण्यनियमादित्यर्थः। अन्यथेति। अयं चेत्यनियमः। तदा वायुरप्यनुद्भूतस्पर्शा पृथिवी स्यादित्यर्थः। औष्ण्यमेतदिति। पद्मरागादितेजसि यः स्पर्शोऽनुभूयते इति शेषः। अनुभवश्चेन्न प्रमाणं तदा पृथिवीस्पर्शो-

न्यायलीलावतीप्रकाशः

त्यक्षापत्तिरित्यर्थः। रूपस्पर्शयोरिति। यस्य तेजसो रूपमप्रत्यक्षं तस्य स्पर्शोऽप्यप्रत्यक्ष इत्यस्य ग्रीष्मोष्मणि व्यभिचारेऽपि सुवर्णोष्णस्पर्शस्यानुद्भवेनाप्रत्यक्षत्वे रूपस्याप्यग्रहे सुवर्णं प्रत्यक्षमेव न स्यात्। द्रव्यग्राहकचक्षुस्त्वग्भ्यां रूपस्पर्शयोग्यतायामेव द्रव्यग्रहादित्यर्थः। रूपानवभास इति। यस्य पार्थिवस्य रूपमप्रत्यक्षं तस्य स्पर्शोऽप्यप्रत्यक्ष इत्यर्थः। अन्यथेति। सोऽपि स्पर्शोऽनुद्भूतरूपपृथिव्याः स्यादित्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

त्वेनैव तदप्रत्यक्षत्वमुपपाद्य मूलयोजनामाह—यस्य तेजस इति। यस्य पार्थिवस्येति। तथा च मणिव्यवहितततप्रभायां लौहित्यानवभासे

(१) त एवेति चेन्न। (२) स्वरं तदिति। (३) सिद्धं नः समीहितम्।
(४) वायुस्पर्श०। (५) ति चेन्न।

( मात्र ) विलयात्। मैवम्। अग्नेररुणादिरूपप्रतीतेरौपाधिकत्वात्। कनकरूपं च पार्थिवरूपाभिभूतमेव हीनत्वात्। तेजोंशः

---

न्यायलीलावतीकण्ठाभरणम्

ऽप्युष्ण एवानुभूतः स्यादित्याह--अनुष्णाशीतेति। अग्नेरिति। तेजस्त्वं शुक्लेतररूपवदवृत्ति गन्धासमानाधिकरणजातित्वात् जलत्ववदित्यत्र तात्पर्यात्। अन्यथाऽङ्गारादिर्नोपाधिर्ज्वालायामप्यवश्यानुभवात् दिग्दाहादौ चोपाधेरनुपलम्भादिदोषापत्तिः। कनकेऽव्याप्तिं निरस्यति—कनकेति। तेजोरूपस्य पार्थिवरूपाभिभाव्यत्वे रूपमात्रानुपलब्धिः

न्यायलीलावतीप्रकाशः

अनुष्णेति। अनुद्भूतोष्णशीतस्पर्शाभ्यामेव तथा प्रतीत्युपपत्तेरित्यर्थः। अग्नेरिति। ननूपाधिर्लोहिताङ्गारादिर्वाच्यः, तदग्रहेऽपि दीर्घज्वालायां लौहित्यग्रहात्तन्नौपाधिकं दिग्दाहादौ चोपाधेरसम्भवः। मैवम्। तेजस्त्वं शुक्लेतररूपवदवृत्ति अपाकजरूपवत्परमाणुवृत्ति [ द्रव्यत्वव्याप्य ] जातित्वाज्जलत्ववदित्यत्र तात्पर्यात्। भास्वररूपस्य कनकाव्याप्तिं निरस्यति—कनकरूपमिति। यद्यप्यभिभूतरूपस्यापि वन्हेः स्वपरप्रकाशकत्वं दृष्टमिति कनकस्यापि तथात्वापत्तिः, तथाप्यभि-

न्यायलीलावतीप्रकाशविवृतिः

स्पर्शौपाधिकत्वमसम्भवीति भावः। अनुद्भूतोष्णेति। यद्यपि तयोरतीन्द्रियतया तदाश्रयाप्रत्यक्षतापत्त्या नैवमुपपत्तिस्तथापि तत्रापीष्टापत्त्या आपातत इदम्। अत एव सिद्धान्तेऽप्येतस्यापेक्षेति भावः। अनुमानप्रामाण्यबलेनैवाग्निप्रेरणोद्गतपार्थिवभागस्योपाधित्वं कल्पनीयमित्यभिप्रेत्याह--तेजस्त्वमिति। आलोकादिकमादाय सिद्धसाधनमित्यभावद्वयगर्भता। पृथिवीत्वे व्यभिचार इति रूपवदित्यन्तम्। घटस्यैव तन्मते अपाकजरूपवत्त्वात् स एव व्यभिचार इति परमाणुपदम्। परमाणुत्वे व्यभिचार इति जातिपदम्। द्रव्यत्वव्याप्यपदमपि पूरणीयमन्यथा सत्तादौ व्यभिचारात्। क्वचित्तु पाठ एव तथा। वस्तुतोऽवृत्तीत्यत्र नञ्द्वयेन पाकजरूपवदवृत्तिपरमाणुवृत्तिजातित्वादित हेतुः। जातिपदं चैवं जलपरमाणुपीतघटान्यतरत्वे व्यभिचारवारणायेति भावः। अभिभूतरूपस्यापीति। दीपादौ सर्वत्र पृथ्वीरूपाभि-

न्यायलीलावतीकण्ठाभरणम्

स्यादिति यदुक्तं तत्राह--तेजोंऽश इति। कार्य्यलक्षणेन कनकलक्षणं तेजोऽहीनमिति तद्रूपं पार्थिवरूपाभिभाव्यमिति कल्पनीयमित्यर्थः। ननु वन्हिरूपमप्यभिभूतमेव। तथा च तदपि न प्रकाशकं स्यादिति चेन्न वह्नौ शुक्लत्वमात्राभिभवेऽपि रूपस्यानभिभवात्। कनके तु रूपस्यैवाभिभूतत्वात्। न चान्धकारे सुवर्णरूपोपलम्भापत्तिः बलवत्सजातीयसम्बन्धस्याभिभवत्वात्। उपष्टम्भकद्रव्यसम्भेदमहिम्ना तन्नोपलभ्यत इत्यन्ये। वह्निप्रभालक्षणं तेजोऽन्तरमेव वा प्रकाशकं कार्य्यबलादुन्नेयम्। उष्णस्पर्शवत्त्वस्य तेजोलक्षणस्याव्याप्तिं परिहरति-

न्यायलीलावतीप्रकाशः

भूतरूपवन्हिसम्बन्धानभिभूतरूपवह्नयादिमध्यादिव्यापिनी प्रभैवेतररूपव्यञ्जिका। यद्वा वन्हौ रूपं नाभिभूयते किन्तु तन्निष्ठशुक्लत्वम्। सुवर्णे तु रूपमेव तथेति कार्यदर्शनात्कल्प्यते। न चैवमन्धकारेऽभिभावकपीतरूपाग्रहेऽपि सुवर्णस्य भास्वररूपमुपलभ्येत बलवत्सजातीयग्रहणकृताग्रहणस्याभिभवत्वादिति वाच्यम्, बलवत्सजातीयसम्बन्धस्यैवाभिभवत्वाल्लाघवात्। उपष्टम्भकद्रव्यसंयोग एव सुवर्णरूपप्रतिबन्धक इत्यन्ये। तथाप्यन्धकारे सुवर्णस्योपलम्भापत्तिरभिभूतरूपस्यापि तेजसो ग्रहणात् तेजसि तेजोन्तरस्याप्रकाशकत्वात्। मैवम्। रूपे गृह्यमाण एव चक्षुषा द्रव्यग्रहणात् सुवर्णरूपमभिभवाद्रेव नोपलभ्यते उपष्टम्भकरूपं चालोकाभावात्। अभिभाव्यताप्रयोजकमाह--तेजोंऽशेति। हीनत्वमवान्तरजातिभेदः। कार्यैकेति। अभिभवस्यानन्यथासिद्धत्वादित्यर्थः। उष्णस्पर्शस्य प्रभायामव्याप्तिं निर-

न्यायलीलावतीप्रकाशविवृतिः

भूतरूपवत्त्वादिति भावः। ननु तेजोऽन्तरकल्पने गौरवं तद्ग्रहापत्तिश्चेति अरुचेराह—यद्वेति। उपष्टम्भकेति। पूर्वं सजातीयसम्बन्धस्य प्रतिबन्धकत्वमुक्तमधुना तदाश्रयद्रव्यसंयोगस्योच्यत इति भेदः। सजातीयसम्बन्धस्योल्कादिरूपग्रहप्रतिबन्धकत्वं क्लृप्तमिति तदेव कल्प्यत इत्यरुचेराह—अन्य इति। [अभिभूतरूपस्यापीति। इन्द्रनीलप्रभादेरित्यर्थः।] सुवर्णरूपमिति। न चैवमन्धकारे वन्ह्युपलम्भो न स्यात् तद्रूपस्याभिभूत

हीनतायाः कार्यैकगम्यत्वात् । प्रभास्पर्शस्त्वतीन्द्रियोऽनुमाना-दुष्ण एव तेजस्त्वादवगम्यते ।

ननु सुवर्णं कथं तैजसम् । अत्यन्ताग्निसंयोगेनानुच्छिद्यमानद्रवत्वाधिकरणत्वादिति चेन्न, सन्दिग्धासिद्धत्वात् (१) किमिदमेव द्रवत्वाधिकरणं द्रवत्वाधारद्रव्यान्तरसंयुक्तं वेति । अनुभवसिद्धं द्रवत्वाधारत्वमिति चेत् ? (२) सिद्धं तदा पार्थिवत्वम् । पीतिमगुरुत्वाधिकरणत्वस्यापि तथात्वात् । तदौपा-

न्यायलीलावतीकण्ठाभरणम्

प्रभेति । प्रभा उष्णस्पर्शवती तेजस्त्वात् । तदनुपलम्भस्त्वनुद्भूतत्वादित्यर्थः। ननु तेजोंशहीनत्वकल्पनं सुवर्णेऽव्याप्तिनिरासार्थं तदा स्याद्यदि सुवर्णं तैजसं भवेत्तदेव तु नास्तीत्याह—नन्विति । सुवर्णं तैजसमत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणत्वात् न यदेवं न तदेवं यथा घट इति व्यतिरेकिणं शङ्कते—अत्यन्तेति । अनित्यपदपूरणात् न जलपरमाणौ व्यभिचारः। अपार्थिवत्वं वा साध्यम् । सन्दिग्धेति । तैजसत्वेनाभिमतस्य द्रवत्वाधारत्वं सन्दिग्धमित्यर्थः । एतदेवाह—किमिति । उपलभ्यमानं द्रवत्वं पीतिमगुरुत्वाश्रयं वा तेजसो वेति सन्देह इत्यर्थः । ननु सन्दिग्धासिद्धिस्तदा स्याद्यदि द्रवत्वाधारत्वस्य हेतोः सन्देहः स्यात् अनुभवबलात्तन्निश्चितमेवेत्याह—अनुभवेति । अनुभवश्चेद्बलं तदा पीतिमसमानाधिकरणमेव द्रवत्वमनुभूयत इति पार्थिवत्वमेव तस्य व्यवस्थितमित्याह—सिद्धमिति । तदौपाधिक-

न्यायलीलावतीप्रकाशः

स्यति—प्रभेति । तेजस्त्वात्तत्रोष्णस्पर्शानुमाने चान्द्रकर इवानुद्भूतत्वं कल्प्यत इत्यर्थः । अत्यन्तेति । पार्थिवद्रवत्वस्याग्निसंयोगनाश्यत्वादित्यर्थः । न च पीतिमगुरुत्वाश्रयस्य पक्षत्वे बाधोऽतिरिक्तपक्षत्वे चाश्रयासिद्धिः। उभयसिद्धप्रत्यक्षद्रवत्वाश्रयस्य पक्षत्वात् । सन्दिग्धेति । तथाविधं द्रवत्वं त्वदुपगतोपष्टम्भकस्य सुवर्णस्य वेति सन्देहाद्धेतोः सन्दिग्धाश्रयत्वादित्यर्थः । अनुभवबलावलम्बने तु पीतिमगुरुत्वयोरपि तदीयत्वमिति कथं तैजसत्वमित्याह—पीतिमेति । तथात्वात्

(१) सन्दिग्धानैकान्तिकत्वात् । (२) ०ति चेन्न ।

धिकत्वेन शङ्कितमिति चेत्,(१) तुल्यं द्रवत्वेऽपि । मैवम् ।

पीतिमा च गुरुत्वं च दाहे यत्र(२) च रक्तता ।
तस्य लोकप्रसिद्धस्य स्वर्णत्वं केन वार्यते ॥
अनुच्छिन्नद्रवत्वं तु वस्तु यत्त्विह भासते ।
सुवर्णव्यवहारोऽयं तत्र शास्त्रे(३) प्रवर्तते ॥

न्यायलीलावतीकण्ठाभरणम्

त्वेनेति । उपष्टम्भकपार्थिवैापाधिकं पीतत्वमित्यर्थः । तुल्यमिति । द्रवत्वमप्यनुभूयमानं तर्हि पार्थिवमेवेति स्वरूपासिद्धो हेतुरित्यर्थः । पीतिमा चेति । यत् पीतं गुरु रूपपरावृत्तिस्थानं तत् द्रव्यं पार्थिवमेव सुवर्णत्वेन व्यपदिश्यते तत्र च न द्रवत्वं पार्थिवत्वेऽस्य चाग्निसंयोगनाश्यत्वदर्शनात् । अत एव लौकिकानां पलमितं सुवर्णमित्यादिव्यवहार इत्यर्थः ।

ननु त्वया तैजसं किमभिधीयत इत्यत आह—अनुच्छिन्नेति । यन्मुषायां ध्मायमानं द्रवत्वाधिकरणमुपलभ्यते तत्र तेजसि शास्त्रकृतां सुवर्णव्यवहारः पार्थिवद्रवत्वस्यात्यन्ताग्निसंयोगोच्छेद्यत्वेन तद्वैधर्म्याद्विशिष्टं द्रवत्वाधिकरणं रूपवच्च तेज एव भवितुमर्हति । पार्थिवस्तु भागो न तदा द्रवतामुपैति । काठिन्यानुपलम्भश्च मसीगुटकस्येव जले क्षुण्णस्य, लोष्ट्रस्य वा जलविलीनस्य । किं च पार्थिवपीतभागस्य रूपान्तरपरावृत्तिप्रतिबन्धकं विजातीयद्रव्ये

न्यायलीलावतीप्रकाशः

द्रवत्वसामानाधिकरण्येनानुभूयमानत्वादित्यर्थः । तुल्यमिति । औपाधिकत्वशङ्का तूभयत्र तुल्येत्यर्थः ।

प्रथममेव सुवर्णस्य तैजसत्वे पीतिमाद्याश्रयं कथं सुवर्णव्यवहार इति शङ्कां निरस्यति—पीतिमा चेति । पीतिमगुरुत्वाश्रये सुवर्णे पार्थिवत्वमेव अनुभवव्यपदेशयोरवारणादित्यर्थः । तर्हि शास्त्रे "अग्नेरपत्यं प्रथमं हिरण्य"मित्यादौ कुतस्तैजसत्वव्यवहारः पीतिमगुरुत्वाश्रयस्य तैजसत्वे बाधकादित्यत आह—अनुच्छिन्नेति । एतेन तैजसत्वसाधने हेतुरप्युक्तः । नन्वेवं लोकशा-

(१) ०ति चेन्न । (२) यस्य । (३) तन्त्रशास्त्रे ।

वस्तुभेदे प्रसिद्धेऽपि शब्दसाम्यं प्रवर्त्तते ।
रसः स्वभावमधुरो ध्वनिश्च मधुरो यथा ॥
भूसंसर्गवशाच्चास्य रूपं नैव प्रतीयते ।
स्फटिकस्य जवा(१)योगाद्यथा रूपं न भासते ॥

---

न्यायलीलावतीकण्ठाभरणम्

द्रवत्वमेष्टव्यम्, कथ्यमानजलमध्यस्थपीतपटे तथादर्शनात् । किं च "वह्नेरपत्यं प्रथमं हिरण्य" मित्यागमोऽपि तैजसत्वमस्याहेत्यर्थः ।

ननु पार्थिवं तैजसं च द्रव्यं सुवर्णपदात् सकृदुच्चरितात् कथं प्रतीयेत । तथा च पीतिमाश्रय एव सुवर्णमित्यत आह-- वस्त्विति । मधुरौ ध्वनिरसावित्यत्रेव सकृदुच्चरितमधुरपदाद् यथा उभयधीस्तथेहापीत्यर्थः । ननु सुवर्णे चेदुपलभ्यत एव तदा तदीयं शुक्लभास्वररूपमप्युपलभ्येत अनुपलम्भेऽपि वा सुवर्णमपि नोपलभ्येतेत्याह--भूसंसर्गेति । रूपं न प्रतीयत इति रूपगतं शुक्लत्वं भास्वरत्वं च न प्रतीयत इत्यर्थः । यद्वा रूपमेव (न?) प्रतीयते पररूपोपष्टम्भेन सुवर्णस्योपलम्भ इत्यर्थः । अत्रैव निदर्शनं --स्फटिकस्येति । भूसंसर्ग एवाभिभवो न तु बलवत्सजातीयग्रहण- कृतमग्रहणम् । एवं सत्युल्काप्रकाशवद्रात्रौ सुवर्णोपलम्भः स्यात् । उप-

न्यायलीलावतीप्रकाशः

त्रयोः सुवर्णादस्य भिन्नार्थत्वे कथं सकृदुच्चरितात्ततोऽर्थद्वयधीरि- त्यत आह--वस्तुभेद इति । मधुरौ ध्वनिरसावित्यत्रेवावृत्त्याऽर्थद्वय- धीरित्यर्थः । तर्हि तेजोरूपाद्यप्रतीतिः कुत इत्यत्राह--भूसंसर्गेति । उपष्टम्भकपार्थिवसंसर्गादित्यर्थः । न च "कनकरूपं च"त्यादिना पौनरुक्त्यं तेनाभिभवाभिधानादनेन प्रतिबन्धाभिधानात् । 'अभौमं'

न्यायलीलावतीप्रकाशविवृतिः

त्वात् पार्थिवरूपस्य चालोकाभावेनाग्रहादिति वाच्यम्, वन्हौ रूपं नाभिभूयत इति मत एव निर्भरत्वात् । मधुरौ ध्वनिरसाविति । वस्तुतो भूयःप्रयोगात् सुवर्णपदं पार्थिवे शक्तं तैजसे च लाक्षणिकमिति प्रतिभाति । तेनाभिभवेति । तेन रूपप्रतिबन्धकत्वाभिधानादनेन त[दा?]

---

(१) जपा ।

न चात्यन्तानलसंयोगेऽप्यनुच्छिद्यमानत्वाद्गुरुत्वमप्यभौमं स्यात् । अत्यन्ताग्निसंयोगेन नष्टगुरुत्वस्यैव पुनरुत्पत्त्याविरोधात् काठिन्यवत् । न च द्रवत्वमत्यन्तमुच्छिद्यते । अत्यन्ताग्निसंयोगेऽपि प्रत्यक्षसिद्धत्वात् । गुरुत्वाश्रयस्य भौमत्वे दाहः स्यादिति चेन्न, दाहो यदि भस्मता तदा वज्रेण व्यभिचारः । रूपान्त-

---

न्यायलीलावतीकण्ठाभरणम्

लभ्येत च तत्सन्निकर्षे द्रव्यान्तरमिति भावः । यथा तेजसि पार्थिवद्रवत्ववैधर्म्यात् द्रवत्वं तथा गुरुत्वमपि तथा स्यादित्याशङ्क्याह—न चेति । यथाग्निसंयोगान्नष्टं काठिन्यं पुनरुत्पद्यते तथा गुरुत्वमपि अन्यदुत्पद्यत इत्यर्थः । ननु द्रवत्वस्यापि कथं न पुनरुत्पत्तिस्तथा च स्वरूपासिद्धो हेतुरित्याशङ्क्याह—न चेति । यथा ध्मायमानस्य द्रवत्वमुपलभ्यते न तथा गुरुत्वं येन तन्नाशो न कल्प्यते इत्यर्थः । ननु यदि गुरुत्वाश्रयः पार्थिवं तदाग्निसंयोगाद्दह्येत न च दह्यते तस्मान्न पार्थिवम् । तथा च गुरुत्वमपि तैजसमेवेत्याह—गुरुत्वाश्रयस्येति । एतत्तर्कमूलव्याप्तौ व्यभिचारमाह—दाह इति । ननु गुरुत्वाश्रयपार्थिवस्य रूपपरावृत्तिश्चेद् भवत्येव तदा तदानीन्तनत-

न्यायलीलावतीप्रकाशः

तैजसमित्यर्थः । यद्यपि भौममपि गुरुत्वं नाग्निसंयोगादुच्छिद्यते भस्मदशाया(१)मपि किञ्चिद्गुरुत्वानुभवात् तथाप्यभ्युपगमवादोऽयम् । सुवर्णद्रवत्वमपि काठिन्यवदेव नष्टं पुनरुत्पद्यत इति न विनाशकत्वकालेऽपि तस्याध्यक्षत्वादित्याह—न चेति । 'तदा' कनकद्रवत्वद-

न्यायलीलावतीप्रकाशविवृतिः

श्रयप्रतिबन्धकत्वाभिधानादित्यर्थः । गुरुत्वस्याभौमत्वं क्वाचिदिष्टमेवेत्यत आह—तैजसमिति । भस्मीभावदशायामिति । यद्यपि प्राचीनं गुरुत्वमत्यन्तं नष्टमेव अन्यथा स्वल्पगुरुत्वानुभवविरोधात् तथापि तदाश्रयनाशादेव नष्टं न त्वग्निसंयोगादन्यथा परमाणोरपि तदा गुरुत्वनाशे तदारब्धे भस्मनि तदनुभवविरोधादिति भावः । अपा-

---

(१) भस्मीभावदशायामिति विवृतिधृतः पाठः ।

रापत्तिश्चेद्द्रवत्वयेव न प्रतीयते च तदा [ रूपं, ] तेजोरूपेणाभि-भूतत्वात् । प्राकृतरूपापत्तिस्तु अग्निसंयोगनाशादौषधादासादि-तदाहस्येव देहस्य । [ इति ] तेजः ॥

---

न्यायलीलावतीकण्ठाभरणम्

द्रूपमुपलभ्येतेत्याह—प्रतीयत इति । तेजोरूपेणेति । अग्निरूपेणेत्यर्थः ।

ननु पुनः प्रकृतरूपदर्शनात् मध्यावस्थायामपि तदेव रूपमासीदि-ति लक्ष्यते । तथा च कथं रूपपरावृत्तिलक्षणो दाह इत्यत आह—प्राकृतेति । यथा चित्रकाद्यौषधदग्धशरीरभागे रूपान्तरापत्तावपि चिरेण प्रकृतरूपदर्शनं तथा प्रकृतेऽपीत्यर्थः । अत्र यद्यपि तैजस-स्यापि द्रवत्वस्य तारतम्यदर्शनादग्निसंयोगानुच्छेद्यत्वमसिद्धं पा-

न्यायलीलावतीप्रकाशः

शायाम् । 'तेजोरूपेण' अग्निरूपेणेत्यर्थः । तर्ह्यद्रवदशायां यादृशं रूपमासीत्तादृशं पुनः कथमुपलभ्यत इत्यत आह—प्राकृतेति । अत्रा-पत्तिशब्देन ज्ञानं विवक्षितं अग्निसंयोगाभावस्य रूपान्तराहेतुत्वात् अग्निसंयोगस्यैव तद्धेतुत्वात् । तथा च 'औषधात्' चित्रकादासा-दितदाहस्य देहस्य तन्नाशे यथा पश्चात्प्राकृतरूपं ज्ञायते तथाऽग्नि-संयोगस्य प्राकृतरूपज्ञानप्रतिबन्धकस्य नाशात्प्राकृतं रूपं ज्ञायत इ-त्यर्थः । औषधाभावादितिपाठे दाहप्रतिबन्धकौषधाभावादासादित-दाहस्य देहस्येत्यर्थः ।

अत्र वदन्ति । अत्यन्ताग्निसंयोगानुच्छेद्यं द्रवत्वमसिद्धं घृतादि-वद् द्रवत्वतारतम्यदर्शनेन द्रवत्वोच्छेदात् उपष्टम्भकपार्थिवे व्यभि-चारश्च । न हि तदा तदद्रवमेवास्ते । तैजसत्वसाधने परमाणुभि-र्व्यभिचारोऽसाधारण्यं च । न चोद्भूततैजसत्वे साध्ये सपक्षाभा-वान्नासाधारण्यं अर्थान्तरत्वात् तैजसत्वमात्रे विप्रतिपत्तेः उपष्ट-म्भकभागे विरुद्धत्वाच्च द्रुतपार्थिवस्याप्येवं साध्यत्वापत्तेः व्यति-

न्यायलीलावतीप्रकाशविवृतिः

र्थिवत्वसाधने च वक्ष्यमाणं दूषणमित्याशयेनाह—तैजसत्वसाधन इति । अनित्यत्वं यदि द्रवत्वविशेषणं तत्राह—असाधारण्यं चेति । विरुद्धत्वाच्चेति । साध्यानवगतसहचारः साध्याभावसहचारी हेतुर्विरुद्ध इति लक्षण-मभिप्रेत्येदमुक्तम् । द्रुतपार्थिवस्येति । उपष्टम्भके सपक्षे वृत्त्याऽसाधा-

न्यायलीलावतीकण्ठाभरणम्

र्थिविभागे व्यभिचारि च तदानीं तस्यापि द्रुतत्वात् । यदि च तैजसत्वं साध्यं तदा जलपरमाणौ व्यभिचारः, सपक्षाच्च प्रदीपादेर्व्यावृत्तावसाधारण्यम्, असाधारणनिवृत्तये द्रुततैजसं चेत् साध्यं तदाऽर्थान्तरम्, उपष्टम्भकभागे च विरुद्धम्, विशिष्टे साध्ये विशेषणभागस्य द्रवत्वस्योभयसिद्धत्वात् सिद्धसाधनं पक्षैकदेशे साध्याप्रसिद्धिरतः साध्यांशसिद्धेरपि दोषत्वात् साध्याप्रसिद्धिश्च

न्यायलीलावतीप्रकाशः

रेकव्याप्तेरविशेषात् अंशतः सिद्धसाधनाच्च द्रवत्वस्योभयसिद्धत्वात् अत्यन्तानुच्छेदकपदार्थयोरनिरुक्तेश्च साध्याप्रसिद्धिश्च। न च तेजो द्रवत्ववद् रूपवत्त्वादिति तत्प्रसिद्धिः। घटादौ व्यभिचारात् प्रसिद्धतेजःपक्षत्वे बाधादन्यत्राप्रसिद्धेः। तेजस्त्वं द्रवत्ववृत्ति द्रव्यत्वसाक्षाद्व्याप्यरूपवद्वृत्तिजातित्वात् जलत्ववत् इत्यत्र च रसवद्वृत्तित्वमुपाधिः। न च रसवत्त्वं द्रवत्वसमानाधिकरणात्यन्ताभावप्रतियोगि

न्यायलीलावतीप्रकाशविवृतिः

रण्याभावादिति भावः। अंशत इति। यद्यपि पक्षैकदेशे साध्य[सि?]द्ध्यांऽशतः सिद्धसाधनं न तु साध्यैकदेशसिद्धत्वेन तथापि प्रतीतांशसाधनेऽर्थान्तरमिति साध्यैकदेशसिद्ध्यापि तुल्यं दूषणमिति भावः। साध्येति। द्रुततैजसत्वस्य क्वाप्यदर्शनादिति भावः। द्रव्यत्वेति। घटत्वादौ व्यभिचार इति व्याप्यान्तम्। आत्मत्वादौ व्यभिचार इति रूपवद्वृत्तीति। आत्मघटान्यतरत्वे व्यभिचार इति जातिपदम्। यद्यपि विरुद्धरसारब्धे निरुक्तोपाधेः साध्याव्यापकत्वं स्फुटं तथापि तदपि प्रमाणगम्यमेवेत्याशयेन द्रुतनीरसं(१)साधयति— रसवत्त्वमिति। द्रुतत्वे व्यभिचार इत्यद्रुतवृत्तीति विशेषणम्। द्रव्यत्वपदं रूपित्वपरम्। व्याप्यपदं न्यूनवृत्तिपरमतो न रूपित्वादौ व्यभिचारः। धर्मपदं चेतरनिरूपणाधीननिरूपणान्यपरमतो न द्रुतघटान्यतरत्वे न वा द्रुतघटाविति समूहालम्बनविषयत्वे व्यभिचारः। ननु पक्षस्य समवायघटितत्वेनासिद्धिः समवायभिन्नत्वस्यापि प्रतियोगिदले विशेषणत्वात्।

---

(१) द्रुतनीरसत्वं सा०।

न्यायलीलावतीकण्ठाभरणम्

द्रुततैजसत्वस्य काप्यप्रसिद्धेः। न च तेजस्त्वं द्रवत्ववद्वृत्ति रूपवद्वृत्ति-द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् जलत्ववदित्यनुमानात् द्रुततैजसत्वसिद्धिः, रसवत्त्वस्यानोपाधित्वात्। न चाद्रुतवृत्तिद्रव्यत्वसाक्षाद्व्याप्यधर्म्मत्वेन रसवत्त्वस्य द्रवत्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वं साध्यं तथा च द्रुततेजःसिद्धौ रसवत्त्वं साध्याव्यापकत्वान्नोपाधिरिति वाच्यम्, अत्रापि तेजोमात्रावृत्तित्वस्योपाधित्वात्।

न्यायलीलावतीप्रकाशः

अद्रुतवृत्तिद्रव्यत्वव्याप्यधर्मत्वात् घटत्ववदिति द्रुततेजःसिद्धौ साध्याव्यापकत्वं तेजोमात्रावृत्तित्वस्योपाधित्वात्। न च पक्षेतरत्वं प्रदीपत्वादेरपि व्यावर्त्यत्वात्। अत एवेदमपार्थिवं अत्यन्ताग्निसंयोगानुच्छिद्यमानद्रवत्वात् जलपरमाणुवदिति नानुमानं असिद्धेरुपष्टम्भकभागे व्यभिचाराच्च। द्रवत्वानुच्छेदकाग्निसंयोगवत्त्वं च घटादावनैकान्तिकम्। सुवर्णारम्भकाः परमाणवो न पार्थिवाः अत्यन्ताग्निसंयोगेऽपि भस्मानारम्भकत्वादित्यपि घटादौ व्यभिचारि। परमाणुत्वेन विशेषणे त्वसिद्धिः तैरपि कदाचिद्भस्मारम्भाभ्युपगमात्।

न्यायलीलावतीप्रकाशविवृतिः

मिश्रास्तु धर्मपदं भावपरमतो नान्यतरत्वे व्यभिचारः। वृत्तिश्च विषयतातिरिक्ता विवक्षितेति न समूहालम्बनविषयत्वे व्यभिचार इति वदन्ति।

वस्तुतो रसत्वं द्रवत्वसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकं अद्रुतवृत्तिरूपव्याप्यमात्रवृत्तिजातित्वादित्यत्रोक्तानुमानतात्पर्यम्। यदि च विरुद्धरसारब्धे साध्याव्यापकत्वपरिहाराय रसवद्वृत्तिजातिमत्त्वमुपाधिरित्युच्यते तदोक्तसाध्ये द्रवत्वाधिकरणे विरुद्धरसानारब्धत्वं विशेषणमतो नार्थान्तरमिति दिक्। द्रुततेज इति। तेजःपदं तु नीरसपरम्। उक्तानुमानेन तावत एव सिद्धेः प्रकृतोपयोगाच्च। अत एव वक्ष्यमाणोपाधेरपि न साध्याव्यापकत्वमित्यवधेयम्। साध्याव्यापकत्वं तद्वृत्त्यसमानाधिकरणरसवत्त्वोपाधेरिति शेषः। तेजोमात्रेति। सत्त्वादौ साध्यव्यापकत्वनिरासाय मात्रपदम्। उपष्टम्भकभाग इत्युपलक्षणं वक्ष्यमाणजलमध्यस्थघृतेऽपीति द्रष्टव्यम्। द्रवत्वेति। अत्र च नासिद्धिस्तदुच्छेदकाग्निसंयोगसत्त्वेऽपि तदनु-

न्यायलीलावतीकण्ठाभरणम्

न च पूर्वहेतुना तैजसत्वं न साध्यं किन्त्वपार्थिवत्वं तथा च जन्य-परमाणुरन्वयदृष्टान्त इति वाच्यम्, उपष्टम्भकभागे व्यभिचाराद-ऽसिद्धेश्च । न च सुवर्णारम्भकाः परमाणवो न पार्थिवा अत्यन्ताग्नि-

न्यायलीलावतीप्रकाशः

किञ्च सुवर्णं पार्थिवं(१) अग्निसंयोगासमवायिकारणकद्रवत्वाधि-करणवृत्तिद्रव्यत्वव्याप्यजातिमत्त्वात् घृतवदिति प्रतिरोधोऽपि । न च तेजो नैमित्तिकद्रवत्वसमानाधिकरणतेजस्तदितरावृत्तिजातिमत् शीतस्पर्शासहचररूपवत्त्वात् पृथिवीवदिति तेजसि नैमित्तिकद्रव-त्वसिद्धिः, पृथिवीत्वस्योपाधित्वात् । न च पृथिवीत्वं नैमित्तिकद्रवत्व-

न्यायलीलावतीप्रकाशविवृतिः

च्छेदकस्याग्निसंयोगस्याविरोधादिति भावः । अग्निसंयोगेति । द्रवत्वं विनैव नष्टसुवर्णेऽसिद्धिवारणाय जातिगर्भता । आलोकादौ व्यभि-चार इति द्रवत्वाधिकरणवृत्तीति । सत्तामादाय स एव व्यभिचार इति द्रव्यत्वव्याप्येति । व्याप्यत्वं च भेदगर्भम् । आलोकघृतान्यतर-त्वमादायालोके व्यभिचार इति जातिपदम् । अत्र न तैजसमिति-साध्यस्य पार्थिवमित्यर्थः । तेन जले व्यभिचारवारकत्वेनाग्नीत्यादि-पदसार्थकता । क्वचित्तु पाठ एव तथा । अग्निपदसंयोगासमवायि-पदयोस्तु विकल्पेनान्वये हेतुद्वयं तावतैवादृष्टवदात्मसंयोगं निमि-त्तमादाय जले प्रसक्तस्य व्यभिचारस्य वारणादिति ध्येयम् । धर्मि-पक्षतायां यो विकल्पः स वक्ष्यमाणसाध्येऽपीति आलोकादिपक्ष-तायामप्यक्षतेरित्यभिप्रेत्याह—न च तेज इति । सत्तामादाय सिद्ध-साधनमिति तदितरावृत्तित्वं विशेषणम् । दृष्टान्तसिद्ध्यर्थं तेजस इति । उभयावृत्तित्वं च पृथिवीत्वेऽपीत्यदोषः । न च जातिपदं व्यर्थं तस्य धर्ममात्रपरत्वादनुपादेयत्वाद्धेति मिश्राः ।

अत्रेदं चिन्त्यम् । तथा सति घृतजलान्यतरत्वमादाय जलेऽपि साध्यसत्त्वात्तत्र व्यभिचारवारणार्थं शीतेत्यादिविशेषणवैयर्थ्यमग्रे वाच्यम् । पृथित्वोपाधेश्च जले साध्याव्यापकत्वमिति । वयं तु अवृ-त्तिपदं समवेतपरम् । तथा च घृततेजोऽन्यतरत्वमादाय सिद्धसाधन-वारणाय जातिपदं समवेतपरमुपादेयमिति ब्रूमः ।

(१) सुवर्णं न तैजसं पार्थिवं वेति क्वचित् पाठः । सुवर्णं न तैजसमित्यपि पाठः ।

न्यायलीलावतीकण्ठाभरणम्

संयोगेऽपि भस्मानारम्भकत्वादिति मानम्, घटादौ व्यभिचारात्। न च परमाणुत्वेन विशेषणीयम्, असिद्धेः, न हि ते परमाणवो न भस्मारभन्ते। किं च सुवर्णं पार्थिवं गुरुत्वाश्रयत्वात् पीतिमाश्रयत्वात् नैमित्तिकद्रवत्वाश्रयत्वादित्यादिना प्रतिरोधः। तथापि सुवर्णं तैजसं असति विरोधिद्रवद्रव्यसंयोगेऽत्यन्ताग्निसंयोगानाश्यानित्यद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवमिति व्यतिरेक्यनुमानात् तत्सिद्धिः। न चासिद्धिः द्रवत्वोच्छेदेऽपि द्रवत्वान्तरसामग्रीसमवधानमत्र नि·

न्यायलीलावतीप्रकाशः

समानाधिकरणात्यन्ताभावप्रतियोगि गन्धवन्निर्गन्धवृत्त्यन्यजातित्वात्(१)जलत्ववदिति पृथिवीभिन्ननैमित्तिकद्रवत्वं साध्यते, सकलगन्धववृत्तित्वेन प्रतिरोधात्। सुवर्णं तैजसं सुवर्णं तेजोवृत्ति संयोगवत्त्वादालोकवदित्यपि न, अतैजससुवर्णसंयोगवत्त्वेन प्रतिरोधात्। तेजस्त्वं

न्यायलीलावतीप्रकाशविवृतिः

हेतौ जातौ (२)व्योमादौ च व्यभिचारवारणाय पदद्वयम्।

गन्धवन्निर्गन्धेति। यद्यप्यन्यतरावृत्तित्वगर्भतयैव व्याप्यता तथाप्यखण्डाभावतया न व्यर्थता। प्रयोजनं तु मिलितोपादानस्य स्वरूपासिद्धिदृष्टान्तासिद्धिवारणमेवेति मिश्राः। तत्रेदं चिन्त्यम्। एवं सति जातिपदव्यर्थता। न च नैमित्तिकद्रवत्ववत्त्वे(३) व्यभिचारवारणाय तत्, तेजोनैमित्तिकद्रवत्ववादिमते तत्र प्रथमविशेषणस्यैवाभावात्। तस्माद्गन्धवन्निर्गन्धवृत्तिपदं सत्ताद्रव्यत्वोपलक्षकमिति तदन्यजातित्वं हेतुः। जातिपदं च नैमित्तिकद्रवत्व एवैवं सति व्यभिचारवारकमिति। यद्वा गन्धवत्पदेन पृथिव्या निर्गन्धपदेन च पृथिवीभिन्नसकलद्रव्याभिधानात् सकलद्रव्यावृत्तिजातित्वं हेतुरिति। सकलेति। घटत्वादौ व्यभिचारवारणाय सकलेति(४)। न च विरुद्धगन्धवदारब्धघृतभिन्नत्वे व्यभिचारः, जातित्वेन विशेषणात्। गन्धवत्पदस्य पृथिवीपरत्वाद्वा। न च गन्धवत्पदवैयर्थ्यं स्वरूपासिद्धिवारकत्वादिति वाच्यम्, गन्धवन्निष्ठात्यन्ताभावाप्रतियोगित्वस्याखण्डस्य हेतुत्वादिति

---

(१) निर्गन्धो गन्धायोग्यः। अखण्डाभावे वैयर्थ्याभावेऽपि गन्धवदित्यनतिप्रयोजनकं घटत्वादेरपि दृष्टान्तत्वसम्भवात्। क्वाचित्कं च जातिपदं वृत्तेः समवायरूपताद्योतनाय। इति दीधितिः।

(२) जात्यादौ। (३) द्रवत्वे। (४) घटत्वादिर्व्यभिचार इति सकलपदम्। इत्यपि पाठः।

न्यायलीलावतीकण्ठाभरणम्

यतम्, घृतद्रवत्वे तु न तथा, तत्रात्यन्तनाशस्यैवोपलब्धेः। अत्र तु तारतम्यमात्रानुमेयो नाशः। एवं च द्रवत्वसामग्र्यसमवहिताग्निसंयोगजन्यध्वंसप्रतियोग्यवृत्तिद्रवत्व(त्व?)व्याप्यजातिमद् द्रवत्वं घृतादिद्रवत्वविलक्षणं तैजसत्वे लिङ्गं पर्यवस्यति। तदापि क्वाचित्कीं द्रवत्वसामग्रीमादाय स्वरूपासिद्धिशङ्कया समानाधिकरणपदमप्यत्र प्रक्षिपन्ति।

यद्वा पीतिमगुरुत्वाश्रयो द्रव्यं विजातीयरूपप्रतिबन्धकद्रव·

न्यायलीलावतीप्रकाशः

सुवर्णभिन्नतेजोभिन्नवृत्ति समस्ततेजोवृत्तित्वात् द्रव्यत्ववदित्यत्र तेजोभिन्नवृत्तित्वमुपाधिः।

यत्तु पार्थिवं रूपमत्यन्ताग्निसंयोगादसति विरोध्यन्तरे परावर्त्तते सति तु नेति नियमः, दह्यमानेषु पटादिषु दर्शनेन जलसम्बन्धाच्च तेष्वेवादर्शनेन कार्यकारणभावव्यवस्थितेः। अतः पार्थिवपीतरूपपरावृत्तिप्रतिबन्धकं तेजः सुवर्णमित्युच्यते। तन्न, रूपापरावृत्तिर्नोविनाशः, असिद्धेः तादृशतेजःसंयोगेन पूर्वद्रव्यनाशे रूपनाशस्यावश्यकत्वात्। नापि सजातीयरूपानु·

न्यायलीलावतीप्रकाशविवृतिः

दिक्। सुवर्णभिन्नं यत् तेजस्तद्भिन्नवृत्तित्वं वा साध्यम्। इदं च सुवर्णवृत्तितया (१)वा। तत्रान्त्यस्य बाधात्प्रथममादाय पर्यवसानमित्यर्थः। यद्यपि सुवर्णवृत्तीत्येव सम्यक् तथापि तथा साध्ये द्रुतत्वाभावे निश्चितसाध्याभाववति हेतोः सन्देहेन सन्दिग्धानैकान्तिकमिति विशिष्टं साध्यम्। तच्चाकाशादिवृत्तितयैव द्रुतत्वाभावेऽक्षतमिति वदन्ति। तच्चिन्त्यम्। एवमपि सुवर्णभिन्नतेजस्त्वे व्यभिचार[एव]सन्देहात्। यदि चोक्तानैकान्तिकस्य पक्षताघटकसन्देहाधानतया(२) अतादृशव्यभिचारज्ञानस्यैव दूषकतया न तस्य दूषणता तदा पूर्वोक्तव्यभिचारसन्देहोऽपि तथेति। तस्माद्यथोक्तविशेषणविशेष्यभावे न वैयर्थ्यमित्येव सम्यक्।

तेजोभिन्नेति। अत्र द्रव्यपदमविवक्षितार्थमतो न रूपादौ साध्याव्यापकता। यदि च साध्येऽपि द्रव्यपदं तदा यथाश्रुतमेव

(१) तेजोभिन्नवृत्तितया वेत्यधिकं द्वितीयपुस्तके। (२) ०कसन्देहाभिमततया।

न्यायलीलावतीकण्ठाभरणम्

द्रव्यसंयुक्तमत्यन्ताग्निसंयोगेऽपि पूर्वरूपविजातीयरूपानाधारपार्थिवत्वात् क्वथ्यमानजलमध्यस्थपीतपटवत् । न चाप्रयोजकं पीतिमाश्रयो द्रव्यं यदि पूर्वरूपविजातीयरूपप्रतिबन्धकद्रवद्द्रव्यसंयुक्तं न स्यात् पूर्वरूपविजातीयरूपवत् स्यादित्यनुकूलतर्कस्य सत्त्वात् ।

न्यायलीलावतीप्रकाशः

वृत्तिः सन्तानाविच्छेदो वा, पार्थिवावयविनि व्यभिचारात्(१)। पृथिव्यामपि तयोर्बहुश उपलम्भात्, पृथिवीवैधर्म्यवत्तेजोवैधर्म्यस्याप्यप्रकाशकत्वादेर्भावात्(२)। किञ्च(३)अपार्थिवत्वे साध्ये अग्निसंयोगाविनाश्यरूपाधिकरणत्वमनैकान्तिकमसिद्धं च(४)।अत्यन्ताग्निसंयोगनाश्यरूपाधिकरणवृत्तिपृथिवीत्वव्याप्यजातिशून्यत्वं च (५) पार्थिवपरमाणौ व्यभिचारि, तत्र पृथिवीत्वव्याप्यजात्यनङ्गीकारात्। अत्यन्ताग्निसंयोगजन्यरूपाधाराधृत्तिजातिमत्त्वं चासिद्धम्, दाहेन रक्तसारतादर्शनात्। तादृशं रूपमभिभावकस्येत्यत्र मानाभावात् ।

न्यायलीलावतीप्रकाशविवृतिः

सम्यगिति ध्येयम् । व्यभिचारादिति । विरोधिद्रवद्द्रव्यसम्बन्धस्येति शेषः। तथा च यथा सत्यप्यग्निसंयोगे विरोधिद्रवद्द्रव्यसम्बन्धं विनापि घटादौ सजातीयरूपानुवृत्त्यादिस्तथा प्रकृतेऽपि स्यादित्यर्थः । नन्वनुच्छिद्यमानद्रवत्वेनैवापृथिवीत्वं साध्यं तथा सति प्रकाशकत्वाभावेनातेजस्त्वस्यापि सिद्धापत्तेरित्याह—पृथिवीति। अनैकान्तिकमिति। अवयविनीति शेषः । यदि च पाकेनावयविन्यपि रूपपरावृत्तिरुपेयते तत्राह—असिद्धं चेति । दाहेन रक्तसारतादर्शनादिति भावः । अत्यन्तेति । सत्ताधिकमादायासिद्धिरिति पृथिवीत्वव्याप्येति । विशिष्टाभावतया चाव्यर्थता । परस्य पृथिवीत्वव्याप्यजातिः सुवर्णत्वमेव पक्ष इति वृत्त्यन्तम् । सुवर्णं त्वग्निसंयो-

---

(१) नैयायिकनय इति शेषः । (२) महत्त्वोद्भूतरूपवत्त्वे सत्यप्रकाशकत्वं तेजोवैधर्म्यमिति भावः। (३) द्रवत्वविशेषेणेव रूपविशेषेणापि केषांचिदपार्थिवत्वं दूषयति—किञ्चेति । इति दीधितिः ।

(४) विनाश्यत्वं विनाशोपधानं तद्योग्यता वा आद्येऽनैकान्तिकता। आमविनष्टे घटादौ। द्वितीयेऽसिद्धत्वं पाकेन रूपतारतम्यस्यानुभवसिद्धत्वात् । इति दीधितिः ।

(५) संयोगजन्यरूपाधाराधृत्तिजातिमत्त्वमर्थः। इति दीधितिः ।

न्यायलीलावतीप्रकाशः

अत्रोच्यते। विवादाध्यासितं द्रवत्वाधिकरणं तैजसं असति विरोधिद्रवद्रव्यसम्बन्धे अत्यन्ताग्निसंयोगानुच्छेद्यानित्यद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवं यथा घृतम्। न चासिद्धिः, घृते हि द्रवत्वोच्छेदकाले समानाधिकरणद्रवत्वसामग्रीसमवधानं नास्ति सुवर्णे त्वस्ति। एवं च समानाधिकरणद्रवत्वसामग्र्यसमवहिताग्निसंयोगजन्यध्वंसप्रतियो-

न्यायलीलावतीप्रकाशविवृतिः

गानाश्यरूपाधिकरणमिति भावः। न चैतन्मते परमाणुरूपस्यैवाग्निसंयोगनाश्यतया तादृशरूपाधिकरणवृत्तिपृथिवीत्वव्याप्यजात्य(१)सिद्धिः, न्यायमतेनैवास्याभिधानात्। तन्नाश्यत्वेन तत्प्रयोज्यनाशप्रतियोगित्वस्य विवक्षितत्वाद्वा। न च दाहेन रक्तसारतामात्रदर्शनादन्यतरासिद्धिनादवस्थ्यम्, व्यभिचारवत्तस्या अपि दोषत्वेनाभिप्रेतत्वात्। क्वचित्तु (२)अग्निसंयोगाविनाश्येति पाठः। सुवर्णे त्वग्निसंयोगनाश्यरूपाधिकरणमेवावयविपाकमतेनैवास्याभिधानादिति नासिद्धिरित्याहुः। असतीति। क्वथ्यमानजलमध्यस्थितघृते व्यभिचार इति प्रथमविशेषणम्। अवयवात्मकद्रवद्रव्यसम्बन्धमादायासिद्धिरिति विरोधीति। स्वल्पाग्निसंयोगवति घृते व्यभिचार इति अत्यन्तेतिविशेषणम्। जलपरमाणौ व्यभिचार इत्यनित्येति। संख्यादिकमादाय घटादौ व्यभिचार इति द्रवत्वेति। जलावयविद्रवत्वं चाग्निसंयोगनाश्यमेवेति न जलावयविनि व्यभिचारः। समवधानं समवधाननियमः। केचित्तु घृतसुवर्णयोरग्निसंयोगनाश्यानाश्यत्वाभ्युपगमेनेदमिति च घृते व्यधिकरणद्रवत्वसामग्रीसमवधानेऽपि समानाधिकरणद्रवत्वसामग्रीसमवधानं नास्तीत्याहुः(३)। सुवर्णे त्विति। अग्निसंयोगनाश्यद्रवत्वोच्छेदसमय इति शेषः। जलसंयोगजन्यद्रवत्वोच्छेदसमये तादृशसामग्रीविरहादिति भावः। एवं चेति। न च नव्यं द्रव्यं अग्निसंयोगेन द्रवत्वनाशानन्तरं घृते द्रवत्वान्तरजननपक्षे तत्रैव व्यभिचारवारकत्वात्। तदनभ्युपगन्तृमतेऽपि तेजःसंयोगजन्यतावच्छेदकजातिमादाय तत्रैव तथात्वात्। न च तन्मते तादृशसामग्रीसमवहिताग्निसंयोगजन्यध्वंसप्रतियोगिद्रवत्वादित्येव स-

(१) जात्यप्रसिद्धः। (२) केचित्तु। (३) स्तीत्यर्थः।

न्यायलीलावतीप्रकाशः

ग्यवृत्तिद्रवत्वत्वव्याप्यजातिमद्द्रवत्वं हेतुः । उपष्टम्भके च न द्रवत्वं पार्थिवद्रवत्वस्याग्निसंयोगेनोच्छेदापत्त्या बाधकेन द्रुतप्रतीतेर्भ्रमत्वात् । न चैवं पीतिमगुरुत्वाश्रये काठिन्योपलम्भापत्तिः, जलमध्यस्थितमसीक्षोदादेरिव द्रवद्रव्यसम्बन्धेन प्रशिथिलसंयोगवत्त्वात् । जलपरमाणौ च नानित्यं द्रवत्वम् । न चासाधारण्यं अगृह्यमाणविशेषदशायां तस्य दोषत्वात् । तथा हि साध्याभाववद्व्यावृत्तत्वस्येव साध्यवद्व्यावृत्तत्वस्यापि सत्त्वात् सत्प्रतिपक्षोत्थापकतया तस्य दोषत्वम् । न च साध्याभावसाधकस्य पृथिवीत्वासिद्धिपर्यवसायिनस्तुल्यबलत्वं अनुकूलतर्कविरहेणात्यन्ताग्निसंयोगात् द्रवत्वोच्छेदात्मकप्रतिकूलतर्केण च तस्य हीनबलत्वात् । तेजस्त्वसाधकस्य चानुकूलतर्कप्रतिकूलतर्काभावाभ्यामधिकबलत्वात् । यद्यपि सांशयिकत्वेनासाधारण्यस्य दोषत्वं तदापि विशेषादर्शनसहकृतस्य तथात्वम् । प्रकृते चोक्ततर्कस्य विशेषदर्शनस्य सत्त्वात्तदभावात् ।

न्यायलीलावतीप्रकाशविवृतिः

व्यगिति वाच्यम्, यथोक्ते वैयर्थ्याभावात् । गुरुत्वादिकमादाय घटे व्यभिचारवारणाय द्रवत्वव्याप्यपदम् । व्याप्यपदद्रवत्वपदयोर्विकल्पेनान्वये हेतुद्वयम् । जलावयविद्रवत्वं चाग्निसंयोगनाश्यमेवेति मतेनायं हेतुरतो न जलावयविनि व्यभिचारः । द्रवत्वपदं नैमित्तिकद्रवत्वपरमित्येके । सुवर्णे चरमद्रवत्वनाशकाले यद्यपि तादृशसामग्री नास्ति तथापि स नाशो नाग्निसंयोगजन्य इति विशिष्टाभावगर्भहेतुसिद्धिरविकला । अत्र चानित्यपदं असतीत्यादिपदं च न प्रयोज्यं तदनन्तर्भावेणैव साधुत्वात् । द्रवत्वनाशकाग्निसंयोगस्य समानाधिकरणतादृशद्रवत्वसामग्रीसमवधानं पीलुपाकमते परमाणौ न्यायमते त्ववयविन्यपीति दिक् ।

उपष्टम्भकस्य विजातीयतया तद्द्रवत्वस्य सुवर्णद्रवत्वतुल्यतामभिप्रेत्याह—उपष्टम्भक इति । जलपरमाणाविति । एतदपि यथाश्रुतहेत्वभिप्रायकम् । अगृह्यमाणेति । इदं च यथाश्रुतहेत्वभिप्रायेण समाधानम् । यदि च तादृशद्रवत्वसमानाधिकरणद्रव्यत्वव्याप्यजातिमत्त्वे हेतौ तात्पर्यम्, तदालोकादिव्यावृत्त-

ननु वायुसत्त्वे किं मानम्, अध्यक्षमनुमानं वा । नाद्यः,

---

न्यायलीलावतीकण्ठाभरणम्

नन्विति । नीरूपे स्पर्शाश्रयत्वे किं मानमित्यर्थः । मीमांसकमते मानमध्यक्षमिति । नैयायिकमतेनोत्तरमनुमानमिति । पूर्व्वपक्षिण एव

न्यायलीलावतीप्रकाशः

किञ्च पीलिमगुरुत्वाश्रयो द्रव्यं यद्यत्यन्ताग्निसंयोगिपार्थिवत्वे सति विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयोगि स्यात् पूर्वरूपविजातीयरूपवत् स्यात् अग्निसम्बद्धपटवदिति स्थिते प्रयोगः--अत्यन्ताग्निसंयोगिपीतिमाश्रयो द्रव्यं विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्त प्रहरपर्यन्तमग्निसंयोगे सति पूर्वरूपविजातीयरूपानाधारपार्थिवत्वात् जलमध्यस्थिताग्निसंयुक्तपीतपटवत् । न चाप्रयोजकत्वं विरोधिद्रव्यसम्बन्धं विना पार्थिवेऽत्यन्ताग्निसंयोगस्य पूर्वरूपविजातीयरूपजनकत्वादित्यस्माकं पैतृकी राद्धान्तसरणिः ।

नन्विति । पृथिव्यप्तेजोभिन्नस्य स्पर्शाधारत्वे किं मानमित्यर्थः ।

न्यायलीलावती[प्र]काशविवृतिः

त्वनिश्चयाभावान्नासाधारण्यमित्यवधेयम् । किं चेति । अन्यसंयुक्तजले पटेऽपि व्यभिचारवारणायाद्यविशेषणद्वयम् । जलमध्यस्थघृते व्यभिचारवारणाय विजातीयेति । प्रहरेति । अत्र रूपानाधारत्वं पीतरूपानाधारत्वम् । अन्यथा सजातीयरूपवति भस्मादौ व्यभिचार इत्यवधेयम् । अत एव दृष्टान्ते पीतत्वग्रहणमपि सङ्गच्छते । अत्र चावयविपाकमतेऽवयविनः पीलुपाकमते परमाणोरेव पक्षता । तन्मते द्रवद्रव्यसम्बन्धस्यावयविनाशप्रतिबन्धकत्वेऽपि तद्रूपोत्पत्तिप्रतिबन्धकत्वाभावात् । यद्यप्यनेनापि तेजस्त्वं नायाति तथापि रूपवत्त्वेन वायुत्वे निरस्ते नैमित्तिकद्रवत्वेन जलत्वनिरासे अनुच्छिद्यमानद्रवत्वेन पृथिवीत्वनिरासे धर्म्मिकल्पनात इति न्यायेन दशमद्रव्यत्वनिरासे परिशेषात् तेजस्त्वमिति भावः ।

सिद्धसिद्धिव्याघातभयादाह—पृथिवीति । परस्य प्रत्यक्षत्वमात्रं न साध्यम्, अपि तु बहिरिन्द्रियप्रत्यक्षत्वमेव, तत्रैव परेण स्पर्शवत्त्वप्रयोजकत्वस्वीकारादिति तदभावसाधनमेव सम्यगित्यरुचे-

अरूप(१)द्रव्यत्वात्। नेतरः, (२)लिङ्गाभावात्। स्पर्शादिचतुष्कं

न्यायलीलावतीकण्ठाभरणम्

एकग्रन्थेन वा विकल्पः। अरूपीति। आत्मभिन्नारूपिद्रव्यत्वात्। चतुष्कमिति। स्पर्शः शब्दो धृतिः कम्पश्चेत्यर्थः। आद्यस्यान्यथासिद्धि-

न्यायलीलावतीप्रकाशः

अरूपेति। बाह्येन्द्रियाप्रत्यक्षत्वस्य साध्यत्वान्नात्मनि व्यभिचारः। आत्माभिन्नत्वेन हेतुर्विशेष्य इत्यन्ये। ननु वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्। न च साधनावच्छिन्नसाध्यव्यापकं रूपवत्त्वमुपाधिः स्पार्शनप्रत्यक्षत्वे तस्याप्रयोजकत्वान्महत्त्वे सत्युद्भूतस्पर्शस्यैव तन्त्रत्वात्, न तूद्भूतरूपवत्त्वे सति गौरवात्। ऊष्मादेश्च स्पार्शनत्वान्न व्यभिचारः। न च वायोः प्रत्यक्षत्वे तद्गतसंख्यादिप्रत्यक्षत्वापत्तिः व्यक्तौ व्यभिचारात् पृष्ठलग्नवस्त्रादिव्यक्तेः संख्याद्यप्र-

न्यायलीलावतीप्रकाशविवृतिः

त्याह—अन्य इति। वायुरिति। हेतूकर्त्तव्यधर्म्माश्रय इति शेषः। तेन न भागबाधासिद्ध्योः प्रसङ्गः। प्रत्यक्ष इति। स्वातिरिक्ताविशेष्यकसाक्षात्कारकजनक इत्यर्थः। तेन न सामान्यादिप्रत्यासत्तिजप्रत्यक्षमादायार्थान्तरम्। स्वविशेष्यकप्रत्यक्षजनकत्वेऽपि वायुघटितसंयुक्तसमवेतविशेषणतात्मक(३)प्रमेयत्वघटिता यत्र प्रत्यासत्तिस्तत्र तज्जन्यप्रत्यक्षविषयतामादायार्थान्तरमेवेति नञ्द्वयगर्भं साध्यम्। निर्विकल्पकविषयत्वमेव साध्यमिति मिश्राः। संयोगमात्रप्रत्यासत्तिजन्यज्ञानविषयत्वं साध्यमित्यन्ये(४)। वस्तुतो ज्ञानव्यतिरेकाप्रयुक्तव्यतिरेकप्रतियोगिज्ञानविषयत्वं साध्यम्। प्रत्यक्षेति। यथा साध्ये प्रत्यक्षत्वं निरुक्तं तथैव हेतौ प्रवेश्यमन्यथा व्यभिचारापत्तेः। न चाश्रयत्वमधिकं स्पर्शवत्सम्बन्धस्याहेतुत्वाविरोधात्। अत्र प्रत्यक्षत्वं स्वरूपयोग्यतामात्रं फलोपधानस्य शीतो वायुरित्यादावभावेन प्रत्यक्षत्वाप्रयोजकत्वात्। साधनेति। साधनैकदेशेत्यर्थोऽन्यथा वैयर्थ्यात्। वस्तुतः साधनादेरवच्छेदकत्वं सामानाधिकरण्यमात्रमिति न लाघवगौरवावतारः। तद्विषयं प्रत्यक्षविषयत्वं शङ्कते—तस्यापीति।

(१) अरूपिद्र०। (२) नापरः। (३) तात्मिका म०। (४) मित्यपरे।

न्यायलीलावतीप्रकाशः

हेऽपि त्वचाग्रहात् तज्जातीये च फूत्कारादौ संख्यादिग्रहात्। न च प्रत्यक्षविषयत्ववत् बहिरिन्द्रियजन्यतद्विषयत्वमपि नैकरूपाव-च्छेद्यं सति सम्भवे बाधकाभावे च त्यागायोगात् तथापि नादूभूत-स्पर्शवत्वं तथा चन्द्रमहसि तदभावात्। नापि जन्येन्द्रियग्राह्यविशे-षगुणवत्त्वं कार्यमहत्त्वसमानाधिकरणविशेषगुणवत्वं वा रसनगत-पित्तद्रव्यस्योद्भूततिक्तरसस्य वायूपनीतसुरभिभागस्य च प्रत्यक्ष-त्वापत्तेः, किं तूद्भूतरूपवत्त्वं तथेति चेन्न, नयनगतपित्तद्रव्यस्य प्रत्यक्षत्वापत्तेः। अथ वायुर्यदि स्पार्शनप्रत्यक्षविषयद्रव्यं स्यादुद्भू-तरूपः स्यात् न चैवं तस्मान्न तथा तादृशद्रव्यस्य रूपजनकत्वनिय-मादिति चेन्न, रूपवत्समवेतद्रव्यत्वस्य तत्प्रयोजकत्वात्। तादृशप्र-त्यक्षविषयत्वस्य रूपजननोत्तरभावितया तत्रातन्त्रत्वात्। घटो यदि चक्षुरितरेन्द्रियग्राह्यद्रव्यं स्यादरूपमचाक्षुषं स्यान्न चैवं तस्मान्न त-थेति घटस्याप्यस्पार्शनत्वापत्तेः। अत्राहुः। चलति पक्षिकाण्डादौ पूर्वदेशविभागोत्तरदेशसंयोगयोरप्रत्यक्षत्वे चलतीतिधीस्तल्लिङ्गिका-पि न स्यात् पूर्वदेशोत्तरदेशयोः प्रभामण्डलयोरनुद्भूतस्पर्शत्वेना-

न्यायलीलावतीप्रकाशविवृतिः

जन्येति। व्योमादिवारणाय जन्येति। जन्यशरीरादिग्राह्यशब्दवत्तया स एवातिप्रसङ्ग इति इन्द्रियेति। ग्राह्यो लौकिकप्रत्यक्षविषयस्तेन नो-पनीतभानमादाय व्योमादावतिप्रसङ्गः। कार्येति। आत्मन्यतिव्याप्तिवा-रणाय कार्यमहत्त्वपदे। एकैकेन तदवारणात्। घटात्मसंयोगमादाय तत्रैवातिव्याप्तिवारणाय विशेषपदम्। न चैवमपि चक्षुरादावतिप्रस-क्तिः विशेषगुणपदेन गुणविशेषस्य प्रत्यक्षगुणस्योक्तत्वात्। नयनगतेति। तत्र रूपमेव गृह्यते न तु तदाश्रयो द्रव्यमिति स्वमतेन, न्यायप्राच्य-मतावलम्बनेन वेदमन्यथेष्टापत्तेः। अन्यथेति। अत्र विषयत्वं तद्विशेष्य-त्वम्। उद्भूतरूपः प्रत्यक्षरूपः, तेन रूपवत्समवेतत्याद्यग्रिमग्रन्थवि-रोधो न। अन्यथा परमाणावभावेन रूपवत्समवेतत्वस्य(१) उद्भूरूप-जनकतायामप्रयोजकत्वेन तद्विरोधापत्तेः। रूपवत्समवेतत्वमुद्भूत-रूपवत्समवेतत्वं तेन द्व्यणुके व्यभिचारः। चलतीति। तथा चोद्भूतरू-पवत्त्वमेव प्रयोजकमिति वायुरप्रत्यक्षः। न चैवं चान्द्रप्रभासंख्यादि-

(१) अन्यथा परमाणुत्वाभावेन रूपवत्समवेतजन्यत्वस्य उद्.।

न्यायलीलावतीप्रकाशः

प्रत्यक्षत्वात्। न च पूर्वोत्तरदेशानुपलम्भोपलम्भाभ्यां तयोरनुमानं पूर्वोत्तरदेशयोरप्रत्यक्षत्वेन लिङ्गासिद्धेरित्युद्भूतस्पर्शवत्त्वं(१) तत्राप्रयोजकम्। अथ शीतो वायुरित्याद्यारोपो न स्पार्शनः विशेष्यस्यायोग्यत्वात्। न च प्रमायां तथा सामान्ये बाधकाभावात्। न चानुमानोपनीतवायौ त्वगुपनीतस्पर्शस्य मनसारोपः, तल्लिङ्गस्पर्शादिचतुष्काग्रहणात्। शीतस्पर्शस्यातल्लिङ्गत्वात्। न च शीतद्रव्योपनायकत्वेनानुमिते वायौ मनसा शीतारोपः, तदा शीतस्पर्शानाश्रयत्वेन प्रमिते वायौ तदनारोपात्। न च स्वप्नविभ्रमवन्मानसोऽयं भ्रमः, वहिरिन्द्रियव्यापारानुविधानात्। मैवम्। यथा हि वायुवैधर्म्येण जलवृत्तितया गृहीतस्य शीतस्पर्शस्य वायावारोपः, दिङ्मोहवद्दोषमाहा-

न्यायलीलावतीप्रकाशविवृतिः

त्म्यात्। विष्वग्विसारि(स?)जातीयसम्बन्धस्य दोषस्य(२) प्रतिबन्धकत्वात्। अन्यथा सौरप्रभासंख्याग्रहापत्तेस्तत्रापि तुल्यत्वात्। अत्र वदन्ति। चाक्षुषत्वे उद्भूतरूपवत्त्वं स्पार्शनत्वे उद्भूतस्पर्शवत्त्वं वहिरिन्द्रियप्रत्यक्षे द्रव्यग्राहकवहिरिन्द्रियव्यवस्थापकगुणवत्त्वं प्रयोजकमस्तु यद्विशेषयोरिति न्यायादिति। अत्र ब्रूमः। वहिरिन्द्रियाणां द्रव्यग्राहकत्वं द्रव्ये वहिरिन्द्रियग्राह्यत्वबुद्धिवेद्यं तच्च ग्राह्यत्वमवच्छेदकं विना दुर्ग्रहमिति तत्त्वेन उद्भूतरूपवत्त्वमेव कल्प्यते चलतीतिप्रतीत्यनुरोधात्। यदि च रूपेण प्रभामनुमाय तद्देशोपलम्भानुपलम्भाभ्यां चलतीतिधीः तदा तूभयमपि प्रयोजकं विनिगमकाभावात्, तथापि वायुरप्रत्यक्ष एव। यत्तूद्भूतगुणवत्त्वमेव सामान्यप्रयोजकमतिप्रसङ्गभङ्गश्च विशेषसामग्र्यैव उद्भूतत्वं च मूर्तविशेषगुणमात्रवृत्तीति आकाशाद्यवृत्तितया न नित्यंस्येत्यादिव्याप्तिविरोध इति। तन्न। विशेषकारणतावच्छेदकानाक्रान्तवृत्तेः सामान्यकारणतानवच्छेदकत्वात्। अन्यथेन्द्रियत्वमपि साक्षात्कारहेतुतावच्छेदकं न स्यात्। द्रव्यत्वस्यैव लाघवेन तथात्वान्नित्यस्येत्यादिव्याप्तिस्वीकारपक्षेऽपि सर्वत्र सामान्यकारणताया जन्यप्रमेयत्वेनैवावच्छेदसम्भवात। न च द्रव्यसाक्षात्कार इव वहिरिन्द्रियद्रव्यसाक्षात्कारेऽप्यननुगतमेव प्रयोजकमिति वाच्यम्, सति सम्भव

(१) तद्रूपवत्त्वं।

(२) दोषस्येति द्वितीयपुस्तके नास्ति।

लिङ्गमिति चेन्न, स्पर्शस्य धराश्रयत्वेनाप्युपपत्तेः। रूपाभावान्नैव मिति चेन्न, उष्णस्पर्शशीतस्पर्शयोरपि वायवीयत्वापत्तेः। तयोर·

---

न्यायलीलावतीकण्ठाभरणम्

माह—स्पर्शस्येति। पृथिव्या एवानुद्भूतरूपायाः स्पर्शोऽयमनुभूयत इत्यर्थः। अन्यथासिद्धिमेव दूषयितुं शङ्कते—रूपेति। पार्थिवस्पर्शो रूपनियतो रूपं च नानुभूयत इति स्पर्शोऽपि नायं पृथिव्या इत्यर्थः। उष्मणः स्पर्शो विषक्तावयवजलस्पर्शोऽपि रूपासहचरत्वाद्वायवीय एव स्यादेवमित्याह—उष्णेति। तयोरिति। उष्णशीतस्पर्शसहचररूपयो-रित्यर्थः। तथा च शीतोष्णस्पर्शसहचरं रूपमस्त्येवेति भावः। तर्हि

न्यायलीलावतीप्रकाशः

स्यात्, तथा शीतस्पर्शे वायुलिङ्गत्वारोपाद्वायवीयत्वानुमानम्। न चैवं शीतोऽयं वायवीय इति धीः स्यात् तदनन्तरं शीतो वायुरिति मानसारोपादिति संक्षेपः।

उद्भूतपार्थिवस्पर्शस्य उद्भूतरूपसामानाधिकरण्यनियमादाह—रूपाभावादिति। रूपासहचरस्पर्शस्य वायवीयत्वे उष्णो वायुरित्यादिप्रतीतेरुष्णस्पर्शाश्रयोऽपि वायुः स्यात्। अनुद्भूतरूपाश्रयस्य तेजः प्रभृतेरुद्भूतस्पर्शानाश्रयत्वनियमादाह—उष्णस्पर्शेति। तयोरिति। उष्ण-

न्यायलीलावतीप्रकाशविवृतिः

इति न्यायात्। न च द्रव्यसाक्षात्कारमात्रे रूपवत्त्वस्य प्रयोजकत्वे आत्मनोऽप्रत्यक्षत्वापत्तिः। तथा च साक्षात्कारिमिथ्याज्ञाननिवृत्तये तत्त्वसाक्षात्कारपर्यन्तध्यानानुपपत्तेः। विस्तरश्चास्य "प्रत्यक्षप्रकाशे"।

तथा शीतस्पर्श इति। शीतस्पर्शवृत्तिधर्मे वायवीयत्वव्याप्यत्वारोपात् तेन वायवीयत्वानुमानमित्यर्थः। न चानुमाने विरोधिज्ञानमात्रस्य प्रतिबन्धकतया वायुवृत्तित्वग्रहे कथं वायवीयत्वानुमितिरिति वाच्यम्, अनुमानपदेन व्याप्यदर्शनोत्तरभावित्वाचवायवीयत्वप्रत्यक्षस्यैवाभिलापात्। तत्र चानुमानिकविरोधिज्ञानस्याप्रतिबन्धकत्वात्, संशयोत्तरभाविप्रत्यक्षाभिप्रायेण लिङ्गत्वारोपस्याप्युपयोगादिति दिक्। मानसारोपादिति। न च मानसस्यापि विरोधिज्ञानमात्रनिवर्त्यतया कथमेवमिति वाच्यम्, प्राथमिकत्वाचप्रत्यक्षेण विरोधिज्ञानव्याहतेरिति संक्षेपः।

नुद्भूतरूपत्वा(१)दग्रहणमिति चेत्, तुल्यमनुष्णाशीतेऽपि(२)। शब्दोऽपि चोद्भूतस्पर्शवद्वेगवत्पृथिवी(३)द्रव्याभिघातज एव स्यात्। गन्धरूपयोरग्रहणात् नैवमिति चेन्न, अनुद्भूतत्वेनापि तयोरुपपत्तेः। अप्रतीघातान्नैव पार्थिवमिति चेन्न, धूमवदुपपत्तेः। अप्रतीयमानरसत्वान्नैवमिति चेन्न, अनुद्भूतत्वेन जले द्रवत्वाप्रतीतिवदुपपत्तेः। गुरुत्वाभावान्नैवमिति चेन्न, तदसिद्धेः। अपातात्तत्सिद्धिरिति चेन्न, वेगेनैव काण्डादिवदपातसम्भवात्। तस्य [च] सदागतिमत्त्वेन वेगत्यागाभावात्। अन्यथा वायूपनीतजलानलपृथिवीनामपि प्रतीतिवैलक्षण्यात्

---

न्यायलीलावतीकण्ठाभरणम्

वायवीयत्वाभिमतोऽपि स्पर्शोऽनुद्भूतरूपसहचरः पार्थिव एवेत्याह—तुल्यमिति। द्वितीयहेतोरन्यथासिद्धिमाह—शब्दोऽपीति। स्पर्शवद्वेगवद्द्रव्यं पृथिव्येवेति भावः। अनुद्भूतत्वेनापीति। तयोर्गन्धरूपयोरनुद्भूतत्वेनाप्यग्रहणोपपत्तेरिति योजना। 'प्रतीघातः' पार्थिवो धर्म्मः, स च विवादाध्यासिते नोपलभ्यते इति नेयं पृथिवीत्याह—अप्रतीघातादिति। धूमवदिति। कुड्यादिना च धूमवद्वायोरपि न प्रतीघात एवेति भावः। यद्वा अप्रतीघातादिति। नानेन किञ्चिद् द्रव्यं प्रतिहन्यत इत्यर्थः। जल इति। विषक्तावयवे करकायामित्यर्थः। तदसिद्धेरिति। गुरुत्वाभावासिद्धेरित्यर्थः। गुरुत्वकार्य्यपतनाभावात् गुरुत्वाभाव इत्याह—अपातादिति। गुरोरपि वेगवतोऽपातदर्शनात् अपातो न गुरुत्वाभावे हेतुरित्याह—वेगेनेति। तर्हि काण्डवत् कदाचित् पतनं स्यादित्यत आह—तस्येति। किं च किञ्चिद्वैधर्म्याधीनं प्रतीतिवैलक्षण्यमतन्त्रमत आह—अन्यथेति।

न्यायलीलावतीप्रकाशः

शीतस्पर्शाश्रययोरनुद्भूतरूपत्वादग्रह इत्यर्थः। तुल्यमिति। अनुष्णाशीतस्पर्शाश्रयपृथिव्यपि तत एव न गृह्यत इत्यपि स्यादित्यर्थः। द्रव्याभिघातजः अनुद्भूतरूपोद्भूतस्पर्शपृथिव्यभिघातज इत्यर्थः। जल इति। रसनेन्द्रियाद्यावित्यर्थः। वेगत्यागेत्युपलक्षणं कदाचित्पतनेऽपि न दोष इति द्रष्टव्यम्। अन्यथेति। उक्तन्यायेन पृथिवीत्वसम्भवेऽपि द्रव्या-

---

(१) नुद्भूतत्वादग्र.। (२) शीतस्पर्शेऽपि। (३) ०वद्द्रव्या.।

द्रव्यान्तरताप्रसङ्गात्। कल्पनालाघवाद्धर्ममात्रमुपकल्प्यते न तु धर्मीति चेत्, तुल्यं वायावपि। धृतिरपि तत्संयोगादेवोपपत्स्यते(१)। ब्रह्माण्ड इव वा पारमेश्वरयत्नादेव स्यात्। कम्पोऽप्येतेन व्याख्यातः। वह्नेस्तेजोविशेषस्योर्द्धगमननियमवत् भुवोऽपि तिर्यग्गतिरुपपत्स्यते(२)। अत एव मेघादिप्रेरणं व्याख्यातम्। जठरानलवच्च(३) पार्थिवः कश्चिदन्तःशरीरसञ्चारी प्राणः स्यादिति न वायुसिद्धिः।

---

न्यायलीलावतीकण्ठाभरणम्

ननु वायूपनीतानां जलादीनामनुद्भूतरूपवत्त्वमात्रं कल्प्यते न तु द्रव्यान्तरत्वं कल्प्यते धर्मिकल्पनातो धर्मकल्पनाया लघुत्वादित्याह—कल्पनेति। तर्हि वायुरप्यनुद्भूतरूपा पृथिव्येवास्तु किं द्रव्यान्तरकल्पनयेत्याह—तुल्यमिति। तृतीयलिङ्गमन्यथासिद्धमाह—धृतिरपीति। तत्संयोगादिति। अनुद्भूतरूपोद्भूतस्पर्शपृथिवीसंयोगादित्यर्थः। ब्रह्माण्ड इवेति। यथा परमेश्वरस्य विधारकप्रयत्नाद् ब्रह्माण्डस्थितिस्तथा मेघादिधृतिरपि स्यादित्यर्थः। तथा च श्रुतिः "एतस्य प्रशासने गार्गि द्यावापृथिव्यौ" विधृते तिष्ठत इति भावः। चतुर्थं वायुलिङ्गमन्यथासिद्धमाह—कम्पोऽपीति। अनुद्भूतरूपोद्भूतस्पर्शपृथिवीकृत एव तृणादौ कम्प इत्यर्थः। ननु तिर्य्यग्गमनं पृथिव्यादिवैधर्म्यं वायोर्द्रव्यान्तरत्वं साधयिष्यतीत्यत आह—वह्नेरिति। पृथिव्यवान्तरजातियतानिबन्धनं तिर्य्यग्गमनं न वायोर्द्रव्यान्तरत्वे मानमित्यर्थः। अतएवेति। अनुद्भूतरूपपृथिवीत एव मेघादिप्रेरणमपि स्यादित्यर्थः। ननु प्राणादिपञ्चकस्यासाधारणतत्तदर्थक्रिया पृथिव्यादिविलक्षणा वायोर्द्रव्यान्तरत्वे मानं स्यादित्यत आह—जाठरेति। रसार्ज्जनलक्षणार्थक्रियाकारित्वेऽपि यथा जठरानलं तेज एव न द्रव्यान्तरं

न्यायलीलावतीप्रकाशः

न्तरकल्पनायामित्यर्थः। 'धर्ममात्रं' जलादीनां रूपाद्यनुद्भवमात्रं 'न (तु?)धर्मी' न द्रव्यान्तरमित्यर्थः। धृतिर्गुरुत्वप्रतिबन्धः। तत्संयोगात् तादृशपृथिवीसंयोगादित्यर्थः। एतेन तादृशपृथिवीसंयोगेनोपपत्स्येत्यर्थः।

---

(१) ०पपद्यते। (२) ०पपद्यते। (३) ०जदेव पा०। जाठरेति कण्ठाभरणधृतः पाठः।

मैवम् । त्वगिन्द्रियस्य गन्धाग्राहकत्वेन रसनवदपार्थिव-त्वात् रूपरसाग्राहकत्वेनैवातैजसानाप्यत्वात् । शब्दाग्राहकत्वे-नानाभसत्वात् । वहिरिन्द्रियत्वेन मनोव्यतिरेकित्वात् । अत एव ग्राह्यजातीयविशेषगुणवत्त्वेन स्पर्शवत्त्वाद् द्रव्यान्तरप्रकृतिकत्वेन वायुसिद्धिः । न च गन्धाग्राहकत्वमप्यदृष्टविशेषसाहित्यात्पार्थिवं स्यादिति वाच्यम्, सर्वेन्द्रियाणामपलापप्रसङ्गात् । स चायं स्प-

———

न्यायलीलावतीकण्ठाभरणम्

तथा घ्राणेऽपि पृथिवीविशेष एवेत्यर्थः ।

त्वगिन्द्रियस्येति । त्वगिन्द्रियं न पार्थिवं गन्धाग्राहकेन्द्रियत्वात् । नाप्यं रसाग्राहकेन्द्रियत्वादित्यादिना चतुष्कभेदसिद्धौ पञ्चवहिरिन्द्रियप्रकृतिभूतं द्रव्यं सिध्यति तदेव च वायुरित्यर्थः । ज्ञानजनकमनःसंयोगाश्रयत्वेन इन्द्रियाणां द्रव्यत्वव्यवस्थितेरित्यर्थः । अत एवेति । वहिरिन्द्रियत्वादेवेत्यर्थः । यद् वहिरिन्द्रियं तत् स्वग्राह्यविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमद् गुणवदिति व्याप्तेः स्पर्शग्राहि त्वगिन्द्रियं स्पर्शवदेव सेत्स्यतीत्यर्थः । स्पर्शाद्याश्रय इत्यादिपदात् सामान्यगुणान्तरो-

न्यायलीलावतीप्रकाशः

वहेरिति । गन्धाग्राहकत्वे-पृथिवीत्वे वायोस्तिर्यग्गतिनियममुपपादयति— नेति । गन्धाग्राहकेन्द्रियत्वेनेत्यर्थः । एवमग्रेपीन्द्रियत्वेन हेतुर्विशेष्यः । स चेति । स्पर्शवद्वहिरिन्द्रियस्य 'अत एव' बहिरिन्द्रियत्वादेवेत्यर्थः । स्वग्राह्यविशेषगुणसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वनिय-

न्यायलीलावतीप्रकाशविवृतिः

गन्धाग्राहकेन्द्रियत्वेनेति । ननु स पृथिवीपरमाणौ व्यभिचारादाह— एवेत्यत्र न सैव व्यक्तिरभिमता, बाधात् । किन्तु तज्जातीया, सा न युक्ता, त्वगिन्द्रियस्य श्रोत्रवदेकव्यक्तिविभाजकोपाधित्वादित्याशङ्क्याह— स्पर्शवदिति । बहिःपदं सम्पातायातम् । प्रत्यक्षस्पर्शाश्रयस्य वायुत्वसिद्ध्यर्थं स्वग्राह्येति । ग्राह्यविशेषो लौकिकप्रत्यक्ष इत्यर्थः । यत्तु संख्यादिनाऽर्थान्तरवारणाय विशेषपदमिति तन्न, ग्राह्यसंख्यासामाधिकरण्ये ग्राह्यविशेषगुणसामानाधिकरण्यनियमात् । साक्षात्पदं द्रव्यत्वेनार्थान्तरवारणाय भेदगर्भव्याप्यत्वलाभार्थम् । नन्वेवमपि के प्रत्यक्षाश्रयवायु-

शाद्याश्रयः सिद्ध इति। स एवान्यत्र(१) कल्प्यते लाघवात्। पृथिवीत्वे तु रूपानुद्भवादिकल्पनागौरवमेव। व्यजनानिलश्च ग्राह्यजातीयास्साधारणगुणोद्भवापेक्षः स्पर्शव्यञ्जकः सावयवेन्द्रियव्यव-

न्यायलीलावतीकण्ठाभरणम्

पग्रहः। स एवेति। त्वगिन्द्रियप्रकृति द्रव्यान्तरं चेत् सिद्धं तदा स्पर्शकम्पधृतिशब्दादिहेतुरपि तज्जातीय एव ग्राह्य इत्यर्थः। ननूक्तं धर्म्मिकल्पनातो धर्म्मकल्पनालघुरित्यत आह—पृथिवीत्व इति। त्वगिन्द्रियस्य धर्म्यन्तरस्य कल्पनाया आवश्यकत्वात् अनुद्भूतरूपोद्भूतस्पर्शपृथिवीकल्पनमेव गुर्व्वित्यर्थः। उद्भूतस्पर्शवत्त्वं वायोः साधयति—व्यजनानिल इति। ग्राह्यजातीयोऽसाधारणो यो गुणस्तदुद्भवापेक्षः सन् स्पर्शव्यञ्जक इत्यर्थः। सावयवेति। सावयवानीन्द्रियाणि घ्राणादित्वक्पर्य्यन्तानि तेषां व्यवस्थापका रूपरसगन्धस्पर्शास्तेषु मध्य इत्यर्थः। तथा च व्यजनानिलः स्वव्यञ्जनीयगुणवृत्तिजातिमदुद्भूतविशेषगुणवान् अनिन्द्रियत्वे सति गन्धाद्यन्यतरव्यञ्जकद्रव्यत्वात् आलो-

न्यायलीलावतीप्रकाशः

मेनानेकत्वकल्पने प्रत्यक्षस्पर्शाश्रयत्वमपि तस्यैव कल्प्यत इत्यर्थः।

उद्भूतस्पर्शं वायुं साधयति—व्यजनेति। व्यजनचालनानन्तरोपलभ्यमानस्पर्शाधिकरणं स्वग्राह्योद्भूतासाधारणगुणमात्रव्यङ्ग्यव्यञ्जकमित्यर्थः। सावयवेति। रूपादिचतुर्ष्वित्यर्थः। नन्विन्द्रियेणानैकान्तिकं तस्य ग्राह्यसजातीयोद्भूतासाधारणगुणवत्त्वाभावात्। न चोद्भूतत्वेनानभिभूतत्वं विवक्षितं न चेदेवमित्यनेन विरोधात्। तद्रूपस्या-

न्यायलीलावतीप्रकाशविवृतिः

भिन्ना एव सन्त्वित्यत आह—प्रत्यक्षेति। रूपाद्यनुद्भवकल्पनागौरवभिया सर्वेषामेव तादृशानां वायुत्वं कल्प्यत इत्यर्थः। साधयतीति। प्रमाणान्तरेणापीति शेषः। अनिलत्वमसिद्धमन्यथा स चेत्यग्रिमग्रन्थेन तत्साधनविरोधात्। आलोकदृष्टान्तासङ्गतिश्च तस्य स्पर्शव्यञ्जकत्वादित्यन्यथा प्रयोगमाह—व्यजनेति(२)। अत्र चाङ्गसङ्गिसलिलाद्यन्यत्वेन

(१) स चान्यत्रापि।

(२) व्यजनानिलस्य प्रागेवानिलत्वे सिद्धे तस्योद्भूतस्पर्शसाधनेनैवाभिमतसिद्धौ स चेत्यादिना स्पर्शस्य वायवीयत्वसाधनमनर्थकमापद्येतेत्यत आह—व्यजनेत्यादि। इति दीधितिः।

न्यायलीलावतीप्रकाशः

नभिभूतत्वात् । मैवम् । इन्द्रियान्यत्वेन हेतुविशेषणात् । तथाप्युद्भूतेति साध्ये विशेषणं व्यर्थम् । अनुद्भूतेनापि तादृशेन स्पर्शेन सिध्यता वायवीयत्वसिद्धेः । तादृशस्पर्शवायवीयत्वस्य च पूर्वानुमानादेव सिद्धेः । मैवम् । उद्भूतस्पर्शस्य वायवीयत्वसिद्ध्यर्थमस्याभिधानात् उद्भूतस्पर्शस्य वायवीयत्वस्योपाधित्वव्यावर्त्तनार्थत्वाच्च । न च ग्राह्यस्पर्शेन सिद्धसाधनं स्पर्शसाक्षात्कारासाधारणकारणत्वाश्रयोद्भूतासाधारणगुणवत्त्वस्य साध्यत्वात् । ग्राह्यजातीयासाधारणगुणोद्भवानपेक्षस्य व्यञ्जकत्वे ग्रीष्मोष्मणोऽपि रूपव्यञ्जकतापत्तिरुद्भूतानिलस्पर्शानपेक्षस्य च त्वगिन्द्रियस्याङ्गसङ्गिस्वेदशैत्याभिव्य

न्यायलीलावतीप्रकाशविवृतिः

पक्षतेति न तदादायार्थान्तरशङ्का । स्वग्राह्यः स्वग्राह्यजातीयः । उद्भूत असाधारणः स्वनिष्ठो यो गुणः तन्मात्रव्यङ्ग्यव्यञ्जकमित्यर्थः । तेन न व्यङ्ग्यस्पर्शेनार्थान्तरम् । न चासाधारणपदव्यर्थता मात्रपदं कदाचिदनुद्भूतस्यापि व्यञ्जकत्वशङ्कानिरासाय । तथा च उद्भूतमात्रस्वनिष्ठग्राह्यजातीयगुणव्यञ्जकमित्यर्थः । एवं चाग्रे इन्द्रियेऽनैकान्तिकत्वशङ्कापि युज्यते, यथाश्रुते तद्विरोधात । उद्भूतगुणेति । उद्भूतस्पर्शवायवीयत्वसिद्धिप्रयोजनमपि गन्धाग्राहकेन्द्रियत्वेनापार्थिवत्वसाधने इन्द्रियत्वावच्छिन्नसाध्यव्यापकस्योद्भूतगुणजातीयत्वस्य साधनव्यापकतयोपाधित्वशङ्कानिरास इत्यर्थः । न चेति । मूलोक्तसाध्य इति शेषः । यथोक्तसाध्ये तादृशगुणवत्त्वस्यैव साध्यतया न सिद्धसाधनमित्याशयेन तादृशसाध्ये पक्षधर्मताबललभ्यं साध्यमाह--स्पर्शेति । एवं च नालोकदृष्टान्ते साध्यवैकल्यमिति ध्येयम् । स्पर्शपदं वहिरिन्द्रियव्यवस्थापकगुणपरमिति कश्चित् । उद्भूतत्वमनुद्भूतत्वाभाव इतिमतेन सामान्यगुणेनार्थान्तरवारणाय कारणताश्रयपर्यन्तं विशेषणम् । तत्राप्यसाधारणपदमदृष्टवदात्मसंयोगेनार्थान्तरवारणाय । द्वितीयमसाधारणपदं विशेषपरं ताद्रूप्यसिद्धये मनोव्यावृत्त्यर्थमिति । न चैवमपि त्वचि व्यभिचारः वायुसमवेतत्वस्य साध्यस्य तत्रापि सत्त्वात् । न च घटादिस्पर्शे व्यभिचारः तस्य विषयत्वेन व्यञ्जकतया साधारणत्वात् । वायवीयत्वे साध्ये व्यो-

स्थापकगुणेऽनेकस्यैव व्यञ्जकत्वात्, आलोकवत्। न चेदेवं मेदस्विनां स्वेदिनामन्धकारे समस्त[रूपि]वस्त्ववभासापत्तिः(१)। अनुद्भूतस्पर्शानिलस्य च(२) शैत्याभिव्यञ्जकतापत्तिः। स च स्पर्शो वायवीयः स्पर्शासाधारणव्यञ्जकत्वात् त्वक्स्पर्शवदिति वा अपार्थिवत्वसिद्धिः, रूपरहितत्वाद्वा। एवं सति शीतत्वोष्णत्वे(३) अपि गुणौ (४)वायौ स्यातामिति चेन्न, तस्यानुद्भूतरूपत्वात्। न चात्राप्यनु-

---

न्यायलीलावतीकण्ठाभरणम्

कवदित्यत्र तात्पर्य्यम्। अत्र विपक्षदण्डमाह—न चे(दि?)ति। यदि स्वव्यञ्जनीयगुणवृत्तिजातिमदुद्भूतविशेषगुणापेक्षा न स्यात्तदा मेदस्विस्वेदानुमितस्य उष्मणोऽपि रूपव्यञ्जकत्वं स्यादित्यर्थः। अनुद्भूतेति। स्तिमितस्यापि वायोरङ्गसङ्गिसलिलशैत्यव्यञ्जकतापत्तेरित्यर्थः। तथा चोष्मणि व्यजनापेक्षापि न स्यादिति भावः। स चेति। व्यजनचालनानन्तरमनुभूयमान इत्यर्थः। स्पर्शेति। स्पर्शाभिव्यञ्जकत्वादित्यर्थः। वाकार इन्द्रियप्रकृतिद्रव्यान्तरसाधनापेक्षया। रूपरहितत्वाद्वेति। विवादपदं द्रव्यं न पृथिवी रूपरहितत्वादाकाशवदित्यर्थः। एवं सति शीतेति। अनुपलभ्यमानरूपाश्रयः स्पर्शो यदि वायवीय इत्यर्थः। शीतोष्ण इति शीतोष्णस्पर्शावित्यर्थः। तस्येति। शीतोष्णस्पर्शाधिकरणद्रव्यस्येत्यर्थः। न चान्यत्रेति। विवादपदेऽपि द्रव्ये रूपमनु

न्यायलीलावतीप्रकाशः

ञ्जकत्वप्रसङ्ग इत्याह—न चेदेवमिति। स्पर्शेति। मनोव्यावृत्त्यर्थमसाधारणत्वं व्यञ्जकविशेषणम्। अपार्थिवत्वसिद्धिः प्रकृतस्पर्शाश्रयस्येति शेषः। अत्रैव हेत्वन्तरमाह—रूपेति। नन्वेवं नीरूपत्वाद्विभक्तावयवजलतेजसोरपि वायुत्वापत्तिरित्याह—एवमिति। नीरूपत्वं तस्यासिद्धमित्याह— तस्येति। न चेति। रूपस्येति शेषः।

न्यायलीलावतीप्रकाशविवृतिः

भादौ व्यभिचारादाह—अत्रैवेति। अपार्थिवत्वे साध्ये इत्यर्थः।

---

(१) भासः स्यात्। (२) ०लस्य तु शै०। (३) शीतोष्णत्वे। (४) गुणौ इति क्वचित् पुस्तके नास्ति।

द्भवः पार्थिवरूपस्पर्शयोः समानयोगक्षेमत्वात् । अन्यथा उद्भूतरूपा-नुद्भूतस्पर्शस्यापि पार्थिवस्य सत्त्वापत्तेः । न चाभिभवः । मन्दालोके उपलम्भापत्तेः । अगन्धवत्त्वाच्च(१) । अनुद्भूतत्वात् तत्सिद्धिरिति न वाच्यम्, स्पर्शोद्भवव्याप्तत्वाद्गन्धवत्त्वोद्भवस्य ।

---

न्यायलीलावतीकण्ठाभरणम्

द्भूतं स्वीक्रियतां तथा च तत् पृथिव्येवेत्यर्थः । पार्थिवेति । उद्भूत-स्पर्शपृथिव्या उद्भूतरूपवत्त्वनियमादित्यर्थः । अन्यथेति । तथा च चन्द्रचामीकरादिरपि पृथिव्येव स्यात् स्याच्च मणिप्रभापि पृथिवी-त्यर्थः । धूमस्य चक्षुरवच्छेदेन स्पर्शोऽप्युपलभ्यते एवेत्यर्थः । ननु वायुरप्युद्भूतरूप एव परन्त्वभि भवान्नोपलभ्यत इत्याशङ्क्याह न चेति । मन्देति । बलवत एव तेजोरूपस्य पररूपाभिभावकत्वादित्यर्थः । अपार्थिवत्वे साध्ये हेत्वन्तरमाह—अगन्धत्वाच्चेति । हेतोः स्वरूपासि-द्धिमाशङ्क्याह—अनुद्भूतत्वादिति । वायावनुद्भूतो गन्ध इति नोपल-भ्यत इत्यर्थः । स्पर्शश्चेदुद्भूतस्तदा गन्धोऽपि उद्भूत एव तत्र स्या-दित्याह—स्पर्शेति । स्पर्शोद्भवो व्याप्तो यस्येत्यर्थः । स्पर्शोद्भवव्याप-

न्यायलीलावतीप्रकाशः

मन्देति । अभिभावकबलवत्तेजोरूपस्य तत्राभावादित्यर्थः । स्पर्शोद्भवेति । नन्वेवं गन्धोद्भवो व्याप्यः स्पर्शोद्भवो व्यापक इति सिद्धावप्रकृतत्वम् । मैवम् । समव्याप्तत्वमभिप्रेत्यास्याभिधानात् गन्धोद्भवव्यापकत्वस्यापि सिद्धेः । स्पर्शोद्भवो व्याप्तो येनासौ स्पर्शोद्भवव्याप्तः, आहिताग्न्या-दित्वान्निष्ठान्तस्य परनिपात इत्यन्ये । स्पर्शोद्भवव्यापकत्वादिति पाठे सुगममेव । पार्थिवत्वेन विशेषणान्न जलादिस्पर्शेनानैकान्तः, तथापि वज्रस्पर्शेनानैकान्तः तस्य गन्धानुद्भवेऽप्युद्भूतत्वादिति न वाच्यम्, वायुत्वं यद्यकठिनोद्भूतस्पर्शपृथिवीवृत्तिजातिः स्यादुद्भूतगन्धस-

न्यायलीलावतीप्रकाशविवृतिः

हेत्वन्तरं गन्धाग्राहकत्वापेक्षया । समव्याप्तत्वमिति । हेतुतायां च व्यापकत्वभागोऽविवक्षित एवेत्यर्थः । चम्पकगन्ध(२) व्यभिचाराच्च समव्याप्तिरित्यस्वरसादाह—स्पर्शोद्भव इति । वायुत्वमिति । वज्रत्वे(३)ऽन्य-

---

(१) अगन्धत्वाच्चेति कण्ठाभरणसम्मतः पाठः । (२) चम्पकभागव्यभि० । (३) रक्तत्वे व्या० ।

कश्चिदेव स्पर्शः तथा, न सर्व इति चेन्न, दृश्यादृश्योपाधिव्युदासे व्यतिरेकशङ्कानवकाशात् । अनभिव्यक्तत्वात्कुङ्कुमगन्धवत् पूर्वं नावभासते, चम्पकादिगन्धसम्भेदे त्ववभासत इति चेन्न, व्यञ्जकगन्धातिरिक्तगन्धानवभासात् । चन्दनगन्धिसलिल(मिति)वदौपाधिकत्वेनैव प्रतीतेश्च । न चायं ज्वलनवदूर्ध्वगमनशीलो वात्यादौ शुकशुकादिनादविसदृशमेघसङ्घट्टजातीय-

---

न्यायलीलावतीकण्ठाभरणम्

कत्वादिति तु पाठः सुगमः। पाषाणादावप्युद्भूत एव गन्धोऽनुल्बनत्वाद्विशिष्य न गृह्यत इति भावः । अनुद्भूतः पृथिवीस्पर्श उद्भूतगन्धसामानाधिकरण्यनियत उद्भूतपृथिवीस्पर्शत्वादित्यत्र स्पर्शभेद उपाधिः स्यादिति शङ्कते—कश्चिदिति । दृश्यादृश्य इति । सामान्यव्याप्तौ विशेषस्यानुपाधित्वादित्यर्थः । कुङ्कुमगन्धवदिति । यथा घृतसंयोगव्यङ्ग्यः कुङ्कुमगन्धस्तथा चम्पकादिसन्निकर्षाभिव्यङ्ग्यो वायुगन्धोऽपीत्यर्थः । घृतगन्धविजातीयकुङ्कुमगन्धवत् चम्पकादिगन्धविजातीयवायुगन्धस्यानुपलम्भान्नैवमित्याह—व्यञ्जकेति । ननु वाय्वादावुद्गमनशीलं द्रव्यान्तरं स्यात् पृथिव्यादिसकलवैधर्म्यादित्यत आह—न चायमिति । शुकशुकादीति वायुजन्यशब्दानुकरणम् । तथा च मेघयोः

न्यायलीलावतीप्रकाशः

मानाधिकरणं स्यात् धूमत्ववदित्यापादनार्थत्वात् । अगन्धत्वं वायोरसिद्धं व्यञ्जकाभावात्ततोऽपि गन्धस्याप्रतीतिरित्याह—अनभिव्यक्तत्वादिति । ननु वायोर्नियमेन तिर्यग्गतित्वाद् वात्यादावुद्गमनस्वभावं द्रव्यान्तरं कल्प्येतेत्यत आह—न चेति । संघट्टपदादग्रे जन्यपदं

न्यायलीलावतीप्रकाशविवृतिः

भिचार इत्यकठिनपदम् । घ्राणत्वे व्यभिचार इत्युद्भूतपदम् । जलत्वे व्यभिचार इति पृथिवीति । विरुद्धगन्धवदारब्धमात्रधर्मे व्यभिचार इति जातिपदम् । उद्भूतपदमापाद्ये इष्टापत्तिवारणाय । तदाश्रये व्यभिचारवारणाय धर्मिपक्षत्वत्याग इति ध्येयम् । जन्यपदमिति । यद्यपि शोषापेक्षया लक्षणैव बलवतीति संघट्ट-

वात्याघातशब्दानुमाने अवश्योन्नेयपरस्पराहतेरेवोद्गमनोपपत्तौ स्वभावकल्पनानवकाशात् ॥ वायुः । (इत्यनिलः) ॥

---

न्यायलीलावतीकण्ठाभरणम्

सङ्घट्टो वायुजन्यस्तज्जन्यः शब्दोऽनुभूयते, तेन तदनुमितमेघद्वय-सङ्घट्टे कारणवायुद्वयसङ्घट्टोऽप्यनुमीयते, तेन स्पर्शवद्वेगवद्द्रव्यद्वय-सङ्घट्टात् तयोरूर्ध्वगमनमागन्तुकनिमित्ताधीनं न स्वाभाविकं स्तम्भित-जलयोरिवेति न तदनुरोधेन वायुविजातीयद्रव्यकल्पनमित्यर्थः।

ननु उद्भूतस्पर्शवत्त्वाद्वायुः प्रत्यक्ष एव किं न स्यात् ? न स्यात्, उद्भूतरूपवत्त्वस्योपाधित्वात्। आत्मनि गुणादौ च साध्याव्यापकमिद-मिति चेन्न साधनावच्छिन्नसाध्यव्यापकत्वात्। चाक्षुषद्रव्यप्रत्यक्षे तत् तन्त्रं न तु स्पार्शनप्रत्यक्षेऽपीति चेन्न सामान्ये बाधकाभावात्। किं च वायोः प्रत्यक्षत्वे तद्गतसङ्ख्यादिग्रहप्रसङ्गः। ननु यज्जातीयं प्रत्यक्षं तत्सङ्ख्यादिकं प्रत्यक्षमिति यदि नियमस्तदा फुत्कारादौ तदस्त्ये-व। अथ या व्यक्तिः प्रत्यक्षा तत्सङ्ख्यादिकं प्रत्यक्षमिति तु नियमो नास्त्येव पृष्ठलग्नवस्त्रादौ व्यभिचारादिति चेन्न फुत्कारादौ संख्या-प्रतीतेरानुमानिकत्वात्। किं च बहिर्द्रव्यप्रत्यक्षतावच्छेदकमुद्भूत-रूपवत्त्वं तदितो व्यावर्त्तमानं प्रत्यक्षत्वमेव निवर्त्तयति न ह्युद्भूत-स्पर्शवत्त्वं तत्र तन्त्रं चन्द्रमहसि तदभावात्। नापि जन्येन्द्रियग्राह्य विशेषगुणवत्त्वं कार्य्यमहत्त्वसमानाधिकरणोद्भूतविशेषगुणवत्त्वं

न्यायलीलावतीप्रकाशः

पूरणीयम्। अत्र स्पर्शत्वं रूपानाधारवृत्तिवृत्ति रूपवदिन्द्रियावेद्य-गुणवृत्तिजातित्वात् बुद्धित्ववदित्यनुमानं वायौ स्पर्शादिचतुष्क-वत्त्वे मानमाहुः।

न्यायलीलावतीप्रकाशविवृतिः

पदे जन्यलक्षणैवोचिता तथापि नात्र जन्यमात्रे लक्षणा, किं तु सङ्घविशिष्ट इति गौरवं मनसि कृत्येदमुक्तम्। मिश्रास्तु ग्रन्थस्य परार्थानुमानरूपतया वादिवाक्ये लक्षणाया अभावादिदमु-क्तम्। न च वादिवाक्ये पूरणमयुक्तं पूरितप्रयोग एव कर्त्तव्य इति तात्पर्यादिति वदन्ति। रूपवदिति। गन्धत्वे व्यभिचार इत्यवेद्यान्तम्।

न्यायलीलावतीकण्ठाभरणम्

वा, वायूपनीतसुरभिभागस्य प्रत्यक्षतापत्तेः। उद्भूतस्पर्शवत्त्वस्य तन्त्रत्वे चलत्पक्षिकाण्डादावानुमानिकमपि कर्म्मज्ञानं न स्यात् तल्लिङ्गस्य पूर्वोत्तरदेशविभागसंयोगलक्षणस्य देशाप्रत्यक्षत्वेनाप्रत्यक्षत्वात्। तथा चानुद्भूतस्पर्शस्य चान्द्रमहस एव तत्र प्रत्यक्षत्वमुपेयम्, तत्संयोगविभागाभ्यामेव तत्र चलतीतिप्रतीतेः उद्भूत रूपवत्त्वमुद्भूतस्पर्शवत्त्वं च द्वयमपि तत्र तन्त्रम्। तथा च चान्द्रतेजो न प्रत्यक्षमिति टीकाकृतः(१)। नन्वेवं शीतो वायुरिति प्रतीतिः कथं स्यात् वायुलिङ्गस्यानुष्णाशीतस्याग्रहादिति चेन्न शीतद्रव्योपनायकत्वेनानुमिते द्रव्ये शीतस्पर्शारोपात्। न चान्योऽन्याश्रयः प्रथमं शीतस्पर्शग्रहोऽनन्तरं तदाश्रयोपनायकद्रव्यानुमानमनन्तरं तत्र शीतस्पर्शारोपात्। शीतस्पर्श एव वायुलिङ्गत्वारोपस्तर्हि त्वगिन्द्रियव्यापारानुविधानं कथमिति चेत् स्पर्शलिङ्गग्रहार्थमिति ग्रन्थव्याख्यायामनुपयुक्तत्वादत्रोपरम्यते।

न्यायलीलावतीप्रकाशः

ननु घ्राणादीनि न पृथिवीत्वाद्याश्रया इति न नवैव द्रव्या-

न्यायलीलावतीप्रकाशविवृतिः

आत्मत्वे व्यभिचार इति गुणेति। ननु गुरुत्वत्वादिजातौ व्यभिचारः न च नीरूपेन्द्रियवेद्यत्वं गुणविशेषणं गुणपदमेव वा विशेषणपरमिति वाच्यम् तथाप्युष्णत्वजातौ व्यभिचारादिति चेत्, मैवम्। गुणत्वसाक्षाद्व्याप्यजातेरेव जातिपदेनोक्तत्वात्।

केचित्तु पार्थिवेति साध्ये रूपविशेषणमतो नोष्णत्वादौ व्यभिचार इति वदन्ति। तन्न। तथा सति जलादिना सिद्धसाधनेन वायुसिद्ध्यनापत्तेः। अत्र साधनावच्छिन्नसाध्यव्यापकस्य विभुवृत्तिवृत्तित्वस्योपाधितायां स्पर्शादिचतुष्कस्य विपक्षबाधकार्थमनुसरणीयतायां किमनेनेत्यनुशयमाविष्करोतीत्याहुरिति। ननु बहिरिन्द्रियत्वं यदि मनोभिन्नेन्द्रियत्वं तदा मनसोऽपि भिद्यत इत्यग्रेतनं व्यर्थमयुक्तमापद्येत। मनोभेदस्य पक्षतावच्छेदकतया पूर्वानुमानविषयत्वात् पक्षतावच्छे-

(१) तात्पर्य्यटीकाकृतो वाचस्पतिमिश्राः।

ननु बहिरिन्द्रियाणीतरेभ्यो भिद्यन्ते इन्द्रियत्वान्मनोवत्। मनसोऽपि भिद्यन्ते अनात्मगुणग्राहकेन्द्रियत्वात्। घ्राण पार्थिव

---

न्यायलीलावतीकण्ठाभरणम्

पुनर्विभागव्याघाताय शङ्कते—नन्विति। विशेषगुणवदिन्द्रियत्वं बहिरिन्द्रियत्वम्। इतरेभ्य इति। मनोभिन्नद्रव्येभ्यः। अनात्मगुणेति। आ-

न्यायलीलावतीप्रकाशः

णीति साधयति—नन्विति। बहिरिन्द्रियत्वं विशेषगुणवदिन्द्रियत्वम्। इन्द्रियत्वं च स्मृत्यजनकज्ञानकारणमनःसंयोगाश्रयत्वम्(१)। 'इतरेभ्यो' भूतेभ्यः। कालादिभेदस्योभयसिद्धत्वात्। अनात्मेति। आत्म-

न्यायलीलावतीप्रकाशविवृतिः

दकसाध्ययोरभेदाच्चेति अन्यथा व्याचष्टे—विशेषेति। स्मृतीति। आत्मन्यतिव्याप्तेराह—स्मृत्यजनकेति संयोगविशेषणम्। अजनकत्वं च स्वरूपायोग्यत्वमतो न संयोगव्यक्तिविशेषमादाय उक्तातिव्याप्तितादवस्थ्यम्। कालादावतिव्याप्तिवारणाय ज्ञानकारणेति। चक्षुःसंयोगादिकमादाय घटेऽतिव्याप्तिवारणाय मन इति। मनःसंयोगाश्रयत्वं च मनोनिरूपितसंयोगाश्रयत्वं न तु मनोविशिष्टसंयोगाश्रयत्वमतो न मनस्यव्याप्तिः। न चेन्द्रियत्वे ज्ञाते इन्द्रियमनोयोगत्वेन कारणताग्रहः, गृहीतायां च संयोगकारणतायामिन्द्रियत्वग्रह इत्यन्योन्याश्रय इति वाच्यम्, चक्षुर्मनोयोगत्वादिनैव कारणताग्रहात्। त्वचो ज्ञानमात्रजनकत्वेऽपि न त्वङ्मनोयोगस्य तथात्वं मानाभावादिति नानुपपत्तिः। पक्षतावच्छेदकावच्छेदेनेतरभेदसाधने मनसि दृष्टान्ते साध्यवैकल्यमत आह—ज्ञानपदं च विद्यापरमतो न स्वप्नवहनाड्यामतिव्याप्तिः। पक्षतावच्छे-कालादीति। भूतेभ्य इति। नन्वेवं कालादिभ्योऽविवेकतादवस्थ्यमत आह—

---

(१) स्मृत्यजनकः स्मृतिस्वरूपायोग्यः। मनःसंयोगो मनोवृत्तिसंयोगः। त्वङ्मनःसंयोगो न ज्ञानमात्रे हेतुरितिमतेनेदम्। तस्य तद्धेतुतामते तु आत्मवारणाय स्मृत्यजनकेति संयोगस्याश्रयस्य वा विशेषणम्। आद्ये सामानाधिकरण्येन द्वितीये च समवायित्वेन स्मृतिजनकत्वस्याभावो-ऽर्थः। ज्ञानासमानाधिकरणज्ञानकारणमनःसंयोगाश्रयत्वमिति फलितार्थः। आप्यादिदेहसाधारण-शरीरत्वस्योपाधित्वाद् त्वक्त्वस्य च जातित्वाल्लाघवात् त्वङ्मनःसंयोग एव ज्ञानहेतुः। शरीर-मनःसंयोगस्यापि तथात्वे स्मृत्यजनके सामानाधिकरण्येन स्मृतिजनकमनःसंयोगस्यानाश्रये यस्तादृशः संयोगस्तद्वत्त्वं वक्तव्यम्। ज्ञानसमानाधिकरणज्ञानकारणसंयोगानाश्रयवृत्तिमनोवृत्ति-

स्यादिति चेन्न, महतः पार्थिवस्य गन्धरूपरसस्पर्शेषु अन्यतमो-

---

न्यायलीलावतीकण्ठाभरणम्

त्मगुणाग्राहकेन्द्रियत्वादित्यर्थः। इन्द्रियत्वेन वाऽनात्मगुणग्राहकत्वं वि- वक्षितमतो न मनसि व्यभिचारः। महत इति। उद्भूतत्वमिह प्रत्यक्षं विवक्षितमन्यथा महत इति विशेषणानुपपत्तिः। पार्थिवपरमाणो- रपि उद्भूतत्वसम्भवात्। यद्वा घ्राणस्यैव परमाणुरूपताऽभ्युपग- मो नास्तीतिसूचनाय महत इति। ननु घ्राणेऽप्यन्यतरदुद्भूतं स्या-

न्यायलीलावतीप्रकाशः

गुणाग्राहकत्वादित्यर्थः। यथाश्रुतस्य मनसि गतत्वात्। इन्द्रियत्ववि- वक्षायां चासाधारणत्वापत्तेः। न चाप्रयोजकत्वं आत्मगुणग्राहकत्वे मनस्त्वस्यैव तन्त्रत्वात् तथात्वे तद्ग्रहापत्तेः। यद्वा वहिरिन्द्रियत्वादि-

न्यायलीलावतीप्रकाशविवृतिः

न च सिद्धसाधनपरिहाराभिप्रायेणैव भूतेस्य इति फक्किका किमि- ति न व्याख्यायत इति वाच्यम्, इतरत्वावच्छिन्नप्रतियोगिकभेद- स्यासिद्धतया सिद्धसाधनानवकाशात्। अन्यथा यत्किञ्चिद्भेदस्य स- र्वासिद्धतयाऽन्यत्रापीतरभेदानुमाने सिद्धसाधनप्रसङ्गात्। वस्तुतो- ऽनिन्द्रियपरत्वेनैवेतरपदव्याख्या मूले युक्तेति ध्येयम्।

इन्द्रियत्वेति। इन्द्रियत्वेन ग्राहकत्वविवक्षायामित्यर्थः। न चेन्द्रियत्वस्य मूलेऽपि श्रूयमाणत्वादसाधारण्यतादवस्थ्यमिति वाच्यम, तद्विशेषण- त्याग एव प्रकाशकृतस्तात्पर्यात्। प्रतियोगिविशेषणत्वेनाव्यर्थत्वाद्वा। यद्वेति। विशेषगुणवत्त्वादित्यर्थः। तेन मनोभिन्नत्वे(१) साध्याविशेषः गु- णवदिन्द्रियपरत्वं च व्यर्थविशेष्यताऽसाधारण्यं चेत्यपास्तम्। वि- शेषगुणशून्यत्वा(शू?)न्यत्वलक्षणवैधर्म्यान्न भेदसाधनमप्रयोजकमिति भावः। ननु महत इति व्यर्थं परमाणावपि गन्धाद्यन्यतमोद्भवनिय-

---

ज्ञानकारणसंयोगाश्रयत्वमिति तु निष्कर्षः। अन्त्यज्ञानपदेन निर्विकल्पकं विवक्षितमतो न स्वप्नव- इनाड्यामतिप्रसङ्गः। प्राणात्मसंयोगवत् प्राणमनःसंयोगोऽपि न ज्ञानकारणमिति मणौ व्यक्तम्। इति दीधितिः।

(१) मनोभिन्नपरत्वे इति द्वितीयपुस्तके पाठः।

दुभूतत्वेन व्याप्तत्वात् । तादृशस्य च प्रत्यक्षबाधितत्वात् । अ-न्यथा वायावपि पार्थिवस्पर्शस्यैव प्रतीतिप्रसङ्गात् । गन्धस्यैव व्यञ्जकत्वात्तत्त्वमिति चेन्न, नवशरावादौ जलेऽपि तद्दर्शनात् ।

---

न्यायलीलावतीकण्ठाभरणम्

दित्यत आह—तादृशस्येति । योग्यस्येत्यर्थः । अन्यथेति । अनुद्भूतगन्धरसरूपोद्भूतस्पर्शा पृथिव्येव वायुः स्याद् यदि गन्धरसरूपान्यतरोद्भवनियमः पृथिव्या न स्यादित्यर्थः । ननु घ्राणं पार्थिवं रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् कुङ्कुमगन्धाभिव्यञ्जकघृतवदिति शङ्कते—गन्धस्यैवेति । ननु नवशरावगन्धव्यञ्जके हेतुरयं व्यभिचारीत्याह—नवेति । ननु नवशरावे जलं गन्धं नाभिव्यनक्ति किन्तूत्पादयतीति न तत्र

न्यायलीलावतीप्रकाशः

त्यर्थः । महत इत्युद्भूतगन्धादिविशिष्टपरमाणुभिरन्यथासिद्धिवारणार्थः । अन्यथेति । उपाध्यभावेऽपि व्याप्त्यभावे गन्धोद्भवव्याप्यः पार्थिवस्पर्शोद्भवोऽपि न स्यादिति वायुत्वाभिमते पार्थिव एव स्पर्शो भासत इत्यपि स्यादित्यर्थः । गन्धस्यैवेत्येवकारेण रसादिव्यञ्जकमनोनिरासः । व्यञ्जकत्वादिति । व्यञ्जकद्रव्यत्वादित्यर्थः । अन्यथा सन्निकर्षे व्यभिचारात् । 'तत्त्वं' पार्थिवत्वम् । दृष्टान्तश्चात्र वायूपनीतसुरभिभागो न तु कुङ्कुमगन्धाभिव्यञ्जकं घृतम् ,तस्य स्वीयरूपादिव्यञ्जकत्वेन

न्यायलीलावतीप्रकाशविवृतिः

मादत आह—महत इति । अयमर्थः-उद्भूतगन्धाद्यन्यतमवत्त्वे व्यापकइष्टापत्तिः । । न चानुपलम्भविरोधः घ्राणस्य परमाणुत्वस्वीकारेणैव तदुपपत्तेः । तथा चाणुघ्राणस्वीकारेणैव नियमोऽन्यथासिद्ध इत्युद्भूतपदं प्रत्यक्षपरं वाच्यम् । तथा च परमाणोरेव व्यभिचार इति मत ( इति ? ) विशेषणमिति भावः । न चैवं तन्मते आपादकासिद्धिः स्थूलावयवावच्छिन्नगन्धोपलब्ध्या महत्त्वस्यापि साधनीयत्वात् । ननु गन्धमात्रव्यञ्जकत्वमप्रसिद्धं गन्धव्यञ्जकेन गन्धत्वस्यापि व्यञ्जनादत आह—रसादिव्यञ्जकेति । तथा च गन्धादिषु मध्ये गन्धमात्रव्यञ्जकद्रव्यत्वादिति हेतुरिति भावः । तस्य स्वीयेति । यद्यपि परकीयगन्धादिष्वित्यवश्यं वाच्यमन्यथा नवशरावादेरित्यादेरसङ्गत्यापत्तिः, तथा चेदमयु-

जलं गन्धोत्पादकमिति चेन्न, कणभक्षमते आश्रयनाशं विना तदनुपपत्तेः। तन्नष्टमिति चेन्न, तन्नाशहेतोर्घनद्रव्याभिघातस्याभावात्। स्पर्शस्यापि जलं व्यञ्जकमिति चेन्न, अनुष्णाशीतस्पर्शस्य पूर्वमप्युपलम्भात्। शीतस्पर्शस्य च शुवामसम्भ(१)-

---

न्यायलीलावतीकण्ठाभरणम्

व्यभिचार इत्याह—जलमिति। कणभक्षेति। वैशेषिकानामाश्रयनाशादेवावयविगन्धादिनाशः, आश्रयनाशस्य च नवशरावस्यात्रानाशान्न तत्र पूर्वगन्धादिनाशो न च गन्धवति गन्धोत्पाद इत्यभिव्यञ्जकत्वमेव जलस्येत्यर्थः। तदिति। नवशरावमित्यर्थः। जलमात्रसंयोगस्य नाशकत्वेऽतिप्रसङ्गः। घनद्रव्यस्य मुद्गरादेः संयोगो विनाशकः स चात्र नास्तीत्यर्थः। ननु जलेन शरावे स्पर्शोऽपि व्यज्यते, तथा च गन्धमात्रव्यञ्जकत्वं न तत्रेति न व्यभिचार इत्याशङ्कते—स्पर्शस्येति।

न्यायलीलावतीप्रकाशः

साधनवैकल्यात्। आश्रयनाशमिति। आश्रयो गन्धस्यावयवी तन्नाशे परं परमाणौ स्वतन्त्रे गन्धोत्पत्तिरित्यर्थः। क्वचित् पाठः "स्वाश्रयनाशमिति"। यद्यप्येतन्न परमाणुगन्धमधिकृत्य परमाणोर्नित्यत्वादवयविनश्चाश्रयस्य नाशे क्व गन्धोत्पत्तिः, तथापि स्वं परमाणोः स्वरूपमाश्रयो यस्यासौ परमाण्वाश्रयोऽवयवी तन्नाशं विना अवयविनाशे सत्येव परमाणौ स्वतन्त्रे गन्धोत्पत्तेः। घनद्रव्येति। यद्यपि स्थिरजलसंयोगस्यापि लोष्टनाशकत्वं दृष्टं तथापि तेजोवन्न विनाश्याविलक्षणमेव

न्यायलीलावतीप्रकाशविवृतिः

कम्। न च स्वीयरूपाव्यञ्जकजलविशेषपरत्वं तत्र जलपदस्येति वाच्यम्, तथा सति तादृशघृतविशेषस्य दृष्टान्ततापत्तेः। स्वरूपयोग्यता चोभयत्रापि तुल्या तथापि परकीयत्वविशेषणदानेऽपि जलस्य सक्तुरसव्यञ्जकतया वक्ष्यमाणव्यभिचारोऽसङ्गत एवेति आपाततो व्यभिचारप्रदर्शनपरतयैवाग्रिमफक्किका योजनीयेति लाघवात्परकीयत्वविशेषणागर्भ एव हेतुरित्यभिसन्धायैतदुक्तम्। 'तेजोव'दिति

---

(१) धूमावसम्भ०।

वात् । अन्यस्य चाननुभवात् । चक्षुरपि न तैजसम् । तस्य क्रोशादिव्यापिनो रूपस्पर्शयोरन्यतरोद्भवनियमात् । अन्यथा जलजातीयतापि कल्प्येत ।

त्वगपि न वायवीयमिन्द्रियम् । वायोः स्पर्शशब्दधृतिकम्पलिङ्गस्य(१) तदभाव एवाभावावधारणात् । घ्राणस्येव पाणाविति हेतुसम्भवात् । उद्भूतस्पर्शस्यैवमिति चेन्न, घ्राणेऽपि तत्त्वप्रसङ्गात् ।

---

न्यायलीलावतीकण्ठाभरणम्

ननु जलेन शरावे शीतस्पर्शोऽपि व्यज्यत इत्याह—शीतेति । पार्थिवस्य शीतस्पर्शोऽनाश्रयत्वादित्यर्थः । क्रोशादिव्यापित्वं महत्त्वमात्रोपलक्षकम् । जठरानलेऽपि यदि तेजस्त्वमभ्युपेतं तदा तद्व्यवच्छेदार्थं रूपानुद्भवेऽपि उष्मणः स्पर्शानुभवेऽपि चन्द्रमहसस्तैजसत्वामित्युक्तमन्यतरेति । अन्यथेति । यज्जातीयस्य या गुणोद्भवव्यवस्था तामतिक्रम्यापि चेत्तज्जातीयत्वमित्यर्थः । तदेकप्रमाणगम्यस्य तन्निवृत्तौ प्रमेयस्यापि निवृत्तेरित्यर्थः । घ्राणस्येति । गन्धोपलब्धिमात्रपरिचेयं घ्राणं हस्तावच्छेदेन गन्धानुपलब्ध्या यथा निवर्त्तेत इत्यर्थः । हेतुसम्भवादिति । त्वगिन्द्रियं न वायुत्वाधिकरणं वायुत्वाभिव्यञ्जकरहितत्वात्, यद्यदभिव्यञ्जकरहितं न तत्तद्वत्, यथा घ्राणाभिव्यञ्जकगन्धोपलब्धिरहितो हस्तो न घ्राणवदित्यर्थः । ननूद्भूतस्पर्शस्यैव वायोः स्पर्शादिचतुष्कं लिङ्गं न तु वायुमात्रस्येति शङ्कते—उद्भूतेति । व्यापकानुपलब्धेर्विशेषपरत्वे पाणावपि गन्धोपलब्धिनिवृत्त्या गन्धो-

न्यायलीलावतीप्रकाशः

पार्थिवं जलमुत्पादयतीति नियमः । क्रोशादिव्यापिन इति जठरानलव्यवच्छेदार्थम् । रूपग्रहणं चान्द्रकरसङ्ग्रहार्थम् । स्पर्शग्रहणं उष्मसङ्ग्रहार्थम् । घ्राणस्येवेति । यथा गन्धानुपलब्धिलक्षणव्यापकाभावः पाणौ घ्राणाभावसाधकः, तथा स्पर्शशब्दाद्यभावः प्रकृतेऽपीत्यर्थः । तत्त्वेति । व्यापकानुपलब्धेर्विशेषपरत्वप्रसङ्गादित्यर्थः । तथा च गन्धोपलब्धिलक्षण-

न्यायलीलावतीप्रकाशविवृतिः

व्यतिरेके दृष्टान्तः । विशेषपरत्वप्रसङ्गादिति । गन्धोपलम्भकघ्राणपरत्व-

---

(१) लिङ्गैकस्वभावस्य तदभाव ।

रसनमपि नाप्यम् । इन्द्रियत्वेनाभौतिकत्वात् मनोवत् । न चेदेवं मनसोऽपि पार्थिवत्वापत्तिः । श्रोत्रं च न स्वगुणग्राहकम्, इन्द्रियत्वात् मनोवत् । योग्यविशेषगुणशून्यत्वमत्रोपाधिरिति चेन्न, योग्यविशेषगुणशून्यत्वस्या[प्य]त एवानुमानात् ।

---

न्यायलीलावतीकण्ठाभरणम्

पलम्भकघ्राणमात्रस्य निवृत्तिः स्यान्न तु घ्राणमात्रस्येत्यर्थः । इन्द्रियत्वेनाभौतिकत्वादिति । रसनं नाप्यमभूतत्वात् । अभूतत्वं च इन्द्रियत्वात् मनोवदिति नानार्थः । यद्वा इन्द्रियत्वादभूतत्वाच्चेत्यनाप्य एव हेतुद्वयं तेन नासमर्थविशेषणत्वमसमर्थविशेष्यत्वं चेति । अभौतिकत्वं चाभूतत्वमेव अन्यथा दृष्टान्तस्य साधनवैकल्यं द्वितीयपक्षे, साध्यवैकल्यं वा प्रथमपक्षे स्यात् । न चेदेवमिति । आप्यवैधर्म्ये सत्यपि चेदाप्यत्वं तदा पृथिवीवैधर्म्येऽपि मनसः पार्थिवत्वं स्यादित्यर्थः । श्रोत्रञ्चेति । तथा च स्वगुणग्राहकत्वापत्त्या नभोभिन्नमेव श्रोत्रमित्यर्थः । ननु इन्द्रियस्य स्वगुणग्राहकत्वे योग्यविशेषगुणशून्यत्वं तन्त्रं श्रोत्रं च विशेषगुणवत्त्वात् स्वगुणग्राहकं स्यादित्याह—योग्येति । इन्द्रियत्वेन हेतुना योग्यविशेषगुणशून्यत्वमपि पक्षे साध्यमिति साधनव्यापकत्वान्नायमुपाधिरित्याह—नेति ।

न्यायलीलावतीप्रकाशः

व्यापकनिवृत्त्या गन्धोपलम्भकघ्राणस्यैव व्यावृत्तिः, न तु घ्राणमात्रस्येति विशेषपरत्वं तथात्रापि शक्यं वक्तुमिति भावः । 'अभौतिकत्वात्' अभूतत्वादित्यर्थः । अन्यथा दृष्टान्तस्य साध्यवैकल्यापत्तेः ।

न्यायलीलावतीप्रकाशविवृतिः

प्रसङ्गादित्यर्थः । (१)अभूतत्वादिति । अभौतिकत्वादित्यस्याभूतजन्यत्वादित्यर्थे साध्यवैकल्यं भूताजन्यत्वपरत्वे च प्रतियोगिगौरवात् तदपेक्षया लघुप्रतियोगिकस्य भूतत्वाभावस्यैव साध्यत्वमुचितमिति भावः । न चाभूतजन्यत्वपरत्वं प्रकृते शङ्कितमेव न, आदिपदवृद्धिप्रसङ्गादिति वाच्यम्, पितृपैतामहादिवदुत्तरपदवृद्ध्या तदर्थे तद्रूपस्य

---

(१) "क्वचिदप्रसङ्गादिति पाठः । तत्र गन्धाद्युपलम्भकघ्राणपरत्वाप्रसङ्गादित्यर्थः । अपि तथाऽत्रापीति पाठे तथा वायुस्थलवदित्यर्थः ।" द्वितीयपुस्तके अधिकोऽयं पाठः ।

इन्द्रियाणि न भौतिकानि इन्द्रियत्वात् मनोवत्(१)। अन्यथा मनोऽपि भूतात्मकमेव स्यात्। अनारम्भकत्वं तत्र बाधकमिति चेन्न, तस्याप्यसिद्धेः। यदा मनः पुरीतति वर्तते तदाल्पमवयविन·

---

न्यायलीलावतीकण्ठाभरणम्

इदानीं बहिरिन्द्रियत्वावच्छेदेनाभौतिकत्वं साधयति परः—इन्द्रियाणीति। अन्यथेति। यदि इन्द्रियत्वं भूतत्वनियतं स्यादित्यर्थः। तत्रेति। मनसो भौतिकत्व इत्यर्थः। तस्यापीति। मनसो नारम्भकत्व·स्याप्यसिद्धेरित्यर्थः। तर्हि मनसा यदारभ्यते द्रव्यं तदुपलभ्येतेत्यत आह—यदेति। 'पुरीतत्' नाडीविशेषः। तर्हि नाडीवदेव तदपि स्पा·र्शनप्रत्यक्षं स्यादित्यत आह—अल्पमिति। द्व्यणुकादिरूपमित्यर्थः।

न्यायलीलावतीप्रकाशः

तस्याभूताजन्यत्वात्। इन्द्रियाणीति। पूर्वमसाधारणभूतभेदः साधितोऽधुना भूतमात्राद्भेद इत्यपौनरुक्त्यम्(२)। पुरीततीति। यद्यदा विभुविशेष

न्यायलीलावतीप्रकाशविवृतिः

सम्भवेन दृष्टान्तासिद्धिप्रसङ्गेन तदर्थनिराकरणात्। पूर्वमिति। पूर्वं घ्राणा·दिषु प्रत्येकं पृथिव्यादिप्रत्येकभेदः साधितोऽधुना त्विन्द्रियत्वावच्छिन्ने भूतत्वावच्छिन्नभेदः साध्यत इत्यपौनरुक्त्यमित्यर्थः। एतेन बहिरि·न्द्रियाणीत्यादिना भूतत्वावच्छिन्नभेद एव साधितः। इतरेत्यो भूतेभ्य इति स्वयमेव व्याख्यानादिति तेन पौनरुक्त्यमित्यपास्तम्। तत्र बहि·रिन्द्रियत्वावच्छेदेन साधनादिह त्विन्द्रियत्वावच्छेदेनेति भेदसम्भ·वात्। न चात्रापि पक्षस्थेन्द्रियपदं बहिरिन्द्रियपरमेवान्यथा दृष्टान्ता·सम्भवात् पक्षतावच्छेदकहेत्वोरभेदप्रसङ्गाच्चेति वाच्यम्, पक्षस्या·पि दृष्टान्तत्वमभेदानुमानवत् पक्षतावच्छेदकहेत्वोरभेदो न दूषण·मेव सामानाधिकरण्यमात्रप्रतीतावपि तदवच्छेदेन प्रतीतेरुद्देश्याया असिद्धेरेवेतिमतावष्टम्भेनैवैतत्प्रयोगकरणादिति भावः।

मूले पुरीततीत्यादेरुपादानप्रयोजनमाह—यद्यदेति। चक्षुषः संसर्गेन्द्र·

---

(१) पूर्वं पृथिवीत्वादिरूपेण पृथिव्यादिभ्योऽष्टाभ्यो भेदः साधितः। तेन श्रोत्रं दिगिति भट्टम·तमपाकृतम्। सम्प्रति भूतत्वेन रूपेण पञ्चभ्यो भेदः साध्यत इत्यपौनरुक्त्यम्। इति दीधितिः।

(२) पूर्वं पृथिवीत्वादिना पृथिव्यादिपञ्चकाद् भेदः साधित इदानीं भूतत्वेन रूपेणेत्यर्थः। इति दीधितिः।

मारप्स्यते(१)ऽपीत्यविरोधात्। प्रयोजनाभावात्तत्सिद्धि(२)रिति चेन्न, सर्वप्रयोजनानामस्मादृशैरनाकलनात्। अपि चान्धतम- समचाक्षुषम्, आलोकासहकृतेन्द्रियवेद्यत्वाद्गन्धवत् [इति]। एव- मपि तत्सामर्थ्यकल्पनायां चक्षुरेवैकमिन्द्रियं देहव्यापकमनुद्भू- तरूपस्पर्शमस्तु। तच्च कतिभिरपि भागैः स्वाधिष्ठानवृत्ति बहि-

न्यायलीलावतीकण्ठाभरणम्

ननु मनसा यदारम्भणीयं तस्य प्रयोजनं सुखदुःखादिभोगजन- कत्वं नास्तीति न तेनारम्भणीयमित्याह—प्रयोजनेति। शरीरान्तरान्त- श्चारिकर्मेरेव तेन किञ्चित् प्रयोजनं स्यादित्याह—सर्वेति। षड्भिन्नं तामसमिन्द्रियं साधयितुं प्रस्तौति—अपि चेति। इन्द्रियान्तरभेद- स्य स्फुटत्वेन चक्षुर्मात्रभेदकमाह—आलोकेति। तमसश्चाक्षुषत्वे वा ह्यालोकापेक्षा स्यान्न च सास्ति, तथा च न तमश्चाक्षुषमिति यदि- न्द्रियग्राह्यं तत्तदन्यदिन्द्रियमित्यर्थः। एवमपि चेति(३)। चक्षुर्नियतसह- कारिवैधर्म्येऽपि चाक्षुषत्वे रसादीनामपि चाक्षुषत्वमेव स्यादि- त्यर्थः। ननु आलोकाभाव एव तमः, तद्ग्रहे चालोकापेक्षायां ग्राह्य-

न्यायलीलावतीप्रकाशः

(गु?)णग्राहकं तत्तदा द्रव्यानारम्भकमितिव्याप्तेः मनसो जाग्रद्दशायां द्रव्यानारम्भकत्वानियमादित्यर्थः। नवैव द्रव्याणि पञ्चैव बहिरिन्द्रिया- णीति विभागभङ्गाय पार्थिवादिभिन्नमिन्द्रियं साधयितुमाह—अपि चेति। 'स्वाधिष्ठानवृत्ति' स्वाधिष्ठानसम्बन्धग्राहकम्, 'बहिर्वृत्ति' स्वाधिष्ठाना-

न्यायलीलावतीप्रकाशविवृतिः

व्यतया रूपसाक्षात्कारकाले द्रव्यारम्भकत्वाद्व्यभिचार इति विभुपदम्। यदि च चक्षुषोऽनुद्भूतरूपस्पर्शरूपतया नोद्भूतरूपस्पर्शवत्तेजःसाहि- त्येनारम्भकत्वं तदा प्रत्यासत्तिघटकतया स्वीयरूपसा( क्षा ? )त्का- रजननकाले कपालादेर्घटाद्यारम्भकतया व्यभिचार इति विभु- पदं द्रष्टव्यम्। उपनीतादिभानमादाय पूर्वोक्त एव व्यभिचार इति विशेषपदं ग्रहणविशेषणम्, लौकिकत्वं च तदर्थः। उक्तव्याप्तौ च निरु-

(१) ०नमारमतेऽपी० । (२) तदसिद्धिरि० ।

(३) आदर्शमूलपुस्तकद्वयानुसारेण 'एवमपी'ति प्रतीकधारणं युक्तम्।

र्वृत्ति च स्यादितीन्द्रियनानात्वापलापः। वेद्यप्रच्युति(१)परिच्छेदे नेन्द्रियाणां विषयसहकारित्वं सर्वत्राभाव(२)ग्रहणप्रसङ्गात् इत्यालोकानपेक्षेति चेन्न, अनपेक्षा कथमप्यस्तु(३), तथाप्येतद्धेतुकचक्षुर्वैजात्यसिद्धेः। कथं तर्हि युगपद्घटतिमिरदीपादीनामुपलम्भ इति चेन्न, क्रमेण मनसाऽधिष्ठाने(४) सूक्ष्मकालभेदसम्भवात् तदिन्द्रियाणि मनोवद्द्रव्यान्तराण्येवेति नवैवेति व्याघातः।

अत्रोच्यते। बहिरिन्द्रियग्राहकमानेनाद्यहेतुबाधात्

न्यायलीलावतीकण्ठाभरणम्

मेव तन्न स्यादित्याह—वेद्येति। 'वेद्यो' विषयस्तस्य 'प्रच्युति'रभावस्तद्ग्रहे विषय एव न सहकारीत्यर्थः। आलोकानपेक्षायामिदं निमित्तमस्तु तथापि आलोकासहकृतेन्द्रियवेद्यत्वनिबन्धनमचाक्षुषत्वं तमसो दुर्वारमेवेत्यर्थः। ननु घटतिमिरयोर्युगपदुपलम्भबलात् घटग्राहकचक्षुर्ग्राह्यत्वं तिमिरस्यापि स्यादित्याह—कथमिति। युगपत् प्रत्ययो भ्रान्त इत्याह—क्रमेणेति। उपसंहरति—तदिति।

आद्यो हेतुरिन्द्रियत्वं भूतभेदबाधकं यदुक्तं तद् भूतत्वनियतबहिरिन्द्रियत्वसिद्ध्या बाधितमित्याह—बहिरिति। भूतत्वसाधनायाह—

न्यायलीलावतीप्रकाशः

सम्बन्धग्राहकमित्यर्थः। वेद्येति। अभावज्ञान इत्यर्थः। विषयेति। प्रतियोगिसहकारित्वमित्यर्थः। कथमिति। घटतिमिरग्राहकेन्द्रिययोर्भेदेन न युगपन्मनसाधिष्ठानसम्भव इत्यर्थः।

बहिरिन्द्रियेति। भूतभेदग्राहकानुमानं भूतत्वग्राहकानुमानबाधित-

न्यायलीलावतीप्रकाशविवृतिः

पांधसहचार एव विपक्षबाधकः। मिश्रास्तु तेन युगपदिन्द्रियाधिष्ठानसम्भवादूव्यासङ्गानुपपत्तिरित्येव विपक्षबाधकमत एव मूले स्वमित्युक्तमिति वदन्ति तदयुक्तम्। विभुविशेषगुणकाले स्वलपारम्भाविरोधादारब्धस्य मनस्त्वे मानाभावाच्च। अभावरूपविषयसहकारित्वमत्रापीत्यत आह—प्रतियोगीति। ननु भूतत्वाभूतत्वौदासीन्येनैव बहिरिन्द्रियग्राहकमानप्रवृत्तिरित आह—भूतेति। तथा च मूले

(१) चपरिच्कृतिप०। (२) ०भावाग्र०। (३) कथञ्चिदस्तु। (४) सा तदधिष्ठाने।

यद्यद्बाह्यविशेषगुणव्यञ्जकं(१) तत्तद्बाह्यविशेषगुणाश्रय एव, यथा वायुतेजसी(२)। न चास्य शङ्कितव्यभिचारित्वम्। दृश्यादृश्योपाधि-व्युदासे साध्येतरतोपाधेर्बाधैकगम्यस्य(३) तदभावेनाभावे तद-

न्यायलीलावतीकण्ठाभरणम्

यद्यदिति। यद्बहिरिन्द्रियं रूपादिषु मध्ये यं विशेषगुणं गृह्णाति तद्बहिरिन्द्रियं तज्जातीयविशेषगुणवदेवेति व्याप्तेर्घ्राणादीनां गन्धवत्त्वादिसिद्धौ पृथिवीत्वादिनियमे भूतत्वस्यैव सिद्धेरित्यर्थः। इयमेव व्याप्तिर्मनोव्यावृत्तये बाह्यपदप्रक्षेपेण सूचिता।

ननु तद्बाह्यगुणग्राहकमपि तज्जातीयविशेषगुणवन्मा स्यादित्याशङ्क्याह—न चेति। उपाधिशङ्कया व्यभिचारशङ्का स्यात् सैव नास्तीत्याह—दृश्येति। तदनुपपत्तेरिति। व्यभिचारशङ्कानुपपत्तेरित्यर्थः।

न्यायलीलावतीप्रकाशः

मित्यर्थः। तदुपपादयति—यद्यदिति। द्रव्यं सदिति शेषः। तेनालोकरूपादौ न व्यभिचारः। बाह्यग्रहणं मनोव्यावृत्त्यर्थम्। द्वितीयं तत्स्पष्टार्थम्। तथा च घ्राणादीनां गन्धवत्त्वादिसिद्धौ भूतात्मकत्वसिद्धेरित्यर्थः। ननु द्रव्यत्वमसिद्धं न चेन्द्रियत्वेन तत्सिद्धिः तस्याप्यसिद्धेः, मनसो दृष्टान्तस्यापीन्द्रियत्वासिद्धेः, क्रियायाः

न्यायलीलावतीप्रकाशविवृतिः

बहिरिन्द्रियग्राहकपदेन तदुपजीवकमानमेवोक्तमिति भावः। द्रव्यं सदिति। व्यञ्जकता चासाधारण्येनोक्ता। तेन न कालादौ व्यभिचारः। मनोव्यावृत्त्यर्थमिति। सा च बाह्यपदस्य व्यञ्जकविशेषणत्वे न तु विशे-

(१) ०गुणाभिव्यञ्जकमिति दीधित्यभिमतः पाठः।

(२) यद् यदिति तत्तदिति वीप्सितम्। यद् यद् द्रव्यम्। अभिव्यञ्जकत्वं त्वभिव्यक्तिजनकविषयसन्निकर्षशालित्वम्। तेनात्मादिव्युदासः। 'बाह्यो' बहिरिन्द्रियग्राह्यः। विशिष्यते इति विशेषोऽनात्मसमवेतः। मनोव्यावर्त्तनाय वैकल्पिकमनयोरुपादानम्। बहिरिन्द्रियग्राह्यविशेषगुणजातीयगुणवत्त्वं भूतत्वमिति ताद्रूप्येणोपादानम्। गुणपदं च गुणत्वव्याप्यजात्या तज्जातीयत्वलाभाय। यद्वा यद् द्रव्यं यस्य बाह्यविशेषगुणस्याभिव्यञ्जकं तत् तज्जातीयगुणवदित्यर्थः। बाह्यत्वमनात्मसमवेतत्वम्। विशेषगुणत्वं च प्रतिनियतेन्द्रियग्राह्यत्वम्। तेन स्नेहसांसिद्धिकद्रवत्वाभिव्यञ्जकदर्शनस्पर्शनयोर्न व्यभिचारः। न वा गन्धाभिव्यञ्जकसलिले व्यभिचारः, उद्भूतरसवदन्यत्वेन विशेषणात्। उद्भूतोपादाने घ्राणरसनयोरसिद्धिः।............'वायुतेजसी, वायुप्रभे। इति दीधितिः।

(३) बाधकैकग०।

न्यायलीलावतीप्रकाशः

करणाजन्यत्वमात्रव्यासः, तस्य चाक्षुष्येऽपि सत्त्वात् । अत्राहुः । गन्धोपलब्धौ रसाद्युपलब्ध्यजनकसंयोगिकरणसाध्या तदन्यकार्यत्वादिति व्यावृत्तकरणसिद्धौ तत् पार्थिवं रसाद्यव्यञ्जकत्वे सति गन्धव्यञ्जकद्रव्यत्वात् चम्पकाद्यधिवासाधिकरणवितद्द्रव्यवदिति द्रव्यत्वग्राहकमुपजीव्यैव बहिरिन्द्रियत्वस्य हेतुत्वं ततश्च पृथिवीत्वादिसिद्धिरिति भवति बहिरिन्द्रियत्वसाधनेन परम्परया बाधः ।

न्यायलीलावतीप्रकाशविवृतिः

स्वगुणविशेषणत्वे इति ध्येयम् । गन्धोपलब्धिरिति । गन्धलौकिकसाक्षात्कार इत्यर्थः । मनसाऽर्थान्तरमत आह—रसादीति । आदिपदं साध्यान्तरसूचनाय । द्रव्यत्वसिद्धये संयोगीति । चक्षुरादीनामुक्तरूपेणैव कारणत्वमिति नाप्रयोजकता । अत एव न व्यापकांशव्यर्थतापि । तदन्येति । रसोपलब्ध्यन्यकार्यत्वादित्यर्थः । नन्विदं यथाश्रुतमङ्कुरादौ व्यभिचारि । मैवम् । रसोपलब्ध्यन्यबहिर्विशेष्यकलौकिकसाक्षात्कारत्वस्य हेतुत्वात् । अत एव न सुखोपलब्धौ न वा रूपस्योपनीतस्य मानससाक्षात्कारे न वा रूपविशेष्यका(नु?)मितौ व्यभिचारः । यदि च बहिरिन्द्रियदृष्टान्तश्च रसगर्भसाध्ये च रसोपलब्धिः । मात्रासिद्धेर्न सा दृष्टान्तस्तदा व्यतिरेक्येव छिद्रश्रावदिति पाठेऽपि छिद्रशपदस्योक्त एव तात्पर्यमिति मिश्राः ।

केचित्तु तद्भिन्नशरीरजन्यकार्यत्वादिति हेतुः । अत एव छिद्रा दृष्टान्तः । न च चेष्टायां व्यभिचारः शरीरनिमित्तकारणत्वस्य हेतुप्रवेशात् । न च तथापि सुखाद्युपलब्धौ व्यभिचारः, मानससाक्षात्कारभिन्नत्वेन विशेषणादित्याहुः । संयोगित्वेन तत्सिद्धौ यद्यद्वाह्यत्वादिमूलोक्तव्याप्तिप्रभवानुमानादेव यद्यपि भूतत्वसिद्धिस्तथापि तस्यापद्यैव पर्यवसानमित्यभिसन्धानेन वैशद्याय वा पार्थिवत्वं साधयति—तत्पार्थिवमिति । द्रव्यत्वग्राहकमिति । अन्यथा संयोगाश्रयत्वगर्भेन्द्रियत्वस्यैवाग्रहादिति भावः । हेतुत्वं प्रयोजकत्वं पक्षतावच्छेदकतयेति शेषः । न च तथापि न बहिरिन्द्रियत्वग्राहकेन बाधस्तस्य भूतत्वाविषयत्वादित्यत आह—ततश्चेति । द्रव्यत्वमगृहीत्वा न तद्ग्रहस्तद्ग्रहे च तद्गर्भनिरुक्तहेतुना पृथिवीत्वसिद्धौ परम्परया तद्बाध इत्यर्थः । यद्यपि द्रव्यत्वग्राहकेण न बाधः पार्थिवत्वग्राहकस्य [च] नोपजी-

नुपपत्तेः । न च जलेन व्यभिचारः, रसेऽपि(१) व्यञ्जकत्वात् । नापि पार्थिवे योग्यतानियमः, तेजोवदनुद्भूतरूपस्पर्शत्वाद्यविरो·

न्यायलीलावतीकण्ठाभरणम्

घ्राणस्य पार्थिवत्वे साध्ये गन्धमात्रव्यञ्जकत्वस्य हेतोर्नवशरावगन्धव्यञ्जकजले परेणोक्तं व्यभिचारमपाकरोति—न चेति । रसस्यापीति । शल्कादि(सक्त्वादि?)रसस्येत्यर्थः । स्वकीयरसस्य वा । न च कुङ्कुमगन्धाभिव्यञ्जकघृतादेर्दृष्टान्तत्वं न स्यादिति वाच्यम्, यत् पार्थिवं न भवति तद्रूपादिषु मध्ये गन्धमात्रव्यञ्जकमपि न भवतीति व्यतिरेकव्याप्तेरेवाभिमतत्वात् । अन्वयस्तूपेय एव । अत्र न तूपायोऽपीति भावः । महत्यां पृथिव्यां गन्धाद्यन्यतमोद्भवनैयत्यं परोक्तं दूषयति—नापीति । तेजोवदिति । जठरानलो दृष्टान्तः । चक्षुषस्तैजसत्वासिद्धावपि । तर्हि वायुरप्यनुद्भूतगन्धा·

न्यायलीलावतीप्रकाशः

जलेनेति । नवशरावे गन्धव्यञ्जकेनेत्यर्थः । रसस्यापीति । सक्तुप्रभृतौ तथा दर्शनादिति भावः । न च गन्धव्यञ्जकरसाद्यव्यञ्जकजलव्यक्त्या व्यभिचारः, द्रव्यत्वसाक्षाद्व्याप्यभिन्नरूपेण गन्धासाधारणव्यञ्जकत्वस्य घ्राणपार्थिवत्वसाधकत्वात् । पृथिव्या द्रव्यत्वव्याप्यव्याप्येन घृतत्वादिना गन्धव्यञ्जकत्वात्, जलस्य तु जलत्वेनैव तत्त्वात्, महतः पार्थिवस्येत्यादि दूषयति—नापीति। तेजोवदिति। यद्यपि चक्षुषस्तैजसत्वासिद्धेः सुवर्णस्य च चाक्षुषतया उद्भूतरूपत्वान्न दृष्टान्तता तथा·

न्यायलीलावतीप्रकाशविवृतिः

प्यतेति न बाधः, किन्तु समबलतया सत्प्रतिपक्षतैव, तथापि कल्प्तान्तर्भावलाघवसहकारेण तस्य बलवत्त्वाद्बाध इत्यभिसन्धिः । अत एव "अभूतत्वसाधनमप्रयोजक"मिति वक्ष्यति । द्रव्यत्वेति । द्रव्यत्वसाक्षाद्व्याप्यघटितभिन्नरूपेणेत्यर्थः । अन्यथा जलस्यापि योग्यजलत्वेन गन्धव्यञ्जकतया व्यभिचारतादवस्थ्यात् । न हि तत्र जलत्वमवच्छेदकमतिप्रसङ्गात् । एवं च तादृशधर्मघटितेन मनस्त्वेन मनसोऽपि गन्धव्यञ्जकतया तद्वावृत्त्यर्थमसाधारणेत्युक्तम् । द्रव्यपदञ्चात्र प्रवेश्यमन्यथा सन्निकर्षे व्यभिचारतादवस्थ्यात् । 'जलत्वे·

(१) रसस्यापि ।

धात्(१)। न च(२) वायुबन्दीग्रहः(३) तत्र विशेषस्योक्तत्वात्। चक्षुश्च विचित्रमपि स्यादविन्धनतेजोवत् तैजसं, गुणेषु

---

न्यायलीलावतीकण्ठाभरणम्

दिका पृथिवी स्यादिति परोक्तं दूषयति—नापीति। विशेषस्येति। उद्भूतस्पर्शाया पृथिव्या उद्भूतरूपवत्त्वनियमान्न वायुः पृथिवीत्युक्तत्वादित्यर्थः। कोशादिव्यापिन इत्यादि परोक्तं दूषयति—चक्षुरिति। विचित्रत्वमनुद्भूतसर्वगुणत्वम्। यथा तेजोविशेषस्याविन्धनत्वं तथैव दर्पीत्यर्थः। तैजसमिति। चक्षुरित्यनुवर्त्तनीयम्। गुणेष्विति। रूपादिचतुर्ष्वित्यर्थः। तथा च परगन्धाद्यव्यञ्जकत्वे सति पररूपव्यञ्जकत्वाद्विति तैजसत्वे हेतुरिति भावः। एवं रसनमपीत्यत्राप्यमिति शेषः। रूपादिषु मध्ये रसस्यैव व्यञ्जकत्वादित्यर्थः। श्रोत्रस्य स्वगुणग्राहक-

न्यायलीलावतीप्रकाशः

पि जाठरानल एव दृष्टान्तः। वस्तुतो घ्राणं यदि पार्थिवं महत्स्यादुद्भूतगन्धाद्यन्यतमं स्यादित्यत्र विपक्षे बाधकाभावादप्रयोजकत्वम्। अन्यथा महत्त्वमात्रेऽपि तत्प्रयोजकमित्याकाशे महत्त्वं न स्यात्। विशेषस्येति। पार्थिवगन्धस्पर्शयोस्तुल्ययोगक्षेमत्वादित्यस्येत्यर्थः। विचित्रमिति। कोशादिव्यापकमप्यनुद्भूतरूपस्पर्शमित्यर्थः। तैजसत्वसिद्धावविन्धनं तेजो दृष्टान्तः स्यादिति तत्साधयति—तैजसमिति। गुणेष्विति। परकीयगन्धाद्यव्यञ्जकत्वे सति परकीयरूपव्यञ्जकत्वादि-

न्यायलीलावतीप्रकाशविवृतिः

नैव' जलत्वघटितेनैवेत्यर्थः। घ्राणमिति। अत्रापाद्ये उद्भूतपदं प्रत्यक्षपरं तेन न घ्राणस्याणुत्वमङ्गीकृत्येष्टापत्तिः। न चैवं मन्मते आपा-(द?)कासिद्धिः स्थूलावयवावच्छिन्नगन्धग्रहानुपपत्त्या महत्त्वसिद्धेरिति भावः। एवं च परमाणावेव व्यभिचार इति महदिति विशेषणम्। जठरानले व्यभिचार इति पार्थिवमिति। वज्रादौ व्यभिचार इत्यन्यतमपदम्। संयोगादिव्यञ्जकतया स्वरूपासिद्धेरन्यथा व्याचष्टे—परकीयेति। गन्धाव्यञ्जकत्वे सति व्यञ्जकत्वमप्रसिद्धं व्यञ्जकमात्रस्यैवोपनीतगन्धाभिव्यक्तिस्वरूपयोग्यत्वादिति परकीयेति विशे-

---

(१) ०स्पर्शवत्त्वाय०। (२) नापीति कण्ठाभरणधृतः पाठः। (३) वायुमातिव०ग्रहः०।

षणम्। तदर्थस्तु परः (१)स्वाश्रयस्तद्विशेषणकत्वम्। एवं चाश्रयविशेषणकगन्धाभिव्यक्तिजनकान्यत्वं सत्यन्तार्थः। उपनीतभाने च गन्ध एव विशेषणं न त्वाश्रय इति भावः। तावन्मात्रं च त्वगादौ व्यभिचारीति रूपव्यञ्जकत्वम्। तदपि त्वगादौ व्यभिचारीति परकीयेति। परविशेषणकेत्यर्थः।

वस्तुतस्तु तादृशव्यञ्जकतावच्छेदकजातिमत्त्वं हेतुरतो न गोलकशरीरगोलके व्यभिचारः, तत्र व्यञ्जकतावच्छेदकस्य गोलकत्वस्य जनकत्वादिना सङ्करभयेन जातित्वाभावात्। चक्षुरधिष्ठानत्वस्यैव गोलकत्वरूपत्वात्। अत एव सन्निकर्षे व्यभिचार(वार?)णाय नात्र द्रव्यपदमुपात्तम्। तत्र तादृशजात्यभावेनैव व्यभिचाराप्रसङ्गात्। आश्रयविशेषणकेत्यादौ स्वविशेष्यकेत्यर्थस्तेन गन्धविशेष्यकसाक्षात्काराजनकत्वे सति रूपविशेष्यकसाक्षात्कारजनकत्वं हेतुः पर्यवस्यति। एवं च घटगन्धसमानाधिकरणः स्पर्श इत्यादिक्रमेण त्वगादीनामप्याश्रयविशेषणकगन्धव्यञ्जकतया नाप्रसिद्धितादवस्थ्यम्, न वा घटरूपसमानाधिकरणः स्पर्श इति प्रतीतिमादाय व्यभिचारतादवस्थ्यम्। न चैवमपि सामान्यजप्रतीतिमादाय तदुभयदोषतादवस्थ्यं लौकिकत्वेनापि विशेषणादिति मिश्राः।

अत्र वदन्ति एवं सति प्रदीपदृष्टान्तानुपपत्तिः, तत्र व्यञ्जकतावच्छेदकजातेरसत्त्वात्। प्रदीपत्वादेरल्पवृत्तितया तेजस्त्वस्य चातिप्रसक्त्या उद्भूतरूपालोकत्वेनैव व्यञ्जकत्वादिति। अत्र ब्रूमः। तेजस्त्वव्याप्योद्भूतरूपसमवायिकारणतावच्छेदकजातेरेव प्रदीपादौ व्यञ्जकतावच्छेदकत्वम्। न च सा परमाण्वादिवृत्तित्वेनातिप्रसक्तेति वाच्यम्, उद्भूतत्वस्य निमित्तभेदप्रयोज्यत्वमिति मतेनैतदभिधानेन परमाण्वादौ तदस्वीकारात्। न च सा जातिः पृथिव्यामपीति अतिप्रसक्तिरिति वाच्यम्, भास्वरत्वव्याप्यस्योद्भूतत्वस्य जातिसङ्करभयेन स्वीकारात्। तादृशरूपसमवायिकारणतायाः पृथिव्यादावभावात्। यदि च तादृशजातिर्न स्वीक्रियेत तदा न जातिगर्भो हेतुः किन्तूक्तव्यभिचारवारणाय शरीरावयवान्यत्वं हेतुविशेषणमतो न दृष्टान्तासिद्धिः। द्रव्यपदं च तथा सति सन्निकर्षवारणाय

---

(१) पर आश्रयस्त०।

रूपस्यैव व्यञ्जकत्वात् दीपवत्। एवं रसनमपि। क्षित्यादेरश्रोत्रत्वे अजसंयोगाभावात्। शब्दद्रव्यत्वनिषेधे श्रोत्रस्य स्वगुणग्राह-

न्यायलीलावतीकण्ठाभरणम्

त्वेनानिन्द्रियत्वं यत् परेणोक्तं तन्नाह—क्षित्यादेरिति। गन्धादिचतुर्णामव्यञ्जकत्वेन श्रोत्रं पृथिव्यादिचतुष्कान्तर्भूतं साधनं भवति वि-

न्यायलीलावतीप्रकाशः

त्यर्थः(१)। एवमिति। गन्धादिषु रसस्यैव व्यञ्जकत्वादित्यर्थः। इन्द्रियत्वेनाभूतत्वसाधनमप्रयोजकमिति भावः। त्वगिन्द्रियस्य वायवीयत्वं प्रागेव साधितमिति श्रोत्रं न स्वगुणग्राहकमिति दूषयति—क्षित्यादेरिति। क्षित्यादेरश्रोत्रत्वमुभयसिद्धमतः श्रोत्रं न स्वगुणग्राहकमित्यत्र किमभिप्रेतम्? किं श्रोत्रमाकाशादन्यद्विभु द्रव्यं शब्दस्त्वाकाशगुणः द्रव्यमेव वा शब्दः, क्षित्यादेरन्यदविभु द्रव्यं वा श्रोत्रं शब्दस्त्वाकाशगुण एव। आद्ये अजसंयोगेति। विभुद्रव्ययोः संयोगाभावे संयुक्तसमवायाभावाच्छब्दाग्रहणप्रसङ्गः। द्वितीये शब्दद्रव्यत्वेति। बहिरिन्द्रियव्यवस्थापकत्वादिना गुणत्वसिद्धेरित्यर्थः। तृतीये श्रोत्रस्येति। बहिरिन्द्रियस्य तस्य ग्राह्यजातीयासाधारणगुणवत्त्वेन शब्दवत्त्वात् क्षित्यादौ च शब्दनिषेधात् शब्दाश्रयस्य लाघवादैक्यसिद्धेः धर्मि-

न्यायलीलावतीप्रकाशविवृतिः

प्रवेश्यामिति संक्षेपः।

वस्तुतो गुणेषु(२) मध्ये रूपविशेष्यकप्रत्यक्षमात्रजनकत्वादिति मूलानुसारी हेतुः सम्यक्। गोलकस्यापि स्वीयरूपव्यञ्जकतया न व्यभिचारः। प्रदीपप्रभा च दृष्टान्तोऽतो न स्पर्शव्यञ्जकतया साधनवैकल्यमिति। ननु रसनस्येन्द्रियत्वेनाभूतत्वसाधने जागरूके आप्यत्वसाधनं बाधितमित्यत आह—इन्द्रियत्वेनेति। धर्मीति। श्रोत्रं न स्वगुण-

(१) गन्धाद्यव्यञ्जकस्यापि दीपस्य स्वीयस्पर्शाभिव्यञ्जकत्वात् गन्धाद्यव्यञ्जकत्वमित्यपि परकीयपदम्। द्वितीयं च परं गन्धाद्यव्यञ्जकस्वीयरूपव्यञ्जकघटादिवारणाय। वस्तुतो गन्धादिसामान्यमेवोपादेयम्। स्पर्शघटिते तु प्रभैव दृष्टान्तः। गन्धरसाव्यञ्जकस्यैव वज्रादेर्गन्धरसस्पर्शव्यञ्जकस्य चेन्द्रनीलादिप्रभासंम्बद्धस्य पार्थिवभागस्य स्वीयरूपव्यञ्जकत्वात् परकीयेति। इति श्रीधृतिः। प्रभाया दृष्टान्तत्वपक्षे आद्यपरकीयपदाद्युपादाने पार्थिवप्रभयोर्व्यभिचारवारणाय द्वितीयपरकीयपदमित्यस्मद्गुरुचरणाः। (२) तेषु गन्धादिषु म०।

कत्वात् । न चान्धकारग्राहकमन्यत् । निषेध्यनिषेधयोः समानेन्द्रियवेद्यत्वनियमात् । व्याघाताच्च । प्रतियोगित्वसहकारि-

न्यायलीलावतीकण्ठाभरणम्

मूर्त्तद्रव्यान्तरं यदि श्रोत्रं स्यात्तदा संयुक्तसमवायेन शब्दग्रहः सम्भाव्येतापि, यद्याकाशेन तस्य संयोगः स्यात्, स च नान्यतरकर्मादिजन्योऽतोऽजः स्वीकर्त्तव्यः । स च प्रमाणबाधित एव । संयोगप्रत्यासत्त्या च तदा, यदि शब्दो द्रव्यं स्यात्तथा च परिशेषात् समवाय एव सन्निकर्षः शब्दग्राहक इति परिशेषादाकाशमेव श्रोत्रम् । तच्च स्वगुणग्राहकमेवेत्यर्थः । तथा चेन्द्रियत्वेन श्रोत्रस्य स्वगुणग्राहकत्वे साध्येऽनुद्भूतगुणत्वमेवोपाधिरिति भावः । तामसमिन्द्रियान्तरं निराकरोति—न चेति । निषेध्येति । प्रतियोगिग्राहकेन्द्रियग्राह्यत्वादभावस्य चाक्षुषमेव तम इत्यर्थः । तर्हि तमोग्रहे बाह्यालोकः सहकारी स्यादित्यत आह—व्याघातादिति । तत्सहकारित्वे तम एव तत्र व्याहतं स्यादित्यर्थः

आप्यवैधर्म्ये सत्यपि यदि रसनमाप्यं तदा पृथिवीवैधर्म्ये-

न्यायलीलावतीप्रकाशः

ग्राहकमात्रबाध इत्यर्थः । यद्यपि यद्यत्प्रतियोगिग्राहकं तत्तदभावग्राहकमित्युपमाने व्यभिचारि । यदिन्द्रियं यद्ग्राहकं तत्तदभावग्राहकमित्यपि मूर्त्तवत्त्वाभावे व्यभिचारि मूर्त्तवत्त्वस्य योग्यायोग्यमूर्त्तघटितत्वेन तदभावस्यातीन्द्रियत्वात्, तथापि यदिन्द्रियं यद्ग्राहकं तत्तदेन्द्रियकाभावग्राहकमितिनियमादालोकस्य चाक्षुषत्वे तदभावस्यापि चाक्षुषत्वमित्याह—निषेध्येति । एतच्च स्वसिद्धान्तावष्टम्भेन अन्धकारस्याभावत्वमभ्युपेत्योक्तम् । ननु चाक्षुषत्वे तस्यालोकसहकारित्वप्रसङ्ग इत्यत आह—व्याघाताच्चेति । आलोकसत्त्वे तत्संसर्गाभावरूपं तमो ग्राह्यमेव न स्यादिति किंग्रहे स सहकारी स्यादित्यर्थः । इन्द्रियाणां भौतिकत्वे मनोऽपि तथा स्यादित्यत

न्यायलीलावतीप्रकाशविवृतिः

ग्राहकमित्यस्येति शेषः ।

ननु चाक्षुष ( त्व ? ) इति । चक्षु( ष ? )स्तमोग्रा( ग्रा ? )हकत्व इत्यर्थः । प्रसक्तान्धोऽभग्नगोलकोऽन्ध इत्यर्थः । श्रोत्रतदधिष्ठानयो-

त्वस्यापि प्रतिक्षेपात् । मनःप्रतिबन्दिग्रहस्य [च] मनस्येव नि-रसनात् । तथापि विशिष्टादृष्टोपगृहीतं गोलकमेवास्तु इन्द्रियं क-र्णशष्कुलीवत् । न च व्यवहितोपलम्भापत्तिः । योग्यदेशस्थ-स्यैव ग्राह्यत्वात् । अन्यथा महानिले(१) ऋजुवस्त्वग्रहणप्रसङ्गः । पवनेन तेजसां दूरमपनयनात् तेजोभेदे नैवमिति चेन्न, करा-

---

न्यायलीलावतीकण्ठाभरणम्.

ऽपि मनः पृथिवी स्यादिति यदुक्तं परेण, तद्दूषयति—मन इति । बौद्धः शङ्कते—तथापीति । कर्णशष्कुलीवदिति प्रसाध्याङ्कम् । विशिष्टादृष्टोपगृहीत-त्वमात्रे वा कर्णशष्कुली दृष्टान्तः । बहिर्वृत्त्यभावमात्रे वा प्रसङ्गान्ध-व्यावृत्तये विशिष्टादृष्टोपगृहीतत्वं विशेषणम् । ननु प्राप्तिश्चेन्न तन्न सदा व्यवहितमपि गृह्णीयादित्यत आह—न चेति । विषययोग्यताया एव प्रयोजकत्वं न तु प्राप्तेरित्यर्थः । अन्यथेति । यदि प्राप्य गृह्णीया-दित्यर्थः । तेजोभेद इति । शीघ्रगमनशील इत्यर्थः । एतादृशस्यान-पनेयत्वे करेणापि चक्षुरपनयो न स्यादित्याह—कराभ्यामिति । सन्नि-

न्यायलीलावतीप्रकाशः

आह—मनःप्रतिवन्दीति । यद्यपि चक्षुस्तैजसत्वं प्रागेव साधितं तथापि गोलकसम्बद्धमेव तेजश्चक्षुरस्तु नाश्रयवहिर्वर्तीति शङ्कामाह—तथा-पीति । विशिष्टादृष्टोपगृहीतमिति । प्रसङ्गान्धव्यावृत्त्यर्थे अधिष्ठानादन्यदेशगा-मित्वाभावसाम्येनाह—कर्णशष्कुलीवदिति । यथा कर्णशष्कुलीवहिर्वृत्त्या-काशं न श्रोत्रमित्यर्थः । ननु ; चाप्राप्तत्वाविशेषात्कुड्यव्यवहितमपि चक्षुर्गृह्णीयादित्यत आह—न चेति । गोलकाद्बहिर्निर्गच्छच्चक्षुः किय-द्दूरमेव गच्छति नातिदूरम् , स्फटिकादिना न प्रतिबध्यते किन्तु कुड्यादिनेति त्वदुपगमवन्मयापि देशस्वभावविशेषस्य योग्यता-नियामकत्वोपगमादित्यर्थः । ननु विषयसम्बद्धस्वभावत्वाच्चक्षुषो न पवनेन दूरापनय इत्याह—तेजोभेद इति । कराभ्यामिति । यद्यपि करादिवारणीयमपि काण्डादि वायुना न प्रतिबध्यत इत्यनैकान्तिकं

न्यायलीलावतीप्रकाशविवृतिः

रभेदा( दा ? )ह—अधिष्ठावादिति । विषयसम्बद्धेति । अत्वाप्रतिबद्ध(२)

---

(१) ०था महानिशि । (२) ०न्याप्रतिबद्धस्य ।

भ्रामकत्वकल्पनापत्तेः । सूर्याचन्द्रमसोः समसमयवेदनाच्च(१) । न च तद् भ्रान्तं, यौगपद्यमात्रप्रतिक्षेपापत्तेः । तत्र बाधका- भावादिति चेन्न, तुल्यत्वात् । एतेन रसनादिकमप्यपास्तम्(२) ।

त्वगपि देहव्यापी उद्भूतस्पर्शः पवन एवास्तामिति ना- तीन्द्रियतासिद्धिरिति(३) चेन्न, का देशस्य योग्यता, रूपभेदो वा इन्द्रियप्राप्तिर्वा । नाद्यः । दिगन्तरस्थेन सत्यावरणे तदनुपल- ब्धेः । पुरुषान्तरं प्रति तदावृतमिति चेन्न, एकस्यावृतानावृत-

---

न्यायलीलावतीकण्ठाभरणम्

कृष्टविप्रकृष्टयोरतुल्यकालग्रहणं न स्यादित्याह—शाखेति । तदिति । वेदनयोः समकालीनत्ववेदनमित्यर्थः । तत्रेति । यौगपद्यमात्र इत्य- र्थः । रसनादिकमिति । अधिष्ठानातिरिक्तमित्यर्थः ।

पवन एवेति । बाह्य एवेत्यर्थः । नेन्द्रियसिद्धिरिति । अतीन्द्रियसिद्धिरित्यर्थः । यद्वा सिद्धान्त्यभिमतेन्द्रियसिद्धिरित्यर्थः । रूपभेद इति । स्वरूपभेद इत्यर्थः । दिगन्तरस्थेनेति । व्यवहितस्थानिकटस्थेनेत्यर्थः । पुरुषान्तरमिति । व्यवहित-

न्यायलीलावतीप्रकाशः

तथापि वेगमान्द्यस्यावश्यकतया यावद्दूरं निर्वाते याति काण्डादि न तावद्दूरं वाते यातीत्यस्ति । चक्षुस्तु वातनिर्वातयोरुभयत्र तुल्य- गाम्येव । तथा च कथं प्रतिबद्धगतिकं वाते मन्दं गच्छतीति नियम इति भावः । रसनादिकमिति । अधिष्ठानसम्बद्धजलादिभिन्नमिति शेषः ।

पवन एव प्रत्यक्षस्पर्शाश्रय इति शेषः । दिगन्तरस्थेनेति । सन्नि- धानवद् व्यवधानेऽपि पर्वतवत्केशस्यापि ग्रहापत्तेर्दूरसाक्षात्कारे

न्यायलीलावतीप्रकाशविवृतिः

स्वभावत्वादित्यर्थः । वेगेति । अन्यथा वातनिर्वातयोः काण्डस्य (४)तुल्यतापत्तेरिति भावः । सन्निधानवदिति । देशस्वरूपभेदात्मकयो- ग्यताया नियामकत्वे आवृतस्यापि ग्रहणापत्तिरिति मूलोक्तमुप- लक्षणम् । दूरस्थकेशस्यापि ग्रहणापत्तिः पर्वतसाक्षात्कारानुरोधेन तद्देशस्य योग्यत्वादित्यर्थः । अत्रेष्टापत्तिमाशङ्क्याह—दूरेति । स चात्र

---

(१) वेदनाच्च । (२) ०नादिकमपास्तम् ।
(३) नेन्द्रियसिद्धिरिति कण्ठाभरणधृतः पाठः । (४) तुल्यगत्यापत्तिरिति भा० ।

त्वविरोधात् । ज्ञातृभेदेनैकस्यैव ज्ञातृपुरोवर्तिकुड्यादिपरापरदेश-संयोगित्वं तत्त्वमविरुद्धमिति चेन्न, आवृताप्रकाशकत्वेन दीप-वत्प्राप्यकारित्वसिद्धेः । नेतरः । तत एवाधिष्ठानबहिर्भूतेन्द्रि-

---

न्यायलीलावतीकण्ठाभरणम्

मित्यर्थः । ज्ञातृभेदेनेति । चैत्रमैत्रयोः पुरोवर्त्ति यत् कुड्यं यत्परा-परदेशसंयोगित्वमावृतानावृतत्वमविरुद्धमेवेत्यर्थः । चक्षुः प्राप्यकारि प्रकाशकत्वे सति आवृताप्रकाशकत्वात् प्रदीपवदित्यनुमानात् प्राप्य-कारित्वसिद्धिरित्याह—आवृतेति । इन्द्रियप्राप्तियोग्यताभ्युपगमेनैव दूष-यति—नेतर इति । तत एवेति । गोलकस्थं दूरस्थेनाप्राप्तेरित्यर्थः । महानि-

न्यायलीलावतीप्रकाशः

महत्त्वविशेषः कारणमिति भावः । ननु यत्र क्वचित् कुड्यादिसत्त्वं न प्रति-बन्धकमपि तु ग्राह्यग्राहकमध्यवर्त्ति । न चैवं कुड्यादौ मध्यवर्तिनि पर्वताद्यग्रहप्रसङ्गः, ग्राह्याधिकपरिमाणवन्मध्यवर्त्तिनः कुड्यादेः प्रति-बन्धकत्वादित्यभिप्रेत्याह—ज्ञातृभेदे(ने?)ति । आवृतेति । चक्षुः प्राप्यकारि प्रकाशकत्वे सत्यावृताप्रकाशकत्वात् प्रदीपवत् । न च गोलकपक्षी-

न्यायलीलावतीप्रकाशविवृतिः

नास्त्येवेति नेष्टापत्तिरिति भावः । इतिपूर्वोत्तरफक्किकयोर्व्याख्यानम-युक्तं देशस्य योग्यत्वेऽपि महत्त्वविशेषरूपसहकारिविरहादेव दूरस्थ-केशानुपलम्भोपपत्तेस्तस्य देशयोग्यतायामबाधकत्वात् । तस्मादेवं व्याख्या । ननु यथेन्द्रियसन्निकर्षनियामकत्वपक्षे तवेन्द्रियसम्बद्ध-स्यापि व्यवहितकेशस्याग्रहस्तथा देशस्वभावस्यापि नियामकत्वे मम कुतश्चिन्निमित्तादावृताग्रहः स्यादित्याशङ्कायामाह—सन्निधानवदिति । तथा च महत्त्वविशेषकारणाभावाद्दूरे केशाग्रह उपपद्यते न त्वावृ-ताग्रहः, इन्द्रियसन्निकर्षस्यानियामकत्वे ग्रहकारणवैकल्याभावादिति। ग्राह्याधिकेति । अन्यूनेत्यर्थः । समानपरिमाणस्यापि प्रतिबन्धक-त्वात् । यद्यप्युपरिस्थेन न्यूनपरिमाणेनापि पर्वतादिग्रहप्रतिब-न्धादधिकपरिमाणेनापि किञ्चिद्दूरस्थवस्तूपलम्भाप्रतिबन्धाच्चेद-मयुक्तं तथापि प्राप्यकारितापक्षेऽपि किञ्चित् क्वचिन्नयनगतिप्रति-बन्धकमुपेयम् । तथा च यादृशमेव नयनप्रतिबन्धकं तादृशमेवोप-लम्भप्रतिबन्धकमिति भावः । न च गोलकेति । यद्यप्यतिरिक्ततेजसः

यसिद्धेः। ऋजुवस्तुग्रहोऽपि तस्यातिशयितवेगवत्त्वेनाप्रति-बन्धात्। तस्य च फलोन्नेयत्वात् अचिरदीधितिसंयोगवत्। अत एव यौगपद्यस्य भ्रान्तत्वं (१) त्वगपि चान्य एव पवनः। तस्येन्द्रियत्वेनानु(२)द्भूतस्पर्शत्वानुमानात्। न चात्रानियम-

---

न्यायलीलावतीकण्ठाभरणम्

लप्रेर्यत्वं यदुक्तं तत्राह—ऋज्विति। तर्हि करप्रेर्यत्वमपि न स्यादिति यदुक्तं तत्राह—तस्येति। निविडावयवद्रव्यापनेयत्वेऽपि महानिलानपने-यत्वं फलबलोन्नेयमित्यर्थः। अत एवेति। प्राप्यकारित्वादेवेत्यर्थः। सन्नि-कृष्टविप्रकृष्टयोर्युगपत् प्राप्तिरपि पृथक्तया उपपद्यत इति भावः। इन्द्रिय-त्वेनेति। शब्देतरोद्भूतविशेषगुणानाश्रयत्वे सति ज्ञानजनकमनः-संयोगाश्रयत्वमिन्द्रियत्वमिति व्यवस्थापनादिति भावः। इन्द्रियत्वेऽ-प्यनुद्भूतस्पर्शत्वं माभूदित्यनियमशङ्कां निरस्यति—न चेति। ननु

न्यायलीलावतीप्रकाशः

करणे बाधः, अतिरिक्तपक्षत्वे चाश्रयासिद्धिः, रसाद्यव्यञ्जकरूपसाक्षा-त्कारकारणत्वेनोभयसिद्धेन पक्षत्वात्। नन्वावृतत्वं यदीन्द्रियगति-प्रतिबन्धकमध्यस्थितद्रव्यकत्वं तर्ह्यसिद्धम्। अथाधिष्ठानासम्ब-न्धार्थग्राहकत्वं तदा शरीरेणानैकान्तिकं शरीरस्य हि स्वावयवो-ऽधिष्ठानमेव। मैवम्। पूर्वमेव चक्षुस्तैजसत्वसिद्धौ वहिर्वृत्तितार्थमेव विवादात् तैजसत्वेन हेतुविशेषणान्नानैकान्तिकम्। न च तैजस-

न्यायलीलावतीप्रकाशविवृतिः

प्रागेव साधनाद्विकल्पोऽयमसङ्गतः, तथापि गोलकमात्रावच्छिन्नं तेजः पक्षो घटादिसम्बद्धं वेति विकल्पार्थो बोध्यः। नन्वावृत-त्वमित्यत्रावृताप्रकाशकत्वमित्यर्थस्तेनाधिष्ठानासम्बद्धार्थग्राहकत्वमि-त्यनेन सामानाधिकरण्यं घटते। 'असिद्धि'रन्यतरासिद्धिः। प्रकृ-ते तेजोगतेरन्यतरासिद्धत्वात्। तैजसत्वविशेषणासिद्धिपरिहारा-याह—पूर्वमिति। तथा चाधिष्ठानासम्बद्धार्थग्राहकत्वमेव तदिति-भावः। शरीरे च न व्यभिचार इत्याह—तैजसत्वेनेति। तथा च प्रका-शकपदं तैजसपरमिति अधिष्ठानासम्बद्धार्थग्राहकतेजस्त्वादिति

---

(१) भ्रान्तत्वात् त्व०। (२) शैवत्त्वमनु०।

न्यायलीलावतीकण्ठाभरणम्

मनोवत् बहिरिन्द्रियाण्यनुरूपानि स्युरिति शङ्कां निरस्यति—

न्यायलीलावतीप्रकाशः

शरीरेणानैकान्तः अन्त्यावयविभिन्नतैजसत्वस्य विवक्षितत्वात् । अत्र यत्र काले चन्द्रसंयुक्तं चक्षुस्तत्काले शाखयापीति तुल्यकालग्रहणोपपत्तिः । न चाग्रावच्छेदेनैष चक्षुःसंयोगो ग्राहकः, अन्यथा मूलावच्छेदेन गोलकस्य नित्यसम्बन्धात्तद्ग्रहापत्तेरिति वाच्यम्, तिर्यग्भागेन शाखाचन्द्रमसोरग्रावच्छेदेन चक्षुःसंयोगाविरोधादिति समाधाने सत्येव यत्र न तथात्वं तत्राह—अत एवेति । अतिशयितवेगवत्त्वादेवेत्यर्थः । ननु कर्मणां कथमेकत्र चिरत्वमन्यत्र क्षिप्रत्वं पूर्वदेशविभागोत्तरदेशसंयोगयोः कर्मणा जनयितव्ययोरविशेषात् । अत्राहुः । यत्र(तु)भूयोऽवच्छेदेनोत्तरदेशसंयोगस्तत्र क्षिप्रता, यत्र स्वल्पावच्छेदेन स, तत्र चिरत्वम् । न चैवमुन्मील्य निमीलितनयनस्यापि साक्षात्कारापत्तिः, गोलकसन्निकृष्टेन्द्रियस्य विषयसंयोगे सति तज्ज्ञानजनकत्वोपगमात् । ननु चक्षुरादीनामप्रत्यक्षगुणत्वात्परमाणुत्व·

न्यायलीलावतीप्रकाशविवृतिः

हेतुरिति भावः । अन्त्यावयवीति । शरीरतदवयवभिन्नेत्यर्थः । अन्यथा तद्गोलके व्यभिचारतादवस्थ्यात् । एवं च सति घ्राणे व्यभिचारवारणाय तैजसपदमिति भावः । न चैवमधिष्ठानासम्बद्धेति व्यर्थं स्वप्रकाशके शरीरतदवयवभिन्ने सुवर्णादौ स्वसंयुक्तार्थग्राहकत्व·(१)लक्षणप्राप्यकारित्वसाध्याभावेन व्यभिचारात् । केचित्तूक्तानुमानस्य चक्षुः कर्मसंयुक्तं सत् ज्ञानकारणं साक्षात्कारसाधारणकारणतेजस्त्वादालोकवदिति तात्पर्यम् । तेजःपदं च श्रोत्रे व्यभिचारवारणाये(२)ति वदन्ति । समाधान इति । इदं चोद्भूतानुद्भूतरूपाभ्यामारम्भपक्षेऽन्यथा सार्वकालिकयौगपद्यप्रत्ययानुपपत्तेः । वस्तुतस्तयोर्गुणविरोधेनारम्भकत्वमेव न भवतीति यथाकरमेव ग्राह्यमिति मिश्राः । यत्र तु भूय इति(३)। इदमपि कर्मवैजात्यादन्यथा कारणैकजात्ये कार्यवैलक्षण्यानुपपत्तेरिति भावः । चक्षुरादीनामिति । चक्षुरादेरणुत्वे स्थौल्याग्रहप्रसङ्गः, तदवच्छेदेन सन्नि( क? )र्षा( भावादिति? )भावः । द्रव्यान्तरत्वं नवद्रव्यान्यद्रव्यत्वमप्रसिद्धमित्यन्यथा व्याचष्टे—

(१) र्थप्रकाशकत्वल० । (२) येत्याहुः । (३) यत्र भूय इति ।

शङ्का, निरुपाधित्वात् । स्पर्शवदिन्द्रियत्वाच्च । रसनादयोऽप्यवयविन इति सिद्धमिन्द्रियम् ।

ननु शरीरं नाम द्रव्यान्तरं, भूतचतुष्कप्रकृतिकत्वात् । तथा हि गन्धवत्त्वात् तत्पार्थिवं यथा तथा जलानलानिलप्रकृतिकमपि, द्रवत्वस्य स्यन्दनहेतुत्वात् उष्णतायाश्च पाकहेतुत्वात् ।

---

न्यायलीलावतीकण्ठाभरणम्

स्पर्शवदिन्द्रियत्वादिति ।

पुनर्नवैव द्रव्याणीति विभागमाक्षिपति—नन्विति । द्रव्यान्तरत्वं नवभिन्नत्वं तत्राकाशादिपञ्चभ्यः स्पर्शवत्त्वेन भेदसिद्धौ पृथिव्यादिचतुर्भ्यो भेदकमाह—भूतचतुष्कप्रकृतिकत्वादिति । एतदेवोपपादयति—तथा हीति । जलप्रकृतिकत्वायाह—द्रवत्वस्येति । स्यन्दनमधःसंयोगहेतुरन्तरितद्रवद्रव्यक्रिया । तेजःप्रकृतिकत्वायाह—उष्णताया इति ।

न्यायलीलावतीप्रकाशः

मस्तु अवयवकल्पनायां मानाभावादित्यत आह—स्पर्शवदिन्द्रियत्वादिति । नानावयवावच्छेदेनैकदा स्पर्शानुभवात् त्वचः सावयवत्वे सिद्धे तद्दृष्टान्तेन चक्षुरादीनामपि सावयवत्वमनुमेयमित्यर्थः ।

द्रव्यान्तरमिति । पृथिव्याद्येकैकसमवायिकारणकं न भवतीत्यर्थः । स्वरूपासिद्धिं निरस्यति—तथा हीति । द्रवत्वस्येति । स्वेदादिलक्षणस्यन्दनेन द्रवत्वमनुमाय तेन जलप्रकृतित्वमनुमेयमित्यर्थः । उष्णताया इति । पाकेनोष्णस्पर्शमनुमाय तेन तेजःप्रकृतित्वानुमानमित्यर्थः । वायुप्रकृतित्वसाधकं धृतिकम्पादि प्रत्यक्षसिद्धत्वान्नोक्तम् । 'एतेन'

न्यायलीलावतीप्रकाशविवृतिः

पृथिवीति । एकैकमात्रेत्यर्थः । समवायिपदं सिद्धसाधनवारणाय । अत्र न पृथिवीमात्रसमवायिकारणकमित्यादिक्रमेण प्रत्येकमेव साध्यं जलप्रकृतिकत्वादित्यादिक्रमेण प्रत्येकमेव हेतुः, तेन यथाश्रुते हेतोरप्रसिद्धिः, प्रत्येकप्रकृतिकत्वे च हेतौ घटादावेव व्यभिचार इति दूषणमलग्नकम् । अत्र च पृथिव्याद्येकैकमात्रसमवायिकारणकत्वनिषेधे सिद्धे जन्यत्वविशेषितेन तेन द्रव्ये शरीरे नवद्रव्याभिन्नत्वं साध्यमानं दशमद्रव्यमादाय सिध्यतीति न द्रव्यान्तरमिति स्थूलान-

एतेनोष्णं जलं शीतः शीतमयूखरश्मिरित्युपपद्यते। न चैतदुपष्ट-
म्भकसन्निधिप्रयुक्तं, गन्धेऽपि तथाप्रसक्तेः। न च पार्थिवाप्यभा-
गौ न सम्भूयारभेते विजातीयत्वात् आप्यतैजसभागवदिति सा-
म्प्रतम्, दृष्टान्तस्य साध्यविकलत्वात्। तयोरारम्भकत्वे आ-

---

न्यायलीलावतीकण्ठाभरणम्

पाकस्तेजःसंयोगोऽशितपीतादिपरावृत्तिहेतुः। स चौष्ण्यापेक्षे-
णेत्यौष्ण्यमनुमाय तेजःप्रकृतित्वमनुमेयमित्यर्थः। धृतिकम्पादिकं
स्फुटत्वाद्वायुप्रकृतिकत्वसाधकं नोक्तम्। एतेनेति। एकस्यापि
नानाप्रकृतिकत्वेनेत्यर्थः। न चैतदिति। शरीरे द्रवत्वोष्णत्वादीत्यर्थः।
गन्धेऽपीति। तथा च पार्थिवमपि शरीरं न स्यादिति भावः। न च
पार्थिवेति। पृथिवीत्वं न जलोपादानोपादेयवृत्ति जलावृत्तिधर्मत्वात्
मनस्त्ववदित्यर्थः। आप्येति। विवादपदादन्यद् दृष्टान्तः पक्षोऽपि
विवादपदत्वेन विशेष्यस्तथा च न सिद्धसाधनमंशतः। दृष्टान्तस्येति।

न्यायलीलावतीप्रकाशः

नानाप्रकृतित्वसाधनेनेत्यर्थः। न च पार्थिवेति। पृथिवीत्वं न जलोपादे-
योपादानवृत्ति जलावृत्तिधर्मत्वाद्वायुत्वादित्यर्थः। दृष्टान्तस्येति। ननु

न्यायलीलावतीप्रकाशविवृतिः

नुरोधः। ननु सजातीयारम्भकपृथिवीजलभागयोः पक्षत्वे सिद्धसा-
धनं तदन्यपक्षत्वे चाश्रयासिद्धिः सिद्धौ वा बाधः विजातीययोरपि
सम्भूय संयोगाद्यारम्भकतया बाधव्यभिचारौ चेत्यन्यथा व्याचष्टे—
पृथिवीत्वमिति। जलोपादेयस्य यदुपादानं तद्वृत्तित्वाभावः साध्यः, न
जलोपादेयवृत्तीति साध्ये सिद्धसाधनं जलोपादेयस्य जलत्वेन पक्ष-
विजातीयत्वेन वा पृथिवीत्वानाश्रयत्वात् अत उपादानगर्भं साध्यम्।
अत्र चोपादेयपदानन्तरं द्रव्यपदं प्रवेश्यमन्यथा पृथिवीजलसंयोग-
मादाय बाधापत्तेः। क्वचिज्जलोपादेयवृत्तीत्येव पाठस्तत्र च जलोपादे-
यमु (पा?)देयं यस्येति मध्यमपदलोपिसमासस्तेनोक्तार्थ एव पर्यव-
सानम्। हेतौ जलत्वे व्यभिचारवारणाय जलावृत्तिपदम्। ननु शरीर-
भूतचतुष्कजन्यत्ववादिमते वायुत्वदृष्टान्तासिद्धिरिति चेत्, मैवम्।
सजातीयारम्भकवायुवृत्त्यसाधारणधर्मस्य दृष्टान्तत्वादिति भावः।
नन्विति। अ(न्य?)था शरीरवद्भागस्यापि विजातीयत्वापत्तेरिति

न्यायलीलावतीकण्ठाभरणम्

सर्वत्राप्यपार्थिवभागे सम्भूय वस्तुकत्वसम्भवादित्यर्थः । न च भागारम्भकजलादावेव साध्यप्रसिद्धिस्तत्रापि सम्भूयारम्भकत्वासम्भवादिति भावः। तयोरिति । विजातीययोरित्यर्थः । एकस्य गुणस्या

न्यायलीलावतीप्रकाशः

भागारम्भकजलादिष्वेवैतत्प्रसिद्धं न च तत्रापि सम्भूयारम्भकत्वं तथा सत्यैकैकभूतजन्यत्वस्य क्वाप्यप्रसिद्धेर्भूतचतुष्टयजन्यत्वस्य साध्यस्याप्यप्रसिद्धिप्रसङ्गात् । अत्राहुः। यदि शरीरारम्भकः पार्थिवो भागो न जलारभ्यारम्भक इति सामान्यतः साध्यं तदा दृष्टान्तासिद्धिः, केवलपृथिव्यारम्भकस्यापि जलवृत्तिसङ्ख्यारम्भकत्वात् । अथ जलारभ्यद्रव्यानारम्भकत्वं तत्र शरीरानारम्भकत्वमुपाधिः । अत्र शरीरत्वं भूतचतुष्टयोपादेयवृत्ति न वेति संशयः, तद्गतसङ्ख्यायां तत्प्रसिद्धिः । तयेरिति । विजातीयपरमाण्वोर्द्व्यणुकारम्भकत्वे कारण गुणस्यैकस्य सततारम्भकत्वापत्तेरनारम्भकत्वात् द्व्यणुकमगुणं स्या·

न्यायलीलावतीप्रकाशविवृतिः

भावः। यथाश्रुता(१)भिप्रायेणैवाऽयमाक्षेप इत्यन्ये । साध्यस्याप्रसिद्धीति । विजातीयारब्धस्य पृथिव्यादिविजातीयत्वेन सर्वस्य विजातीयारब्धत्वे पृथिवीत्वादिकं न क्वचिदपि व्यवतिष्ठेतेति पृथिव्यादिलक्षणभूतचतुष्कजन्यत्वस्याप्रसिद्धिरिति भावः। न च परमाणूनां पृथिव्याद्याश्रयतया(२) तद्वृत्तिचतुष्कसंख्यायामेव तत्प्रसिद्धिरिति वाच्यम्, द्व्यणुकादिवृत्तित्वमेव हि पृथिवीत्वादीनां परमाणुवृत्तित्वे मानम् । तथा च द्व्यणुकादीनां पृथिवीत्वाद्यभावे परमाणूनामपि तदभावादिति भावः। यद्यपि भूतचतुष्टयजन्यत्वं साध्यं क्वचिदपि नोक्तं तथापि स्वरूपासिद्धिनिरासाय भूतचतुष्कप्रकृतिकत्वमेव साध्यमुक्तं(३) तदेव भूतचतुष्टयजन्यत्वपदेनोक्तमिति तस्यैवोक्तक्रमेणाप्रसिद्धिर्द्रष्टव्या । केचित्तु पृथिव्याद्येकैकमात्रसमवायिकारणकत्वमात्रनिषेधस्य साध्यतयोक्तक्रमेण प्रतियोग्यप्रसिद्ध्या साध्याप्रसिद्धिरिति भावः । इत्याहुः । सामान्यत इति । द्रव्यपदाप्रवेशेनेत्यर्थः । पूर्वन्यायेन पृथिवीत्वपक्षकपूर्ववर्णितानुमाने च शरीरानारम्भकमात्रवृत्तित्वमुपाधिरिति भावः। 'तत्प्रसिद्धि'र्भूतचतुष्टयोपादेयत्वप्रसिद्धिः। एवं च

(१) श्रुतमूलाभि० । (२) पृथिवीत्वाद्याश्रयत० । (३) साध्यं युक्तमित्यपि पाठः ।

रब्धस्यागुणत्वं (१)स्यादिति तत्सिद्धिरिति चेन्न, तदसिद्धेः। शीतोष्णयोर्भास्वराभास्वरयो रसतदभावयो रूपरूपाभावयो- र्विरोधोऽस्तीति चेन्न, एकैकशः सजातीयारम्भेऽपि विजा- तीयसान्निध्यात् नीलानीलरूपकदम्बस्य विलक्षणरूपजनक- त्ववदस्यापि विचित्रकार्यजनकत्वात्। मैवम्। नीलपीता-

न्यायलीलावतीकण्ठाभरणम्

नारम्भकत्वादित्यर्थः। तदसिद्धेरिति। एकस्य गुणस्यारम्भकत्वे द्रव्यस्यागुणत्वासिद्धेरिति भावः। गन्धवन्निर्गन्धाभ्यामारम्भे तद् द्रव्यं गन्धवन्निर्गन्धं च स्यादिति गुणविरोधादनारम्भ इति शङ्कते— शीतोष्णयोरिति। शीतोष्णाभ्यामेकैकाभ्यां विचित्रस्पर्शवदेकं द्रव्य- मारभ्यं नीलादिरूपैर्विजातीयैरेकचित्रारम्भवदिति परिहरति— एकैकश इति। मैवमिति। नीलादीनां विजातीयानां चित्ररूपानारम्भे

न्यायलीलावतीप्रकाशः

दित्यर्थः। तदसिद्धेरिति। सततानारम्भस्यापेक्षणीयसमवायिकारणा- भावादप्युपपत्तेरन्यथानेकस्याप्यारम्भकत्वे तुल्यत्वादेकगुणस्याना- रम्भकत्वासिद्धेरित्यर्थः। एतेनोत्पन्नद्व्यणुके यावत्सत्त्वमपरापरग- न्धाद्युत्पत्तिः स्यादित्यपि निरस्तम्। अनेकैरप्यारम्भे तुल्यत्वात् पूर्वो- त्पन्नगन्धादिकमुत्तरत्र तदुत्पत्तिप्रतिबन्धकमित्यपि तुल्यमेव। न चानेकगन्धवदारभ्यत्वं कार्यस्य गन्धवत्त्वे प्रयोजकम्, अनेकत्वस्य व्यर्थत्वात्। ननु विजातीयानामारम्भकत्वे तत्कार्यस्य नीरूपत्वनीरस- त्वादिप्रसङ्गः, रूपवदारभ्यत्वेन रूपवदादित्वे नीरूपाद्यारभ्यत्वेन नीरू- पत्वाद्यापत्तौ जलत्वादिना सङ्करः स्यादित्यनारम्भकत्वमित्याह—शीतो- ष्णयोरिति। नीरूपत्वाद्यापत्तौ रूपवदाद्यनारभ्यत्वमुपाधिः। न च जा- तिसङ्करः, नीलपीताद्यारभ्यचित्ररूपवदेकैकारभ्यविजातीयस्यैव का- र्यस्य नानाजातीयैरारम्भादित्याह—एकैकश इति। तत्रावयविनो नीरू- पत्वे चाक्षुषत्वानुपपत्तेर्नीलादिविजातीयविचित्ररूपवत्त्वे स्थिते वि- जातीयानां रूपाणां जनकत्वं क्लृप्तम्, अत्र त्वेकैकारभ्यविजातीयं द्रव्यं नाध्यक्षसिद्धमतो गुणविरोधात्, विजातीयानारम्भ इत्याह—नीलेति।

न्यायलीलावतीप्रकाशविवृतिः

संख्यात्वे विधिकोटिप्रसिद्धिरिति भावः। रूपवदादीति। यद्यपि गन्ध-

(१) ०स्यागुणवत्त्वं स्या० ।

द्विरूपकद्रव्यस्य यथा विचित्ररूपजनकत्वमध्यक्षसिद्धं न तथा पृथिव्यादीनां विचित्रकार्यजनकत्वं, भूजलप्रभवे वस्तुनि

न्यायलीलावतीकण्ठाभरणम्

पटादेररूपित्वे प्रत्यक्षताक्षतिरिति तत्र तथास्तु, द्रव्ये तु विजातीयारम्भे न प्रमाणमित्यर्थः। नन्वेकस्य गुणस्यारम्भकत्वे सततोत्पत्तिप्रसङ्गवदुभयारम्भकत्वेऽपि तथा तत्र समवायिकारणापेक्षायामेकगुणारम्भेऽपि तथा तत्र गुणान्तरस्य प्रतिबन्धकत्वकल्पनायामेकारम्भेऽपि तथा। तथा च साधकबाधकमानाभावाद्वि·

न्यायलीलावतीप्रकाशः

नन्वध्यक्षाभावेऽपि पृथिवीत्वं जलोपादेयवृत्ति पृथिवीनिष्ठात्यन्ताभावाप्रतियोगित्वात् द्रव्यत्ववदित्यनुमानं स्यादित्यत आह—भूजलेति। अपृथिवीवृत्तित्वमत्रोपाधिरित्यर्थः। प्रत्युतानारम्भकत्वे मानमस्ति। तथा हि पृथिवीसमवेतद्रव्यं न निर्गन्धसमवेतं गन्धवत्त्वात् पृथिवीमात्रारब्धद्व्यणुकवत्। न च दृष्टान्तासिद्धिः, विजातीयैरारम्भेऽपि

न्यायलीलावतीप्रकाशविवृतिः

रसयोर्नैवं विजातीयगन्धरसवदारब्धे व्यभिचारात् तथापि विजातीयगन्धवदसहकृतगन्धवदारभ्यत्वं तत्र हेतुः। एवं रसेऽपीति भावः। 'सङ्करः' सङ्करप्रसङ्गश्चेत्यर्थः(१) तेन नीरसत्वादिप्रसङ्ग इत्यनेन समुच्चयो लभ्यते। पृथिवीत्वमिति। जलोपादेयं (उपादेयं?) यस्येति पूर्ववन्मध्यमपदलोपी, अन्यथा तन्मते शरीरस्य विजातीयतया बाधापत्तेरित्यवधेयम्।

पृथिवीति। अत्र पृथिवीपदं सकलपृथिवीपरमन्यथा कपालत्वादौ व्यभिचार इति मिश्राः। वयन्तु सामान्याभावस्यैव हेतुतया न व्यभिचारप्रसङ्गः, अन्यथा हेतुसमानाधिकरणेत्यादिव्याप्तिलक्षणेऽपि सकलपदप्रक्षेपापत्तेरिति ब्रूमः। न च पृथिवीनिष्ठेत्यस्य स्वरूपासिद्धिवारकतया व्यर्थता, विशिष्टाभावत्वात्। अपृथिवीति। पृथिव्यवृत्तित्वमित्यर्थः(२)। विजातीयैरिति। अन्यथा पूर्वन्यायेन पृथिवीत्वाद्यव्यवस्थितेरिति भावः। तथापि मानुषशरीरस्य पार्थिवत्वं विनिगकं नोक्तमतस्तदाह—तत्र मानुषेति। ननु शरीर·

(१) सङ्करप्रसङ्ग इत्यर्थ इति पाठान्तरम्। (२) पृथिव्यन्यवृ०।

विलक्षणे मानाभावात्, ततो गन्धवतां गन्धवत्पृथिवीजाती-यजनकत्वनियमात्, जलस्य निर्गन्धजनकत्वनियमस्याविप्लुतत्वात्, एकं शरीरं गन्धवन्निर्गन्धक्षितिजलादिजातिमच्च स्यादिति विरोधात्। किञ्च कार्यस्य वैलक्षण्यं गन्धवन्निर्गन्धतादात्म्यमुभयबहिर्भूतं वा अन्यतररूपं वा। नाद्यौ, विरोधात्। नेतरः, गन्धवता गन्धवज्जननेऽगन्धवताप्यगन्धोत्पादनात् अन्यतररूपत्वानुपपत्तेः। एतच्चित्ररूपेऽपि तुल्यमिति चेन्न, तत्र नीलस्यानीलचित्ररूपजनकताया अनु-

---

न्यायलीलावतीकण्ठाभरणम्

जातीयारम्भसन्देहः स्यादित्यनुशयेन नियममाह—तत इति। गन्धवद् गन्धवदेवारभते गन्धवच्च गन्धवद्भिरेवारभ्यते इति दर्शनबलान्नियमस्थितौ न सम्भूयारम्भः। किं च निर्गन्धं निर्गन्धमेवारभते निर्गन्धं च निर्गन्धैरेवारभ्यत इति दर्शनान्नियमसिद्धौ उभयारब्धं न गन्धवत् स्यात् न वा निर्गन्धमुभयस्वभावं वा। भावे वा तत्र पृथिवीत्वं जलत्वं च सङ्कीर्येतेत्यर्थः। ननु पृथिवीत्वं जलोपादेयवृत्ति पृथिवीनिष्ठात्यन्ताभावाप्रतियोगित्वात् द्रव्यत्ववदित्यनुमानात् विजातीयारम्भोऽस्तु। किं च विजातीयारब्धं विलक्षणमेव स्यात्तथा च क जातिसाङ्कर्यमपीत्यत आह—किञ्चेति। नाद्याविति। उभयतादात्म्यमुभयबहिर्भावश्च विरोधान्न सम्भवति "परस्परविरोधे हि न प्रकारान्तरस्थिति"रित्यर्थः। गन्धवदिति। पूर्वोक्तनियमबलादित्यर्थः। ननु नीलारब्धं नीलमेव पीतारब्धं पीतमेवेतिनियमात् चित्रमेव रूपं न स्यादित्याह—एतदिति। तत्र प्रत्यक्षप्रमाणस्योक्तत्वान्न साम्यमित्याह—तत्रेति।

न्यायलीलावतीप्रकाशः

एकैकारभ्यात् क्षितिजलाद्यारम्भे वैलक्षण्यं विकल्प्य दूषयति—किञ्चेति। न च जातिविशेष एव वैलक्षण्यं तदननुभवात्। न च विजातीयैरारम्भे सति तत्कल्प्यं तत्र बाधकस्योक्तत्वात्। तत्रेति। तत्र नीलादिविसजातीयैरारम्भाभ्युपगमात्। न चेदमप्रयोजकमित्याह—तत इति।

भवसिद्धत्वात् ।

तद् (१) द्विविधं योनिजमयोनिजं च। शेषे प्रमाणं नास्तीति चेन्न, पृथिवी अयोनिजशरीरारम्भिका आरम्भहेतुत्वात् जलव-

---

न्यायलीलावतीकण्ठाभरणम्

तदिति। मानुषं शरीरमित्यर्थः। वृक्षादिशरीरस्यायोनिजत्वेऽपि मानुषस्यायोनिजं शरीरमाक्षिपति—शेष इति। अयोनिज इत्यर्थः। पृथिवीति। न च घटादौ बाधः, कपालादौ च व्यभिचारः, दृष्टान्तश्च साध्यविकल इति वाच्यम्, पृथिवीत्वमयोनिजशरीरारम्भकवृत्ति स्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् जलत्ववदितिविवक्षि-

न्यायलीलावतीप्रकाशः

लक्षणकर्बुररूपस्यानुभवासिद्धत्वादनन्यगत्या कर्बुरत्वजातिः कल्प्यत इत्यर्थः।

तत्र मानुषादिशरीरे गन्धस्यानाशमनपायित्वात् क्लेदादीनां च नाशात् पृथिवीसमवायिकारणकत्वं स्थितम्। शरीरत्वं च न जातिः किन्तु साक्षात्प्रयत्नजन्यक्रियावदन्त्यावयविमात्रवृत्तिजातिमत्त्वम्। पार्थिवकृम्यादिशरीरस्यायोनिजत्वे प्रत्यक्षसिद्धेऽपि मानुषस्यायोनिजशरीरं साधयति—पृथिवीति। ननु प्रसिद्धपृथिवीपक्षत्वे बाधः, अन्यत्राप्रसिद्धिः। न च पृथिवीत्वमयोनिजशरीरवृत्तीति साध्यमप्रसिद्धेः। शरीरारम्भकत्वादिति च योनिजशरीरमात्रारम्भकैरवयवैर्व्यभिचारि।

न्यायलीलावतीप्रकाशविवृतिः

त्वं तावज्जातिरनुगतमतेस्तथा च तदाश्रयस्य पृथिवीत्वादिस्वीकारे जातिसङ्करः स्यादिति पृथिव्यादिविजातीयमेव तदुपेयमत आह—शरीरत्वं चेति। साक्षादिति। तादृशी क्रिया (चेष्टा ?)। चेष्टात्वं च जातिविशेषः। अन्यथा प्रयत्नजन्यत्वस्यैव दुर्ग्रहत्वापत्तेः। अत्र चेष्टा चान्त्यावयविमात्रं चेति द्वन्द्वसमासेन चेष्टावद्वृत्तित्वे सति अन्त्यावयविमात्रवृत्तिर्या जातिर्मानुषत्वादिस्तद्वत्त्वमित्यर्थः। अत्र पाषाणमध्यवर्तिनिश्चेष्टभेकशरीरादौ (२) खण्डावयविमूलशरीरे चाव्याप्तिरिति जातिगर्भता। तत्रापि तादृशभेकत्वमनुष्यत्वादिजातिसत्त्वान्नाव्याप्तिः, द्वन्द्वसमासानाश्रयणे च साऽव्याप्तिस्तदवस्था निश्चेष्टवृत्तिजा-

---

(१) तच्च द्वि०। (२) र्तिनि भेकशरीरे।

न्यायलीलावतीकण्ठाभरणम्

तत्वात् । जलीयं च शरीरं वरुणलोकेऽस्तीत्यागमसिद्धत्वान्न दृष्टान्तस्य साध्यवैकल्यम् । यद्वा अहं योनिजमदीयशरीरान्यपार्थिवशरीरवान् संसारित्वात् मैत्रवदिति विवक्षितत्वात् । दृष्टान्तासिद्धि-

न्यायलीलावतीप्रकाशः

न च रूपसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातित्वात्पृथिवीत्वस्याऽयोनिजशरीरवृत्तित्वमनुमेयं पृथिवीभिन्नवृत्तित्वस्योपाधित्वात् । नापि कपाल अयोनिजशरीरवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत् रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वात् जलवदिति वाच्यम्, निर्गन्धवत्त्वोपाधेः । पृथिवीजलवृत्तिजातिसिद्धावर्थान्तर-

न्यायलीलावतीप्रकाशविवृतिः

तेश्चेष्टान्मात्रवृत्तित्वाभावात् । घटादावतिव्याप्तिरिति प्रथमं विशेषणम् । करादावतिव्याप्तिरित्यन्त्येति । सत्तादिकमादाय पूर्वोक्तातिव्याप्तिद्वयतादवस्थ्यमिति मात्रेति । शरीरघटान्यतरत्वमादाय घटातिव्याप्तिरिति जातीति । नरसिंहशरीरे च नरत्वादिजातेर्जातिसङ्करतया तदनङ्गीकारेऽपि बाल्यादिभिन्नशरीरवृत्तिजातिमादायैव लक्षणगमनादिति दिक् । न चेति । मानुषेति शरीरविशेषणं बोध्यमतो न कृम्यादिशरीरेणार्थान्तरम् । अत एवाह—अप्रसिद्धेरिति । यद्यपि सर्गाद्यकालीनमानुषशरीरवृत्तिधर्म एवोक्तसाध्यप्रसिद्धिस्तथापि प्रलयेऽपि विप्रतिपत्तिरेवेत्यनुसन्धिनेदमुक्तम् । आरम्भकत्वादिति(१) यथाश्रुतहेतोस्तन्त्वादावेव व्यभिचारः स्फुट इति तात्पर्यार्थमनूद्य दूषयति—शरीरारम्भकत्वादिति चेति । न चेति । यद्यप्यत्रापि मानुषेति विशेष(ण ?) मन्यथाऽर्थान्तरत्वात्तथा चाप्रसिद्धिरेव तथापि दूषणान्तरदानाय पुनराशङ्का । यद्वा कृम्यादिभिन्नत्वमात्रमत्र विशेषणं तथा च नार्थान्तरं न वा साध्याप्रसिद्धिः, जलादिशरीरस्यायोनिजन्यत्वात् । अत एव वक्ष्यमाणोपाधेरपि जलत्वादावेव साध्यव्यापकता । अत एव च न कृम्यादिशरीरवृत्तिधर्मे तदुपाधेः साध्याव्यापकत्वमिति । पृथिवीजलेति । यद्यपि पृथिवीत्वस्य योनिजशरीरवृत्तित्वे (२)साध्ये नोक्तार्थान्तरशङ्का तथाप्येतदनुमानबलादेव पृथिवीत्व-

(१) आरम्भहेतुत्वादिति आदर्शभूतपरममूले पाठः । (२) पृथिवीत्वस्यायोनिजशरी० ।

दिति तत्सिद्धेः । तदसिद्धमिति चेन्न, जलं शरीरजनकं इन्द्रिया-

---

न्यायलीलावतीकण्ठाभरणम्

माशङ्कते—तदिति । जलमिति । जलत्वं शरीरारम्भकवृत्ति स्पर्शवद्वृत्ति-द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् पृथिवीत्ववदित्यर्थः । अन्यथा

न्यायलीलावतीप्रकाशः

त्वाच्च । अत्राहुः । अहं मदीययोनिजान्यपार्थिवशरीरवान् संसारि-त्वात् चैत्रवत् । विपक्षे वाधकं च वक्ष्यति । यथाश्रुतमाक्षिपति-तदिति । जले साध्यमदृष्टमित्यर्थः । जलमिति । ननु प्रसिद्धजलपक्षत्वे बाधोऽन्यत्राप्रसिद्धिः । न च जलत्वं शरीरवृत्ति रूपवद्वृत्तिद्रव्यत्वसा-क्षाद्व्याप्यजातित्वात् पृथिवीत्ववदिति वाच्यम्, गन्धवद्वृत्तित्वस्यो-पाधित्वात् । जलपरमाणवः शरीरारम्भकाः आरम्भकपरमाणुत्वा-दिति निमित्तकारणत्वसिद्धावर्थान्तरम् । न च शरीरसमवायिका-

न्यायलीलावतीप्रकाशविवृतिः

स्योभयसाधारणत्वमायातम् । तथा च जलस्यायोनिजशरीरारम्भक-तायाः सिद्धत्वादर्थान्तरं स्यादिति भावः । एवं च यथाश्रुतेनैवोपपत्तौ यत्ताहशजातिमत्त्वेन शरीरवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं पृथि-व्यामनुमेयमिति शङ्कायामेतत्फक्किकावतारः । यच्च ताहशशङ्कापूर-कपाठकल्पनं तदयुक्तम् । अहमिति । मदीयेति साध्यप्रसिद्धये । योनि-जेति बाधवारणाय । पार्थिवेति जलायोनिजशरीरेण सिद्धसा-धनवारणाय । कृम्यादिभिन्नत्वमपि शरीरविशेषणम्, अन्यथा कृम्यादिशरीरेण सिद्धसाधनापत्तेः । शरीरपदं च स्वनिष्ठभोगा-वच्छेदकपरम् । अन्यथेश्वरस्यादिकार्यवशाच्छरीरित्वे (१)आत्मत्व-मात्रस्यैव हेतुत्वसम्भवे संसारित्वादित्यत्र व्यर्थतापत्तेः । सुखसम-वायिकारणतावच्छेदकजातेरखण्डाया एव संसारित्वपदेनाभिधा-नमित्यपि वदन्ति । अहं मदीयेत्यनुमानेऽलग्नकत्वादाह—यथाश्रुत-मिति । गन्धवदिति । गन्धयोग्येत्यर्थः । तेन विरुद्धगन्धवदारब्धशरी-रवृत्तिधर्मे न साध्याव्यापकत्वम् । आरम्भकेति । कपाले व्यभिचार इति परमाणुपदम् । मनसि व्यभिचारवारणायारम्भकेति । द्रव्यार-

(१) ०श्वरस्यापि कार्य्यवशा० ।

रम्भकत्वात् पृथिवीवदिति तत्सिद्धिः । अन्यथा इन्द्रियमपि नारभेत, अदृष्टरूपत्वात् । आप्यं शरीरं योनिजमिति चेन्न, भूमण्डले बुद्बुदोपमदेहानुपलब्धेः । करकादिवत्प्रतिबद्धद्रव-

---

न्यायलीलावतीकण्ठाभरणम्

बाधव्यभिचारौ स्याताम् । अन्यथेति । इन्द्रियान्तरारम्भक[द्रव्य]वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातेः शरीरारम्भकवृत्तित्वव्याप्यत्वेऽदृष्टत्वमात्रं यदि बाधकं तदेत्यर्थः । आप्यमिति । आप्यमपि शरीरं योनिजमिति योजना । तथा च साध्यविकलो दृष्टान्त इत्यर्थः । योग्यानुपलब्धिबाधमाह—भूमण्डल इति । अन्यभुवनवृत्तित्वान्न योग्यानुपलब्धिरिति

न्यायलीलावतीप्रकाशः

रणत्वं साध्यं आरभ्यारम्भकवादानभ्युपगमात्, परम्परासमवायिकारणत्वस्य दुर्वचत्वात् निर्गन्धत्वेन प्रतिरोधाच्च । अत्राहुः जलत्वं न शरीरानारम्भकजलमात्रवृत्ति स्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् मनस्त्वदित्यत्र तात्पर्यम् । अन्यथेति । यद्यदृष्टत्वान्न शरीरारम्भकत्वमित्यर्थः । आप्यं शरीरमिति । तथा च साध्यविकलो दृष्टान्त इत्यर्थः । भूमण्डल इति । न चान्यत्राऽप्यं शरीरं योनिजं

न्यायलीलावतीप्रकाशविवृतिः

म्भकेत्यर्थः । आरभ्येति । परमाणोराहत्य शरीरारम्भकत्वे शरीरस्य द्व्यणुकवदप्रत्यक्षतापत्तिरिति द्व्यणुकादिकमारभ्य ते शरीरमारभन्त इति वक्तव्यमेतच्च नाभ्युपेयत इति भावः । एवं च पक्षे बाधो हेतोर्विरुद्धत्वं चेति भावः । निर्गन्धत्वेनेति । गन्धायोग्यत्वेनेत्यर्थः । 'प्रतिरोधात्' सत्प्रतिपक्षात् । जलत्वमिति । अत्र शरीरारम्भकवृत्तित्वे साध्ये गन्धवद्वृत्तित्वमेवोपाधिरिति नञ्द्वयगर्भता । अत्र च व्योमादावेव साध्याव्यापकत्वमुक्तोपाधेः । यद्यप्येवंसाध्येऽपि जातित्वावच्छिन्नसाध्यव्यापकत्वमुक्तोपाधेरक्षतमेव तथाप्यवच्छेदकावच्छिन्नत्वाप्रतीतौ तदुपाधिनिरासः प्रयोजनं सम्भवत्येव । व्यर्थता तु विशिष्टाभावत्वेनैव निरसनीया । विशिष्टव्यापकत्वप्रतीतिदशायामिन्द्रियारम्भकत्वान्यथानुपपत्त्यादितर्कादेव तन्निरास इति भावः । अत्र साध्ये यदि जलपदं तदा हेतौ स्पर्शवद्वृत्तित्वपदशून्यः पाठः । मनस्त्ववदिति च दृष्टान्तपाठः । न चान्यत्रेति । इदमुपलक्ष-

दिति तत्सिद्धेः । तदसिद्धमिति चेन्न, जलं शरीरजनकं इन्द्रिया-

---

न्यायलीलावतीकण्ठाभरणम्

माशङ्कते—तदिति । जलमिति । जलत्वं शरीरारम्भकवृत्ति स्पर्शवद्वृत्ति-द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् पृथिवीत्ववदित्यर्थः । अन्यथा

न्यायलीलावतीप्रकाशः

त्वाच्च । अत्राहुः । अहं मदीययोनिजान्यपार्थिवशरीरवान् संसारि-त्वात् चैत्रवत् । विपक्षे बाधकं च वक्ष्यति । यथाश्रुतमाक्षिपति—तदिति । जले साध्यमदृष्टमित्यर्थः । जलमिति । ननु प्रसिद्धजलपक्षत्वे बाधोऽन्यथाप्रसिद्धिः । न च जलत्वं शरीरवृत्ति रूपवद्वृत्तिद्रव्यत्वसा-क्षाद्व्याप्यजातित्वात् पृथिवीत्ववदिति वाच्यम्, गन्धवद्वृत्तित्वस्यो-पाधित्वात् । जलपरमाणवः शरीरारम्भकाः आरम्भकपरमाणुत्वा-दिति निमित्तकारणत्वसिद्धावर्थान्तरम् । न च शरीरसमवायिका-

न्यायलीलावतीप्रकाशविवृतिः

स्योभयसाधारणत्वमायातम् । तथा च जलस्यायोनिजशरीरारम्भक-तायाः सिद्धत्वादर्थान्तरं स्यादिति भावः । एवं च यथाश्रुतेनैवोपपत्तौ वस्ताहशजातिमत्त्वेन शरीरवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वं पृथि-व्यामनुमेयमिति शङ्कायामेतत्फक्किकावतारः । यच्च तादृशशङ्कापूर-कपाठकल्पनं तदयुक्तम् । अहमिति । मदीयेति साध्यप्रसिद्धये । योनि-जेति बाधवारणाय । पार्थिवेति जलायोनिजशरीरेण सिद्धसा-धनवारणाय । कृम्यादिभिन्नत्वमपि शरीरविशेषणम्, अन्यथा कृम्यादिशरीरेण सिद्धसाधनापत्तेः । शरीरपदं च स्वनिष्ठभोगा-वच्छेदकपरम् । अन्यथेश्वरस्यादिकार्यवशाच्छरीरित्वे (१)आत्मत्व-मात्रस्यैव हेतुत्वसम्भवे संसारित्वादित्यत्र व्यर्थतापत्तेः । सुखसम-वायिकारणतावच्छेदकजातेरखण्डाया एव संसारित्वपदेनाभिधा-नमित्यपि वदन्ति । अहं मदीयेत्यनुमानेऽलग्नकत्वादाह—यथाश्रुत-मिति । गन्धवदिति । गन्धयोग्येत्यर्थः । तेन विरुद्धगन्धवदारब्धशरी-रवृत्तिधर्मे न साध्याव्यापकत्वम् । आरम्भकेति । कपाले व्यभिचार इति परमाणुपदम् । मनसि व्यभिचारवारणायारम्भकेति । द्रव्यार-

---

(१) ०श्वरस्यापि कार्य्यवशा० ।

रम्भकत्वात् पृथिवीवदिति तत्सिद्धिः। अन्यथा इन्द्रियमपि नारभेत, अदृष्टरूपत्वात्। आप्यं शरीरं योनिजमिति चेन्न, भूमण्डले बुद्बुदोपमदेहानुपलब्धेः। करकादिवत्प्रतिबद्धद्रव-

---

न्यायलीलावतीकण्ठाभरणम्

बाधव्यभिचारौ स्याताम्। अन्यथेति। इन्द्रियान्तरारम्भक[द्रव्य]वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातेः शरीरारम्भकवृत्तित्वव्याप्यत्वेऽदृष्टत्वमात्रं यदि बाधकं तदेत्यर्थः। आप्यमिति। आप्यमपि शरीरं योनिजमिति योजना। तथा च साध्यविकलो दृष्टान्त इत्यर्थः। योग्यानुपलब्धिबाधमाह—भूमण्डल इति। अन्यभुवनवृत्तित्वान्न योग्यानुपलब्धिरिति

न्यायलीलावतीप्रकाशः

रणत्वं साध्यं आरभ्यारम्भकवादानभ्युपगमात्, परम्परासमवायिकारणत्वस्य दुर्वचत्वात् निर्गन्धत्वेन प्रतिरोधाच्च। अत्राहुः जलत्वं न शरीरानारम्भकजलमात्रवृत्ति स्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् मनस्त्वादित्यत्र तात्पर्यम्। अन्यथेति। यद्यदृष्टत्वान्न शरीरारम्भकत्वमित्यर्थः। आप्यं शरीरमिति। तथा च साध्यविकलो दृष्टान्त इत्यर्थः। भूमण्डल इति। न चान्यत्राऽऽप्यं शरीरं योनिजं

न्यायलीलावतीप्रकाशविवृतिः

म्भकेत्यर्थः। आरभ्येति। परमाणोराहत्य शरीरारम्भकत्वे शरीरस्य द्व्यणुकवदप्रत्यक्षतापत्तिरिति द्व्यणुकादिकमारभ्य ते शरीरमारभन्त इति वक्तव्यमेतच्च नाभ्युपेयत इति भावः। एवं च पक्षे बाधो हेतोर्विरुद्धत्वं चेति भावः। निर्गन्धत्वेनेति। गन्धायोग्यत्वेनेत्यर्थः। 'प्रतिरोधात्' सत्प्रतिपक्षात्। जलत्वमिति। अत्र शरीरारम्भकवृत्तित्वे साध्ये गन्धवद्वृत्तित्वमेवोपाधिरिति नञ्द्वयगर्भता। अत्र च व्योमादावेव साध्याव्यापकत्वमुक्तोपाधेः। यद्यप्येवंसाध्येऽपि जातित्वावच्छिन्नसाध्यव्यापकत्वमुक्तोपाधेरक्षतमेव तथाप्यवच्छेदकावच्छिन्नत्वाप्रतीतौ तदुपाधिनिरासः प्रयोजनं सम्भवत्येव। व्यर्थता तु विशिष्टाभावत्वेनैव निरसनीया। विशिष्टव्यापकत्वप्रतीतिदशायामिन्द्रियारम्भकत्वान्यथानुपपत्त्यादितर्कादेव तन्निरास इति भावः। अत्र साध्ये यदि जलपदं तदा हेतौ स्पर्शवद्वृत्तित्वपदशून्यः पाठः। मनस्त्ववदिति च दृष्टान्तपाठः। न चान्यत्रेति। इदमुपलक्ष-

त्वमिति चेन्न, भौमेनोष्मणा विलयनाभावात्। भूवर्त्तिनां शरीराणां गन्धवत्त्वेन पार्थिवत्वात् तदौपाधिकं किं न स्यादिति चेन्न, आनाशमनपगामित्वात्। सुवर्णगुरुत्ववत् स्यादिति चेन्न, तत्र बाधकसत्त्वात्। अन्यथा धर्मधर्मिव्यवहारोच्छेदप्रसङ्गात्।

---

न्यायलीलावतीकण्ठाभरणम्

चेदु योनिजशरीरस्य भूमण्डलवृत्तित्वे सति पार्थिवत्वनैयत्यादिति भावः। करकादिवदिति। तथा च उपलभ्यमानमेव शरीरमाप्यं स्यादिति नानुपलब्धिबाध इत्यर्थः। आप्यद्रवत्वस्य हिमकरकादौ भौमोष्मणा विलायनीयत्वदर्शनान्नैवमित्याह—भौमेति। आप्यशरीरस्य भूमण्डलस्थत्वे बाधकान्तरमाह—भूवर्त्तिनामिति। तदिति। गन्धवत्त्वमित्यर्थः। गन्धस्य यावच्छरीरस्थितिकत्वेन स्वाभाविकत्वावधारणादिति भावः। यावद्द्रव्यभाव्यपि गुरुत्वं सुवर्णे यथौपाधिकं तथैव तत् स्यादित्याह—सुवर्णेति। तत्रेति। अत्यन्तानलसंयोगानुच्छिद्यमानद्रवत्वाधिकरणत्वेन तैजसत्वसिद्धौ तत्र गुरुत्वस्यौपाधिकत्वसिद्धेरित्यर्थः। अन्यथेति। बाधके सत्यपि स्वाभाविकत्वे तद्विरहेऽप्यौपा-

न्यायलीलावतीप्रकाशः

स्यादिति न योग्यानुपलब्धिः। यच्छरीरं योनिजं तद् भूमण्डलस्थमेव यच्च तादृशं तत्पार्थिवमेवेति व्याप्तेः। करकादिवदिति। तथा चास्मदादीनामेवाप्यं योनिजं शरीरं स्यात् पार्थिवत्वव्याप्यत्वं तस्यासिद्धमित्यर्थः। व्याप्तौ मानमाह—भूवर्त्तिनामिति। तदिति। गन्धवत्त्वमित्यर्थः। सुवर्णेति। आनाशमनपगाम्यप्यौपाधिकमिति शेषः। अयो-

न्यायलीलावतीप्रकाशविवृतिः

नं दृश्यमानस्यापि (शरीरस्य) पार्थिवावयवोपष्टम्भेन जलबुद्बुदोपाधित्वाभावादित्यपि द्रष्टव्यम्। अत एवोत्तरे यच्चेत्यादिकमपि सङ्गच्छते। इति व्याप्तेरिति। शुक्रशोणितयोग(रूप)विशेषवत्त्वेन पार्थिवत्वनियमेन तज्जन्यं शरीरं पार्थिवमेवेति विपक्षबाधकमत्र। यद्यपि शरीरं न शुक्रशोणितजन्यं किन्तु तद्ध्वंसजन्यमेव तथापि यद्द्रव्येत्यादिव्याप्त्यवष्टम्भेन पार्थिवत्वं तादृशशरीरस्येति भावः। पृथिव्या अयोनिजशरीरारम्भकत्वं प्रकृते प्रक्रान्तं दृष्टान्तसिद्ध्यर्थं जलस्य वा, तदुभयमपि विशेषाकारेणोक्तप्रमाणादसम्भवीत्यत आह—अयोनिज

शैत्यादिना(१) देहशोषे निवृत्त्युपपत्तौ तदेव बाधकम् । तथा हि न तावद् वायवीयं, रूपवत्त्वात् । न तैजसम्, दहनसंयोगे भस्मीभावात् । न आप्यं कदाचिदनुपलभ्यस्वाभाविकद्रवत्वात् । ततोऽपामयोनिजशरीरारम्भकत्वं दृष्टम् । स्वर्गसुखं कस्यचिद्देहिनो भोग्यं सुखत्वात् । न चास्मदादिस्तथा[भवितुमर्हति] । भूचराणां(२) सप्तद्वीपेश्वराणामपि तादृशसुखानामभावात् । न चायं नित्यो देहोऽमुक्तिप्राप्तेः(३) । न चादृष्टोपग्रहनिवृत्तौ मानसो न्याय

न्यायलीलावतीकण्ठाभरणम्

धिकत्वे वेत्यर्थः । भूतान्तरप्रकृतिकत्वे बाधकान्तरमाह—शैत्यादीनामिति । द्रवत्वस्य स्वाभाविकत्वस्थितावाह—रूपवत्त्वादिति । हिमकरकादौ व्यभिचारवारणाय कदाचिदिति । तत इति । भूवर्त्तिशरीराणां पार्थिवत्वे सिद्धे जलस्य चेन्द्रियारम्भकत्वेन शरीरारम्भकत्वव्यवस्थितौ यज्जलीयं शरीरं लोकान्तरे तदवश्यमयोनिजमिति पार्थिवशरीरस्यायोनिजत्वे साध्ये जलं दृष्टान्तो न साध्यविकल इत्यर्थः । अयोनिजशरीरसाधनाय मतान्तरमाह—स्वर्गसुखमिति । अन्यथासिद्धिं निरस्यति—न चेति । तादृशेति । दुःखासम्भिन्नत्वादिविशिष्टेत्यर्थः । न चेदानीं भूतलवर्त्तिन एव देहस्य क्रमेण स्वर्गसुखोपभोगोऽस्त्विति वाच्यमित्याह—न चेति । अमुक्तीति । देहस्थितौ दुःखापत्तेरित्यर्थः । यावददृष्टोपग्रहं मन इव शरीरमपि नित्यं दुःखाजनकं स्यादित्याश-

न्यायलीलावतीप्रकाशः

निजे शरीरे साधनान्तरमाह—स्वर्गेति । तादृशेति । अभिलाषोपनीतत्वादिविशिष्टेत्यर्थः । अयमिति । भूमितलवृत्तीत्यर्थः । मानसो न्याय

न्यायलीलावतीप्रकाशविवृतिः

इति । तथा चायोनिजशरीरसिद्धौ सामान्यतः स्वतन्त्रमेव मानमिदं न तु पूर्वोपष्टम्भकमिति भावः । अयमित्यस्य स्वर्गसुखावच्छेदक इत्यर्थे शङ्कैवेयमनुपपन्ना नित्यस्याप्ययोनिजशरीरतयोपक्रान्तायोनिजशरीरसाधनानास्कन्दकत्वादत आह—भूमीतलवर्त्तीत्यर्थ इति । तथा च

(१) शैत्यादीना दे० । (२) भूमितलवर्त्तिना सप्त० ।

(३) न चायं नित्योऽमुक्तिप्राप्तेरिति दीधितिसम्मतः पाठः, तत्र "अयमिति । स्वर्गेऽपि भोगहेतुर्देह इत्यर्थः" इति व्याख्यानात् ।

इति वाच्यम्, कल्पनागौरवात् । न च तद्योनिजं, गर्भवासा-दिदुःखवेदनादिभिः स्वर्गित्वव्याघातात् । तन्न दुःखहेतुरिति चेन्न, अदृष्टकल्पनापत्तेः, शिववरुणमहेन्द्रादि(१)भुवनसुखाभिलाषात् । पौराणिकविधिप्रवृत्तेश्च(२) । न च मर्त्यातिशयितसुखप्रतिपादनपरं तदिति वाच्यम्, दुःखेऽपि तथाप्राप्तौ महापात-

---

न्यायलीलावतीकण्ठाभरणम्

आह—न चेति । तदिति । गर्भवासादिकमित्यर्थः । शिवादीनां स्वर्गित्वेन दुःखासम्भेदात् क गर्भवासादिसम्भावना । अन्यथा महेन्द्रादिपदाभिलाषेऽपि न स्यात् न स्याच्च तत्कामस्य पौराणिकविधिप्रवृत्तिरित्याह—शिवेति । नन्वैहिकसुखापेक्षया पुराणमतिशयितसुखमात्रपरं स्यादित्यत आह—न चेति । तर्हि कुम्भीपाककक्रचदारणादिप्र-

न्यायलीलावतीप्रकाशः

इति । नित्यत्वेऽपि व्यापारनिवृत्तिरित्यर्थः । कल्पनेति । शरीरानित्यत्वस्य मानसिद्धत्वादित्यर्थः । स्वर्गित्वेति । स्वर्गसुखस्य दुःखासम्भेदादित्यर्थः । अदृष्टेति । गर्भवासादिदुःखजनकत्वस्य मानसिद्धत्वादित्यर्थः । न चैहिकत्वं तत्र तन्त्रं सामान्ये बाधकाभावात् । न स्वागमादेव गर्भवासादीनां दुःखाजनकत्वं सेत्स्यतीत्यत आह—शिववरुणेति । आगमस्य स्वर्गमात्रप्रदर्शनपरत्वात् ततस्तदसिद्धेरैहिकसुखाविशेषात्तदर्थं बहुवित्तव्ययायाससाध्ये कर्मणि प्रेक्षावतामप्रवृत्तेश्चेत्यर्थः । दुःखेऽपीति । नरकप्रतिपादकागमबोधितेऽपि दुःखेऽपि ।

न्यायलीलावतीप्रकाशविवृतिः

भूमीतलवर्त्तिनित्यदेहावच्छेदेनैव स्वर्गे सुखं स्यादिति भूतलवर्त्तिनामित्यादिपूर्वोक्तमात्राक्षेपपरेयं शङ्केति भावः । वस्तुतः शुक्रशोणितसन्निपातानपेक्षसामग्रीजशरीरसाधनमेवोपक्रान्तमिति परिशेषोपयुक्तत्वेन नित्यदेहस्यापि निराकरणीयतयाऽयमितिमूलस्य स्वर्गसुखावच्छेदक इत्येवार्थ इति प्रतिपादयति तत्साहश्यस्येति । उक्तयुक्त्या तस्य देहत्वे भेदगर्भसादृश्यस्य तत्राभावादित्यर्थः ।

---

(१) शिवविष्णुभ० । (२) पौराणिकविधिवाक्यात् पुंसां प्रवृत्तेरिति प्रभाकरः ।

कादौ [अपि] प्रवृत्तिप्राप्तेः, अर्थित्ववैचित्र्याद्विचित्रवित्तव्ययानुष्ठानापत्तेश्च । अन्यथा वेदाचाराणामपि विप्लवप्रसङ्गात् । तथापि भुजगमृगादिदेहातिरेकीति चेन्न, इन्द्रियाश्रयत्वेन तस्यापि देहव्यवहारस्य च मनुष्य एवोल्बणत्वात् । तत्सादृश्यस्य च तत्राभावात् । करकादौ जलव्यवहारवत्तत्रापि न लौकिकेतरसाधारणो देहव्यवहार इति सुस्थं शरीरम् ।

---

न्यायलीलावतीकण्ठाभरणम्

तिपादिका श्रुतिरतिशयितदुःखमात्रपरा स्यादिति महापातकेऽपि प्रवृत्तिः स्यादित्यर्थः । अतिशयितसुखमात्रार्थं सर्वस्वदानेन यागादौ चेतनप्रवृत्त्यभावः स्यादित्याह—अर्थित्वेति । अन्यथेति । महाजनपरिगृहीतश्रुत्यनाक(द?)र इत्यर्थः । भाष्योक्तं भुजगादीनां शरीरमाक्षिपति—तथापीति । चेष्टेन्द्रियाश्रयत्वात्तद्देहत्वमित्याह—इन्द्रियेति । तर्हि लौकिकानां तत्रापि देहव्यवहारः स्यादित्याह—देहेति । मनुष्य एव करचरणादिमति शरीरत्वव्यञ्जकभूयोधर्मवत्त्वात् तत्रोल्वणः सर्वसाक्षिको देहव्यवहार इत्यर्थः । ननु देहसादृश्यनिबन्धनस्तत्र देहव्यवहारः स्यादित्यत आह—तदिति । भिन्नप्रधानसामान्याभावात् देहएव देहसादृश्यानुपपत्तिः । तर्हि भुजगादौ देहव्यवहारः सर्वसाधारणो न कथमित्यत आह—करकादाविति । आपाततः प्रतीयमानवैधर्म्यतिरस्कृतोऽयं व्यवहार इत्यर्थः ।

न्यायलीलावतीप्रकाशः

'तथापत्तौ' मर्त्यातिशयितत्वमात्रकल्पनापत्तावित्यर्थः । यद्यपि प्रबलरागात्तिरस्कृतशास्त्राणां प्रवृत्तिरस्त्येव तथाऽपि ये सुखासम्भिन्नदुःखपरिजिहीर्षवस्तेऽपि प्रवर्त्तेरन्निति भावः । अन्यथेति । महाजनपरिगृहीतस्यापि बाधकं विना श्रुतार्थत्याग इत्यर्थः । मूले भुजगादीनां शरीरत्वमुक्तमाक्षिपति—तथापीति । शरीरत्वव्यञ्जककरचरणादिविरहादित्यर्थः । उल्वणत्वादिति । शरीरत्वव्यञ्जकभूयोधर्मवत्वादित्यर्थः । ननु देहसादृश्याद्गौणस्तत्र व्यवहारः स्यादित्यत आह—तत्सादृश्येति ।

नतु मृत्पाषाणमणिवज्रसरित्समुद्रकरकादीनि द्रव्यान्तराणि [भवन्तु] विलक्षणबुद्धिवेद्यत्वाज्जलवत्। अन्यथा तदप्येकजातीयं स्यादिति चेन्न, भुजगमृगादिषु(१) शरीरबाधवदुपपत्तेः। न च

न्यायलीलावतीकण्ठाभरणम्

पृथिव्यादीनां वायुपर्यन्तानां शरीरेन्द्रियविषमभावेनाकारत्रैविध्यमुक्तं तत्र शरीरेन्द्रिययोरन्तर्भावमुक्त्वा विषयान्तर्भावमाह—नन्विति। द्रव्यान्तराणीति। यत्र यदन्तर्भावः सिद्धान्तिनोऽभिमतस्तद्भिन्नानीत्यर्थः। विलक्षणेति। यद्यतो विलक्षणबुद्धिवेद्यं तत्ततो भिद्यत इति सामान्यव्याप्तेरिति भावः। तथा च पाषाणादीनि भिन्नानि तद्विलक्षणबुद्धिवेद्यत्वादिति साध्ये परस्पराधिकरणद्रव्यत्वसाक्षाद्व्याप्यजात्यभावे सिद्धे सरित्पाषाणयोरंशतः सिद्धसाधनमपास्तम्। तदपीति। सरित्पाषाणाद्यपीत्यर्थः। एकजातीयमिति। द्रव्यत्वव्याप्यजातिरिति शेषः। विलक्षणधीवेद्यत्वं यदि पृथिवीत्वात्यन्ताभाववत्त्वेन वेदनं तदा स्वरूपासिद्धिरथ यथाकथञ्चिद्विलक्षणधीवेद्यत्वं तदाऽनैकान्तिकमित्याह—भुजगेति। करचरणादिमत्त्वबोधापेक्षया भुजगादौ विलक्षणधीसत्त्वेपि न शरीरभिन्नत्वमित्यनैकान्तिकत्वमित्यर्थः। ननु विलक्षणशरीरवेद्यस्यापि पाषाणादेः पृथिवीत्वे जलमपि पृथिवी स्यादित्याह—न चेति। स्नेहसमवायिकारणतया जलस्य पृथिवीविजा-

न्यायलीलावतीप्रकाशः

विषयरूपपृथिव्याः पृथिवीत्वमाक्षिपति(२)—नन्विति। विलक्षणेति। यद्यतो विलक्षणधीवेद्यं तत्ततो भिन्नं यथा पृथिवीतो जलम्। पृथिव्यादिनवकविलक्षणधीवेद्यं च मृदादीति मृदादेः पृथिव्यादिनवकभेदसिद्धिरिति भावः। एतेन पृथिव्यादिनवकभेदे साध्ये जलस्यादृष्टा-

न्यायलीलावतीप्रकाशविवृतिः

विषयेति। ज्ञायमानतया भोगसाधनं विषयः। पृथिव्याः पृथिव्यादेः। पृथिवीत्वं पृथिवीत्वादिकम्। तेन न मूले सरिदादिविरोधः। तत्ततो भिन्नमिति। द्रव्यविभाजकधर्मेण विजातीयमित्यर्थः। तेन न सिद्धसाधनम्। एतेनेति। सामान्यव्याप्त्यानुमानप्रवर्त्तनेनेत्यर्थः।

(१) भुजगादिष्विति प्रकाशसम्मतः पाठः।
(२) पृथिव्याः पृथिवीत्वमिति चोपलक्षणम्। इति दीधितिः।

जलादिप्रतिबन्दीग्रहः, स्नेहादिसमवायिकारणत्वेन (१) भिन्नजाती-

---

न्यायलीलावतीकण्ठाभरणम्

तीयत्वसाधनादित्याह—स्नेहादीति। आदिपदात् सांसिद्धिकद्रवत्वशीत-

न्यालालावतीप्रकाशः

स्तत्वम्, परस्परवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजात्यभावे(२) च साध्ये स-
रित्पाषाणयोरंशतः सिद्धसाधनम्, पृथिवीभेदे च साध्ये सारदा-
दावंशतः सिद्धसाधनमित्यपास्तम्। विलक्षणधीवेद्यत्वं यदि पृथिवी-
त्वाद्यनाक्रान्तत्वप्रमितिगोचरत्वं तर्ह्यसिद्धिः, तादृशधीगोचरत्वमात्रं
चानैकान्तिकमित्याह—भुजगादीति। स्नेहादीति। यद्यपि स्नेहसमवायि-
कारणत्वं परमाणौ नास्ति, न च तत्रापि स्वरूपयोग्यताऽस्त्येव स्ववृ-
त्तिस्नेहस्य च प्रतिबन्धकत्वान्न तत्र स्नेहोत्पत्तिरिति वाच्यम्,
नित्यस्य स्वरूपयोग्यस्य सहकारियोग्यतावश्यम्भावात्, तथापि

न्यायलीलावतीप्रकाशविवृतिः

तादृशेति। विजातीयत्वेत्यर्थः। तथापीति। अनित्यस्नेहसमवायिकारणता-

---

(१) ननु स्नेहत्वं कार्य्याकार्य्यवृत्तितया न जन्यतावच्छेदकम्। न चानित्यस्नेहसमवायि-
कारणतावच्छेदकत्वेन आद्यद्व्यणुकसिद्धस्य जलत्वस्य स्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वेना-
रम्भकपरमाणुवृत्तित्वमनुमेयम्, परमाणोस्तज्जातीयत्वे नित्यस्य स्वरूपयोग्यतया फलोपधान-
प्रसङ्गात्। यदि च स्वरूपयोग्यत्वेऽपि सहकारिविरहात् कार्य्यानुत्पादस्तदाऽनित्यस्पर्शसमवायि-
कारणतया भूतचतुष्टयवृत्तिरेका जातिः स्यात्। सैव च द्रव्यत्वसाक्षाद्व्याप्यतया परमाणुवृत्तिस्तत्र
फलानुत्पादोऽसमवायिकारणविरहात् पाकजस्पर्शादिकं प्रति च पृथिव्या एव समवायिकारणत्वात्।
द्रव्यस्य तथात्वे तु जलत्वमपि न स्यात् तुल्यन्यायत्वादिति। अत्र वदन्ति जलत्वतेजस्त्वे तावत्
प्रत्यक्षत एव सिद्धे। वायुत्वं च शब्दादिकार्य्यविशेषजनकतावच्छेदकतया। एतान्येव च यथायोग-
मनित्यानां स्नेहशीतस्पर्शसांसिद्धिकद्रवत्वानामुष्णस्पर्शभास्वररूपयोर्विजातीयस्य चानुष्णाशीत-
स्पर्शस्य समवायिकारणताया अवच्छेदकानीति नित्यात् परमाणोर्व्यावर्त्तमाने आद्यद्व्यणुके जाति-
त्रयं भूतत्रिकवृत्ति सिध्यति। तदवच्छिन्नं प्रति समवायिकारणताया अवच्छेदकत्वेन तद्व्यापकमपरं
जातित्रयं परमाणुसाधारणं समनियतयोग्यव्यक्तिकत्वाद् व्यञ्जकाभेदाच्च न जात्योर्मिथोभेदग्रहः
तज्जातित्रयसङ्कराच्च नानित्यस्पर्शसमवायिकारणतावच्छेदकत्वेनैकजातीसिद्धिः। अपि च जल-
त्वादीनि तावत् परमाणौ वर्त्तन्ते, न वा वर्त्तन्ते चेत् सिद्धं समीहितम्। अनित्यजलत्वादिना च
तज्जातीये समवायिकरणत्वं नो चेत् तदवच्छिन्नसमवायिकारणतावच्छेदकत्वेनैव परमाणुसाधारण-
जात्यन्तरासिद्धिः। तदेव जलादिपदप्रवृत्तिनिमित्तं जलत्वादीनां जलत्वादिव्यापकजातित्वेन मूर्त्तत्वादि-
जातिविरहे च स्पर्शवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वेन च परमाणुवृत्तित्वसिद्धिः। तासामेवानि-
त्यत्वविशेषितानामनित्यस्नेहादिसमवायिकारणतावच्छेदकत्वमित्यपि केचित्। इति दीधितिः।

(२) एकवृत्तितादृशजात्यभावेऽपरत्रापरवृत्तितादृशजात्यभावे च तत्र साध्य इत्यर्थः। इति दीधितिः।

यत्वसाधनात्। वज्रेऽप्यलौहलेख्यत्वं बाधकम्। करकादौ स्वाभाविकमद्रवत्वं शीतमयूखमयूखादौ च शैत्यमिति चेन्न, द्रव्यं हि [द्विविधं] स्पर्शाधिकरणमन्यच्च। आद्येऽप्युष्णाधिकरणमन्यथा वा। अन्यथापि शीताधिकरणमन्यादृशं च तत्त्वेऽनुष्णाशी-

---

न्यायलीलावतीकण्ठाभरणम्

स्पर्शाद्युपसङ्ग्रहः। अत्र चानित्यस्नेहसमवायिकारणतावच्छेदकतया जलत्वस्यावयविनि सिद्धौ जलपरमाणुः स्वोपादेयवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमानित्यनुमानात्तत्साधारणी जातिरिति भावः। हीरककरकाशीतमयूखादीनां प्रत्येकं पृथिव्यप्तेजोभिन्नत्वं शङ्कते—वज्र इति। अनिविडसंयोगाधारत्वाशीतस्पर्शाभास्वररूपवत्त्वादीनां प्रत्येकमुपाधीनां सत्त्वेऽपि दोषान्तरमाह—द्रव्यं हीति। अन्यच्चेति। निःस्पर्शद्रव्यमित्यर्थः। अन्यथेति। उष्णस्पर्शातिरिक्तस्पर्शाधिकर-

न्यायलीलावतीप्रकाशः

जलावयविनि तत्सिद्धौ जलपरमाणावपि स्वोपादेयवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजात्यनुमानमिति भावः। वज्रेऽपीति। वज्रकरकाशीतमयूखादीनां प्रत्येकं पृथिव्यप्तेजस्त्व इत्यर्थः। अत्र लोहलेख्यत्वमुपाधिः; तदभावात् सत्प्रतिपक्षत्वं वा। आद्ये पार्थिवपरमाणौ साध्याव्यापकत्वं अन्त्ये तत्रैवानैकान्तः। एवं स्वाभाविकद्रवत्वमुष्णत्वं च नोपाधिः साधनव्यापकत्वात्। नापि तदभावात् सत्प्रतिपक्षत्वं हेतोः स्वरूपासिद्धत्वादिति स्पष्टत्वादुपेक्ष्य अन्यदाह—द्रव्यं हीति। 'तत्त्वे' अन्यादृशत्वे इत्यर्थः। 'द्वितीये' स्पर्शानधिकरणत्व इत्यर्थः। 'चरमे' अनुष्णाशीतस्पर्शाधिकरणत्व इत्यर्थः। 'शक्तिभेदात्' निविडावयवसंयोगसहकृतसमवायिकारणजन्यस्वभावभेदादित्यर्थः। तथा

न्यायलीलावतीप्रकाशविवृतिः

वच्छेदकतयेति शेषः। जलपरमाणाविति। जलारम्भकपरमाणावित्यर्थः। द्रव्योपादानत्वेनेति शेषः। उपाधिः पृथिवीत्वसाध्य इति शेषः। सत्प्रतिपक्षत्वमपि तत्रैव। पार्थिवपरमाणाविति। यद्यपि 'पृथिवीजन्यत्वे साध्ये न परमाणौ साध्यस्याव्यापकत्वं न वा तदभावस्य तत्रानैकान्तिकता। तथाप्युक्तक्रमेण निविडसंयोगवत्त्वेन तत्र पृथिवीत्वसिद्धौ

ताधिकरणमेव । अन्यादृशस्पर्शानुपलब्धेः । तत्र द्वितीये अनित्यताव्याघातः । प्रथमे तेजस्त्वं द्वितीये जलत्वं चरमे क्षितिपवनयोरन्यतरत्वमिति नवबहिर्भावाभावात् । वज्रं तु पार्थिवमपि न लोहलेख्यं (१)शक्तिभेदात् अविन्धनतेजोवदित्यादिविस्तरस्तूह्यो बहुलत्वात् [ न लिखितः ] । [ इति ] विषयः ।

---

न्यायलीलावतीकण्ठाभरणम्

णमित्यर्थः । अन्यादृशेति । उक्तत्रयस्पर्शस्यैव प्रामाणिकत्वादित्यर्थः । द्वितीय इति । स्पर्शानधिकरणद्रव्यत्व इत्यर्थः । चरम इति । अनुष्णाशीतस्पर्शवत्त्व इत्यर्थः । शक्तिभेदादिति । स्वभावभेदादित्यर्थः । स च स्वभावभेदोऽत्यन्तनैविड्योन्नेयो घटादिव्यावृत्तः । एवं च लौहलेख्यत्वे पृथिवीत्वं न तन्त्रं किन्तु प्रशिथिलावयवत्वमित्यर्थः ।

न्यायलीलावतीप्रकाशः

च लोहलेख्यत्वे शिथिलावयवसंयोगजन्यत्वं प्रयोजकं न पृथिवीत्वमिति न तदभावमात्रादपार्थिवत्वम् । न च वज्रं न पार्थिवं लोहलेख्यवृत्तिपृथिवीत्वव्याप्यजातिशून्यत्वादिति वाच्यम्, व्यर्थविशेषणत्वात् जातिशून्यता(२)मात्रस्यैव व्याप्यतावच्छेदकत्वादित्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

वाधकाभावे कार्यपृथिवीत्वेन पार्थिवत्वानुमाने कार्यकारणाभावाबाधकाभावे ... त्मकविपक्षबाधकेन बलवति पक्ष एवोपाधितदभावयोः साध्यात्मकविपक्षबाधकेन बलवति पक्ष एवोपाधितदभावयोः साध्याव्यापकत्वमनैकान्तिकत्वं चेति भावः । जातिशून्यत्वेति । पृथिवीत्वव्याप्येति विशेषणस्य स्वरूपासिद्धिवारकत्वेऽपि व्यर्थत्वादिति भावः । न च जात्यन्तर्भावे व्यर्थतया धर्मशून्यत्वमात्रमुत्तरप्रतीकार्थं इत्यप्रसिद्धिवारकतया पूर्वदलं सार्थकमिति वाच्यम्, तथापि लोहलेख्यवृत्तीत्यस्य वैयर्थ्यात् तत्परित्यागे चाऽन्यतरासिद्धत्वात् । इदमुपलक्षणं पृथिवीत्वाभावे साध्ये पृथिवीपरमाणावेव व्यभिचारः पार्थिवत्वाभावे साध्ये पूर्वोक्तक्रमेण पार्थिवत्वसिद्धौ बाध इत्यपि ध्येयम्(३) ।

---

(१) ०पि लौहलेख्यं न भवति शक्ति० । (२) जातिशून्यत्वमात्रस्यैवेति विवृतिसम्मतः पाठः ।
(३) ०पि द्रष्टव्यम् ।

भाष्ये संहारविधिरुक्तः स(च) नास्ति प्रमाणाभावादित्येके ।

---

न्यायलीलावतीकण्ठाभरणम्

द्रव्यचतुष्टयनिरूपणानन्तरं भाष्ये संहारविधिरुक्तः, तथैव सङ्गत्या तमवतारयति—भाष्य इति । 'संहारविधिः' प्रलयप्रकारः । संहाराभिधानान्तरं सृष्टेरपि भाष्येऽभिधानात् संहारपदमत्रावान्तरप्रलयपरम् । तत्र विप्रतिपत्तयः—गुणाधारः कालः कार्य्यद्रव्यानाधारो न वा, द्रव्यप्रागभावः कार्य्यद्रव्यासहवृत्तिर्न वा, कार्य्यद्रव्यत्वं स्वाधिकरणानधिकरणकालवृत्तिर्न वा । स च नास्तीति । काले कार्य्यद्रव्यानाधारत्वं नास्तीत्यर्थः । प्रमाणमाशङ्क्य तदभावाभासीकरणा-

न्यायलीलावतीप्रकाशः

'संहारविधिः' प्रलयप्रकारः । संहारश्च कार्याधिकरणत्वे सति कार्यद्रव्यानधिकरणकालत्वम् । तत्र कालकपालान्यावृत्तिप्रागभावप्र-

न्यायलीलावतीप्रकाशविवृतिः

संहारविधिर्नास्त्येव तत्प्रतिपादकागमस्य सिद्धार्थत्वादत आह प्रकार इति । संहारो नाशस्तन्मात्रप्रकारः प्रसिद्ध एवेति संहारपदस्य विशेषपरतामाह—कार्येति । इदं च संहारत्वमित्यवधेयम् । महाप्रलयेऽतिव्याप्तिवारणाय सत्यन्तम् । यद्यपि मूलकृता महाप्रलयो नाङ्गीक्रियते तथापि प्रवृत्तिनिमित्तनिर्वचनमिदं तत्त्वं च निरुक्तस्यैव । तस्यैव पदजन्यप्रतीतिप्रकारत्वात् । महाप्रलयाभ्युपगन्तृमतेनैवेदमिति केचित् । सृष्टिकालेऽतिव्यप्तिवारणायाग्रिमदलम् । तत्रापि दलयोः परस्पराविरोधवारणाय द्रव्यपदम् । न च महाप्रलयाव्यवहितकालातिव्याप्तिः सन्त्यन्तस्य कार्यद्रव्यप्रागभावाधिकरणत्वार्थकत्वात् । मिश्रास्तु कालपदस्य कालोपाधिमात्रपरत्वे प्रलयघटकक्षण एवातिव्याप्तिः, न हि सोऽपि प्रलयः, दिनघटकदण्डादेरपि दिनत्वापत्तेः । तथा च कालपदं ब्रह्मवर्षशतावच्छिन्नकालोपाधिपरं वाच्यमत एव च न कालपदवैयर्थ्यम् । एवं च न महाप्रलयाव्यवहितकालातिव्याप्तिरिति वदन्ति । अत्र च कार्याधिकरणत्वपदवैयर्थ्यमिति तत्पदसाहित्येनैव कालपदस्य निरुक्तार्थकत्वमित्यवधेयम् ।

वृत्तप्रलयविचाराङ्गसंशयमाह—कालेति । अत्र च पक्षविशेषणमा-

तथा हि विश्वसन्तानोऽयं द्रव्यसन्तानशून्यैः समवायिभिरारब्धः

---

न्यायलीलावतीकण्ठाभरणम्

याह—तथा हीति । विश्वः सन्तानः कार्य्यकारणप्रवाहो यत्रेति बहु-

न्यायलीलावतीप्रकाशः

तियोग्ययं घटः कार्यद्रव्यानाधारवृत्तिप्रागभावप्रतियोगी न वेति संशयः । विश्वसन्तानोऽयमिति । कार्यकारणोभयवृत्तिकार्यमात्रवृत्तिध-र्मवत्त्वं सन्तानत्वम् । तच्च द्व्यणुकाद्यन्त्यावयविपर्यन्तमविशिष्टं द्र-व्यशून्यत्वं परमाणोः सदैवेति सन्तानेन विशेषितम् । तेन द्रव्यसन्ता-

न्यायलीलावतीप्रकाशविवृतिः

काशादिवृत्तिप्रागभावप्रतियोगितयाऽर्थान्तरं मा भूदिति बाधस्फोर-णाय तत्र च कालपदं साधारणाधिकरणपरमतो नासिद्धिः पक्ष-विशेषणस्य । न चैवं दिशैवार्थान्तरं तादृशसमयासिद्धौ दिशोऽपि कार्यद्रव्यानधिकरणत्वाभावात् । न हीदानीं सृष्टिकालान्तरे वा कोऽपि दिक्प्रदेशः कार्यद्रव्यानधिकरणम् । बाधवारणाय कार्यपदं द्रव्यपदं च । आकाशवृत्त्यत्यन्ताभावप्रतियोगित्वमादाय सिद्ध-साधनवारणाय प्रागभावपदम् । अनधिकरणत्वं चाधिकरणभिन्न-त्वमतो न कपालवृत्तिप्रागभावप्रतियोगितयाऽर्थान्तरम् । अन्वय-व्यतिरेकयोश्च प्रसिद्धिः शब्दे नित्यवर्गे चेति सङ्क्षेपः ।

कार्येति । कार्यकारणोभयवृत्तिधर्मवत्त्वं नित्यस्यापीति तत्पक्षतायां बाध इति कार्यमात्रवृत्तीत्युक्तम् । कार्यमात्रवृत्तिधर्मवत्त्वमिति कृते एव तत्पटस्यापि एतत्पटत्वेन सन्तानतायां सिद्धसाधनमतः प्रथमदलम् । भवति च कार्यद्रव्यत्वं वह्नित्वं च तादृशो धर्म इति पक्षदृष्टान्तयोर्हे-तुमत्त्वम्, पक्षपक्षतावच्छेदकत्वं च । यद्यपि कार्यद्रव्यत्वमादायापि पटस्य पक्षतयाऽंशतः सिद्धसाधनतादवस्थ्यम्, तथापि निरुक्तस-न्तानत्वपर्याप्त्यधिकरणे यथोक्तसाध्यसाधनमिति पटस्यातथात्वा-न्नोक्तदोषः । ध्वंसस्यापि निरुक्तसन्तानत्वाधिकरणतया बाध इति स-न्ताने विशेषणं विश्वपदं च द्रव्यपरम् । तेन द्रव्यत्वावच्छिन्नसन्तानप-क्षतालाभः । न चैवं विश्वशब्देनेत्यादिपक्षविकल्पानवकाशः, यथा-श्रुतपरत्वात् । द्रव्यसन्तानत्वं च हेतुरतो न ध्वंससन्ताने व्यभिचारः । उक्तविवक्षया यादृशपक्षलाभस्तमाह—तच्चेति । सदैवेति । द्व्यणुकोपादा-

सन्तानत्वादारणेयसन्तानवदित्यत्र विश्वशब्देन ब्रह्माण्डपक्षीकरणे चतुर्महाभूतसन्तानावासस्य तस्यासिद्धावाश्रयासिद्धिः । कार्य[स-

---

न्यायलीलावतीकण्ठाभरणम्

व्रीहिमाश्रित्याह—ब्रह्माण्डेति । कर्मधारयमाश्रित्याह—कार्य्यमात्रेति । कार्य्यकारणोभयवृत्तित्वे सति कार्य्यमात्रवृत्तित्वं सन्तानत्वम् । परमाणूनां दृश्यसन्तानशून्यत्वं यद्यपि सार्वदिकं तथापि तत्का-र्यशून्यत्वमात्रमाभिमतम् । आरणेयेति । अरणिप्रभवो वह्निराकस्मिको न तदा द्व्यणुकादिरस्तीति दृष्टान्तता । ब्रह्माण्ड एव न प्रमाणमित्यत

न्यायलीलावतीप्रकाशः

नशून्यैः परमाणुभिरारम्भः सिध्यति । यद्यप्यनादित्वात्सन्तानस्या-द्यत्वमसिद्धं एतत्सर्गसम्बन्धिसन्तानविशेषश्चासिद्ध एव तथापि स्पष्टत्वात्तदुपेक्ष्य दूषणान्तरमाह—ब्रह्माण्डेति । न चागमसिद्धं ब्रह्मा-

न्यायलीलावतीप्रकाशविवृतिः

नकालेऽपीत्यर्थः । तथा च तादृशैः परमाणुभिः परम्परयारम्भे द्व्यणुकादीनां ( न ? )प्रलयासिद्धिरिति सन्तानविशेषणमिति भावः । यद्यपि दृश्यसन्तानशून्यत्वमपि परमाणोः सदैवेति प्र( ल ? )यासि-द्धितादवस्थ्यम्, तथापि दृश्यं सन्तानं यस्य तद् द्व्यणुकं तच्छून्यैः परमाणुभिरारम्भः सिद्ध्यति । एतेन यत्पर्य्यवसन्नं साध्यं तदाह—तेनेति । एतेन दृश्यत्वमविवक्षितं सन्तानशून्यपरमाण्वारभ्यत्वमेव साध्यमिति ग्रन्थार्थ इति परास्तम्, यथाश्रुतेनैवोपपत्तेः । क्वचिन्न सदैवेतीत्यनन्तरं दृश्यत्वमविवक्षितमिति पाठस्तत्र साक्षा-त्परम्परासाधारणसन्तानशून्यैरित्येतावतैव समीहितसिद्धेरि-त्याभिप्रायः । तत्र द्व्यणुकोपादानकालेऽपि त्र्यणुकादिशून्यत्वं पर-माणोरिति दृश्यत्वविशेषणम् । तत्र दृश्यं सन्तानं यस्येति व्युत्पत्त्या द्व्यणुकशून्यैरित्यर्थो लभ्यत इत्यर्थः। यद्यपीति । यद्यप्या(द्य?)सन्तानत्वेन पक्षतेत्ययमनुक्तोपालम्भस्तथापि सन्तानत्वेन पक्षतायां खण्डावय-विन्यायेनारब्धसन्ताने दृश्यसन्तानशून्यपरमाणोरन्यत्वं बाधित-मित्यंशतो बाध इत्याद्यसन्तानत्वेन सर्गसम्बन्धिसन्तानत्वेन वा पक्षता वाच्या। तत्र च विकल्पात् दूषणाभिधानमित्यभिप्रायः । एतदिति ।

न्तान]मात्रपक्षीकरणे क्रमारब्धदहनपवनसन्तानन्यायात् आरम्भे ऽपि प्रलयासिद्धेः सिद्धसाधनात्। एकदैवेति विशेषणे तेनैव

न्यायलीलावतीकण्ठाभरणम्

आह—चतुरिति। द्वितीये सिद्धसाधनमाह—क्रमेति। सर्वेषां द्व्यणुकादि-क्रमेणैवारम्भात् दृश्यसन्तानशून्यपरमाण्वारभ्यत्वं सिद्धमेवेत्यर्थः। एकदैवेति। तथा च एकदा दृश्यसन्तानशून्यैः समवायिभिरारब्ध इति साध्ये क्रमारम्भे सिद्धसाधनं न भवतीत्यर्थः। तेनैवेति। क्र-

न्यायलीलावतीप्रकाशः

ण्डं तस्य सिद्धार्थतया मुख्यार्थपरत्वाभावात्। अन्यथा प्रलय-स्यापि तत एव सिद्धेरनुमानवैयर्थ्यात्। साध्यमपि ब्रह्माण्डसन्ता-नशून्यपरमाण्वारभ्यत्वमयुक्तं सन्तानाद्यारम्भकस्यैव सन्तानारम्भ-कत्वात् ब्रह्माण्डस्य चानादित्वात्। क्रमारब्धेति। क्रमेण तादृशपरमा-ण्वारभ्यत्वेऽप्येकदा तदसिद्धेर्न प्रलयसिद्धिरित्यर्थः। किञ्च कार्यो-त्पत्तेः प्राक्कार्यशून्यैरारभ्यत्वे साध्ये सिद्धसाधनं कार्यानधिकरणै-रारभ्यत्वे च बाध इति भावः। एकदैवेति। विशेषण इति। साध्यस्ये-त्यर्थः। तेनैवेति। क्रमारब्धदहनादिनैवेत्यर्थः। एककार्योत्पादकाल स्य तदितरसकलकार्योत्पादकालेन व्याप्त्यसिद्धेरिति भावः।

न्यायलीलावतीप्रकाशविवृतिः

प्रलयस्याद्याप्यसिद्धेरिति भावः। सन्तानादीति। आदिः प्रथमः। न चैकस्मिन्नादौ ब्रह्माण्ड आदिः प्रथमोऽस्तीति सन्तानाप्रसिद्ध्या साध्याप्रसिद्धिरिति मिश्राः। तत्रादिमत एव सन्तानत्वादित्येव प्रकृतोपपत्तावारम्भकान्तर्भवश्चिन्त्य इति केचित्। तदयुक्तं यथो-क्तविशेषणविशेष्यभावे दोषाभावात्। केचित्तु सन्तानादिर्द्व्यणुकं तदारम्भकस्यैव सन्तानारम्भकतया प्रकृते ब्रह्माण्डस्यानादितया तदारम्भकद्व्यणुकासिद्धेः सन्तानाप्रसिद्ध्या साध्याप्रसिद्धिरिति भाव इत्याहुः। कार्य्यानधिकरणैः कार्य्याधिकरणभिन्नैरित्यर्थः। ननु कार्याणां क्रमावभो(रम्भो?) नास्त्येवेति कुत्र व्यभिचार इत्यत आह— एककार्य्येति। इत्यर्थ इति तात्पर्यार्थः। किं यदैकस्येत्यादिप्रथमविकल्पे-ऽपि शब्देनान्यसमुच्चयो द्वितीयविकल्पे कालभेद इत्याशयः। यथा

व्यभिचारित्वात् । एकदारम्भहेतुसाकल्ये सतीति विशेषणे विशेषणासिद्धेः । एकदापीति पक्षे विरोधात् । सर्वकार्याणां युगपदनुत्पत्तेश्च । एतेन ब्रह्माण्डपरमाणवः पूर्वमुत्पादितसजातीयान्तराः

---

न्यायलीलावतीकण्ठाभरणम्

मारब्धदहनपवनेनैवेत्यर्थः । हेतौ विशेषणमाह—एकदेति । व्यभिचारस्थलेनैकदारम्भसाकल्यमिति न व्यभिचार इत्यर्थः । असिद्धेरिति । प्रलयासिद्धावेकदारम्भहेतुसाकल्यमसिद्धमेवेति स्वरूपासिद्धिरित्यर्थः । एकदापीति । अनियतारम्भसामग्रीसमवहितत्वात् हेतोरेकदैवारम्भो न विरोधात् सिध्यतीत्यर्थः । नियमानियमयोर्विरोधादित्यर्थः । बाधकमाह—सर्वकार्य्याणामिति । एतेनेति । स्वाश्रयासिद्धत्वेनेत्यर्थः । श्रुतिराश्रये मानमिति चेत् तथा सति प्रलयेऽपि तस्य सत्त्वेन साधनवैयर्थ्यात् श्रुतेरन्यपरत्वशङ्कायामेव विरोधादप्रवृत्तेः । वर्त्तमानब्रह्माण्डपरमाणवः पूर्वमुत्पादितसजातीयान्तराः नित्यत्वे सति आरम्भकत्वात् प्रदीपपरमाणुवदित्यस्याश्रयासि-

न्यायलीलावतीप्रकाशः

विशेषणेति । हेतुविशेषणासिद्ध्या विशिष्टस्य स्वरूपासिद्धत्वादित्यर्थः । एकदापीति । किं यदैकस्य कार्यस्य हेतुसाकल्यं तदैव तदन्येषामपि । यद्वा क्रमेण । आद्ये प्रागुक्तदोषः । अन्त्ये क्रमिकहेतुसाकल्यस्य क्रमिककार्यव्याप्तत्वाद्युगपदुत्पादे साध्ये व्याघात इत्याह—विरोधादिति । बाधमाह—सर्वेति । एतेनेति । वर्त्तमानब्रह्माण्डपरमाणवः पूर्वमुत्पादितसजातीयसन्तानान्तराः नित्यत्वे सत्यारम्भकत्वात् । प्रदीपपरमाणुवदित्यस्याश्रयासिद्धिसिद्धसाधनाभ्यां दुष्टमित्यर्थः । सिद्धसाधनं वि-

न्यायलीलावतीप्रकाशविवृतिः

श्रुते विरोधाप्रसङ्गात् पूरयति । युगपदुत्पाद इति । अनागतब्रह्माण्डघटितपक्षतायां वृत्तप्रलयासिद्धिः सम्भावनाघटितसाध्येऽवयवानामुपचयापचयाभ्यामारम्भेनार्थान्तरम्, हेतौ च मनसि व्यभिचार इत्यन्यथाऽर्थमाह—वर्त्तमानेत्यादि । एकमात्रघटजनके कपाले व्यभिचार इति हेतौ प्रथमविशेषणम् । मनसि व्यभिचार इति द्वितीयम् । तस्याद्रव्यारम्भकत्वमर्थः ।

परमाणुत्वात् दीपारम्भकपरमाणुवदित्यादि प्रतिक्षिप्तम् । बाल-वृद्धतरुण(१)देहसन्तानवदारम्भस्वीकारात् । न च तत्स्थापकादृष्ट-नाशादेव तन्नाश इति वाच्यम् , तस्यापि प्रवाहित्वेनैकफलोप-भोगेऽपि देहान्तरारम्भकादृष्टवन्नाशानुपपत्तेः । न च ह्रासदर्श-नात्तदनुमानं, दिनरात्रिह्रासेनैव व्यभिचारात् । चतुर्युगपरिवर्त-

न्यायलीलावतीकण्ठाभरणम्

द्धत्वमेवेति भावः । सिद्धसाधनमप्येतेनेत्यतिदिष्टं स्फुटयति—बालेति । तत्तदवयवावापोद्वापाभ्यां क्रमिकनाशोत्पादसिद्धौ न प्रलयसिद्धि-रित्यर्थः । ननु ब्रह्माण्डारम्भकादृष्टनाशात् शरीरवत्तन्नाशोऽप्या-वश्यक इत्याह—न चेति । एतद्ब्रह्माण्डावच्छेदेन भोगजनकानि भूयांसि सन्तन्यमानान्यदृष्टानि तत्र कतिपयादृष्टनाशेऽपि कतिपयादृष्टा-वस्थानात् ब्रह्माण्डावस्थितिः स्याद्देहवद्बालतरुणदशापन्ने-त्यर्थः । 'प्रवाहित्वेन' सन्तन्यमानत्वेन । ननु जन्मसंस्कारविद्या-स्वाध्यायादयोऽत्यन्तं ह्रसिष्यन्ते ह्रसमानत्वात् प्रदीपादिवदि-त्यनुमानात्तत्सिद्धिः, न हि जन्मादीनामत्यन्तह्रासकालादन्यः प्रलयो नामेत्यत आह—न चेति । पौषमासीयदिनस्य ह्रसमानत्वेऽपि नात्यन्तं ह्रसतीति व्यभिचार इत्यर्थः । ननु दिनरात्रिह्रासस्यापि पक्षत्वं पक्षसमत्वं वा । तथा च न तत्र व्यभिचार इत्यत आह—चतुर्यु-

न्यायलीलावतीप्रकाशः

वृणोति—बालतरुणेति । तत्तदवयवोपगमापगमाभ्यां क्रमेण नाशोत्पा-देऽपि न प्रलयसिद्धिरित्यर्थः । तस्यापीति । अदृष्टस्यापि प्रवाहित्वेन क्रमिकत्वादेकस्य भोगेन नाशेऽप्यपरापरस्यादृष्टस्य नाशानुत्पत्ते-रित्यर्थः । ह्रासमात्रमनुमीयते, एकदा ह्रासो वा, अत्यन्तह्रासो वा । आद्ये सिद्धसाधनं द्वितीये त्वप्रसिद्धिः । तृतीये त्वाह—दिनेति । ननु दिनरात्रिह्रासस्यापि पक्षत्वात् पक्षसमत्वाद्वा कथं तेनैव व्यभिचार

न्यायलीलावतीप्रकाशविवृतिः

तत्तदवयवेति । एतच्च सन्तानाविवक्षायां दूषणम् । मूलदूषणं त्वाश्रया-सिद्धिरेव । एकदेति । एकदा सर्वह्रास इत्यर्थः । असिद्धिरप्रसिद्धि-

(१) बालतरुणवृ० ।

स्तु स्यादृत्वयनवत् । न च सन्तानाः कदाचित्सहोच्छिद्यन्ते(१) सन्तानत्वात् [ सम्प्रतिपन्नसन्तानवत् ] इति वाच्यम् , क्रमोच्छि-

न्यायलीलावतीकण्ठाभरणम्

गेति । कल्लियुगे ह्रासे सत्यपि सत्ययुगादौ पुनर्वृद्धिसम्भावनयाऽत्यन्तह्रासाभावात्। ननु युगान्तर एव हि प्रलयो न हि मयाऽत्र महाप्रलयः साध्यतेऽत आह—ऋत्वयनेति । युगान्तेऽपि सकलकार्य्याणामेककालिकध्वंसानभ्युपगमादित्यर्थः । यदि तु जन्मसंस्कारादिह्रासदृष्टान्तेन सम्प्रदायस्य वेदस्यात्यन्तिको ह्रासोऽनुमेयत्वेनाभिमतस्तदापि तुल्योऽर्थः । सम्भावितोत्कर्षह्रासस्य च न साध्यत्वं जन्मसंस्कारादौ दृष्टान्ते साध्यानिश्चयादित्यर्थः । ननु सर्वसन्तानानामत्रोच्छेदे साध्ये सिद्ध्यत्येकः प्रलय इत्यत आह—न

न्यायलीलावतीप्रकाशः

इत्यत आह—युगेति । ह्रसमानतामात्रस्य विवक्षितत्वे इदानीन्तनपौष्मासादिनह्रासकाष्ठया व्यभिचारः । न चासम्भावितोत्कर्षो ह्रासो विवक्षितः, जन्मविद्यादिदृष्टान्तस्य साध्यवैकल्यापत्तेः, युगपरिवर्त्तक्रमेणाप्युत्कर्षसम्भवादित्यर्थः । ननु सकलसन्तानं पक्षीकृत्य नैकदोच्छेदः साध्यो येन व्यभिचारः स्यात् , किन्त्वेककालीनत्वविशिष्टं सन्तानं पक्षीकृत्य । तथा च पक्षतावच्छेदकधर्मसामानाधिकरण्यं साध्यमानस्य सिद्ध्यतीत्यनुमाने कलृप्तत्वादेकदोच्छेदः

न्यायलीलावतीप्रकाशविवृतिः

रित्यर्थः । 'विवक्षितत्वे' हेतुत्वेनेति शेषः । व्यभिचार इति । शतवर्षमध्यवर्त्युत्कर्षप्रागभावासमानाधिकरणह्रासस्य साध्यत्वादिति भावः। तेन न पूर्वोक्तपक्षसमत्वावकाशः । जन्मविद्येति ।"जन्मसंस्कारे"त्यादिकारिकायां(२) च तस्य दृष्टान्तत्वश्रवणादिति भावः। वस्तुतो मूलफक्किकाया अन्यथावतारस्तात्पर्य्यं च तथा । साध्यवैकल्येति । साध्यतेऽनेनेति साध्यम्, साधनेमेवात्रोक्तम् । ननु युगपरिवर्त्तकाले प्रलयः स्यात् तत्तत्पदार्थोच्छेदरूपत्वात्परिवर्त्तस्येत्यत आह—युगेति । किञ्चित्पदार्थोच्छेदेऽपि न सर्व्वपदार्थोच्छेद इति नैतावता

(१) ०द समुच्छिद्यन्ते । (२) न्यायकुसुमाञ्जलौ २ । ३ ।

न्नानां सन्तानानां कदाचिदपि तदभावेन व्यभिचारात्, विपरीतनिश्चयाच्च । ब्रह्मवर्षशतमिति गणितभेदगम्यः कालो महाभूतसङ्घातवान् (१) कालत्वात्, इदानीमिव । तत्समयवर्त्तिनश्च वर्णाः सजातिसन्ततिजन्मानो वर्णत्वात् अधुनातनवर्णवत् । न

न्यायलीलावतीकण्ठाभरणम्

चेति । येषां सन्तानानां क्रमेणोच्छेदः प्रमितस्तत्र व्यभिचार इत्यर्थः । प्रलये शङ्कितानामनुमानानां सत्प्रतिपक्षितत्वमप्याह—विपरीतेति । "ब्राह्मेण वर्षेण (मानेन?) वर्षशतान्ते वर्त्तमानस्ये"त्यादिना भाष्येण(२) प्रलयत्वेन यः कालो विवक्षितः स महाभूतसङ्घातवानित्यर्थः । तथा च तस्य कार्य्यद्रव्याधारत्वे कुतः प्रलय इति भावः । परमाणुसत्त्वेन सिद्धसाधनमाशङ्क्य महाभूतेत्युक्तम्, आकाशवत्तया सिद्धसाधनमाशङ्क्य सङ्घातवानित्युक्तम् । तत्समयवर्त्तिन इति । आद्यसृष्टिसमयवर्त्तिन इत्यर्थः । न च प्रलयासिद्धावुभयत्राश्रयासिद्धिः कालत्वं कार्य्यद्रव्यानधिकरणानधिकरणं परत्वासमवायिकारणसंयोगाधारत्वे सति नित्यत्वात् दिग्वत् । ब्राह्मणत्वं ब्राह्मणजन्यत्वव्याप्तं तत्कारणकवृत्त्यसाधारणधर्म्मत्वात् । यो यत्कारणकवृत्तिरसाधारणो धर्म्मः स (त?)ज्जन्यत्वव्याप्य इति सामान्यव्याप्तेरनुमानमिति भावः । ननु वह्नेर्वह्निपूर्वकत्वेऽपि अरणिप्रभवस्य यथा न वह्निप्रभवत्वं तथा ब्राह्मणोऽपि स्यादित्यत आह—न चेति । अत्रेदानीन्तनब्राह्मणत्वमुपाधित्वेन पराभिमतम्, तच्च न सम्भवति सामान्यव्याप्तौ विशेषस्यानुपाधित्वात् । विशेषनिष्ठत्वं विशेषधर्म्मावच्छेद्यत्वं पक्षेतरत्वं वा वह्नौ व्यभिचारनिश्चयेन वह्निपूर्वकत्वं

न्यायलीलावतीप्रकाशः

सेत्स्यतीत्यत आह—विपरीतेति । तमेवोपपादयति—ब्रह्मवर्षेति । न च सिद्ध्यसिद्धिव्याघातः कालत्वस्य कार्यद्रव्यवत्त्वव्याप्यत्वेन ब्राह्मणत्वस्य च ब्राह्मणपूर्वकत्वव्याप्यत्वेन साधनात् । न चेति । यथा ज्वलनं

न्यायलीलावतीप्रकाशविवृतिः

प्रलयसिद्धिरिति तात्पर्यम् । कालत्वस्येति । कालोपाधित्वं कार्यद्रव्य-

(१) संहतिमान् । (२) प्रशस्तपादभाष्यं सृष्टिसंहारविधिनिरूपणम् ।

चारणि[मणि]प्रभवज्वलनन्यायः, असति बाधके निश्चितहेतु-फलाभावस्य विशेष(१)निष्ठत्वविरोधात् । अन्यथेन्धनधूमादावपि तथात्वापत्तेः । मैवम् । सर्वे एव परमाणवः कदाचित्सम-

---

न्यायलीलावतीकण्ठाभरणम्

न वह्नित्वावच्छेद्यं किन्तु तदवान्तरजात्यवच्छेद्यमिति भावः। सामान्यव्याप्तौ विशेषस्योपाधित्वे विपक्षदण्डमाह—अन्यथेति । धूमादावपि धूमत्वादिना वह्निव्याप्यत्वं नावच्छिद्येत धूमादिविशेषस्योपाधित्वसम्भवादित्यर्थः । सर्वे एवेति । सर्वेषामेकदा समग्रोपादेयप्रबन्धशून्यत्वमेव प्रलय इत्यर्थः । नष्टपवनारम्भकपरमाणूनां पक्षत्वबहिर्भावेऽन्तर्भावे वा नांशतः सिद्धसाधनं विपक्षबाधकात् पक्षतावच्छेदकनानात्व एव तत्सम्भवात् । यथाऽनित्ये वाङ्मनस इत्यत्र एकदा समग्रोपादेयप्रबन्धशून्यत्वस्य सिसाधयिषितत्वेन उद्देश्यप्रतीतेः पूर्वमनुदयाद्वा नांशतः सिद्धसाधनम् । ननु

न्यायलीलावतीप्रकाशः

विनाऽप्यरणेर्ज्वलनोत्पत्तिः, तथा ब्राह्मणं विनापि विशिष्टादृष्टोपगृहीतपरमाणोर्ब्राह्मणः स्यादिति नेत्यर्थः । 'विशेषनिष्ठत्वं' विवादपदभिन्नविषयत्वमित्यर्थः । इन्धनेति । इन्धनमग्नेर्हेतुः, धूमः फलमित्यर्थः । सर्वे एवेति । नन्वेककालीनसमग्रोपादेयप्रबन्धशून्यत्वस्याप्रसिद्धेः परमाणूनां समग्रोपादेयप्रबन्धशून्यत्वमात्रं साध्यम् । तथा च क्रमेण तादृशसाध्यसिद्धौ सिद्धसाधनम्, पवनपरमाणोश्च पक्षत्वेंऽशतः सिद्धसाधनम् । अपक्षत्वे च तस्यैव कार्यद्रव्यवत्त्वे प्रलयासिद्धिः ।

अथ परमाणुः कार्यद्रव्यसमानकालिकपरमाणुक्रियातिरिक्तक्रिया-

न्यायलीलावतीप्रकाशविवृतिः

वत्त्वव्याप्यं कालोपाधिमात्रवृत्तित्वात्, इदानीन्तनकालोपाधित्ववत् । ब्राह्मणत्वं ब्राह्मणपूर्वकत्वव्याप्यं ब्राह्मणमात्रवृत्तिधर्मत्वादेतद्ब्राह्मणत्ववदित्यनुमानाभ्यामिति भावः । विवादेति । सर्गाद्यकालीनब्राह्मणान्यब्राह्मणविषयत्वमित्यर्थः । इन्धनं न धूमहेतुरत आह—इन्धनमिति ।

अथेति । अयं च विशिष्टाभावः कार्यद्रव्यासमानकालीन

---

(१) ०षानियतत्ववि० ।

ग्रोपादेयप्रबन्धशून्या आरम्भकत्वात् नष्टपवनारम्भकपरमाणुवत्। न च किञ्चिदेतादृशं न भविष्यतीत्यनेकान्तता । पवनत्वादेर्द-

न्यायलीलावतीकण्ठाभरणम्

विपक्षबाधकतर्काभावान्नैतदित्यत आह—न चेति । विपक्षबाधकाभावेन ह्युपाधिरुन्नेयः, स च यदि नष्टपवनारम्भकपरमाणुत्वं तदा नष्टद-हनारम्भकपरमाणुषु साध्याव्यापकत्वमेवं दहनारम्भकपरमाणुत्व स्योपाधित्वे पवनारम्भकपरमाणुषु साध्याव्यापकत्वमित्यर्थः ।

न्यायलीलावतीप्रकाशः

वान् मूर्त्तत्वादित्यवान्तरप्रलये, महाप्रलये तु परमाणुः कार्यसमान-कालिकैतद्वृत्तिध्वंसान्यध्वंसवान् मूर्त्तत्वादिति मानमित्युच्यते । तत्र एतदन्यगुणवत्त्वस्योभयत्राप्युपाधित्वात् । अथैते परमाणवः कार्यद्रव्यानधिकरणवृत्तिकार्यवन्तः नित्यद्रव्यत्वात् आकाशवदिति

न्यायलीलावतीप्रकाशविवृतिः

क्रियावत्त्वेन परमाणुक्रियाभिन्नक्रियावत्त्वेन वा । तत्र चरमे बाधात् प्रथममादाय पर्य्यवस्यति । कार्यपदानुपादाने बाधः व्योमादेः प्रलये-ऽपि विद्यमानत्वात् । द्रव्यपदानुपादानेऽपि नावान्तरप्रलयसिद्धिस्तदा गुणादेर्विद्यमानत्वात्, इत्युभयमुपात्तम् । दृष्टान्तलाभार्थं परमाण्वति । महाप्रलये नार्थान्तरवारणाय धर्म्ममात्रमपहाय क्रियागर्भं साध्यम् । स्थूलकालोपाध्यवच्छिन्नक्रियावत्त्वं साध्यमतो न प्रलयाव्यवहित-कालेनार्थान्तरम् । 'मूर्त्तत्वात्' क्रियावत्त्वादन्यथा निष्क्रियविनष्टे व्यभिचारात्, अन्यमतमाश्रित्याह— महाप्रलये त्विति । अत्र ध्वंसग्रहणं तदा सर्वध्वंससत्त्वप्रदर्शनार्थम् । प्रकृते तु सामान्यतो धर्ममात्रपर-त्वेनापि सामञ्जस्यात् । हेतुस्तद्ध्वंसवत्त्वमन्यथाश्रयनाशमात्रना-श्यगुणादिभिर्व्यभिचारापत्तेः । मिश्रास्तु ध्वंसागर्भमेव साध्यं नि-त्येनापि कार्य्यसमानकालीनत्वविरहिणा प्रलयसिद्धेः । मूर्तत्वादिति केवलान्वयिधर्मोपलक्षकमन्यथा व्यर्थत्वापत्तेरित्याहुः ।

एतदिति । एतद्गुणान्यगुणवत्त्वस्येत्यर्थः । अग्रिमगुणपदं च सामान्या-दिकमादाय साधनव्यापकत्वपरीहाराय । यद्यप्येवं पर्व्वतवृत्तिगुणान्यगु-णवत्त्वस्य प्रसिद्धानुमानेऽप्युपाधितापत्तिः, साध्यव्यापकग्राहकाभाव श्च तुल्य एव तथापि हेतोरप्रयोजकत्वे तात्पर्य्यम् । अथैत इति । साध्ये क्षिती-

न्यायलीलावतीप्रकाशः

मानम् ,तन्न, कार्यद्रव्यानधिकरणत्वस्योपाधित्वात् । अत्राहुः । एककालीना इतिपक्षविशेषणादेककालीनत्वं साध्यस्य सिध्यति सर्वत्र पक्षतावच्छेदकावच्छिन्नस्य साध्यस्यानुमानात् सिद्धेः । न चांशतः सिद्धसाधनं पक्षधर्मतावललभ्योद्देश्यप्रतीतेरसिद्धेः । न च पक्षैकदेशस्य दृष्टान्तत्वाभावः साध्यवत्तया निश्चितस्यैव तत्त्वात् । पक्षान्यत्वे सतीत्यस्य वैयर्थ्यात् । तथापि न तस्य पक्षत्वं साध्यसन्देहसिसाधयिषयोरभावादित्यपि न, येन रूपेण साध्यं निश्चितं तेन तयोरभावेऽपि सामान्येन तयोः सत्त्वात् । ननु कार्यद्रव्याधिकरणकालमात्रवृत्तित्वमत्रोपाधिः ।

न्यायलीलावतीप्रकाशविवृतिः

यकार्य्यपदं भावकार्य्यपरमतो न महाप्रलयेनाऽर्थान्तरम् । तत्र स्थूलकालावच्छिन्नत्वं पूर्व्ववदेव विशेषणम् । अद्विष्ठत्वं च विशेषणमतो न परमाण्वाकाशसंयोगमादायाऽर्थान्तरम् । अत्र च कार्य्यद्रव्यानधिकरणत्वं परमाणोर्बाधितमिति नाद्दशकालोपाधिसिद्धिः । हेतौ नित्यपदं कपाले च द्रव्यपदं नित्यगुणे व्यभिचारवारकम् । कार्य्येति । अत्र कार्य्यपदं समवायावच्छिन्नाधिकरणताभाय । तेनाकाशादौ न साध्याव्यापकत्वम् । सर्व्वत्रेति । न च पक्षतावच्छेदकसाध्यसामाधिकरण्यमात्रमनुमितिविषय इति वाच्यम्, एकत्रद्वयं विशिष्टवैशिष्ट्यं चेति शब्दतात्पर्य्यवशान्नियमवदनुमित्यादिनाऽनुमितावपि नियमसम्भवादिति भावः(?) । उद्देश्येति । इदं च समाधिसौकर्य्यात् वस्तुतस्तदन्यपक्षतायामपि तादृशवायुपरमाणुकालीनत्वस्य पक्षतया एककाले सर्व्वपरमाणूनां तादृूप्यसिद्ध्या प्रलयसिद्धिरिति । पक्षान्यत्व इति । अभेदानुमाने पक्षस्यैव दृष्टान्तत्वादिति भावः । वस्तुतः पक्षत्वस्य केवलान्वयितया तदन्यत्वस्याप्रसिद्ध्या पक्षतावच्छेदकाविरहवत्त्वमेव प्रयोजकं वाच्यम् । एवं च कालान्तरावच्छिन्नपरमाणोरेककालावच्छिन्नत्वाभावोऽस्त्येव न समुदायपर्याप्तस्य एककालावच्छिन्नत्वस्य तदेकदेशे परिसमाप्तिरत एवाभे(मे?)दानुमानेऽपि सङ्गतिरिति । येनेति । समानप्रकारकत्वस्यैव विरोधे तन्त्रत्वादन्यथा पर्वतेऽपि धूमवत्त्वेन वह्निनिश्चयात् पक्षतानापत्तेरिति भावः । ननु कार्य्येति । अत्र कालपदमधिकरणमात्रपरमतो नोपाधिरनुमाने कार्य्यद्रव्यानधिक

न्यायलीलावतीप्रकाशविवृतिः

करणकालाप्रसिद्ध्या मात्रपदव्यवच्छेद्याप्रसिद्धिः। यद्यप्युपाधिदातृमते साधने व्यापकत्वमनुमानकर्तृमते च पवनपरमाणोरेव साध्याव्यापकत्वं तथापि प्रलयसन्देहदशायामुभयसन्देहेऽपि सन्दिग्धोपाधित्वं भवत्येवेति मिश्राः।

अत्रेदं चिन्त्यम्,—सन्दिग्धोपाधिर्दूषणं भवत्येव परन्तु प्रकृते साध्यव्यापकतायां साधनव्यापकताया नियमात् साधनाव्यापकत्वे च साध्याव्यापकत्वनियमादुपाधिताप्रयोजकरूपद्वयान्यतरव्यतिरेकनिश्चायकत्वमुपाधित्वम्। किं च व्यभिचारे सत्युपाधिर्न चात्र व्यभिचारः, अत एव शब्दखण्डे इदमेव सिद्धान्तानुमानमिति। नवीनास्तु साधनाव्यापकत्वमनुमानकर्तृमतेनैव तथा चोपाधिरित्यस्य पूर्वं तन्मत इत्यर्थः। अणुभिन्नत्वावच्छिन्नसाध्यव्यापकत्वाच्च न साध्याव्यापकत्वम्। न च स्वीकृतत्रिविधोपाधिबहिर्भावः, त्रैविध्यस्योपलक्षणत्वादन्यथा परमाणुरूपं प्रत्यक्षं प्रमेयत्वादित्यत्र बहिर्द्रव्यत्वावच्छिन्नसाध्यव्यापकं रूपत्वमुपाधिर्न स्यात्। न च व्यभिचाराभावे कथमुपाधिरिति वाच्यम्, शून्यपदस्य ध्वंसतया मनःप्रभृतौ व्यभिचारसम्भवात्। अत एवारम्भकत्वादितिहेतुरुक्तोऽन्यथा मेयत्वस्यैव तत्त्वापत्तेः। द्रव्यसमवायिकारणत्वहेत्वभिप्रायेण च शब्दखण्डे सिद्धान्तानुमानमिति वदन्ति। अत्र शून्यपदस्य ध्वंसपरतायां कार्य्यं एवावयवे अणुभिन्नत्वावच्छिन्नं साध्यमिति मतस्थुपाधेः साध्यव्यापकत्वं निश्चितम्, सन्दिग्धसाधनाव्यापकत्वं च व्योमादौ, तत्राणुभिन्नत्वावच्छिन्नसाधनसत्त्वात्। अनुमानकर्तृमते चोपाधेरसत्त्वादित्यभिसन्धिः। अत्रापीदं चिन्त्यम्—तथा साध्ये व्यभिचारस्य स्फुटतया किमर्थमुपाधिगवेषणमिति। अत्र वदन्ति। परमाणूनां सामान्यतः पक्षतायां सिद्धसाधनमित्येककालावच्छिन्नस्य पक्षत्वं वाच्यम्। स च कालोपाधिः कार्यद्रव्याधिकरणमन्यथा वा। आद्ये बाधः कार्यद्रव्याधिकरणकालावच्छिन्नस्य उपोदयप्रबन्धत्वात्। अन्त्ये पक्षविशेषणाप्रसिद्धिः प्रलयासिद्धेरित्यनुमानदूषणम्। एव चात्रानुमाने कार्य्यद्रव्याधिकरणवृत्तित्वमात्रमुपाधिः पक्षविशेषणं न तु कार्यद्रव्यानधिकरणकालवृत्तित्वमपि अप्रसिद्धेरिति फक्किकार्थः। तथा च

न्यायलीलावतीप्रकाशः

अत्र वदन्ति । समयसमवायिकारणातिरिक्तवृत्तिध्वंसप्रतियोग्यवृत्तिकार्यद्रव्यत्वं कार्यद्रव्यप्रागभावसमानकालीनारम्भकातिरिक्तकार्यद्रव्यानधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति कार्य-

न्यायलीलावतीप्रकाशविवृतिः

सिद्धसाधनमिति भावः । अत एव कार्य्यद्रव्यानधिकरणेत्यादिरपि क्वाचित्कः पाठः सङ्गच्छते । कार्य्यद्रव्यानधिकरणवृत्तित्वमात्रमत्र विशेषणमन्यथा सिद्धसाधनापत्तेरित्यर्थकत्वात् । तथा च पक्षविशेषणाप्रसिद्धिरिति भावादिति सङ्क्षेपः ।

समयेति । अत्र महाप्रलयाङ्गीकारे धर्मिपक्षतायां महाप्रलयाव्यवहितकार्य्ये व्यभिचार इति धर्मपक्षता । आकाशवृत्तिध्वंसप्रतियोगित्वेनार्थान्तरवारणाय बाधस्फोरकं पक्षविशेषणम् । समयपदं च साधारणाधिकरणपरमतो नासिद्धिः । यथा च तथा सति न दिशाऽर्थान्तरं तथा प्रागेवोक्तम् । समवायिपदं च प्रकृतसमवायिपरमतो नोक्तदोषतादवस्थ्यम् । तादृशशब्दवृत्तित्वेनार्थान्तरवारणाय पक्षे द्रव्यपदम् । एक एव ध्वंसः समयाकाशोभयवृत्तिः स्यादित्यर्थान्तरतादवस्थ्यमतो नञ्द्वयगर्भता । महाप्रलयेनाऽर्थान्तरवारणाय कालीनान्तं ध्वंसविशेषणम् । कार्यपदद्रव्यप्रागभावपदयोर्विकल्पेनान्वय इति न व्यर्थता । कार्य्यपदं भावकार्य्यपरम् । प्रागभावे द्रव्यपदं विशेषणं महाप्रलयाव्यवहितकालेनार्थान्तरवारणाय । कार्य्यसमानकालत्वगर्भसाध्ये स्थूलकालावच्छेदेन समानकालत्वमभिप्रेतमिति । न तेनार्थान्तरं कार्यद्रव्यानाधिकरणवृत्तित्वं च कालावच्छेदेन साध्यप्रविष्टमतो नेदानीं प्रागभावसमानकालीनेन महाप्रलयरूपकार्य्यद्रव्यानधिकरणवर्त्तिना च ध्वंसेनाऽर्थान्तरम् । कालीनेत्यन्तं वृत्तिविशेषणमित्यन्ये । कार्य्यद्रव्यानधिकरणत्वं कार्यद्रव्यसंयुक्ताभाववत्त्वं कपालेऽपीति तेनार्थान्तरवारणायारम्भकातिरिक्तेति । द्रव्यसमवायिकारणातिरिक्तेत्यर्थः, तेन शब्दारम्भकत्वेऽप्याकाशस्य शब्दत्वे साध्यप्रसिद्धिरविकला । कार्यमात्रेति । मात्रपदमनन्तत्वे व्यभिचारवारणाय । न चैवमपि ध्वंसत्वे व्यभिचारः, भाववृत्तित्वेनापि विशेषणात् । न चैवमपि चरमक्रियात्वे व्यभिचारः, नानाकालीनत्वेन कार्य्यविशेषणेऽपि महाप्रलयाव्यवहितसर्गीयचैत्रशरीरवृत्तिजातौ

हनादाविव(१) सम्भवेनानुपाधित्वात्। भूगोलकसन्तानश्च कदाचित्साकल्येनोच्छिद्यते सन्तानत्वात् दीपसन्तानवत्। सन्तानत्वं चाङ्गाङ्गिप्रवाहत्वम्। एकावयवित्वमस्यासिद्धम्, नानावयवित्वे तु

न्यायलीलावतीकण्ठाभरणम्

साकल्येनोच्छिद्यत इति। सजातीयोत्पादकसामग्र्यसमवहितनाशकनाश्यत्वं साकल्येनोच्छिन्नत्वम्। तेन बालतरुणशरीरन्यायेनोच्छेदे न सिद्धसाधनम्। अङ्गाङ्गिप्रवाहत्वं कार्य्यकारणप्रवाहत्वमित्यर्थः। तथा च कार्य्यकारणोभयवृत्तित्वे सति कार्य्यमात्रवृत्तित्वं सन्तानत्वमिति भावः। ननु भूगोलकस्यैकावयवित्वे मानाभावात् नेदमनुमान

न्यायलीलावतीप्रकाशः

मात्रवृत्तिधर्मत्वात् शब्दत्ववत्(२)। न चात्रविभुवृत्तिवृत्तित्वमुपाधिः, अन्त्यावयविकर्मत्वे साध्याव्यापकत्वादिति। भूगोल-

न्यायलीलावतीप्रकाशविवृतिः

व्यभिचार इति वाच्यम्, तादृशध्वंसप्रतियोगिजातीयवृत्तित्वस्य साध्यत्वात्तस्य च तत्रापि सत्त्वात्। न चैवं मात्रपदवैयर्थ्यमनन्तत्वेऽपि ध्वंसप्रतियोगिजातीयव्योमवृत्तित्वादिति वाच्यम्, ध्वंसप्रतियोगिजातीयत्वस्य ध्वंसप्रतियोगित्वेनापि विशेषणादिति नवीनाः। तच्चिन्त्यम्। एवं सति तादृशध्वंसप्रतियोगित्वे साध्ये धर्मिपक्षकतायामेव सामञ्जस्ये धर्म्मपक्षकत्वसाधारण्यवैयर्थ्यात्। ध्वंसप्रतियोगित्वस्य साध्यप्रवेशे व्यर्थविशेषणत्वाच्च। तदनुपादाने च मात्रपदवैयर्थ्यात्। अत्र मिश्राः। मात्रपदं कार्त्स्न्यपरं न चैवमसिद्धिः, विभाजकोपाध्यवच्छिन्नभावयावत्कार्यवृत्तित्वस्य हेतुत्वात्। भवति च द्रव्यत्वशब्दत्वादिर्विभाज-

(१) ०नादावसम्भ०।

(२) कार्य्यद्रव्यप्रागभावसमानकालीना कार्य्यद्रव्यानधिकरणे वृत्तिर्यस्य ध्वंसस्य तत्प्रतियोगिवृत्तित्वमर्थः। तेनेदानीन्तनघटध्वंसस्य महाप्रलयवृत्तित्वेऽपि न क्षतिः। कार्य्यद्रव्योपरमेऽप्यनुवर्त्तमानस्य महाभूतसंक्षोभजनितस्य क्रियासन्तानस्य क्रमेणोपरमान्महाप्रलयस्य सिद्ध्याऽर्थान्तरवारणाय द्रव्येति। कार्य्येति स्वरूपकथनम्। अनन्तत्ववारणाय हेतौ मात्रपदम्। महाप्रलयान्यवहिंतसर्गीयकार्य्यत्वस्य ध्वंसत्वस्य च वारणायेदानीन्तनभाववृत्तित्वे सतीति पूरणीयम्। द्रव्यत्वं तादृशध्वंसप्रतियोगिवृत्ति इदानीन्तनजन्यभाववृत्तिधर्म्मत्वात् सत्तासाक्षाद्व्याप्यजातित्वाद् वा महाप्रलयानभ्युपगमे तु जन्यसमवेतत्वाद् गुणत्ववदिति तु न्यायः। इति दीधितिः।

क्रमनाशे सिद्धसाधनम् , यौगपद्ये तु व्यभिचार इति चेन्न,

---

न्यायलीलावतीकण्ठाभरणम्

मिति शङ्कते—व्यभिचार इति । क्रमनष्टदहनपवनादावित्यर्थः । एकमिदं भूगोलकमित्येकत्वेन प्रतीयमानत्वादेकमेव इदमवयवि तदेव च पक्ष

न्यायलीलावतीप्रकाशः

केति । यद्यपि भूगोलकपदेन द्व्यणुकमारभ्यान्त्यावयविपर्यन्तस्य पक्षत्वे यदि साकल्योच्छेदः सकलोच्छेदप्रतियोगित्वं तदा बाधः, अथैककालीन उच्छेदस्तदा भूगोलकसन्तानान्तरकालमात्रवृत्ति-

न्यायलीलावतीप्रकाशविवृतिः

कोपाधिः, न तु चरमक्रियात्वम् । न चासिद्धिवारकतया विभाजकेत्यादिवैयर्थ्यम् , कार्य्यत्वावच्छिन्नविभाजकोपाधिसमा(नां?)धिकरणात्यन्ताभावप्रतियोगित्वस्याखण्डाभावतया व्यर्थत्वाभावात् । अखण्डाभाववदखण्डोपाधावपि न वैयर्थ्यम् । अत एव प्रमेयत्वादिकं हेतुरित्यपि कश्चित् । एवंविवक्षायां च पक्षे कार्य्यपदोपादानं कार्यवृत्तितामादायैव पक्षे साध्यगमनमेतावन्मात्रविभावनार्थमिति दिक् । अन्त्यावयवीति । यद्यपि कर्मत्व एव साध्याव्यापकता तथापि अन्त्यावयविकर्म्मवृत्तितामादायैव कर्म्मत्वे साध्यगमनमिति तदुत्कीर्त्तनम् । न च द्रव्यानारम्भकवृत्तिवृत्तित्वमुपाधिः, आगमादिविपक्षबाधकेन हेतोः साध्यव्याप्यतया तदव्यापकत्वेनोपाधेः साध्याव्यापकत्वात् । एतच्चानुमानं सर्वमुक्तिमङ्गीकृत्य । वस्तुतो लीलावतीकारेण तदनङ्गीकारात्तमादायार्थान्तरप्रसङ्गेन प्रागभावसमानकालीनध्वंसविशेषणमपास्यैव साध्यं भावकार्य्यवृत्तित्वादित्येव हेतुः । अर्थान्तरप्रसङ्गस्तु बाधादेव निरस्तः । तत्स्फोरणार्थं कार्य्यद्रव्यप्रागभावसमानकालीनसमयसमवायिकारणमात्रवृत्तिध्वंसप्रतियोगिमात्रवृत्तीति पक्षविशेषणमिति अत्यन्ताभावगर्भैव व्याप्तिरिति व्यापकेन व्यर्थविशेषणतेति मतेनेदमनुमानम् । अतो बहुविशेषणघटितत्वेऽपि साध्यस्य न व्यर्थविशेषणता । प्रलयसिद्धेरुद्देश्यत्वाच्च नार्थान्तरनिग्रहस्थानम् । आगमरूपविपक्षबाधकसत्त्वाच्च नाप्रयोजकता ।

केचित्तु यथोक्तसाध्यं पक्षीकृत्य तद्व्यापकत्वेन कार्य्यद्रव्य-

एवं सति तरुगिरिदहनपवनादिष्वपि संयोगादेकस्थूलबोधोपपत्तौ सर्वत्रावयविनोऽसिद्धिप्राप्तेः । तदसिद्धावपि चैकसमुदायप्रत्ययगोचरत्वेन सावित्रतेजोवदुच्छेदसाधनात् । उच्छेदस्तु क्रमेण यौगपद्येन वाऽस्तु, किं तु साकल्येन साध्यः । न चासावेकदेशावस्थितौ सम्पद्यते । अनुपभुक्तसमस्तप्राणिकर्माणि युगपन्निरुद्धवृत्तीनि अनुपभुक्त(वि)चित्रकर्मत्वात् सुषुप्तिसम-

---

न्यायलीलावतीकण्ठाभरणम्

इति न सिद्धसाधनव्यभिचारावित्यत आह—एक(व?)मिति । अभ्युपेत्याह—तदसिद्धावपीति । यथा सहस्रमपि सहस्रांशोरंशव एकदैव सायं तिरोभवन्ति तथा भूगोलकत्वेन व्यवह्रियमाणा अनेकेऽप्यवयविनो युगपदुच्छेत्स्यन्तीत्यर्थः । ननु भूगोलकसन्तानस्य नानावयवित्वे क्रमेणैवोच्छेदोऽस्तु दहनपवनादिवदित्यत आह—उच्छेदस्त्विति । भूगोलकान्तरासमानकालीनो भूगोलकध्वंसः साध्य इत्यर्थः । एतदेवाह—न चेति । प्रलयेऽनुमानान्तरमाह—अनुपभुक्तेति । उपभुक्तकर्म्मणामनुपभुक्तकर्म्मणां यौगपद्येन वृत्तिवि(नि?)रोधो न सम्भवतीत्युक्तमनुपभुक्तेति । स्वफलाजनकत्वं वृत्तिनिरोधः स्वजन्यभोग-

न्यायलीलावतीप्रकाशः

त्वेऽप्युच्छेदानां न दोष इति न प्रलयसिद्धिः, तथापि भूगोलकसन्तानोऽयं भूगोलकसन्तानानधिकरणवृत्तिध्वंसप्रतियोगी कार्यत्वाच्छब्दवदित्यत्र तात्पर्यम् । एकं भूगोलकमित्यबाधितानुभवादेकावयविसिद्धिः । अथ स न प्रमाणं तत्राह—एवं सतीति । क्रमेणोच्छेदे सिद्धसाधनं परिहरति—उच्छेदस्त्विति। युगपदिति । युगपत्सहकारिरहितानी-

न्यायलीलावतीप्रकाशविवृतिः

वृत्तित्वमनुमेयमतो न बहुविशेषणघटितत्वं साध्यस्येत्याहुः । उक्तविपक्षबाधकादेव चात्रैव तदन्यवृत्तित्वमुपाधिरिति ध्येयम् । तथापीति । अत्रापि पूर्ववदेव पक्षसाध्यविशेषणे द्रष्टव्ये । व्योमादिवृत्तिध्वंसप्रतियोगिवृत्तितया महाप्रलयेन बाधादेव नार्थान्तरमतो न तद्विशेषणमित्याहुः । कार्य्येति । भावकार्येत्यर्थः । कुशूलस्थेषु बीजेषु कालान्तरभाविस्वर्गजनकादृष्टेषु च युगपन्निरुद्ध-

यर्वात्तिकर्मवत् । न चैवम्भूतोच्छेदानुपलब्धेर्नैवम् । उत्पत्तेरनुपलम्भादनुत्पत्तिप्राप्तेः(१) स्वभावादेव चावयवित्वप्रस-

न्यायलीलावतीकण्ठाभरणम्

प्रतिबन्धकसंमवधानं वा। विचित्रत्वं विजातीयफलजनकत्वम्। एवम्भूतेति। सिसाधयिषितोच्छेदानुपलब्धेरित्यर्थः। अनुमानादुपलब्धेरेव नानुपलब्धत्वम्, अन्यथा आद्यक्षणसत्तासम्बन्धस्य उत्पत्तेः प्रत्यक्षावेद्यत्वेन उत्पत्तिरपि न स्यादित्यर्थः।

यद्वा ननु पर्वतादेरुच्छेदो न दृष्ट इत्यत आह—न चेति। एवं सत्युत्पत्तिरपि तेषां न दृष्टेति सापि न स्यादित्यर्थः। ननु पर्वतादेरुत्पत्तिश्चेन्न स्यात्तदाऽववित्वमपि न स्यादित्यत आह—स्वभावादेवेति।

न्यायलीलावतीप्रकाशः

त्यर्थः। नन्वत्र साध्याप्रसिद्धिः प्रायश्चित्तनाश्यकर्मभिर्व्यभिचारश्च। दृष्टान्तश्च साध्यविकलः सुषुप्तावपि श्वासादिजनकादृष्टानिरोधात्। किञ्चानुपभुक्तपदमतीतकर्मव्यावृत्त्यर्थं तदयुक्तम्। अनुपभुक्तत्वं ह्युपभोगाजनकत्वम्। तच्च प्रायश्चित्तनाश्यकर्मणामेवेति न प्रलयसिद्धिः, यदा कदाचिदुपभोगाजनकत्वं च अतीतकर्मणामप्यस्ति। अपि चैतत्कालीनानां कर्मणां पक्षत्वे बाधः केषाञ्चिदुपभोगेनैवान्तरा नाशात्, प्रलयकालीनानां च पक्षत्वे आश्रयासिद्धिः। विचित्रपदं च व्यर्थम्। तस्मादेतत्कर्मातिरिक्तानि कर्माणि एतत्कर्मप्रतिबन्धकप्रतिबध्यानि कर्मत्वादेतत्कर्मवत्। प्रतिबध्यत्वं च कारणत्ववत् सामान्येनैव रूपेणातीतस्यापि। यदा तत्प्रतिबन्धकं भविष्यति तदा सर्वकर्मप्रतिबन्धे अर्थात्प्रलयसिद्धिरित्येवंपरोऽयं ग्रन्थ इति सम्प्रदायविदः। ननूत्पत्तेरभावे कुतोऽवयविसिद्धिरित्यत आह—स्वभावादेवेति।

न्यायलीलावतीप्रकाशविवृतिः

वृत्तित्वं प्रसिद्धमेवेत्यत आह—प्रायश्चित्तेति। ननु वृत्तिनिरोधयोग्यता साध्येत्यरुचेराह—दृष्टान्तश्चेति। ननु तदतिरिक्तादृष्टकूटस्यैव दृष्टान्ततेत्यरुचेराह—किं चेति। तच्चेति। तावन्मात्रनिरोधसिद्धावपि प्रलयासिद्धिरित्यर्थः। अतीतकर्मणामिति। तथा च तेषामपि पक्षत्वे बाधोऽनुपयु(भु?)क्तपदव्यर्थता चेति भावः। नन्वनुपभुक्तत्वमजनितभोगत्वमतो नोक्तदोष इत्यरुचेराह—अपि चेति। अतीतस्यापीति। प्रतिब-

(१) ०नुत्पत्तेः।

ज्ञात् । घटादेरपि वा तथाभूतस्य नित्यतापत्तेः(१) । न च ब्रह्म वर्षशतानियमः । प्रलयस्य पुराणप्रसिद्धेः । समयप्राचुर्येऽपि लक्षणपरत्वात् । तथा च कालविशेषस्य प्रत्यक्षादेरसिद्धौ आश्रयासिद्धिः(२) । आगमात्तत्सिद्धौ तु तेनैव बाधात् । कश्चित्काल इत्युपादाने सिद्धसाधनम् । सर्वपदोपादाने च विशेषणवैयर्थ्यम् ।

---

### न्यायलीलावतीकण्ठाभरणम्

उत्पत्तिं विना अवयविस्वभावा एव महीधराः स्युरित्यर्थः। ननु अवयवित्वेनानुभूयमानानां पर्वतादीनामनुत्पन्नत्वे घटादयोऽपि तथा स्युरित्यत्रेष्टापत्तिमाह—घटादेरिति । सत्प्रतिपक्षानुमानं दूषयति—न चेति । तथा च पक्षत्वाभिमतकालस्यावच्छेदकतया ब्रह्मवर्षशतमितत्वं यदुपात्तं तदभावादाश्रयासिद्धिरित्यर्थः। पुराणं कथमीदृशमत आह—पुराणेति । एवं सति यद्भवति तदाह—तथा चेति । सत्प्रतिपक्षानुमाने पक्षानिरुक्त्या आश्रयासिद्धिरित्यर्थः । तेनैवेति । प्रलयस्याऽप्यागमप्रतिपाद्यत्वेन तदभावसाधने बाध इत्यर्थः । सिद्धसाधनमिति । इदानीन्तनकालेनेति शेषः । सर्वेति प्रलयकालसङ्ग्रहार्थमेव तदुपादानात् ।

### न्यायलीलावतीप्रकाशः

न च ब्रह्मेति। आदित्यक्रियानिरूप्याहोरात्रादिघटितत्वाद्वर्षाणामित्यर्थः। तथा चेति । वर्षशतनियमाभावे सतीत्यर्थः । 'प्रत्यक्षादेः' प्रमाणादि-

### न्यायलीलावतीप्रकाशविवृतिः

न्धयोग्यताया एव साध्यत्वादिति भावः । सर्वकर्म्मणां 'प्रतिबन्धे' प्रतिबन्धस्वरूपयोग्ये । सम्प्रदायविद इत्यस्वरसाविभावनम् । तद्बीजं तु एककालीनानि कर्म्माणि निरुद्धवृत्तीनीत्येवमप्यनुमाने पक्षतावच्छेदकमहिम्नैव प्रलयसिद्धेः कृतं गुरुणा प्रकारान्तरेणेति । ब्रह्मवर्षशतमिति गणित(३)भेदगम्य इत्याद्यनुमानदूषणाय मूलं न च ब्रह्मेति । षष्ठीभ्रमं निवारयति—प्रमाणादिति ।

---

(१) ॰त्तापत्तिः । (२) ॰सिद्धेः । (३) गमितमे ।

तत्संग्राह्यप्रलयसमयाप्रतीतेः। प्रतीतौ [तु] बाधात्। एतद्बाधकवलेन वर्णव्यवस्थापि आरणेयसन्ततिवदिति [प्रलयः]।

---

न्यायलीलावतीकण्ठाभरणम्

स च न सिद्ध इति सर्वपदवैयर्थ्यमित्यर्थः। एतदेवाह—तदिति। एतद्बाधकवलादेवेति। अत्यन्तोच्छेदस्य दृढतरप्रमाणसिद्धतया सर्गादौ ब्राह्मणाभावात्तत्कालीन आद्यो ब्राह्मणोऽवश्यमदृष्टविशेषोपगृहीतभूतभेदारभ्यः स्वीकार्य्यो यथा वृश्चिकस्य वृश्चिकपूर्वकत्वेऽपि गोमयाद्याद्य इत्यर्थः। प्रलयेऽनुमानम्,—परमाणुः कार्य्यद्रव्यसमानकालीनपरमाणुक्रियातिरिक्तक्रियावान् मूर्त्तत्वात् घटवत्। न चैतदन्यगुणवत्त्वमुपाधिः पक्षेतरतुल्यत्वात्। यद्वा एते परमाणवः कार्य्यद्रव्यानाधिकरणवृत्तिकार्यवन्तः नित्यद्रव्यत्वात्, आकाशवत्। न च कार्य्यद्रव्यानधिकरणत्वमुपाधिः साध्यव्यापकताग्राहकमानाभावेनातुल्ययोगक्षेमत्वात्। प्रलयानन्तरं सर्गसिद्धये विशिष्टसाधनायानुमानं समयसमवायिकारणातिरिक्तवृत्तिध्वंसप्रतियोग्यवृत्तिकार्य्यद्रव्यत्वं कार्य्यद्रव्यप्रागभावसमानकालीनारम्भकातिरिक्तकार्य्यद्रव्यानाधिकरणवृत्तिध्वंसप्रतियोगिवृत्ति कार्य्यवृत्तिधर्म्मत्वात् शब्दत्ववत्। न च विभुवृत्तिवृत्तित्वमुपाधिः, अन्त्यावयविकर्म्मत्वे साध्याव्यापकत्वादिति।

न्यायलीलावतीप्रकाशः

त्यर्थः। असति बाधक इति प्रागुक्तं दूषयति—एतद्बाधकेति।

नन्वीश्वरो द्रव्यान्तरम्। तथा हि ज्ञानवत्त्वेन पृथिव्याद्यष्टभेदसिद्धावीश्वरो नात्मा दुःखात्यन्ताभाववत्त्वात्, घटवत्। न चेश्वरात्मत्वसाधकानां ज्ञानवत्त्वादीनां भूयस्त्वाद्बलवत्त्वमिति वाच्यम्, व्याप्तिपक्षधर्मते हि बलं न तु भूयस्त्वमपि, ते च तुल्ये एवेत्येकेनैव भूयसामपि प्रतिबन्धात्। किञ्च अनात्मत्वसाधकानामेव भूयस्त्वम्, ज्ञाना-

न्यायलीलावतीप्रकाशविवृतिः

अप्रसक्तप्रतिषेधमाशङ्क्याह—नन्विति। नन्वन्यतरत्वेन व्याप्तिपक्षधर्म्मतान्यतरभङ्गकल्पनायां प्रसक्तायां लाघवप्रतिबन्धकत्वेन भूयस्त्वमप्यपेक्षितमेव। तदुक्तमस्माकं स्वल्पं वो बहवश्चेत्यरुचेराह—किं चेति। निर्दुःखत्वेऽतिव्यापक-

ईश्वरो न द्रव्यान्तरं, प्रमाणाभावादसिद्धेरित्येके । तन्न । विवादाध्यासितं सकर्त्तृकं कार्य्यत्वात् घटवदित्यनुमानस्य स-

न्यायलीलावतीकण्ठाभरणम्

सृष्टिसंहारावीश्वराधीनाविति तदनन्तरमीश्वरस्य निरूपणीयत्वेन ज्ञानवत्त्वादष्टद्रव्यभिन्नत्व सुखानधिकरणत्वाच्चात्मभिन्नत्वमस्येति दशमद्रव्यमीश्वर इति कुतो नवैवेत्याक्षेपे यदीश्वरो धर्म्मी सिद्ध्येत्तदा नवभिन्नद्रव्यत्वमस्य सम्भाव्येत । तत्रैव प्रमाणाभाव इति केषां चिन्मतं दूषयति—तन्नेति । विवादाध्यासितमिति । सक-

न्यायलीलावतीप्रकाशः

द्वित्रयस्यात्मत्वसाधकत्वात् सुखादिषट्काभावषट्कस्यानात्मत्वसाधकत्वात् । न च निर्दुःखत्वमनात्मत्वव्यभिचारि निर्दुःखत्वव्यापकत्वात्, प्रमेयत्ववदिति वाच्यम्, निर्दुःखत्वं न तथा निर्दुःखमात्रवृत्तिधर्मत्वात् पटत्ववदिति प्रतिरोधादित्याक्षेपे ईश्वरसाधकमानाभावाद्धर्म्यसिद्धौ कस्य भेदः साध्य इति कस्यचित्परिहारं दूषयति—तन्नेति । विवादेति । सकर्त्तृकत्वासकर्त्तृकत्वविवादपदमित्यर्थः । तच्च यद्यप्येकमवच्छेदकं विना दुर्ग्रहं न च तथाविधसंशयविषयत्वमेव तथा तद्ग्रहेऽपि तदनुयोगापत्तेः, वादिनोर्निश्चितत्वेन तदसम्भवाच्च । न च वाद्युत्थापितमानाभ्यां मध्यस्थस्य तत्सम्भवः तस्यापि निश्चयवत्त्वात् । न चाहार्यसंशयसम्भवः अन्योन्याश्रयात् । वाद्यनुमानप्रवृत्त्या तत्संशयविषयत्वं तत्संशयविषयत्वेन वाद्यनुमानवृत्तेः, तथाप्युपादानगोचरजन्यकृत्यजन्यजन्यत्वमेव पक्षतावच्छे-

न्यायलीलावतीप्रकाशविवृतिः

त्वस्या(१)भेदेऽव्यक्षतेरिति भावः । निर्दुखेति । निर्दुःखान्यावृत्तित्वादित्यर्थः । अन्योन्याश्रयादिति । यद्यप्याहार्य्यसंशये न वाद्यनुमानापेक्षा तस्येच्छामात्रप्रभवत्वात् । तथापि तस्यानुमानानिवर्त्यत्वेन तदनङ्गतयाऽनावश्यकत्वमिति स्वारसिकस्तथा वक्तव्यस्तथासतीदं दूषणमिति भावः । तथापीति । अत्रोपादानपदं स्वोपादानपरमन्यथा शब्दाद्यव्याप्तेः । न चाप्रसिद्धिः, तादृशकृतिजन्या-

(१) कत्वेऽस्याभे ।

न्यायलीलावतीप्रकाशः

दकं तेन शब्दज्ञानेच्छादीनामपि पक्षत्वं शब्दस्य जन्यकृतिजन्यत्वेऽपि उपादानगोचरतदजन्यत्वात्। न च कृतौ जन्यत्वविशेषणव्यावर्त्याप्रसिद्धिः, परं प्रत्यापाततः प्रमेयत्ववत्तत्प्रकारकज्ञानजननेनोपरञ्जकत्वात् स्वं प्रति व्यावर्त्तकत्वात्, उभयं प्रति सप्रयोजनतया वैयर्थ्याभावात्। प्रयोजने उभयसिद्धत्वस्य च तन्त्रत्वात् कार्यत्वं च न योगोपपस्थितकृत्यर्हत्वम्, असिद्धेः। किन्तु प्रागभावप्रतियोगित्वम्। ननु सकर्त्तृकत्वं यदि कृतिमत्सहभावस्तदाऽस्मदादिनाऽर्थान्तरम्, अथ कर्तृजन्यत्वं तदा सिद्धसाधनम्, असमवायिकारणसंयोगवतामवयवानामेव कर्त्तृत्वात् परैरचेतनस्यापि कर्त्तृत्वोपगमात्। नापि

न्यायलीलावतीप्रकाशविवृतिः

न्यत्वस्य पक्षतावच्छेदकत्वात्। यद्वा उपादानगोचरकृतित्वावच्छिन्नजन्यकृतिनिष्ठकारणताप्रतियोगिककार्यतानाश्रयत्वं पक्षतावच्छेदकमिति नोपादानपदं स्वोपादानपरं शब्दादावव्याप्तिः स्वविषयसमवेतकार्य्यं प्रत्येव कृतेस्तथाजनकत्वेन मृदङ्गादिगोचरकृतेस्तथाऽजनकत्वात्। अत्र चादृष्टाद्वारकत्वमपि कृतौ विशेषणमन्यथा तपश्चरणादिसाध्यकालीशरीरवृत्तिगौररूपाव्याप्तिः। मिश्रास्तु घटरूपे अदृष्टाद्वारकघटादिगोचरकृतिजन्येऽव्याप्तिवारणाय तत्पदम्। न हि तदस्मदादिकर्त्तृकं घटादावुत्पन्ने तद्गोचरकृतिं विना तदुत्पत्तेः। न च घटजनककृतेर्घटागोचरतैवेति वाच्यम्। कृतेः सिद्धवृत्त्यसिद्धविषयतया तदविषयत्वात्। न च घटरूपं तदजन्यमेव तस्य रूपजनकादृष्टजनककृतिजन्यत्वादिति वाच्यम्, प्रकृते तदप्रयोज्यत्वमात्रस्य तदजन्यत्वपदार्थत्वात् रूपविशिष्टस्य फलत्वाच्चेत्याहुः। इदं च पक्षतावच्छेदकं ध्वंससाधारणमेव निर्वचनीयं साध्यस्यापि तत्र सत्त्वान्न भागबाधः। न चैवं कृतिध्वंसेऽव्याप्तिः, तत्रोपादानाभावादेव स्वोपादानगोचरजन्यकृतिजन्यान्यत्वसत्त्वात्। उपादानगोचरकृतित्वेत्यादिविवक्षायास्तु सुतरां तत्सङ्ग्रहः। न चैवं ध्वंसमात्रस्यैव पक्षता स्यादिति घटादिध्वंसेऽस्मदादिकृतिसाध्ये सिद्धसाधनं साध्यस्योपादानपदस्य कारणमात्रपरत्वादन्यथा कृतिध्वंसादावंशतोबाधप्रसङ्गादिति वाच्यम्, पक्षस्योपादानपदस्यापि कारणमात्रपरत्वात् घटादिध्वंसस्यापक्ष-

त्वात्। सकर्तृकत्वं चोपादानविषयापरोक्षविज्ञप्तिचिकीर्षाकृति(१)

---

न्यायलीलावतीकण्ठाभरणम्

र्तृकत्वासकर्तृकत्वकोटिकविवादपदमित्यर्थः । नन्वदृष्टद्वाराऽस्मदादिभिः सिद्धसाधनम् । यद्वा कर्तृसाहित्यमात्रमस्मदादिनापि सिद्धमित्यत आह—सकर्तृकत्वं चेति । ननु कर्त्ता शरीरविशिष्ट एव, स च

न्यायलीलावतीप्रकाशः

कृतिमज्जन्यत्वं अदृष्टद्वाराऽस्मदादिना सिद्धसाधनादित्यत आह—सकर्तृकत्वं चेति । ज्ञानेच्छाकृतिजन्यत्वसिद्धावर्थात्तदाश्रयेश्वरसिद्धिः, न तु तदाश्रयजन्यत्वं साध्यं तस्य क्वाप्यसिद्धेः धर्मिग्राहकमानान्वयव्यतिरेकाणां तद्ग्राहकाणामभावात् । सुखवज्जन्यत्वेनात्मजन्यत्वानुमाने चात्मसमवेतत्वस्योपाधित्वात् । कर्तृत्वं च कार्यानुकूलकृतिसमवायित्वं न तु जनकत्वे सति गौरवात् । कर्तरि कारकव्यवहारश्च "सविशेषणे हि" इति न्यायेन कृतिपर्यवसन्न एवेति भावः। ननूपादानगोचरत्वं यदि यत्किञ्चिदुपादानगोचरत्वं तदाऽस्म

न्यायलीलावतीप्रकाशविवृतिः

त्वात् । न चैवमात्मगोचरकृतिध्वंसोऽपि पक्षो न स्यादिति वाच्यम्, ज्ञानादित्रितयाजन्यत्वस्य प्रथमकल्पार्थत्वात् । द्वितीये त्वप्रसङ्ग एवेति दिक् ।

नन्वेवं ज्ञानादिसिद्धावपि नेश्वरसिद्धिरित्यत आह—ज्ञानेच्छेति । या क्रिया यदीयेत्यादिव्याप्तिश्चाप्रयोजिकेति भावः । 'आत्मजन्यत्वानुमाने' घटादेरिति शेषः । आत्मेति । आत्मवृत्तित्वस्येत्यर्थः । यथाश्रुतस्य ज्ञानध्वंसादौ साध्याव्यापकत्वात् । भावत्वपक्षधर्मावच्छिन्नसाध्यव्यापकतायां यथाश्रुत एवायमुपाधिरित्यन्ये । नन्वेवमजनकत्वादात्मनि कर्तृपदप्रयोगो न स्यादित्यत आह—कर्तृत्वं चेति । नन्वेवं कर्तरि कारकत्वव्यवहारो न स्यात् कारणत्वविशेषात्कारकत्वस्येत्यत आह—कर्तरीति । गोचरत्वं यदीत्यत्र यत्किञ्चिदुपादानगोचरज्ञानाद्युत्तरभावित्वमात्रं च यदि साध्यमिति शेषः । तेन नान्यथेत्यादिशङ्कानुत्थानम् । 'अस्मदादिना' अस्मदादिज्ञानेन ।

---

(१) कृतिमज्जन्य० ।

न्यायलीलावतीप्रकाशः

दादिनाऽर्थान्तरम्, अथ ज्ञानादीनामपि जनकत्वं विवक्षितं न च घटोपादानगोचरज्ञानादीनां क्षित्यादिजनकत्वं व्यभिचारादिति चेन्न क्षितिजनकादृष्टजनकज्ञानादीनामुपादानविषयत्वनियमेनादृष्टद्वारा तैरेव सिद्धसाधनात्। साक्षाज्जन्यत्वे च साध्ये दृष्टान्तस्य साध्यवैकल्यापत्तेः। न च शरीरक्रिया दृष्टान्तः, चेष्टात्वस्योपाधित्वात्। क्षित्याद्युपादानगोचरत्वविवक्षायां चाप्रसिद्धिः। न चोपादानपदस्य सम्बन्धिशब्दत्वात् क्षितिघटपदसमभिव्याहारे तत्तदुपादानबोधनं प्रकृते शब्दस्याप्रमाणत्वात्, वादिनोऽनाप्तत्वात्। अनुमाने च व्यापकतावच्छेदकरूपेणोपादानत्वेन व्यापकसिद्धावर्थान्तरत्वात्। प्रमाणमात्रे च तथा कल्पने सर्वत्र तत्तदुपादानत्वेनैवोपस्थितौ सामान्येन क्वाप्यनुपस्थितेर्व्याप्तिरेव न गृह्येत।

किञ्च अस्मदादीनामेव नित्यमहत्त्ववत् क्षित्याद्युपादानगोचरं नित्यं ज्ञानादिकमस्तु पक्षधर्मताबलात् धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायात्। नित्यं च ज्ञानमस्मदादिकर्तृके कार्ये स्वातन्त्र्येण न जनकमङ्कुरादौ च तथेति तवाप्यनुमतम्। मैवम्। अदृष्टप्रागभावव्याप्यप्रागभावाप्रति

न्यायलीलावतीप्रकाशविवृतिः

अथेति। अपिरेवकारार्थस्तेन जनकत्वमेव विवक्षितमित्यर्थः। आत्मनो जनकत्वानङ्गीकारेण समुच्चयार्थासम्भवात्। साक्षादिति। इच्छाकृत्यतिरिक्तस्वजन्यानपेक्षत्वमेव साक्षात्त्वम्, अन्यथा चेष्टाया अपि साक्षात्त्रितयजन्यत्वासम्भवादग्रिमशङ्कानुत्थानापत्तेः। चेष्टात्वस्येत्युपलक्षणं घटादौ व्यभिचाराच्चेत्यपि द्रष्टव्यम्। न च कृतिध्वंसे साध्याव्यापकत्वं तत्त्रितयजन्यत्वरूपसाध्याभावात् प्रत्येकजन्यत्वस्य साध्यतापक्षे च भावत्वरूपपक्षधर्मावच्छिन्नसाध्याव्यापकोऽयमित्यवधेयम्। ननु प्रमाणमात्रे णोप(नयं?)रीतिरपि तु ज्ञातसम्बन्धगमकप्रमाणे, तथा च क्व प्रत्यक्षेऽतिप्रसङ्गः। अस्तु चैवमनुगमः। यत्तद्रूपैर्व्याप्तेरेवम्भूताया एवानुमितिजनकत्वादितिशङ्कामात्रेणाह(प्य?)प्राह—किञ्चेति। नन्वेवं शरीरव्यापारं विनाऽप्यङ्कुरादेरिव घटादेरपि सृष्ट्यापत्तिरित्यत आह—नित्यं चेति। अदृष्टेति। व्याप्तिरत्र कालिकी। अदृष्टपदं स्वजनकादृष्टपरमन्यथा सामान्यपरत्वे

न्यायलीलावतीप्रकाशः

योगिज्ञानादिजन्यत्वस्य स्वजनकादृष्टोत्तरवर्त्तिज्ञानादिजन्यत्वस्य वा साधनेनाऽदृष्टद्वारा सिद्धसाधनाभावात्। उपादानत्वेन सामान्यतोऽपि साध्यनिर्देशो पक्षधर्मताबलेनाभिमतक्षित्याद्युपादानगोचरज्ञानादिसिद्धेः अस्मदादिज्ञानाद्यजन्यत्वेन पक्षविशेषणाच्चास्मदादीनां नित्यज्ञानाकल्पनात्। उपादानं च कारणमात्रं विवक्षितमतो न ध्वंसे व्यभिचारः। न च सामान्यलक्षणादिप्रत्यासत्तिजन्यज्ञानादिनाऽर्थान्तरं तादृशज्ञानस्य कर्त्तृत्वानिर्वाहकत्वात्। अन्यथाऽतिप्रसङ्गात्। चिकीर्षाकारणं ज्ञानं यद्यप्यपरोक्षं क्वापि न दृष्टं किं त्वनुमितिरूपमिति साध्याप्रसिद्धिः। तथापि कृतेः सिद्धवृत्त्यसिद्धविष-

न्यायलीलावतीप्रकाशविवृतिः

घटादौ साध्यवैकल्यम्। यत्किञ्चिद्विशेषवत्त्वे सिद्धसाधनम्। न च पदार्थान्तर्भावेऽननुगमापत्तिः। यत्तद्गर्भसामान्यव्याप्तिपुरस्कारेणानुमानप्रवृत्तेः। तटस्थीभूय तत्र बुद्धिस्थत्वस्यानुगमकत्वात् अन्यथा सर्वनामपदाद्यवहारानापत्तेः। अदृष्टाजनकेत्युच्यमाने बाध ईश्वरकृतेरप्यदृष्टजनकत्वादिति सर्वं पदार्थोऽप्रतियोगीत्यन्तेनोक्तः। उपादानगोचरत्वं च ज्ञानादौ विशेषणमपरोक्षत्वं च ज्ञाने विशेषणं तेन नोत्तरग्रन्थविरोधः।

स्वजनकेति। न चादृष्टजनककृतेरप्यदृष्टोत्तरानुवृत्त्या तयैव सिद्धसाधनमिति वाच्यम्, यत्तस्य क्षणद्वयावस्थायितया स्वजन्यादृष्टोत्तरमननुवृत्तेः। अत्र च यावत्स्वजनकादृष्टोत्तरवर्त्तित्वमर्थोऽन्यथा यत्किञ्चित्तज्जनकादृष्टोत्तरमपरतज्जनककृत्युत्पादेन अदृष्टद्वारा सिद्धसाधनात्। अस्मदादीति। न चेदमयुक्तं पक्षविशेषणस्य हि ज्ञापकत्वं न तु कारकत्वम्। तथा (च) धर्मीतिन्यायेनास्मदादीनामेव नित्यज्ञानसिद्धौ पक्षविशेषणमेवासिद्धमिति वाच्यम्, असन्निकृष्टघटादावस्मदादीनामहं पश्यामीत्यनुव्यवसायाभावेन नित्यज्ञानबाधात्तत्स्फोरणार्थमुक्तधर्मेण पक्षविशेषणात्। ननूपादानगर्भस्य साध्यस्य ध्वंसे बाध इत्यत आह—उपादानं चेति। कारणमात्रमधिकरणमात्रमन्यथा बीजादिगोचरज्ञानजन्यतया स्थिरे सिद्धसाधनापत्तेः। न (ध्वंसे ?) व्यभिचार इति। बाधश्चेति शेषः, कस्यचिद्ध्वंसस्य पक्षत्वात्। न चैवं शब्दादावंशतः सिद्धसा-

न्यायलीलावतीप्रकाशः

यतया सिद्धविषयं प्रत्यक्षमपि हेतुः मृदवयवानां संस्थानविशेषस्य कृतिसाध्येष्टसाधनत्वेन ज्ञानेऽप्यवयवगोचरप्रत्यक्षं विना कृत्यनुत्पत्तेः। न चैवमपि तत एवानुमितिरपीश्वरे सिद्ध्येत्। स्वसुखादिसाधनत्वानुमितावीश्वरस्य बाधात्। अन्यादृश्याश्चानुमितेर्जनकत्वादर्शनात्। उपादानस्य सिद्धत्वेऽप्युपादेयवत्त्वेनासिद्धत्वान्न तत्र चिकीर्षाविरोधः। ननु ज्ञानेच्छाकृतीनामभावान्न क्वचित्कार्याभावः, किन्त्वेकैकाभावात्। तथा च व्यर्थविशेषणत्वेन त्रितयव्यतिरेको न हेतुव्यतिरेकव्याप्य इति न हेतोस्त्रितयसिद्धिः साध्याभावव्यापकाभावप्रतियोगिन एव साध्यगमकत्वात्। मैवम्। यत एवैकैकव्यतिरेकात्

न्यायलीलावतीप्रकाशविवृतिः

भवं वीणादेरपि शब्दाधिकरणत्वादिति वाच्यम्, मिलितानां ज्ञानादीनां स्वविषयसमवेतकार्यं प्रत्येव जनकतया तत्र त्रितयाजन्यत्वात्। न चैवं पक्षीभूतध्वंसे बाधस्तस्यासमवेतत्वादिति वाच्यम्, भावरूपकार्यत्वावच्छेदेन स्वविषयसमवेतं प्रत्येव जनकत्वमिति नियमादभावरूपकार्ये त्वन्यादृशेऽपि मिलितानां तेषां जनकत्वात्। यत्तु अनित्यानामेवैतेषां तथा नियम इति नित्यानां तेषां ध्वंसजनकतया न बाध इति तदयुक्तम्। एवं सत्यपक्षीकृते घटादिध्वंसे व्यभिचारापत्तेः। न च ध्वंसमात्रस्यैव पक्षत्वादिदमयुक्तमिति वाच्यम्, तथा सति ध्वंसे व्यभिचार इत्येव विरोधात् पक्षे व्यभिचारस्याशङ्कितत्वात्। न च घटादिध्वंसस्यापि नित्यज्ञानजन्यतया पक्षसमत्वादेव न व्यभिचार इति वाच्यम्, तन्मताश्रयणे क्षितिमात्रपक्षतायामेव स्वास्थ्यादनुगतपक्षतावच्छेदकनिरुक्तिप्रयासवैफल्यादिति दिक्। स्वसुखेति। यद्यपीष्टसाधनतानुमितेरेव हेतुत्वमन्यथाऽननुगमादिति भगवदिच्छाविषयत्वाद्विश्वस्य नेष्टसाधनतानुमितेस्तत्रासम्भावना तथापि नेष्टसाधनतानुमितित्वेन हेतुता किन्त्विष्टसाधनतज्ज्ञानत्वेनेति उपादानप्रत्यक्षस्य तत्रावश्यकतयेष्टसाधनताज्ञानमपि तदेव कल्प्यते न त्वनुमितिरूपं गौरवादिति भावः। उपादानस्येति। अत एव कृतेरपि तदुभयविषयत्वमिति भावः। साध्याभावेति। केवलान्वयी च नास्त्येवेति भावः। यत एवेति। तथा च प्रत्येकजन्यत्वमेव साध्यं समूहालम्बनरूपा चानुमितिस्त्रितयगोच-

जन्यत्वमिति न सिद्धसाधनम्। कर्तुः शरीरनियतत्वेनाध्यक्ष-बाधा(१)दिति चेन्न, बाह्याध्यक्षाणां ज्ञानादावयोग्यत्वात्। मनसः स्वात्मैकगुणग्रहणयोग्यतानियमात्, दृश्यानुपलब्धेरसिद्धेः। शरीरस्य तद्व्यापकस्यानुपलब्धेः, कर्तुरभावनिश्चय इति

---

न्यायलीलावतीकण्ठाभरणम्

क्षितौ प्रत्यक्षबाधित इत्यत आह—कर्तुरिति। अभ्युपेत्याह—नेति। शरीरान्तर्भावेण तावत् कर्त्तृत्वं नास्त्येव। तथात्वे वा ज्ञानादिसत्त्वस्यावश्यकतया परकीयस्य ज्ञानाद्यभावस्य वाह्याभ्यन्तरप्रत्यक्षागम्यत्वान्न तेन बाध इत्यर्थः। ननु यद्यपि शरीरमन्तर्भाव्य न कर्त्तृत्वं तथापि शरीरित्वं कर्त्तृत्वव्यापकं तन्निवृत्तौ कर्त्तृत्वादिनिवृत्तिरावश्यकीत्यत आह—शरीरस्येति। व्यापकनिवृत्तिर्व्याप्यनिवृत्तिं लिङ्गभावेन बो-

न्यायलीलावतीप्रकाशः

कार्यव्यतिरेकोऽत एव कार्यत्वादेकैकं सिध्यत् त्रितयमपि सिध्यति। आर्थस्तु समाजः। अत्रानुपलब्धिमात्रस्य बाधकत्वेऽतीन्द्रियोच्छेदाद् योग्यानुपलब्धिर्वाच्या सा च न प्रकृत इत्याह—वाह्येति। ननु प्रत्यक्षबाधकाभावेऽपि व्यापकाभावेन व्याप्याभावानुमानाद्बाधः स्यादित्याह—शरीरस्येति। तथाप्यधिकबलत्वाज्ज्ञाने न बाधः, किन्तु तुल्यबलत्वेन ज्ञायमानयोः सत्प्रतिपक्षत्वं स्यात्त-

न्यायलीलावतीप्रकाशविवृतिः

देति भावः। नन्वेवं कृतिजन्यत्वे साध्ये शब्दादावंशतः सिद्धसाधनम्। पक्षतावच्छेदकनानात्व एव तद्दूषणमितिमताश्रयणे च जन्यत्वमात्रस्यैव पक्षतावच्छेदकत्वापत्तिरिति।

अत्र वयम्। मिलितजन्यत्वमेव साध्यं एकैकव्यतिरेकात् कार्यव्यतिरेकश्च मिलितजन्यत्वस्य हेतुव्यापकताग्राहकः कार्यत्वादेकैकं सिध्यादित्यादेश्चैकैकं कार्यत्वव्यापकत्वज्ञानविषयीभवदिति मिलितमपि तथात्वेन विषय इत्यर्थः। 'आर्थस्तु समाज' इत्यस्यायंत्या त्रितयत्वावच्छिन्नव्यापकत्वं गृह्यत इत्यर्थ इति ब्रूमः। व्याप्तिपक्षध-

(१) ०बाधं ज्ञात०

चेन्न, व्यापकानुपलम्भस्यानुमानतया बाधमुपक्रम्य सत्प्रति-पक्षतामापादयतोऽभ्युक्तवान्तिप्रसङ्गात् । शरीरिकर्तृसाधनादभि-मतविशेषविरुद्धो हेतुरिति चेन्न, कार्यत्वस्यानुपलब्धव्यभिचा-रसाहचर्यबलेन वा विपरीतविशेषसाधकत्वं, तथाभूतविशेषप्रति-बन्धबलेन वा । नाद्यः । उत्कर्षसमत्वात् । द्वितीये तु स्वसि-द्धाविनाभावबलेन [वा] परसिद्धाविनाभावबलेन वा । नाद्यः ।

---

न्यायलीलावतीकण्ठाभरणम्

धयेत् । तथा च सत्प्रतिपक्षोऽयं न बाध इति दूषणान्तरोद्भावने निरनुयोज्यानुयोग इत्यर्थः । ननु कार्यत्वाद्धेतोः शरीर्येव कर्त्ता सिध्येत् तादृशेनैव व्याप्तिग्रहात् । तथा चाभिमताशरीरिकर्तृविरोध इत्याह—शरीरीति । साहचर्यमात्रपुरस्कारेण दृष्टान्तदृष्टशरीरिकर्तृ-त्वापादनादुत्कर्षसमा जातिरविनाभावस्य सुसिद्धत्वे क्षितिरपि त्वन्मते शरीरिकर्तृकेति तवापसिद्धान्तो वैशेषिकैश्च नैतादृशी व्या-प्तिः स्वीक्रियते कार्यत्वसकर्तृकत्वसामान्ययोरेव व्याप्तौ बाधका-भावादित्याह—कार्यत्वस्येति । ननु यद्यपि त्वया नेयं व्याप्तिरभ्युपगम्यते तथापि सहचारदर्शनव्यभिचारादर्शनबलायाता व्याप्तिरवश्यमभ्यु-

न्यायलीलावतीप्रकाशः

च्चाग्रे निरस्यमित्याह—व्यापकेति । ननु सर्वज्ञाशरीरनित्यज्ञानादिः कर्त्ता पक्षे विवक्षितः, घटादौ च कार्यत्वस्य तद्विपरीतकर्तृसहचार-दर्शनात्तादृशः साध्यः । तथा चोभयोर्विशेषयोर्विरोधो विशेषविरोध इत्याह—शरीरीति । हेतोर्विवक्षितसाध्यविपरीतसहचारमात्रान्न तत्सा-धनमनुमानमात्रोच्छेदादित्याह—उत्कर्षेति । साहचर्यमात्रपुरस्कृतग-मकत्वयोर्हेतुसाध्ययोरन्यतरेण पक्षदृष्टान्तान्यतरास्मिन्नविद्यमानध-र्मप्रसञ्जनमुत्कर्षसम इति न्यायपञ्चमाध्याये व्यक्तम् । न शरीरिकर्तृक-त्वेन कार्यत्वस्य व्याप्तिस्त्वयाभ्युपगम्यते यतो विपरीतसाधनाद्विरो-

न्यायलीलावतीप्रकाशविवृतिः

धर्मतोपनेययोः शरीरित्वाशरीरित्वयोर्विरोधमाशङ्कते—नन्वि सर्वज्ञेति ।

अपसिद्धान्तात् । नेतरः । परस्यासिद्धेः । परं प्रति साधितेन नियमेनेति चेन्न, प्रमाणेन तत्साधनेऽपसिद्धान्तात् । अप्रमाणेन साधनानुपपत्तेः । साध्यव्यापकत्वेन साधनाद्विरोध इति चेन्न, अनपेक्षितविशेषस्य शरीरित्वानियमेन तादृशसाध्ये पक्षधर्मताविरोधात् । तदविरोधस्य चानुमानाङ्गत्वात् । अन्यथा

---

न्यायलीलावतीकण्ठाभरणम्

पगन्तव्येत्यत आह—परमिति । प्रामाणिकी व्याप्तिरप्रामाणिकी वा । आद्ये तवापसिद्धान्तोऽन्त्ये किमनया व्याप्त्येत्याह—नेति । ननु कार्यत्वेन शरीरकर्त्तृत्वं मासैत्सीत् कार्यत्वासिद्धेन सकर्त्तृकत्वेनैव शरीरिकर्त्तृकत्वं साधनीयमिति शङ्कते—साध्येति । यथा कार्य्यत्वेन साध्यमानं शरीरिकर्त्तृकत्वं पक्षधर्म्मता न सहते, तथा सकर्त्तृकत्वेनापि साध्यमानं तत् पक्षधर्म्मताविरोधान्न सिद्ध्यतीति परिहरति—अनपेक्षितेति । अनपेक्षितो विशेषोऽसर्वज्ञपूर्वकत्वम् । तदविरोधस्येति । व्याप्तिपक्षधर्म्मतयोः सम्भूय कार्यजननादित्यर्थः । अन्यथेति । यदि सकर्त्तृकत्वव्यापकमसर्वज्ञपूर्वकत्वं तदा कार्य्यत्वात् स्वव्यापकव्यापकस्यासर्वज्ञपूर्वकत्वस्यैव त्वन्मतेऽपि सिद्धिः स्यादित्यर्थः । व्याप्यव्याप्यस्य सुतरां व्याप्यत्वादिति भावः । ननु व्याप्तिबलायातपक्षधर्म्मताबलायातयोर्वस्तुनोर्न विरोधं ब्रूमः, अपि तु तदुभयोपस्थाप-

न्यायलीलावतीप्रकाशः

परस्येत्यत्राऽप्यपसिद्धान्तादित्यनुषञ्जनीयम् । ननु यद्यपि कार्य्यत्वशरीरिकर्तृकत्वयोर्न व्याप्तिः, तथापि सकर्तृकत्वव्याप्यात्तात्सिद्ध्यत् स्वव्यापकं शरीरिकर्त्तृकत्वमपि साधयति । तथा च तेनाभिमतविशेषस्य विरोधः स्यादित्याह—साध्यव्यापकत्वेनेति । कार्यत्वात् सकर्तृकत्वसिद्धौ न शरीरिकर्तृकत्वमपि सिद्ध्यति तेन पक्षधर्मताया विरोधात् व्याप्तिपक्षधर्मतयोश्च सम्भूयानुमापकत्वादित्याह—अनपेक्षितेति । परस्यानपेक्षितो विशेषः कर्त्तृरूपस्तस्येत्यर्थः । ननु दर्शनबलप्रवृत्तव्याप्त्या शरीरी कर्त्तोपनेयः पक्ष-

न्यायलीलावतीप्रकाशविवृतिः

धः स्यादित्याह—अपसिद्धान्तादिति । ... नन्वित्यादि । ननु दर्शनेति । उपनेयद्वारोपनायकव्याप्तिपक्षधर्मतयोर्वि(रो?)धमाशङ्कते—ननु दर्शनेति ।

परस्य मतेऽप्यसर्वज्ञकर्तृकत्वसिद्धेर्दुर्वारत्वात् । नापि व्याप्तिपक्ष-धर्मतयोरनीश्वरेश्वरकर्तृगोचरयोर्विरोधाद्विशेषविरोधः । सामान्यव्याप्तेर्विशेषाविषयया (१)पक्षधर्मतयाऽविरोधात् । विशेषव्याप्तेश्चानुमानङ्गत्वात् ।

नाप्यर्थाक्षिप्तविशेषविरोधात्साध्यबाधो विशेषविरोधः ।

---

न्यायलीलावतीकण्ठाभरणम्

कयोर्व्याप्तिपक्षधर्म्मतयोरेव विरोधमाचक्ष्महे इत्यत आह—नापीति । भवेदेवं यदि कार्य्यत्वस्यासर्वज्ञकर्त्तृकत्वेन व्याप्तिरभ्युपगता स्यात्, किन्तु सकर्त्तृकत्वमात्रेण व्याप्तात् कार्य्यत्वाद्धेतोः पक्षधर्म्मताबलादभिमतविशेषसिद्धिरिति क्व विरोध इत्यर्थः । विशेषव्याप्तेरिति । कार्य्यत्वस्य विशेषेण शारीरिकर्त्तृकत्वेन त्वया मया वा व्याप्तिरेव नेष्यते या प्रकृतेऽनुमानाङ्गं स्यादित्यर्थः । पूर्वं शङ्कितमपि दूषणान्तराभिधानाय पुनः शङ्कते—नाप्यतीति । आक्षिप्तेन शरीरिकर्त्तृकत्वेन विरोधस्तदा स्याद्यदि पक्षे तदाक्षेपकं किञ्चिद् भवेत्तदेव तु नास्तीति परिहारार्थः ।

न्यालीलावतीप्रकाशः

धर्मतया चाशरीरी, तथा चोपनेयविशेषयोर्विरोधेनान्योन्यसहकारिभावविरहान्नानुमानमित्याशङ्क्य निराकरोति—नापीति । शरीरिकर्तृजन्यत्वेन व्याप्त्यभावात् कर्तृजन्यत्वव्याप्तेश्च पक्षधर्मताबललभ्यविशेषाविरोधादित्यर्थः । केवलव्याप्तिपक्षधर्मतयोश्च न पृथगुपनायकत्वमेकैकवैयर्थ्यापत्तेः । तथा च निरपेक्षतादशायां विशेषानुपस्थानादेव न विरोधज्ञानं सापेक्षतादशायां च सहोपलम्भनियमादेवेति भावः । नाप्यर्थाक्षिप्तेति । अर्थाक्षिप्तो विशेषः शरीरित्वादिस्तेन साध्यस्य पक्षधर्मताबललभ्यविशेषस्य शरीरत्वस्य बाध इत्यर्थः । पूर्वं साध्यव्यापकत्वेनेत्यत्र कार्यत्वेन सकर्तृकत्वं सिध्यत् कर्तुः शरीरित्वमादायैव सिध्यतीत्युक्तम् । अधुना सिद्धेन सकर्तृकत्वेन साध्ये कर्त्तरि शरीरित्वं साधनीयमित्यपौनरुक्त्यम् । 'साध्ये' पक्ष इत्यर्थः ।

---

(१) विशेषविषयतयाप० ।

केन पुनः साध्ये शरीरादिमत्कर्त्तृकत्वमाक्षिप्तम्। कर्त्तृमत्त्वे-नेति चेत्, अप्रतीतेन प्रतीतेन वा। नाद्यः। अप्रतीतस्यानाक्षेपकत्वात्। प्रतीतेस्तु साधनस्य निर्दोषत्वमन्तरेणानुपपत्तेः। पराभ्युपगमसिद्धेन तदाक्षिप्तमिति चेन्न, तस्य व्यापकानुपलम्भस्वभावत्वेन सत्प्रतिपक्षनिक्षेपात्। ननु दृश्येन कर्त्रा व्याप्तिर्गृह्यते दृश्यादृश्यसाधारणेन वा। नाद्यः। विटपादीनां(१) व्यभिचारात्। नेतरः, तथाभूतस्य व्यतिरेकग्रहे प्रत्यक्षस्यासा-

---

न्यायलीलावतीकण्ठाभरणम्

तदेव विवेचयति—केनेति। सिद्धं सकर्त्तृकत्वमाक्षेपकं वाच्यं तत्-सिद्धिस्तु कार्य्यत्वादेव हेतोरिति सिद्धं नः समीहितमित्यर्थः। पूर्वं शरीरिकर्त्तृकत्वस्य पक्षधर्म्मताबललभ्यत्वमिदानीमाक्षेपलभ्यत्वं पुर-स्कृत्येत्यपौनरुक्त्यमित्यप्याहुः। परेति। त्वत्सिद्धेनेत्यर्थः। कर्त्ता शरी-र्य्येव पक्षे च तादृशो नास्तीति कर्त्तापि न स्यादिति व्यापकानुपल-ब्धिर्विरोधमेव विशेषविरोधं ब्रूम इति शङ्कार्थः। नायं विरोधोऽपि तु सत्प्रतिपक्ष एव। तथा हि क्षितिर्न सकर्त्तृका शरीराजन्यत्वादिति। स चाग्रे निरसनीय इत्याह—तस्येति। विटपादाविति। अङ्कुरादौ कार्य्ये सा-ध्यस्याभावान्न हि तत्र दृश्यः कर्त्तेत्यर्थः। तथाभूतस्येति। अयोग्यस्य साध्यस्य व्यतिरेकात् कार्य्यत्वव्यतिरेकः कुत्र सिद्धो येनान्वयव्यति-रेक्यनुमानं स्यादित्यर्थः। आकाशादावुपादानाभावादुपादानाभि-ज्ञव्यतिरेकः कार्य्यत्वव्यतिरेकश्च सुग्रह इति चेत्, न, निरुपादा-

न्यालालीवतीप्रकाशः

तस्येति। आक्षिप्तशरीरिकर्तृबाधरूपस्य विशेषविरोधस्येत्यर्थः। तथापि कर्तृत्वाशरीरित्वयोर्विरोधेनैकधर्म्यसमावेशात् कथमशरी-रिकर्तृसिद्धिः। मैवम्। उपसंहारस्थानस्यैकस्याभावात् स्वाश्रय-स्थितयोश्च विरोधे उभयोरुच्छेदापत्तेः। भावे वा धर्मिग्राहकमानेन तयोर्विरोधापहारादिति(२) भावः। तथाभूतस्येति। हेत्वभावे सा-ध्याभावव्यापकत्वस्य प्रत्यक्षेणायोग्यत्वादग्रहेऽन्वयव्यतिरेकीदमनु

---

(१) विटपादाविति कण्ठाभरणसम्मतः पाठः। विटपादिनेत्यपि पाठः। (२) ०धाभावादि०।

मर्थ्यात् । सामर्थ्ये वा विटपादिना व्यभिचारात् । किं च साधारेणनापि [ रूपेण ] व्याप्तिं गृह्णदध्यक्षं देशकालव्यवधानादृदृश्यमेव विषयीकरोति न स्वरूपादृश्यं, स्वरूपादृश्ये प्रत्यक्षस्यासामर्थ्यात्, सामर्थ्ये तु धूमस्यापि जठर्यसाधारणकृशानुजातीयमात्रेण व्याप्तिः स्यात् । उच्यते । कार्यत्वसकर्तृकत्वयोरनुपाधिनाऽ-

---

न्यायलीलावतीकण्ठाभरणम्

नत्वस्योपाधित्वात् । न च साधनव्यापकता क्षित्यादावेव साधनाव्यापकतासन्देहात् मैत्रतनयत्वस्येव सोपाधित्वसम्भवात् । सामर्थ्ये वेति । विटपादावदृश्योऽपि कर्त्ता प्रत्यक्षेनोपलभ्येत न चोपलभ्यतेऽतो व्यभिचार इत्यर्थः । ननु सामान्ययोरेव व्याप्तिर्न तु विशिष्य योग्ययोरित्यत आह— किं चेति । 'स्वरूपादृश्य'मतीन्द्रियम् । ननु कुत एवमित्यत आह–स्वरूपेति । व्याप्तिः स्यादिति । प्रत्यक्षगम्येति शेषः । कार्यत्वेति । दृश्यद्वयं व्याप्तिग्रहस्थानं तदुपष्टम्भेनादृश्ययोरपि सामा-

न्यायलीलावतीप्रकाशः

मानं न स्यादित्यर्थः । न च व्योमादावुपादानाभावादेवोपादानगोचरज्ञा(ना?)दिजन्यत्वाभावे ज्ञाते कार्यत्वाभावस्य व्यापकत्वं ज्ञायतामिति वाच्यम्, निरुपादानत्वस्योपाधित्वात् । न च साधनव्यापकत्वादयमनुपाधिः क्षित्यादावुपादानगोचरज्ञानादिजन्यत्वसन्देहेन सन्दिग्धसाधनाव्यापकत्वात् तादृशस्योपाधेर्मैत्रतनयत्वादौ दूषणत्वात् । वस्तुतो नित्यज्ञानादिमतोऽन्वयोऽपि न गृह्यत इति मन्तव्यम् । सामर्थ्ये त्विति । यत्र धूमात् प्रत्यक्षवह्निस्तत्राप्रत्यक्षोऽपि सिद्ध्येत् ।

न्यायलीलावतीप्रकाशविवृतिः

न च साधनेति । साधनमत्र व्यतिरेकव्याप्तौ व्याप्यं उपादानगोचरज्ञानादिजन्यत्वाभावरूपम् । मैत्रतनयत्वादाविति । यद्यपि तत्र साधननिश्चय उपाधिसन्देहोऽत्र तूपाधिव्यतिरेकनिश्चये साधनसन्देह इति वैषम्यम्, तथापि साधनव्यापकतासन्देहो विशिष्ट एवेति भावः । ननु मैत्रतनयत्वादौ विपक्षबाधकाभावादस्तूपाधिसन्देह इह त्वन्वयव्याप्तिरन्वयव्यतिरेकव्यभिचारशङ्कानिवर्तकानुमानतर्करूपस्वान्न तथेत्यरुचेराह—वस्तुत इति । ज्ञानादिमत इति मतान्तरमाश्रित्य । वस्तुतो

न्वयेन प्रतिबन्धावधारणात्, कार्यकारण[भाव]योरिव । अन्यथा कार्य्यमात्रस्य कारणमात्रेण प्रतिबन्धावधारणेऽपि परोदीरितदूषणकलापः सम्भवत्येव । कार्यस्याहेतुकत्वे कादाचित्कत्वं न स्यादिति विपक्षे बाधकात्तत्र प्रतिबन्धग्रहो न त्वन्वयव्यतिरेकाभ्या-

न्यायलीलावतीकण्ठाभरणम्

न्यलक्षणाप्रत्यासत्त्या व्याप्तिर्ग्रहीतुं शक्यैवेत्यर्थः । अन्यथा तवापि कार्य्यत्वसहेतुकत्वयोर्व्याप्तिर्न गृह्येतेत्याह—कार्यमात्रस्येति । ननु कार्य्यत्वसहेतुकत्वयोरन्वयव्यतिरेकाभ्यामेव व्याप्तिग्रहं न ब्रूमः, अपि तु विपक्षबाधकसहकृताभ्याम्, प्रकृते तु विपक्षबाधकं नास्तीत्याह—कार्य्यस्येति । न त्वन्वयव्यतिरेकाभ्यामिति । केवलाभ्यामिति शेषः ।

न्यालीलावतीप्रकाशः

तथा च योग्यायोग्यवह्निसंशये योग्यवह्न्यर्थी निःशङ्को न प्रवर्त्तेतेत्यर्थः । अनुपाधिनेति । ननु योग्योपाधेर्योग्यानुपलम्भेनाभावनिश्चयेऽप्ययोग्योपाधेरभावः कुतो ग्राह्यः । न च साध्यव्यापकस्य साधनाव्यापकत्वसाधनात् साधनाव्यापकस्य साध्याव्यापकत्वसाधनाद्ग्राह्यः। अनुमानेन तत्साधने तत्राप्ययोग्योपाधिशङ्काग्रासादनवस्थानात् । अत्राहुः । ज्ञानादिविशेषकार्यविशेषयोरन्वयव्यतिरेकग्रहो बाधकं विना ज्ञानादिमात्रकार्यमात्रयोर्व्याप्तिग्राहकः न तु पक्षधर्मताबललभ्यविशेषान्वयव्यतिरेकग्रहोऽनुमानमात्रोच्छेदात् पर्वतीयवह्नेरन्वयव्यतिरेकाग्रहात्। न चान्याऽन्वयव्यतिरेकग्रहादन्यव्याप्तिग्रहेऽतिप्रसङ्गः, यद्विशेषयोरन्वयादिग्रहस्तत्सामान्ययोर्बाधकं विना व्याप्तिग्रहात् । कार्यकारणयोरिवेति । दृश्यादृश्यौदासीन्येनेत्यर्थः । कार्यमात्रस्येति ।

न्यायलीलावतीप्रकाशविवृतिः

यत्रैव 'यज्जातीये' । 'तत्रैव' तज्जातीये । ज्ञानादीति । येन रूपेणोपस्थितयोर्ययोरन्वयव्यतिरेकग्रहो बाधकं विना तदवच्छेदेन कार्यत्वकारणत्वयोर्ग्रहात । न चादृश्यवह्निसिद्धिप्रसङ्गः । तत्र ततो धूमानुत्पत्तेर्वह्निविशेषत्वेनैव हेतुत्वग्रहादिति प्रघट्टकार्थः । न त्विति । न तु (१)भाज्ञानादेरित्यत्र तात्पर्यम् । तथा चान्वयव्याप्तिरप्यसिद्धैवेति भावः ।

(१) नत्वभावप्र० ।

मिति चेन्न, अहेतुकत्वस्याकादाचित्कत्वेन प्रतिबन्धासिद्धेः। व्यभिचारानुपलम्भेन तत्सिद्धिरिति चेत्, न।

सर्वादृष्टेश्च सन्देहात्स्वादृष्टेर्व्यभिचारतः।
योग्यादृष्टेरसद्भावात्(१) प्रतिबन्धो न सिद्ध्यति ॥

---

न्यायलीलावतीकण्ठाभरणम्

विपक्षबाधकतर्कमूलभूतव्याप्तावपि विपक्षबाधकं किमपि नास्तीत्याह—अहेतुकत्वस्येति। तथा च न विपक्षबाधकतर्कापेक्षावश्यकी किन्त्वन्वयव्यतिरेकाव्यभिचारमात्रेण तद्ग्रह इति भावः। नन्वाकाशादावहेतुके दृष्टं सर्वत्राकादाचित्कत्वं सहेतुके तु न दृष्टमिति प्रतिबन्धसिद्धिरित्याह—व्यभिचारेति। व्यभिचारानुपलम्भो न सर्वेषां प्रमितो यदि केनचिदिह व्यभिचार एवोपलब्धः स्यात् पार्थिवत्वलौहलेख्यत्वयोरिवेत्याह—सर्वेति। ननु मया व्यभिचारो नोपलभ्यते एतावतैव तयोर्व्याप्तिः स्यादित्यत आह—स्वादृष्टेरिति। रासभधूमयोरेकस्य व्यभिचारानुपलम्भेऽपि व्याप्त्यसिद्धेरित्यर्थः। ननु व्यभिचारानुपलम्भः स्वरूपसन्नेवाव्यभिचारग्राहकस्तथा च चक्षुरादिवत् किमस्य व्यभिचारेणेत्यत आह—योग्येति। न हि परमा-

न्यायलीलावतीप्रकाशः

तथा च कारणत्वेनादृश्यः परमाण्वादिर्न सिद्ध्येदित्यर्थः।

सर्वादृष्टेरिति। न ह्यनुपलम्भः स्वरूपसन्नेव गमको न तु निश्चितः। तथा च चक्षुरादिवदस्य व्यभिचारेऽपि न दोष इति वाच्यम्, व्याप्यत्वेनानुपलम्भस्यात्र गमकत्वान्न तु व्यापकानुपलम्भस्य, देशकालव्यवधानेन योग्यानुपलब्धेरभावात्। अनुपलब्ध्यन्तरस्य चागमकत्वात्। तस्य स्वा-

न्यायलीलावतीप्रकाशविवृतिः

वप्रत्यक्षव्यापकस्य योग्यानुपलम्भस्येत्यर्थः। यथाश्रुते निषेध्यव्यापकस्य योऽनुपलम्भस्तस्येत्यर्थे न त्विति विरोधापत्तेः। तस्य व्याप्यतयैव गमकत्वात् देशकालेत्यादिविरोधापत्तेः। तस्येति। 'तस्य' व्याप्यत्वेनाभिमतस्य। स्वानुपलम्भस्य व्यभिचारो दोष एवेति शेषः।

---

(१) रसत्त्वाच्च प्रति०।

विपर्यये बाधकात्प्रतिबन्धनिश्चय इति चेन्न, अहेतुकस्य कादाचित्कत्वे बाधकाभावात्। शशविषाणमहेतुकं कादाचित्कं स्यादिति विपक्षे बाधकमिति चेन्न, सद्विशेषस्याहेतुकस्य कादाचित्कत्वं भविष्यतीति शङ्कायास्त्वनिराकरणात्। यथा च सहेतुकत्वाविशेषे[अपि] कस्यचित्प्रतीतिरूपत्वमप्रतीतिरूपत्वं च कस्यचित्तथाऽहेतुकत्वेऽपि [कस्यचित्] कादाचित्कत्वमकादाचित्कत्वं च कस्यचिद्भविष्यतीति। तथा च क्षित्यादिकं सकलहेतुरहितमेवास्तु। न चानौपाधिकत्वमसिद्धम्, न तावद्व्यक्ति-

न्यायलीलावतीकण्ठाभरणम्

त्वादिगतमहेतुकत्वमकादाचित्कत्वं च योग्यं येन तदेकतरात्यन्ताभावसामानाधिकरण्यमन्यतरस्य व्यभिचारो योग्यः स्यादित्यर्थः। नन्वहेतुकत्वाकादाचित्क[त्व?]योरपि व्याप्तिग्रहे किञ्चिद्विपक्षबाधकं भविष्यतीत्याह—विपर्य्यय इति। [अहेतुकमपि कादाचित्कं स्यादित्यत्र विपक्षे बाधकं नास्तीत्याह—नेति। क्वचित् पाठः।] अहेतुकत्वाकादाचित्कत्वयोरपि व्याप्तिग्रहे न विपक्षे बाधकमस्तीत्याह—नेति। असदहेतुकं कादाचित्कं स्यादिति विपक्षबाधकं शङ्कते—शशेति। सत्त्वे सत्यहेतुकत्वस्य न कादाचित्कत्वव्याप्तौ विपक्षबाधकमित्याह—नेति। सहेतुकत्वाविशेषेऽपि ज्ञानाज्ञानरूपद्वैराश्यवदहेतुकत्वेऽपि कादाचित्कत्वाकादाचित्कत्वरूपद्वैराश्यं स्यादिति विकल्पसमाजात्या त्वमिवाऽहमपि प्रत्यवस्थातुं शक्य एवेत्याह—तथा चेति। अन्वयव्यतिरेकोपलम्भे योग्यायोग्योपाधिनिरासे च नावश्यमेवानुकूलतर्कापेक्षा, तदपेक्षायां वा कारणान्तरवत् कर्त्तुरपि कारणत्वेनावश्यापेक्षा तदभावे कार्य्याभाव एव। तदुक्तम्(१)—"अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषण"मिति भावः। ननूपाधिनिरासे सत्येवं स्यादपि न तु प्रकृते तदभाव इत्याशङ्क्याह—न चेति। कार्य्यत्वेन सकर्त्तृकत्वे साध्ये न तावदेतद्घटत्वमुपाधिः घटान्तरे साध्याव्या-

न्यायलीलावतीप्रकाशः

नुपलम्भस्य व्यभिचारः सर्वानुपलम्भस्य चासिद्धिरित्यर्थः। विपर्यय

(१) कुसुमाञ्जलौ, ५।२

भेदा उपाधयः सामान्यव्याप्त्युच्छेदप्रसङ्गात् । न चावान्तरजातिभेदा घटत्वादय उपाधयः । तेषां परस्परव्यभिचारित्वात् व्यक्तिभेदवत् । नाऽप्यतीन्द्रियो विशेषः । कार्यविशेषात्कारणविशेषानुमानोच्छेदप्रसङ्गात, धूमे[ना]ऽपि दहनानुमाने तथाभूतोपाधिशङ्काया अनिवारणात् । न च शरीरिकार्यत्वमुपाधिः । उभयोरनुपलभ्यमानव्यभिचारयोः समानयोगक्षेमत्वेनोपाध्युपाधि-

---

न्यायलीलावतीकण्ठाभरणम्

पकत्वात् । नापि घटत्वं पटादौ साध्याव्यापकत्वात् । अतीन्द्रियोपाधिशङ्कायां सकलानुमानोच्छेद इत्यर्थः । ननु शरीरिकार्य्यत्वं साध्यव्यापकं पक्ष एव साधनाव्यापकमिति स एवोपाधिः स्यादित्याशङ्क्याह—न चेति । साध्याव्यापकाव्याप्यत्वेन हेतोः साध्याव्याप्यत्वं यथा त्वदभिमतं तथा साध्यव्याप्याव्यापकत्वेनोपाधेरेव साध्याव्यापकत्वं कथं न स्यात् व्याप्तिग्राहकस्योभयत्रापि तुल्यत्वात् । न चैवं सन्दिग्धोपाधिः स्यात् हेतोः साध्यव्याप्यताया एव विपक्षबाधकतर्केण परिच्छिन्नत्वादित्यर्थः । नन्वेवं मित्रातनयत्वस्य श्यामत्वे साध्ये शाकाद्याहारपरिणाम उपाधिर्न स्यात् तुल्ययोगक्षेमत्वादित्याशङ्क्याह—न चेति । वैद्यकादौ पैत्तिकमनुजश्यामत्वं प्रति शाकपाकजन्यत्वस्य व्यापकत्वेन परिच्छिन्नत्वात् न तुल्ययोगक्षेमत्वावकाश

न्यायलीलावतीप्रकाशः

इति । अहेतुकस्य कादाचित्कतापत्तेरित्यर्थः । सामान्यव्याप्तीति । धूमस्यापि वह्निना व्याप्तौ धूमविशेष एवोपाधिः स्यादिति न धूमसामान्यमग्निं गमयेदित्यर्थः । परस्परेति । साध्याव्यापकत्वादित्यर्थः । नाप्यतीन्द्रिय इति । साध्यव्याप्यताप्रयोजकः साधननिष्ठ इत्यर्थः । उभयोरिति । यद्यप्युभयोः साध्योपाध्योर्व्यभिचारानुपलम्भेऽपि साधनस्य

न्यायलीलावतीप्रकाशविवृतिः

अहेतुकस्येति । भावस्येति शेषः । उभयोरिति सप्तमी । साधनसाध्ययोरित्यर्थः । साध्योपाध्योरिति षष्ठी । तेन साधने साध्यव्यभिचारानुपलम्भे साध्ये चोपाधिव्यभिचारानुपलम्भेऽपीत्यर्थः । साधन-

न्यायलीलावतीप्रकाशः

सोपाधित्वात् उपाधेश्च निरुपाधित्वान्न तुल्ययोगक्षेमत्वं तथापि यथा साध्यव्यापकाव्याप्यत्वेन साधनस्य साध्याव्याप्यत्वं तथा साध्यव्याप्यसाधनाव्यापकत्वेनोपाधेरपि साध्याव्यापकत्वमिति तुल्ययोःगक्षेमत्वार्थः। ननु साध्यव्यापकताग्राहकमानाभावस्तथाविधस्यानुपाधित्वे बीजम्। न च प्रकृते तथा, शरीरसहकृतस्यैव कर्तुः कारणत्वावधारणात्। न हि शरीरविनाकृतः कर्त्ता शरीरक्रियां घटादिकं वा जनयतीत्यर्थाच्छरीरजन्यमेव कर्तृजन्यमिति साध्यव्यापकतानिश्चयात्। अत एव जलस्य रसवत्त्वेन गन्धवत्त्वानुमाने पृथिवीत्वमुपाधिः। अत एव पक्षेतरत्ववत् पक्षमात्रव्यावर्त्तकधर्मवत्त्वात् साधनविशेषितत्वाच्च तन्नोपाधिरित्यपास्तं तयोरप्यनुपाधित्वे साध्यव्यापकताग्राहकमानाभावस्य बीजत्वात्तस्य चाभावादित्युक्तम्। अत एव बाधोन्नीतं पक्षेतरत्वं वह्निमत्त्वेन धूमवत्त्वे साध्ये आर्द्रेन्धनप्रभववह्निमत्त्वं भवत्युपाधिः, विपक्षे बाधकेन तयोः साध्यव्यापकताग्रहात्। मैवम्। कर्त्तुर्हि शरीरसहकारिता किं घटादौ कर्त्तव्ये कार्यमात्रे वा। आद्ये घटादौ तथात्वेऽपि शरीरविनाकृतस्य कार्यमात्रकरणेन विरोधः। द्वितीये तु स्वतोऽसिद्धिः कार्यमात्रस्य त्वया कर्तृजन्यतानङ्गीकारात्। तृतीये त्वात्माश्रयः स्वजन्यत्वस्यैव स्वजन्यतावच्छेदकात्। अथैवं साध्यव्यापकत्वानिश्चयेन सन्दिग्धोपाधिः स्यात्। न च साध्यव्यापकतासन्देहो न दूषणम्, अन्यथा पक्षेतरत्वोपाधिनाऽनुमानमात्रोच्छेदापत्तेरिति वाच्यम्, विशिष्टसंशयस्य व्याप्यतासंशयाधायकस्य सा-

न्यायलीलावतीप्रकाशविवृतिः

साध्ययोरिति क्वचित्पाठः। तत्र तयोरिति षष्ठी। साध्योपाध्योरित्यर्थः। साधनसाध्ययोरिति सप्तमी। तथा च पूर्वक एवार्थः। उपाधेश्च निरुपाधित्वादिति। यद्यपि साध्यस्येति युज्यते तथापि व्याप्यवद्व्यापकमपि सोपाधिव्याप्तेरुभयप्रतियोगिकत्वादित्याशयेनैतदुक्तम्। न चोपाधावपि शरीरिकर्तृकाधिकरणमसमवेतत्वमुपाधिरिति वाच्यम्, अवयवस्य मृदादेः शरीरिकर्तृकत्वाभावेऽपि तत्समवेतावयविनः कदाचिच्छरीरिकर्तृकत्वाभावेन साध्याव्यापकत्वादिति भावः। यद्यपि साध्यव्यापकताग्राहकतर्काभावात् साधनेऽपि नोपाधिनिश्चयस्तथापि सत्संशयोऽप्यस्तीति भावः। तथापीति। यदि चानुकूलतर्काभावान्न

न्यायलीलावतीप्रकाशः

धनाव्यापकत्वसंशयवत् साध्यव्यापकतासन्देहेऽप्यविशेषात् पक्षेतर-
त्वोपाधेश्च निराकरिष्यमाणत्वात् । मैवम् । कर्तृजन्यत्वे लाघवात्
जन्यत्वस्यैवावच्छेदकत्वात् न तु शरीरजन्यत्वस्य । तथा च शरीरज-
न्यत्वं न सकर्तृकत्वव्यापकं घटे त्वार्थः समाजो घटत्वेन शरीरजन्य-
त्वनियमात् । तस्मात् शरीरजन्यत्वं न सकर्तृकत्वव्यापकं तद्व्या-
प्यजन्यत्वाव्यापकत्वात् नित्यत्ववत् । वस्तुतो हस्तादिजन्ये साध्या-
व्यापकत्वं साक्षात्प्रयत्नाधिष्ठेयजन्यत्वस्य च विवक्षितत्वे साधन-
व्यापकत्वम्, अदृष्टद्वारा शरीरजन्यत्वं क्षित्यादावपीत्यतोऽपि साध-
नव्यापकत्वमिति सङ्क्षेपः ।

नन्वेवं मैत्रतनयत्वेन श्यामत्वे साध्ये श्यामसामग्र्यपि नोपाधिः

न्यायलीलावतीप्रकाशविवृतिः

साधनस्य साध्यव्याप्यत्वं तत्र तत एवोपाधेरपि न साध्यव्यापक-
त्वमिति भावः । पक्षेतरत्वोपाधेश्चेति । स्वव्याघातकत्वेनेति शेषः । न त्वि-
ति । ननु शरीरजन्यत्वं कर्तृजन्यतावच्छेदकमिति न ब्रूमो येनोक्तं
गौरवं स्यात्तथा सति कर्तृजन्यत्वव्याप्यत्वप्रतीतावप्युपाधिताप्र-
योजकतद्व्यापकत्वाप्रतीतेः । किन्तु शरीरजन्यतावच्छेदकमेव कर्तृ-
जन्यत्वमिति । न चैवमपि गौरवं भवति एवं शरीरजन्यत्वं सकर्तृक-
त्वव्यापकमिति चेत्, न प्रतीते कर्तृजन्यत्वे तदवच्छेदकत्वग्रहात्
तत्प्रतीतौ च कार्यत्वस्य कर्तृजन्यतावच्छेदकत्वग्रहात्तद्विरोधिकल्प-
नान्तरानुदयात् तस्योपजीव्यत्वात् । न च कर्तृजन्यत्वग्रहमात्रमुप-
जीव्यं न तु कार्यत्वस्यावच्छेदकग्रहोऽपि घटत्वावच्छेदेनापि कर्तृज-
न्यत्वग्रहे तस्य शरीरजन्यतावच्छेदकत्वग्रहादिति वाच्यम्, घटत्वा-
वच्छेदेन तद्ग्रहे तस्य घटत्ववच्छरीजन्यतावच्छेदकत्वाग्रहात् शरी-
रजन्यत्वस्य कर्तृजन्यत्वस्य च घटादिवृत्तित्वग्रहदशायामेव कर्तृ-
जन्यत्वावच्छेदकत्वग्रहशङ्का । अन्यथा लाघवेन घटत्वस्यैवावच्छे-
दकग्रहात् । न च तस्यां दशायां घटत्वावच्छेदेन कर्तृजन्यत्वग्रहो
नानात्वगौरवादिति कार्यत्वेनैव तद्ग्रह इति भवत्युपजीव्यविरोध
इति दिक् ।

नन्वदृष्टाद्वारकचेष्टाश्रयजन्यत्वमुपाधिरिति न हस्तादिजन्ये सा-
ध्याव्यापकता न वा साधनव्यापकतेत्यत आह—संक्षेप इति । उक्त-

सद्भावासिद्धेः। न च मैत्र(१) तनयत्वश्यामतासाहचर्येऽप्येष न्यायः तत्रोपाधिसाधनस्य(२)न्यायस्यावश्यं व्यञ्जनीयत्वात्। धूमे तु न जठरसाधारणदहनानुमानं, तेजोमात्रस्य धूमोत्पत्तौ व्यभिचारात्। दाहकस्पर्शाधिष्ठानस्यैव तेजसो धूमजनकत्वनियमात्।

कर्मनिर्मितवैचित्र्यं यदि विश्वमनीश्वरम्।
अस्त्वनिर्मितवैचित्र्यं जगदेतदहेतुकम्॥

---

न्यायलीलावतीकण्ठाभरणम्

इत्यर्थः। उपाधिप्रसाधकस्येति। उपाधेः साध्यव्यापकत्वग्राहकस्येत्यर्थः। 'व्यञ्जनीयत्वात्' उद्भावनीयत्वात्। अन्यथा तुल्ययोगक्षेमत्वं तत्रापि स्यादिति भावः। नन्वेवं तत्र कथं सन्दिग्धोपाधिप्रवादः साधनाव्यापकतासन्देहादिति गृहाण। न हि मैत्रतनयं व्याप्य श्यामसामग्री (व्या?) स्थातव्यमित्यस्ति नियमः। दृश्यादृश्यसाधारण्येन व्याप्तौ धूमाज्जाठरमपि सिध्येदित्याह—धूमे त्विति। वह्निधूमयोः कार्य्यकारणभावलक्षणैव व्याप्तिः। कारणं च धूमस्योद्भूतस्योद्भूतस्पर्शाश्रयो वह्निर्न तु तेजोमात्रमित्यर्थः।

विश्ववैचित्र्यानुरोधेन चेदीश्वरः स्वीक्रियते तदाऽदृष्टाधीनमेव वैचित्र्यमास्तां किमीश्वरेण। न हीश्वरोऽप्यदृष्टमनपेक्ष्य जनयितुमीष्टे इति मतमास्कन्दति—कर्म्मेति। एवं सत्यदृष्टमपि नेष्यतामहेतुकमेव जगदस्तु। तर्हि वैचित्र्यं न स्यादित्याशङ्क्याह—अनिर्म्मितवैचित्र्यमिति।

न्यायलीलावतीप्रकाशः

स्यात्तुल्ययोगक्षेमत्वादित्यत आह—न चेति। तत्र साध्यव्यापकत्वग्राहकस्य कार्यकारणभावस्य सत्वात्। मैत्रतनयत्वं व्याप्य श्यामसामग्र्या स्थातव्यमित्यत्र च नियामकस्याभावादित्यर्थः। ननु कार्यत्वाददृश्यकर्तृसिद्धिवद्धूमाददृश्यवह्निसिद्धिरपि स्यादित्यत आह—धूमे त्विति। अदृश्याद्वह्नेर्धूमानुत्पत्तेर्दृश्यस्यैव तत्र हेतुत्वादित्यर्थः। यस्त्वनौपाधिकत्वे सत्यपि न व्याप्तिः किन्त्वकर्तृकमेव कार्यजातं वैचित्र्यं च कर्मनिर्मितमेवेति मन्यते तं प्रत्याह—कर्मनिर्मितेति। कर्तृ-

---

(१) मित्रात०। मैत्रात०। (२) तत्रोपाधिप्रसाधकस्येति कण्ठाभरणसम्मतः पाठः।

कर्तृव्यापकशरीरानुपलम्भेन सत्प्रतिपक्षत्वमाशिंघति चेन्न, ईश्वरमधिकृत्याश्रयासिद्धेः। क्षित्यादिकमधिकृत्य सिद्धसाधनात्। शरीरिकर्तृकत्वव्यापकानुपलम्भेन सकर्तृकत्वं निवर्तत इति चेन्न, सकर्तृकत्वं [शरीरकर्तृत्वं] शरीरिकर्तृ[क]त्वाद्भेदेन प्रतीतं न वा। न चेद्व्याप्यव्यापकयोरप्रतीतौ व्याप्तेरसिद्धिः (१)।

---

न्यायलीलावतीकण्ठाभरणम्

वैचित्र्यमपि जगतो न स्यादित्यर्थः। एवं सति दृष्टविरोध इति चेत्तर्हि कर्त्तारमन्तरेण कार्य्याभ्युपगमे न कथं दृष्टविरोध एवेति भावः। ईश्वरेति। ईश्वरो न कर्त्ता अशरीरित्वादित्याश्रयासिद्धं क्षितिर्न कर्त्री अशरीरित्वादिति सिद्धसाधनमित्यर्थः। शरीरि(री?)ति। शरीरिकर्त्तृकत्वं यद्व्यापकं तदनुपलम्भेन क्षित्यादेः सकर्त्तृकत्वं व्यावर्त्ततामित्यर्थः। भेदेनेति। अन्योऽन्याभाववत्तयेत्यर्थः। न चेदिति। शरीरिकर्त्तृकत्वभिन्नं सकर्त्तृकत्वं यदि न गृहीतं तदा व्याप्यासिद्धा न व्याप्तिसि-

न्यायलीलावतीप्रकाशः

रपि कारणत्वादितरकारणस्येव तस्यापि सिद्धिरिति भावः। ईश्वरमिति। ईश्वरो न कर्ता अशरीरित्वादित्याश्रयासिद्धमित्यर्थः। क्षित्यादिकमिति। क्षित्यादिकं कर्त्तृ नेति साध्य इत्यर्थः। ननु सकर्तृकत्वव्यापकं शरीरिकर्तृकत्वं क्षित्यादौ व्यावर्त्तमानं सकर्तृकत्वमपि व्यावर्तयतीत्याह—शरीरीति। एतेन शरीरिकर्तृकत्वमप्युपाधिरुक्तः। भेदेनेति। भिन्नाश्रयत्वेनेत्यर्थः। अप्रतीताविति। आश्रयभेदेनेत्यर्थः। तथा

न्यायलीलावतीप्रकाशविवृतिः

विपक्षबाधकेन हेतोः साध्यव्याप्यत्वे तद्व्यापकतयोपाधेः साध्याव्यापकत्वमिति भावः। स्वरूपमात्रेण प्रतीतिमात्रे व्यभिचार इत्यग्रिमग्रन्थसङ्गत्यर्थमाह—भिन्नाश्रयत्वेनेति। व्याप्यस्य व्यापकेन समानाश्रयभेदेनाप्रतीतिर्न व्याप्त्यसिद्धिप्रयोजिका, किन्तु व्यभिचाराज्ञानरूपतया व्याप्तिसिद्धावेव प्रयोजिका रूपरसयोरिवेत्यत आह—तथा चेति। ननूक्तः संशयो ग्राह्यसंशयपर्यवसन्नतया न प्रतिबन्धक

---

(१) सिद्धेः।

प्रतीतं चेदशरीरि(१)कर्तृकत्वसिद्धौ व्यभिचारः। प्रतीतं शरीरविशेषणानवच्छिन्नत्वेन व्याप्यं, शरीरविशेषणावच्छिन्नत्वेन च प्रतीतं व्यापकमिति चेन्न, विरोधात्। यदि हि विशेषणावच्छिन्नं तत्प्रथते कुतः केवलस्यावभासः। केवलं चेत्प्रथते कुतस्तदेव(२) विशिष्टावभासः। सकर्तृकत्वस्य च शरीरेण व्याप्तिर्गृह्यते शरीरविशिष्टेन वा। नाद्यः। असम्भवात्। न हि सकर्तृकत्वं शरीरमिति व्याप्तिप्रतीतिः। विशिष्टेनापि किं सकर्तृकत्वेन तदन्येन (३) वा। नान्येन। तदनुपन्यासात्। नापि

---

न्यायलीलावतीकण्ठाभरणम्

द्धिरित्यर्थः। प्रतीतमिति। यत्र शरीरिकर्तृकत्वं नास्ति तत्र चेत् सकर्तृकत्वं प्रतीयेत तदा शरीरिकर्तृकादन्यत् सकर्तृकमिति स्यात्तथा च व्यभिचार इत्यर्थः। ननु विशेष्यस्याभेदेऽपि विशेषणानवच्छेदविशेषणावच्छेदाभ्यामुभयोर्भेदः स्यादिति शङ्कते--प्रतीतमिति। उभयोरेकत्रुद्ध्यारोहे व्याप्तिर्गृह्यते न चैतदस्ति विशिष्टग्रहकाले केवलस्याग्रहात् केवलग्रहकाले विशिष्टस्याग्रहादिति परिहरति—यदीति। वस्तुतो व्यभिचारावारकविशेषणवत्त्वमेवात्र अन्यथा यत्समवेतं तज्जातिमत्समवेतमित्यादावपि व्याप्तिग्रहो न स्यात्। न च यत्समवेतं तज्जातिसमानाधिकरणमेवेति तत्र व्याप्तिग्रहप्रकार इति वाच्यम्, उपाधिभेदेन कृतकत्वानित्यत्ववद्व्याप्तिग्रहाविरोधात्। यत् सकर्तृकं तत् शरीरकर्तृकमिति इमामेव प्रकारान्तरेण व्याप्तिं खण्डयति--सकर्तृकत्वस्येति। न हीति। यत् सकर्तृकं तत् शरीरमिति न व्याप्ति-

न्यायलीलावतीप्रकाशः

च यत्सकर्तृकं तच्छरीरिकर्तृकमित्यत्र शरीरित्वमपि न व्याप्यान्तर्भूतं व्यभिचारावारकत्वादित्युक्तम्। प्रतीतं चेदिति। आश्रयभेदेनेति शेषः। मा भूदाश्रयभेदेन प्रतीतिः स्वरूपभेदेन द्वयमप्येकत्र प्रतीतं समनियतमेवास्तु कार्यत्वानित्यत्ववदित्याह—प्रतीतमिति। व्यभिचारावारकविशेषणवत्त्वे सत्येव दूषणान्तरमाह—विरोधादिति। न हीति।

---

(१) ०दशरीरक०। (२) ०तस्तदेव वि०। ०तस्तेनैव वि०। (३) अन्येन।

सकर्तृकत्वेन । न हि यावद्व्याप्यत्वेन विवेचितं तावदेव विशे- षणान्तरावच्छेदेन व्यापकमिति शक्यते वक्तुम् । व्याप्तिग्राहक- [स्य] प्रमाणस्य सर्वत्र व्याप्यरूपं व्यापककोटावनन्तर्भावयत (७) एव व्याप्तिग्राहकत्वनियम(८)दर्शनात् । तर्कापरिशुद्धिस्तु किं तर्कादपरिशुद्धिर्व्याप्तिपक्षधर्मताविरोधः, तर्करूपमेव वा, अप- रिशुद्धिरनुमानदूषणं वा । नाद्यः । तदविरोधस्य साधितत्वात् ।

---

न्यायलीलावतीकण्ठाभरणम्

रित्यर्थः ननु शरीरविशिष्टं सकर्तृकत्वमेव सकर्तृकत्वव्यापकं स्या- दित्यत आह—न हीति । व्याप्यमेव विशेषितं सद्व्यापकं न भवतीत्यर्थः । कुत एवमित्यत आह—व्याप्तिग्राहकेति । यथा प्रमाणस्यायं महिमा यत् लघु तदेव विषयीकरोति तथा व्याप्तिग्राहकमानस्यायं महिमा यद्व्या- प्यमेव विशेषितं व्यापककोटौ नान्तर्निवेशयतीत्यर्थः । नियमदर्शना- दिति । धूमवह्न्यादिव्याप्तौ तथैवावधारणात् । यत् समवेतं तज्जाति मत्समवेतमित्यस्यापि यत्समवेतं तज्जातिसमानाधिकरणमेवेत्य- र्थः । तर्कापरिशुद्धिपदेन यदि पूर्वोक्तविशेषविरोध एव देश्यते तत्राह— तदविरोधस्येति । विरोधितर्कान्तरमेव तर्कापरिशुद्धिपदार्थस्तत्राह—

न्यायलीलावतीप्रकाशः

यद्यपि यत्समवेतं तज्जातिमत्समवेतमित्यादौ व्याप्यमेव विशेषितं व्यापकं भवत्येव तथापि जातिशून्ये जात्यादौ समवायसत्त्वे बाध- कात् समवायाभावः प्रमित इति तत्र सन्देहाभावाद्भवति व्याप्यस्य विशेषितस्य व्यापकता । अत्र तु विशेषणं विनापि विशेष्यशङ्कया कथं व्याप्यमेव विशेषितं व्यापकं स्यादित्याहुः । वस्तुतस्तु कार्यमात्रे कर्तुः शरीरसहकारिताविरहात् साध्यव्यापकत्वे तस्य मानाभावः । अत एव शरीरिकर्तृत्वमुपाधिरित्यपि निरस्तमदृष्टद्वारा शरीरि- णोऽपि कर्तृतया साधनव्यापकत्वाच्चेति भावः । तर्कापरिशुद्धिरिति । यदि कर्ता स्यात् शरीरी स्यात् प्रयोजनवान् स्यादित्यादिरूपा ।

---

(१) व्यापककोटावेवान्तर्भावयत पु० । (२) ०कत्वानियम० ।

न द्वितीयः। अनुमानरूपसाकल्ये (१)तस्यानुमित्युत्पत्तिप्रतिबन्धकत्वानिश्चयेन दूषणत्वानिश्चयात्। अन्यतरासिद्धदूषणभावस्यैकतराभिमतसाधनवत्स्वसाध्यासाधकत्वात् शशशृङ्गप्रतिवन्दीग्रहो(२) बाधक इति चेन्न, अन्वयव्यतिरेकिणो(३)व्यतिरेकिणो वा विषाणसाधकत्वोपन्यासे यथैव विपक्षे साध्यव्यतिरेकावधारणं तथैव पक्षेऽपीति हेतोर्बाधितविषयत्वात्। केवलान्वयिनस्तु स्वयं साधकत्वस्वीकारेऽपसिद्धान्तात्। परसिद्धेन परस्य विरोधोद्भावनं तु नास्ति। परमते विषाणजातीयस्य दृश्यता(४)

---

न्यायलीलावतीकण्ठाभरणम्

अनुमानेति। व्याप्तिपक्षधर्मतयोरेकैकस्यावैकल्ये तादृशतर्कस्यानुमित्यप्रतिबन्धकत्वात्। वस्तुतो नास्त्येव तादृशस्तर्कः। यदीश्वरः कर्त्ता स्याच्छरीरी स्यादनित्यज्ञानवान् प्रयोजनवांश्च स्यादित्यादीनां सिद्ध्यसिद्धिपराहतत्वादित्यर्थः। ननु मया तादृशकतर्कस्य दोषत्वमभ्युपगम्यते एवेत्यत आह—अन्यतरेति। यथा हेतावन्यतरासिद्धिर्दोषस्तथा दूषणेऽपि तस्याऽप्यसाधकताहेतुत्वादित्यर्थः। नत्वेवं पशुत्वेन शशेऽपि शृङ्गं सिध्येदित्याह—शशेति। अर्थान्तरनिग्रहापत्तौ सत्यामपि दोषान्तरमाह—अन्वयेति। परस्य केवलान्वयानुमानानवष्टम्भे नैतदुक्तं नरादौ साध्यव्यतिरेकप्रयुक्तः साधनव्यतिरेक इति योग्यानुपलब्ध्या यथा तत्र साध्यव्यतिरेकप्रमा तथा पक्षेऽपीति बाधोऽत्रेत्यर्थः। ननु प्रमेयत्वादिना शृङ्गित्वं साध्यमिति न व्यतिरेकग्रहापेक्षेत्यत आह—केवलेति। मीमांसकस्यापसिद्धान्तस्तदभ्युपगमे स्यादित्यर्थः। यद्यपि शृङ्गित्वस्य केवलान्वयित्वे केवलान्वय्यनुमानमिह स्यात्तच्च न सम्भवत्येव तथापि शङ्कामात्रमेव तत्। परमत

न्यायलीलावतीप्रकाशः

शशेति। एवं पशुत्वाद्योग्यशृङ्गबाधे शृङ्गमयोग्यं सिध्येदित्यर्थः। अन्वयेति। शशे शृङ्गस्यात्यन्ताभाव इति सर्वेषामबाधितप्रत्यक्षबाधितत्वाद्विपक्षवदित्यर्थः। परमत इति। शृङ्गत्वस्य योग्यसंस्थान

---

(१) पञ्चरूपसम्पत्त्यादौ इत्यधिकः पाठः क्वचित् पुस्तके। (२) •बन्दग्र•।
(३) अन्यतरान्वयव्य•। (४) विषाणस्य दृश्यजातीयतावि•।

नियमात् । [इतीश्वरसिद्धिः ।]

अणुर्नाम(१) द्रव्यान्तरमिति चेत् तन्न, तदसिद्धेरित्येके(२) ।

---

न्यायलीलावतीकण्ठाभरणम्

इति । विषाणत्वजातेर्योग्यसंस्थानमात्राभिव्यङ्ग्यत्वेन तत्साधने बाध एवेत्यर्थः ।

पुनर्विभागमाक्षिपति—अणुरिति । विभुभ्यो मूर्त्तत्वं मूर्त्तेभ्यो विशेषगुणवत्त्वे नित्यत्वं वैधर्म्यमित्यर्थः । नन्वणुपरिमाणतरमभावः क्वचिद्विश्रान्तः परिमाणतरतमभावत्वात् महत्परिणामतरतमभाववत् । विश्रान्तत्वं सजातीयनिरूपितोत्कर्षमात्राश्रयत्वम् । तारतम्यं च सजातीयनिरूपितोत्कर्षव्यवहारविषयत्वम् । अ.श्रयासिद्धमाह—

न्यायलीलावतीप्रकाशः

विशेषव्यङ्ग्यत्वेन बाधादयोग्ये शृङ्गत्वस्य शङ्कितुमशक्यत्वादित्यर्थः । वस्तुतोऽर्थान्तरं विपक्षे बाधकाभावेन व्याप्त्यभावश्चेति भावः । एवमीश्वरसिद्धौ तस्यानात्मत्वसाधकानि "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य विभर्त्यव्यय ईश्वरः ॥" (गीता, १५।१७) इत्याद्यागमबाधितानीति भावः ।

न्यायलीलावतीप्रकाशविवृतिः

इत्यरुचेराह—वस्तुत इति । विपक्षे बाधकाभावेनेति । यद्यपि पशुत्वमेव तादृशशृङ्गसंयोगजनकतावच्छेदकं लाघवादिति विपक्षबाधकं सम्भवत्येव तथाप्येवं सति द्रव्यत्वमेव ततोऽपि लघु तदवच्छेदकं स्यादित्येवं क्रमेण च सर्वस्य सर्वाधिकरणत्वापत्तिरिति प्रतिकूलतर्केणोक्तस्यासमीचीनत्वमिति भावः । नन्वेवं परपरीहारनिराकरणेऽपि प्रथमोक्ताक्षेपे स्वयं परीहारो न कृत इति तं पूरयति—एवमिति । तथा च मूलकारः स्फुटत्वात्तदुपेक्षितवानिति भावः । आगमबाधितानीति । इदमुपलक्षणं वस्तुत अनात्मत्वं सुखसमवायिकारणतावच्छेदकजातिविरहो वा ज्ञानवत्त्वाभावो वा । आद्ये सिद्धसाधनमन्त्ये च धर्मिग्राहकमानबाध इत्यपि दूषणम् । द्रव्यान्तरत्वं न (?) च

---

(१) परमाणुरित्यर्थः । (२) ०ति केचित् ।

अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तमिति चेन्न, तदसिद्धावणु-

—— ——

न्यायलीलावतीकण्ठाभरणम्

तदसिद्धाविति । यद्यणुद्रव्यं सिध्येत्तदाश्रितमणुत्वं परिमाणं सिध्येदित्य-

न्यायलीलावतीप्रकाशः

'द्रव्यान्तरं' पृथिव्यादिचतुष्काभिन्नमित्यर्थः(१)। व्योमादिभेदस्याप्र-सिद्धत्वात् गन्धवत्त्वादीनामनित्यत्वव्याप्यत्वान्महत्त्वव्याप्यत्वाच्चेति भावः । अणुपरिमाणेति । अणुत्वं पक्षस्तारतम्यं हेतुः क्वचिद्विश्रान्तत्वं साध्यम् । तच्च(२) स(मान)जातीयावध्यवधिमत्त्वोभयानाश्रयवृत्ति-

न्यायलीलावतीप्रकाशविवृतिः

द्रव्यभिन्नद्रव्यत्वमप्रसिद्धमत आह—पृथिव्यादीति । नन्वेवं व्योमादि-भेदासिद्धिप्रसङ्ग इत्यत आह—व्योमादीति । ननु गन्धवत्त्वस्यानित्यत्व-व्याप्यतया परमाणोः पृथिवीत्वनिराकरणेऽपि द्व्यणुकस्य तथा-त्वाविरोध इत्यत आह—महत्त्वेति । अणुत्वमिति । अणुपरिमाणमित्यर्थः। तारतम्यमुत्कर्षा(प?)कर्षयोरन्यतरमात्राश्रयत्वमित्यर्थः । समानेति । सजातीयनिरूपितोत्कर्षावधित्वानाश्रयत्वं सजातीयनिरूपितोत्क-र्षावधिमत्त्वानाश्रयत्वं च साध्यम् । वृत्तिपदं तु सम्पातायातम् । यद्वा परस्परासम्बन्धेनोत्कर्षापकर्षावपि द्रव्ये वर्तते(र्तेता?) इति वृ-त्तिपदार्थघटितमेव साध्यमन्यथा परमाणोः साक्षादसिद्धिप्रसङ्गात् । क्वचिद्विश्रान्तत्वं क्वचिद्वृत्तित्वमात्रमित्येवं साध्येऽपि यद्यपि अणु-सिद्धिस्तथापि परमाणुद्व्यणुकयोरपि सिध्यर्थमिदमुक्तम् । साजा-त्यं च वृत्त्यघटितसाध्यपक्षे परिमाणत्वव्याप्यजात्या, तद्घटित-साध्यपक्षे च तज्जातीयपरिमाणवत्त्वेनेति । अत्र च सजातीयावधि-

(१) पृथिव्यादीति । एवं चाणुपदमारम्भकाणुपरम् । अणुत्वावच्छेदेन वा साध्यसिद्धि-रुद्देश्या । तेन मनसा न सिद्धसाधनम् । इति दीधितिः ।

(२) तच्चेति । अणुत्वापेक्षिकोत्कर्षावधिमत्त्वमणुत्वनिष्ठावधिमत्त्वं च त्रसरेणुमहत्त्वस्या-पीत्यत उक्तं सजातीयेति । सजातीयोत्कर्षापकर्षेत्यर्थः । साजात्यं च परिमाणत्वव्याप्यजात्या । अवधिमत्त्वं चाश्रयत्वपर्य्यवसन्नम् । अत्रापकर्षानवधिवृत्तित्वस्योत्कर्षानाश्रयवृत्तित्वस्य च सिद्धा-वपकृष्टमुत्कर्षावधिवृत्तित्वस्यापकर्षानाश्रयवृत्तित्वस्य च सिद्धावुत्कृष्टमुत्कर्षतदवधित्वयोरपकर्षतदव-धित्वयोर्वा द्वयोरनाश्रयवृत्तित्वसिद्धौ च साधारणमुत्कर्षस्यापकर्षस्य चाभ्नयद्व्यनाश्रयोभयवृत्तित्वस्य सिद्धौ च द्वयमणुत्वं सिध्यति । यथायथं चात्र त्रसरेणुगगनतदुभयान्यतरतदुभयमहत्त्ववृत्तित्वेन महत्त्वत्वं दृष्टान्तः । इति दीधितिः ।

न्यायलीलावतीप्रकाशः

ध्यम् । त्रसरेणुपरिमाणमत्र दृष्टान्तः, न त्वाकाशपरिमाणं(१) घट-परिमाणाल्पत्वनिरूपणे तस्यावधित्वात् । यद्वा तारतम्यमुत्कर्षापकर्षौ कचिद्विश्रान्तौ परस्परानधिकरणवृत्ती इत्यर्थः । तेन यथा महत्त्वो-त्कर्षो महत्त्वापकर्षानधिकरणवृत्तिराकाशे तथा परिमाणत्वव्याप्य-जातिनिरूपितोत्कर्षत्वेनाणुपरिमाणोत्कर्षोऽपि सजातीयनिरूपिता-पकर्षानाधिकरणावृत्तिरिति साध्यम् । यद्वा अणुत्वं स्वसमानजा-तीयनिरूपितापकर्षासमानाधिकरणस्त्वसमानजातीयनिरूपितोत्कर्ष-

न्यायलीलावतीप्रकाशविवृतिः

करणत्वेन सजातीयत्वेन परमाणोरनाश्रयपरिमाणाधिकरणत्वे-नानाश्रयत्वेन च द्व्यणुकसिद्धिः त्रसरेणुपरिमाणमत्र दृष्टान्त इति फक्किका सुगमा ।

केचित्तु उत्कर्षापकर्षयोरधिकाल्पदेशव्यापकत्वं इति परमाणोः साक्षादवच्छेदकतया द्व्यणुकसिद्धिः । विशिष्टमेव साध्यप्रविष्टं विशिष्टाभावत्वाच्च न व्यर्थविशेषणता । एवञ्च अपक-र्षावधिमत्त्वमुत्कर्षावधिमत्त्वं चैतदुभयानाश्रयवृत्तित्वं साध्यं परिमाणवृत्तिजातिः पक्षः परिमाणत्वसाक्षाद्व्याप्यजातित्वं हेतुः महत्त्ववृत्तिजातिश्च दृष्टान्तः । त्रसरेणुपरिमाणवृत्तितया तस्या दृष्टान्तता, नन्वा( त्वा ? )काशपरिमाणवृत्तितयेत्यग्रिमफक्किकार्थ इत्याहुः । नन्वेवं त्र्यणुकमहत्त्ववदप्रकृष्टाणुत्वसिद्धावपि परमाणुर्न सिद्ध्येदित्यरुचेराह—यद्वेति । उत्कर्षेति । अत्र द्वित्वं काचित्कव्यक्तिभे-दाऽभिप्रायेण । अत्युत्कृष्टापकृष्टाश्रययोर्भेदेन तयोरपि भेदात् । केचित्तु य एवैकापेक्षयाऽपकर्षः स एवाऽन्यापेक्षया उत्कर्षो न्यूना-नतिरिक्तव्यक्तिकजातिद्वयानङ्गीकारादिति स्मर्त्तव्यम् । यद्वेति । अत्राणु-त्वं पक्षः सजातीयनिरूपितापकर्षासमानाधिकरणत्वे सति सजा-तीयनिरूपितोत्कर्षसमानाधिकरणत्वमिति साध्यम् । एकैकदलसाध्य-तायामपि निरूपकत्वेनाऽपरयोः सिद्धौ परमाणुद्व्यणुकपरिमाणसि-द्धिरप्रत्यूहा, तथापि साक्षादेवोभयसिद्धिमभिप्रेत्य विशिष्टं साध्य-मुक्तम् । हेतौ चाकाशादिपरिमाणमात्रवृत्तिजातौ द्व्यणुकपरिमाण-

(१) न त्विति । अपकर्षानवधिवृत्तित्वे उत्कर्षानाश्रयत्वे च साध्ये नाकाशपरिमाणवृत्तित्वेन महत्त्वं दृष्टान्त इत्यर्थः । इति दीधितिः ।

परिमाणस्यासिद्धेः (१)। महत्त्वापकर्ष इत्थं व्यपदिश्यत इति चेन्न, तस्य त्रुटावेव विश्रामात्। अणुव्यवहारास्पदमात्रमनुपात्ताणुमहदादिवैचित्र्यं धर्मीति (२) चेन्न, प्रमाणसिद्धस्य

न्यायलीलावतीकण्ठाभरणम्

र्थः। अणुत्वासिद्धावपि प्रकारान्तरेण पक्षमाह—महत्त्वेति। इत्थमिति। अणुत्वेनेत्यर्थः। महत्त्वापकर्षस्त्रसरेणावेव विश्रान्त इति तत्पक्षतायां सिद्धसाधनमित्याह-तस्येति। अणुव्यवहारतारतम्यस्य पक्षत्वं शङ्कते—अणुव्यवहारास्पदमिति। व्यवहरणीयासिद्धौ व्यवहारासिद्धेराश्रयासिद्धि-

न्यायलीलावतीप्रकाशः

समानाधिकरणं परिमाणत्वसाक्षाद्व्याप्यजातिमन्महत्त्ववदित्यर्थः(३) तदसिद्धाविति। अणुद्रव्यासिद्धौ तदाश्रिताणुत्वासिद्धावाश्रयासिद्धेरित्यर्थः। इत एव तत्सिद्धावितरेतराश्रय इति भावः। 'इत्थं' अणुपरिमाणतारतम्यशब्देनेत्यर्थः। तस्येति। त्रसरेणावेव महत्त्वापकर्षो विश्रान्त इति सिद्धसाधनमित्यर्थः। अणुव्यवहारेति। अणुव्यवहारतारतम्यं धर्मीति नाश्रयासिद्धिरित्यर्थः। प्रमाणेति। महत एव

न्यायलीलावतीप्रकाशविवृतिः

वृत्तिजातौ च व्यभिचारवारणाय साक्षात्पदम्। के(क ?)चित्तु अपकर्षासमानाधिकरणेपातः (ति पाठः ?) तत्रापकर्षासमानाधिकरणो य उत्कर्षस्तत्समानाधिकरणमिति साध्यम्। परमाणुप्रकारकप्रतीत्यर्थंसाध्याविशेषणमन्यथा द्व्यणुकापेक्षया तूत्कृष्टेन परमाणवपेक्षयाऽपकृष्टेनार्थान्तरत्वात्। केचित्तु तत्पाठेऽपि अपकर्षासमानाधिकरणत्वे सति उत्कर्षसमानाधिकरणत्वमेव साध्यम्। असमानाधिकरणत्वं च तदनधिकरणाधिकरणत्वमित्याहुः। तदयुक्तम्। तथा सत्युत्कर्षेत्यादिव्यर्थतापत्तेः। एतत्पाठपक्षे साक्षात्पदं द्व्यणुकपरिमाणवृत्तिजातावेव व्यभिचारवारणायेत्यवधेयम्। महत्त्ववदिति। महत्त्व-

(१) ०माणस्यैवासिद्धेः। (२) धर्म्म इति चे०।

(३) अणुत्वं स्वाश्रयसजातीयावधिकापकर्षासमानाधिकरणस्य स्वाश्रयसजातीयावधिकस्योत्कर्षस्य समानाधिकरणम्। एवं तादृशोत्कर्षासमानाधिकरणतादृशापकर्षसामानाधिकरण्यमपि साध्यम्। साक्षादिति महत्त्वत्वावान्तरजातिभेदवारणाय। इति दीधितिः।

व्यवहारास्पदत्वेन महत्त्वभेदादन्यस्य व्यवहारास्पदताप्रतिक्षेपात्। त्रसरेणुर्भागवान् चाक्षुषद्रव्यत्वात् । अन्यथा तन्न स्यात् । महत्त्वप्रकर्षस्य चाक्षुषतानुविधानात् । दूरे केशाद्यनुपलम्भेऽपि शाल[ताल]तमालोपलम्भात् । तथा चानेकद्रव्यवत्त्वमपि महत्त्वकारणत्वाद् (१) धूम इवेन्धनमनुविधत्ते चाक्षुषत्वमिति तत्सिद्धिरिति चेन्न, महत्त्वानित्यत्वेनाप्युपपत्तेः । त्रसरेणुः कार्यो

न्यायलीलावतीकण्ठाभरणम्

माह--नेति । अणुमात्रं साधयति--त्रसरेणुरिति । परमाणुसिसाधयिषा चेत् तदा भागवत्त्वं सावयवावयवत्वं वक्तव्यम् । त्रसरेण्ववयवाः सावयवा इति वाऽनुमानम् । अन्यथेति । निरवयवत्वे चाक्षुषत्वं न स्यादित्यर्थः । महत्त्वात् । महत्त्वोत्कर्षात् प्रत्यक्षोत्कर्ष इति महत्त्वं यथा प्रत्यक्षत्वे तन्त्रं तथाऽनेकद्रव्यवत्त्वं महत्त्वे तन्त्रम् । तच्च सावयवावयवत्वे परमुपपद्यत इति परमाणुसिद्धिरिति शङ्कार्थः । त्रसरेणौ नित्यमेव महत्त्वमस्तु किं तदर्थमनेकद्रव्यवत्त्वकल्पनयेत्याह—नेति ।

न्यायलीलावतीप्रकाशः

तथात्वे त्रुटावेवोपपत्तेः सिद्धसाधनम् । अन्यस्य चासिद्धेरित्यर्थः । किं च तारतम्यं तरतमभावस्तद्विश्रान्तिस्तद्वृत्तिरिति न सिद्धसाधनम् । न हि तरतमपदाभिधेये तद्धर्मो न वर्तत इति कश्चिदभ्युपैति । अन्यथा त्वनिर्वचनमित्यर्थः। अणुद्रव्यसाधकान्तरमाह—त्रसरेणुरिति। 'भागवान्' सावयवावयव इत्यर्थः । यद्वा त्रुटेरवयवसिद्धौ ते सावयवाः चाक्षुषद्रव्यावयवत्वात्तन्तुवदित्यर्थः । अन्यथेति । निरवयवत्वे चाक्षुषद्रव्यत्वं न स्यादित्यर्थः । महत्त्वप्रकर्षस्येति । महत्त्वप्रकर्षेण चाक्षुषत्वप्रकर्षदर्शनादकारणोत्कर्षेण चाकार्योत्कर्षाभावान्महत्त्वस्य चाक्षुषत्व

न्यायलीलावतीप्रकाशविवृतिः

त्ववदित्यर्थः । 'तरतमभाव'स्तरतमपदवाच्यभावः । यथाश्रुते परमाणुद्व्यणुकयोरुभयोः सिद्धिर्न स्यादित्यत आह—अवयवेति । अत्रावयवत्वं समवायित्वमात्रमतो द्रव्यत्वसमवाय्यात्मत्वादौ व्यभिचारवारणाय द्रव्यपदम् । यदि चावयवत्वं समवायिकारणत्वपर्यन्तं तदा

(१) तथाऽनेकद्रव्यवतामपि महत्वकारणत्वाद् धू० ।

महत्त्वे सति क्रियावत्त्वादिति चेन्न, महत्त्वविशेषणव्यावर्त्त्या-प्रतीतावसामर्थ्यात्(१)। तस्यान्यतः(२) प्रतीतौ वैयर्थ्यापातात्। अतः प्रतीतावन्योन्याश्रयात्। नित्यश्च त्रसरेणुर्महत्त्वोत्कर्षापकर्षाभ्यां शून्यत्वात् गगनवत्। महत्त्वाधिकरणमनित्यमुत्कृष्टा-

न्यायलीलावतीकण्ठाभरणम्

महत्त्वे सतीति। क्रियावत्त्वस्य मनसि व्यभिचारवारणाय तथा स्याद्यदि मनोऽणु स्यात्तच्च नास्तीति विशेषणवैयर्थ्यमाह—महत्त्वेति। ननु व्यासङ्गान्यथानुपपत्त्या मनसोऽणुत्वे सिद्धे विशेषणमर्थवद् भवेदित्यत आह—तस्येति। सिद्धमेव तदणुत्वमित्यनुमानमतन्त्रमित्यर्थः। महत्त्वेति। अनित्यगुणादौ व्यभिचारवारणाय विशेषणं पूरयित्वा व्यतिरेकव्याप्तिमादर्शयति—महत्त्वाधिकरणमिति। व्यतिरेकव्याप्तौ यद्यपि महत्त्वाधिकरणमिति विशेषणं व्यर्थं तथाऽप्यन्वयव्याप्तौ द्रष्टव्यम्। हेतुव-

न्यायलीलावतीप्रकाशः

प्रति कारणत्वादित्थमेव महत्त्वं प्रत्यनेकद्रव्यवत्त्वस्य कारणत्वात् त्रसरेण्ववयवावयवसिद्धिः, स एव च परमाणुरित्यर्थः। यद्यप्येताव-ता दूरे साक्षात्कारविशेषं प्रति महत्त्वप्रकर्षः कारणं सिद्ध्यति न तु साक्षात्कारसामान्यं प्रति महत्त्वसामान्यं तथापि विशेषयोः कार्यकारणभावे बाधकं विना सामान्ययोरपि तथात्वमिति भावः। कार्यमहत्त्वेऽनेकद्रव्यवत्त्वं कारणं त्रसरेणुमहत्त्वं च नित्यमिति न तत्कारणत्वनानेकद्रव्यवत्त्वमित्याह—महत्त्वेति। महत्त्वोत्कर्षेति। महत्त्वे सतीतिविशेषणाच्चानित्यगुणेन व्यभिचारः। यद्यप्यन्वयव्याप्त्यैव साध्यं सिद्ध्यति तथापि परेषामन्वयव्यतिरेकसहचाराभ्यामेव व्याप्तिग्रहाद्व्यतिरेकसहचारमप्याह—महत्त्वाधिकरणमिति। न च व्यतिरेक-

न्यायलीलावतीप्रकाशविवृतिः

द्रव्यपदं त्याज्यमेव। इत्थमेवेति। तदुत्कर्षात्तदुत्कर्षेणेत्यर्थः। यद्यपि नानापरमाणुजन्यत्वेऽप्यनेकद्रव्यवत्त्वमुपपद्यत इति न तत्सिद्धौ परमाणुद्व्यणुकोभयसिद्धिस्तथाऽप्यनेकद्रव्यं यत् तत्समवायिकारणकत्वमेवात्र तत्पदेनाभिप्रेतम्। तथा च त्रसरेणोः सावयवावय-

(१) व्यावृत्त्यप्रतीताव०। व्यावर्त्त्याप्रसिद्धाव०। (२) तदन्यतः।

पकृष्टमहत्त्वसम्बन्धप्रतिबद्धम् । घटो हि कुतश्चिदल्प इति(१) कुतश्चिन्महत्तरो भवति न त्वेवं गगनं, कुतोऽप्यल्पताया अभावात्(२) । त्रसरेणोर्महत्त्वं [ तु ] महत्त्वान्तरेभ्योऽपकृष्टं न कुतोऽप्युत्कृष्टम् । न हि त्रसरेणोरल्पं महदस्तीति, दृश्यसमवायिहेतूनां च दृश्यत्वनियमात्, दृश्यत्वस्य च(३)दृश्यानुपलब्धिप्रतिक्षिप्तत्वात् । अन्यथा दृश्यादृश्यव्यवस्थाविलयानियमात् ।

---

न्यायलीलावतीकण्ठाभरणम्

त्वं स्फुटयितुमाह—घटो हीति । दृश्यसमवायिहेतूनामिति । दृश्य(द्रव्य?)समवायिकारणानामित्यर्थः । तेन शब्दगन्धादौ न व्यभिचारः । दृश्यानां चेत्यत्र त्रसरेणुसमवायिकारणानामिति शेषः । अवयवो महानेवेति व्याप्तिर्निरुप(ा?)धिसहचारबलात् सिद्धेति भावः । अन्यथेति । यदि दृष्टा-

न्यायलीलावतीप्रकाशः

व्याप्तौ महत्त्वग्रहणं व्यर्थम्, उत्कर्षापकर्षशून्यमहत्त्वमात्रव्यतिरेकस्यैव प्रकृतोपयोगादिति वाच्यम्, विशिष्टव्यतिरेकप्रदर्शनपरत्वात् । तेन क्वचिन्महत्त्वमात्रव्यतिरेकात्क्वचिन्महत्त्वे सत्येवोत्कर्षापकर्षसम्बन्धाद्विशिष्टव्यतिरेकः सिद्ध्यति । दृश्यसमवायीति । दृश्यद्रव्यसमवायिकारणानामित्यर्थः । तेन शब्दगन्धाभ्यां न व्यभिचारः(४) । दृश्यानुपलब्धीति । त्रसरेणुसमवायिकारणानामिति शेषः । निरुपाधिसहचारदर्शनादवयवो महानेवेति व्याप्तिग्रहान्नादृश्यावयवसिद्धिरित्यर्थः । यत्तु पृथिवीत्वं निरवयववृत्ति इन्द्रियानिन्द्रियवृत्तिजातित्वात् सत्तावत्,

न्यायलीलावतीप्रकाशविवृतिः

वत्वमायातीति भावः । महत्त्वग्रहणमिति । व्यापकीभूतसाध्याभावकोटाविति शेषः । विशिष्टेति । विशिष्टस्य हेतौ व्यतिरेकः । सत्यपि महत्त्वे क्वचिदुत्कृष्टापकृष्टत्वशून्यमहत्त्वरूपाविशेष्याभावादिति (प्रति?)पादनार्थत्वादिति भावः । दृश्यद्रव्येति । प्रत्यक्षद्रव्येत्यर्थः । इन्द्रियेति ।

---

(१) ल्पतरः कु. । ल्प इव कृत० । (२) असम्भवात् ।

(३) क्वचित् पुस्तके दृश्यत्वस्य चेति नास्ति ।

(४) दृश्यपदस्य योग्यमात्रे प्रसिद्धत्वात् । चाक्षुषपरत्वे तु चाक्षुषरूपवतोऽप्यनुद्भूतस्पर्शवयाभासवमते तत्र व्यभिचारो बोध्यः ।

(१)तदिदमसङ्गतम् । यथा तैजसानां कारणानां न दृश्यतानियमस्तथेहापि । अन्यथा नयनविलयात् । न च त्रसरेणुमहत्त्वं नित्यं महत्त्वे सति चाक्षुषत्वात् घटमहत्त्ववत् ।

---

न्यायलीलावतीकण्ठाभरणम्

तिक्रमः क्रियत इति भावः । पृथिवीत्वं निरवयववृत्ति इन्द्रियानिन्द्रियवृत्तिजातित्वात् सत्तावत्, न सावयवमात्रवृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् अणुत्ववदिति परमाणुसिद्धौ मानं गन्धवन्मात्रवृत्तित्वेन प्रतिरुद्धम् । अवयवो दृश्य एवेति व्याप्तिश्चक्षुरवयवे भग्नेत्याह—यथेति । सहचारमात्रान्न व्याप्तिरिति हृदयम् । अन्यथेति । सहचारमात्रेचेद् व्याप्तिस्तदा तेज उद्भूतस्पर्शाश्रय एवेति व्याप्तिबलान्नयनमपि न सिध्येदित्यर्थः । यद्वा अवयवो दृश्य एवेति व्याप्तिरित्यर्थः । ननु त्रसरेणौ नित्यमहत्त्वमस्तु । तथा च न तदवयवचिन्तेत्याह—न चेति ।

न्यायलीलावतीप्रकाशः

यद्वा न सावयमात्रवृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् आत्मत्ववदिति, तद्गन्धवन्मात्रवृत्तित्वेन प्रतिरुद्धम् । यदि निरुपाधिसहचारमात्रेण व्याप्तिग्रहस्तदा तेज उद्भूतरूपस्पर्शान्यतममिति नियमान्न चक्षुरपि सिध्येत् । अथ तत्र विपक्षबाधकाभावान्न व्याप्तिस्तदा तुल्यं प्रकृतेऽपीत्याह—यथेति । महत्त्वे सतीति । न चेदमप्रयोजकमवान्तरमहत्त्वं ह्यवयव-

न्यायलीलावतीप्रकाशविवृतिः

घटत्वादौ व्यभिचार(वार?)णाय इन्द्रियवृत्तित्वं घ्राणत्वादौ व्यभिचारवारणायानिन्द्रियवृत्तित्वं घ्राणघटान्यतरत्वादौ व्यभिचारवारणाय जातित्वं विशेषणमिति भावः । अत्र साधनावच्छिन्नसाध्यव्यापको निरवयवेन्द्रियवृत्तित्वमुपाधिरित्यरुचेराह—यद्वेति । तदिति । इदमुपलक्षणं परेण रूढरेव निरवयवस्य स्वीकारात् सिद्धसाधनम् । अप्रत्यक्षनिरवयववृत्तित्वे च साध्ये स्वमते व्यर्थविशेषणम् । उक्तानुमाने गन्धवन्मात्रावृत्तित्वं चोपाधिरिति द्रष्टव्यम् । यदीति । यदि च बाधोन्नीतपक्षेतर एवोपाधिस्तत्र तदा प्रकृतेऽपि तुल्यमिति भावः । अवान्तरेति । अपकर्षाधिकरणेत्यर्थः । परेण त्रुटिमहत्त्वे

---

(१) दृश्याद्दृश्यनियमव्यवस्थाविलयाद् तदि० ।

न च नित्यस्त्रसरेणुर्महत्त्वापकर्षविरहमात्रस्य महत्त्वैकाधिकरणस्य नियमग्राहकमानगोचरत्वात्। अनुमानादेव परमाणु-

---

न्यायलीलावतीकण्ठाभरणम्

चाक्षुषत्वं गोत्वादौ व्यभिचारि महत्त्वादितिमात्रं गगनादिमहत्त्वे व्यभिचारीति विशिष्टहेतूपादानम्। नित्यस्त्रसरेणुः महत्त्वोत्कर्षापकर्षाभ्यां शून्यत्वादिति दूषयति—न च नित्य इति। महत्त्वापकर्षशून्यत्वादित्येवं नित्यत्वे हेतुर्न तु उत्कर्षशून्यत्वमपि विशेषणं वैयर्थ्यादित्यर्थः। एवं सति द्व्यणुके व्यभिचारस्तद्वारणार्थं महत्त्वैकाधिकरणस्येति। तथा च महत्त्वसमानाधिकरणमहत्त्वापकर्षशून्यत्वमेव नित्यत्वे हेतुरित्यर्थः। अनुमानादेवेति। अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यत्वादित्यनुमानादेवेत्यर्थः। यद्वा त्रसरेणुर्भागवानित्यनुमानादित्यर्थः।

न्यायलीलावतीप्रकाशः

बहुत्वसङ्ख्यामहत्त्वप्रचयप्रयोज्यं तत्रोक्तमहत्त्वप्रचययोरवयवानां सावयवत्वमन्तरेणासम्भव एव। प्रचयो हि प्रशिथिलः संयोगः किञ्चिदवयवावच्छेदेन भवतीत्येवं रूपः। एवं महत्त्वमपि(१) सावयवावयवत्वमपेक्षत इति सावयवत्वसमानाधिकरणानामेव तेषां महत्त्वप्रयोजकत्वमिति त्रसरेण्ववयवाः सावयवाः। एतेन बहुपरमाणुभिरेव त्रसरेणुरारभ्यतां किं द्व्यणुकेनेति प्रत्युक्तं सावयवावयवत्वस्य महत्त्वे महत्त्वस्य च द्रव्यचाक्षुषत्वे कारणत्वात्। एतेन त्रसरेण्ववयवो यदि सावयवः स्यात् महान् स्यात् त्रसरेणुर्यदि सावयवावयवः स्यात् महावयवः स्यादित्यपास्तम्, अप्रयोजकत्वात्। प्रकृते च विपक्षबाधकस्योक्तत्वात्। न च नित्य इति। नित्यत्वे साध्येऽपकृष्टमहत्त्वानधिकरणत्वमुपाधिः। न च तुल्ययोगक्षेमत्वं महत्त्वस्य कार्यत्वेऽपकृष्टमहत्त्वमेव प्रयोजकं न तूत्कर्षापकर्षाभयाश्रयमहत्त्वं गौरवादित्यर्थः। अनुमानादेवेति। त्रसरेणुर्भागवान् चाक्षुषद्रव्यत्वादित्यनुमानादित्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

नित्यत्वस्वीकारात्। यद्यपि प्रचयादीनां मिलितानां हेतुत्वे त्रसरेणोर्महत्त्वं न स्यात् प्रत्येकं च हेतुत्वं परमाणुभिरपि द्व्यणुकारम्भे त-

---

(१) महत्त्वमपि सा०।

सिद्धेः(१)।

तथापि कथं [तत्] पृथिव्यादिजातीयं, कार्यसमवायिनिदानयोस्तन्तुपटादौ वैजात्यस्यापि दर्शनात्। गन्धादिमत्त्वात्तदनुमानमिति चेन्न, तस्य दृश्यसंस्थानैकव्यङ्ग्यत्वनियमात्।

---

न्यायलीलावतीकण्ठाभरणम्

परमाणूनां पृथिव्यादिविजातीयत्वात् पुनर्विभागव्याघातमाशङ्कते—तथापीति। ननु पृथिव्यादिजातीयं प्रति समवायिकारणत्वादेव पार्थिवादित्वं सेत्स्यतीत्यत आह—कार्य्येति। कार्य्यं च समवायिनिदानं चेति द्वन्द्वः। यत् यज्जातीयकार्य्यजनकं तत्तज्जातीयमिति व्याप्तिः पटजातीयकार्य्यजनकानामपि तन्तूनां पटत्वशून्यत्वाद् भग्नेत्यर्थः। तस्येति। गन्धवत्त्वात् पृथिवीत्वं तदाऽनुमास्यते यदि गन्धवत्त्वं पृथिवीत्वव्यञ्जकं भवेत्, न त्वेवं किन्तु दृश्यसंस्थानवत्त्वं पृथिवीत्वव्य-

न्यायलीलावतीप्रकाशः

ननु पृथिवीजातीयसमवायिकारणत्वेनैव परमाणोः सिद्धेर्न द्रव्यान्तरत्वमित्यत आह—कार्यसमवायीति। तस्येति। न गन्धवत्त्वं पृथिवीत्वव्यञ्जकमपि तु दृश्यसंस्थानविशेषवत्त्वं तच्च परमाणौ बाधितमिति

---

(१) "परमाणुद्व्यणुकयोश्च मानाभावः, त्रुटावेव विश्रामा"दित्यादिग्रन्थसन्दर्भेण "पदार्थतत्त्वनिरूपणे" शिरोमणिभट्टाचार्य्यैः खण्डितः परमाण्वादिसद्भावः। अस्मद्गुरुचरणैरपि "तत्त्वसारे" "त्रुटौ द्रव्यस्य विश्रामाद् द्व्यणुकादेरलीकते"त्यादिस्वकृतकारिकाशयवर्णनावसरे या विचाररीतयो दर्शितास्तासामयं संक्षेपः—द्रव्यं महत्त्वशून्यासमवेतं परिमाणवत्त्वात्, त्रुट्यादिकं महत्त्वाशून्यासमवेतं महत्त्ववत्त्वादित्याद्यनुमानसाम्राज्येन त्रुटीनां महत्त्वशून्यासमवेतत्वासिद्धावर्थत एव द्व्यणुकपरमाण्वसिद्धिः। न च द्व्यणुकादिसिद्ध्यनुगुणानुमानानामपि सत्त्वेन न कथं तेषां सिद्धिरिति वाच्यम्, सत्प्रतिपक्षसम्वलनद्वयोरेवाभिद्ध्या द्व्यणुकाद्यसिद्धावेव पर्य्यवसानात्। भवदभिप्रेतानुमानप्रणाल्या परमाणूनामप्यवयवस्य साधयितुं शक्यतया उक्तानुमानविषयहेतोरप्रयोजकत्वशङ्काकवलितत्वाच्च। अथानवस्थाभयेन परमाणूनामवयवाः सिद्धुं नार्हन्ति, अन्यथा मेरुसर्षपयोः साम्यं प्रसज्येतेति चेत् परमाणूनां सावयवत्वसिद्धावेव भवतामनवस्थाप्रसङ्गभयं त्रुटीनां पुनरप्रामाणिकावयवादिसिद्धौ न तथा प्रसङ्गः। अस्य तु रहस्यं भवन्त एवानुभवितुं प्रभवः सन्तु। वस्तुतस्तु अस्मत्प्रदर्शितानुमानेन प्रोक्तासमवेतत्वासिद्धौ द्व्यणुकाद्यनन्तपदार्थान्तराकल्पनकृतं लाघवम्। युस्मत्प्रदर्शितानुमानेन तु अनन्ततत्कल्पनप्रयुक्तं महागौरवमित्यादिप्रतिसन्धानरूपतर्कस्यास्मदभिमतासिद्ध्यनुगुणत्वात्।

अन्यथा स्फटिकलौहताम्रादिजातेरप्यनुमानापत्तेः । ततः परम-महद्गगनवदणवोऽपि द्रव्यान्तरमेव । अन्यथा तत्रापि का प्रत्याशेति स्थितम् । मैवम् । तदसिद्धेः । यदि हि दृश्यैकव्यङ्ग्यंयं स्यात् स्यादेवम् । न त्वेवम् । केवलस्य दृश्यत्वस्य भूजलादिसाधारण्येन व्यभिचारित्वात् । गन्धादिना तु विशेषणे वैयर्थ्यात् । गन्धसमवायिकारणतानिर्वाहकजातेरणावपि(१) स्वीकारात् ।

---

न्यायलीलावतीकण्ठाभरणम्

क्तं तच्च परमाणौ नास्तीत्यर्थः । तत इति । यथा गगनं परममहत्त्वात् पृथिव्यादिभ्यो भिद्यते तथा परमाणुत्वादणवोऽपि तेभ्यो भिद्यन्त इत्यर्थः । अन्यथेति । गगनादिकमपि पृथिव्यादिविशेष एव स्यादित्यर्थः । तदसिद्धेरिति । पृथिवीत्वस्य दृश्यसन्तानव्यङ्ग्यत्वासिद्धेरित्यर्थः । स्यादेवमिति । परमाणौ पृथिवीत्वं न स्यादित्यर्थः । दृश्यसन्तानव्यङ्ग्यत्वे दोषमाह—दृश्यत्वस्येति । ननु गन्धवत्त्वे सति दृश्यसन्तानव्यङ्ग्यत्वं सम्भवेदित्यत आह—गन्धादिनेति । तर्हि गन्धवत्त्वमात्रमेव पृथिवीत्वव्यञ्जकमस्तु किमधिकेनेत्यर्थः । किं च गन्धसमवायिकारणत्वं किञ्चिदवच्छेद्यं बाधकाभावात् तज्जातिरूपमित्यणावपि तज्जातिरित्याह—गन्धेति । गन्धश्च परमाणौ तत्कार्य्यपरम्परागन्धानुमेय एवेति

न्यायलीलावतीप्रकाशः

पृथिवीत्वमपि बाधितमित्यर्थः । अन्यथेति । यदि गन्धादिव्यङ्ग्यं पृथिवीत्वं परमाणौ स्यात्तदा रूपविशेषादिव्यङ्ग्यं ताम्रत्वादिकमपीति तदपि परमाणौ स्यादित्यर्थः । तदसिद्धेरिति । दृश्यसंस्थानविशेषाभिव्यङ्ग्यत्वासिद्धेरित्यर्थः । दृश्यत्वस्येति । दृश्यसंस्थानवत्त्वस्येत्यर्थः । 'व्यभिचारित्वात्' अतिव्यापकत्वादित्यर्थः । अव्यापकत्वमपि मन्तव्यम् । पार्थिवत्रसरेण्ववयवसंयोगात्मकस्य संस्थानस्यादृश्यत्वात् । गन्धादिनेति । विशेषणमात्रस्याभिव्यञ्जकत्वे विशेष्यवैयर्थ्यादित्यर्थः । परमाणोरपृथिवीत्वे बाधकमाह—गन्धसमवायीति । परमाणौ यदि पृथिवीत्वं न स्यात् गन्धसमवायिकारणत्वं न स्यादित्यर्थः । एतन्मूल-

---

(१) ०तेः परमाणावपि ।

अन्यथा गन्धसमवायिकारणत्वानुपपत्तेः । गन्धस्नेहभास्वररूपापाकजस्पर्शेन क्षितित्वादिजात्यनुमानात्, स्फटिकादिजातेश्च गुणविशेषस्य व्यवस्थापकस्याभावात्, दृश्यसंस्थानव्यङ्ग्यत्वेनाणुषु तदनुमानविरोधात् ।

इति परमाणुः ।

---

न्यायलीलावतीकण्ठाभरणम्

भावः । अन्यथेति । अवच्छेदकं विनेत्यर्थः । पृथिवीत्वव्यञ्जकमुक्तमपि जलत्वादिव्यञ्जकसाधारण्येन पुनराह—गन्धेति। ननु गन्धस्य परमाणावपि जन्यत्वात् तत्समवायिकारणतावच्छेदिका पृथिवीत्वं जातिः सिध्यतु, जलादौ तु स्नेहादीनां परमाणुषु नित्यत्वात् कथं तत्समवायिकारणतावच्छेदकं जलत्वादि भवेदिति चेन्न, जलाद्यवयविनि स्नेहादिसमवायिकारणतावच्छेदकतया जलत्वादिकं प्रसाध्य जलादिपरमाणवः स्वोपादेयवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमन्त इति साधनीयमिति भावः । ननु स्फटिकत्वादिकमपि गुणविशेषव्यङ्ग्यमिति परमाणावपि तद्गुणसत्त्वात् स्फटिकत्वादिकं स्यादित्यत आह—स्फटिकेति। स्फटिकत्वादेः संस्थानविशेषव्यङ्ग्यत्वं संस्थानविशेषश्च

न्यायलीलावतीप्रकाशः

व्याप्तिं साधयति—अन्यथेति । पृथिवीत्वजातेर्गन्धसमवायिकारणतावच्छेदकत्वेनैव सिद्धेरित्यर्थः । स्नेहेति। परमाणौ स्नेहादेर्नित्यत्वेऽपि यथैव तज्जातयः सिध्यन्ति तथोपपादितमधस्तात् । गुणविशेषस्येति । रूपविशेषस्य प्रस्तरविशेषसाधारण्यादित्यर्थः । दृश्यसंस्थानेति । न च स्फटिकत्रसरेणावव्याप्तिः, तदवयवसंयोगस्यादृश्यत्वादिति वाच्यम्, संस्थानविशेषस्यैव व्यञ्जकत्वेन विवक्षितत्वात् दृश्यत्वस्य तत्परि-

न्यायलीलावतीप्रकाशविवृतिः

द्रुतबहुत्वसङ्ख्याया महत्त्वारम्भाविरोधः । तथापि प्रचयस्य किञ्चिदवयवावच्छिन्नसंयोगात्मकस्य महत्त्वविशेषं प्रति कारणतया यद्विशेषयोरिति न्यायेन सावयवसंयोगत्वेन महत्त्वसामान्यं प्रति कारणतेति भाव इति मिश्राः । तदयुक्तम् । उक्तन्यायेनाऽवयवसंयोगत्वेनैव कारणताग्रहात् । वयं तु सामान्येन ह्यणुके मानं परमाणु-

शब्दो गुणो, जातिमत्त्वे सति अस्मदादिबाह्याचाक्षुषप्रत्य-

न्यायलीलावतीकण्ठाभरणम्

परमाणुषु नास्तीति न तत्र स्फटिकत्वादि : तत्सत्त्वे वा तज्जातीय-परमाण्वारब्धानां घटादीनामपि स्फटिकत्वादिकं स्यात् । न हि तन्मूलभूताः परमाणवो न द्रव्यान्तरमारभन्ते । अत एव द्रव्यत्वसाक्षाद्व्याप्यजातेरेव सत्ताद्रव्यत्वातिरिक्तायाः परमाणुवृत्तित्वाभ्युपगमे दधित्वदुग्धत्वादीनामपीयमेव गतिः ।

आकाशसाधनाय पीठमारचयति—शब्द इति । जातिमत्त्वे सतीति ।

न्यायलीलावतीप्रकाशः

चायकत्वमात्रत्वात् । स च संस्थानविशेषः प्रस्तरविशेष एव रत्नशास्त्रजज्ञानसचिवचक्षुर्वेद्यः । न च स्फटिकसमवायिकारणतावच्छेदकत्वेन स्फटिकत्वसिद्धिस्तदपि परमाणौ स्यात् स्फटिकत्वस्यैकनिरूपितकार्यत्वकारणत्वावच्छेदकविरोधात् ।

जातिमत्त्वे सतीति । नन्विदं यथाश्रुतं स्पर्शनप्रत्यक्षे घटे कर्मणि चानैकान्तिकम् । अथाचाक्षुषपदेन चाक्षुषज्ञानाविषयत्वं विवक्षितं

न्यायलीलावतीप्रकाशविवृतिः

द्व्यसंयोगदशायां समवायिकारणासमवायिकारणादीनां सत्त्वे तद्द्रव्योत्पत्तेरावश्यकत्वात् । महत्त्वे च तस्य कारणाभावादर्थात्तद्व्यणुके तस्य निष्प्रयोजनत्वशङ्कया आरम्भकत्वे सति द्वाभ्यामारम्भपक्षेऽपि तथा । तस्यापि द्व्यणुकत्वाविशेषादिति तैस्त्रिभिरारम्भाभ्युपगमे तत्रैव त्रसरेणुत्वेन द्व्यणुकत्वेन च कार्यकारणभावव्यवस्थितौ न परमाणुभिरपि तदारम्भस्तत्र तेषां स्वरूपायोग्यत्वादिति ब्रूमः । 'महत्त्वे'जन्यमहत्त्वे(?)। रत्नेति। स्थूलस्फटिकादवितिशेषः । वस्तुतः शास्त्रापेक्षपदविशेषसङ्केतग्रहानुगता तु जातिरध्यक्षैव तद्भिन्नापीति द्रष्टव्यम् । समवायिकारणत्वेन तद(वच्छेद ?)केनेत्यर्थः । स्फटिकत्वेति । यद्यपि जन्यस्फटिकत्वेन कार्यता स्फटिकत्वेन च कारणतेति नोक्तदोषः, तथापि स्फटिकत्वादेः परमाणुवृत्तित्वे तदारब्धभस्मन्यपि तदापत्तिः, परमाणुवृत्तिजातेस्तदारब्धपरम्परावृत्तित्वनियमात् । अत एव गन्धविशेषाद्यभिव्यङ्ग्यमपि कस्तूरिकात्वादिकं न परमाणुवृत्तीति भावः ।

यथाश्रुतमिति । अचाक्षुषं यत्प्रत्यक्षं तद्विषयस्वरूपमित्यर्थः। अथेति ।

क्षत्वात् गन्धवत् । यदि तु निरवयद्रव्यं(१) स्यात् बाह्येन्द्रियग्राह्यं न स्यात् । निरवयवद्रव्यस्य बाह्येन्द्रियाग्राह्यत्वेन प्रतिबन्धात् ।

---

न्यायलीलावतीकण्ठाभरणम्

गोत्वादौ व्यभिचारवारणाय चक्षुरग्राह्यत्वे सति बाह्यप्रत्यक्षत्वादिति हेत्वर्थः । तेन कर्मणि घटादौ च त्वगिन्द्रियग्राह्ये न व्यभिचारः । बाह्यपदमात्मव्यावर्त्तनार्थमिति तिमिरोत्पन्नकर्म्मव्यक्तौ च चक्षुर्ग्रहणयोग्यत्वादेव न व्यभिचारः । अन्यथा तस्य स्पार्शनत्वमपि न स्यात । शब्दद्रव्यत्ववादिनमाशङ्क्य निराकरोति—यदि त्विति । शब्दो द्रव्यं भवन्निरवयवं वा स्यात् सावयवं वा । आद्य आह—यदि त्विति । सावयवं त्ववयवानुपपत्तिपराहतमिति भावः । शब्दो ह्याश्रयतया

न्यायलीलावतीप्रकाशः

तदा तिमिरोत्पन्नकर्मव्यक्तौ व्यभिचारः । अथास्मदादिबाह्यचाक्षुषवृत्तिजात्यनाधारत्वं हेत्वर्थस्तथापि प्रत्यक्षासमवेतनिरवयवेन्द्रियमात्रवेद्यान्यत्वमुपाधिः । मैवम् । निरवयवद्रव्यस्य बाह्येन्द्रियाग्राह्यत्वलक्षणविपक्षबाधकेन हेतोः साध्याव्यापकत्वात् । तद्व्यापकतयोपाधेः

न्यायलीलावतीप्रकाशविवृतिः

अचाक्षुषत्वे सति बाह्यप्रत्यक्षविषयत्वं हेतुरित्यर्थः । तदेति । चाक्षुषत्वं यदि फलोपाधानं तदेदं दूषणम् । अस्मदादीति । अस्मदादिबाह्यप्रत्यक्षत्वे सति सत्ताद्रव्यत्वगुणत्वभिन्नचाक्षुषवृत्तिजात्यनाधारत्वादित्यर्थोऽन्यथा यथाश्रुते स्वरूपासिद्धेः । अत्र सत्यन्तमात्मन्युत्तरप्रतीकं चोक्तस्थले व्यभिचारवारणाय । तत्र कर्मत्वघटत्वादेस्तादृशजातेः सत्त्वात् । प्रत्यक्षशब्दमात्रस्य पक्षत्वमतो नाद्यान्त्यशब्दयोर्भागासिद्धिः । परमते स्वमते चासिद्धिवारणाय द्रव्यगुण(२)भिन्नेति । न च व्यर्थविशेषणता । प्रत्यक्षासमवेतेति । ज्ञानादौ साध्याव्यापकत्वनिरासाय प्रत्यक्षासमवेतेति ते(वे?)द्यविशेषणम् । मनोवेद्यतया वायुस्पर्शादौ साध्याव्याप्तेराह मात्रेति । जलपरमाणुरूपादौ चेन्द्रियावेद्यत्वादेवोपाधिरिति न साध्याव्यापकता । अत एवेश्वरज्ञाना(दा?)वपि न साध्याव्यापकता । निरवयवेति । शब्दस्य गुणत्वव्यवि:

---

(१) यदि तु द्रव्यं स्यात् पा० । (२) ०णत्वभि० ।

**प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वात्, अयावद्द्रव्यभावित्वात्,**

न्यायलीलावतीकण्ठाभरणम्

आकाशमाक्षिपेत् तत्रान्यथासिद्धिं निराचष्टे—प्रत्यक्षत्वे सतीति। परमाणुगुणेषु व्यभिचारवारणाय प्रत्यक्षत्वे सतीति। स्वसमवायिकारणमात्रासमवेतगुणासमवायिकारणकत्वमकारणगुणपूर्वकत्वम्। वस्तुतः कारणगुणपूर्वकत्वेन ये परिभाषिता रूपरसादयोऽपाकजास्तदन्यत्वादिति हेत्वर्थः। अयावदिति। समानाधिकरणध्वंसप्रति-

न्यायलीलावतीप्रकाशः

साध्याव्यापकत्वात्। प्रत्यक्षत्वे सतीति। नन्वत्र यत्किञ्चित्कारणगुणपूर्वकत्वाभावो विवक्षितः शब्दकारणगुणपूर्वकत्वाभावो वा। उभयथाऽप्यसिद्धिः। बाह्येन्द्रियाप्रत्यक्षत्वं चोपाधिः। नैवम्। स्वाश्रय(१)समवेतगुणासमवायिकारणकत्वादिति विवक्षितत्वात्। उपाधेश्च साध्यव्याप्यसाधनाव्यापकत्वेन साध्याव्यापकत्वात्। अयावदिति।

न्यायलीलावतीप्रकाशविवृतिः

रेके निरवयवद्रव्यत्वमेव स्यात्तत्र चायं प्रतिकूलतर्कपराघात इति भावः। उभयथापीति। शब्दस्य स्वकारणभेरीसंयोगादिपूर्वकत्वादिति भावः। बाह्येति। विशेषगुणवत्त्वलक्षणपक्षधर्मावच्छिन्नसाध्यव्यापकोऽयमुपाधिरन्यथा घटैकत्वादौ साध्याव्यापकतापत्तेः। स्वाश्रयमात्रासमवेतेति। ननु यथाश्रुते शब्द(ज ?)शब्दे भागासिद्धिः, घटरूपादौ व्यभिचार(श्च?)। अत्र मिश्राः। स्वजनकाश्रयसमवेतगुणसमवायिकारणकान्यत्वादिति हेत्वर्थः। प्रतियोगिप्रसिद्धिश्चान्यत्रैव। न चैवं मात्रपदवैयर्थ्यं स्वसमानाधिकरणद्रव्यविभाजकोपाधिव्याप्यतावच्छेदकगुणत्वव्याप्यजातिमत्त्वमेव विशेषगुणत्वम्। प्रकृते साध्यप्रतियोगिकोटित्वेन विवक्षितमतः पृथिवीसंयोगमात्रवृत्तिकठिनसंयोगत्वस्वीकारे कठिनसंयोगे व्यभिचारवारकत्वात्। मात्रपदेन कात्स्न्यार्थकेन गुणत्वव्याप्यजात्यवच्छिन्ने तादृशगुणासमवायिकारणकान्यत्वस्य लाभात्। न च संयोगे तथात्वं कारणाकारणसंयोगेनापि तज्जननात्। अत एव परमाणुगुणे व्यभिचारवारणाय नात्र प्रत्यक्षत्वे सतीति योज्यम्, मात्रपदान्तर्भावेन विवक्षितहेतोस्तद्विशेषणं

(१) ०यमात्रासम०।

आश्रयादन्यत्रोपलब्धेश्च न स्पर्शवद्विशेषगुणः । वायुरेव यावद्वेगं चलन् शब्दनिमित्ततयाऽभ्युपगतोऽस्त्वाश्रयः । अणुष्वतीन्द्रियो

न्यायलीलावतीकण्ठाभरणम्

योगित्वात् , आश्रयध्वंसाजन्यध्वंसप्रतियोगित्वाद्वेत्यर्थः । प्रत्यक्षत्वे सतीत्यत्रापि योज्यम् । आश्रयादिति । असमवायिकारणविशेष्यकप्रत्यक्षाविषयत्वादित्यर्थः । गन्धस्पर्शान्यत्वेन हेतुर्विशेष्यस्तेन वितततचम्पकादिगन्धवायूपनीतशीतस्पर्शे न व्यभिचारः । प्रत्यक्षत्वे सतीति योजनाच्च परमाणुगुणे व्यभिचारः । उक्तहेतूनां स्वरूपासिद्धिं शङ्कते—वायुरेवेति । अणुष्विति । तथा च कारणगुणपूर्वकत्व-

न्यायलीलावतीप्रकाशः

द्रव्यध्वंसाजन्यध्वंसप्रतियोगित्वादित्यर्थः । अत्रापि प्रत्यक्षत्वे सतीति योज्यं तेन परमाणुगुणैर्न व्यभिचारः । आश्रयादिति । ननु यद्याश्रयातिरिक्तनिष्ठतयोपलभ्यमानत्वादित्यर्थस्तर्ह्यसिद्धिः । वीणायां शब्द इत्यनुभवात् । अथाश्रयं विनोपलभ्यमानत्वादित्यर्थस्तदा गन्धादौ व्यभिचारः । अत्राहुः । अत्रान्यत्रशब्दो विनार्थः, तेनाश्रयं विनोपलब्धियोग्यत्वादित्यर्थः । अयोग्याश्रयकत्वादिति यावत् । अत्र स्पर्शगन्धान्यत्वेन हेतुर्विशेष्यः, तेन वायुस्पर्शचम्पकाद्यधिवासाधारविततद्रव्यस्यायोग्यत्वात्तत्स्पर्शगन्धाभ्यां न व्यभिचारः । यथाश्रुतहेतूनां स्वरूपासिद्धिमाह—वायुरेवेति । निमित्तकारणत्वेनावश्यापेक्षणीयत्वमु-

न्यायलीलावतीप्रकाशविवृतिः

विनाऽप्यव्यभिचारात् । यदि च पारिभाषिकविशेषगुणत्वाभाव एव साध्यस्तदा मात्रपदमनुपादेयमेव । मूलस्य (१)प्रत्यक्षत्वे सतीत्यस्यानुषङ्गादेव च न परमाणुगुणैर्व्यभिचार इति वदन्ति । क्वचित्तु स्वाश्रयसमवेतगुणासमवायिकारणत्वादिति पाठः । तत्र च भागासिद्धौ शङ्का(२)नास्त्येव विशेषगुणत्वसिद्ध्यनन्तरमेतत्परिशेषावतारे शब्दस्य त्रिविधस्यापि तथात्वस्वीकारात् । परमाणुगुणे व्यभिचारवारणाय मूलस्थं प्रत्यक्षत्वे सतीत्यनुषञ्जनीयमिति दिक् । यावद्द्रव्यं भवनमुत्पत्तिः सत्त्वं वा द्वयमपि घटरूपे नास्ति ( इति? ) व्यभिचार इत्यत आह—द्रव्येति । अत्र द्रव्यपदमनर्थकमपि विशिष्टाभावस्वरूपोपकतया न दोषाय । तेनेति । अगृह्यमाणशब्दे भागासिद्धिनिरासाय

( १ ) मूलस्यस्य । ( २ ) ०सिद्धिश० ।

ष्वनिरस्तु, स्थूलेष्वैन्द्रियकः कारणगुणपूर्वकः। स चोत्पत्तौ भेरीदण्डाद्यभिघातसापेक्षो (१)यावद्द्रव्यभावी च आश्रय(२) एवोपलभ्यते चेति किमसङ्गतमिति चेन्न, शब्दस्य विशेषगुणत्वे सति त्वगिन्द्रियावेद्यत्वेन रूपादिवदवायवीयत्वात्। न दिक्कालमनोगुणः प्रत्यक्षत्वात् रूपवत्। नात्मनो बाह्येन्द्रियवेद्यत्वात्(३)।

---

न्यायलीलावतीकण्ठाभरणम्

मेवेति भावः। स चेति। सर्वदोपलब्धिवारणाय द्वितीयस्य हेतोरसिद्धिमाह—यावद्द्रव्यभावीति। तृतीयहेतोरसिद्धिमाह—स्वाश्रय एवेति। एतच्च वायुप्रत्यक्षवादिमते। शब्दस्येति। शब्दो न वायुगुणः प्रत्यक्षत्वे सति त्वगिन्द्रियावेद्यविशेषगुणत्वाद् रूपादिवदित्यर्थः। न दिक्कालेत्युपलक्षणं नात्मगुणो वहिरिन्द्रियप्रत्यक्षत्वात् श्रोत्र-

न्यायलीलावतीप्रकाशः

कम्, अणुष्वतीन्द्रिय इत्यनेनाद्यस्य हेतोरसिद्धिरुक्ता। स चेत्यनेन कारणगुणपूर्वकत्वे शब्दस्य सर्वदोत्पत्तिर्निराकृता। एतच्चोपपत्तिसौकर्यादुक्तं शब्दानुत्पत्तिकाले भेरीदण्डोदीरिते वायौ मानाभावात्। शब्दस्येति। स्पर्शेतरविशेषगुणत्वादित्यर्थः। 'अवायवीयत्वं'

न्यायलीलावतीप्रकाशविवृतिः

योग्यतागर्भत्वम्। एवमपि रसे व्यभिचार इत्यत आह—अयोग्येति। उपलब्धियोग्यत्वमात्रमनुषञ्जनीयमन्यथा परमाणुगुणैरेव व्यभिचारापत्तेः। यद्यप्याश्रयं विनेत्यस्य आश्रयासन्निकर्ष इत्यर्थे तस्मिन्सति प्रतीयमानत्वादिति ऋजुरेव हेतु (:?) सम्यक् तथापि वीणावच्छिन्ननभःश्रोत्रतापक्षे स्वरूपासिद्धिप्रसङ्गादित्यर्थमुक्तम्।

यथाश्रुतेति। चरमविवक्षितहेतोस्तथापि स्वरूपासिद्ध्यसम्भवाद्यथाश्रुतेत्युक्तम्। यथाश्रुते वायुपरमाणुस्पर्शव्यभिचारादन्यथा व्याचष्टे—स्पर्शेतवे[ रे ? ]ति। ननु (अ?) वायवीयत्वमवायुजन्यत्वं वायु(स्व?)जन्यत्वं वा। आद्ये सिद्धसाधनमन्त्ये व(च?)बाध इत्यत

---

(१) भेरीदण्डादिसा०। (२) स्वाश्रय इति कण्ठाभरणसम्मतः पाठः।
(३) बाह्यकरणप्रत्यक्षत्वाद्।

तदाकाशमितरेभ्यो भिद्यते शब्दसमवायित्वात्। न यदेवं न तदेवं यथा घटः। इति [ आकाशः। ]

ननु कालसत्त्वे किं प्रमाणम्, अध्यक्षमनुमानं वा। नाद्यः। अरूपत्वे(१)नानध्यक्षत्वात्, प्रतिभासाभावाच्च। न द्वितीयः।

---

न्यायलीलावतीकण्ठाभरणम्

ग्राह्यत्वादित्यपि द्रष्टव्यम्। तदाकाशमिति। शब्दाश्रयतया यत् सिद्धमित्यर्थः।

शब्दः क्वचिदाश्रित इति सामान्यतोदृष्टात् परिशेषसहकृतात् सिद्धमित्यन्ये। यद्यपि साध्याप्रसिद्धिः न हीतरभेदोऽयं क्वचित् सिद्धो यदाकाशे साध्येत पृथिव्यादावितरभेदस्य साध्यस्य घटादौ कथञ्चित् प्रसिद्धत्वात् तथापि पृथिव्यादिभेदानां जलादौ प्रसिद्धानां प्रत्येकं मेलकस्य साध्यत्वादित्यर्थः।

कालसत्त्व इति। यौगपद्यादिप्रत्ययहेतुसत्त्व इत्यर्थः। अरूपित्वेनेति। अरूपबहिर्द्रव्यत्वेनेत्यर्थः। बहिर्द्रव्यत्वं च सामान्यतः सिद्धमेवेति भावः। प्रतिभासेति। अयं घटवदयं काल इत्याकारप्रतिभासाभावा च्चेत्यर्थः। केचिदरूपत्वे हेतुरयमित्याहुः। तत्र चकारास्वरसः।

न्यायलीलावतीप्रकाशः

वायुविशेषगुणत्वानाश्रयत्वमित्यर्थः। तदिति। शब्दः समवायिकारणजन्यो भावकार्यत्वादिति सामान्यतोदृष्टादुक्तपरिशेषसहायाद् यत्सिद्धमित्यर्थः। नन्वितरभेदः पृथिव्यादिचतुर्दशप्रतियोगिकान्योन्याभावः तस्याप्रसिद्धया कथं व्यतिरेकनिरूपणम्। अत्राहुः पृथिव्याद्यन्योन्याभावा अष्टावष्टसु प्रसिद्धा एकत्राकाशे साध्यन्ते अतो नाप्रसिद्धिः।

अरूपित्वेनेति। आत्मभिन्नारूपिद्रव्यत्वेनेत्यर्थः। रूपमेवास्य न कुत

न्यायलीलावतीप्रकाशविवृतिः

आह—वायुविशेषेति। पृथिव्यादीति। गुणादिभेदस्योभयसिद्धत्वादष्टकेत्युक्तम्। तदसिद्धौ त चतुर्दशभेदाश्चतुर्दशसु प्रसिद्धा इति द्रष्टव्यम्। इदमुपलक्षणं इतरे आकाशनिष्ठभेदप्रतियोगिनः शब्दानाश्रयत्वादित्येवमपीतरभेदानुमानं द्रष्टव्यम्। साध्यप्रसिद्धेर्घटादावेव सुल

---

(१) अरूपित्वेनेति कण्ठाभरणसम्मतः पाठः।

लिङ्गाभावात् । परापरादिषट्कं लिङ्गमिति चेत् , न, परापरत्वे(१)

---

न्यायलीलावतीकण्ठाभरणम्

नाद्य इति । कालेनाध्यक्षं प्रमाणमित्यर्थः । अरूपत्वेन विषयस्यै-वानध्यक्षत्वादिति हेत्वर्थः । तथा च न साध्याविशेषः । न च वैयधि-करण्यमनध्यक्षे विषयेऽध्यक्षं न मानमिति कथञ्चित् सामानाधि-करण्योपपत्तेः पञ्चमीप्रयोग( : ? )साधुस्तथाच साध्यानुवादमात्र-मिदमित्येके । पञ्चम्या प्रमाणसामान्याभावः सूचितस्तेन विशेषा-भावः सुप्रतिपद इत्यपरे । परापरेति । परापरव्यतिरेकयौगपद्या-

न्यायलीलावतीप्रकाशः

इत्यत आह—प्रतिभासेति । चः पुनरर्थे । अरूपत्वं पुना रूपवत्त्वेनाप्रति-भासादित्यर्थः । यद्वा अनध्यक्षत्वेन स्वरूपयोग्यताविरह उक्तः प्रति-भासाभावेन च साक्षात्काराभावः । ननु नाद्य इत्यत्र यदि प्रमाणाभावः साध्यः, तदाऽनध्यक्षत्वादिति व्यधिकरणो हेतुः । अथ प्रत्यक्षाविष-यत्वाभावः साध्यस्तदा साध्यावैशिष्ट्यम् । अत्र नाद्य इति साध्य-मेवाऽनूदितमनध्यक्षत्वादित्यनेन पञ्चमीनिर्देशश्च प्रमाणाभावमात्र-सूचनाय । यावद्विशेषाभावस्य सामान्याभावहेतुत्वादिति सम्प्रदाय-विदः । परत्वापरत्वे इति । परत्वापरत्वयोः समवायिकारणत्वा-

न्यायलीलावतीप्रकाशविवृतिः

भत्वात् । हेतुहेतुत्वे चकारानुपपत्तिरत आह—कः ( चः ? ) पुनरिति । यद्वेति । तथा च साध्यसमुच्चयार्थक भावेऽपि तयोर्लिं-ङ्गत्वं व्याप्यत्वम् । तच्च व्यापकनिरूप्यम् । तच्च एव चकार इति भावः । व्यधिकरण इति । प्रमाणाभावस्यात्मादिनिष्ठ-त्वाद्धेतोश्च कालवृत्तित्वादिति भावः । सम्प्रदायविद इति । अत्र करण-विशेषविषयत्वाभावः ( साध्यः ? ) फलाविषयत्वं हेतुः । यद्वा फ-लाभावः साध्यो योग्यताविरहो हेतुरिति वृथा कुसृष्टिव्याख्यान-मित्यस्वरसो द्रष्टव्यः । यथाश्रुते परत्वापरत्वयोरेव समवायित्वं प्रतीयत इत्यन्यथा व्याचष्टे—परमाणु (परत्वा ?) परत्वयोरिति । समवायि-

---

(१) परत्वापरत्वे स० ।

तत्समवायितया वा लिङ्गं (१)तदसमवायितया (२)तन्निमित्ततया वा। नाद्यः। "दिक्कालयोः पञ्चगुणवत्त्व"मिति भाष्य(३)विरोधात्। नेतरः। संयोगस्यैव तादृशत्वात्। सन्निकृष्टादिबुद्धेरेव तन्नि-

---

न्यायलीलावतीकण्ठाभरणम्

यौगपद्यचिरक्षिप्रप्रत्ययषट्कमित्यर्थः। समवायितयेति। समवेततयेत्यर्थः। तदसमवायीति। तस्यासमवायिनः कार्य्यतयेत्यर्थः। तन्निमित्तेति। तन्निमित्तं ययोस्तत्तुल्येत्यर्थः। तथा च कालः परत्वापरत्वे प्रति समवायिकारणमसमवायिकारणं निमित्तकारणं वेति विकल्पार्थः। असमवायिकारणसंयोगाश्रयत्वमग्रे दूष्यमित्याशयः। पञ्चगुणत्वमिति। संख्यापरिमाणपृथक्त्वसंयोगविभागा एव भाष्यकृता कालगुणा उक्ता न तु परत्वापरत्वे अपीत्यर्थः। संयोगस्येत्युपलणं द्रव्यस्यासमवायिकारणत्वाभावाद्बत्यपि द्रष्टव्यम्। सन्निकृष्टादीत्यादिपदं विप्रकृष्टग्रहणार्थम्। बहुतरतपनपरिस्पन्दान्तरितजन्मत्वं विप्रकृष्टत्वम्, अल्पतरतपनपरिस्पन्दान्तरितजन्मत्वं सन्निकृष्टत्वम्।

न्यायलीलावतीप्रकाशः

भावेऽपि तयोर्लिङ्गत्वं व्याप्यत्वम्। तच्च व्यापकनिरूप्यम्। तच्च व्यापकं समवायिकारणतयेत्यर्थः। तत्समवायितयेति पाठे तत्र समवेततयेत्यर्थः। तदसमवायिकारणतयेति। स कालोऽसमवायिकारणं यस्येति विग्रहः। "तदसमवायिकार्यतये"ति पाठे स चासमवायी चेति तदसमवायी कालः, तस्य कार्यमिति विग्रहः। तन्निमित्ततयेति! स कालो निमित्तं यस्य तस्य भावस्तत्ता। असमवायिकारणसंयोगाश्रयतया कालसिद्धिश्च न पृथग्विकल्पिता आकाशसंयोग एव तयोरसमवायिकारणमित्याशयात्। सन्निकृष्टादीति। आदिपदाद्विप्रकृष्टबुद्धिः। अल्पतरसूर्यक्रियान्तरितजन्मत्वं सन्निकर्षः। विप्रकर्षस्तु बहुतरत-

न्यायलीलावतीप्रकाशविवृतिः

कारणत्वाभावेऽपि' कालसमवायिकारणत्वाभावेऽपि। तच्च व्यापकमित्यनन्तरं कालस्येति शेषः। तद् व्यापकत्वमित्यतो न पौनरुक्त्यमिति। वस्तुतो दूषितमपि दूषणान्तरदानाय पुनराशङ्कितमि-

---

(१) समवायितया तल्लिङ्गं तद०। (२) तदसमवायिकार्य्यतया वा। (३) प्रशस्तपादभाष्यम्।

भित्तत्वात् न तृतीयोऽपि । सन्निकर्षाभावे (१)सन्निकृष्टबुद्धेरसत्त्वेन तत्सिद्ध्यर्थमवश्यं कालः स्वीकर्तव्य इति चेन्न, जगन्निमित्तभूतपरमेश्वरशक्तेरेव तदुपपत्तेः । एवं यौगपद्यादिप्रत्यया अपि न निरुपाधिसमयालम्बनाः । वैलक्षण्यानुपपत्तिप्रसङ्गात् । सोपाधिसमयावलम्बनत्वेन तत्सम्बन्धसिद्ध्यर्थं समयाभ्यर्थनं, त-

न्यायलीलावतीकण्ठाभरणम्

सन्निकर्षाभाव इति । सूर्यक्रियायाः साक्षात्सन्निकर्षो यूनि नास्ति तेन परम्परासम्बन्धः कल्पनीयः । परम्पराघटकं च पिण्डमार्त्तण्डसम्बद्धं द्रव्यं कल्पनीयम् । स च काल एवेत्यर्थः । जगन्निमित्तेत्यवश्याभ्युपगमार्थम् । परमेश्वर एव शक्तिः, ईश्वरसंयोगो वा शक्तिः । ईश्वरस्यापि व्यापकत्वे पिण्डमार्त्तण्डसंयोगसम्भवादिति भावः । तदुपपत्तेरिति । सूर्यक्रियासन्निकर्षोपपत्तेः । संयुक्तसंयुक्तसमवायोपपत्तेरित्यर्थः । ननु यौगपद्यादिप्रत्ययात् कालसिद्धिः स्यादित्याह—एवमिति । सम्बन्धसिद्ध्यर्थमिति । सूर्यक्रियापरम्परासिद्ध्यर्थमि-

न्यायलीलावतीप्रकाशः

दन्तरितजन्मत्वम् । सन्निकर्षेति । ज्येष्ठकनिष्ठयोः सूर्यक्रियाबहुत्वाल्पत्वावच्छेदबुद्धिरस्ति, सा च सम्बन्धनियता । तत्र सूर्यक्रियायाः सूर्यसमवेतायाः पिण्डेन साक्षात्सम्बन्धाभावेन परम्परासम्बन्धार्थं परम्परासम्बन्धघटकतया कालस्वीकार इत्यर्थः । परमेश्वरेति । परमेश्वर एव शक्तिः सहकारित्वात् तत एव बलक्षात् संयुक्तसंयुक्तसमवायलक्षणः परम्परासम्बन्धः सिद्ध इत्यर्थः । यद्वा परमेश्वरशक्तिर्ज्ञानादि तद्विषयत्वेनैव विशेषणताविशेषलक्षणसम्बन्धसिद्धिरित्यर्थः । सम्बन्धसिद्ध्यर्थमिति । सूर्यक्रियया पिण्डस्य परम्परासम्बन्ध-

न्यायलीलावतीप्रकाशविवृतिः

त्येवापौनरुक्त्यं प्रयोजनवत्त्वादिति सारम् । संयुक्तसंयुक्तेति । तत्प्रतीतिविषयीभूतसम्बन्धमात्रेणतरमात्रविशेषणत्वप्रतीतिरेव तत्तत्प्रतीतौ (२)प्रतिबन्धिका सा चात्र नास्ति । अन्यथा समवायेन नीलीद्रव्यमात्रविशेषणत्वेन प्रतीयमानस्य नीलरूपस्य परम्परासम्बन्धेन पटप्र-

(१) ०र्षाभावेन स० । सन्निकर्षाभावात् स० । (२) तत्र तत्प्र० ।

च्चाम्बरादि(१)द्वारेणैवोपपन्नमिति समयप्रतिबन्धस्यासिद्धेः। न च परत्वापरत्वसिद्धिरपि। बहुतरतपनपरिस्पन्दान्तरितजन्मत्वेनैव तदुपपत्तेः। अन्यथा मध्यत्वस्यापि स्वीकारप्रसङ्गादिति भूषणः। न च तपनपरिस्पन्दानां (२)साक्षादवच्छेदकतानुपपत्तौ(३) तन्निर्वाहककालकल्पनेति वाच्यम्, कालप्रतीतौ तद्द्वारा विशिष्टप्रत्ययो विशिष्टप्रत्यये च कालानुमानात् [इतरेतराश्रयादिति]। अत्रोच्यते। दृश्यते तावद्दिवसमासादिवैचित्र्येण तपन-

न्यायलीलावतीकण्ठाभरणम्

त्यर्थः। प्रतिबन्धस्येति। समयं विना सूर्य्यपिण्डसम्बन्धासिद्धिरिति प्रतिबन्धो नास्तीत्यर्थः। परत्वापरत्वे यदि स्यातां तदा काललिङ्गता सम्भाव्येतापि त एव न प्रमाणमित्यर्थं इत्याह—न चेति। तन्निमित्तकारणीभूतबहुतराल्पतरतपनपरिस्पदान्तरितजन्मत्वबुद्ध्योरेव तदुभयव्यवहारजनकत्वादित्यर्थः। अन्यथेति। यदि तादृशबुद्ध्या नान्यथासिद्धिरित्यर्थः। ननु तपनपरिस्पन्दः पिण्डावच्छेदकतया स्फुरन्तः सम्बन्धमपेक्षमाणाः कालमेव सम्बन्धमासाद्य विशिष्टप्रत्ययविषया इत्यवश्यं कालकल्पनेत्यत आह—न चेति। पूर्वं कालघटितः सम्बन्ध उक्त इदानीं काल एव सम्बन्धतया सिध्येदित्यपौनरुक्त्यम्। दृश्यते तावदिति। दिवसमासादयः सूर्य्यक्रियाघटितास्तथा च

न्यायलीलावतीप्रकाशः

सिद्ध्यर्थमित्यर्थः। बहुतरेति। परत्वापरत्वोत्पत्त्यर्थमपि नियतकारणापेक्षाबुद्धेस्तद्विषयत्वोपगमात् तत एव परापरव्यवहारोऽप्यास्त्वित्यर्थः। एवं निमित्तसन्निकृष्टादिबुद्धिकारणसम्बन्धघटकतया कालसिद्धिं निरस्य सम्प्रति परत्वापरत्वासमवायिकारणसूर्यक्रियोपनायकद्रव्यसंयोगाधारतया कालसिद्धिं निरस्यति—न चेति। अतो न पौनरुक्त्यम्। पूर्वं सूर्यक्रियाविशिष्टज्ञानान्यथानुपपत्त्या कालानुमानमुक्तमिदानीं प्रत्यक्षत एव कालः सिद्ध्यतीत्यपौनरुक्त्यमित्यन्ये। इदानीं घट इति च प्रत्यक्षं न कालसिद्धौ मानम्, उपाधिविषयत्वात्। अन्यथा कालस्यैकत्वे क्षणमुहूर्त्तादिज्ञानानुपपत्तेरिति भावः। दृश्यते तावदिति। यद्यपि

(१) तथेश्वरादिद्वा०। (२) ०स्पन्दभेदाना सा०। (३) साक्षाद तदनुपपत्तौ।

परिस्पन्दभेदानां तत्तत्पदार्थसार्थे विशिष्टबुद्धिजनकत्वम्। ते च विशिष्टबुद्धिजनने स्वप्रत्यासत्तिमपेक्षन्ते। स्वरसतोऽप्रत्यासन्नत्वे सति(१) विशिष्टव्यवहारजनकत्वात्, चन्दने सौरभवत्।

---

न्यायलीलावतीकण्ठाभरणम्

दिवसावच्छेदः क्रियावच्छेद एव सूर्यक्रियाया अतीन्द्रियत्वेऽप्युपनीतायाः प्रत्यक्षप्रतीतौ भानं विशेषणत्वेन वाच्यम्। विशेषणता च सम्बन्धाधीना सम्बन्धश्चान्यो नास्तीति संयुक्तसंयुक्तसमवायो वाच्य इति तद्घटककालसिद्धिरित्यर्थः। ते चेति। तपनपरिस्पन्दा इत्यर्थः। स्वरसतोऽप्रत्यासन्नत्वं स्वरूपसम्बन्धरहितत्वम्। ननु स्वरूपसम्बन्ध एव प्रकृते स्यादत आह—स्वरसत इति। सम्बन्धान्तरमन्तरेण विशिष्टधीविषयतया स्वरूपसम्बन्धः स्यात्। प्रकृते च सम्बन्धान्तरसम्भावनैव, अन्यथा संयोगविभागावपि न स्यातामिति

न्यायलीलावतीप्रकाशः

सूर्यगतेरतीन्द्रियतया न तद्वैशिष्ट्यं प्रत्यक्षं तथापि ज्ञानान्तरोपनीता विशेषणत्वेन प्रत्यक्षज्ञानेऽपि भासते। न च सूर्यगतेस्तद्विशेषणत्वे नैव प्रतीतेः पिण्डविशेषणत्वेन भानं न स्यात्, इतरविशेषणत्वेनाप्रतीतौ सत्यां प्रतीतेर्विशिष्टधीहेतुत्वादिति वाच्यम्, संयुक्तसंयुक्तविशेषणत्वेनेतरविशेषणतया प्रतीत्यभावात्तथात्वेन तदविरोधात्। सूर्यगतौ च क्षणादिविशिष्टधीः सत्तायां सद्बुद्धिवदभेदेऽपि नानुपपन्ना। रात्रौ च द्वीपान्तरवर्त्तिसूर्यगत्या क्षणव्यवहारः समर्थनीयः। ते चेति। सूर्यस्पन्दाः घटनिष्ठविशिष्टधीजनकप्रत्यासत्तिमन्तः घटविषयकविशिष्टधीजनकविशेषणत्वात् घटरूपवदित्यर्थः। स्वरसतोऽप्रत्यासन्नत्वं सम्बन्धान्तरं विना विशिष्टधीजनकत्वाभावः। विशेषणा-

न्यायलीलावतीप्रकाशविवृतिः

तीतिर्न स्यादिति भावः। द्वीपान्तरेति। वर्षान्तरेत्यर्थः। सूर्यस्पन्दा इति। घटविशेष्यकस्वविशेषणकधीजनकप्रत्यासत्तिमन्त इत्यर्थोऽन्यथा पटत्वविशिष्टधीजनकसमवायसत्त्वेनार्थान्तरापत्तेः। 'जनकविशेषणत्वात्' जनकज्ञानविषयविशेषणत्वात्। स्वरसत इति। यद्य-

---

(१) ०तोऽप्रत्यासत्तिविशिष्टव्य०।

स्वरसप्रत्यासत्तिरहिताश्च (१)सम्बन्धे बाधकाभावात् । परम्प-
रासम्बन्धिनश्च साक्षात्सम्बन्धविरहे सति सम्बन्धित्वात् पटसंस्-

---

न्यायलीलावतीकण्ठाभरणम्

भावः । स्वरसेति । स्वरूपसम्बन्धराहिता इत्यर्थः । अतिरिक्तसम्बन्धे बाधकाभावात् । तर्हि साक्षात्सम्बन्धघटक एव कश्चित् स्यात् समवायत्रादित्याह-परम्परेति । परम्परासम्बन्धेन विशिष्टबुद्धिजनका इत्यर्थः । यद्यप्यापाततः सम्बन्धित्वादिति स्वरूपासिद्धं स्वरूपसमवायादौ व्याभिचारश्च तथापि घटासमवेतत्वे सति घटनिष्ठविशिष्टाधीजन-

न्यायलीलावतीप्रकाशः

सिद्धिं परिहरति—स्वरसेति । 'सम्बन्धे' अतिरिक्तसम्बन्ध इत्यर्थः । परम्परेति । यद्यपि सम्बन्धमात्रासिद्धौ तद्विशेषस्य परम्परासम्बन्ध-

न्यायलीलावतीप्रकाशविवृतिः

पि विवक्षितहेतौ नैतद्विशेषणं तथापि यथाश्रुतमूलानुसारेण मूलोक्तविवरणमिदम् । विशेषणासिद्धिं परिहरतीत्यपि फक्किका मूलानुसारेणेति नवीनः(२) । वस्तुतः स्वरूपसम्बन्धेनार्थान्तरवारणाय सम्बन्धिभिन्नप्रत्यासत्तित्वमेव साध्यं तथा सति घटाभावे व्यभिचारवारणायात्रापि तद्विशेषणमिति तदभिप्रायक एवायं ग्रन्थः । न चैवमग्रे स्वरूपसम्बन्धेनार्थान्तरप्रतिपादनविरोधः । सम्बन्धिभिन्नत्वांशेऽप्रयोजकत्वमिति तद्रहितमेव साध्यं वाच्यमित्यभिमानेन तदुपपत्तेः । यद्यपीति । ननु ते चेत्यादिना सम्बन्धसाधनादिदमयुक्तम् । अत एव सम्बन्धित्वादिति हेतुरसिद्ध इत्यग्रे फक्किकापि विरुद्धा । मास्तु वा सम्बन्धसिद्धिस्तथापि नीलपटवत् प्रथमत एव परम्परासम्बन्धसाधने विरोधाभावात्तद्विशेषस्येत्यादिफक्किकानुपपन्नैव । अत्र ब्रूमः । परम्परासम्बन्धिन इत्यत्र सम्बन्धिद्वयभिन्नाघटितविशिष्टधीनियामकस्यैव सम्बन्धपदेनाभिधानम् । तस्यैव च साक्षात्परम्परासम्बन्धनामकविशेषद्वयमित्यभिमानेन पूर्वपक्षावतारात् । तदभिप्रायेणैवासिद्ध्युद्भावनमप्यग्रे । सम्बन्धत्वं साध्ये विशिष्टधीनियामकत्वमात्रमेवोक्तमन्यथा प्रकृतानुपयोगापत्ते-

---

(१) ०राहिताश्रयसम्ब० । (२) नवीनाः ।

ष्टनीलत्ववत्(१)। न चेतरेतराश्रयः। सति सम्बन्धेऽवच्छेद्या-

न्यायलीलावतीकण्ठाभरणम्

कानात्मसमवतभावत्वादिति हेतुः। नीलत्ववदिति। घटनिष्ठनीलगु-णसमवेतनीलत्वजातिवदित्यर्थः। न चेति। सम्बन्धासिद्धौ विशिष्टधी-स्तस्यां च सम्बन्धसिद्धिरित्यन्योऽन्याश्रय इत्यर्थः। विशेषणज्ञानवि-शेष्येन्द्रियसन्निकर्षात् स्वरूपसन्निव सम्बन्धो विशिष्टज्ञानं जनयति न तु ज्ञात इति नान्योऽन्याश्रय इत्याह—अवच्छेद्येति। अवच्छेदकद्वय-

न्यायलीलावतीप्रकाशः

स्यापि सिद्धिस्तथापि सम्बन्धपरम्परया विशिष्टधीजनका इति सा-ध्यार्थः, तथापि सम्बन्धित्वादिति हेतुरसिद्धः। साक्षात्सम्बन्धा भावश्च यदि संयोगसमवायाभावः, तदा स्वरूपसम्बन्धे समवाया-दौ व्यभिचारः, अन्यश्च वक्तुमशक्यः। अत्राहुः समवेतत्वे सति घटनिष्ठबुद्धिजनकत्वे च घटासमवेतत्वादित्यत्र तात्पर्यम्। नीलत्ववदिति। नीलरूपवृत्तिजातिवदित्यर्थः। सति सम्बन्ध इति। यथार्थविशिष्टज्ञाने योग्यविशेष्यसन्निकर्षो विशेषणज्ञानं तयोः सम्बन्धः स्वरूपसन्नित्येव

न्यायलीलावतीप्रकाशविवृतिः

रिति सम्बन्धपरम्परावत्त्वमेव साध्यमित्यभिसन्धानेन सिद्धान्तः। सम्बन्धपरम्परेति। विपरिवर्त्तनस्य च परम्परासम्बन्धनामकसम्बन्ध एव साध्य इति भ्रमनिराकरणं प्रयोजनम्। हेत्वसिद्धिरपि यथोक्ता-भिसन्धानेनैव निरस्येत्यग्रे तथैव हेतुरुक्तः। अन्यथे(श्चे ? ति) यद्यपि सम्बन्धिद्वयभिन्नाघटितसम्बन्ध एव साक्षात्सम्बन्ध इति तदभावो निर्वक्तुं शक्यत एव तथापि स्वरूपसम्बन्धशङ्कया निरुक्तमप्यसि-द्धमेवेत्यभिसन्धानेनैतदुक्तम्। समवेतत्वे सतीति। घटनिष्ठध्वंसे व्यभि-चार इत्याद्यम्। उदासीने व्यभिचारः घटनिरूपितपरम्परासम्ब न्धवत्त्वस्यैव साध्यत्वादिति द्वितीयम्। तस्य च घटविशेष्यकबुद्धि-जनकज्ञानविषयत्वादित्यर्थोऽन्यथाऽसिद्धेः। घटत्वे व्यभिचार इति तृतीयम्। असमवेतत्वेनासंयुक्तत्वमप्युपलक्षितमतो न संयुक्त पटे व्यभिचारः। एवमपि घटज्ञाने व्यभिचार इति गुणभिन्नत्वम-

(१) नीलिमवत्।

वच्छेदकदृश्यतयैव(१) विशिष्टव्यवहारदर्शनात् । समवायाती-

न्यायलीलावतीकण्ठाभरणम्

तापदेन विशेषणज्ञानमात्रमभिमतम् । नन्वेतावता पिण्डतपनपरिस्प-न्दयोः संयुक्तसमवायः पृथिव्यादिनैव सिध्येदिति न कालसिद्धिरि-

न्यायलीलावतीप्रकाशः

हेतुर्न तु सम्बन्धज्ञानमपीत्यर्थः । एतदेव स्फुटयति—समवायेति ।

नन्नु विशेषणतासम्बन्धेनैव सिद्धसाधनम् न च विशेषणता सम्ब न्धान्तरनियता घटाभावभूतलयोस्तदभावात् । भावत्वे सतीत्यपि न घटज्ञानयोरनेकान्तात् अस्तु वा सम्बन्धः साक्षादेव पिण्डसूर्यकर्मणोः स एव कालस्तस्य द्रव्यत्वे तद्व्यापकसंख्याद्यनेककल्पनापत्तौ गौर-वात् तथा च साक्षादसम्बन्धोऽसिद्धः । नापि परत्वापरत्वासमवा-यिकारणसंयोगाश्रयतया कालसिद्धिः, सूर्यकर्मण एवासमवायिकार-णत्वसम्भवात् । न च पिण्डेन तस्यासम्बन्धान्न तत्त्वं कालस्यैव तत्सम्बन्धरूपत्वात् । न चातीतत्वात् सूर्यकर्मणस्तदभावः परत्वाद्युत्प-त्त्यव्यवहितपूर्वं सदेव कर्मासमवायिकारणम्, अतीतकर्मविषयापेक्षाबु-

न्यायलीलावतीप्रकाशविवृतिः

पि विशेषण (म् ? । ) नीलत्वजातिश्च दृष्टान्त इत्यवधेयम् । सम्बन्धज्ञा-नमपीति । अत्र न हेतुरुपलक्षणम् । सम्बन्धविशिष्टबुद्धौ विषयो-ऽपि नेति द्रष्टव्यम् । सिद्धसाधनमिति । सूर्यस्पन्दाद्यनुमान इति शेषः । एवं च परम्परासाधनमप्रयोजकमिति भावः । ननु लाघवादेवानु-गतपरम्परासम्बन्धः समवायवत् सिद्ध्यतीत्यरुचेराह—अस्तु वेति । नन्वेवं कालः सिद्ध एवेत्यत आह—तस्येति । द्रव्यात्मकः का-लः तथाप्यसिद्ध एवेति भावः । तथा चेति । इदं च यथाश्रुतहेत्वनु-सारेण यथानिरुक्तहेतौ वा अप्रयोजकत्वमिति भावः । नापीति । तथा च संयोगाधिकरणतया तत्सिद्धौ द्रव्यत्वं सिद्धमेव तस्येति भावः । कालस्यैवेति । सम्बन्धत्वेनागतस्य द्रव्यभिन्नस्येत्यर्थः । न च कार्यकारणान्यतरैकार्थसमवायस्यासमवायिकारणतानिर्वा-हकस्य कालात्मकसम्बन्धस्वीकारेऽप्यस्वीकारात्कथ सूर्यगतेः

(१) ०श्यतामात्रेण वि० ।

न्यायलीलावतीप्रकाशः

द्धिर्निमित्तकारणमित्यदोषात्। अस्तु वा संयोग एव तथा तथाऽप्याका-
शसंयोगस्यैवासमवायिकारणत्वसम्भवेऽधिके मानाभावात्। अत्राहुः
सूर्यकर्मणा पिण्डेन साक्षात्सम्बन्धे तत्र चलतीति प्रतीतिप्रसङ्गः।
न च कर्मसमवाये तथा प्रथते, अयं तु तद्विलक्षण एव सम्बन्ध इति
वाच्यम्, अद्रव्यनिरूपितस्यातिरिक्तसाक्षात्सम्बन्धस्य समवायत्व-
व्याप्तेः। किञ्च कालाख्यसम्बन्धस्यानित्यत्वे कर्मण्यभावापत्तेः, त-
न्नित्यतायां नित्यसम्बन्धस्य समवायत्व एव पर्यवसानात्। तथा च
साक्षादसम्बन्धसिद्धौ कर्मविशिष्टज्ञानस्य कर्मातिरिक्तसम्बन्धापे-
क्षत्वनियमात् पिण्डेन तादृशसम्बन्धबुद्धौ हेतुविशेषणासिद्धिनि-
रासात्। परम्परासम्बन्धे च सिद्धे तद्घटकत्वेन कालसिद्धिः। न च
विशेषणतासम्बन्धेन विशिष्टप्रतीतिः स्वरूपसम्बन्धातिरिक्तसम्बन्धे
बाधकमन्तरेणाद्रव्यस्य तदसमवायिनि विशेषणतायाः परम्परा-
सम्बन्धेन व्याप्तत्वात् सूर्यक्रियायाः पिण्डेन सहाश्रयघटितसम्ब-
न्धकल्पनात्। नापि घटवृत्तिजातिसामानाधिकरण्यमेव सम्बन्ध

न्यायलीलावतीप्रकाशविवृतिः

समवायिकारणत्वमिति वाच्यम्, तादृशानित्यसम्बन्धमात्रस्यैव
लाघवेन तथात्वात्। नित्यसम्बन्धतायाः समवायिनिर्व-
चने कालात्मकसम्बन्धसिद्धौ तद्भिन्नत्वविशेषणादाने तद्ग्रा-
हकमानबाधादसिद्धौ च तद्भिन्नत्वाज्ञानाच्च। अद्रव्येति। घटपटसंयो-
गेऽतिप्रसक्तिरित्यद्रव्यनिरूपितेति। घटादावतिप्रसक्तिरिति सम्ब-
न्धस्येति। परम्परासम्बन्धत्वेऽतिप्रसक्तिरिति साक्षादिति। वस्तुतो
लाघवान्नित्यसम्बन्धमात्रादेव चलतीति प्रतीतिरिति तत्त्वम्। कर्म
णीति। तस्य जन्यधर्मानाश्रयत्वादिति भावः। कर्मेति। असाधार-
ण्येन कर्मणि(१) आधेयताज्ञानस्येत्यर्थः। यथाश्रुते कर्मविशिष्टा-
भावज्ञानादिप्रतीतौ स्वमते कर्मविशिष्टकालप्रतीतौ च व्यभिचारा-
पत्तेः। हेतुविशेषणेति। इदं च मूलानुसारेणेति स्मर्तव्यम्। कर्मेत्यादि-
व्याप्तिविरोधेनार्थता निराकृतमपि व्याप्त्यन्तरविरोधदानाय शङ्कते—
न च विशेषणतेति। स्वरूपेति। घटाभावविशेषणतया(२) व्यभिचार
इत्यन्तरेणेत्यन्तम्। पुरुषे दण्डविशेषणतायां व्यभिचार इत्यद्रव्य-

(१) कर्म्मण आ०। (२) विशेषणतायां व्य०।

न्द्रियत्वे शीतलं जलमितिवत् । पिण्डतपनपरिस्पन्दयोश्च संयुक्त-संयोगिसमवायात्मनि परम्परासम्बन्धेन तावत्पृथिव्यादिकं हेतुः । तपनपिण्डाभ्यामसंसर्गात् । न च भास्कर(१)करनिकरस्तथा । तदभावेऽपि गृहनिखातपदार्थेषु मासाद्यवच्छेदात्(२)। न चा-

न्यायलीलावतीकण्ठाभरणम्

स्यत आह—पिण्डेति। तदभावेऽपीति । अहस्करकरसंसर्गाभावेऽपीत्यर्थः।

न्यायलीलावतीप्रकाशः

स्तादृशी जातिर्लाघवादेकैव कल्प्या । न चैवमवयविमात्रवृत्तिरेकैव जातिरस्ति पृथिवीत्वादिना सङ्करापत्तेः । नापि द्रव्यमात्रवृत्तिः द्रव्यत्वेन सहान्यूनानतिरेकापत्तेः । द्रव्याद्रव्यवृत्तित्वं च सत्तया सहान्यूनानतिरेकापत्तेः । संयुक्तसंयोगीति । न च संयोगद्वयघटितः सम्बन्धो न संयोगत्रयघटित इत्यत्र विनिगमकाभावः, विभुद्रव्यस्य सम्बन्धघटकत्वे संयोगद्वयस्यावश्यं वाच्यत्वात् तस्यैव सम्बन्धघटकत्वात् । न चाकाशेति । ननु किमत्र साध्यं परत्वापरत्वविशेषं प्रत्येतयोर्निमित्तकारणत्वविरहो वा तदसमवायिकारणसंयोगानाश्रयत्वं वा पिण्डसंयोगसमानाधिकरणसूर्यसंयोगराहित्यं वा । ना-

न्यायलीलावतीप्रकाशविवृतिः ।

स्येति । घटरूपविशेषणतायां व्यभिचार इति तदसमवायिनीति । न चातिरिक्तद्रव्यकल्पनागौरवमेव बाधकम्, अनुगमानुरोधेन तस्याबाधकत्वादन्यथा समवायस्याप्यसिद्धिप्रसङ्गात । तादृशीति । एवं च सर्वं जात्यन्तरकल्पनापक्षे दूषणं द्रष्टव्यम् । धर्मिग्राहकमानेन जातेर्नियतोपनायकत्वेनैव सिद्धेराकाशादिवदिति प्रसङ्गाभावेन जात्यन्तरस्यैव तथात्वेन शङ्कितत्वात्। यदा तु द्रव्यत्वादिकमेव परम्परासम्बन्धघटकमिति ब्रूयात् तदा काश्मीरवृत्तिकुङ्कुमरागेण वाराणसीस्थस्फटिकमणेरुपजनप्रसङ्ग एव बाधकः । किं च तदैकस्या उन्नायकत्वे विनिगमकाभावः, सर्वासां च तथात्वे गौरवमित्येव बाधकम् । न च संयोगद्वयेति । तथा च वाय्वालोकादिकमन्तर्भाव्य कालं विनापि परम्परासम्बन्धः स्यादेवेति भावः । विभुद्रव्यस्येति । 'तस्यैव'

(१) न चाहस्करक० । (२) च्छेददर्शनात् ।

काशात्मानौ तथा, विशेषगुणवत्त्वात्, पृथिवीवत् । न चात्राव्यापकत्वमुपाधिः । तुल्ययोगक्षेमयोरुपाध्युपाधिमत्त्वाभावानुपपत्तेः । यदि च गगनमात्मा चान्यधर्मेणान्यमवच्छिन्द्यात् काश्मीरवर्त्तिना कुङ्कुमरागेण कार्णाटचक्रवर्तिकरकमल(१)मवच्छि-

## न्यायलीलावतीकण्ठाभरणम्

तथेति । पिण्डतपनपरिस्पन्दसम्बन्धघटकाविस्यर्थः । तुल्येति । साध्यव्यापकता ग्राहकमानाभावादव्यापकत्वं नोपाधिरित्यर्थः । अस्तु तर्हि सन्दिग्धोपाधिरित्यत आह--यदि चेति । अवच्छिन्द्यादिति । विशिष्ट-

## न्यायलीलावतीप्रकाशः

घः । जगत्कर्त्तुस्तन्निमित्तत्वेन भागबाधात् । सूर्यस्यापि प्रत्यासत्त्याश्रयत्वेन तथात्वे व्यभिचाराच्च । न द्वितीयः । युवस्थविरपिण्डाभ्यामनेकान्तात् । नान्त्यः । बाधात् । मैवम् । पिण्डनिष्ठसूर्यक्रियाविशिष्टप्रत्ययजनकपिण्डसूर्यसंयोगाश्रयत्वनिषेधस्य साध्यत्वात् । पिण्डसूर्यसंयोगाश्रयत्वेऽपि तयोर्विशिष्टव्यतिरेकस्य विशेषणाभावरूपत्वात् । विशेष्यवति विशिष्टाभावस्य तद्रूपत्वनैयत्यात् । न च विशेषगुणवत्त्वादित्यत्र विशेषपदव्यावर्त्यः कालोऽसिद्ध इति वाच्यम्, सामान्यतः सूर्यसंयोगोपनायकद्रव्यस्य सत्त्वेन गुणवत्त्वस्य व्यभिचारात् । तुल्येति साध्यव्यापकोपाध्यव्याप्यत्वेन साधनस्य सा-

## न्यायलीलावतीप्रकाशविवृतिः

संयोगद्वयस्यैव लाघवात् सम्बन्धघटकत्वात् । लाघवं च संयोगत्रयपक्षे न संयोगद्वयस्यावश्यवाच्यतया । ननु लाघवमप्यकिञ्चित्करं सर्वत्र संयोगद्वयेनापर्य्याप्तेरत उक्तं विभुद्रव्यस्य सम्बन्धघटकत्वे संयोगद्वयस्य सम्बन्धघटकत्वादित्यन्वयः । तथा च लाघवात् तदपि कल्प्यमिति भावः । ननु लीलावतीकारमतेन नोक्तदोष इत्यरुचेराह—सूर्य्यस्यापीति । 'तथात्वे' परम्परानिमित्तकारणत्वे । पिण्डेति । जनकान्तं संयोगस्य विशेषणं बाधवारणाय । ईश्वरस्य निमित्तकारणत्वेऽपि तत्संयोगस्यातथात्वात्त न भागबाध इति भावः । विशेषणाभावरूपत्वात् । एवमग्रेऽपि । सामान्यत इति । यद्यपि संयोगोप-

(१) ०वर्त्तिना करकमलतलमव० ।

न्यायलीलावतीप्रकाशः

व्याप्यव्यापकत्ववत् साध्यव्याप्याव्यापकत्वेनोपाधेरपि साध्याव्यापकत्वसाधनादित्यर्थः। न चैवमुपाधिमात्रोच्छेदः, यत्र साध्योपाध्योर्व्याप्तिग्राहकमानावतारः, तत्र साध्यव्यापकतानिश्चयात्। तथापि सन्दिग्धोपाधित्वेन दूषकत्वमस्त्वित्याशङ्क्य साध्यव्याप्यसाधनाव्यापकत्वेनोपाधेः साध्याव्यापकत्वनिश्चयार्थं तर्कमाह--यदि चेति। नन्वेकावच्छेदकस्य सकलावच्छेदकत्वे मानाभावाद्व्याप्त्यभावेऽत्र मूलशैथिल्यम्।

अत्राहुः। यदि सूर्यक्रिया विशिष्टप्रत्ययप्रयोजकाकाशनिरूपितसम्बन्धाश्रयः स्यात् शब्दवदाकाशातिरिक्तवृत्तिर्न स्यात्। एतद्विपर्ययश्चायं सूर्यक्रिया न तथा आकाशातिरिक्तवृत्तित्वात् शब्दत्ववत्। तत्र यदि कश्चिद्ब्रूयात् कुङ्कुमारुणिमापि गगनद्वारा कामिनीमुखमवच्छिन्द्यत एव, तत्रायं तर्कः—यदि गगनमन्यधर्मेणाऽन्यमवच्छिन्द्यात् कश्मीरवर्त्तिना कुङ्कुमरागेण कार्णाटचक्रवर्त्तिकरकमलमवच्छिन्द्यात्, यः सम्बन्धो यदवच्छेदकताबीजं तस्य तदवच्छेदकत्वेन व्याप्तत्वात्। वस्तुतो मूर्त्तत्वमव्यापकत्वं वा नोपाधिस्तथा हि मूर्त्तत्वमवच्छिन्नपरिमाणत्वम्, अव्यापकत्वं च सकलमूर्त्तसंयोगित्वाभावः। तत्रावच्छिन्नपदस्य सकलमूर्त्तपदस्य च पक्षमात्रव्यावर्त्तकविशेषणत्वेन पक्षेतरत्व-

न्यायलीलावतीप्रकाशविवृतिः

नायिका दिक् तत्र च साध्यसम्बन्धान्न व्यभिचारस्तथापि संयुज्यते अनयेति व्युत्पत्त्या संयोगपदेन क्रियोक्ता। तथा च सामान्यतः सिद्धक्रियोपनायकद्रव्ये व्यभिचार इति विशेषपदमिति भावः। सूर्यक्रियेति। अत्राकाशातिरिक्तमात्रवृत्तित्वाभाव आपाद्यस्तेनाकाशसंयोगादौ न व्यभिचारः। एवमग्रे हेतोरपि मात्रपदं योज्यम्। केचित्तु आकाशसंयोगस्याप्रत्यक्षतया न विशिष्टजनकसम्बन्धाश्रयत्वमिति न व्यभिचार इति यथाश्रुतमेव सम्यगित्याहुः। तदयुक्तम्। अविषयीभूतस्यापि सम्बन्धस्य यथार्थविशिष्टज्ञानमात्रजनकतया तस्यानुमित्यादिविशिष्टप्रत्ययजनकत्वात्। कुङ्कुमेति। तथा च तदरुणिमनि व्यभिचार इति भावः। ननु कुतर्कानुमानयोरप्रयोजकत्वमित्यरुचेराह—वस्तुत इति। यद्यपि दिशोऽपि व्यावर्त्तनान्न पक्षमात्रव्यावर्त्तकत्वं तथापि विशेषगुणवत्त्वलक्षणसाधनावच्छिन्नपक्षमात्रव्यावर्त्तकत्वमिहेशस्याप्युपाधेरत्नगर्भ आभासत इति भावः। वस्तुत इति साध्यव्यापकतामाह-

काशात्मानौ तथा, विशेषगुणवत्त्वात्, पृथिवीवत्। न चात्राऽव्यापकत्वमुपाधिः। तुल्ययोगक्षेमयोरुपाध्युपाधिमद्भावानुपपत्तेः। यदि च गगनमात्मा चान्यधर्मेणान्यमवच्छिन्द्यात् काश्मीरवर्त्तिना कुङ्कुमरागेण कार्णाटचक्रवर्तिकरकमल(१)मवच्छि-

### न्यायलीलावतीकण्ठाभरणम्

तथेति। पिण्डतपनपरिस्पन्दसम्बन्धघटकावित्यर्थः। तुल्येति। साध्यव्यापकता ग्राहकमानाभावादव्यापकत्वं नोपाधिरित्यर्थः। अस्तु तर्हि सन्दिग्धोपाधिरित्यत आह--यदि चेति। अवच्छिन्द्यादिति। विशिष्ट-

### न्यायलीलावतीप्रकाशः

षः। जगत्कर्त्तुस्तन्निमित्तत्वेन भागबाधात्। सूर्यस्यापि प्रत्यासत्त्याश्रयत्वेन तथात्वे व्यभिचाराच्च। न द्वितीयः। युवस्थविरपिण्डाभ्यामनेकान्तात्। नान्त्यः। बाधात्। मैवम्। पिण्डनिष्ठसूर्यक्रियाविशिष्टप्रत्ययजनकपिण्डसूर्यसंयोगाश्रयत्वनिषेधस्य साध्यत्वात्। पिण्डसूर्यसंयोगाश्रयत्वेऽपि तयोर्विशिष्टव्यतिरेकस्य विशेषणाभावरूपत्वात्। विशेष्यवति विशिष्टाभावस्य तद्रूपत्वनैयत्यात्। न च विशेषगुणवत्त्वादित्यत्र विशेषपदव्यावर्त्यः कालेऽसिद्ध इति वाच्यम्, सामान्यतः सूर्यसंयोगोपनायकद्रव्यस्य सत्त्वेन गुणवत्त्वस्य व्यभिचारात्। तुल्येति साध्यव्यापकोपाध्यव्याप्यत्वेन साधनस्य सा-

### न्यायलीलावतीप्रकाशविवृतिः

संयोगद्वयस्यैव लाघवात् सम्बन्धघटकत्वात्। लाघवं च संयोगत्रयपक्षे न संयोगद्वयस्यावश्यवाच्यतया। ननु लाघवमप्याकिञ्चित्करं सर्वत्र संयोगद्वयेनापर्यवसितत्वे उक्तं विभुद्रव्यस्य सम्बन्धघटकत्वे संयोगद्वयस्य सम्बन्धघटकत्वादित्यन्वयः। तथा च लाघवात् तदपि कल्प्यमिति भावः। ननु लीलावतीकारमतेन नोक्तदोष इत्यरुचेराह—सूर्यस्यापीति। 'तथात्वे' परम्परानिमित्तकारणत्वे। पिण्डेति। जनकान्तं संयोगस्य विशेषणं बाधवारणाय। ईश्वरस्य निमित्तकारणत्वेऽपि तत्संयोगस्यातथात्वात् न भागबाध इति भावः। विशेषणाभावरूपत्वात्। एवमग्रेऽपि। सामान्यत इति। यद्यपि संयोगोप-

(१) ०वर्त्तिना करकमलतलमव०।

न्यायलीलावतीप्रकाशः

व्याप्यव्याप्यत्ववत् साध्यव्याप्याव्यापकत्वेनोपाधेरपि साध्याव्यापकत्वसाधनादित्यर्थः। न चैवमुपाधिमात्रोच्छेदः, यत्र साध्योपाध्योर्व्याप्तिग्राहकमानावतारः, तत्र साध्यव्यापकतानिश्चयात्। तथापि सन्दिग्धोपाधित्वेन दूषकत्वमस्त्वित्याशङ्क्य साध्यव्याप्यसाधनाव्यापकत्वेनोपाधेः साध्याव्यापकत्वनिश्चयार्थं तर्कमाह--यदि चेति। नन्वेकावच्छेदकस्य सकलावच्छेदकत्वे मानाभावाद्व्याप्त्यभावेऽत्र मूलशैथिल्यम्।

अत्राहुः। यदि सूर्यक्रिया विशिष्टप्रत्ययप्रयोजकाकाशनिरूपितसम्बन्धाश्रयः स्यात् शब्दवदाकाशातिरिक्तवृत्तिर्न स्यात्। एतद्विपर्ययश्चायं सूर्यक्रिया न तथा आकाशातिरिक्तवृत्तित्वात् शब्दत्ववत्। तत्र यदि कश्चिद्ब्रूयात् कुङ्कुमारुणिम्नापि गगनद्वारा कामिनीमुखमवच्छिद्यत एव, तत्रायं तर्कः—यदि गगनमन्यधर्मेणाऽन्यमवच्छिन्द्यात् कश्मीरवर्तिना कुङ्कुमरागेण कार्णाटचक्रवर्त्तिकरकमलमवच्छिन्द्यात्, यः सम्बन्धो यदवच्छेदकताबीजं तस्य तदवच्छेदकत्वेन व्याप्तत्वात्। वस्तुतो मूर्त्तत्वमव्यापकत्वं वा नोपाधिस्तथा हि मूर्त्तत्वमवच्छिन्नपरिमाणत्वम्, अव्यापकत्वं च सकलमूर्त्तसंयोगित्वाभावः। तत्रावच्छिन्नपदस्य सकलमूर्त्तपदस्य च पक्षमात्रव्यावर्त्तकविशेषणत्वेन पक्षेतरत्व-

न्यायलीलावतीप्रकाशविवृतिः

नायिका दिक् तत्र च साध्यसम्बन्धान्न व्यभिचारस्तथापि संयुज्यते अनयेति व्युत्पत्त्या संयोगपदेन क्रियोक्ता। तथा च सामान्यतः सिद्धक्रियोपनायकद्रव्ये व्यभिचार इति विशेषपदमिति भावः। सूर्यक्रियेति। अत्राकाशातिरिक्तमात्रवृत्तित्वाभाव आपाद्यस्तेनाकाशसंयोगादौ न व्यभिचारः। एवमग्रे हेतोरपि मात्रपदं योज्यम्। केचित्तु आकाशसंयोगस्याप्रत्यक्षतया न विशिष्टजनकसम्बन्धाश्रयत्वमिति न व्यभिचार इति यथाश्रुतमेव सम्यगित्याहुः। तदयुक्तम्। अविषयीभूतस्यापि सम्बन्धस्य यथार्थविशिष्टज्ञानमात्रजनकतया तस्यानुमित्यादिविशिष्टप्रत्ययजनकत्वात्। कुङ्कुमेति। तथा च तदरुणिमनि व्यभिचार इति भावः। ननु कुतर्कानुमानयोरप्रयोजकत्वमित्यरुचेराह—वस्तुत इति। यद्यपि दिशोऽपि व्यावर्त्तनात्र पक्षमात्रव्यावर्त्तकत्वं तथापि विशेषगुणवत्त्वलक्षणसाधनावच्छिन्नपक्षमात्रव्यावर्त्तकत्वमिहाशस्याप्युपाधेरन्तर्गत आभासत इति भावः। वस्तुत इति साध्यव्यापकतामाह-

न्यात् । न च कालेऽप्येष प्रसङ्गः । तस्यासिद्धावाश्रयासिद्धेः । सिद्धौ वा नियतपरधर्मोपसंक्रामकत्वेनैव(१) सिद्धेः । एकस्यैवोपाध्युपनयनसामर्थ्ये च व्यापकान्तराणामन्यथासिद्धसन्निधीनामुपाधिभेदोपनयनाहेतुत्वेऽव्यापकत्वस्य(२) साध्याव्यापकत्वेवानुपाधित्वात् । व्यापकानामपि तद्धेतुत्वाभावात् । दिगेवा-

न्यायलीलावतीकण्ठाभरणम्

प्रतीतिं जनयेदित्यर्थः । एष प्रसङ्ग इति । अन्यतमधर्म्मणान्यत्र विशिष्टधीजनकत्वप्रसङ्ग इत्यर्थः । 'नियतः' प्रातिनियतः । 'परधर्म्म'स्तपनपरिस्पन्द इत्यर्थः । आकाशात्मनोः परधर्मोपनायकत्वेऽनिष्टप्रसङ्गमुक्त्वा पूर्वोक्तोपाधेः साध्याव्यापकत्वमप्याह–एकस्यैवेति । व्यापकानामिति ।

न्यायलीलावतीप्रकाशः

यदनुपाधित्वम् । ननु तथापि धर्मिकल्पनातो धर्मकल्पना लघीयसीति गगनात्मनोरेव सम्बन्धेनान्यत्र नियतपरनिष्ठधर्मविशिष्टधीजनकत्वस्वभावः कल्प्यताम् । किञ्च आकाशधर्मेष्वपि सूर्यक्रियावच्छेदोऽस्त्येव तत्राजसंयोगाभावात् । कालस्य संयोगानुपनायकत्वे स्वरूपेणैव वाच्यः आकाशादिसंयोगेनैव वेति तद्वदन्यत्रापि भविष्यति । मैवम् । घटनिष्ठसूर्यक्रियाविशिष्टज्ञानं नाकाशात्मघटितसम्बन्धजन्यं घटनिष्ठक्रियाविशिष्टज्ञानत्वात् घटश्चलतीतिविशिष्टज्ञानवत् । न च कालेऽप्येवं साध्यं सिद्ध्यसिद्धिव्याघातादित्यत्र तात्पर्यात् । सिद्धौ वेति ।

न्यायलीलावतीप्रकाशविवृतिः

कमानाभाव एवानेनोपलक्षितः । तत्तु तादृशस्याप्यनुपाधित्वे साध्यव्यापकताग्राहकमानाभाव एव बीजम् । अत्र तु साध्यव्यापकताग्राहको विपक्षबाधकस्तर्कोऽस्तीत्याशङ्कते––नन्विति। ननु सामान्यतः परधर्माऽनुपनायकत्वेन प्रमिते गगनादौ तद्विरुद्धस्वभावकल्पनालाघवसहस्रेणाप्यशक्यैवेत्यरुचेराह––किञ्चेति। 'संयोगानुपनायकत्वे' विशिष्टप्रत्ययजनकसंयुक्तसंयोगाघटकत्वे । स्वरूपस्य रूपेणैव वाच्यः । क्रियावच्छेद इति शेषः । आकाशादीति । तथा च स्वाश्रयसंयोगिसमवाय एव सूर्यक्रियया सहाकाशादिधर्मस्य सम्बन्ध इत्यर्थः । नाकाशा-

(१) ०र्म्मोपनायकत्वेनैव सि० । (२) ०त्वेऽव्यापित्वस्य ।

स्त्विति चेन्न, तस्या [एवा]असिद्धेः । सिद्धौ वा तद्धेतुत्वेनैव सिद्धेः । ततस्तपनस्पन्दभेदपिण्डसंसर्गोपनायकः पदार्थ इतरेभ्यो भिद्यते उपाधिभेदसंसर्गोपनायकत्वात् । न यदेवं न तदेवं यथा पृथिवी । एष तावच्चिरन्तनः पन्थाः । [इति] कालः ।

---

न्यायलीलावतीकण्ठाभरणम्

व्यापकान्तराणामित्यर्थः । 'उपाधिभेदः' तपनपरिस्पन्दः । एष तावदिति । नूतनं त्वग्रे वक्ष्यत इति भावः ।

न्यायलीलावतीप्रकाशः

यद्यपि बाधस्तर्केऽनुकूल एव तथापि कालस्य नियतपरधर्मोपसंक्रामकत्वं धर्मिग्राहकमानसिद्धमित्येवात्र विवक्षितं न तु बाधोऽपि । किञ्च त्वत्पक्षेऽपि साध्याव्यापकत्वमेवाव्यापकत्वोपाधेरित्याह—एकस्यैवेति । एष तावदिति । अभिनवस्तु दिशि वक्ष्यत इति भावः ॥

न्यायलीलावतीप्रकाशविवृतिः

त्मेति । अत्राकाशात्मनोः प्रत्येकं साध्यप्रवेशेन साध्यद्वयमतो न विशिष्टाभावेनार्थान्तरम् । न चात्मघटितसाध्ये स्वात्मनः सन्निकर्षजन्यतया बाधः, नात्मघटितविशेषणसम्बन्धजन्यमितिं साध्यशरीरत्वात् । आकाशात्मवैयर्थ्यं सूर्यक्रियाविशिष्टज्ञाने व्यभिचार इति घटनिष्ठेति हेतौ विशेषणम् । न चाजन्यसंयोगाभावान्न तत्र साध्याभावः, संयोगत्रयमादाय मूर्त्तद्वारा तत्सम्भवात् । न चैवमन्यत्रापि संयोगत्रयेणोपपत्तौ न कालकल्पनेति वाच्यम्, अन्यत्र लाघवेन संयोगद्वयकल्पनात्, अत्र त्वनन्यगत्या तद्बाधात् । वस्तुत आकाशादिधर्मे स्वाश्रयसंयुक्तसमवाय एव संबन्ध इत्यनन्यगत्या कल्पनीयमिति दिक् ।

न चाप्रयोजकता अन्यस्यान्यधर्मस्योपनायकस्वभावताशः पूर्वक्लृप्तस्वभावविरोधेनाकल्पनादन्यथैकद्रव्यपरिशेषापत्तेरन्यतरस्यैव व्यक्तिभेदेन स्वभाव एवोपपत्तेः । आकाशस्य च शब्दादन्यत्रान्यथासिद्धतयाऽजनकत्वात् । आत्मनस्तु एकस्य तथात्वे विनिगमकाभावात्सर्वस्य च तथात्वे गौरवादनुपनायकत्वादिति दिक् । तथापीति । इदं च समाधि(सौ?)कर्थादुक्तं वस्तुतस्तत्र तर्के बाधोऽनुगुणो

ननु दिशोऽरूपत्वे(१)नानध्यक्षत्वाल्लिङ्गाभावाच्च कथं सिद्धिः। [ननु] पूर्वापरादिदिशप्रत्ययाः सन्ति लिङ्गं, [तत्] कथं लिङ्गाभाव इति चेन्न, तेषां निरुपाधिदिगवलम्बनत्वे दिशां दशत्वप्रसङ्गे नवैवेति व्याघातात्(२)। सर्वत्र सर्वप्रत्ययप्रसङ्गा-

---

न्यायलीलावतीकण्ठाभरणम्

ननु कालाख्य एव सम्बन्धोऽस्तु तस्य द्रव्यत्वे गुणादिकल्पनैव भूयसी स्यात्। अस्तु वा क्रियया स्वरूपसंम्बन्ध एव किं कालकल्पनया आकाशात्मनोरन्यतरस्य वा सम्बन्धघटकत्वमस्तु उक्तातिप्रसङ्गो नियतपरधर्म्मोपसंक्रामकत्वं स्वभावकल्पनयैव परास्तो धर्मिकल्पनातो धर्म्मकल्पनाया लघुत्वादिति चेत्, मैवम्। कालश्चेन्नित्यसम्बन्धः स्यात्तदा समवायत्वापत्तिः क्रिया साक्षात्सम्बन्धेन विशिष्टप्रत्ययं यदि जनयेत्तदा घटादौ चलतीति प्रत्ययं कुर्य्यात्। न च तत्समवायाधीनश्चलतीति प्रत्ययः साक्षात्सम्बन्धाधीनत्वस्यैव तत्रापि तन्त्रत्वात्। न चाकाशात्मनोरेव तत्स्वाभाव्यकल्पनाऽस्तु एवं सति दिगादिविलयापत्तिः। तत्तद्द्रव्यकार्य्यस्यैकेनैव करणादाकाशात्मनोरप्येकशेषापत्तिः।

दिश इति। दिक् न वहिरिन्द्रियग्राह्यद्रव्यं अरूपत्वादित्यर्थः। नवैवेति। न च दिक्त्वेनैकेनैव रूपेण दिशामस्तु विभाग इति वाच्यम्, अनुगतव्यञ्जकाभावेन दिक्त्वजातेरेवासिद्धेरिति भावः। सर्व-

न्यायलीलावतीप्रकाशः

सर्वत्रेति। एकदिक्सम्बन्धे घटादौ गृह्यमाणे दिगन्तरसम्बन्धोऽपि

न्यायलीलावतीप्रकाशविवृतिः

यत्र तथा सति विपर्ययानुमानमविकलं तद्वैकल्यस्यानुगुण्यरूपत्वात्, यत्र तु तेन मूलभूतव्याप्तिरेव व्याहन्यते तत्र बाधो दोष एव। इह च तथाधर्मोपनायकत्वेन मूलशैथिल्यादिति सारम्। किञ्चेत्यादिग्रन्थस्तेन समाहितस्तत्रानन्यगत्या संयोगत्रयघटितसम्बन्धस्याकाशघटितसम्बन्धस्याकल्पनात्। आत्मधर्मावच्छेदार्थं तत्कल्पनाया उभयसमाधेयत्वात्। वस्तुतस्तत्रानन्यगत्या स्वरूपं सम्बन्ध इह तु न

---

(१) 'ऽरूपित्वेना०। (२) व्याघातः।

त्त्व । उपाधिमुखपिण्डीकारे तु तेनैव प्रत्ययानामन्यथासिद्धत्वा-त् । उपहितदिगवलम्बत्वेन च लिङ्गान्तरस्यासत्त्वे प्रत्ययानामनु-त्पादात् । उपाधीनां सुर्यादिगतत्वेन स्वरूपप्रत्यासत्तिशून्यत्वेना-वच्छेदकान्तरस्वीकारे तत्सिद्धिरिति चेन्न, कालेनैव तदुपपत्तेः ।

---

न्यायलीलावतीकण्ठाभरणम्

त्रेति । सर्वासामपि विभुत्वेन साधारण्यादिति भावः । उपाधीति । ति-क्ताद्यौषधभक्षणात् प्रागिक्षवादिपिण्डो मुखे प्रक्षेप्तव्यः मुखपिण्ड-स्तदुपाधिं सूर्योदयादि विषयीकृत्य एकैव दिक् पूर्वादिप्रत्ययं करो-तीत्यभ्युपगम्यत इत्यर्थः । तेनैवेति । पूर्वादिप्रत्ययघटकोपाधिनैवेत्यर्थः । ननूपहिता दिगेवपूर्वादिप्रत्ययहेतुरतो नोपाधिनाऽन्यथासिद्धिरि-त्यत आह—उपहितेति । दिशोऽतीन्द्रियत्वान्नोपहिता दिक् पूर्वादिप्रत्य-यालम्बनम्, अनुमानोपनीतापि नालम्बनम्, लिङ्गान्तराभावात् पूर्वादि-प्रत्ययेन दिगनुमानम्, अनुमिता च दिगालम्बनं चेत्तदाऽन्योऽन्याश्रय इत्यर्थः । ननु सूर्योदयादिरुपाधिः स चावच्छेदकतया सम्बन्धमन्त-रेण न भासते । सम्बन्धश्च दिग्घटित एवेति दिक्सिद्धिरित्याह—उपाधीनामिति । 'तत्सिद्धिः' दिक्सिद्धिः । कालेनैवेति । तस्य कल्पत्वा-

न्यायलीलावतीप्रकाशः

गृह्येत सर्वासां दिशां व्यापकत्वादित्यर्थः । उपाधीति । उपाधिः सूर्यो-दयादिस्तस्य अमुखपिण्डस्येव मुखपिण्डस्वकरणे यथा तिक्ताद्यौषधं मुखपिण्डं भक्षयित्वा भक्षयन्ति तथोपाधिं विषयीकृत्य एकां दिशं बुद्धयो विषयीकुर्वन्तीत्यभ्युपगम इत्यर्थः । तेनैवेति । अवश्याभ्युपगन्त-व्योपाधिभिरेव पूर्वादिप्रतीत्युपपत्तेर्न दिक्कल्पनमित्यर्थः । उपहितेति । न तावद् दिक् प्रत्यक्षेण गृह्यते लिङ्गेन तद्ग्रहणे चान्योन्याश्रयः दि-ग्विषयतया एते प्रत्यया लिङ्गं लिङ्गतया च तद्विषयत्वात् । न चान्य-लिङ्गमस्तीत्यर्थः । उपाधीनामिति । यदपेक्षया सूर्योदयाचलसंयोगसन्नि-

न्यायलीलावतीप्रकाशविवृतिः

तथा उक्तक्रमेणोपपत्तेरिति दिक् । ननु प्रमातृभेदेन सर्वत्र सर्वप्रत्यय इष्टापत्तिरित्यत आह—एकेति । तथा च प्राचीप्रत्ययकाल एव तस्यैव सर्वप्रत्ययप्रसङ्ग इत्यर्थः । दिग्विषयतयेति । अत्र तद्विषयत्वादित्यस्य त

अत्रोच्यते । कालस्य क्रियामात्रोपनायकत्वान्न संयोगो-

---

न्यायलीलावतीकण्ठाभरणम्

द्विति भावः । कालस्येति । सूर्य्यपरिस्पन्दाल्पत्वादिविषयापेक्षाबुद्धि-जन्यपरत्वापरत्वासमवायिकारणसंयोगाधिकरणत्वं क्रियामात्रोपना-यकत्वम् । सूर्य्यक्रियाविशेषणकघटादिविशेष्यकज्ञानासाधारणकारण-त्वं वा । संयुक्तसंयोगाल्पीयस्त्वविषयापेक्षाबुद्धिजन्यपरत्वापरत्वा-समवायिकारणसंयोगाधिकरणत्वं संयोगोपनायकत्वम् । यद्यपि कालस्योभयोपनायकत्वमस्तु को दोषो न वा क्रियामात्रोपना-यकत्वं धर्म्मिग्राहकमानसिद्धं किन्तु क्रियोपनायकत्वमात्रं तथा

न्यायलीलावतीप्रकाशः

हितो यो देशः सा प्राची । यदपेक्षया च सूर्यास्ताचलसन्निहितो यो दे-शः सा प्रतीची । सन्निधानन्तु सूर्यसंयोगाल्पीयस्त्वम् । तद्भूयस्त्वं च व्यवधानम् । तत्र सूर्यादिवर्त्तिसंयोगानां घटादावुपनायकत्वेन दिशः सिद्धिरित्यर्थः । कालस्येति । सूर्यक्रियाल्पीयस्त्वादिविषयापेक्षाबुद्धि-जन्यपरत्वापरत्वासमवायिकारणसंयोगाधिकरणत्वं क्रियोपनाय-कत्वम् । संयुक्तसंयोगाल्पीयस्त्वादिविषयापेक्षाबुद्धिजन्यपरत्वा-परत्वासमवायिकारणसंयोगाधिकरणत्वं च संयोगोपनायकत्वम् । यद्यपि धर्मिग्राहकमानेन क्रियोपनायकत्वं कालस्य विषयीकृतं न तु तन्मात्रोपनायकत्वम्, तथा चैकस्य कर्मणः संयोगविभागजनक-त्ववत् कालस्य सूर्यक्रियासंयोगोपनायकत्वं सम्भवत्येव विरोधाभा-

न्यायलीलावतीप्रकाशविवृतिः

द्विषयकप्रतीतिजनकत्वादित्यर्थः । एवं च लिङ्गज्ञाने सति तद्विषयकप्र-त्ययोत्पादस्तद्विषयप्रत्यय एव च लिङ्गमित्यन्योन्याश्रय इत्यर्थः सम्प-द्यते । निरुपाधिदिगालम्बनत्वपक्षेऽपि यद्यप्येष दोषो लगति तथा-पि तत्र दोषान्तरस्यैवोद्भटतया नेदमुपन्यस्तम् । सा प्राचीति । तं प्रतीति शेषः । निशावसानहेतुसुर्यसंयोगवत्त्वमुदयाव(च?)लत्वम् । निशाक(र?)रणीभूतसूर्यसंयोगवत्त्वमस्ताव(च?)लत्वम् । तेन प्राचीत्व-प्रतीचीत्वघटिततन्निर्वचनेऽन्योन्याश्रय इति निरस्तम् । सूर्यक्रियेति ।

पनायकत्वम्। नानापुरुषसाधारणप्रत्ययविषयवर्तमानाद्युपाध्युपना-
यकत्वं(१) च व्यापकं, न त्वसाधारणप्राच्याद्युपाध्युपनायकत्वम्।

---

न्यायलीलावतीकण्ठाभरणम्

पि संयोगोपनायकत्वे कालस्य कुङ्कुमादिसंयोगोपनायकत्वमपि स्यात्। एतद्विपक्षबाधकसध्रीचीनानुमानादेव च क्रियामात्रोपनाय-कत्वमपि धर्म्मिग्राहकमानसिद्धम्। तथा च उभयोः प्रतिनि-यतस्वाभाव्यसिद्धौ नान्योन्यधर्म्मवत्त्वमन्योन्यस्येति भावः। वैध-र्म्यान्तरमाह—नानापुरुषेति। यन्निरूपितं यद्वर्त्तमानं तन्निरूपितं तद्वर्त्तमा-

न्यायलीलावतीप्रकाशः

वात्, तथापि सूर्यसंयोगो न कालोपनेयः संयोगत्वात् कुङ्कुमसंयो-गवादित्येतत्परोऽयं ग्रन्थः। नानापुरुषेति। यन्निरुपितं यद्वर्त्तमानं तन्नि-

न्यायलीलावतीप्रकाशविवृतिः

यद्यप्यल्पीयस्त्वभूयस्त्वेनापेक्षाबुद्धिविषयः अस्मदादिभिस्तद्भेदान-वगमात् तथाप्यपेक्षाबुद्धिविशेषत्वमेवानेनोपलक्षितम्। वस्तुतः सामान्यतस्तदवगमोऽस्मदादीनामस्त्येव परत्वाऽपरत्वयोरन्यतरा-न्तर्भावेन लक्षणद्वयम्। एवमग्रिमपरत्वापरत्वानाधिकरणत्वे सतीति च प्रत्येकं लक्षणयोर्द्वयोर्विशेषणमतो न पिण्डातिव्याप्तिरेवमग्रा-पि। इदं च सम्भवप्राचुर्यादुक्तम्। वस्तुतो विभुत्वे सति घटादिनिष्ठ सूर्यक्रियाविशिष्टप्रत्ययजनकसम्बन्धघटकत्वं क्रियामात्रोपनायक त्वमेव सूर्यसंयोगघटितसंयोगमात्रोपनायकत्वमित्येव मूलानुसा-रेण प्रतीयते। तथापीति। यद्यप्यत्राप्रयोजकत्वममूर्त्तानुपनेयत्वं चोपा-धिस्तथापि सूर्यक्रियासम्बन्धरूपतया कालसिद्धिस्तदा साक्षात्स-म्बन्धे चलतीति धीप्रसङ्गस्येव (२)विभुद्रव्यात्मकसम्बन्धपक्षेऽपि काश्मीरवस्तुकुङ्कुमरागोपनायकत्वप्रसङ्गस्य बाधकस्य सत्त्वादनु-मानप्रवृत्तिरेव न स्यादिति तन्निरासाय नियतधर्मोपनायकत्वेनैव का-लसिद्धिर्वाच्येति तस्या एव विपक्षबाधकत्वात्। अत एवोपाधिरपि परास्तः। तदुक्तं मूलकृता कालस्य क्रियामात्रेति। न हि सूर्यक्रिया-संयोगयोरेकमुपनेयतावच्छेदकमस्ति अन्यतरत्वक्रियात्वाद्यपेक्षया गुरुत्वादिति भावः। यदिति। यदुपाधिस्वरूपं येन घटादि-

---

(१) ०यवर्त्तमानाद्युपनायकत्वं च। (२) ०स्येवाविभुद्र०।

असाधारणो ह्ययमुपाधिः। प्राच्या एव पुरुषान्तरं प्रति(१) प्रतीचीत्वात्। दिशस्तु सिद्धौ नियततपनसंयोगोपसर्पकत्वेनैव (२)प्रसङ्गस्य बाधात्। अन्यथाऽसिद्धेस्तात्सिद्धिः। दिगितरेभ्यो भिद्यते

---

न्यायलीलावतीकण्ठाभरणम्

नमेवेति साधारण्यम्। यद्वा यदेव यन्निरूपितं वर्त्तमानं तदन्यपुरुषनिरूपितमपि वर्त्तमानमेवेति साधारण्यम्। नानापुरुषे साधारणो यः प्रत्ययो वर्त्तमानत्वगोचरस्तदुचितोपाध्युपनायकत्वमित्यर्थः। या यन्निरूपिता प्राची सा पुरुषान्तरनिरूपिता प्रतीचीत्यसाधारण्यम्। यद्वा या यस्य प्राची सैव तस्य कदाचित् प्रतीचीत्यसाधारण्यम्। यदपेक्षया सूर्य्योदयाचलसन्निहितो यो देशः स तदपेक्षया प्राची। यदपेक्षयाऽस्ताचलसन्निहितो यो देशः स तदपेक्षया प्रतीची। सन्निधानव्यवधाने च नियते इत्यसाधारण्यमिति भावः। ननु तर्हि दिगेव सूर्य्योपनायिकाऽस्तु किं कालेनेत्यत आह—दिशस्त्विति। यद्वा यदि दिक् अन्यधर्म्ममन्यत्रोपनयेत् तदा कुङ्कुमसंयोगाद्यपि अन्यत्रोपनयेदिति प्रसङ्गस्य बाधादित्यर्थः। अन्यथेति। यदि न

न्यायलीलावतीप्रकाशः

रूपितं तद्वर्त्तमानमेवेति साधारण्यम्। या तु यन्निरूपिता प्राची सा तन्निरूपिता प्रतीच्यपीत्यसाधारण्यमित्यर्थः। दिशस्त्विति। 'नियततपनसंयोगः' उदयाऽस्तादिपर्वतसंयोगः। कालवद् दिश्यपि संयोगानुपनायकत्वमित्यस्य प्रसङ्गस्य बाधादित्यर्थः। अन्यथेति। दिगसिद्धौ प्रसङ्गस्याश्रयासिद्धेरित्यर्थः। 'तत्सिद्धिः' दिक्सिद्धिरित्यर्थः। तत्रैकैव दिगुपाधिभेदात्प्राच्यादिव्यवहारहेतुः। प्राचीप्रतीचीव्यवहारनिदानमुपाधिर्निरुक्त एव। पूर्वाभिमुखावस्थितशरीरदक्षिणभागावच्छिन्नो देशो दक्षिणा। तथाविधशरीरवामभागावच्छिन्नो देश उदी

न्यायलीलावतीप्रकाशविवृतिः

ना निरूप्यमाणमेकस्य पुरुषस्य वर्त्तमानत्वं तेन निरूप्यमाणसर्वस्यापि पुरुषस्य वर्त्तमानत्वमेव। प्राचीत्वाद्युपाधिस्तु नैवं तेनैव घटेन निरूप्यमाणस्य तस्य पुरुषान्तरं प्रति प्राचीत्वोपाधि(३)रूप-

---

(१) पुरुषान्तरापेक्षया। (२) ०पसम्पर्कत्वेनैव। (३) प्रतीचीत्वोपा०।

पूर्वापरादि(१)प्रत्ययाविषयसंयोगोपनायकत्वात्, न यदेवं न

न्यायलीलावतीकण्ठाभरणम्

दिक् सिद्धा तदा प्रसङ्गोऽयमाश्रयासिद्ध एवेति तत्सिद्धिः। दिक्सिद्धिरित्यर्थः। यद्वा अन्यथा द्रव्यान्तरेण संयोगोपनया-सिद्धेर्दिक्सिद्धिरित्यर्थः। पूर्वापरादीति। आदिपदादुत्तरदक्षिणो-

न्यायलीलावतीप्रकाशः

ची। वामत्वदक्षिणत्वे च शरीरावयववृत्तिजाती। घटादौ[च]वामादिव्य-वहारो गौणः। गुरुत्वासमवायिकारणकक्रियाजन्यसंयोगाश्रयो देशो-ऽधः। अदृष्टवदात्मसंयोगजाग्निक्रियाजन्यसंयोगाश्रयो देश ऊर्ध्वा(२)। यद्वा इन्द्रादिचतुर्देवताकत्वेन प्राच्यादयो निर्वक्तव्याः। पूर्वादीति।

न्यायलीलावतीप्रकाशविवृतिः

त्वादित्यर्थः। वामत्वेति। न च करत्वादिना सङ्करभयेन तन्नानात्वे कथ-मनुगतोत्तरत्वादिव्यवहार इति वाच्यम्, तत्तदुत्तरव्यवहारस्या-प्यननुगतत्वात्। तत्तद्दक्षिणत्वाभावकूटसमानाधिकरणशरीरावयव-वृत्तिजातित्वेनानुगमाद्वा। एवमपरत्रापि। न च पश्चिमाभिमुखावस्थ-तद्दक्षिणभागावच्छिन्नत्वमपि तुल्यन्यायतया उत्तरत्वमित्यनु-गमः। तत्तदाति ( भि? ) मुखावस्थिततत्तत्पुरुषस्य तेन तेनोपा-धिना उत्तरत्वव्यवहारात्। अनयैव रीत्या दक्षिणत्वेऽपि पूर्वपक्षस-माधाने। अनुगतव्यवहारश्चोभयत्र देवतापरिग्रहनियम्यन एव प्राची-त्वप्रतीचीत्वव्यवहारोऽप्येवम्। अन्यथा (या?) यदपेक्षयाऽस्ताचलसूर्य-संयोगव्यवहिता सा तदपेक्षया प्राची। एवमुदयाचलान्तर्भावेन प्र-तीचीति तयोर्निर्वचनेऽननुगमापत्तेरिति दिक्। घटादौ नेति। प्रचीतिश्च तत्सादृश्यादानो(रो?)परूपेति भावः। न च वैपरीत्यमेव कुतो न स्यादिति वाच्यम्, शरीरावयवे वामत्वदक्षिणत्वयोर्झटिति प्रतीतेरे-व विनिगमकत्वात्। गुरुत्वेति। अत्र तत्क्रियानाश्रयत्वे सतीत्यपि वि-शेषणम्। न च संयोगे तादृशक्रियाजन्यत्वमधःसंयोगत्वेनैव ग्राह्य-मित्यन्योन्याश्रय इति वाच्यम्, संयोगत्वेन क्रियाजन्यत्वग्रहे क्रिया-त्वावान्तरजात्यवच्छेदेन गुरुत्वासमवायिकारणकत्वग्रहे विशिष्ट-वैशिष्ट्यधीसम्भवात्। एवमुत्तरत्रापि। अदृष्टेति। वायुक्रियाजन्यसं-

(१) पूर्वादीति प्रकाशसम्मतः पाठः। (२) ऊर्द्धः।

तदेवं, यथा पृथिवी ।

---

न्यायलीलावतीकण्ठाभरणम्

द्वयोर्व्यवहारकारणत्वसङ्ग्रहः । प्रत्येकं च एषां च व्यवहाराणां दिगितरभेदहेतुत्वमन्यथा तव वैयर्थ्यापत्तेः । तत्र सूर्योदयाचलसम्मुखावस्थितशरीरदक्षिणभागावच्छिन्नो देशो दक्षिणा । तथाविधशरीरवामभागावच्छिन्नो देश उदीची । वामत्वदक्षिणत्वे शरीरावयववृत्ती जाती इति नान्योन्याश्रयः । अत एव प्रत्यङ्मुखस्य शरीरस्य वामभागावच्छिन्नापि दिग् दक्षिणा दक्षिणभागावच्छिन्ना च उत्तरा । घटादौ वामदक्षिणव्यवहारो गौणः । पतनक्रियाजन्यसंयोगाश्रयो देशोऽधः । स्वाभाविकवह्निक्रियाजन्यसंयोगाश्रयो दिगूर्ध्वा । इन्द्रादितत्तद्देवताधिष्ठानत्वेन वा पूर्वादित्वं वाच्यम् । दिगितरेभ्यो भिद्यते संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वविषयकापेक्षाबुद्धिजन्यपरत्वापरत्वासमवायिकारणसंयोगाश्रयविभुत्वादि(ति ? ) स्वयमूह्यम् ।

ननु प्राच्यादिव्यवहारवैलक्षण्यमेकदिगसाध्यमतो दिगनेकत्वं प्रसक्तमेवं कालानेकत्वमित्याह—

न्यायलीलावतीप्रकाशविवृतिः

योगाश्रयतिर्यगादावतिव्याप्तिवारणायाग्निपदम् । अभिघातजाग्निक्रियामादाय तत्रैवातिव्याप्तिरिति प्रथमदलम् । यद्यपि अदृष्टवदात्मसंयोगस्य क्रियामात्रकारणतया तदतिव्याप्तिस्तदवस्था तथाप्यसमवायिकारणत्वमत्र विवक्षितमित्यदोषः । स्वाभाविकत्वमेव प्रथमदलार्थं इत्यप्याहुः । नन्वमीनोपाधयः प्रलयकालेऽसम्भवादिति चेत्, न, तदा तद्व्यवहाराभावात् । भावे वातीतानामेवोक्तोपाधीनामुपलक्षणतया तत्तदिक्प्रदेशव्यावर्त्तकत्वात् । नन्वनुगतव्यवहारो देवतापरिग्रहनिबन्धन एवेत्युक्तमेव तत् किमुक्तोपाधिभिरित्यपरितोषादाह—यद्वेति । ननु देवतापरिग्रहविशेष एव कथमवच्छेदकं विना ग्राह्य इति चेत्, न, अननुगतनिरुक्तोपाध्यवच्छेदेनैव तद्ग्रहात् । न चैवमुपाधिभिरेव दिग्व्यवहारोऽप्यस्त्विति वाच्यम्, अन(?)नुगतसम्भवेऽननुगतानादरात् । तत्तद्देवतापरिग्रहः पुरुषविशेषकालविशेषापेक्ष एव । कथमन्यथैकत्रैव पुरुषभेदकालभेदेनेन्द्रवरुणयोः पूजेत्येकदैवैकस्यैव एकत्र प्राचीप्रतीचीत्वव्यवहारप्रसङ्ग इति दूषणम-

एवं सति पूर्वाद्युपाध्युपनायकत्वेनैव दिशो नियमादनेक-दिक्कल्पनापत्तिः, तद्वदनेककालकल्पनापत्तिश्चेति चेत्, न, अने-कत्वे[ना]ऽपि क्रियोपाध्युपनायकः कालः । संयोगोपाध्युपना-यिका च दिगिति न नैवेति व्याघातः(१) ।

न्यायलीलावतीकण्ठाभरणम्

एवं सतीति । एकदेशिमतेनाह--अनेकत्वेनापीति । क्रियोपनायकत्व-

न्यायलीलावतीप्रकाशः

सूर्यपिण्डाभ्यां वैशिष्ट्यघटकसंयोगाश्रयत्वे सति संयोगवैशिष्ट्य-घटकसंयोगाश्रयत्वादित्यर्थः । तेन संयोगविशिष्टज्ञानहेतुत्वं संयोगो-पनायकत्वं सूर्येऽप्यस्तीति व्यभिचार इति निरस्तम् । ननु संयोगो-पनायकत्वे दिशोऽनेकत्वं स्यात् प्राच्युपाध्यवच्छेदवत् प्रतीच्युपा-ध्यवच्छेदस्यापि सम्भवादित्याह—एवं सतीति । तद्वदिति । दिशोऽनेका-वच्छेदवशादनेकत्ववत् कालस्यापि चिराक्षिप्राद्युपाधिवशादनेकत्व-मित्यर्थः । एकदेशिमतेनाह--अनेकत्वेऽपीति । अनेकदिक्कालसिद्ध्यर्थमाह-

न्यायलीलावतीप्रकाशविवृतिः

पास्तम् । संयोगोपनायकत्वं संयोगविशिष्टप्रत्ययजनकत्वमात्मन्येव-व्यभिचारीति हेत्वर्थमाह--सूर्येति । अत्र विशेष्यमात्रे सूर्यपिण्डाभ्यां व्यभिचार इति सूर्यपिण्डाभ्यां सयोगित्वे सतीति विशेषणम् । तद-र्थश्च तदुभयप्रतियोगिकसंयोगाश्रयत्वम् । न च तयोस्तथात्वं दिश-स्तु विभुतया तथात्वम् । तावति कृते आत्ममनःसंयोगमादायात्मनि व्यभिचारः विशेष्यभागस्थस्य वैशिष्ट्यघटकत्वस्य तद्बीजनक-त्वार्थकादिति प्रथमदले वैशिष्ट्यघटकत्वं संयोगे विशेषणम् । न च पिण्डात्मसंयोगः सूर्यात्मसंयोगो वा वैशिष्ट्यघटकः सत्यन्तमात्रं च क्रियावैशिष्ट्यघटकतामादाय कालेऽपि गतमत उत्तरप्रतीकम् । तत्रापि संयोगवैशिष्ट्यघटकत्वादित्युच्यमाने काले व्यभिचारस्तद-वस्थ एव तस्य जगन्निमित्तकारणत्वादिति तादृशसंयोगाश्रयत्वप-र्यन्तमुक्तम् । कालसंयोगश्च न तथेति नोक्तदोषः । अनेकेति । दिक्का-

(१) ०पनायिका दिक् । न च नैवेति विरोधः ।

आत्मनामानन्त्येऽपि आत्मत्वेनोपसंग्रहवदविरोधात्। परम-महत्परिमाणसामान्यं वा (१)विशेषगुणशून्यद्रव्याधिकरणानेकव्य-क्तिवृत्ति,परिमाणतारतम्यविश्रान्तिविषयजातित्वात् अणुत्ववत्। न

---

न्यायलीलावतीकण्ठाभरणम्

संयोगोपनायकत्वोपाधिद्वयाधीन एव दिङ्नानात्वकालनानात्वपक्षेऽपि द्रव्याविभाग इत्यर्थः। परममहदिति। परममहत्परिमाणवृत्तिजातिः पक्षः। विशेषगुणशून्यानि द्रव्याण्यधिकरणं यासां परिमाणव्यक्तीनां तद्वृत्तित्वं साध्यम्। परिमाणतारतम्यविश्रान्तिसमानाधिकरणजातित्वादिति हेतुः। तथा च परिमाणतारतम्यं परममहत्त्वे परमाणुत्वे च विश्राम्यति तत्कृता परममहत्त्वत्वं परमाणुत्वत्वं च जातिः पर्य्यवस्यति। एतच्च यद्यपि दिक्कालयोरेकैकत्वेऽपि सम्भवति तथाप्यनेकपदं बहुपरं विलक्षणे पूर्वापरादिव्यवहारान्यथानुपपत्तिश्चानुकूलस्तर्कः। परममहत्त्वं विशेषगुणासमानाधिकरणनानापरिमाणवृत्तिजातिमत् तद्भिन्नविशेषगुणासमानाधिकरणनित्यपरिमाणवृत्तिजातियोगित्वादणुत्ववदित्यत्र वा तात्पर्य्यम्।

न्यायलीलावतीप्रकाशः

परममहदिति। नन्वनेकव्यक्तिवृत्तित्वं यद्येकत्वानधिकरणवृत्तित्वं तदा सिद्धसाधनम्। अथानेकसङ्ख्याधिकरणवृत्तित्वं तदा बाधः। मैवम्। परममहत्त्वं विशेषगुणासमानाधिकरणपरिमाणवृत्तित्वे सति ताद्ट-

न्यायलीलावतीप्रकाशविवृतिः

लयोः प्रत्येकमनेकत्वसिद्ध्यर्थमित्यर्थः। सम्भूयानेकत्वस्य फलतः साधितत्वात्। परममहत्त्वमिति। अत्र भावप्रधानो निर्देशः। विशेषगुणासमानाधिकरणपरिमाणवृत्तीति साध्ये दिक्कालयोरेकसिद्ध्याऽर्थान्तरमतस्तादृशपरिमाणभिन्नेऽति परिमाणविशेषणम्। तथापि मनःपरिमाणभिन्नत्वमादायोक्तार्थान्तरतादवस्थ्यमतः सत्यन्तम्। न च तथापि तद्दोषतादवस्थ्यं दिक्परिमाणवृत्तित्वेनैवोभयदलपर्याप्तेरिति वाच्यम्, सत्यन्तसाहित्येन स्वाश्रयीभूतविशेषगुणासमानाधिकरणपरिमाणभिन्नविशेषगुणासमानाधिकरणपरिमाणवृत्तित्वस्य सा-

---

(१) ०णसाम्यं वा।

चानन्त्यकल्पनम् । उक्तोत्तरत्वात् । परममहत्परिमाणं द्रव्यचतुष्ट-यवृत्ति नित्यपरिमाणत्वादिति [तु] बाधितम् । परिमाणस्य प्रत्येकं

---

न्यायलीलावतीकण्ठाभरणम्

उक्तोत्तरत्वादिति । आनन्त्येऽपि एकधर्म्मावच्छेदेनैव विभा-गोपपत्तेरित्यर्थः । दिगनेकत्वे मानान्तरमाशङ्क्य निराकरो-ति—परममहदिति । बाधितत्वमेवाह—परिमाणस्येति । न ह्येकं परि-माणं चतुर्षु द्रव्येषु वर्त्तते । परिमाणमेलकस्य तु परिमाणवृत्तित्वान्न द्रव्यवृत्तित्वम् । यद्यप्याकाशं विशेषगुणशून्यमात्रवृत्तित्रित्वव्यापक-विस्वविभुवृत्तिव्यतिरिक्तचतुष्ट्ववत् स्पर्शशून्यद्रव्यत्वादित्यत्र तात्-पर्य्ये बाधो न भवति । तथाप्येकदेशिनोऽनभिसंहितमेतत् । पूर्वा-

न्यायलीलावतीप्रकाशः

शपरिमाणभिन्नविशेषगुणासमानाधिकरणपरिमाणवृत्ति नित्यपरि-माणमात्रवृत्तिजातित्वात् अणुत्ववदिति विवक्षितत्वात् । उक्तोत्तरत्वा-

न्यायलीलावतीप्रकाशविवृतिः

द्यस्य लाभात् । न च तथाप्येकैकदिक्कालसिद्ध्याऽर्थान्तरं तादृशबहुप-रिमाणवृत्तित्वे च साध्येऽन्यतरानेकत्वसिद्ध्याऽर्थान्तरं सत्यन्तवैय-र्थ्यापत्तिश्चेति वाच्यम् , स्वाश्रयीभूतविशेषगुणासमानाधिकरण-दिगवृत्तिपरिमाणभिन्नविशेषगुणासमानाधिकरणादिगवृत्तिपरिमाणवृ-त्तित्वे सति स्वाश्रयीभूतकालावृत्तिविशेषगुणासमानाधिकरणपरिमा-णभिन्नविशेषगुणासमानाधिकरणकालावृत्तिपरिमाणवृत्तित्वस्य सा-ध्यत्वात् । दिगादेः सिद्धावेव तदनेकत्वसिद्ध्यर्थमस्यानुमानस्यावतार इति न दिगाद्यसिद्धिनिबन्धनसाध्याप्रसिद्धिशङ्केति । वस्तुतः सत्य-न्ते विशेषगुणपदं विभुविशेषगुणपदं परिमाणपदं च द्रव्यविभाज-कोपाधिसमानाधिकरणनानापरिमाणपरम् । तादृशपदं च सत्यन्त-प्रविष्टोपाधिसमानाधिकरणपरम । अग्रिमपरिमाणपदं च नानापरि-माणपरम् । एवं च विभुविशेषगुणासमानाधिकरणैकद्रव्यविभाजको-पाधिसमानाधिकरणनानापरिमाणवृत्तित्वे सति तदुपाधिकरणविशे-षगुणासमानाधिकरणनानापरिमाणवृत्तित्वं साध्यम् । विभुपदप्रक्षेपश्च दृष्टान्तलाभायेति सङ्क्षेपः ।

नित्येति । जन्यमहत्त्वमात्रवृत्तिजातौ व्यभिचार इति नित्यपदम् ।

मेलकेन वा द्रव्यचतुष्टयावृत्तित्वात्(१)। न च मनसा सिद्धसाधनम्।

न्यायलीलावतीकण्ठाभरणम्

नुमाने विशेषगुणशून्यत्वविष्टम्भात् कथञ्चिदाशङ्का । न चेति ।

न्यायलीलावतीप्रकाशः

दिति। आनन्त्येऽप्येकधर्मावच्छेदेनैक्यादित्यर्थः । बाधितमिति यथा-श्रुते दूषणम्। यदा त्वाकाशं विश्वविभुवृत्तिव्यतिरिक्तविशेषगुणशून्य-मात्रवृत्तिद्वित्वव्यापकत्रित्ववत् (२)स्पर्शशून्यानित्यद्रव्यत्वादित्यत्र ता-त्पर्यं कल्प्यते तदा न बाधः। पूर्वोक्तानुमानेऽन्यस्य दूषणं दूषयति–न

न्यायलीलावतीप्रकाशविवृतिः

तत्तदणुत्वत्वादौ व्यभिचार इति जातिपदम्। मात्रपदं तु यद्यस्ति तदा स्वरूपनिर्वचनपरम्। आनन्त्येपीति। एवं च मूले कल्पनमित्यनन्तरं दो षायेति शेष इति भावः। "द्रव्यचतुष्टयवृत्ती" ति मूलं तस्य विशेषगु-णशून्यद्रव्यचतुष्टयवृत्तीत्यर्थस्तेन नात्मवृत्तितया सिद्धसाधनम्। वि-श्वेति। विश्वविभुवृत्तिव्यतिरिक्तं विशेषगुणशून्यमात्रवृत्तित्रित्वव्या-पकं च यच्चतुष्टं तद्वत्त्वं साध्यम्। अत्र मनोमात्रवृत्तित्वव्यापकचतु-ष्टेन सिद्धसाधनमतो व्यतिरिक्तान्तं विशेषणम्। तत्रापि दृष्टान्तला-भार्थं विभुपदं बाधवारणाय चाविभुपदम्। विशिष्टाभावश्चोभयथा-पि विशेषपदत्यागेऽप्रसिद्धिरिति तदुपादानम्। दिक्कालात्मवृत्तित्रि-त्वव्यापकचतुष्टेन सिद्धसाधनमिति मात्रपदम्। यद्यपि दिक्कालयो-रन्यतरमात्रनानात्वमेवं सिध्यति तथापि मूलोक्तबाधनिराकर-णं तावतापि भवत्येवेति तात्पर्यम् वस्तुतस्तु परस्परसमानाधि-करणद्रव्यविभाजकोपाध्यसमानाधिकरणविशेषगुणशून्यमात्रवृत्तिना-नात्रित्वव्यापकविश्वविभुवृत्तिव्यतिरिक्तनानाचतुष्टवत्त्वं साध्यम्। विशेषगुणपदं च ज्ञानपरमतो न दृष्टान्तासिद्धिः। अत एव द्वित्वव्यापकेत्यपि पाठः सङ्गच्छते। तथा सति कालयो-र्दिशोश्चासिद्धेः। स्पर्शशून्येति। अत्र स्पर्शशून्यद्रव्यत्वान्नित्यद्रव्यत्वा-दिति हेतुद्वयमन्यथा व्यर्थतापत्तेः। अत्रानुत्पन्नचतुष्टनष्टघटे व्यभि-चार इत्याद्यं गुणादौ व्यभिचार इति द्वितीयं विशेषणम्। न च विरुद्धस्पर्शवदारब्धद्रव्ये प्रथमहेतौ व्यभिचारः। द्रव्यप्रत्यक्षत्वानुरो-

(१) ०ष्टयवृत्तित्वाभावात्। (२) त्रित्वव्यापकचतुष्कवत् स्प०।

तस्याणुत्वात् । न च कालकृतपरत्ववैलक्षण्यादस्य दिक्कृतत्वम् । कालजन्यत्वेन तद्वैलक्षण्यसिद्धेः(१)। स्वरूपवैलक्षण्यस्य [च]

न्यायलीलावतीकण्ठाभरणम्

तस्याणुत्वादिति । तथा च मनसि बाध एव, कुतः सिद्धसाधनमिति भावः। आनन्त्यापत्तिपराघाताद्दिक्सिद्धिरेव नास्तीति येन पूर्वपक्षः कृतः स दिक्सिद्धौ सिद्धान्तिनो मतमाशङ्क्य निराकरोति—न चेति। अस्येति। संयुक्तसंयोगभूयस्त्वगोचरापेक्षाबुद्धिजन्यपरत्वस्येत्यर्थः । तथा च दिक् कालभिन्ना विलक्षणपरत्वजनकत्वादिति भावः। अत्राह—कालेति । कालाजन्यत्वेन यदि वैलक्षण्यमभिमतं तदा स्वरूपासिद्धिः दिक्कृतत्वेनाभिमतस्यापि परत्वस्य कालजन्यत्वात् कालस्य सर्वोत्पत्तिमत्कारणत्वात् । अथ दिक्कृतत्वमेव वैलक्षण्यं तदान्योऽन्याश्रय इति भावः । ननु दिशः कालभेदसाधने परत्वयोः स्वरूपभेद एव हेतुरत आह—स्वरूपेति। एवं सति कालकृतानामपि

न्यायलीलावतीप्रकाशः

चेति। कस्यचिन्मतमाशङ्क्य निराकरोति—न चेति । अस्येति । संयुक्तसंयोगभूयस्त्वगोचरापेक्षाबुद्धिजन्यदिक्कृतपरत्वस्येत्यर्थः । वैलक्षण्यासिद्धेरिति । कालस्य तत्रापि कारणत्वादित्यर्थः । स्वरूपवैलक्षण्यस्येति ।

न्यायलीलावतीप्रकाशविवृतिः

धेन तत्र चित्रस्पर्शस्वीकारात् । केचित्तु नित्यं सर्वदा स्पर्शशून्यद्रव्यत्वादित्यर्थः। तथा च स्पर्शात्यन्ताभाववद्द्रव्यत्वादित्यर्थो लभ्यते। तेन स्पर्शप्रागभाववत्युत्पन्नचतुष्ट्वे न व्यभिचारः। न च द्रव्ये क्षणिकताया अस्वीकारादुत्पत्त्युत्तरक्षणे उत्तरापेक्षाबुद्ध्या चतुष्ट्वापादानात्तत्र व्यभिचार इति वाच्यम्, असमवायिकारणत्वैकत्वस्य द्वितीयक्षणे उत्पत्त्या तत्क्षणे चतुष्ट्वानुत्पत्तेस्तृतीयक्षणे च द्रव्यनाशस्यासम्भवादित्याहुः। अत्र समवायाधिकरणैकत्वेनैव हेतुत्वं लाघवात्तु सकलस्वाश्रयवृत्त्येकत्वेनेति व्यक्त्यन्तरावृत्त्येकत्वादेव तत्र चतुष्ट्वोत्पत्तिर्द्वितीयक्षणे भवतीति दूषणमाहुः । तच्चिन्त्यम् । तत्रिष्ठचतुष्ट्वं प्रति तदेकत्वेन कारणत्वादन्यथा तत्र चतुष्ट्वोत्पत्तौ नियामकाभावादिति दिक् । कस्यचिदिति । कालकृतपरत्वविलक्षणपरत्वकारणत्वेन

(१) कालाजन्यत्वेन वैलक्षण्यासिद्धेः ।

कालकृतेना(१)परत्वेन व्यभिचारात् । विलक्षणदेशकालव्यव-हारबलेन दिक्कालभेदकल्पनेति [तु] न वाच्यम् । व्यवहारविष-यभेदे प्रत्ययं(२) विना विचित्रव्यवहारस्यैवानुपपत्तेः । अज्ञाते (३)व्यवहाराभावात् । व्यवहारविषयभेद[परि]ज्ञानं च न प्रत्य-क्षात् तयोरतीन्द्रियत्वात् । नानुमानात् । तेषां दूषितत्वात् । न व्यवहारादितरेतराश्रयात् । तत्परिज्ञाने हि तद्व्यवहर्तव्यता (४)तद्व्य-वहारे च तत्परिज्ञानमिति । अत्रोच्यते(५) । विवादाध्यासि-

न्यायलीलावतीकण्ठाभरणम्

परत्वानां स्वरूपवैलक्षण्यसत्त्वाद् व्यभिचार इत्यर्थः । अपरत्वेनेत्यु-पलक्षणपरं परत्वान्तरेणापीत्यर्थः । ननु सर्वसाधारणदेशकालव्यव-हारबलादेव कालदिशोर्भेदसिद्धिरित्याशङ्क्य निराकरोति—विलक्ष-णेति । व्यवहारो हि शब्दप्रयोगस्तस्य च वैलक्षण्यं विलक्षणविषय-ज्ञानाधीनं तदेव च न सिद्धमित्याह—व्यवहारेति ।

ननु व्यवहर्तव्यभेदज्ञानाधीन एव व्यवहारभेदः स्यादित्यत आह—तेषामिति । पूर्वापरादिप्रत्ययानां दूषितत्वादुपाधिनैवान्यथासि-द्धिरित्यादिनेत्यर्थः । ननु व्यवहारभेदाक्षिप्तेनैव व्यवहर्तव्यभेदज्ञानं स्यादित्यत आह—न व्यवहारेति । 'अत्रोच्यते' एवं सत्यनेकदिक्कल्पना-पत्तिरिति यत् पूर्वपक्षितं तत्र उच्यते इत्यर्थः । क्वचित् पाठः—अथ वेति । दिगानन्त्यं यदेकदेशिनोक्तं तत्रापरितोषात् पक्षान्तरमिदमुच्यत इत्यर्थः । विवादाध्यासितानीति दृष्टान्तलाभार्थं तद्व्यावर्त्तनाय अन्यथाऽ-

न्यायलीलावतीप्रकाशः

व्यक्तिभेदरूपस्येत्यर्थः । अपरत्वेनेत्युपलक्षणं परत्वान्तरेणापीति द्रष्टव्यम् । तेषामिति । परत्वापरत्वचिरक्षिप्रप्रत्ययादीनां लिङ्गानामि-त्यर्थः । स्वाभिमतं दिगनुमानमाह—अथ वेति । एकदेश्यनुमानभेदेनाधि

न्यायलीलावतीप्रकाशविवृतिः

दिशः सिद्धिरिति मतं तन्निराकरणेन च मदुक्तमेवैतत्साधनं सम्यक्, न त्विदमित्युक्तम् । उपलक्षणमिति । एतच्च स्वरूपवैलक्षण्यपदस्य व्यक्ति-

(१) ०व्यस्याकालकृतेनाप० । (२) ०यभेदप्रत्ययं वि० ।
(३) अज्ञातव्यव० । (४) तयोर्व्यव० । (५) अथ वा ।

तानि कर्माणि (१)निरवयवेन्द्रियग्राह्यविशेषगुणवज्जातीय (२) वर्जितसाधारणद्रव्याधिकरणजन्यानि कार्यत्वात् अभिमततन्तुहेतुकद्रव्यगुणकर्मवत् । न च शब्दसुखादिभिर्व्यभिचारः । एवम्भूताधारजन्यत्वेन तेषामपि पक्षत्वात्(३) । विशेषगुणाधार(४)जन्य-

———— —

न्यायलीलावतीकण्ठाभरणम्

नुपसंहारितापत्तेः। निरवयवेन्द्रिये श्रोत्रमनसी तद्ग्राह्यो यो विशेषगुणजातीयः शब्दज्ञानादिस्तद्वर्जितं तच्छून्यं यत् साधारणं द्रव्यं तदेवाधिकरणं तज्जन्यानीत्यर्थः । अत्र दृष्टान्तः साध्यविकलो माभूदत उक्तं निरवयवेन्द्रियेति । वर्जितपर्यन्तविशेषणमहिम्ना आकाशात्मभ्यामन्यथासिद्धिनिरासः । जातीयपदमीश्वरात्मनोऽन्यथासिद्धिवारणाय तस्यापि मनोग्राह्यजातीयगुणवत्त्वात् । असमवायिकारणैरन्यथासिद्धिवारणाय साधारणेति । द्रव्यपदं च द्रव्यत्वेन दिक्सिद्ध्यर्थम् । ननु निरवयवेन्द्रियग्राह्यविशेषगुणवदात्माकाशाभ्यां जन्येषु शब्दसुखादिषु व्यभिचार इत्यत आह—न चेति । तेषामपि दिग्जन्यत्वात् साध्यसत्त्वात् । शब्दसुखादीनां विशेषगुणवदाधारजन्यतया तद्रहिताधारजन्यत्वं बाधितमिति शङ्कते—विशेषगुणवदिति । निरवयवेन्द्रियग्राह्यविशेषगुणवदित्यर्थः । उभयजन्यत्वसम्भवान्न बाध इति

न्यायलीलावतीप्रकाशः

विकल्पः, अत एवात्रोच्यत इति क्वचित्पाठः । पूर्वोक्तानुमाने द्विगनेकत्वसाधकेऽपरितोषादिदानीं दिशि प्रमाणमुच्यत इत्यर्थात् । विवादाध्यासितानि दृष्टान्तेतरद्रव्यगुणकर्माणीत्यर्थः । निरवयवेत्यादिना आकाशात्मव्यवच्छेदः । जातीयपदमीश्वरेणान्यथासिद्धिवारणार्थम् । ननु साधारण्यं सकलकार्यापेक्षया वा पक्षापेक्षया वा उभयथापि दृष्टान्तासिद्धिः । मैवम् । साधारणपदेन पक्षधर्मताबलाद्विवादाध्या-

न्यायलीलावतीप्रकाशविवृतिः

भेदार्थकत्वे । यदि च वैजात्यं तदर्थस्तदा यथाश्रुतमेव सुस्थम् । अपरितोषादिति । तद्बीजं तु गौरवमेव अनेकत्वबुद्धेरुपाधिभिरेवोपपत्तेः । साधारणपदेनेति । साधारणशब्दस्य स्वशब्दादिवत् सम्बन्धिशब्दतया

(१) कार्य्याणि । (२) ०णजातीयव० । (३) प्रत्यक्षत्वात् । (४) ०गुणवदाधारज० ।

त्वेन न तद्रहिताधारजन्यतेति चेन्न, घटादावसर्वज्ञकर्तृपूर्वकत्वेन(१) सर्वज्ञकर्तृपूर्वकतावदविरोधात् । अत एवात्रात्मनि ज्ञानम्, इह नीले नीलत्वम्, इह कर्मणि चलनत्वम्, इह तमसि(२) खद्योत इत्यभिन्नाकारमाधारत्वमवभासते । असम्बद्धं कथमिदमवच्छेदकमिति चेन्न, समवायवत्स्वभावप्रत्यासत्तिबलेनैवोपपत्तेः ।

---

न्यायलीलावतीकण्ठाभरणम्

दृष्टान्तेन समर्थयति—घटादाविति । आधारस्य साधारणत्वं दर्शयितुमाह—अत एवेति । न च कालेनान्यथासिद्धिः, इह काले संयोग इति प्रतीत्या कालाधारकस्यापि देशाधारकत्वेन प्रतीतेः । इहेदानीं जातो नष्टश्चेति प्रतीतिबलात् कालभिन्नाधिकरणसिद्धेः देशोऽपि दिग्विशिष्टो भूतलादिस्तदाधारता च दिगाधारतामादायैवेति भावः । नन्विहात्मनि ज्ञानमित्यादावात्मासम्बद्धाया दिशः कथमवच्छेदकत्वमित्याह—असम्बद्धमिति । प्रतीतिबलात् स्वभावसम्बन्ध एव कल्पनीय इत्याह—समवायवदिति । तथा चेहात्मनीत्यादौ सर्वत्र दिग्विशिष्टमेवेदंपदार्थः । इहेदानीं घट इतिप्रत्यक्षविषयतया दिशः प्रत्यक्षता-

न्यायलीलावतीप्रकाशः

सितकार्यप्रतियोगिकस्यैकस्य कारणस्य सिद्धेः । न च कालेन सिद्धसाधनं इहात्मनि ज्ञानमितिवदिह देशे संयोग इति कालभिन्नत्वेनैवाधारस्य दिशः प्रतीतेः । अत एवेति । न च साक्षात्कारविषयत्व-

न्यायलीलावतीप्रकाशविवृतिः

समभिव्याहृतपरतया पक्षधर्मताबलादभिमतविशेषसिद्धिरित्यर्थः । यद्यप्यनुमाने शब्दमहिमा न प्रयोजकस्तथापि प्रतिज्ञायामाकाङ्क्षावललभ्योऽर्थोऽन्वयिनि प्रतीत्यनुपपत्त्या सिद्ध्यतीति प्रदर्शनार्थं तदुपन्यास इति भावः । वस्तुतः साधारणपदत्यागेऽपि लाघवादेकैका दिक् सिद्ध्यति । ग्रन्थोऽपि तादृशसिद्धेः साधारणपदेनोक्तत्वादित्येवं योज(नी)या पक्षधर्मताबललभ्यसाध्यप्रदर्शनमेव मूले साधारणपदेन कृतमित्यर्थको द्रष्टव्यः । एवं च दृष्टान्तेऽभिन्नपदमविवक्षितार्थमिति ध्येयम् । इहेति । तथा च कालभिन्नत्वमधिकरणे विशे-

---

(१) पूर्वकत्वे स० । (२) नमसि ।

नन्वेवं सति प्रत्यक्षादिकं स्यात् । न स्यात्, अनुमानपा-
रतन्त्र्येण तत्प्रवृत्तेः(१) । व्यवसाय[स्य]पारतन्त्र्येण परमाण्वादिषु

न्यायलीलावतीकण्ठाभरणम्

पत्तिरित्याह—नन्विति । अनुमानेति । विशिष्टप्रत्यक्षेऽपि विशेषणज्ञानमात्रं
तन्त्रं तच्चानुमानिकमेवेत्यर्थः । अनुमेयस्यापि प्रत्यक्षविषयतायां दृष्टा-
न्तमाह—व्यवसायस्येति । परमाणुमहं जानामीति साक्षात्कारेऽनुमित-

न्यायलीलावतीप्रकाशः

मिदंशब्दार्थो दिक् चाप्रत्यक्षेतीहेत्यत्र न दिशो भानमिति वाच्यम्,
साक्षात्कारविषयत्वस्येदंशब्दप्रयोगाहेतुत्वात् । अन्यथाऽयं साक्षा-
त्कृत इत्यत्र पौनरुक्त्यापत्तेः विशिष्टाधारतायां चावच्छेदकस्याप्या-
धारतेति दिशोऽप्याधारतासिद्धिः । यद्वा इहेत्यनुगतधीकारणतया
दिशः सिद्धिः । न चात्मनैवानुगतेन सा स्याद् दिग्विशिष्टस्येदमर्थ-
त्वात् इहात्मनीत्यपि प्रतीतेः । कर्मणि चलनत्वमिति कार्यदृष्टान्ते-
नाकार्येऽप्यधिकरणमेकं साध्यमित्यभिप्रेत्याकार्यमप्युदाहृतम् ।
अनुमानेति । विशिष्टज्ञाने विशेषणज्ञानं कारणं तच्चान्यकरणजज्ञान-
साधारणमित्यर्थः । व्यवसायेति । परमाणुमहं जानामीत्यनुव्यवसाये

न्यायलीलावतीप्रकाशविवृतिः

षणं साध्ये कर्त्तव्यं विपक्षबाधिका चेयं प्रतीतिरिति भावः । न
न्विहेति प्रतीत्या दिग्विशिष्टसमवायादेराधारता विषयीक्रियते न
तु दिश इत्यत आह—विशिष्टेति । विशेषणतायां बाधकं सत्येवोपलक्ष-
णत्वस्वीकारादिति भावः । प्रतीतिविषयतया दिशं साधयित्वा
तत्कारणतया तां साधयति—यद्वेति । इहात्मनीति । तथा च त्वन्मते
पौनरुक्त्यं स्यादिति भावः । यद्यपि इह दिशीत्यपि प्रतीतेस्तुल्य-
मिदं दूषणं दिश्यामस्तथापि इहेत्यनेन साक्षादुपाधीनामेवाधारता
प्रतीयते तदाधारता च परम्परासम्बन्धनिर्वाह्येति तद्घटकत्वेन दि-
शोऽपि तत्र चात्मनो घटकत्वेऽतिप्रसङ्गो दिशस्तु धर्मिग्राहकमानेन
नियताधिकरणतानियामकतयैव सिद्धेर्न स प्रसङ्ग इत्यत्र तात्पर्यम् ।
अकार्यमपीति । यद्यपीह नीले नीलत्वमित्यत्रैवेदं वक्तुं युज्यते तथापि
तत्र नीलपदस्य द्रव्यपरतया नीलत्वपदस्य च तद्धर्मनीलरूपतया-

(१) प्रत्यक्षप्रवृत्तेः ।

मनःप्रवृत्तिवत् घ्राणजसुरभिज्ञानपारतन्त्र्येण त्वगिन्द्रियस्य गन्धे प्रवृत्तिवत् [वा]। अप्रतिसंहितानुमानानामपि इहेतिमतिदर्शनान्नैव-मिति चेन्न, देहे ज्ञानसुखादिप्रतीतावभ्यस्तत्वेन प्रतिसंहितेऽपि लिङ्गेऽप्रतिसन्धानात्(१)। एवं कालोऽपि सर्वत्रा(२)भिन्ना-कारवर्तमानप्रत्ययवेद्यः। अस्तित्वं वर्तमानत्वमिति चेन्न, तद् [हि] वस्तूनां [स्व]रूपं वा सत्तासामान्यं वा। नाद्यः। भिन्नेष्वभिन्ना-वभासानुपपत्तेः। नेतरः। अभावे सामान्ये [ऽपि] च वर्तमानप्रत्य-यात्। अनुत्पन्नप्रध्वंस[त्व]मसत्प्रागभावत्वं च वर्त्तमानत्वमि-

---

न्यायलीलावतीकण्ठाभरणम्

स्यापि परमाणोः प्रवेशदर्शनादित्यर्थः। घ्राणेति। घ्राणोपनीतस्यापि सौरभस्य स्पार्शनप्रत्यक्षे भानवदित्यर्थः। ननु यदि नाध्यक्षा दिक् तदानाकलिततल्लिङ्गानां तद्धीर्न स्यादित्याह—अप्रतीति। लिङ्गप्रतिस-न्धानमस्त्येव किन्तु अभ्यस्ततया तदप्रतिसन्धानभ्रम इति दृष्टान्तेन द्रढयति—देह इति। परदेहे यथायं सुधीर्ज्ञानवानित्याद्यनुमानमभ्य-स्तलिङ्गानां लिङ्गप्रतिसन्धानाभावादित्यर्थः। कालसिद्धौ पूर्वसूचि-तमभिनवं पन्थानमाह—एवमिति। घटो वर्त्तते पटो वर्त्तत इत्यनुगतव-र्त्तमानप्रत्ययस्य यो विषयः स एव काल इत्यर्थः। स चाप्रत्यक्षोऽप्यु-पनीत एव भासत इति भावः। अन्यथासिद्धिं निरस्यति—अस्तित्वमिति। अभाव इति। तस्य सत्ताभानसामग्रीविधुरत्वादिति भावः। अनुत्पन्न-

न्यायलीलावतीप्रकाशः

ज्ञानलक्षणप्रत्यासत्त्या परमाणुरपि भासत इत्यर्थः। देह इति। परस्य देहे ज्ञानसुखादिकमनुमायायं गौरः सुखी ज्ञानवानिति यथा लिङ्ग-प्रतिसन्धानेऽपि तदप्रतिसन्धानाभिमान इत्यर्थः। चिरन्तनप्रमाणा-

न्यायलीलावतीप्रकाशविवृतिः

ऽप्युदाहरणत्वं भवेदिति निःसन्दिग्धकार्य्यस्थलमागत्योक्तम्। स्वश-रीरावच्छिन्नज्ञानस्य प्रत्यक्षत्वात् विशेषपरतया व्याचष्टे—परस्येति।

---

(१) ०ङ्गेऽप्रतिसंहिताभिमानात्। ०सन्धानाभि०। (२) सर्वाभिन्नाकार०।

ति चेन्न, ध्वंसप्रागभावनिवृत्ते(१)र्वस्तुस्वभावत्वेन व्यावृत्तत्वादनुगतावभासाविषयताविरोधात्। अर्थ(२)क्रियाजननयोग्यत्वमिति चेन्न, तदपि वस्तुस्वरूपमेव। तच्च व्यावृत्तमनुवृत्तं वा। तत्राद्ये(३) अभिन्नावभासविरोधोऽन्यत्र जातित्वापात्तिः [त्तः]। कार्योपहितं स्वरूपमिति चेन्न, अननुसंहितकार्यान्वयव्यतिरेकस्यैव नीलादिष्वभिन्नावभासदर्शनात्।

किं च जनकत्वं जननानुकूलसहकारित्वं(४) वा तत्स्वरूपं(५) वा। नाद्यः। सहकारि[वि]रहितेष्वपि वर्तमानप्रत्ययात्। नेतरः।

---

न्यायलीलावतीकण्ठाभरणम्

प्रध्वंसत्वमिति। व्योमादीनामिति(६)। व्योमादीनामपि वर्त्तमानत्वव्यवहारसाधारणोऽयं धर्म्मं इति भावः। स्वरूपयोग्यत्वमादाय शङ्कते—अथ क्रियेति। अवर्त्तमानदशायां तदनुपपत्तेरिति भावः। जातित्वापत्तेरिति। तथा चाभावसामान्ययोर्वर्त्तमानव्यवहारानुपपत्तेरिति भावः। सहकारियोग्यत्वमादाय शङ्कते—कार्य्येति। अननुसंहितेति। अननुसंहितोपाधेरुपहितवर्त्तमानप्रत्ययानुदयप्रसङ्गादित्यर्थः। शङ्कितमेव द्वयं दूषणं स्फुटयितुं पुनः शङ्कते—किं चेति। सहकारीति। यद्यपि यावत्सत्त्वं सहकारिसत्त्वं वस्तूनां तथापि तदप्रतिसन्धानेऽपि वर्त्तमानप्रत्ययादिति

न्यायलीलावतीप्रकाशः

दभिनवं प्रमाणमाह—एवमिति। अभिन्नेत्येकेत्यर्थः। जातित्वापत्तिरिति। तथा चाभावसामान्ययोर्वर्त्तमानताव्यवहारो न स्यादित्यर्थः। कार्योपहितमिति। पूर्वं स्वरूपयोग्यतामादाय शङ्कितमिदानीं तु सहकारियोग्यतामादायेत्यपौनरुक्त्यम्। स्वरूपं वेति। न च भिन्नेष्वभिन्नावभासानुपपत्तेरित्यनेन गतार्थता स्वप्रतियोगिकान्योन्याभावानधिकरणत्वस्य स्वरूपत्वात्। सहकारिविरहितेष्विति। यद्यपि यावत्सत्त्वं

न्यायलीलावतीप्रकाशविवृतिः

स्वप्रतियोगिकेति। तथा च तद्व्यक्तित्वं स्वरूपत्वं इह तु तन्नियतं धर्मो-

---

(१) ०भावव्यावृत्तेर्व०। (२) अथ क्रियाज०।
(३) आद्ये। (४) ०रिमत्त्वं वा। (५) स्वरूपं वा।
(६) एतत्प्रतीकानुसारी पाठ आदर्शभूतेषु मूलग्रन्थेषु न दृश्यते।

अतीतानागतेष्वपि(१) वर्तमानप्रत्ययप्रसङ्गात् । तेषां स्वरूपतोऽन्योन्यत्वे तत्र कारणत्वनिश्चयस्य भ्रान्तत्वप्रसङ्गात् । प्रमाणवेद्यत्वं तदिति चेन्न, अतीतेष्वपि(२) वर्तमानावभासापत्तेः । ततः समवायवदेकं वर्तमानं यदवच्छेदकं स कालः । न चैवमतीतानागतावभासंबलेनातीतानागतपदार्थवेदनप्रसङ्गः । प्राक्प्रध्वंसाभावोपाधि-

---

न्यायलीलावतीकण्ठाभरणम्

भावः । अतीतेति । अतीतानागतयोरपि स्वरूपं स्वरूपमेवेत्यर्थः । यद्यपि यथा तयोः स्वरूपं तथा सामान्यतो वर्त्तमानत्वमपि तथापि तयोर्वर्त्तमानत्वप्रतीत्यनुदयादिति भावः । तेषामिति । अतीतानागतानामयोग्यत्वे तत्रेष्टसाधनताज्ञानाधीना प्रवृत्तिर्न स्यादिति भावः । अतीतेष्वपीत्युपलक्षणं अनागतेष्वपीति द्रष्टव्यम् । यदवच्छेदकमिति । घटादौ यद्विशेषणमित्यर्थः । समवायवदिति । दृष्टान्तेन कालविशिष्टप्रतीतिरपि स्वरूपसम्बन्धाधीनैवेत्युक्तम् । ननु यथा वर्त्तमानप्रत्ययः कालाधीनस्तथा अतीतानागतप्रत्ययावपि अनुगतद्रव्यद्वयाधीनौ स्यातामित्यत आह—न चैवमिति । घटादेः प्रागभावकाल एवानागतकालो

न्यायलीलावतीप्रकाशः

किञ्चिज्जननात् सहकारिविरहो न कदापि तथापि सहकारिसाहित्यानभिसन्धानेऽपि वर्त्तमानप्रत्ययान्न तदेव वर्त्तमानत्वमिति भावः । अतीतेति । स्वरूपाप्रतिसन्धानेऽपि वर्त्तमानप्रत्ययादित्यर्थः । सामान्यतस्तयोरपि वर्त्तमानत्वादिदानीन्तनवर्त्तमानत्वस्य चानिर्वचनाद् यथाश्रुतस्यानुपपत्तेः । तेषामिति । तथा चेष्टसाधनताज्ञानाभावाद् बहुवित्तव्ययायाससाध्ये प्रवृत्त्यभावापत्तेरित्यर्थः । समवायवदित्यनेन सम्बन्धान्तरनिरासः । 'अवच्छेदकं' विशेषणम् । यद्यपि वर्त्तमानत्वं

न्यायलीलावतीप्रकाशविवृतिः

न्तरमित्यपौनरुक्त्यमिति भावः । स्वरूपेति । निरुक्तस्वरूपत्वाप्रतिवन्धानेऽपीत्यर्थः । यथाश्रुतार्थत्यागे हेतुमाह—सामान्यत इति । समवायवदिति । यथा समवायः स्वरूपेणैवावच्छेदकः तथा वर्त्तमानाख्यकालोऽपीति भावः । यद्यपीति । तथा च किं विशेषणत्वविवक्षया विशेषो(३)पलक्षण-

---

(१) ०तेषु व० । (२) अतीतानागतेष्वपि व० । (३) विशेषणोपलक्षणम् ।

वशेनैव तदुपपत्तेः। विवादाध्यासितान्यव्यापकद्रव्याणि युगपद्विशेषगुणशून्यैकद्रव्यसंसर्गीणि द्रव्यत्वात् आत्मवत् [इति] दिक्।

---

न्यायलीलावतीकण्ठाभरणम्

भविष्यतीति प्रत्ययालम्बनः प्रध्वंसावच्छिन्नश्च काल आसीदिति प्रत्ययालम्बनः नित्येषु चातीतानागतव्यवहारो नास्त्येव वर्त्तमानव्यवहारस्तु तत्रापीति भावः। येनानुमानेनोपनीतः कालः प्रत्यक्षे भासते तदाह—विवादाध्यासितानीति। दिङ्मात्रसम्बद्धानि दिग्भिन्नविशेषगुणशून्यद्रव्यसम्बद्धानि वेति विवादाध्यासितानीत्यर्थः। अत्र संसर्गिणीति यदि संयुक्तानीति साध्यं तदाऽव्यापकत्वेन द्रव्याणि विशेष्याणि। अन्यथा व्योमादावपि वर्त्तमानप्रत्ययदर्शनात् स्वरूपसंसर्गस्तत्रापीति विशेषणमनर्थकम्। एवं च द्रव्याणीत्यपि न तथा प्रयोजनवत् पदार्थमात्रस्यैव संसर्गित्वात्। सर्वत्र वर्त्तमानादिप्रत्ययदर्शनात् दिग्भिन्नत्वेन साध्यं विशेष्यं व्यापकानां मनःसंयुक्तत्वेनैव दृष्टान्तता। अव्यापकानां द्रव्याणां पक्षधर्म्मताबलात् दिग्भिन्नं विशेषगुणशून्यं यदेकं द्रव्यं कालस्तत्संयुक्तत्वं सिध्यतीति भावः। वस्तुतस्त्वात्मभिन्नाः सर्वे पदार्थाः दिग्भिन्नविशेषगुणशून्यैकद्रव्यसंसर्गिणः पदार्थत्वादात्मवदित्यत्र तात्पर्यम्। सर्वत्र यौगपद्यवर्त्तमानादिप्रत्ययानां कालनिबन्धनानां दर्शनात्।

न्यायलीलावतीप्रकाशः

कालस्वरूपमेव तदवच्छेदोऽपि वस्तुकालाभ्यां नातिरिच्यते। न चैवमतीतमपि वर्त्तमानं स्यात् सामान्यत इष्टत्वात्। तथापीदानीं वर्त्तत इत्यतीतेऽपि प्रयोगः स्यादिति भावः। अनुमानोपनीतः कालः प्रत्यक्षे भासत इति कालसाधकमनुमानमाह—विवादेति। दिगन्यत्वेन साध्यविशेषणान्न सिद्धसाधनं अव्यापकद्रव्यमात्राभिधाने च मनःसंयोगेन

न्यायलीलावतीप्रकाशविवृतिः

साधारणोपरञ्जकत्वमात्रपरतयैवावच्छेदकपदार्थः कुतो न व्याख्यातः। अतीतादौ वर्त्तमानत्वप्रत्ययापादने चेष्टापत्तिरेवेति भावः। तथापीति। तथा चोपलक्षणत्वेऽतीतेऽपि तथा शब्दप्रयोगापत्तिरिति भावः। तस्मात्तदा प्रयोगाधिकरणकालविशिष्टत्वं तत्कालीनतत्पदप्रयोगोपाधिः। तत्कालीनयच्छब्दादिप्रयोगे तत्तत्कालीनबुद्धिवि-

सुखोपादानमितरेभ्यो भिद्यते सुखोपादानत्वात् । न यदेवं

न्यायलीलावतीकण्ठाभरणम्

ईश्वरस्य साधितत्वात् संसारिणमधिकृत्याह—सुखोपादानमिति। अत्रेतरपदेन ईश्वरोऽपि विवक्षितः । तेन न हेतोः सपक्षाद्व्यावृत्तिः, ईश्वरस्यापि विपक्षत्वात् । आत्मत्वावच्छेदेन इतरभेदो ज्ञानवत्त्वेनैव साध्य इति हृदयम् । सुखं क्वचिदाश्रितं गुणत्वादिति सामान्यतोदृष्टात् परिशेषसहायात् सुखोपादानं सिद्धं तस्येतरभेदः साध्य इति नाश्रयासिद्धिः । सुखस्य रूपादिपञ्चस्कन्धनिबन्धनं तदुपादानकत्व-

न्यायलीलावतीप्रकाशः

सिद्धसाधनं स्यादिति विवादाध्यासितानीत्युक्तम् । ननु विशेषगुण-शून्यैकैकद्रव्यसंयोगित्वे साध्ये सिद्धसाधनम्, एकमात्रसंसर्गित्वे च सा ध्येऽप्रसिद्धविशेषणत्वम् । अत्राहुः । तन्त्वनाश्रितानि कार्याणि तन्त्वा श्रितकार्याधिकरणजन्यानि कार्यत्वात्सम्प्रतिपन्नवदित्यत्र तात्पर्यात् ।

ईश्वरात्मनो भेदस्य पूर्वोक्तत्वात्संसारिणं पक्षीकृत्याह—सुखोपादा-

न्यायलीलावतीप्रकाशविवृतिः

षयतावत् । विशिष्टं चातीतत्वाददशायां नास्ति विशेष्याभावात् । उपलक्षणता तु विशेष्यात्ययेऽपि विशेषणात्यय इवाविरुद्धेति ता-त्पर्यम् । विवादाध्यासितानीति । एवञ्च मनोऽसंसर्गीणीत्यर्थः । ननु विशेषगुणेति । न च सिद्धसाधनं मनसैवाभिमतं तच्च मनःसंसर्गर-हितस्यैव पक्षतया युक्तमिति वाच्यम्, मनःसंसर्गराहित्यस्यैव पक्षता-वच्छेदकतायामज्ञानरूपाश्रयासिद्धिः । तन्निश्चायकाभावादेकमनःसं-सर्गराहित्यस्य च तथात्वे मनोऽन्तरसंसर्गमादाय सिद्धसाधनम् । न च विशेषगुणशून्यादिगन्यद्रव्यसंसर्गित्वमात्रमेव साध्यं लाघवा-च्चैककालसिद्धिरिति वाच्यम्, नानात्वेऽपि मनसां क्लृप्तत्वेन एक-त्वलाघवस्याकिञ्चित्करत्वादिति भावः । तन्त्वनाश्रितानीति । पक्षभिन्न-स्यैव दृष्टान्तत्वं पक्षतावच्छेदकेऽपि चांशतः सिद्धसाधनमिति पक्षविशेषणम् । कार्याधिकरणमात्मापीति तज्जन्यत्वेनार्थान्तरमिति त-न्त्वनाश्रितत्वं कार्यविशेषणम् । अव्यासज्यवृत्तित्वमपि कार्यविशेषणम-तो न संयोगमादायोक्तदोषतादवस्थ्यम् । दिगन्यत्वमप्यधिकरणविशे-षणमतो न सिद्धसाधनम् । न च तन्तुनाऽर्थान्तरं बाधादेव तदस-

न तदेवं यथा रूपम्। न चात्र रूपादिविषयपञ्चकमेवोपादानम्। आन्तराणां बाह्यानुपादानत्वात्। अन्यथा ज्ञानस्यापि देहाद्युपादानतापत्तेः। नापि ज्ञानमेव। सुखस्याज्ञानात्मकत्वात्(१)। अन्यथा शब्दस्यापि तादृशतापत्तेः। न चेदमेव ज्ञानं स्पष्टनीलाद्याकार-

---

न्यायलीलावतीकण्ठाभरणम्

शङ्कां निरस्यति—न चेति। रूपादीत्यादिपदेन रसाद्युपसङ्ग्रहः। आन्तराणामिति। मनोमात्रग्राह्याणामित्यर्थः। आत्मभिन्नत्वं बाह्यत्वं बहिरिन्द्रियग्राह्यत्वं वा बाह्यत्वम्। मानससाक्षात्कारविषयत्वमिति यावत्। अन्यथेति। यद्यान्तरमपि बाह्योपादानकं स्यादित्यर्थः। नापि ज्ञानमेव सुखोपादानमित्यनुषञ्जनीयम्। बौद्धमते सजातीयमेव कारणमित्यवष्टम्भेनाह—सुखस्येति। अन्यथेति। यदि विजातीयमप्युपादानं स्यादित्यर्थः। 'तादृशतापत्तेः' ज्ञानोपादानकतापत्तेः। न चेदमेवेति। 'इदं' सुखं ज्ञानमेवेत्यर्थः। तथा च सजातीयं ज्ञानमुपादानं भवेदिति भावः। शब्देति। यथा शब्दनीलयोर्भेदो बाह्योपादानकत्वं च तथा शीतस्य

न्यायलीलावतीप्रकाशः

नमिति। न चेश्वरात्मनः सपक्षत्वात् तद्व्यावृत्तेरसाधारण्यमितरपदेन पृथिव्यादिचतुर्दशकस्येश्वरस्य च विवक्षितत्वात्। आन्तराणामिति। बहिरिन्द्रियाजन्यजन्यसाक्षात्कारविषयत्वमान्तरत्वम्। ज्ञानभिन्नत्वं च बाह्यत्वम्। नापि ज्ञानमेवेति। उपादानमित्यनुषञ्जनीयम्। सुखस्येति। सजातीयकारणमुपादानं बौद्धानां सुखं च ज्ञानत्वानाधिकरणमतो न ज्ञानोपादानकमित्यर्थः। विजातीयोपादानकत्वे दोषमाह—अन्यथेति। ज्ञानोपादानकत्वापत्तेरित्यर्थः। न चेदमिति। 'इदं' सुखं ज्ञानमेवेत्यर्थः। अतस्तदुपादानं ज्ञानमेव स्यादिति भावः। स्पष्टेति।

न्यायलीलावतीप्रकाशविवृतिः

म्भवात्। न चात्मन एव सर्वाधारत्वमितः सिद्ध्यतीति वाच्यम्, तन्निरासप्रकारस्यानुपदमेवोक्तत्वात्। न तन्तुसमवेतत्वमुपाधिः लाघवेन कार्यत्वस्यैव तत्प्रयोजकत्वेन व्याप्यतया पूर्वोक्तप्रतीतिरूपविपक्षबाधकेन तन्निरासादिति भावः। इतरेति। तथा चेश्वरस्य विपक्षत्वमेवेति भावः। ज्ञानभिन्नत्वं चेति। एतच्च परमतेनैवोक्तम्। तथा च तद्वै-

---

(१) ०स्य ज्ञानानात्मकत्वात्।

स्येव(१) स्पष्टज्ञाताद्याकारस्यापि, बाह्योपादानत्वात्। न चानादिसुखसन्ततिरुपादानम्। पूर्वमनुपलब्धेः। तदिन्द्रियविषयबुद्धिदेहा(२)व्यतिरिच्यमानमुपादानमात्मैव। असति चात्मनि अन्यानुभूतस्यान्येन स्मृतिर्न(३) स्यात्। उपादानोपादेयभावादुपपत्स्यत इति चेन्न, दिनान्तरानुभूतस्य सुषुप्तिदशान्तरितोपादानोपादेयसन्ततित्वेन स्मृतेरनुपपत्तेः। निराकारा चित्सन्ततिरनुवर्तत

---

न्यायलीलावतीकण्ठाभरणम्

सुखस्यापि ज्ञानाद् भेदो बाह्योपादानकत्वं चेत्यर्थः। बाह्यत्वमिह ज्ञानभिन्नत्वम्। ननु सुखस्य सजातीयं सुखमेवोपादानमित्यत आह—न चानादीति। पूर्वमिति। सुखस्य उत्पन्नमात्रग्राह्यत्वेन सुखोत्पत्तेरपि पूर्वं सुखोपलम्भापत्तिरेवं स्यादिति भावः। परिशेषाद् यत् सिद्धं तदाह—तदिन्द्रियेति। अर्थादिन्द्रियानुपादानत्वमपि सिद्धमेवेत्युपसंहृतम्। देहानां बाल्यकौमारादिभेदादिन्द्रियाणां विषयाणां च भेदादन्यदृष्टस्यान्येनास्मरणाद् यदेकत्वनिबन्धना स्मृतिः स आत्मेत्याह—असतीति। ननूपादानोपादेयप्रवाहोऽनुभविता स्मर्ता च स च भूतचैतनिकस्य देहप्रवाहो बुद्धिचैतनिकस्य तु बुद्धिप्रवाह एवेति न स्मृत्यनुपपत्तिरित्याह—उपादानेति। बुद्धिचैतनिकं प्रति बाधकमाह—दिनान्तरितेति। सुषुप्त्यन्तरितोपादानकत्वेन दिनान्तरानुभूतगोचरायाः स्मृतेरनुपपत्तिरित्यर्थः। सुषुप्तिदशायामपि सूक्ष्ममात्रया बुद्धिधाराऽनुवर्तत एवेति न विच्छेद इत्याह—निराकारेति। निर्विषयं यदालयविज्ञानमाचक्ष्महे इति भावः। तर्हि निर्विषयं सुखोपादानमनादिनि-

न्यायलीलावतीप्रकाशः

अहं सुखी अहं जाने इति विलक्षणबुद्धिवेद्यत्वादित्यर्थः। दिनान्तरेति। दिनान्तरानुभूतस्य स्मृतेरनुपपत्तेरिति सम्बन्धः। अत्र सुषुप्तीत्यादि हेतुः। 'अन्तरितत्वं' विच्छिन्नत्वम्। ननु विच्छेदो योग्याऽनुपलब्ध्या ज्ञायते सुषुप्तौ चायोग्या ज्ञानसन्ततिरस्तीत्याह—निराकारेति। नि-

---

(१) शब्दनीलाद्याकारवदिति कण्ठाभरणसम्मतः पाठः।
(२) तदिन्द्रियबुद्धिविषयदेहव्य०। (३) स्मरणं न स्यात्।

इति चेन्न, चितां साकारत्वेन प्रतिबन्धात् । अन्यथा सर्वत्र ज्ञानसुखदुःखादिसन्ततेरेवानुवृत्ति(१)प्राप्तेः । नन्विदमसम्बद्धम् । जगतः

---

न्यायलीलावतीकण्ठाभरणम्

धनमात्मानं स्वीकृतवानसीत्यभिप्रेत्याह—चितामिति । साकारत्वेन सविषयत्वेनानादिनिधनत्वमात्मनोऽसहमानः पूर्वपक्षी क्षणभङ्गमवतारयति—नन्विति । इदमिति । आत्मनोऽनादिनिधनत्वमित्यर्थः । जगत इति । आत्मनोऽपि जगदन्तकृतत्वादिति भावः । क्षणभङ्गे विप्रतिपत्तिः सत्त्वं क्षणमात्रवृत्त्यनेकवृत्तिधर्मव्यापकताव्याप्यं न वा । कार्यं स्वसमवायिकारणसमानकालीनं न वा । सत्त्वमुत्पत्तिव्याप्यं न वा ।

न्यायलीलावतीप्रकाशः

विषया ज्ञानसन्ततिरालयविज्ञानरूपेत्यर्थः । 'साकारत्वेन' सविषयत्वेनेत्यर्थः । अनादिनिधनं निर्विषयकं सुखोपादानं तावतापि सिद्धमित्याभिसन्धिः । ननु न सिद्धं क्षणभङ्गपक्षे तस्य सन्तन्यमानत्वेनानादिनिधनत्वानुपपत्तेरित्यभिसन्धाय क्षणभङ्गमवतारयति—नन्विति । क्षणभङ्गे विप्रतिपत्तयः सत्त्वमुत्पत्तिव्याप्यं न वा, कारणस्य कार्यो-

न्यायलीलावतीप्रकाशविवृतिः

परीत्या न रूपादिपञ्चकमुपादानमिति भावः । सत्त्वमिति । अत्र व्याप्तिः कालगर्भा । एतत्सत्त्वमेतदुत्पत्तिव्याप्यमिति च विधिकोटिः । तन्न तदुत्पत्तिकाल एव तत्सत्त्वमिति क्षणिकतापर्यवसानं विधिकोटौ । अत्र विधिप्रसिद्धिस्तदुत्पत्तावेव । निषेधप्रसिद्धिस्तु भिन्नकालमात्रे । कारणस्येति । स्वरूपयोग्यस्य तत्तत्कार्यसम्बन्धः सहकार्यनपेक्षो न वा । एवञ्च पूर्वापरबीजभेदादर्थात् क्षणिकतासिद्धिः । विधिकोटिप्रसिद्धिर्नित्ये निषेधप्रसिद्धिर्घटादाविति मन्मते, [ परमते ? ] विधिकोटिप्रसिद्धिर्घटादौ निषेधप्रसिद्धिस्त्वलीके । अत्र प्रथमायामुत्पत्तेः सत्त्वघटितत्वेन व्यापकत्वासम्भवः व्याप्यं व्यापककोटाविति न्यायात् । विशिष्टाविशिष्टभेदेन च तथात्वाविरोधस्तदा यद्युत्पत्तावन्यविशेषणप्रक्षेपः, स च तन्मते व्यावर्त्याभावात् अयुक्त एवेत्यपरितोषाद्द्वितीयोक्ता सापि विरुद्धा । अत्र धर्मिपक्षकप्रयोगदर्शनादेतस्याश्च धर्मपक्षकत्वात् । समानविशेष्यकत्वस्य च तत्र तन्त्रत्वादित्य-

---

( १ ) सुखसन्ततेरनुवृत्तिप्रा० ।

क्षणभङ्गित्वात्। तथा हि यत्पूर्वापरकालयोर्विरोधिसंसर्गि तत् पूर्वापर(१) कालयोर्भिद्यते यथा [प्र]दीपः, तथा च विवादास्पदम्।

न्यायलीलावतीकण्ठाभरणम्

क्षणभङ्गे प्रमाणमाह—यदिति। पूर्ववर्त्तिनो घटादपरवर्त्ती घटो भिद्यते तद्विरुद्धधर्म्मसंसर्गित्वात्। यद्यविरुद्धधर्म्मसंसर्गि तत्ततो भिद्यत इति मानार्थः। अन्यथा क्षणभङ्गो न सिध्येत, हेतौ पूर्वापरकालयोरित्यस्य वैयर्थ्यं च स्यात्।

न्यायलीलावतीप्रकाशः

प्रधानं कारणत्वमात्रप्रयोज्यं न वा, कार्यं स्वसमवायिकारणसमानकालीनं न वेति। तत्र क्षणभङ्गसाधनमाह—तथा हीति। ननु पूर्वापरकालीनत्वं भेदहेतुरस्तु विरुद्धधर्मसंसर्गित्वस्य व्यर्थत्वात्। न चैतावता क्षणभङ्गसिद्धिः किन्तु पूर्वापरकालीनयोर्भेदमात्रम्। अन्यथा प्रदीपस्य दृष्टान्तस्य साध्यवैकल्यापत्तेरिति। मैवं मध्यक्षणवर्त्ती भावः पूर्वापरक्षणवर्तिनस्तस्माद्भिद्यते तद्विरुद्धसंसर्गित्वात् सम्प्रतिपन्नवदिति विवक्षितत्वात्। तथा चार्थात् क्षणभङ्गसिद्धिः। विरुद्धधर्मसंसर्गे

न्यायलीलावतीप्रकाशविवृतिः

रुच्या तृतीयामाह—कार्यमिति। इयमपि यद्यपि कार्यपक्षिका प्रयोगश्च कारणपक्षक इति दोषतादवस्थ्यम्, तथापि स्वसमवायिकारणं कार्यसमानकालीनं न वेति विप्रतिपत्तिर्द्रष्टव्या। एवञ्च विधिकोटेः कार्ये निषेधकोटेश्च तत्कार्यसमानकालपटादावेव प्रसिद्धिः सुलभा। यथाश्रुतपरमते कोट्यप्रसिद्धिः। यथाश्रुतेऽप्ययं घटसमवायिकारणसमानकालीनो न वेत्येवार्थ इति तदारम्भककपालादावेव विधिप्रसिद्धिरित्यप्याहुः। साध्यसिद्धिविरोधिसंशयत्वेनैव चानुमित्यङ्गत्वमिति न समानविशेष्यतापर्यन्तादर इति तेषामभिसन्धिः। विरुद्धेति। तन्मते तावत एव भेदव्याप्यत्वादिति भावः। इष्टापत्तिमाशङ्क्याह—न चेति। क्षणिकत्वस्य हेतुव्यापकत्वानवगमादिति भावः। अन्यथा क्षणिकत्वस्य व्यापकत्वे साध्यवैकल्यमिति उभयासिद्धत्वानुपपत्तेरित्यर्थः। पूर्वापरक्षणवर्त्तित्वावच्छिन्नप्रतियोगिकान्योन्याभावश्चात्र साध्योऽतो न तादृशकिञ्चिद्भेदमादाय सिद्धसाधनम्।

नन्वेवमपि क्षणभङ्गासिद्धिरनुद्भुतैवेत्याह—तथा चेति। क्षणभङ्गनान्त-

(१) तत्परापरका०।

न चैतदसिद्धम्। प्रसङ्गतद्विपर्ययाभ्यां(१) तत्सिद्धेः। अजनकमपि सहकार्यभावात्समर्थमिति सन्दिग्धव्यतिरेकित्वमेतयो(२)रिति चेन्न,

---

न्यायलीलावतीकण्ठाभरणम्

ननु विरुद्धधर्म्मसंसर्गित्वमसिद्धमत आह—न चैतदिति। प्रसङ्गेति। प्रसङ्गाभ्यां विपर्य्ययाभ्यां चेत्यर्थः। तथा हीति(३)। कुशूलस्थं बीजं यदि जनकं स्यात् कुर्य्यान्न च करोति तस्मान्न जनकम्। एवं क्षेत्रपतितं यद्यजनकं स्यान्न कुर्य्यात् करोति च तस्मान्नाजनकमिति जनकत्वाजनकत्वलक्षणविरुद्धधर्म्मसंसर्ग इति भावः। समर्थमपि सहकारिविरहान्न जनकमिति प्रकृतप्रसङ्गविपर्य्ययर्योर्विपक्षबाधकतर्कशून्यत्वमाह—अजनकमपीति। सन्दिग्धव्यतिरेकित्वं विपक्षबाधकतर्कशून्यत्वं सन्दिग्धानैकान्तिकत्वं वा। उभयोरिति। प्रसङ्गविपर्य्ययर्योरित्यर्थः। अनुमानतर्कयोर्विरुद्धधर्म्मसंसर्गस्यापि सन्दिग्धत्वात् भावस्वभावनिर्वचनसामर्थ्यादेव प्रसङ्गविपर्य्ययर्योरदोषत्वं भविष्यतीत्यभिप्रायेणाह—नेति। 'कारकस्वभावत्वे' क्रियोपधानस्वभावत्वे। 'अन्यथा' क्रियानुपधानस्वभावत्वे। ननु सहकारिसमवधानासमवधानप्रयुक्ते जनकत्वाजनकत्वे। तथा च कथं सदा जनन-

न्यायलीलावतीप्रकाशः

साधयति—न चैतदिति। 'एतत्' परस्परविरुद्धधर्मद्वयसंसर्गित्वमित्यर्थः। प्रसङ्गेति। यद्येतत्कालीनं बीजं उत्तरक्षणवर्त्यर्थक्रियायां समर्थं स्यात् तदानीं जनयेत् एतच्च सामग्रीमध्यप्रविष्टे तत्र दृष्टम्। न च जनयति तस्मान्न समर्थमिति विपर्ययः। न च प्रसङ्गे इष्टापत्तिरुत्तरक्षणे तेन तज्जननादिति वाच्यम्, एतत्कालीनत्वेन पक्षविशेषणात्। पक्षतावच्छेदकधर्मसामानाधिकरण्यमेव साध्यमानस्य सिद्ध्यतीत्यनुमाने क्लृप्तत्वादेतत्क्षणे सामर्थ्येन जननकत्वावधारणात्। अत्र चैकेन प्रस्न

न्यायलीलावतीप्रकाशविवृतिः

रीयकस्य सिद्ध्या उत्तरकालं क्षणभङ्गसिद्धिरित्यर्थः। यद्वा इदमेव क्षणिकत्वं तच्चार्थात् पक्षधर्मताबलेन पक्षनिष्ठतया सिध्यतीत्यर्थः। नपुंसकतामुपपादयति—परस्परेति। पक्षतावच्छेदकेति। पक्षतावच्छेदकविशिष्ट एव साध्यवैशिष्ट्यमनुमितिविषयो विशिष्टवैशिष्ट्यबोधस्यौत्स-

---

(१) प्रसङ्गविपर्य्ययाभ्यां। (२) उभयोरिति कण्ठाभरणसम्मतः पाठः।

(३) अत्र एतत्प्रतीकानुसारी पाठो मूले न दृश्यते।

स्वभावानिरुक्तेः । तथा हि भावस्य कारकस्वभावत्वे सदा जननम् । अन्यथाऽजननमेव स्यात् । सहकारिसन्निधाने जनकत्वं, अजनकत्वं चान्यदेति स्वभाव इति चेन्न, कारकमकारकं चेति यदि धर्माभिधानं(१) न तर्हि धर्मिणः स्वभावः । धर्मिरूपं चेत् कथमनेकमेकस्य [धर्मिणो] रूपम् । एकं चेत् यावदवस्थानं जनकम(२)जनकं चेति प्राप्तम् । यदि च सहकार्यवच्छेदोऽपि [न]स्वभावान्तर्भूतस्तदा गलेपादुकया(३) सहकारिणामुदयः । न चेत्सदाऽजननापत्तिः । सहकारिसमयानन्तरसमयिनः(४) फलात्पू-

---

न्यायलीलावतीकण्ठाभरणम्

मेवाजननमेव वा सदेति शङ्कते—सहकारीति । यदि कारकत्वाकारकत्वे बीजादेर्धर्म्मौ न तदा स्वभावाभिधानम् । अथ धर्म्मिस्वरूपमेव कारकत्वमकारकत्वं च तदा नैकस्य स्वभावद्वैरूप्यमित्याह—नेति । ननु जनकत्वाजनकत्वेऽपि एक एव भावस्वभाव इति कुतो द्वैरूप्यमित्याशङ्क्याह—एकं चेदिति । यच्चोक्तं सहकारिसमवधानासमवधानयोर्जनकत्वाजनकत्वे तत्राह—यदि चेति । उदय इति । समवधानमित्यर्थः । अजननापत्तिरिति । उपसीदतोऽपि सहकारिणो निराकृत्य न जनयेदित्यर्थः । ननु कार्य्यनियतपूर्ववर्त्तिजातीयत्वं भावस्य स्वरूपयोग्यता सहकारिसमधानं च सहकारियोग्यता तदधीनं च फलोपधानमतः कथं सदा फलोपाधानं कदाचिद्वा न फलोपधानमिति शङ्कते—सहकारीति । भाव-

न्यायलीलावतीप्रकाशः

ङ्गेन तद्विपर्ययेन चैकस्यैव विरुद्धधर्मवत्त्वं नापरस्येति प्रसङ्गविपर्ययपदाभ्यां प्रसङ्गद्वयं विपर्ययद्वयं च विवक्षितम् । 'सन्दिग्धव्यतिरेकित्वं' अप्रयोजकत्वमित्यर्थः । स्वभावेति । स्थैर्यपक्षे तज्जनकत्वाजनकत्वाभ्यामन्यस्य प्रकारस्याभावात्तद्विपर्ययावसाने बाधकसद्भावादित्यर्थः । सहकारीति । तथा च जनकत्वावच्छेदकरूपस्याजननकालासत्त्वान्न विरोध इत्यर्थः । न तर्हीति । तच्च धर्मधर्मिणोर्भेदादित्यर्थः । जनकं चेति । ततः सिद्धं विरुद्धधर्मसंसर्गित्वमित्यर्थः । यदि चेति । सहकारिराहित्ये स्वभावप्रच्यवापत्तेरित्यर्थः । न चेदिति । यदि न सहकार्यवच्छेदः

---

(१) कर्म्माभिधानं । (२) जनकं चाजनकं चेति प्रकाशसम्मतः पाठः ।
(३) गलेपादिकया । (४) समयभाविन इति प्रकाशसम्मतः पाठः ।

वैभावित्वं स्वभाव इति चेन्न, अस्यापि धर्मस्वभावत्वात्(१)।

अत्रोच्यते। सहकारिसान्निधि(२)काले यः कार्यं जनयति(३) भावः स सहकारिविरहकालेऽपि तत्र कार्ये समर्थोऽसमर्थो वा । समर्थश्चेत्तदापि जनयेत् । न चेत्तदेव वस्तु तत्र शक्तमशक्तं चेति दुर्वारो विरोधः। सहकारिविरहकालेऽसत्त्वान् न करोति न तु तद-

---

न्यायलीलावतीकण्ठाभरणम्

स्वभावपक्षोक्तदोषस्य न धर्म्मद्वयनिरूक्तसमाधानमित्याह—अस्यापीति। जनकत्वाजनकत्वलक्षणो विरुद्धधर्म्मसंसर्गो यथाऽस्मन्मते तथा शक्तत्वाशक्तत्वलक्षणविरुद्धधर्म्मसंसर्ग एकस्मिन्नपि क्षणे क्षणिकत्ववादिनोऽपि समाधानमाह--सहकारिसन्निधान इति । तत्रेति । क्षणे कार्य्यं इत्यर्थः । ननु सति धर्म्मिणि विरुद्धधर्म्मसंसर्गसम्भावना सहकारिविरुद्धकाले च धर्म्म्यैव नास्ति कुतो विरोध इति शङ्कते--सहकारीति । एवं सति एकस्यैव सत्त्वासत्त्वलक्षणो विरोध इत्याह—नेति । तुल्य-

न्यायलीलावतीप्रकाशः

स्वभावान्तर्गतः तदा सर्वदैवाजननापत्तिः। सहकार्यवच्छिन्नस्वभावस्यैव जनकत्वादस्य चातथात्वादित्यर्थः । "अनन्तरसमयभाविन" इति पञ्चम्यन्तं फलादित्यस्य विशेषणम् । अस्यापीति । तथा च धर्मिस्वभावानिरुक्तिः धर्मिण एव यदीदं रूपं तदा यावत्सत्त्वं फलात्पूर्वभावस्तस्य प्रसक्त इत्यर्थः ।

सहकारिविरहकाल इति । सौगतानां भिन्नकालीन एवाभाव-

न्यायलीलावतीप्रकाशविवृतिः

गिकत्वात् । प्रकृते बाधकस्याभावादत्र धूमकालीनत्वेन पक्षतायां तत्समानकालीनवह्निसिद्धिरित्यन्यत्र विस्तरः। इदं च समाधिसौकर्यादुक्तं वस्तुत एतत्कालीनसामर्थ्येनैतत्कालीनकालोपधानमेवापाद्यम् । तथा च पक्षतावच्छेदकसाध्यसामानाधिकरण्यमात्रस्यानुमितिविषयतापक्षेऽपि न दोषः । अस्य चेति । तथा च यदीदमसमर्थं स्यान्न कुर्यात्करोति च तस्मात्समर्थमित्येतावतापि प्रसङ्गविपर्ययावत्राभिप्रेताविति द्रष्टव्यम् । ननु [ न्व ? ] सत्त्वमभावप्रतियोगित्वं तच्च न सत्त्वविरोधि एकधर्मिगतत्वेनानुभवादित्यत आह—सौगतानामिति ।

---

(१) धर्म्मस्वभावात् । (२) सन्निधानकाले । (३) न कार्य्यमजनयति भा० ।

समर्थमिति चेन्न, सहकारिविरहकाले याऽसद्रूपता [सा] सहकारिसन्निधानकालेऽ[ऽपि] विद्यते न वा। विद्यते चेत्स्वकाल एवासत्त्वप्रसङ्गः। न चेन्न तर्हि सहकारिविरहकाले तदसद्रूपम्। अथैकमेव वस्तु सहकारिभावाभावयोः सदसद्व्यवहारयोग्यमिति चेत्तथैव तर्ह्येकमेव शक्ताशक्तव्यवहारयोग्यमिति तुल्यम्।

किञ्च न ह्यसामर्थ्यं विहायान्यदसत्त्वमस्ति। अथैकस्मिन्नेव वस्तुनि सहकारिसमवधानानन्तरं कार्यजननस्वभावता तद्विरहे चा-(१)समर्थस्वभावतेत्युभयमविरुद्धमिति चेत्तुल्यमिदमस्मन्मतेऽपि; तथापि सहकारिसमवधाने(२) यत्समर्थरूपं तदेव चेत्प्रागप्यस्ति पूर्वमपि कार्यप्रसवप्रसङ्ग इति चेन्न, सहकारिविरहे(३) यत्तत्र न समर्थरूपं तदेव चेत्सहकारिसन्निधानकालेऽप्यतो(४)-ऽजननप्रसङ्ग इति तुल्यम्। न च सहकारिणां स्वभावान्त-

---

न्यायलीलावतीकण्ठाभरणम्

त्वापादानायाह—अथैकमेवेति। किं च य एव त्वया सामर्थ्यासामर्थ्यलक्षणो विरोध आपादितः स एव सत्त्वासत्त्वपर्यव[स?]न्नस्त्वय्यापतित इत्याह—किञ्चेति। अवच्छेदभेदमादायाविरोधो ममापि तुल्य इति शङ्कोत्तराभ्यामाह—अथेति। भावस्वभावमादाय पुनः शङ्कते—तथापीति। भावस्वभावनिरुक्त्या दोषसाम्यमित्याह—नेति। सहकारिणां स्वभावान्तर्भावपक्षोक्तदोषपरिजिहीर्षुराह—न चेति। 'शक्तपदवाच्य-

न्यायलीलावतीप्रकाशः

स्तस्यासत्त्वं धर्मः। कार्यजननमेव सत्त्वम्। तथा च विरोधो दुर्वार इति भावः। सहकारिविरहकाले तदसन्न्त्वसमर्थमित्यत्र दूषणान्तरमाह—किञ्चेति। सहकारिणां स्वभावान्तर्गतत्वे गलेपादिकया सहकारिणामुदयप्रसङ्ग इत्यत्राह—न च सहकारिणामिति। एव-

न्यायलीलावतीप्रकाशविवृतिः

भिन्नकालीन एवाभावस्तस्य धर्मिणोऽसत्त्वरूपो धर्म इत्यर्थः। कार्यज-

---

(१) ०हे वासमर्थस्व०। (२) ०धानकाले यत्०। (३) विरहकाले।
(४) ०लेऽपि क्तोऽज०।

र्भावः। यस्मिन् सहकारिणि(१) सति कार्यमुत्पद्यते तस्यैव शक्तपदवाच्यत्वात् ॥ [इति] आत्मा ॥

सुखप्रतीतिरिन्द्रियजा साक्षात्कारिप्रतीतित्वात् (२)रूपप्रतीति-

न्यायलीलावतीकण्ठाभरणम्

त्वात्' जनकपदवाच्यत्वात्।

मनःसाधनायाह—सुखेति । 'प्रतीतिः' साक्षात्कारः । अन्यथा भागासिद्धिः स्यात् । सकरणिकेति वक्तव्ये मनसो द्रव्यत्वासिद्ध्यर्थमिन्द्रियजेत्युक्तम् । इन्द्रियस्य द्रव्यत्वनिर्णयात् । न च त्वचा सिद्ध-

न्यायलीलावतीप्रकाशः

श्च प्रसङ्गे सहकारिसमवहितत्वमुपाधिः विपर्यये च बाधः। एतेनैतदपि निरस्तम् । यदाहुः । दृश्यते तावत्कारणे कार्योपधानं तत्र कारणत्वमेव तन्त्रं लाघवात् । न तु सहकारिमत्कारणत्वं गौरवात् । तथा च कार्यानुपहितस्य कारणत्वमसिद्धं अकारणस्य कार्योपधानं विरुद्धमिति कारणत्वाकारणत्वरूपात् प्रतिक्षणं विरुद्धधर्मसंसर्गाच्च क्षणमात्रस्थायिता भावानामिति प्रमाणवतो गौरवस्यापि न्याय्यतया सहकारिमत्कारणत्वस्य कार्योपधानप्रयोजकत्वादिति ।

सुखप्रतीतेः करणजन्यत्वेन न द्रव्यत्वसिद्धिरद्रव्यस्यापि करणत्वादिति द्रव्यत्वसिद्ध्यर्थमिन्द्रियत्वेन मनः साधयति—सुखप्रतीतिरिति । सुखसाक्षात्कार इत्यर्थः । सुखज्ञानमात्रस्य पक्षत्वे हेतोर्भा-

न्यायलीलावतीप्रकाशविवृतिः

नकत्वस्याभावस्य च त्वदुक्तरीत्या विरोध एवेति भावः। प्रसङ्गे यदि समर्थं स्यात्कुर्यादित्यत्रेत्यर्थः । प्रमाणवत इति । सहकारिमत एव बीजात् कार्योत्पादो दृश्यतेऽन्यथा केवलादपि बीजादङ्कुरोत्पत्तिप्रसङ्गादिति भावः । वस्तुतो विपरीतमेव गौरवं त्वन्मते पुञ्जात्पुञ्जोत्पत्तिरिति न्यायेन नानाकार्योपधानस्य नानाकारणमात्रवृत्तिधर्मावच्छेद्यत्वात् । त्व( म ? ) न्मते त्वेककार्यस्यैकसमूहावच्छेद्यत्वादिति दिक् । सुखसाक्षात्कार इति । जन्यसुखसाक्षात्कार इत्यर्थः । सुखज्ञानेति । अत्रासिद्धिरुपलक्षणं भागबाधोऽपि द्रष्टव्यः । हेतौ साक्षात्कारीति विशेषणवैयर्थ्यभयेनेन्द्रियत्वेनेन्द्रियजन्यत्वस्य साध्यत्वमित्यनुपद-

(१) यद् सहकारिमिति का० । (२) साक्षात्प्रतीतित्वात् ।

न्यायलीलावतीकण्ठाभरणम्

साधनं सुखसाक्षात्कारस्त्वगिन्द्रियभिन्नेन्द्रियजन्यः स्पर्शाविषय-साक्षात्कारत्वात् गन्धसाक्षात्कारवदित्यत्र तात्पर्य्यात्। यद्यपि प्रतीतिमात्रं मनोजन्यं तथापीन्द्रियत्वेन जनकत्वं सुखादिसाक्षात्कारमात्रेऽन्यत्र मनस्त्वेनेति शेषः। ननु स्वप्रकाशज्ञानात् सुखं न भिन्नं तच्च ज्ञानं बहिरिन्द्रियजन्यमेवेति न मनःसिद्धिरित्यत आह–

न्यायलीलावतीप्रकाशः

गासिद्ध्यापत्तेः। न च बहिरिन्द्रियजन्यत्वमुपाधिः बहिरित्यस्य पक्ष-मात्रव्यावर्त्तकतया पक्षेतरत्वात्। ननु त्वचो ज्ञानमात्रहेतुतया सि-

न्यायलीलावतीप्रकाशविवृतिः

मेव वक्ष्यमाणत्वात्। न चांशतः सिद्धसाधनवत् पक्षतावच्छेदक-भेद एवांशतो बाधोऽपि दोष इति वाच्यम्, भिन्नप्रकारकसिद्धेर-नुमित्यविरोधित्वेन तथास्वीकारात्। बाधस्य तु भिन्नप्रकारस्यापि सिद्धिविरोधित्वमन्यथा सामान्यतो दृष्टे विशेषबाधसहकारिताव्याघातादित्यन्यत्र विस्तरः।

पक्षेतरत्वात्। पक्षेतरतुल्यत्वादित्यर्थः। वस्तुतो बहिरिन्द्रियत्वं यदि मनोभिन्नेन्द्रियत्वं तदा मनसोऽसिद्धत्वप्रसिद्धिः। यदि च विशेषगुणवदिन्द्रियत्वं तदा विशेषणव्यावर्त्याप्रसिद्धिरिति दूषणम्। न च चक्षुरादिपञ्चकान्यत्वमेव बहिरिन्द्रियत्वमिति न कोऽपि दोष इति वाच्यम्, साक्षात्कारत्वेन लाघवेनेन्द्रियजन्यत्वस्य प्रयोजकतया हेतोः साध्यव्याप्यतयैव विवक्षितोपाधेरपि निरासादिति दिक्। ननु त्वच इति। न च (१)मानाभावः। सुषुप्तिकाले ज्ञानानुत्पत्तेरेव मानत्वात्। अत्र च यदा मनस्त्वचमपि परिहृत्य पुरीतति वर्त्तते तदा सुषुप्तिरिति तान्त्रिकलिखनमपि सङ्गच्छते। न चैवं गन्धाद्यव्यञ्जकत्वे सति स्पर्शव्यञ्जकत्वं वायवीयत्वसाधको हेतुस्त्वगिन्द्रियेऽसिद्धः स्यादिति वाच्यम्, तत्रेन्द्रियत्वेन स्पर्शव्यञ्जकत्वादित्यस्यैव हेतुत्वात्। अत एव सन्निकर्षे न व्यभिचारः। न चाऽसाधारण्यं विपक्षबाधकावतारे तस्यादोषत्वादिति भावः। मनोऽपीन्द्रियत्वेनैव स्पर्शव्यञ्जकमित्येकदेश्यभिधानेन मात्रपदगर्भः स हेतुरिति मिश्राः। तदयुक्तम्। तथा सति तुल्यन्यायतया त्वचोऽपि इन्द्रियत्वेनैव

(१) न चात्र मा०

न्यायलीलावतीप्रकाशः

द्धसाधनमिति । मैवम् । सुखसाक्षात्कारः त्वगिन्द्रियावृत्त्यसाधारणकारणताप्रतियोगिककार्यताश्रयः स्पर्शाविषयसाक्षात्कारत्वात् गन्धसाक्षात्कारवदित्यनुमानात् । तथापि प्रतीतिमात्रस्य मनोलक्षणेन्द्रियजन्यत्वात् साक्षात्कारीति विशेषणं व्यर्थम् । तर्हि प्रतीतिमात्रं साक्षात्कारि कुतो न भवति मनस्त्वेन तज्जननादिन्द्रियत्वेनाजननादिति चेत्, तर्हीन्द्रियत्वेन तज्जनकत्वं साध्यमिति ममापि तुल्यम् । ननु सुखं ज्ञानात्मकं ज्ञानं च स्वप्रकाशमिति तद्गोचरा

न्यायलीलावतीप्रकाशविवृतिः

गन्धादिव्यञ्जकतास्वीकारेऽसिद्धितादवस्थ्यात् । वयन्तु गन्धव्यञ्जकतानवच्छेदकरूपेण स्पर्शव्यञ्जकत्वं हेतुः, तत्र तेनाङ्गसङ्गिसलिलस्पर्शव्यञ्जकव्यजनवातो दृष्टान्तः । न च वायूपनीतजले व्यभिचारः परकीयत्वेन स्पर्शविशेषणादिति ब्रूमः । न चेन्द्रियत्वेनेन्द्रियत्वमेव साध्यमिति कथं सिद्धसाधनमिति वाच्यम्, धर्मिकल्पनात इति न्यायेन त्वच एव ज्ञानजनकत्वमायात्वित्यर्थान्तरे तात्पर्याच्चत्र तदर्थान्तरवारणार्थमेव सिद्धान्ते त्वगिन्द्रियावृत्तीति साध्यविशेषणमन्यथाऽसाधारणपदेनैव तन्निरासे तद्व्यर्थतापत्तेरिति । सुखेति । जन्यसुखसाक्षात्कारः । असाधारणत्वं च कारणतायामिन्द्रियत्वावच्छिन्नत्वमतो न विषयीभूतसुखेन सिद्धसाधनम् । अत एवाग्रे तथैव विभावयिष्यति । अत एव स्पर्शाविषयकेति हेतोरपि सार्थकम् । अन्यथा स्पर्शमादाय स्पर्शसाक्षात्कारेऽपि साध्यसत्त्वे तद्वैयर्थ्यापत्तेः । न च विपक्षबाधकाभावे स्वप्रयुक्तविशेषणमात्रान्नास्तीष्टसिद्धिरतिप्रसङ्गादिति वाच्यम्, इन्द्रियस्य स्वव्यवस्थापकगुणाविषयकज्ञानाजनकत्वनियमेन सुखसाक्षात्कारे स्पर्शविषयतापत्तेरेव विपक्षबाधकत्वात् । न च त्वच उभयग्राहकत्वे स्पर्शस्तद्व्यवस्थापक एव नेति वाच्यम्, ग्राह्यस्योभयग्राह्यताया इन्द्रियव्यवस्थापकताविरोधित्वात्, न तु ग्राहकस्योभयग्राहकतायाः । एतदेव च विपक्षबाधकं हेतौ स्पर्शाविषयत्वपदप्रक्षेपेण सूचितम् । मिश्रास्तु तथा सति त्वसो(चो ?)वायग्रीत्वमपि न स्यात् उक्तहेतोरप्रसिद्धेरिति विपक्षबाधकमाहुः । स्पर्शेति । जन्येति साक्षात्कारविशेषणम् । तर्हीन्द्रियत्वेनेति । न चेन्द्रियत्वं मनोगर्भमिति तदासिद्धिदशायामप्रतीतमेवं त्वगिन्द्रियवृत्तीत्यपि तदप्रतीतावप्रतीतमेवेति

वत् । न च शाता[द्या]कारो ज्ञानात्मैवेति वाच्यम्, नीलादि-
बोधेऽपि तथाभावप्रसङ्गात् । कादाचित्कत्वान्नैवमिति चेत्तुल्यम-
त्रापि । । वासनापरिपाककादाचित्कत्वं तत्र हेतुरिति चेत्तादृक्षे-

न्यायलीलावतीकण्ठाभरणम्

न चेति । 'शातं' सुखम् । अहं जाने इति बोधादहं सुखीति विलक्षणः सुखबोधस्तस्य कथं ज्ञानविषयत्वमन्यथा नीलबोधेऽपि विलक्षणे कः समाश्वास इति नीलाद्यपि ज्ञानाद् भिन्नं न स्यादित्यर्थः । 'तथा-भावप्रसङ्गात्' ज्ञानविषयत्वप्रसङ्गात् । नीलादिज्ञानं कादाचित्-कमतो नीलादिबाह्यसन्निकर्षाधीनमिति यदि तदा सुखमपि तथे-ति शङ्कोत्तराभ्यामाह—कादाचित्कत्वादिति । नैवमिति । न ज्ञानाभिन्नत्व-मित्यर्थः । कादाचित्कबाह्यनीलादिसन्निकर्षाधीनो नीलाद्यनुभवो भवतु ज्ञानभिन्ननीलादिविषयकः, सुखानुभवस्तु वासनाधीनकादा-चित्कत्वेन न ज्ञानभिन्नं विषयमपेक्षत इति शङ्कते—वासनेति । 'वासना' संस्कारः । नीलादिबोधोऽपि वासनामात्राधीनकादाचित्क इति नीलाद्यपि न ज्ञानभिन्नमित्याह—तादृगिति । ननु सुखं ज्ञानाभिन्नं ज्ञान-

न्यायलीलावतीप्रकाशः

प्रतीतिः सैवेति सिद्धसाधनं तस्य बहिरिन्द्रियजन्यत्वात् । अथ ज्ञान-भिन्नं सुखं पक्षः तदाश्रयासिद्धिरित्याशङ्क्य निराकरोति—न चेति । अहं जानेऽहं सुखीतिविलक्षणधीवेद्यत्वेऽपि ज्ञानस्य सुखात्मकत्वे नी-लाद्यपि तथा स्यादिति बाह्यविलोपः,तस्यापि स्वप्रकाशत्वात् । तत्सा-क्षात्कारकरणत्वेन चक्षुराद्यपि न स्यादित्याह—नीलादीति । नैवमिति । न बाह्येन्द्रियाजन्यत्वमित्यर्थः । वासनेति । संस्कारस्य सहकारिलाभ-कादाचित्कत्वं सुखस्य तथात्वे हेतुरित्यर्थः । तादृगिति । नीलाद्याका-

न्यायलीलावतीप्रकाशविवृतिः

वाच्यम्, साक्षात्कारहेतुसन्निकर्षप्रतियोगित्वस्यैव जनकतावच्छेदक-त्वात् तस्य च प्रतीतत्वात् । विषयस्य तु सन्निकर्षाश्रयत्वं न तु प्रतियोगित्वम् । अत एव कुसुमाञ्जलिप्रकाशेऽलौकिकविप्रतिपत्तौ इन्द्रि-यस्यैतत्प्रतियोगित्वं न तु तदाश्रयत्वमिति लिखितम् । त्वगि-न्द्रियावृत्तीत्यत्रेन्द्रियत्वं साक्षात्प्रतीतिसाधनत्वमेव । इन्द्रियत्वेन जनकत्वमित्यस्य चासाधारण्येन जनकत्वमित्यर्थः । असाधा-

वैतदपीति । सामग्रीसाजात्यं तत्र हेतुरिति चेन्न, एकदेश-साजात्यस्य नीलादौ व्यभिचारात् । अन्यस्यासिद्धेः ।

---

न्यायलीलावतीकण्ठाभरणम्

सामग्रीसजातीयसामग्रीकत्वात् ज्ञानवदिति शङ्कते—सामग्रीति । तत्र हेतुरिति । ज्ञानाभिन्नत्वे हेतुरित्यर्थः । ज्ञानसामग्रीजन्यत्वमसिद्धं ज्ञानकारणजन्यत्वं च नीलादौ व्यभिचारीत्याह—एकदेशेति । देशकालादिरे-

न्यायलीलावतीप्रकाशः

रकादाचित्कत्वमपीत्यर्थः । सामग्रीति । सुखं ज्ञानं ज्ञानसामग्रीजन्यत्वादित्यर्थः । अन्यस्येति ।

नन्विन्द्रियार्थसन्निकर्षजन्यत्वात् सुखं ज्ञानात्मकं स्यात् । अत्राहुः । सुखमात्रस्य पक्षत्वे भागासिद्धिः, मानोरथिकादिसुखसम्भवात् । सुखविशेषस्य पक्षत्वे चाप्रयोजकत्वम् । न च ज्ञानत्वे आत्ममनःसंयोगासमवायिकारणकत्वं प्रयोजकम्, इच्छादौ

न्यायलीलावतीप्रकाशविवृतिः

रण्यं च साक्षात्कारत्वव्याप्यधर्मावच्छिन्नकार्यताप्रतियोगिककारणताश्रयत्वमत एव प्राणशरीरादिभिन्नासिद्धसाधनम् । हेतुश्च साक्षात्कारित्वं जातिरेवेति न व्यर्थता । न च प्रतीतित्वादित्येव हेतुः किमिति न कृत इति वाच्यम्, अगोकरणिकान्यायापत्तेः । असाधारण्यनिर्वचने च कार्यतायां स्वनिष्ठत्वमपि विशेषणमतः प्रतीत्यन्तरे व्यभिचारादेव वा स न कृत इति वदन्ति । इन्द्रियार्थसन्निकर्षजन्यत्वादिति । न च संयोगजसंयोगविशेषे व्यभिचारः, तत्त्वेनेति हेतुविशेषणात् । तदन्यत्वेन हेतुविशेषणमिति केचित् । तन्न तथापि तद्ध्वंसे व्यभिचारात् । सुखमात्रस्येति । वस्तुतो भेदग्राहिप्रत्यक्षबाध इति भावः । मानोरथिकादीत्यादिपदेनाभ्यासिकाभिमानिकपरिग्रहः । अप्रयोजकत्वमिति । इन्द्रियार्थसन्निकर्षजत्वं न ज्ञानत्वे प्रयोजकमनुमित्यादौ तदभावापत्तेः । तथा च यथा तद्भिनाप्यनुमितौ ज्ञानत्वं तथा तत्सत्त्वेऽपि सुखस्याज्ञानत्वं स्यादिति भावः । अप्रयोजकत्वं च सुखमात्रपक्षतायामपि द्रष्टव्यम् । वस्तुतः सविषयकत्वमुपाधिः । न च चन्दनसुखमित्यनुभवात्तस्यापि सविषयत्वं तेन तन्निमित्तकत्वमात्रतालाभात् । न चेति । ईश्वरानङ्गीकारादित्यर्थः । अन्य इत्यस्वरसविभावनम् । त-

नाप्ययं सन्दिग्धव्यभिचारः। इन्द्रियप्रतीतावप्रतीतौ च व्याघातात्। ततो यत्सुखोपलम्भकमिन्द्रियं तन्मनः।

कथं पुनरितरभेदीदम्। मनस्त्वजातेरिति चेन्न, अनुगतप्रत्ययासिद्धौ शब्दा(१)प्रवृत्तेः। सुखोपलम्भकत्वेनाप्युपपत्तौ इन्द्रियत्ववदसिद्धेः। अस्तु वा सा[पि] घ्राणादिवत् क्षितेरवान्तरजातिः। नापि सुखोपलम्भकेन्द्रियत्वात्तदपार्थिवं, पार्थिवत्वेऽपि तदविरोधात्। न चास्पर्शवत्त्वात्ततोऽपि भिद्यत इति वाच्यम्, तस्या-

न्यायलीलावतीकण्ठाभरणम्

कदेशः। अयमिति। मनःसाधको हेतुरित्यर्थः। सुखसाक्षात्कारोऽपि इन्द्रियजन्यो माऽस्त्विति विपक्षबाधकाभावः सन्दिग्धव्यतिरेकित्वमिन्द्रियस्य साक्षात्कारिप्रतीतिजनकत्वेनैव सिद्धेः साक्षात्कारेऽपि इन्द्रियजन्यो माऽस्त्विति शङ्कैव नावतरतीत्याह—इन्द्रियेति। प्रकृतमुपसंहरति—तत इति।

कथमिति। मनस इतरभेदसिद्धौ को हेतुरित्यर्थः। नन्वनुगतप्रतीतिस्तावन्नास्ति मनस्त्वसाधिका मनःपदप्रवृत्तिनिमित्तानुरोधोऽपि नास्तीत्याह—अनुगतेति। अभ्युपेत्याह—घ्राणादिवदिति। भावप्रधानो निर्देशः। तेन घ्राणत्वादिवदित्यर्थः। सप्तमीसमर्थाद्वतिः। सिध्यतु मनस्त्वं जातिस्तथापि पृथिव्येवास्त्विति भावः। तत इति। पृथिवीत इत्यर्थः। तस्यापीति। अस्पर्शत्वस्यापीत्यर्थः। अनारम्भकत्वादस्पर्शसिद्धिर-

न्यायलीलावतीप्रकाशः

व्यभिचारात्। नाप्ययमिति। 'अयं' साक्षात्कारिप्रतीतित्वादिति हेतुरित्यर्थः। इन्द्रियप्रतीताविति। इन्द्रियस्य साक्षात्कारिप्रतीतिजनकत्वेनैव प्रतीतेरिन्द्रियं विना साक्षात्कारानुपपत्तेः। अथेन्द्रियमेव न प्रतीतं तदा व्यतिरेकाज्ञाने सन्देहाभावादित्यर्थः। घ्राणादिवदिति। भावप्रधानो निर्देशः। येन घ्राणत्वघटत्ववत् क्षितित्वव्याप्यं मनस्त्वं जातिः

न्यायलीलावतीप्रकाशविवृतिः

बीजं तु प्रथमव्याख्याने विशिष्टघ्राणत्वलाभः। अत्र तु घ्राणवृत्तिजातीनामन्यासां पृथिवीत्वावान्तरत्वबाधेन योग्यताबलाच्चल्लाभ

(१) शब्दप्रवृत्तेः।

प्यसिद्धेः। अनारम्भकत्वात्तत्सिद्धिरिति(१) चेन्न, विषयदेहयोः

---

न्यायलीलावतीकण्ठाभरणम्

स्याह—अनारम्भकत्वादिति। अनारम्भकत्वस्यास्पर्शवत्त्वसाधकत्वेऽन्यथासिद्धिमाह—विषयेति। 'परमाण्वन्तरात्' पार्थिवादिपरमाणोः। तर्हि

न्यायलीलावतीप्रकाशः

स्यादित्यर्थः। घ्राणादिवदिति सप्तमीसमर्थाद्वतिः। तेन घ्राणघटादौ क्षितित्वावान्तरजातिवन्मनस्यप्यस्त्वित्यर्थ इत्यन्ये।

अनारम्भकत्वादिति। नन्वनारम्भकाणुत्वादित्यसाधारणं द्रव्यानारम्भकत्वादिति चान्त्यावयविन्यनैकान्तिकम्। अत्राहुः द्रव्यानारम्भकनित्यवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमत्त्वादस्पर्शं मन इत्यर्थः। न च मनसो द्रव्यानारम्भकत्वमसिद्धं ज्ञानासमवायिकारणसंयोगाश्रयत्वात्तत्सिद्धेः। द्रव्यानारम्भकत्वे निःस्पर्शत्वं न प्रयोजकं किन्तु प्रयोजनाभावः। प्रकृते

न्यायलीलावतीप्रकाशविवृतिः

इति तत्प्रतिसन्धानगौरवमेव। द्रव्यानारम्भकेति। द्रव्यत्वेत्यादौ कृते घटे व्यभिचार इति द्रव्यानारम्भकनित्यवृत्तीति जातिविशेषणम्। तत्रापि पृथिवीत्वादौ घटादिवृत्तितया तद्दोषताद्वस्थ्यमिति नित्येति द्रव्यानारम्भकविशेषणम्। नित्यमात्रविशेषणे च स एव दोषः पृथिवीत्वादेः परमाणुवृत्तित्वादिति प्रथमविशेषणं द्रव्यत्वमादाय स एव दोष इति द्रव्यत्वव्याप्येति। साक्षात्पदं च भेदार्थकम्। न च द्रव्यानारम्भकनित्यत्वादित्येव हेतुरस्त्विति वाच्यम्, यथोक्तविशेषणविशेष्यभावे वैयर्थ्याभावादित्याहुः। वस्तुतो द्रव्यानारम्भके नित्ये वर्त्तते या जातिरित्यन्वयेन द्रव्यानारम्भकमात्रवृत्तित्वं लभ्यते। एवञ्च घटत्वमादाय घटे व्यभिचारवारणाय साक्षात्पदसार्थकता व्यर्थत्वशङ्काविरहश्च। केचित्तु नञ्व्यत्यासेन द्रव्यारम्भकनित्यावृत्तीत्यर्थः। अन्यच्च पूर्ववदेवेत्याहुः। तन्न, नित्यपदोपादानप्रयोजनाभावात्।

मिश्रास्तु द्रव्यानारम्भकनित्यत्वात् द्रव्यानारम्भकवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वाच्चेति हेतुद्वयम्। तद्वृत्तित्वं च तन्मात्रवृत्तित्वमिति वदन्ति। तदन्यैकहेतुत्वेनैवोपपत्तेर्मात्रपदाध्याहारगौरवाच्चायुक्तमेव। ज्ञानेति। अत्रालोके व्यभिचार इत्यसमवायिपदम्। प्रागभावे व्यभिचा-

---

(१) ०त्वात् तदिति चे०।

परमाण्वन्तरादप्युत्पत्ता(१)विन्द्रियतया च फलाभावादन्यथासिद्धेः। पार्थिवाणोरपि कस्यचित्तादृशत्वापत्तेः(२)।

न चेदेवं घ्राणमपि पार्थिवं न स्यात्। ततः कल्पनालाघवादेव (३)तदुचितम्। व्योमादेश्च भेदानुपपत्तेः मूर्त्तत्वादिति चेन्न, अस्पर्शवत्त्वेन(४) तत्प्रतिक्षेपात्। ततो भेदकाभावान्न भिद्यत इति

न्यायलीलावतीकण्ठाभरणम्

इन्द्रियमेव किञ्चिदारभतां मन इत्यत आह—इन्द्रियतयेति। मनसैव सुखादिसाक्षात्कारसम्भवात् किमिन्द्रियान्तरेणेत्यर्थः। पार्थिवाणोरिति। मनः पार्थिव एव परमाणुरस्तु न चारम्भकमित्यर्थः। 'तादृशत्वम्' अनारम्भकत्वम्।

न चेदेवमिति। गन्धग्राहकत्वेऽपि मनश्चेन्न पार्थिवमित्यर्थः—एतदिति। मनसः पार्थिवत्वमित्यर्थः। व्योमादेश्चेति। अस्पर्शवत्त्वस्य हेतोस्ततोऽव्यावृत्तेरित्यर्थः। मूर्त्तत्वात् व्योमादेर्भेदसिद्धिरित्याह—मूर्त्तत्वादिति।

न्यायलीलावतीप्रकाशः

च तथेत्याह—विषयेति। अनारम्भकत्वान्निःस्पर्शत्वे साध्ये सान्दिग्धव्यभिचारितामाह—पार्थिवेति। 'तादृशापत्तेः' तादृशत्वापत्तेरित्यर्थः। न चेदेवमिति। यदि क्लृप्तपार्थिवाकिञ्चिद्वैधर्म्येण न पार्थिवत्वं तदा घ्राणस्यापि गन्धाद्यन्यतमानुद्भवान्न पार्थिवत्वं स्यादित्यर्थः। अथ धर्मिकल्पनातो धर्मकल्पना लघीयसीति न्यायान्न द्रव्यान्तरं कल्प्यते किन्तु पृथिव्यामेव किञ्चिद्वैधर्म्यं तर्हि प्रकृतेऽपि तुल्यमित्याह—तत इति। तथाप्यस्पर्शत्वाभ्युपगमे मूर्त्तत्वाभ्युपगमो व्याहत इति विवक्षितं सुखादयो मूर्त्तसंयोगासमवायिकारणकाः। एतदिति। पृथिव्या एव मनस्त्वमित्यर्थः। अस्पर्शेति। स्पर्शात्यन्ताभाववद्द्रव्यत्वेनेत्यर्थः। यद्य-

न्यायलीलावतीप्रकाशविवृतिः

रादाह—स्पर्शात्यन्तेति। अत्र द्रव्यपदममूर्त्तत्वेन विभुत्वमुक्तमित्याभिप्रायेण चित्रस्पर्शाभ्युपगमाच्च न विरुद्धस्पर्शवदारब्धे व्यभिचारः। व्याहत इति। तथा च परं प्रति परम्पराभ्युपगमाविरोधप्रदर्शनमिदं न तु सा-

(१) ॰दप्युपपत्तावि॰। (२) तादृशापत्तेरिति प्रकाशसम्मतः पाठः।
(३) ॰व एतद्युचितमिति कण्ठाभरणादिसम्मतः पाठः। (४) अस्पर्शद्रव्यत्वेन।

स्थितम्। मैवम्। विभुविशेषगुणग्राहकेन्द्रियत्वेन मनसो मूर्त-चतुष्टयव्यावृत्तेः। पार्थिवस्य गन्धग्राहकत्वनियमात्। अन्यथा

---

न्यायलीलावतीकण्ठाभरणम्

'तत्प्रतिक्षेपात्' मूर्त्तत्वप्रतिक्षेपात्। विभुविशेषगुणग्राहकत्वं शरीरेऽनैकान्तिकमत उक्तमिन्द्रियत्वेनेति। गन्धग्राहकत्वनियमादिति। गन्धादिषु मध्ये गन्धमात्रग्राहकत्वनियमादित्यर्थः। अन्यथेति। यदि पार्थिवेन्द्रियस्य नियतानुग्राहकत्वं स्यादित्यर्थः। घ्राणरसनयोरित्युपलक्षणम्, इन्द्रियान्तरविलोपप्रसङ्गोऽपि द्रष्टव्यः। 'द्रव्यान्तरं स्यात्'

न्यायलीलावतीप्रकाशः

प्यस्पर्शत्वासिद्धिः पूर्वमुक्ता अनित्यत्वे सति नित्यविशेषगुणत्वात् पार्थिवपरमाणुरूपवदिति न मूर्त्तत्वे मानं विभागजशब्दजशब्देन व्यभिचारात्। मनो मूर्त्तं रसग्राहकेन्द्रियत्वात् रसनवदित्यपि निरवयवत्वेन प्रतिरुद्धम्। मनो मूर्त्तमनाकाशेन्द्रियत्वात् चक्षुर्वदित्यपि नित्यद्रव्यगुणग्राहकेन्द्रियत्वात् श्रोत्रवदित्यनेन प्रतिरुद्धम्। विभुविशेषेति। अत्रेन्द्रियग्रहणान्न शरीरकर्णशष्कुलीभ्यां व्यभिचारः। न च श्रोत्रत्वमुपाधिः तुल्ययोगक्षेमत्वात्। अत एव नेन्द्रियत्वसाधनावच्छिन्नसाध्यव्यापकं द्रव्यत्वव्याप्यजातिराहितत्वमुपाधिः। पार्थिवस्येति। यद्यपि मनोऽपि गन्धग्राहकमेव तथापि मनो यदि पार्थिवं स्यात् गन्धादिषु गन्धस्यैव ग्राहकं स्यादित्यर्थः। अन्यथेति। यदि प्रतिनियतगुणग्राहकत्वनियमो न स्यात् तदा पार्थिवस्यैव रसादिव्यञ्जकत्वान्न भिन्नजातीयमिन्द्रियं सिद्ध्येदित्यर्थः। व्यक्त्यभिप्रायेण तु न

न्यायलीलावतीप्रकाशविवृतिः

धनं येनासिद्धिदोष इति भावः। अनित्यत्व इति। आद्यं जलपरमाणुरूपे द्वितीयं जलावयविस्नेहे तृतीयं परमाणुद्वित्वे व्यभिचारवारणाय विशेषणमत्र मूर्त्तगुणासमवायिकारणकत्वं साध्यमित्यभिसन्धानेन द्वितीयव्यभिचारस्थलप्रदर्शनम्। शब्दजेति। 'निरवयवत्वेन' निरवयवेन्द्रियत्वेन। नित्येति। अत्रेन्द्रियत्वमपि विशेषणम्। श्रोत्रत्वमिति। इन्द्रियत्वलक्षणपक्षधर्मावच्छिन्नसाध्यव्यापकमिदम्। अन्यथा कालादौ साध्याव्यापकतापत्तेः। आत्मनि शुद्धसाध्याव्यापकत्वादाह—साधनेति। ननु व्यक्त्यभिप्रायेणैवैकपरिशेषः कुतो न व्याख्यात इत्यत आह—व्यक्तीति।

घ्राणरसनयोरेकशेषापत्तेः। श्रोत्रमपि द्रव्यान्तरं स्यादिति चेन्न, तत्र शब्दासमवायात्। शब्दसमवाये वा तस्याकाशत्वात्। मनसश्च ज्ञानासमवायिकारणसंयोगाश्रयत्वेन आत्मवत्स्पर्शानाधार-

---

न्यायलीलावतीकण्ठाभरणम्

आकाशादन्यदित्यर्थः। श्रोत्रं कर्णशष्कुल्येवेति भ्रान्तस्य वा शङ्का। तत्रेति। आकाशादन्यत्रेत्यर्थः। समवाय एव सन्निकर्षः शब्दग्राहक इति भावः। ननु तदेव द्रव्यान्तरं शब्दसमवायिकारणं स्यादित्याह—समवायेति। मनसः स्पर्शवत्त्वं यदाशङ्कितं तत्राह—मनसश्चेति। स्पर्शानाधारत्वादिति। स्पर्शानाधारत्वानुमानादित्यर्थः। आरम्भकत्वं मनसो यदाशङ्कितं तत्राह—स्पर्शवदिति। द्रव्यारम्भादि(दावि?)ति वक्तव्ये स्पर्शवदि-

न्यायलीलावतीप्रकाशः

घ्राणैकपरिशेषः। उपहतघ्राणस्यापि रसोपलब्धेः।

कर्णशष्कुल्येव श्रोत्रमिति भ्रान्त आक्षिपति—श्रोत्रमपीति। तत्रेति। द्रव्यान्तर इत्यर्थः। वहिरिन्द्रियस्य ग्राह्यजातीयासाधारणगुणवत्त्वनियमात्। न च स्पर्शवत्त्वमुपाधिः विशेषगुणविरहे वहिरिन्द्रियत्वानुपपत्त्या हेतोः साध्यव्याप्यतयोपाधेः साध्याव्यापकत्वादिति भावः। मनसोऽस्पर्शवत्त्वमसिद्धमिति दूषयति—मनसश्चेति। न चात्मत्वमुपाधिः, तुल्ययोगक्षेमत्वात्। अत एव मनसो नित्यत्वमपि साध्यं स्पर्शाभावसाधकप्र-

न्यायलीलावतीप्रकाशविवृतिः

तथा च घ्राणरसनयोरेकजातीयतापत्तेरिति मूलतात्पर्य्यम्। ननु श्रोत्रस्य द्रव्यान्तरत्वे इष्टापत्तिरेवेत्यत आह—कर्णशकुल्येवेति। द्रव्यान्तर इति। त्वन्मत इति शेषः। वहिरिन्द्रियस्येति सगुणानामिन्द्रियभावादिति भावः। तथा च शब्दसमवायि यत्तदेव श्रोत्रं तच्च द्रव्यान्तरमेवेति सिद्धसाधनमेवेति प्रघट्टकार्थः। 'विशेषगुणविरहे' ग्राह्यजातीयविशेषगुणविरहे। यद्यप्युपाधिदातुरिदमेवासिद्धं तथापि सन्तानक्रमेण श्रोत्रसमवेतस्यैव शब्दस्य ग्रहसम्भवपक्षे साध्यासिद्धावुपाधेः साध्यव्यापकत्वमिति भावः। ननु विषयदेहयोरित्याद्यन्यथासिद्धिप्रदर्शनात् स्पर्शवत्त्वेऽप्यनारम्भकत्वं स्यादित्यत आह—स्पर्शाभावेति। तच्च प्रमाणमव्यवहितोक्तमेवेति भावः। अन्त्यावयविनि अन्त्यावयविसं-

त्वात् । स्पर्शवत्संयोगस्य स्पर्शवद्द्रव्यारम्भादौ सामर्थ्यात् ।
अमूर्तादपि भिद्यते, मूर्तत्वात् । तदसिद्धम् । सुखदुःखयोरबा-
धितयुगपत्प्रत्ययविषयत्वेन यौगपद्यात् । अन्यथा यौगपद्यविल-

---

न्यायलीलावतीकण्ठाभरणम्

ति स्वरूपकथनार्थम् । स्पर्शवत्संयोगस्येति । स्पर्शद्वयसंयोगस्येत्यर्थः ।
आदिपदात् कर्मसंग्रहः । मूर्त्तत्वादित्यस्य मूर्त्तेभ्य इत्यर्थः । भट्टः
प्रत्यवतिष्ठते--तदसिद्धमिति । पादे मे सुखं शिरसि वेदनेति प्रतीत्या
सुखदुःखयौगपद्यं प्रतीयते । तच्च मनोवैभवे सत्येवोपपद्यते शरीराव-
च्छेदेन नानावयविनो मनसः कल्पने कल्पनागौरवं मनःपञ्चककल्पने-
ऽपि गौरवमेवेति भावः । अन्यथेति । अबाधितयौगपद्यप्रतीत्यापि
यदि यौगपद्यं न स्यादित्यर्थः । मनोविभवे युगपदनेकेन्द्रियसन्निक-"

न्यायलीलावतीप्रकाशः

माणावष्टम्भेनाह—स्पर्शवत्संयोगस्येति । न चान्त्यावयविनि व्यभिचारः
नित्यद्रव्यवृत्तिस्पर्शस्य द्रव्यारम्भकसंयोगव्याप्यत्वमित्यर्थात् ।
सुखदुःखयोरिति । पादे मे सुखं शिरसि मे वेदनेत्यनेन रूपेणेत्यर्थः । ए-
तच्च यद्यपि शरीरपरिमाणसमानपरिमाणत्वेऽपि मनसः सिद्ध्यति
तथापि तस्यावयवकल्पनायां मानाभावात् स्पर्शात्यन्ताभाववतो द्र-
व्यस्य विभुत्वनियमाच्चोपपाद्यम् । यद्यप्येकं करणमेकदैकमेव कार्यं ज-
नयतीति न नियमः, एकेनाग्निसंयोगेनैकदा घटेऽनेकरूपाद्युत्पत्तेः,
एकेन कुठारेणैकदाऽनेकत्र छिदादर्शनात्, एकेनैव शब्देनानेकशब्दो-
त्पादनात् । अथैकं करणमेकत्रैकावच्छेदेनैकजातीयामेकामेव क्रिया-
मुत्पादयतीति नियमः, तथात्वेऽपि चक्षुराद्यवच्छेदेन भिन्नदेशीयां
शब्दवत् परमाणाविव विजातीयामग्निसंयोगवदनेकां क्रियां कुर्यादेव

न्यायलीलावतीप्रकाशविवृतिः

योगे । एकत्रेत्यत्र घट इति पिठरपाकमते । अथैकमिति । न चैकावच्छेदे-
नेति दत्ते एकत्रेति व्यर्थं श्येनकर्मणा चरणावच्छेदेन युगपच्छाखा-
वृक्षसंयोगजनकेन व्यभिचारवारकत्वात् । न च श्येनरूपाधिकरणै-
कयात् तेनापि तद्वारणम्, एकत्रेत्यनेनार्थतोऽव्यासज्यवृत्तित्वस्य क्रि-
याविशेषणतया लाभात् । यावदधिकरणैक्यस्य तत्पदेन विवक्षित-

यापत्तेः । एकदाऽनेकज्ञानानुत्पादस्य ज्ञानकारण (१) त्वेनैव समूहालम्बनबोध(२)वदुपपत्तेः । नानाविषयज्ञान(३)स्याप्यत एवोत्पत्तेः । अन्यथा गुडादौ युगपद्रसस्पर्शा (४) वभासप्र-

न्यायलीलावतीकण्ठाभरणम्

षे ज्ञानयौगपद्यं परिहरति—एकदेति । ज्ञानकरणत्वेनेति । एकं ज्ञानकरणमेकदा-एकमेव ज्ञानं जनयतीति स्वाभाव्येनेत्यर्थः । समूहालम्बनवदिति । घटपटाद्यनेकविषयचक्षुःसन्निकर्षेऽप्येकज्ञानवदन्यथा तत्रापि यावद्विषयं ज्ञानभेदः स्यादित्यर्थः । ननु तथापि नानेन्द्रियकरणकमेकमेव ज्ञानमुत्पद्यतामत आह—नानाविषयेति । अत एवेति । मनस एकेन्द्रियकरणकज्ञानमात्रजनन एव स्वभावावधारणादित्यर्थः । एकं करणमेकदा एकत्र एकावच्छेदेनैकामेव क्रियां करोतीति करणसामान्यधर्म्मोऽभिमतः । ननु मनोवैभवे सकलशरीरावच्छेदेनैव सुखदुःखे स्यातां विभुकार्य्यस्य असमवायिकारणप्रादेशिकत्वानुरोधित्वादि-

न्यायलीलावतीप्रकाशः

तथाप्येकं ज्ञानकरणमेकत्रात्मन्येकदैकमेव ज्ञानं जनयति समूहालम्बने तथादर्शनात् । कथमन्यथा नानाज्ञानसामग्रीसत्त्वे समूहालम्बनमेकं ज्ञानमित्याह—एकदेति । न चान्यज्ञानसामग्रीसत्त्वे कार्यावश्यम्भावस्तदसत्त्वे किं करणधर्मेणेति वाच्यम्, ज्ञानकरणस्यैकदैकमात्रजनकस्वभावत्वेनापराजनकतया कारणभावे सामग्र्यसत्त्वादित्यर्थः । नन्वेवमपि बहूनि ज्ञानानि नोत्पद्यन्तां नानेन्द्रियविषयविषयकमेकं ज्ञानं स्यादेव एकेन्द्रियजसमूहालम्बनवदित्यत आह—नानेति । 'अत एव' कारणस्वभावादेवेत्यर्थः । अन्यथेति'। यदा रसनावच्छेदेन मनःसंयोगस्तदा त्वगवच्छेदेनापीत्यणुत्वेऽपि मनसो रसस्पर्शविषयकमेकमेव ज्ञानमुत्पद्येत । अथ मनस एकदा एकेन्द्रियविषयविषय-

न्यायलीलावतीप्रकाशविवृतिः

स्वादु वेति दिक् । तथाप्येकमिति । कायव्यूहेऽनेकानि करणान्येकत्रात्मन्यनेकं ज्ञानं जनयन्त्येवेति व्यभिचार इत्येकमित्युक्तम् । मनस्तु तत्रापि शरीरभेदेन भिन्नमेव । तद्दशायामेव काले व्यभिचार इति ज्ञानकरणपदम् । जन्यज्ञानत्वावच्छिन्नकरणताश्रय इत्यर्थः । तेन नालोकादौ व्यभि-

(१) ज्ञानकरण० । (२) ०लम्बनवदु० ।

(३) ज्ञानानुत्पादस्या० । ज्ञानानां विषयैकज्ञानाभावस्यापि तत एवोपपत्तेः । (४) स्पर्शाभावप्र० ।

सङ्गात् । सुखादिदेशनियामकत्वमपि सामग्रीदेशनियमस्यैव । अन्यथाऽणुमात्रदेशतापत्तेः । द्वित्रिश्छिन्नभुजगादौ चलनदर्शना-

---

न्यायलीलावतीकण्ठाभरणम्

त्यत आह—सुखादीति । असमवायिकारणं स्वावच्छिन्न एव जन-यतीति व्याप्त्यभिमानादाह—अन्यथेति। यदि च न मनो विभु तदा गो-धाभुजगादिषु छिन्नेषु खण्डशश्चलनं चेष्टा च न स्यादित्यत आह--द्वि-

न्यायलीलावतीप्रकाशः

कज्ञानजनकत्वं स्वभावस्तदा समः समाधिरित्यर्थः । ननु चासम-वायिकारणाधीनो विभुकार्याणां प्रादेशिकत्वनियम इति विभुमनः-संयोगात् सुखादेरुत्पत्तौ नियतदेशता न स्यादित्यणु मन इत्यत आह--सुखादीति । त्वयापि सुखादेरणुदेशतापत्त्या निमित्तचन्दनाद्य-नुरोधेन न्यूनाधिकदेशता वाच्येति समः समाधिरित्यर्थः । न च विभुकार्यासमवायिकारणं स्वावच्छिन्ने कार्यं जनयत्येवेति नियम-स्तथा च चन्दनाद्यनवच्छिन्नेऽपि सुखमुत्पद्येतेति वाच्यम्, तद्देशीय-चन्दनसुखे हि तद्देशचन्दनसम्बन्धसापेक्षमसमवायिकारणमिति कथं तन्निरपेक्षं तत्कुर्यात्। चन्दनं च स्वावच्छिन्ने देशे सुखजनक-मिति कथं स्वानवच्छिन्ने देशे तज्जनयेत् । अत एव चरणसुखं यदि शरीरावच्छिन्नासमवायिकारणकं स्यात् शरीरव्यापकं स्यादित्य-पास्तम्, अप्रयोजकत्वात् निमित्तसमवायस्य तत्प्रयोजकत्वात् । द्वि-

न्यायलीलावतीप्रकाशविवृतिः

चारः । अन्यथा कायव्यूहदशायां तत्र व्यभिचारापत्तेः। न चैवमेक-आत्मनीति व्यर्थं शरीरस्य विषयतया शरीरत्वेन च नानाज्ञानजन-कतया व्यभिचारवारकत्वात् । विभुकार्येति । विभुविशेषगुणेत्यर्थः । तेन न कर्मजसंयोगे व्यभिचारः । तद्देशीयेति । तथा चोक्त नियमोऽप्र-योजक इति भावः । चरणसुखमिति । अत्र विशेषत एव व्याप्तिः । अव-च्छेदकत्वं च व्यावर्त्तकत्वमात्रम् । तेन शरीरकर्मजवेगो दृष्टान्तः । शरीरस्याऽन्याधारीभूय कर्मव्यावर्त्तकत्वात् । न चैवं शरीरकर्मज-न्यशरीराकाशसंयोगे व्यभिचारः । अदृष्टत्व (अधिष्ठत्व?) स्यापादक-विशेषणत्वात् ।

चेति चेत्। मैवम्। सुष्वाप(१)व्यासङ्गयोर्बहिरिन्द्रियमनःसम्बन्ध-

न्यायलीलावतीकण्ठाभरणम्

श्निश्छेति। सुस्वापेति। सुप्तोऽहं न किञ्चिदज्ञासिषमिति प्रत्यक्षं तावन्न सुषुप्तौ प्रमाणम्, अस्याः प्रतीतेः ध्वंसविषयतयोपपत्तेरिति केचित्। मदीयजागराद्यज्ञानप्रागभावो मदीयप्रत्यक्षविशेषगुणानधिकरणकार्यद्रव्याधिकरणवृत्तिः प्रागभावत्वात् घटप्रागभाववदित्यनुमानात् सुषुप्तिसिद्धिः। इयं च सुषुप्तिर्मनसो वैभवे न स्याद् व्यासङ्गश्च

न्यायलीलावतीप्रकाशः

श्निरिति। अणुत्वे मनसो द्विखण्डच्छिन्नभुजगादौ चेष्टा न स्यात्। यद्वच्छेदेन मनःसंयोगात् प्रयत्न उत्पद्यते तदवच्छेदेन प्रयत्नवदात्मसंयोगासमवायिकारणिकाया चेष्टाया उत्पत्तेरित्यर्थः। सुष्वापेति। सुस्वापेति शुक्तः पाठः। "सुविनिर्दुर्भ्यः सुपिसूतिसमाः" (अष्टाध्यायी, ८।३।८८) इत्यत्र कृतसम्प्रसारणनिर्देशात् यत्रैव सम्प्रसारणं तत्रैव मूर्द्धन्यविधानात्।

यदा मनस्त्वचमपि परिहृत्य पुरीतति वर्त्तते तदा सुषुप्तिर्विभुत्वे न स्यात्। न च तत्र मानाभावः, मदीयजागराद्यज्ञानप्रागभावो मदीयप्रत्यक्षविशेषगुणानधिकरणकार्यद्रव्याधिकरणवृत्तिः प्रागभावत्वात्

न्यायलीलावतीप्रकाशविवृतिः

मिश्रास्तु सामान्यव्याप्त्या तर्कोऽयमित्यग्निसंयोगजन्यरूपमेव दृष्टान्तः। अवच्छेदकत्वं च स्वरूपसम्बन्धविशेष इति नाधारस्यावच्छेदकत्वमिति नादृष्ट (द्विष्ठ?) पदापेक्षेति वदन्ति।

'निमित्तसमवायस्य' निमित्तसंसर्गस्य। मदीयेति। अन्यज्ञानप्रागभावपक्षतायां मदीयमुक्त्यधिकरणकालवृत्तित्वेनार्थान्तरमतो मदीयेति। जागराद्यपदं तु तत्पूर्वकालीनसुषुप्तिसिद्ध्यर्थम्। ज्ञानान्योन्याभावस्य कपालवृत्तितयाऽर्थान्तरमतः प्रागिति। सुषुप्तिकालेऽप्यन्यदीयज्ञानसत्त्वाद्बाध इति साध्ये मदीयेति। अदृष्टसत्त्वाद्बाध इति प्रत्यक्षेति। आत्मैकत्वादिप्रत्यक्षतापक्षे तत्सत्त्वाद्बाध इति विशेषेति। वृत्तप्रलयवृत्तितयाऽर्थान्तरमिति कार्यद्रव्याधिकरणेति। न च प्रयाण(२)कालेनार्थान्तरं कार्यपदस्य मदीयजीवितशरीरपरत्वात्। न च

(१) सुष्वापव्या०। (२) प्रायणका०।

न्यायलीलावतीकण्ठाभरणम्

सन्निकृष्टेऽपि विषये ज्ञानाजनकत्वमिन्द्रियाणामिन्द्रियान्तरेण ज्ञान-जननावसरे तच्चानुपपन्नमेव न हि सम्भवति तदिन्द्रियस्य ज्ञाना-जनने मनसोऽसन्निधानादन्यन्निमित्तमित्यर्थः। ननु व्यासङ्गकाले-

न्यायलीलावतीप्रकाशः

घटप्रागभाववदिति। केचित्तु प्रत्यक्षमेव सुषुप्तौ मानं सुप्तोऽहं न किञ्चिदवासिषमिति प्रतीत्या तदानीन्तनदुःखात्यन्ताभावो विषयीक्रियते सम्बद्धविशेषणतया मनःप्रत्यासत्तेः सत्त्वादित्याहुः। तन्न, प्रतीतेर्ध्वंसविषयत्वेनाऽप्युपपत्तौ सुषुप्त्यसाधनात्(१)। व्यासङ्गे च यद्यपि बहिरिन्द्रियसम्बन्धोऽस्त्येव तथापीन्द्रियान्तरसम्बन्धो नास्ति, व्यासङ्गदशायां स्वस्वविषयसम्बन्धेऽपीन्द्रियाणां यस्यासम्बन्धान्न युगपज्ज्ञानानि तदिन्द्रियसहकारिक्रमेण तदधिष्ठायकं तदेव मनः सुखादिग्राहकमिति धर्मिग्राहकमानसिद्धं मनसोऽणुत्वम्। अत एव धर्मिग्राहकमानबाधितं वैभवानुमानम्। न च ज्ञान-करणधर्मत्वेन व्यासङ्ग उपपाद्यः, तथापि पञ्चसु यदेकं जनयति तत्र

न्यायलीलावतीप्रकाशविवृतिः

दृष्टान्तासिद्धिः। शरीरप्रागभावस्य दृष्टान्तत्वात्। घटप्रागभावग्रहणं तु प्रागभावान्तराणामपि सुषुप्तिकालीनतया पक्षसमत्वेन न व्यभिचार इतिसूचनार्थमिति मिश्राः। केचित्तु मदीयजागराद्यक्षानाव्यवहितप्राक्कालीनत्वं विशेषणमतो नोक्तदोष इत्याहुः। तन्न, तथा सति कार्यद्रव्याधिकरणपदव्यर्थतापत्तेः। प्रलयस्यापि तत एव बाधनात्। वयन्तु स्थूलकालोपाध्यवच्छिन्ना वृत्तिरिह साध्या प्रायेण च क्षणमात्रमेव तादृशी वृत्तिरिति नोक्तदोष इति ब्रूमः। चरमध्वंसे व्यभिचारवारणाय हेतौ प्रागिति। न चाप्रयोजकत्वं तदा प्रत्यक्षगुणसत्त्वे तदनुभवविषयत्वबोध्ये(२)तत्कालीनत्वेन स्मरणापातादिति। 'इति प्रतीत्या' इत्यादिप्रतीत्येत्यर्थः। दुःखात्यन्ताभाव इति। दुःखाद्यत्यन्ताभाव इत्यर्थः। प्रतीतेरिति। यद्यपि तत्कालीनत्वेन पूर्वोत्पन्नयावद्विशेषगुणध्वंससिद्धावपि सुषुप्तिसिद्धिस्तथापि तत्कालीनत्वेनापि तावान् ध्वंसो ग्रहीतुं न शक्यते योग्यानुपलब्धेरभा-

(१) तदानीं ज्ञानाभावस्य इदानीं योग्यानुपलब्धिविरहेण न प्रत्यक्षत्वमिति तु तत्त्वम्। इति दीधितिः। (२) बोध्ये।

न्यायलीलावतीप्रकाशः

नियामकाभावात्तावद्विषयकैकज्ञानापत्तेः । न च चाक्षुषत्वादिजाति सङ्करापत्तेर्नैकं ज्ञानं चित्ररूपवच्चाक्षुषादिविजातीयज्ञानोत्पत्त्याः पत्तेः। ननु दीर्घशष्कुलीं भक्षयतः कथं पञ्च ज्ञानानि जायन्ते। न च तत्रापि क्रमः कल्प्यः, बाधकं विना यौगपद्यानुभवस्य प्रमात्वात्। व्यासङ्गो बाधक इति चेत् तर्हि मनोऽवयव्यस्तु तत्सङ्कोचविकासाभ्यां तदुभयोपपत्तेः। न, तत्र कारणाभावात्। न ह्येकपञ्चबुभुत्सा तद्धेतुः, तस्या अहेतुत्वात्। हेतुत्वे वाऽस्तु विभु मनः अवयविनो विभुत्वस्य लघुत्वात्। नाऽप्यदृष्टं तत एव तदुत्पत्तौ मनसोऽसिद्धेः। अत एवाणुमनःपञ्चतयमस्तु अवयविनो लघुत्वात् बुभुत्सावशात्तेषामेकपञ्चेन्द्रियसम्बन्धवशादुभयोपपत्तेरित्यपास्तम्। पञ्चबुभुत्सया सर्वेषां पञ्चेन्द्रियसम्बन्धे व्यासङ्गानुपपत्तेः। तस्माद्व्यासङ्ग एव यौगपद्यप्रत्ययबाधकः। कथं तर्हि शष्कुलीभक्षणे गन्धरूपरसस्पर्शशब्दान् प्रत्येमीत्यनुव्यवसायः क्रमिकज्ञानपञ्चतयेन युगपन्मनःसन्निकर्षाभावात् न क्रमिकानुव्यवसायाहितसंस्कारजनितपञ्चविषयस्मृतावनुभवत्वारोपादुपपत्तेः। ननु मनसोऽणुत्वपक्षे कथं मन्दोऽपि बु(भु?)त्सितः शब्दो गृह्यते नान्यः। न च शब्दविशेषबुभुत्सैवेतरग्रहप्रतिबन्धिका बु(भु?)त्सितशब्दग्रहसामग्र्येव वा बलवतीति वाच्यम्, तथापि रूपादिसकलबुभुत्सया परस्परप्रतिबन्धाद्ज्ञानस्य बुभुत्साधीनसामग्रीबलवत्त्वात्सर्वविषयज्ञानस्य वापत्तेः।

न्यायलीलावतीप्रकाशविवृतिः

वादित्यत्र तात्पर्यम्। तावद्विषयकेति। न च एकदा तादृशनानाविषयज्ञानाजनकत्वमपि कारणधर्म इति नेदं दूषणमिति वाच्यम्, तथापि नियामकाभावस्य तादवस्थ्यात्। नाप्यदृष्टमिति। यद्यप्यनन्यगत्या अदृष्टस्य नियामकत्वमिति सङ्कोचविकाशयोरस्तु स्वातन्त्र्येणादृष्टं नियामकं तथापि नियततादृश(१)सत्त्वे विभ्वेव मनोऽस्तु कृतमव [यव ?] कल्पनागौरवग्रस्तेनावयविनेति भावः। पञ्चबुभुत्सयेति। तथा च तत्काले दृष्टो व्यासङ्गो न स्यादिति भावः। तथापीति। यद्यपि मनोऽणुत्वपक्षे सर्वविषयज्ञानोपादानमयुक्तं तथापि नन्वित्यादिना तटस्थेनोभयं प्रत्याक्षेपे कृते न च शब्देत्यादिना उभाभ्यामेव सि-

(१) ०तत्तादृशादृष्ट०।

विच्छेदलक्षणयोर्विभुत्वे व्याकोपात्। दृष्टसाकल्येऽदृष्टवैगुण्य(१)-स्याप्यसम्भवात्। अदृष्टाभावस्य दृष्टसाकल्यविरोधात्। अन्यथा

---

न्यायलीलावतीकण्ठाभरणम्

ऽदृष्टविलम्बादेव ज्ञानविलम्बः स्यादित्यत आह--दृष्टेति। अदृष्टस्य दृष्टोपहारप्रयोजकतया दृष्टसाकल्ये तद्विलम्बाकल्पनात्, न हि दृष्टसाकल्यमदृष्टविलम्बश्चेति सम्भवतीत्यर्थः। अन्यथेति। यदि दृष्टसाक-

न्यायलीलावतीप्रकाशः

अथात्मनःसंयोगे विशेषः कार्योन्नेयः किञ्चिच्छब्दग्रहे हेतुस्तदन्यशब्दग्रहे प्रतिबन्धकश्चेति तत्र वैभवेऽपीन्द्रियमनःसंयोगविशेषाद्व्यासङ्गोपपत्तेः। अत्राहुः। यद्यपि बुभुत्साप्रणिधाने शब्दमात्रग्रहे न सहकारिणी न चेतरग्रहप्रतिबन्धके तथापि नानाशब्दसमवायदशायां श्रोत्रे यः शब्दग्रहस्तत्र तयोस्तथाभावः, तथैव तयोरन्वयव्यतिरेकात्। न च वैभवेऽदृष्टाभावात्कार्यव्यतिरेकः तदितरसाकल्ये तस्यापि सत्त्वादित्याह—दृष्टसाकल्य इति। एतच्च कार्यविशेषं ज्ञानमधिकृत्योक्तम्। क्वचित्कार्ये दृष्टसाकल्येऽप्यदृष्टविलम्बात् विलम्बः। अन्यथेति। सामग्र्या इति पञ्चमी। सामग्र्या

न्यायलीलावतीप्रकाशविवृतिः

स्यादिति उभयोपालम्भायैवेयं फक्किका। तत्र च रूपादीत्यणुत्ववादिनं प्रति बुभुत्साधीनेत्यादि विभुत्ववादिनं प्रतीति द्रष्टव्यम्। अज्ञानं स्यादिति शेषः। तटस्थ एव तर्हि वैभवपक्षेऽपि सम्यगेवेत्यणुत्ववादिनं प्रत्याह--वैभवेऽपीति। यद्यपि मनसो विभुत्वे श्रोत्रमनःसंयोगविशेषाभावः, तथापि तत्र शरीरमनःसंयोगे कर्णशष्कुलीमनःसंयोगे वा विशेषः फलवत्त्वकल्पनीय इति भावः। तथापीति। न ... तत्रानन्यगत्या तथैव स्वीकारादिति भावः। यद्यप्येवं बुभुत्सादिविशेषमादाय वैभवपक्षेऽपि व्यासङ्ग उपपादयितुं शक्यते तथापि सूचीत्पादिवेधोत्कटविषयसन्निकर्षे व्यभिचारान्न तस्यापि नियामकत्वमिति मिश्राः। वस्तुतो लाघवात्संयोगत्वमेव द्रव्यजन्यतावच्छेदकमित्यत्र संयोगानिरासे आत्ममनःसंयोगाभावादसमवायिकारणाभावे बुभुत्सादेरुत्पत्तिर्न स्यादित्येव समीचीनं विभुत्वबाधकमिति दिक्। अणि-

---

(१) ०ष्टवैलक्षण्यस्या०।

सामग्र्याः फलानुमानस्य शक्तेश्चासिद्धि(१)प्रसङ्गात्। न च देशका-
लादयोऽप्युपाधयः। सर्वसहकारिविरहे मनसोऽप्यसिद्धेः। आत्म-

---

न्यायलीलावतीकण्ठाभरणम्

ल्येऽप्यदृष्टविलम्बात् कार्य्यविलम्बः, तदाऽन्त्यतन्तुसंयोगेऽपि पटो न जायेत सामग्र्यां सत्यामपि कदाचिन्न कार्य्यं जायेतेति सामग्र्य-पि कार्य्यं व्यभिचरेदिति तया कार्य्यं नानुमीयेतेत्यर्थः। करतलान-लसंयोगे सत्यपि दाहाभावस्य कदाचिददृष्टाभावादेवोपपत्तौ शक्ति-कल्पना न स्यादित्याह—शक्तेश्चेति। ननु देशकालोपाधीनां मध्ये क-स्यचिद्विरहाज ज्ञानानुत्पत्तिरतो व्यासङ्गसुस्वापावुत्पत्स्येते इत्याश-ङ्क्याह—न चेति। न च देशकालादय उपाधयः यद्विलम्बात् कार्य्यवि-लम्बः स्यादिति शेषः। सर्वसहकारीति। सर्वसहकारिविरहे शङ्क्यमाने मनसोऽप्यसिद्धिरित्यर्थः। मनोव्यतिरेकप्रयुक्तः कार्य्यव्यतिरेको यदि भवेत्तदा मनसः सिद्धिः स्यात्तथा च मनसो व्यतिरेकोऽन्यथासिद्धो यावता सहकार्य्यन्तरव्यतिरेकादेव तदानीं कार्य्यानुत्पत्तिसम्भवा-दिति भावः। मनोवैभवादिना आत्ममनःसंयोगो नित्यो वक्तव्यस्त-

न्यायलीलावतीप्रकाशः

दृष्टादृष्टसमूहरूपतया यावद्दृष्टसमवधानेऽप्यदृष्टाभावसम्भावनया सामग्रीतः कार्यानुमानं न स्यादित्यर्थः। शक्तेश्चेति। परं प्रति वि-रोधप्रदर्शनम्। दृष्टकारणसाकल्ये सत्यप्यदृष्टाभावादेव कार्य्यभा-वापपत्तेः कुतः शक्तिकल्पनमित्यर्थः। ननु ज्ञानोत्पत्तिं प्रति देशका-लादीनां प्रयोजकत्वादुपाधित्वं ततस्तदभावादेव सुषुप्त्याद्युपपत्ति-रित्याशङ्क्य निराकरोति—न चेति। किञ्च मनोवैभवे अजः संयोग आ-त्ममनसोर्वाच्यस्तत्र च बाधकमस्तीत्याह—आत्ममन इति। तथा चान्य-तरकर्मजसंयोगानुरोधान्मूर्त्तत्वं मनसो वाच्यमित्यर्थः। नन्वाकाश-

न्यायलीलावतीप्रकाशविवृतिः

दिति। परमाणुकर्मस्थल इत्यर्थः। सामग्रीत इति। दृष्टकारणसमुदायादि-त्यर्थः। मूलेऽपि सामग्रीपदं तत्परमेव। दृष्टादृष्टेत्यादि तु वस्तुतः सा-मग्रीनिरुक्तिः। ननु नैयायिकानां चेदमनिष्टमत आह—परमिति। मनसो

---

(१) शक्तेश्च सिद्धिप्र०।

मनोयोगस्य च संयोगत्वेनानित्यत्वात् । अन्यथा विभागस्यापि नित्यतापत्तावपसिद्धान्तात्(१) । नित्यत्वे च संयोगस्यापि समवायत्वेन रूपादीनामपि संयोगित्वात् विभागित्वे(२)पृथगुपलम्भप्रसङ्गः । अयुतसिद्ध्या विशेष इति चेन्न, अजसंयोगव्याघातात्(३) । संयोगत्वेन विशेष इति चेन्न, तस्य नियामकं विना नियत[देश]-

---

न्यायलीलावतीकण्ठाभरणम्

त्राह—आत्मेति । अन्यथेति । संयोगो यदि नित्यः स्यादित्यर्थः । दोषान्तरमाह—नित्यत्वे चेति । नित्या प्राप्तिः समवाय इति तल्लक्षणादिति भावः । न चेदेवं तदा रूपादिसमवायोऽपि संयोगः स्यात । तथा च रूपादीनां संयोगित्वेन विभागित्वापत्तौ द्रव्याद्रूपं पृथगुपलभ्येतेत्यर्थः । ननु रूपरूपिणोर्विद्यमानयोरसम्बन्धित्वं पृथगेव सत्त्वं पृथगाश्रयाश्रयित्वं वा । युतसिद्धिर्नास्ति । तथा च कथं पृथगुपलम्भः स्यादित्याह—अयुतसिद्ध्येति । यद्वा अयुतसिद्धयोर्नित्या प्राप्तिः समवायोऽन्यत्र तु संयोग इत्याह—अयुतसिद्ध्येति । 'विशेषः' संयोगसमवाययोरिति शेषः । असम्बद्धयोर्वर्त्तमानत्वं युतसिद्धिस्तदभावो ह्ययुतसिद्धिस्तथा चात्ममनसोरसम्बद्धयोर्विद्यमानत्वाभ्युपगमे कुतः संयोगोऽयमज इत्याह—नेति । ननु विभुनोरन्योऽन्यं समवायाभावे संयोग एव स्वीकर्त्तव्य इत्याह—संयोगत्वेनेति । नित्यसंयोगे संयोगत्वं जातिरेव नाभिव्यञ्जकं विना सिध्येत्तथा च पुनरविशेष एव समवायेनेत्याह—नेति । तथा

न्यायलीलावतीप्रकाशः

मात्मना संयुज्यते द्रव्यत्वादित्यजः संयोगः सिद्ध्येदित्यत आह—अन्यथेति । तत एवाजविभागसिद्धिस्तदेव तेन संयुज्यते विभज्यते चेति विरोध इत्यर्थः । नित्यत्वे चेति । नित्या प्राप्तिः समवाय इतिलक्षणाक्रान्तत्वादित्यर्थः । अयुतसिद्ध्येति । रूपरूपवतोरसम्बद्धयोरसत्त्वमिति न पृथगुपलम्भ इत्यर्थः । अजेति । आकाशात्मनोरसम्बद्धयोरसत्त्वे कुतो

न्यायलीलावतीप्रकाशविवृतिः

वाच्य इति । आत्मविभुत्वस्य प्रामाणिकत्वादिति भावः । तत एवेति । नित्यद्रव्यत्वादित्यर्थोऽन्यथा घटादौ व्यभिचारापत्तेरित्यन्यत्र वि-

---

(१) ०पसिद्धान्तता । (२) संयोगित्वे विभागित्वाद् पृथ० । (३) ०घाभावत् ।

व्यङ्गयत्वानुपपत्तेः। अत एव यौगपद्यप्रत्ययाभिमानः(१)। गोधा-भुजगादौ तु वेगवत्खड्गाभिघातेन नानादेहावयवाश्रितवेगवत्प्राण-पवनसंयोगादेव क्रियोत्पद्यते। अतिरिक्तत्वं(२) च न सिद्ध्येत्। श्रोत्रवद्गगनेनैव कृतार्थत्वादिति। आत्मान्तरेण नेत्युपरम्यते। (इति) मनः॥

इति श्रीन्यायलीलावत्यां द्रव्यविचारः। (३)

---

न्यायलीलावतीकण्ठाभरणम्

चान्यतरकर्म्मज एवात्ममनसोः संयोग इति मनो मूर्त्तं तस्यावयव-कल्पना च गौरवपराहतेत्यर्थः। तथा च पादे मे सुखं शिरसि वेद-नेति यौगपद्यप्रत्ययो मनस आशुसञ्चारनिबन्धनो भ्रान्त इत्याह—अत एवेति। गोधेति। तत्र नानाशरीरावच्छेदेन यदि चेष्टा भवेत्तदा मन-सो वैभवं कल्प्येतापि न त्वेवं किन्तु वेगवत्खड्गाद्यभिघातात् प्राणे वेगोत्पत्तिर्वेगवत्प्राणसंयोगाच्च नानाभुजगादिशरीरावयवावच्छे-देन क्रियेत्यर्थः। किञ्च मनो यदि विभुः स्यात्तदा तदन्तःकरणमष्टद्र-व्यातिरिक्तं न सिद्ध्येत् गगनावच्छिन्नदेहावयवविशेषेणैव तदन्यथासि-द्धेरित्याह—अतिरिक्तमिति। नन्वाकाशस्य शब्दग्राहकत्वात् कथं तेना-न्यथासिद्धिः। तथा च सर्वविषयकमन्तःकरणमवश्यं कल्पनीयमत आह—आत्मान्तरेण वेति। सुखादीनां च नाणुमात्रदेशदेशता विभुका-र्याणामसमवायिकारणावच्छिन्ने उत्पद्यत एवेति नियमो न तु तद-

न्यायलीलावतीप्रकाशः

ऽजः संयोग इत्यर्थः। तस्येति। समवायलक्षणाक्रान्तत्वेन संयोगत्वा-भावादित्यर्थः। गोधेति। यद्यपीतरचेष्टावदस्या अपि प्रयत्नवदात्म-संयोगोऽसमवायिकारणं न तु प्राणसंयोगस्तथापि कायव्यूहवदनन्य-गत्या मनोना(ना?)त्वेनैव तदुपपाद्यमिति सम्प्रदायविदः। अतिरिक्तं

न्यायलीलावतीप्रकाशविवृतिः

स्तरः। सम्प्रदायविद इति। वस्तुतस्तादृशभुजगादिक्रियायां चेष्टात्वमेव

---

(१) प्रत्ययोऽभिमानः। (२) अतिरिक्तमिति प्रकाशादिसम्मतः पाठ।
(३) इति न्यायलीलावत्यां द्रव्यपदार्थोपवर्णनम्।

संख्या तावन्नैकादि(१)व्यवहारहेतुत्वेन भिद्यते ।

न्यायलीलावतीकण्ठाभरणम्

वच्छिन्न एवेति नियम इति भावः ।

इति महामहोपाध्यायमिश्रश्रीभवनाथात्मजमहामहोपाध्यायसन्मिश्र-

श्रीशङ्करकृतौ लीलावतीरहस्ये द्रव्यपदार्थः समाप्तः ।

द्रव्यपदार्थनिरूपणानन्तरमवसरप्राप्तं गुणनिरूपणम् । तत्र गुणत्वं पूर्वमेव साधितं रूपादीनां चतुर्णां विप्रतिपत्तेरभावात्तदुल्लङ्घ्य सख्यां निरूपयति—संख्येति । संख्या इतरेभ्यो भिद्यते एकद्व्यादिव्यवहारजन-

न्यायलीलावतीप्रकाशः

केति । विभुमनःपक्ष इति शेषः ॥

इति श्रीलीलावतीप्रकाशे द्रव्यपदार्थः ।

गुणत्वस्य प्रागेव साधनाद् गुणेषु रूपादिचतुर्णां सुगमत्वेन ता-नुपेक्ष्य संख्यां विवेचयति—संख्या तावदिति । ननु संख्याया गुणत्वमासिद्धं वस्तुमात्र एवैकादिव्यवहारात् गौणमुख्यभावस्य च दुर्निरूपत्वात् द्वि-त्वादेश्चापेक्षाबुद्धिव्यङ्ग्यत्वात् । ततः पदार्थान्तरमेवेति केचित् । तन्न, द्वि-

न्यायलीलावतीप्रकाशविवृतिः

नास्ति तत्प्रत्यक्षस्य च कारणबाधेन भ्रान्तत्वादित्येव समाधानम् ।

इति महामहोपाध्यायश्रीभगीरथविरचितायां लीलावती-

प्रकाशिकायां द्रव्यपदार्थः सम्पूर्णः ।

ननु द्वित्वादेरपेक्षाबुद्धिजन्यत्वेन सुखवद्गुणत्वमनुमेयमित्यत आह—द्वित्वादेश्चेति । तथा च हेतुरेवासिद्ध इति भावः । पदार्थान्तरमिति । नित्यमिति शेषः । अत एव किश्चैवं नित्यमित्यादिग्रन्थः सङ्गच्छते । द्वित्वादीति । अपेक्षाबुद्धिः समूहालम्बनात्मकबुद्धिविशेषः । तथा च सिद्धेनानेन गुणत्वं साधनीयमिति भावः । यद्वा एतदनुमानेन नित्यत्व-बाधे गुणे तद्व्यवहारो गौण एव वाच्यस्तस्य जन्यधर्मानाश्रयत्वादिति किं पदार्थान्तरकल्पनयेति भावः । अत्र चरमाभिप्रायपक्षे बुद्धिजन्य-

(१) नैकत्वादिव्य० ।

न्यायलीलावतीकण्ठाभरणम्

कत्वादित्यत्र एकत्वादिपरार्द्धपर्य्यन्तव्यवहारहेतुत्वं नैकस्या अपि संख्याया इति स्वरूपासिद्धिः। प्रत्येकव्यवहारहेतुत्वं च भागासिद्धमि·

न्यायलीलावतीप्रकाशः

त्वाद्यपेक्षाबुद्धिजन्यं कार्यत्वे सति नियमेनैकप्रतिपत्तृवेद्यत्वात्

न्यायलीलावतीप्रकाशविवृतिः

मित्येव साध्यम्। अपेक्षेति। पक्षधर्मताबललभ्यसाध्यनिर्वचनमत एव सुखविशेषे न व्यभिचारः। यद्यप्येवं जन्यत्वमात्रमेव साध्यमुचितं तथापि जन्यत्वेऽपि बुद्धिव्यङ्ग्यत्वमस्त्विति शङ्कानिरासाय बुद्धिग्रहणम्। प्रथमाभिप्रायपक्षे तु तज्जातीयत्वं साध्यमतो नोक्तव्यभिचारः। कार्यत्वे सतीति। समवेतत्वे सतीत्यर्थः। तेन नान्यतरासिद्धिः। एवं गोत्वादावेव व्यभिचारवारणाय नियमेनेति। एकमात्रलौकिकप्रत्यक्षविषयत्वादित्यर्थः। तेनानुमानादिना नानापुरुषवेद्यतया नासिद्धिः। अत्र सत्यन्तमात्मनि सुखादिप्रागभावे च व्यभिचारवारणाय। तावन्मात्रं च जातौ व्यभिचारीत्युत्तरदलम्। न चापेक्षाबुद्धिजन्यत्वसाध्यपक्षे ज्ञानादौ व्यभिचारः, समूहालम्बनत्वनियतकारणताप्रतियोगिककार्यताश्रयत्वस्य साध्यत्वादन्यथा गुणत्वव्याप्यद्वित्वलाभादिति वाच्यम्, नियमेनेत्यस्यावश्यकतया इतरव्यवच्छेदेन चेत्यर्थं एकमात्रपुरुषलौकिकसाक्षात्कारविषयताव्याप्यजातिमत्त्वस्य हेतौ (१)लाभात्। तादृशी च जातिः पक्षे शरीरजन्यतावच्छेदिका द्वित्वत्वादिव्याप्या घटत्वादिवदभ्युपेयेति नासिद्धिः। अन्यथा द्वित्वस्य लौकिकसाक्षात्काराविषये ईश्वरापेक्षाबुद्धिजन्यद्वित्वे सत्त्वादसिद्ध्यापत्तेः। न च लौकिकेत्याद्येव समीचीनं शरीरविशेषवृत्तिचैत्रत्वादिजातिमादाय व्यभिचारात्। न च गर्भोत्पन्नकामशरीरे तन्मात्रसाक्षात्कारविषये तथापि व्यभिचार इति वाच्यम्, पुरुषान्तरीयसाक्षात्कारायोग्यत्वस्य मात्रपदेन लाभात्। सत्यन्तं चात्मन्येव सुखसमवायिकारणतावच्छेदकजातिमादाय व्यभिचारवारणाय। प्रागभावादिनेति चातद्गुणसंविज्ञानबहुव्रीहिः। हेतुश्चायं स्वमतेन। परेण द्वित्वस्यानेकवेद्यताभ्युपगमात्। कर्मसमूहरूपनृत्यदर्शनजन्यजातीयसुखमादाय अणुमात्रस्य चात्र दृष्टान्तत्वमिति दिक्।

---

(१) हेतोर्ला०।

तस्य समुच्चितस्य(१) स्वरूपासिद्धेः। विपरीतस्य भागासिद्धेः।
गणनासाधारणकारणत्वादिति चेन्न, एकद्वित्र्यादिज्ञानविषयत्वे पू-

न्यायलीलावतीकण्ठाभरणम्

त्यर्थः। इदं संख्यातमिति ज्ञानं गग(ण?)नाविषयतया च तदसाधारण-
कारणत्वात् संख्या इतरेभ्यो भिद्यत इत्यत आह—गणनेति। पुर्वदोषादिति।
समुदितज्ञानजनकत्वे स्वरूपासिद्धेः प्रत्येकज्ञानजनकत्वविवक्षायां
भागासिद्धेरित्यर्थः। संख्यातत्वेन ज्ञानं विवक्षितमिति यदि तदाऽन्यो

न्यायलीलावतीप्रकाशः

सुखवत्। कार्यत्वेन विशेषणान्न ज्ञानप्रागभावादिना व्यभिचारः। न
चाप्रयोजकत्वम्, अपेक्षाबुद्धेर्द्वित्वादिव्यञ्जकत्वे द्वित्वादिसंयोगविभा-
गानामन्यूनानतिरिक्तदेशानां समानेन्द्रियग्राह्याणां प्रतिनियतव्यञ्ज-
कव्यङ्ग्यत्वानुपपत्तेः। किञ्चैवं नित्यमनेकसमवेतमिति सामान्यलक्ष-
णयोगात् सामान्यरूपतैव स्यात् तत्र च बाधकं वक्ष्यति। तस्येति।
आदिशब्दवाच्यैकप्रकारानिरुक्तेरेकादित्वस्यैकस्याभावान्मिलितका-
दिव्यवहारहेतुत्वे तस्य प्रत्येकमभावात् स्वरूपासिद्धिः, एकैकव्यव
हारहेतुत्वे च भागासिद्धिरित्यर्थः। ननु संख्याज्ञानं प्रति विषय-
त्वेनासाधारणकारणत्वं भेदकं स्यादित्याह—गणनेति। गणना ह्येकत्वा-
द्यवच्छिन्नत्वेन ज्ञानं तत्र च समुच्चितासमुच्चितत्वपक्षयोः पूर्वोक्त-
दोष इत्याह—एकेति। ननु संख्याज्ञानमात्रं विवक्षितमित्यत आह—

न्यायलीलावतीप्रकाशविवृतिः

कार्यत्वेनेति। समवेतत्वेनेत्यर्थः। न चेति। तथा चासिद्धिरपि नेति-
भावः। अपेक्षाबुद्धेरिति। अपेक्षाबुद्धेर्व्यञ्जकत्वे द्वित्वादीनां प्रसक्तस्य
प्रतिनियतव्यञ्जकव्यङ्ग्यत्वस्यानुपपत्तेः प्रमाणबाधादित्यर्थः। ननु
संयोगे गृह्यमाणे द्वित्वग्रहनियमात्प्रातिनियतव्यञ्जकव्यङ्ग्यत्वाभावोऽस्त्ये-
वेति चेत्, न, अपेक्षाबुद्धेः स्वभावत्वेन संयोगग्रहेऽपि द्वित्वाग्र-
हात्। नन्वन्यूनानातिरिक्तदेशत्वमवच्छेदकमादायापि वाच्यमन्य-
थोक्तनियमस्य नानापुरुषकर्मा(र्णो ?) वच्छिन्नशब्दयोरेव व्यभि-
चारात्। तथा च नोक्त दोष इत्यरुचेराह—किञ्चेति। कारणप्रक्रमोत्प-

(१) समुदितस्य।

र्वदोषात् । संख्यामात्रत्वे तस्यैवासिद्धेः । संख्याजातीयं तदिति चेन्न, जातेरप्यसिद्धेः । गणितशब्दप्रयोगात्तत्सिद्धिरिति चेन्न, हस्ततुलादिपरिमितदीर्घादिपरिमाणगुरुत्वयोः परिमितव्यव-

न्यायलीलावतीकण्ठाभरणम्

ऽन्याश्रय इत्याह—संख्येति। गग(ण?)नासाधारणकारणत्वं संख्याजातीयत्वमेवोक्तं तच्च सर्वसंख्यासाधारणमतो न पूर्ववदोष इत्याह—संख्याजातीयेति । संख्याजातीयत्वं हि संख्यात्वजातियोगित्वं यदि तत्राह—जातेरपीति । पूर्वभेदकापेक्षया अपिशब्दः । इदं गणितमिदं गणितमित्यनुगतप्रत्ययः प्रयोगश्च जात्यधीन इति तत सिद्धिरित्याह—गणितेति । गणितप्रयोगो जातिनिबन्धनः साधारणप्रयोगत्वात् गवादिप्रयोगवदित्यत्रानैकान्तिकत्वमाह—हस्तेति । हस्तादिपरिमितदीर्घादिपरिमाणतुल्यपरिमितगुरुत्वयोरित्यन्वयोऽत्र विवक्षितः । तथा च साधारणप्रयोगस्याप्यस्य नैकजातिनिबन्धनत्वमित्यनेकान्तः । संख्याया इतर-

न्यायलीलावतीप्रकाशः

संख्यामात्रत्व इति । ज्ञानेऽपि विषय एव विशेषकः, न च संख्यामात्रं किञ्चिदनुगतमस्तीत्यर्थः । ननु संख्यात्वं जातिस्तथा स्यादित्याह—संख्याजातीयमिति । संख्येत्यनुगतव्यवहारात्तदप्यसिद्धमित्याह—जातेरिति । नन्वेकादौ संख्यातमित्यनुगतव्यवहाराद्व तत् स्यादित्याह—गणितेति । परिमाणगुरुत्वसाधारणैकजातिं विना परिमितव्यवहारवत् संख्यातव्यवहारः स्यादित्यत आह—हस्ततुलेति । यथासंख्यमन्वयात् हस्तपरिमितदीर्घादिपरिमाणे तुलापरिमितगुरुत्वे चेत्यर्थः । पूर्वेषां सर्वेषां नि-

न्यायलीलावतीप्रकाशविवृतिः

त्यमेव द्वित्वमिदिमतमिदानीमप्रकृतमेवातः प्रकृतं नित्यत्वमेव खण्डितम् ।

मिश्रास्तु उत्पत्तावन्वयव्यतिरकयोरभिव्यक्तौ संचा(सा?)रे घटोत्पत्तिरपि न सिद्ध्येत् । न च तत्र नाशप्रत्ययानुरोधादुत्पत्तिसिद्धिः । एकघटापसारणानन्तरं द्वौ नष्टाविति प्रतीतेरत्रापि द्वित्वध्वंसविषयायाः सत्त्वात् । विशेष्यवति विशिष्टध्वंसे प्रतीतेर्विशेषणध्वंसविषयत्वादिति दूषणं व्यङ्ग्यत्वपक्षे वदन्ति । पूर्वेषामिति । गणनासाधारणकारणत्वादीनामित्यर्थः । व्यभिचरितो व्यतिरेकी विरुद्ध इत्याशयवानाह—वि-

हार(१)वदुपपत्तेः । विपक्षाद्व्यावृत्तेश्च । एकत्वद्वित्वादीनां(२) सामान्यरूपत्वेनैवोपपत्तेः । न च परापरभावानुपपत्तिः । अन्यूनानतिरिक्तव्यक्तिकत्वात् । न च [भेदे] मानाभावः । विचित्रबुद्धिवेद्यत्वात् । न च सदा द्वित्वावगतिः । विशिष्टबुद्धि-

---

न्यायलीलावतीकण्ठाभरणम्

भेदसाधकत्वेन शङ्कितानां हेतूनां विरुद्धत्वमाह—विपक्षेति । इतरभेदे साध्ये सामान्यस्यापि विपक्षत्वात् । तदेव स्फुटयति—एकत्वेति । एकत्वद्वित्वादीनां परापरभावानुपपद्यं न जातिरूपत्वमित्याह---न चेति । कृतकत्वानित्यत्वयोरिव समानव्यक्तिकतयैव परापरभावोपपत्तिरित्याह—अन्यूनेति । तर्हि घटत्वकलसत्ववदेकमेव एकत्वादि स्यादित्याह--न च मानेति । भेद इति शेषः । बिलक्षणबुद्धिवेद्यत्वादेव एकत्वद्वित्वादीनां भेद इत्याह--विचित्रेति । ननु द्वित्वं यदि जातिः स्यादेकस्यामपि व्यक्तौ बुध्येत गोत्ववदित्याशङ्क्याह—न चेति । यद्वा ननु यदि द्वित्वादिकं सामान्यं स्यादपेक्षाबुद्धिव्यङ्ग्यं न स्यादित्यत आह—न चेति । यद्वा यदि द्वित्वादिकं सामान्यं स्यादिन्द्रियापातमात्रवेद्यं-

न्यायलीलावतीप्रकाशः

रुद्धत्वमाह—विपक्षादिति । विपक्षात्सामान्यात् द्वित्वादीनामव्यावृत्तेरित्यर्थः । तदुपपादयति—एकत्वादीनामिति । तेनैकमिदमेकमिदमित्यनुगतधीरप्युपपद्यते । न च संख्यागतसामान्येन परम्परासम्बन्धात्तदुपपत्तिः साक्षात्सम्बन्धे बाधकाभावादिति भावः । न चेति । एकत्वद्वित्वादीनां परस्परमिति शेषः । भेदे मानाभावं ह्यन्यूनानतिरिक्तवृत्तिजातौ बाधकमतस्तदेव दूषयति—न चेति । ननु बुद्धित्वादीनां जातिरूपतायामिन्द्रियापातमात्रेणैकत्ववत् द्वित्वाद्यप्यवगम्येतेत्याशङ्क्य निराकरोति—न चेति । विशिष्टबुद्धिरपेक्षाबुद्धिविशेषः । ननु संख्यानानभिव्यङ्ग्यकार्यद्रव्यवृत्तिजातीनां समवायिकारणवृत्तित्वनिय-

न्यायलीलावतीप्रकाशविवृतिः

रुद्धत्वमिति । अव्यावृत्तेरभेदादित्यर्थः । तथा च सामान्यगत्वेन पूर्वहेतूनां व्यभिचार इति भावः । संस्थानेति । घटत्वात्मत्वरूपत्वेषु व्य-

---

(१) व्यवहृतिव० । (२) एकत्वादीनामिति प्रकाशसम्मतः पाठः ।

व्यङ्ग्यत्वात्, योनिसम्बन्धबुद्धि(१)ब्राह्मणत्ववत्। न चैकजातीयकारणान्नानाजात्यभावः। कारणेष्वपि तज्जातिसत्त्वात् सत्तावत्। अन्यथा सदिति व्यवहारात्सत्त्वमपि गुणान्तरं स्यात्। गुणेष्वेक(२)त्वबुद्धिवत् सत्प्रतीतिरपि भ्रान्त्यैव(३) स्यात्। बाधकाभावस्त्वेकत्वादावपि तुल्य एव। मैवम्। द्वित्वादिकं न सामान्यं एकैकशः स्वोपरक्तव्यवहार(४)मनकत्वात्। संयोग-

न्यायलीलावतीकण्ठाभरणम्

स्यादित्याह—न चेति। अत्र सर्वत्र व्यभिचारमाह—योनीति। यद्यपि सर्गादौ योनिसम्बन्धव्यङ्ग्यत्वं नास्ति तथापि षट्कर्माचरणव्यङ्ग्यत्वमनेनोपलक्षितम्। परमतेन वा एतदुक्तम्। ननु कपालद्वयारब्धे घटे द्वित्वादिसामान्यं बहुतन्तुके च द्वित्वं कथं स्यात् द्रव्यत्वसाक्षाद्व्याप्यजातेः कारणगताया एव कार्य्ये वृत्तेरित्यत आह—न चेति। द्वित्वत्रित्वादीनां सर्वासामपि जातीनां कारणेष्वपि भावान्नैष इत्याह—कारणेष्वपीति। अन्यथेति। अनुगतप्रत्ययस्यापि गुणाधीनत्वे इत्यर्थः। ननु सत्ता चेद् गुणस्तदा गुणादौ नानुभूयेतेत्याशङ्क्याह—गुणेष्विति। बाधकाभाव इति। सत्ताया जातित्व इति शेषः। द्वित्वादिकमिति। घटद्वि-

न्यायलीलावतीप्रकाशः

मात्र घटादौ द्वित्वादिजातयः स्युरित्याह—न चेति। नानाजातिरेकत्वद्वित्वादिका। रत्नत्वब्राह्मणत्वादौ व्यभिचारः स्फुटत्वादुपेक्षितः। अन्यथेति। यद्यनुगतव्यवहारविषयत्वेऽप्येकत्वादीनां गुणत्वं तदेत्यर्थः। न च सत्ताया गुणत्वे गुणादौ सदिति बुद्ध्यभावो बाधकमित्याह—गुणेष्विति। बाधकाभावस्त्विति। बाधकाभावः सत्ताया जातित्व इत्यर्थः। एकैकश

न्यायलीलावतीप्रकाशविवृतिः

भिचारवारणाय विशेषणानि। प्रत्यक्षत्वमपि जातिविशेषणमतो न चक्षुष्ट्वादौ व्यभिचारः। एकत्वद्वित्वादिकेति। तथा च कपालादिष्वपि तज्जातिसत्त्वादिष्टापत्तिरितिभावः। रत्नत्वेति। संस्थानेत्यादिव्यासेरिति शेषः। अयं च व्यभिचारो यथाश्रुते। यदा तु योग्यसंस्थाना-

---

(१) सम्बन्धवेद्यत्रा०। सम्बन्धबुद्धिव्यङ्ग्यत्रा०। (२) गुणेषु त्वेकत्व०।
(३) भ्रान्त्यैव। (४) व्यवहाराज०।

वत् । अन्यथा घट इतिवदेकत्रैवायं द्वावयं च द्वाविति प्रतीतिः

---

न्यायलीलावतीकण्ठाभरणम्

त्वं न घटवृत्तिजातिः घटेन्द्रियसन्निकर्षे सत्यपि स्वविशिष्टप्रत्यया-विषयत्वात् संयोगवत् । यद्वा घटपटद्वित्वं न घटवृत्तिजातिः पटे-न्द्रियसन्निकर्षं विना अज्ञायमानत्वात् नियमतः पटेन्द्रियसन्निकर्षा-धीनज्ञानत्वात् घटपटसंयोगवदिति मानार्थः । अत्र विपक्षबाधकमा-ह—अन्यथेति । यदि घटपटद्वित्वं घटजातिः स्यात् पटेन्द्रियसन्निकर्ष-

न्यायलीलावतीप्रकाशः

इति । 'स्वोपरक्तः' स्वविशिष्टः । व्यवह्रियतेऽनेनेनेति व्यवहारो ज्ञानम् । तेन प्रतीतिः स्यादित्यग्रिमग्रन्थेनाविरोधः । द्वित्वादीनां स्वोपरक्तव्य-वहाराजनकत्वं स्वरूपासिद्धमित्यत उक्तं एकैकश इति । प्रत्येकं स्व-विशिष्टज्ञानाजनकत्वादित्यर्थः । ननु स्वशब्दो यदि वस्तुसामान्यपर-स्तर्ह्यसिद्धिः, अथ द्वित्वपरस्तदा घटत्वादिनाऽनैकान्तिकम् । अथैत-द्घटद्वित्वं नैतद्घटसामान्यं एतद्घटान्यद्रव्याविषयप्रतीत्याविषयत्वात् संयोगवत् । न चाप्रयोजकत्वम्, यद्येतद्घटद्वित्वमेतद्घटसामान्यं स्यादेतद्घटमात्रेन्द्रियसन्निकर्षवेद्यं स्यादिति विपक्षे बाधकादित्यु-

न्यायलीलावतीप्रकाशविवृतिः

व्याप्यकार्यद्रव्यवृत्तिजातीनामिति तदर्थः, तदा नेदं दूषणम् । न चैवं घटपटादिद्वित्वे आपादकाभावः । परमाणुघटोऽन्यवृत्तित्वे आपा-दनेन समीहितसिद्धेरिति मिश्राः । प्रत्येकमिति । न चैवमसिद्धवाच(र?)कतया व्यर्थता अखण्डाभावत्वादिति भावः । असिद्धिरिति । द्वित्ववि-शिष्टप्रत्ययस्य रूपद्रव्यत्वविषयतानियमाद् द्वित्वस्य च तज्जनकत्वात् । रूपादीनां च प्रत्येकपर्याप्तत्वादिति भावः । अनैकान्तिकमिति । इदमुप-लक्षणम्, द्वित्वस्य द्वित्वस्वभाव(१)स्वज्ञानेषु प्रत्येकं विशिष्टप्रत्यय-जनकत्वादसिद्धिरपि द्रष्टव्या । इदमपि दूषणं प्रथमपक्षे द्रष्टव्यम् । एतद्घटेति । द्वित्वसामान्यपक्षतायामेतद्घटवृत्तित्वाभावमादाय सा-ध्यपर्यवसानादभिमतासिद्धिरित्येतद्घटेति । पटत्वे व्यभिचारो मा-भूदिति साध्ये एतद्घटेति । घटत्वे व्यभिचार इति हेतोरेतद्घटान्ये-ति । घटत्वविषयतावश्यकतामादाय स एव व्यभिचार इति तद्धय-

---

(१) द्वित्वत्वस्वाभावस्वज्ञा० ।

न्यायलीलावतीप्रकाशः

च्यते तदपि न घटत्वादिसामान्यस्यापि घटान्यद्रव्याविषयकप्रतीत्यविषयत्वात् घटादेः स्वावयवाविषयसाक्षात्काराविषयत्वात् । तर्कोऽपि शिथिलमूलः, घटत्वसामान्यस्यापि शरीरेन्द्रियसन्निकर्षेन्द्रियार्थावयवसन्निकर्षव्यङ्ग्यत्वात् । न च घटद्वित्वं यदि घटसामान्यं स्यात् घटतदवयवान्यद्रव्याविषयकसाक्षात्काराविषयः स्यादिति वाच्यम्, विपर्ययापर्यवसानात् । तथा हि घटद्वित्वं घटसामान्यं न घटतदवयवान्यद्रव्याविषयकसाक्षात्कारविषयत्वात् इति घटतदवयववृत्तिद्वित्वे वैशेषिकाणां स्वतोऽसिद्धम् । अत्राहुः—द्वित्वातिरिक्तगुणाविषयो द्वित्वप्रत्ययः गुणविषयो द्वित्वप्रत्ययत्वात् द्वौ रूपवन्ताविति प्रत्ययवदिति । न चाप्रयोजकत्वम् । एकत्वाद्यपेक्षया द्वित्वादावतिशयस्य द्वित्वादिसामान्येनानुपपत्तेः । एवं बहुत्वसंख्या गुण एव अल्पसंख्यावयवारब्धापेक्षया तदधिकवृत्तिबहुत्वारब्धे परिमाणातिशयानुपपत्तेः, तस्यासमवायिकारणबहुत्वातिशयप्रयोज्य-

न्यायलीलावतीप्रकाशविवृतिः

गर्भता । प्रतीतिश्चात्र लौकिकसाक्षात्काररूपा विवक्षितेति न गुणत्वसामान्यलक्षणमादायासिद्धिरिति भावः । घटत्वादीति । तथा च तत्रैव हेतुर्व्यभिचारीति भावः । शरीरेन्द्रियेति । इदमुपलक्षणम्, अन्वयेन्द्रियसंयोगस्यापि संयुक्तसमवेतसमवायघटकतया घटत्वव्यञ्जकत्वादित्यपि द्रष्टव्यम् । न च संयुक्तसमवेतसमवायस्य घटत्वग्राहकत्वे मानाभावः । रूपत्वकर्मत्वादिसाक्षात्कारे तस्य कारणतायां लाघवेन द्रव्यसमवेतसमवेतसाक्षात्कारत्वस्यैव कार्यतावच्छेदकत्वादिति भावः । अत्र च द्वितीयस्वाश्रयविषयकप्रतीत्यविषयत्वमनुमाने हेतुः । तर्के चापरस्वाश्रयसन्निकर्षसहितसामग्रीवेद्यत्वमापाद्यमतो नोक्तदूषणद्वयावकाशः । न च तत्राप्युक्तक्रमेण द्रव्यत्वे पृथिवीत्वे च व्यभिचार इति वाच्यम्, त्रसरेणुनिष्ठतया तत्प्रतीतेरपरतदाश्रयविषयत्वा(१)नियमादिति प्रकारे सत्येव प्रकारान्तरमाह—द्वित्वातिरिक्तेति । एकत्वादीति । यद्यप्यत्रोत्कर्षोऽधिकदेशवृत्तित्वं न तु जातिरूपस्तच्च सत्तादाविव न जातित्वबाधकम्, तथापि व्यासज्यवृत्तित्वानुपपत्तिरेव विपक्षबाधिका । संयोगविभागादौ गुणे व्यासज्यवृत्तित्वस्य दृष्टत्वा-

(१) विषयत्वनि० ।

स्यात् । जातेः प्रत्येकं समाप्तत्वात्(१) । एवं व्यवस्थिते [गणनव्य-
वहारत्वाद्]एक[त्व]व्यवहारोऽपि गुणानुबन्धी(२) द्वित्वादिव्यवहा-
रवत् । सत्तावन्दीग्रहस्तु मानाभावादेव(३) निरस्तः । संख्या-

न्यायलीलावतीकण्ठाभरणम्

विनापि ज्ञायेत घटस्त्ववदित्यर्थः । प्रत्येकपरिसमाप्तित्वादिति । एकव्यक्ति-
सन्निकर्षे व्यक्त्यन्तरसन्निकर्षानपेक्षप्रत्ययविषयत्वादित्यर्थः । एवमिति ।
द्वित्वादीनामसामान्यत्वे व्यवस्थिते तद्दृष्टान्तेन एकत्वस्यापि असा-
मान्यत्वं साधनीयमित्यर्थः । तदेवाह—एकत्वव्यवहार इति । एको घट
इति शाब्दो व्यवहारो गुणविषयकः गणितव्यवहारत्वात् द्वौ घटावि-
ति घटव्यवहारवदित्यर्थः । सत्तापि तर्हि गुणः स्यादिति यदापादितं
तत्राह—सत्तेति । सत्ताया गुणत्वे प्रमाणं नास्ति द्वित्वादीनान्तु गुणत्वे
प्रमाणमुक्तं वक्ष्यते चेत्यर्थः । संख्यात्वं न जातिरिति यदुक्तं तत्राह—

न्यायलीलावतीप्रकाशः

त्वात् । बहुत्वस्य च सामान्यरूपत्वे तदनुपपत्तेः । जातेरिति ।
अव्यासज्यवृत्त्याधारताप्रतियोगित्वादित्यर्थः । एवमिति । ननु गणनात्वं
न संख्यात्वं जातिः, तदसिद्धेः, गणनशब्दवाच्यत्वं चातिप्रसक्तमि-
ति । मैवम् । एकत्वान्यगुणाविषयिकैकप्रतीतिर्गुणालम्बना एकप्रती
तित्वात् एको रूपवानिति विपक्षितत्वात् । सत्तावन्दीति । सत्ताया जा-

न्यायलीलावतीप्रकाशविवृतिः

ज्जातौ बाधकत्वात् । एवञ्चैकैकश इति मूलस्य व्यासज्यवृत्तित्वा-
दित्यर्थो यथाश्रुतस्तु न सम्यगिति द्रष्टव्यम् । बहुत्वस्येति । द्वित्वादे-
रित्यर्थः । इदं च द्वित्वेऽपि सामान्यरूपताबाधकम्, द्वित्वस्यापि
द्व्यणुकपरिमाणासमवायिकारणत्वादिति स्मर्त्तव्यम् । एकत्वान्येति । न
चाप्रयोजकत्वं परिशेषादेकत्वस्य द्वित्वाद्यसमवायिकारणतया गुण-
त्वप्रमितेरिति भावः । सत्ताया इति । सत्सदिनुगतमत्या द्रव्यत्वादीनि

(१) प्रत्येकपरिसमाप्तित्वादिति कण्ठाभरणधृतः पाठः ।

(२) ०न्धी गणनव्यवहारत्वाद् द्वि० ।

(३) सत्तावद्ग्रहस्तु द्वित्वाभावादेव नि० । सत्तानुबन्धी ग्रहस्तु माना० ।

त्वजातिरपि गणितप्रयोगसाध्यैव । परिमाणगुरुत्वयोस्तु धर्माध-र्मवदुभयवृत्तिजात्यभावात् । एकत्वं तु न स्वरूपाभेदमात्रम् । एकमेकमित्यननुगमापत्तेः । यादृश्येक[त्वं] संख्या समवैतीति चेन्न, जातेरपि विलयापत्तेः । सामग्रीभेद एव चासौ(१)

---

न्यायलीलावतीकण्ठाभरणम्

जातिरपीति । गणितशब्दप्रयोगः संख्यात्वजातिनिबन्धन एव वाच्योऽन्यथाऽव्यवस्थापत्तेरित्यर्थः । परिमाणगुणत्वयोरैकजात्यं यदापादितं तत्राह—परिमाणेति । परिमाणशब्दो गोशब्दवन्नानार्थो नैकजातिमपेक्षते अनुगतव्यञ्जकाभावादित्यर्थः । ननु तथापि घटादिस्वरूपभेदमात्रावलम्बन एकत्वप्रत्ययोऽस्तु किं संख्यया तदुगतजात्या वेत्यत आह—एकत्वन्त्विति । नन्वेकत्वसंख्याश्रयत्वेनाभिमता एव व्यक्तय एकाकारानुगमं करिष्यन्तीत्याह—यादृशीति । तर्हि यासु व्यक्तिषु गोत्वं समवेतं तासामेव गवाकारानुगतमतिसामर्थ्यें किं गोत्वेनापीत्याह—नेति ननूभयत्र व्यक्तीनामेव कथं तथा सामान्यमङ्गीक्रियत(२)इत्यत आह-सामग्रीति । गवादिसामग्रीवैलक्षण्याधीनो गोव्यवहारस्तदा स्यात्

न्यायलीलावतीप्रकाशः

तित्वेनैव सिद्धेर्गुणत्वसाधने धर्मिग्राहकमानाविरोध इत्यर्थः । जातिरपीति । अनुगतगणितप्रतीतिरननुगतैकत्वादिनोपपादयितुमशक्यत्वादनुगतं संख्यात्वम् । तच्च बाधकाभावाज्जातिरेवेत्यर्थः । परिमाणगुरुत्वयोरिति । एतदुभयमात्रवृत्तिजातिग्राहकं न प्रत्यक्षं गुरुत्वस्यातीन्द्रियत्वात् । नापि कार्यैकत्वं लिङ्गं तदभावात् । तदभावेऽपि जात्यभ्युपगमे धर्माधर्मयोरप्येकजातिः स्वीक्रियेतेत्यर्थः । एक(त्व?)मिति । एकत्वस्य गुणत्वस्वीकारे तद्वृत्तिसंख्यात्वव्याप्यजात्याश्रयतयाऽनुगतप्रतीत्युपपत्तिरिति भावः । यादृशीति । यादृशि नियामकविशेषवति एकत्वसमवायस्तादृशमेवानुगतं स्वरूपमेकत्वमनुगतधीहेतुरित्यर्थः । जातेरपीति । तत्रापि व्यवस्थापकेनैवानुगतव्यवहारोपपत्तेरित्यर्थः । सामग्रीभेद इति । असावेकत्वसंख्यासमवायप्रयोजकः सामग्रीविशेषजनितं

---

(१) भेद एवासौ वि० । (२) सामान्यं नाङ्गीक्रियते ।

विशेषः स्यात् । न चायं तत्र प्रत्ययः । तदननुसन्धानेऽपि जाः-
यमानत्वात् ।

ननु तथापि द्वित्वादिकं(१) न सिद्ध्यति, एकत्वसमुच्चय
एव तद्व्यवहारोपपत्तेरिति चेन्न, विचारासहत्वात् । अयं हि
समुच्चयमात्रे वा (२)व्यवहारः तद्विशेषे वा । नाद्यः । तस्यावै-
चित्र्ये द्वित्वादि(३) व्यवहारवैचित्र्यविरोधात् । न द्वितीयः, विक-
ल्पानुपपत्तेः । स हि समुच्चेतव्य[स्य] भेदाद्वा तदुपाधि(४)
भेदाद्वा । नाद्यः । एकतायाः सर्वत्र तुल्यत्वात् । न द्वितीयः ।
आरोपितस्य पारमार्थिकस्य वा द्वित्वादेरसम्भवात् । सैकं सैकै-

---

न्यायलीलावतीकण्ठाभरणम्

यदि सामग्री प्रत्यक्षा स्यादनुगता च स्यान्न चैवमित्यर्थः । एकत्वस्य
व्यक्तिसामग्रीमन्तरेणापि गगनादावभिव्यक्तेरिति भावः ।

तथापीति । एकत्वस्य गुणत्वसिद्धावपीत्यर्थः । एकत्वसमुच्चयः
समुदिताभ्यामेकत्वाभ्यां द्वित्वव्यवहारः समुदितैरेकत्वैरेव त्रित्वव्य-
वहार इत्यन्यथासिद्धिरित्यर्थः । अयं हीति । द्वित्वत्रित्वादिलक्षणो
विलक्षणो व्यवहार इत्यर्थः । तस्येति । समुच्चयमात्रस्याविशेषितस्ये-
त्यर्थः । 'विकल्पानुपपत्तेः' 'विकल्पस्य' विविधकल्पस्यानुपपत्तेः ।
दृष्टत्वादित्यर्थो वा समुच्चेतव्यमेकत्वं तद्भेदाद्वा एकत्वगतः कश्चि-
द्धर्मविशेषस्तद्भेदाद्वेति विकल्पार्थः । आरोपितस्येति । एकत्वविशेषो
द्वित्ववैशिष्ट्यं त्रित्ववैशिष्ट्यं च तच्च द्वित्वत्रित्वाद्यनभ्युपगमेऽनु-
पपन्नमित्यर्थः । सैकमिति । सैकमेकत्वं द्वित्वं सैकैकमेकत्वं त्रित्वम् । एवं

न्यायलीलावतीप्रकाशः

स्वरूपमेकत्वं वाच्यम् । न चायमेकप्रत्ययस्तद्विषयः सामग्र्या अ-
तीन्द्रियतया तद्विशेषप्रसूतत्वविशिष्टस्वरूपस्याप्रत्यक्षत्वादित्यर्थः ।
तस्यावैचित्र्य इति । वस्तुतो द्वित्वादिविलक्षणः समुच्चयोऽपि दुर्वच
इति भावः । आरोपितस्येति । द्वे एकत्वे द्वित्वव्यवहारहेतू द्वित्वैकार्थ-
समवायिनी च उभयमपि द्वित्वसिद्धौ स्यान्न च तत्कचित् सिद्धमि-

---

(१) द्वित्वादिकं तथापि न० ।
(२) ०वा व्यवहारान्तरविशेषे ।
(३) द्वित्वादिवैचित्र्यविरोधात्
(४) उपायभे० ।

कमित्युत्तरोत्तरमेकैकवृद्धावर्थविशेषः(१) प्रतीयते । तत्र द्वित्वादिव्यवहार इति चेन्न, एकत्ववीप्सा ह्येकैकत्वम् । सा चैकत्वनानात्वमात्रं सर्वसाधारणम् । आरोपितमनारोपितं वा द्वित्वादिक(२)मनाश्रित्य न विचित्रव्यवहारहेतुरित्यतोविशेषात् । तथाप्यपेक्षाबुद्धेरवैचित्र्ये कार्यविशेषानुपपत्तौ तुल्य(३)व्यवहारानुपपत्तिरिति चेन्न, विषयावैचित्र्येऽपि स्वभाववैचित्र्यात् । विचित्रकार्यजनकत्वात् । धूमज्ञानस्य विषयाभेदेऽपि(४) [शक्तिवै-

न्यायलीलावतीकण्ठाभरणम्

चतुष्टयाद्यपि निर्वाच्यमित्यर्थः । परार्द्धपर्य्यन्तमेकैकपदावृत्तिरशक्या ऽतो वीप्सितमेकत्वं वाच्यं तच्चाविशिष्टमेवेत्याह—नेति । इत्यतो विशेषाद् द्वित्वाद्यवश्यमङ्गीकार्य्यमित्यर्थः । यद्वा इत्यतो विशेषाश्चैकैकपदबुद्ध्या त्वदभिमतसिद्धिरित्यर्थः । यद्वा अविशेषादित्यकारः प्रश्लेषः ।

नन्वपेक्षाबुद्धिरपि द्वित्वाद्युत्पादिका न ह्येकत्वसमूहालम्बनमात्रं तदा समूहाविशेषाद् द्वित्वत्रित्वादिलक्षणकार्य्यवैलक्षण्यानुपपत्तिरित्याह—तथापीति । एकत्वसमूहालम्बनमविचित्रमपि विचित्रकार्य्यकारि स्यादेवेत्याह—नेति । अत्रैव दृष्टान्तमाह—धूमेति । संस्कारा-

न्यायलीलावतीप्रकाशः

त्यर्थः । 'अविशेषात्' द्वित्वादिव्यवहारोपाधेरित्यर्थः । ननु नानैकत्वगोचरत्वाविशेषेऽपि यादृश्यपेक्षाबुद्धिर्द्वित्वादिजानिका तादृशी द्वित्वादिव्यवहारहेतुरित्याह—तथापीति । स्वभाववैचित्र्यादिति । ननु विषयावैचित्र्येऽप्यपेक्षाबुद्धेर्विचित्रकार्ये जननानुकूलः कश्चिद्विशेषो न जातिरूपः साक्षात्कारित्वादिना परापरभावानुपपत्तेः । न च गुण-[गत जातौ न ? ] परापरभावानुपपत्तिः, दूषकताबीजसाम्यात् । न चापेक्षाबुद्धेरेकत्वमात्रविषयत्वेऽपि कार्ये प्रागभावाधीनो विशेषः यावति द्वित्वप्रागभावस्तावति द्वित्वमेवं त्रित्वादावपीति वाच्यम्, प्रा-

न्यायलीलावतीप्रकाशविवृतिः

जातिव्याप्यानीत्यनुमानाद्वा जातित्वेनैव सत्तासिद्धेरित्यर्थः । प्राग-

(१) सैकं सैकैकमित्येकैकपदवृद्ध्या योऽर्थविशेषः । सैकं ऽकमित्युत्तरोत्तरमेकैकवृद्ध्या योऽर्थविशेषः।
(२) द्वित्वादिव्यवहारमना० । (३) तुल्या व्य० । (४) विषयावैचित्र्यभेदेऽपि ।

[चित्र्याद्] धूमविषयकसंस्कारदहनज्ञानजनकत्ववत्। तन्निबन्धन

---

न्यायलीलावतीकण्ठाभरणम्

नुमित्योरेकदैवोत्पादादित्यर्थः। तन्निबन्धन इति। अपेक्षाबुद्धिस्व-

न्यायलीलावतीप्रकाशः

गभावेतरकारणाविशेषे तद्विशेषस्याऽव्यापाद्यत्वात्। न चैकत्वे पूर्वोत्पन्नद्वित्वाद्यारोपादपेक्षाबुद्धेर्वैषयिक एव विशेषः, स्वारसिकस्य विशेषस्य सर्वत्रासिद्धेः। तद्धेतुदोषस्यासार्वत्रिकत्वात्। आहार्यस्य तस्य त्रित्वादिष्वपि सम्भव इति। मैवम्। एकत्वाद्यपेक्षाबुद्ध्योरः-समवायिनिमित्तकारणयोरविशेषेऽपि समवायिकारणभेदेन विशेषात् तद्विशेषस्योभयसिद्धत्वात्।

द्वित्वे भिन्नैकत्वबुद्धेर्जनकत्वं त्रित्वादौ द्वित्वादिसहितैकत्वबुद्धि-र्जनिकेति निमित्तभेदाद्भेद इत्यन्ये।

'शक्तिवैचित्र्यात' स्वभाववैचित्र्यादित्यर्थः। तन्निबन्धन इति। स्व-

न्यायलीलावतीप्रकाशविवृतिः

भावेतरेति। यद्यपि प्रागभावभेदादपि पाकजरूपादिभेदो दृष्ट एव त-थापि त्रित्वोत्पत्तिकाले द्वित्वोत्पत्तिस्स्यात्तदा द्वित्वप्रागभावावश्यक-त्वादिति भावः। तद्धेतुदोषस्येति। न च विषय एव दोषः स च सार्वत्रि-क एवेति वाच्यम्, तथा सति सर्वत्र सर्वसंख्यारोपापत्तेरनियमापत्ति-रिति भावः। एकत्वा[ द्य ? ]पेक्षाबुद्ध्योरिति। इदमभ्युपेत्योक्तम्। वस्तुतो यदि समवायिभेदस्तदा व्यञ्जकत्वलक्षणासमवायिभेद-स्तद्गोचरापेक्षाबुद्धिरूपनिमित्तभेदश्चावश्यकोऽन्यथा समवायिभेद-स्याऽप्यभावादित्यपि द्रष्टव्यम्। कारणव्यक्तिन्यूनाधिकत्वं न कार्य-वैजात्यप्रयोजकं तन्तुद्वयारब्धपटापेक्षया तन्तुत्रयारब्धपटवैजात्या-दर्शनात्। तथापि द्वित्वाश्रयीभूतयावद्द्रव्यत्वादिनैव द्वित्वादिकार-णतेति समवायिकारणतावच्छेदकभेदोऽप्यस्त्येव। एवञ्च द्वित्वस-मानाधिकरणयावदेकत्वेनासमवायिकारणता यावत्तद्गोचरापेक्षाबुद्धि-त्वेन च निमित्तकारणतेति सामग्रीभेद इति तात्पर्यम्।

प्रभाकरोपाध्यायमतमाह—द्वित्वे भिन्नेति। द्वित्वादेरजनकत्वसिद्धा-न्तभङ्गापत्तेः। सेनावनादौ शतत्वादिसंख्योत्पत्तौ न्यूनसंख्यानुत्पत्ते-श्चारुचिं प्रकाशयत्यन्य इति। तत्किमशक्य एव सङ्केतग्रह इत्यत

एव द्वित्वादिव्यवहारोऽस्त्विति(१) चेन्न, विचारासहत्वात् । स हि सत्तया व्यवहारभेदमुत्पादयेत् ज्ञातो वा । नाद्यः । अतिप्रसङ्गात् । न द्वितीयः । तन्निरूपकस्य द्वित्वादेरसम्भवात्(२) । व्यवहारेण तन्निरूपितमिति(३) चेन्न, तस्मिन्ननिरूपिते व्यवहारासिद्धेः(४) । न ह्येतन्निरूपितविषयविशेषव्यवहारनिष्पत्तिर्नाम(५) । द्वित्वादिकं कथमुत्पद्यत इति चेत् । सत्तयैवेति(६)

न्यायलीलावतीकण्ठाभरणम्

भावनिबन्धन एवेत्यर्थः । स हीति । अपेक्षाबुद्धिस्वभाव इत्यर्थः । अतिप्रसङ्गादिति । विषयगतद्वित्वदर्शननैरपेक्षेण द्वित्वादिव्यवहारप्रसङ्गादित्यर्थः । तन्निरूपकस्येति । अपेक्षाबुद्धिविचित्रस्वभावनिरूपकत्वं द्वित्वादेरेव वाच्यं तच्च त्वया नेष्यत इत्यर्थः । असम्भवादिति । त्वन्मत इति शेषः। ननु द्वित्वादिकं विनाऽप्यपेक्षाबुद्धिवैचित्र्यमुन्नेष्यत इत्याह—व्यवहारेणेति । अपेक्षाबुद्धिवैचित्र्यनिरूपणाधीन एव द्वित्वादिव्यवहारः, द्वित्वादिव्यवहारेण च तन्निरूपणमित्यन्योऽन्याश्रय इत्याह—नेति । एतदेवाह—न हीति । ननु तवाप्यन्योऽन्याश्रयो न हि द्वित्वादिविशेषमनालम्बमानया अपेक्षाबुद्ध्या द्वित्वादि जन्यते अतिप्रसङ्गादित्यर्थः । द्वित्वादिकमिति । अनाकलित एव एकत्वसमूहालम्बनविशेषो द्वित्वाद्युत्पादक इति नान्योऽन्याश्रय इत्याह—सत्तयेति । तर्हि द्वित्वादित्रित्वादीनां कार्य्याणां कथं वैचित्र्यं निमित्तासमवायिकारणयोरवैचित्र्यादिति चेन्न,समवायिकारणवैचित्र्यादेव तदुपपत्तेः । न हि यावति द्वित्वमनुभूयते तावत्स्येव त्रित्वमिति तवाप्यभ्युपगमः । प्रागभावभेदाद्वा पाकज

न्यायलीलावतीप्रकाशः

भाववैचित्र्यनिबन्धन इत्यर्थः । स हीति । अपेक्षाबुद्धेर्विचित्रः स्वभाव इत्यर्थः । अतिप्रसङ्गादिति । विषयवृत्तिद्वित्वादिप्रतिसन्धाने सति तादृग्व्यवहारदर्शनात् कथमपेक्षाबुद्ध्युत्पत्तिमात्रेण व्यवहार इति भावः । तन्निरूपकेति । ज्ञानगतजातिविशेषनिरूपणेऽपि द्वित्वादेर्विषयगतत्वाप्र-

(१) ०रोऽयमिति । (२) ०देरभावात् । (३) तन्निरूपणमिति ।
(४) रानुपपत्तेः । (५) न ज्ञानरूपितविषयविशेषाव्यवहारनिष्पत्तिर्नाम ।
(६) सत्तयेति ।

गृहाण । उभयाश्रितं च द्वित्वं स्वरूपतोऽभिन्नमवभासते । न चैषाऽभेदप्रतीतिर्भ्रान्ता अबाधितत्वात् । अन्यथा गोत्वव्यञ्जकपिण्डैरे(१)वानुगताकारप्रतीत्युपपत्तौ जातेरपि विलयापत्तेः । शब्दसमवाया(२)नुपपत्तिस्तूभयपक्षसाधारणी नैकत्र पक्षपातमवलम्बते । तदिदं(३) चिरन्तनवैशेषिकमतदूषणं भूषण-

---

न्यायलीलावतीकण्ठाभरणम्

रूपरसगन्धस्पर्शानामिवेति भावः। द्वित्वादावनुभवं प्रमापयति—उत्तरा-(भया?)श्रितमिति। द्वित्वादि व्यासज्यवृत्तित्वेनानुभूयमानं अपेक्षाबुद्धिमात्रेण समुच्चयेन वा अन्यथासिद्धं कर्त्तुं न शक्यत इत्यर्थः। यद्यज्जनकं व्यञ्जकं वा तेनैव तदन्यथासिद्धौ विपक्षदण्डमाह—अन्यथेति। ननु यदपेक्षाबुद्ध्या यद् द्वित्वं जनितं तन्मात्रेणैव तद्ग्रहे परः सङ्केतः कथं ग्राहयितव्य इत्यत आह—शब्दसमयेति। अपेक्षाबुद्धिरपि द्वित्वादिव्यवहारजनिका परस्य परोक्षैवेति तद्विशेषप्रतिपादनमशक्यमेवेति भावः। यद्वा गोत्वादिकं गवादिपदसङ्केतग्रहार्थमवश्यमभ्युपगन्तव्यमिति यदि तदा द्वित्वादिपदसङ्केतग्रहार्थं द्वित्वत्वादिजातिरपि स्वीकर्त्तव्येति तदाश्रयो गुणो द्वित्वादिरप्यवश्यमभ्युपगम्य इत्यर्थः। तदिदमिति। एकत्वसमुच्च-

न्यायलीलावतीप्रकाशः

तिसन्धाने व्यवहारो न स्यादित्यर्थः । उभयाश्रितं चेति । व्यासज्यवृत्तित्वेन द्वित्वादेरनुभवोऽपि न तादृशात् स्वभाववैचित्र्यादित्यर्थः । ननु यदपेक्षाबुद्धिजन्यं यद् द्वित्वं तस्य तदेकग्राह्यत्वात् कथं तव सङ्केतग्रह इत्यत आह—शब्दसमयेति। अपेक्षाबुद्धिजन्याद्द्वित्वव्यवहारपक्षेऽप्ययं दोषस्तदवस्थस्तस्या अपि समवायिमात्रवेद्यत्वात् । अस्माकं तु द्वित्वत्वजातिपुरस्कारात् सुग्रहः समय इत्यर्थः ।

सम्प्रदायविदस्तु ननु गोत्वव्यञ्जकसास्नादेरननुगमान्न जातिं विना सङ्केतग्रह इत्यत आह—शब्दसमयेति। द्वित्वाद्यनुगतं विना शब्दस-

न्यायलीलावतीप्रकाशविवृतिः

आह—अस्माकं त्विति । संख्या ।

---

(१) ०रेव गवाका० । (२) शब्दसमयानुपपत्तिरिति प्रकाश-कण्ठाभरणसम्मतः पाठः ।

(३) तदेतदिति प्रकाशधृतः पाठः ।

(१)कारस्यातित्रपाकरम् । तदियमनाम्नातता आसर्वज्ञस्य यदियमाचार्यमध्यवमन्यते । तथा च तदनुयायिनस्तात्पर्याचार्यस्य सिंहनादः—"संविदेव भगवती"त्यादि । [इति]संख्या ।

परिमाणं मानव्यवहारकारणम् । ननु कः पुनरयं मानव्यवहारः । हस्तवितस्त्यादिव्यवहारो वा अणुमहदादिव्यवहारो वा असर्वगतव्यवहारो वा परिमितव्यवहारो वा । नाद्यः । अननुगतत्वेनासामान्यलक्षणत्वात् । परमाणौ परममहति चाभावात् । न द्वितीयः । सर्वपरिमाणसाधारणत्वाभावात् । न तृतीयः । अविभुत्वेनैवोपपत्तेः । व्यापकपरिमाणे चाभावात् ।

न्यायलीलावतीकण्ठाभरणम्

येनापेक्षाबुद्धिवैचित्र्येण वा द्वित्वत्रित्वादिसमर्थनमित्यर्थः । तत्र चास्मदुक्तयुक्तेरखण्डनादिति भावः ।

परिमाणमिति । परिमितमिदमिति व्यवहारो यत इत्यर्थः । अननुगतत्वेनेति । हस्तवितस्त्यादीत्यत्रादिपदस्य प्रकारवाचित्वम् । प्रकारश्च परिमाणत्वमसिद्धमन्यथा चाननुगम इत्यर्थः । अनुगतोऽप्ययमव्यापक इत्याह—परमाणाविति । सर्वेति । न हि परमाणुषु गगने वा कस्यचित्तथा व्यवहार इत्यर्थः । तथा च भागासिद्धिरिति भावः । अविभुत्वेनेति । आविभुद्रव्यत्वेनैव मूर्त्तव्यवहारोपपत्तेरिति भावः ।

न्यायलीलावतीप्रकाशः

क्तेतोऽत्रापि न स्यादिति तुल्यमित्यर्थः । तदतेदिति । द्वित्वादेः सामान्यरूपत्वस्वीकर्तृत्वं विषयविशेषादेवापेक्षाबुद्धेर्विशेष इति चेत्यर्थः ।

परिमाणमिति । त्रयोविंशतिगुणाविषयकोगुणविषयकः प्रत्ययो यत इत्यर्थः । तं विकल्प्याक्षिपति—नन्विति । सर्वेति । अनुगतमेकं प्रकारं विना आदित्वस्यैकस्याज्ञानादित्यर्थः । अविभुत्वेनैवेति । तच्च न लक्षणं

न्यायलीलावतीप्रकाशविवृतिः

ननु परिमाणत्वजातेरसिद्धौ परिमाणमितिधर्मिनिर्देशानुपपत्तिः सिद्धौ च तदेव लक्षणमस्त्वित्यत आह—त्रयोविंशतीति । तच्चेति । तद्ध-

(१) दूषणका० । भूषणकारस्यापि त्रपा० ।

न तुरीयः, महद्व्यवहारस्यैव परिमितव्यवहारत्वात्। सर्वपरिमाणाव्यावर्त्तकत्वात्(१)। अणुत्वेऽपि परिमितव्यवहारोऽस्तीति चेन्न, परिमाणत्वजातेरसिद्धावणुत्वस्यै(२)वासिद्धेः। अणु-

---

न्यायलीलावतीकण्ठाभरणम्

महद्व्यवहारस्यैवेति। महत्त्वमात्रेणैव परिमितव्यवहारादित्यर्थः। सर्वेति। अणुपरिमाणाव्यापकत्वादित्यर्थः। अणुत्वेऽपीति। आनुमानिकस्तत्रापि परिमितव्यवहारोऽस्तीति नाव्यापकत्वमित्यर्थः। अणुत्वं हि परिमाणत्वव्याप्यजातिस्तथा च परिमाणत्वमेव न सिद्धं कुतस्तद्व्याप्यजातिरित्याह—नेति। अणुपरिमाणेति। यद्यपि अणुत्वासिद्धौ तदन्तर्भा-

न्यायलीलावतीप्रकाशः

परिमाणापरिमाणसाधारण्यादिति भावः। सर्वपरिमाणाव्यापकत्वादिति। त्वया परमाणुपरिमाणस्यापि पक्षीकरणे तत्र हेतोरवृत्त्या भागासिद्धेरित्यर्थः। अणुत्वेऽपीति। परीक्षकाणां महद्व्यवहारभिन्नोऽपि परिमितव्यवहारोऽस्तीत्यर्थः। यद्यपि परिमाणत्वजातिसिद्धावपि नाणुत्वसिद्धिस्तथापि परिमाणत्वं महत्त्वभिन्ननित्यवृत्ति सकलपरिमाणवृत्तिजातित्वादिति यदि साध्यते तत्राह—परिमाणत्वजातेरिति। अणुत्वसाधकमानस्य परिमाणत्वजात्युपजीवकत्वादित्यर्थः। तदेव प्रयोगदूषणा-

न्यायलीलावतीप्रकाशविवृतिः

टितमविभुत्वव्यवहारकारणत्वमिति यावत्। यद्यपीति। यद्यपि परिमाणत्वजातेरसिद्धाविति मूलस्य परिमाणत्वासिद्धावणुत्वं सिद्ध्यत्येवेति नियमपर्यन्तं नार्थो येनेदमनियमप्रदर्शनमुपालम्भाय, किन्तु तदसिद्धावणुत्वं सिद्ध्यतीत्येव मूलाभिप्राय इत्ययुक्तमेतत्तथापि मूलस्य नियमपरत्वाभिसन्धानेनायमाक्षेपः। वस्तुतः परिमाणत्वजातेरसिद्धावप्यणुत्वसिद्धिरित्येव नञ्व्यत्यासेनार्थ इति भवति यथोक्ताभिप्रायाक्षेपः। तथापीति। यद्यपि परिमाणत्वाघटितस्याणुपरिमाणसाधकस्यानुपदं मूलकृतैव प्रदर्शनीयत्वादिदमयुक्तं तथापि तन्मूलस्याऽप्युक्तानुमाने एव तात्पर्यमन्यथाऽऽश्रयासिद्धेरित्यभिसन्धायैतदुक्तम्। अत एव वक्ष्यति स्फुटयतीति। इति यदीति। परिमाणभिन्नवृत्तित्वोपाध्यप्रतिसन्धान इति शेषः। गुणत्वावितरता(गुणस्यापरजा?)त्येत्यत्र

---

(१) ०णाव्यापकत्वात्। (२) ०द्धावणुत्वव्यवहारस्यैवा०।

परिमाणतारतम्यं क्वचिद्विश्रान्तम् , परिमाणतारतम्यत्वात्, महत्-परि(१)माणतारतम्यवत् इति तत्सिद्धिरिति चेत्(२), परिमाणतारतम्यं किमणुमहत्साधारण(३)परिमाणजातीयतारतम्यं महत्त्वतारतम्यं वा विवक्षितम्। नाद्यः, असिद्धेः। नेतरः, सिद्धसाधनात्। त्र्यणुकोपादानं परिमाणवत्, द्रव्यत्वात् घटवदिति तत्सिद्धिरिति चेन्न, परिमाणजातीयतामात्रस्य व्यापकस्यासिद्धौ प्रतिबन्धस्यासिद्धेः। गुरुत्वावच्छेदादौ च परिमितव्यवहारदर्शनात्। ततो भेदकमानाभावान्न भिद्यते।

अत्रोच्यते। त्र्यणुकोपादानं गुणत्वापरजात्या महत्त्वैकजा-

न्यायलीलावतीकण्ठाभरणम्

त्वेन पक्षासिद्धिस्तथापि कुवलयापेक्षया आमलकमण्विति व्यवहारबलाद् यदणुत्वं सिद्धं तदादाय पक्षतेति भावः। क्वचिद् विश्रान्तमिति। अणुतमं किञ्चिदस्तीत्यर्थः। परिमाणतारतम्यत्वादिति। परिमाणगोचरतरतमव्यवहारविषयत्वादित्यर्थः। परिमाणत्वासिद्धौ तारतम्यमप्यसिद्धमेवेति पूर्वदोष एवात्रापीत्याह—परिमाणतारतम्यमिति। अवान्तराणुत्वं तावत् साधयति—त्र्यणुकेति। यत्र द्रव्यत्वं तत्र परिमाणमिति सामान्यव्याप्तिस्तदा गृह्येत यदि व्यापकतावच्छेदकं परिमाणत्वं सिद्धं स्यात्तदेव तु न सिद्धमित्याह—नेति। ननु परिमितव्यवहारेणैव परिमाणत्वं सिद्धं स्यादित्याह—गुरुत्वेति। त्र्यणुकोपादानमिति। गुण-

न्यायलीलावतीप्रकाशः

भ्यां स्फुटयति—अणुपरिमाणेति। सिद्धसाधनादिति। अपकृष्टमहत्त्वतारतम्यस्यैवाणुपरिमाणतारतम्यात्मकत्वात्तस्य च त्रुटावेव विश्रामादित्यर्थः। त्र्यणुकोपादानमिति। न चात्र महत्त्वमुपाधिः महत्त्वं यदि परिमाणमात्रं विवक्षितं तदा साधनव्यापकत्वात्, परिमाणत्वव्याप्यजातिश्चेत्तदाऽणुत्वस्वीकारात्। परिमाणजातीयतेति। व्यापकतावच्छेदकरूपग्रहं विना व्यापकत्वाग्रहे तन्निरूपितव्याप्त्यग्रहादित्यर्थः। ननु परिमाणवदिति साध्यस्य परिमितव्यवहारहेतुगुणवदित्यर्थ इत्यत आह—गुरुत्वेति। तथा चार्थान्तरत्वमिति भावः। त्र्यणुकोपादानमिति।

(१) महापरिमा०। (२) चेन्न। (३) ०महत्परिमाणजा०।

तीयगुणवत् द्रव्यत्वात् घटवत् । ननु किं महत्त्वजात्या एकजा-
तीयगुणवत्वं साध्यं जात्यन्तरेण वा । नाद्यः, अपसिद्धान्तात् ।
नेतरः, असिद्धेः । नानामहत्वसाधारणजातिमात्रेणेति ब्रूमः । न

---

न्यायलीलावतीकण्ठाभरणम्

त्वव्याप्यजात्या महत्त्वेन सह एकजातीयो यो गुणस्तद्वदिति साध्या-
र्थस्तथा च तत्र महत्त्वस्य बाधे परिमाणत्वजातिमान् गुणः सिध्य-
ति सदेव चाणुत्वमिति भावः । घटे च महत्त्वमेव तथेति दृष्टान्तः ।

ननु गुणत्वापरजात्योपविवेक्तुमर्हति अन्यथा साध्याप्रसिद्धिरि-
त्याह--नन्विति । अपसिद्धान्तादिति । त्र्यणुकोपादाने महत्त्वानभ्युपगमा-
दित्यर्थः । असिद्धेरिति । जात्यन्तरं परिमाणत्वमेव वक्तव्यं तच्चासिद्ध-
मित्यर्थः । नानामहत्वेति । तच्च परिमाणत्वं महत्त्वं वाऽस्तु (१)साधा-
रणोक्त्यैव परिमाणत्वाणुत्वयोः प्रकृते पक्षधर्म्मताबलात् सिद्धिरि-
त्यर्थः । पक्षधर्म्मताबलमेवाह--न चैवमिति । पर्य्यवसितसाध्यमुपसंह-

न्यायलीलावतीप्रकाशः

महत्त्वनिष्ठात्यन्ताभावाप्रतियोगिगुणत्वव्याप्यजातिमद्गुणवत् मह-
त्ववृत्तिगुणत्वसाक्षाद्व्याप्यजातिमद्गुणवदिति वाऽर्थः । न च महत्त्व-
मुपाधिः तुल्ययोगक्षेमत्वात् ।

सम्प्रदायविदस्तु महत्त्वं साक्षात्कारविरोधिजातिसमानाधिकर-
णगुणत्वसाक्षाद्व्याप्यजातिमत् साक्षात्कारप्रयोजकमूर्त्तगुणत्वात् रूप-

न्यायलीलावतीप्रकाशविवृतिः

तृतीयार्थासङ्गतेराह--महत्वनिष्ठेति । अभावान्तर्भावे गौरवादाह--महत्ववृ-
त्तीति । अत्र साक्षात्पदं भेदलाभाय । साक्षात्कारविरोधीति । साक्षात्कारवि-
रोधिनी जातिरणुत्वं तत्समानाधिकरणं परिमाणत्वं तद्वद्गुण-
वत्त्वं पक्षधर्मताबलात् सिद्ध्यति । तेनाणुत्वपरिमाणत्वयो-
रपि सिद्धिः । साक्षात्पदं च पूर्ववत् । व्योममहत्त्वसमानाधिकरण-
महत्त्वत्वमादायार्थान्तरमिति प्रथमजातिपदम् । परममहत्त्वत्वमादा-
यार्थान्तरमिति साक्षात्कारविरोधीति । गुणत्वमादायार्थान्तरमिति
गुणत्वव्याप्येति । महत्त्वानुद्भूतरूपान्यतरत्वमादायार्थान्तरमिति
द्वितीयजातिपदम् । साक्षात्कारेति । द्रव्यसाक्षात्कारेत्यर्थः । अन्यथा

---

(१) तच्च परिमाणत्वं वस्त्विति क्वचित् पाठः ।

चैवं तत्र महत्त्वस्यैव सिद्धिः। परमाणोरपि दृश्यतापत्तेः। ततो महत्त्वाणुत्वसाधारणी जातिः परिमाणत्वं सिद्ध्यतीति। गुरुत्वाव-

---

न्यायलीलावतीकण्ठाभरणम्

रति--तत इति। परिमितव्यवहारात् परिमाणत्वसिद्धौ गुरुत्वेनार्था-न्तरं परिहरति--गुरुत्वेति। निरूपितस्तु वादिना निर्णीतस्तद्वच्छे-

न्यायलीलावतीप्रकाशः

वत्। न च परममहत्त्वं तथा आत्मनोऽसाक्षात्कारापत्तेः। न च रूपत्वमुपाधिः तुल्ययोगक्षेमत्वात्।

न्यायलीलावतीप्रकाशविवृतिः

स्वसाक्षात्कारप्रयोजकसंयोगादौ व्यभिचारतादवस्थ्यात्। मूर्त्तपदं च सुखादौ व्यभिचारवारणाय विशेषगुणविशिष्टस्यैवात्मनः प्रत्यक्ष-तया सुखादेरपि तत्प्रयोजकत्वात्। गुणपदं च अनेकद्रव्यवत्त्वघटक-तयाऽवयवस्यापि साक्षात्कारप्रयोजकतया तत्र व्यभिचारवारणाय। न च सजातीयसंयोगस्य दूरस्थकेशसाक्षात्कारप्रयोजकतया तत्र घटचक्षुःसंयोगे व्यभिचार इति वाच्यम्, प्रयोजकपदस्य कारणता-वच्छेदकार्थत्वात्। अ (भ ?) वति च द्रव्यसाक्षात्कारं प्रति रूपम-हत्त्वे तथा, न तु संयोग इति मिश्राः। तदयुक्तम्। तथा सति द्रव्य-पदप्रक्षेपानुपपत्तेः।

केचित्तु वहिर्द्रव्यत्वावच्छिन्नसाक्षात्कारप्रयोजकत्वादित्यर्थं इति वदन्ति। तदप्ययुक्तम्। मूर्त्तपदवैयर्थ्यात्। तस्मात्स्वसहकारिके-न्द्रियजन्ययावद्द्रव्यसाक्षात्कारजनकमूर्त्तगुणत्वात् मूर्त्तपदव्यत्या-सेन मूर्त्तसाक्षात्कारकारणतावच्छेदकगुणत्वादिति वा हेतुरिति दिक्।

रूपवदिति। तत्राप्युद्भूतत्वमादाय साध्यगमनम्। न च (परम?) महत्त्व मिति। पर (म?) महत्त्वत्वमित्यर्थः। क्वचित्पाठ एव तथा। तथेति। साक्षा-त्काराविरोधीत्यर्थः। तथा च न तदादाय सिद्धसाधनमिति भावः। आत्मन इति। तत्परिमाणस्य चेति शेषः। तथा च न स्वाश्रयाश्रयसा-क्षात्कारविरोधित्वं न वा स्वाश्रयसाक्षात्कारविरोधित्वमिति भावः। न च रूपत्वमिति। न च स्पर्शरसादौ साध्याव्यापकत्वं स्पर्शान्यसा-क्षात्कारकारणतावच्छेदकत्वलक्षणपक्षधर्मावच्छिन्नसाध्यव्यापकत्वा-त्। तुल्ययोगक्षेमत्वादिति। अत एव प्रत्यक्षत्वावच्छिन्नसाध्याव्यापक-

च्छेदादौ च परिमितव्यवहारो निरूपिततदवच्छेदकोपाधिसंख्यावि- षयः । ननु महत्त्वमेव न सिद्ध्यति बहुतरद्रव्यसमवायेन महदिति प्रत्ययोपपत्तेः(१) । बहुतरद्रव्यसमवायाभावनिबन्धन एव(२) द्व्य- णुकादेरनुलम्भोऽपि । एवं (सति) गगनेऽपि महदिति प्रत्ययो न स्यादिति चेत्, न स्यादन्यत्र महत्त्वासिद्धौ तत्र महत्त्वानतु-

---

न्यायलीलावतीकण्ठाभरणम्

दको गुरुत्वावच्छेदको य उपाधिः पलादिस्तस्य संख्या द्वित्वादिस्तु विषय इत्यर्थः । महत्त्वैकजातीयेति साध्यांशं दूषयति—नन्विति । अन्यथासिद्धिमाह—बहुतरेति । आदिपदात् परमाणुपरिग्रहः । बहि-

न्यायलीलावतीप्रकाशः

निरूपितेति । 'निरूपितो' निश्चितस्तदवच्छेदकः सुवर्णादि- गुरुत्वावच्छेदक उपाधिः प्रस्तरादेर्द्विपलत्वादिरूपस्तद्गतद्वित्वादि- संख्याविषय इत्यर्थः । न चैवं घटादिपरिमाणेऽप्यवच्छेदक- हस्तादिसंख्यानिबन्धन एव परिमितव्यवहारः स्यादिति वा- च्यम्, हस्ताद्यवच्छेदं विनापि परिमितव्यवहारात् । नापि प्रस्त- रादिगुरुत्वावच्छेदकं विनापि परिमितव्यवहार इति गुरुत्वपरिमा- णयोरेका जातिः सिद्ध्येदिति वाच्यम्, परिमाणं यदि गुरुत्ववृत्ति- गुणत्वसाक्षाद्व्याप्यजातिमत्स्यात्तदा गुरुत्वनिरूपितोत्कर्षापकर्षाश्रयः स्यादिति बाधकात् । बहुतरेति । महत्त्वकारणत्वेन तस्यावश्याभ्युपेय- त्वादिति भावः । एतच्च बहिरिन्द्रियजद्रव्यसाक्षात्कारप्रयोजकमुक्तं

न्यायलीलावतीप्रकाशविवृतिः

विशेषगुणत्वमपि नोपाधिरिति भावः । प्र(परि?)माणं यदीति । साक्षात्पदं भेदलाभार्थम् । अन्यतराश्रयत्वं चापाद्यम् । गुरुत्वमेव दृष्टान्तः । य- द्यपि भावनावृत्तितादृशजातिमानपि वेगो न भावनानिरूपितोत्क- र्षाद्याश्रय इति (त्य?) प्रयोजकमिदं तथापि तयोरेकजातीयतासाध- कमानवत्त्वात्र साधकमानमस्ति परिमितव्यवहारस्याविचित्रस्योभय- त्राभावादिति भावः । उक्तमिति । द्व्यणुकानुपलम्भोऽपीति (३)व्यतिरेकमु-

---

(१) ०तिव्यवहारोपपत्तेः । (२) ०याभावादेव ।

(३) एतत्प्रतीकानुसारी पाठः 'प्रकाशे' नोपलभ्यते ।

मानात् । मैवम् । अवयवबहुत्वमात्रं वा महदितिप्रत्ययगोचर-बहुत्वविशेषो वा । सोऽपि निर्द्धारितोऽनिर्द्धारितो वा । नाद्यः, महदल्पसाधारणत्वात् । न द्वितीयः,अवयवबहुत्वेयत्तानिश्चयेऽपि घटादौ महदिति प्रत्ययात् तन्निरूपकमानाभावाच्च । न तृतीयः, महत्त्वप्रकर्षापकर्षप्रतीत्यनुदयप्रसङ्गात् । प्रचुरदेशव्यापकत्वात्त-दनुमानमिति चेत् , न, तद्देशप्राचुर्यस्यापि निश्चायकमानाभा-वात् । तत्रापि प्रचुरदेशान्तरव्यापकत्वानुमाने(१)ऽनवस्थानात् । कथं तर्हि घटादेः प्रचुराप्रचुरदेशव्यापकत्वप्रतीतिः । महत्त्वोत्क-

न्यायलीलावतीकण्ठाभरणम्

रिन्द्रियजद्रव्यप्रत्यक्ष इति । तेनात्मप्रत्यक्षे न व्यभिचारः । सोऽपीति । बहुत्वविशेष इत्यर्थः । निर्द्धारित इति । एतावद्भिरेवावयवैरिदं द्रव्य-मारब्धमिति निर्द्धारित इत्यर्थः । महदल्पेति । महतो घटादेरल्पस्यापि मसकादेर्भूयोऽवयवारब्धतया महत्त्वविशेषप्रत्ययो न स्यादित्यर्थः । ननु निर्द्धारितो बहुत्वविशेषो महत्त्वव्यवहारहेतुरिति दूषयति— न द्वितीय इति । ननु तत्रापि बहुत्वनिश्चय एवेत्यत आह—तन्निरूप-केति । अनिर्द्धारितावयवबहुत्वं दूषयति—न तृतीय इति । महत्त्वेति । बहुत्वविशेषस्यानिर्द्धारितत्वेनाविशेषादित्यर्थः । तदनुमानमिति । बहु-त्वविशेषानुमानमित्यर्थः । महत्त्वानुमानं वा । तद्देशेति । महत्त्वं विना तद्देशप्राचुर्यमपि निर्वक्तुमशक्यमित्यर्थः । तत्रापीति । प्रचुरदेशेऽपि प्रचुरदेशानुमानमित्यर्थः । ननु घटः प्रचुरदेशः कुवलयं न प्रचुरदेश-मिति कथं प्रतीतिर्यदि न तत् प्रत्यक्षमित्याह—कथमिति । महत्त्वेति ।

न्यायलीलावतीप्रकाशः

न तु द्रव्यप्रत्यक्षतामात्रप्रयोजकम्, आत्मनोऽप्रत्यक्षतापत्तेः । यद्यपि द्व्यणुकजन्यावयविन्यवयवबहुत्वं व्यभिचरति तथापि स्फुटत्वात्तदु-पेक्ष्यान्यदाह—अवयवेति । 'प्रचुरदेशव्यापकत्वात्' प्रचुरावयवसमवे-तत्वादित्यर्थः । अवयवबहुत्वेन महत्त्वव्यवहारोपपादने दूषणमाह—

न्यायलीलावतीप्रकाशविवृतिः

त्वेनेति शेषः । यद्यपीति । साक्षात्परम्परासाधारण्या(२)वयवबहुत्ववि-

(१) ०शान्तराभिधानेऽनवस्था० । (२) ० रणाव० ।

र्षापकर्षाभ्यां तदनुमानादिति ब्रूमः । देशानां च भेदेनाप्रतिस-
न्धाने तदपेक्षाबुद्धिसाध्यस्य बहुत्वविशेषस्यैवानुपपत्तेः । द्व्यणु-
कानुपलम्भो वा गुणविशेषविपर्ययाधीनः सालोकेन्द्रियसन्नि-

---

न्यायलीलावतीकण्ठाभरणम्

यद्यपि घटस्य ह्यवयवस्य महत्त्वोत्कर्षेऽपि कुवलयस्य त्रुटेस्त्र्यवय-
वस्य कथं महत्त्वापकर्षः स्यात् तथापि स्वावयवपरम्परासमाहार-
घटितप्रचुरदेशत्वमिह विवक्षितम् । ननु तथापि प्रशिथिलावयवस्य
तूलकपिण्डादेर्महत्त्वोत्कर्षः मृत्पिण्डादेर्महत्त्वानपकर्ष इत्यवयव-
समाहाराधीनमपि महत्त्वं प्रति बहुत्वं व्यभिचार्य्येवेति चेत्, न, मह-
त्त्वोत्कर्षविशेषस्य प्रचयाधीनस्य विवक्षितत्वात् । किं चावयवबहु-
त्वं संख्याविशेषः स च नास्त्येव किमनुमीयतामित्याह—देशानां चेति ।
ईश्वरापेक्षाबुद्धया तत्र बहुत्वमुत्पद्यत इत्यत्र न प्रमाणमिति भावः ।
प्रत्यक्षसिद्धेऽपि महत्त्वे विप्रतिपन्नं प्रति अनुमानमाह—द्व्यणुकेति ।
उद्भूतरूपस्य द्व्यणुकस्यानुपलम्भोऽसाक्षात्कारः पक्षः । गुणविशेषवि-
पर्य्ययाधीन इति । गुणविशेषात्यन्ताभावव्याप्य इति साध्यम् । गन्धा-
नुपलम्भे व्यभिचारवारणाय द्रव्येति । अन्धकारस्थघटानुपलम्भे
व्यभिचारवारणाय सालोकेति । आत्मानुमानमपरकीयात्मानुपलम्भे

न्यायलीलावतीप्रकाशः

देशानां चेति । भेदेनेति । अवयवानां विविच्यानुपलम्भेनेत्यर्थः ।

महत्त्वस्य प्रत्यक्षसिद्धत्वेऽपि विप्रतिपन्नं प्रति प्रयोगमाह—द्व्यणुकेति ।
उद्भूतरूपवत्वेन पक्षो विशेष्यः । 'अधीनो' व्याप्यः । सालोकेति । अ-
नुपम्भादिति गन्धानुपलम्भेन व्यभिचारीत्यत उक्तं द्रव्येति । द्रव्यानु-
पलम्भत्वादिति श्रोत्रानुपलम्भेन व्यभिचारीत्यत उक्तं चाक्षुषेति ।

न्यायलीलावतीप्रकाशविवृतिः

वक्षायामिदं दूषणमन्यथा तु प्रचयाख्यसंयोगवति निविडसंयोगवद-
पेक्षया समानद्रव्यवत्वेऽपि प्रत्यक्षोत्कर्षप्रदर्शनान्महत्तरव्यवहारद-
र्शनाच्च महत्त्वमातिरिक्तमेव मन्तुमुचितमिति दूषणमुपेक्षितं द्रष्टव्यम्।

अनुद्भूतरूपे सिद्धसाधनादाह—उद्भुतेति। अधीनत्वं जन्यत्वं न प्रा-
गभावरूपेऽनुपलम्भे इत्यन्यथा व्याचष्टे—व्याप्य इति। श्रोत्रानुपलम्भेनेति ।
श्रोत्रेण यो द्रव्यानुपलम्भस्तेनेत्यर्थः। क्वचित् श्रोत्रेति(द्रव्येति?)पाठ-

न्यायलीलावतीकण्ठाभरणम्

इति बोध्यम्। *अनुपलम्भे व्यभिचारवारणाय चाक्षुषेति। श्रोत्रद्रव्यानुपलम्भे व्यभिचारवारणाय वा। इन्द्रियासन्निकृष्टे व्यभिचारवारणाय इन्द्रियसन्निकृष्टेति। यद्यपि सर्वत्र गुणविशेषविपर्य्ययाधीनत्वमस्त्येवान्धकारे बाह्यालोकरूपाभावः, अन्तत इन्द्रियसंयोगाभावात्ममनःसंयोगाभावस्य वा सत्त्वात् तथापि गुणविशेषविपर्य्ययाधीन इति गुणविशेषविपर्य्ययप्रयोज्य इत्यर्थः। यद्वा द्व्यणुकं चाक्षुषसाक्षात्कारासाधारणकारणैकगुणाभाववत् चक्षुरयोग्यत्वादिति विवक्षितम्। अयोग्यत्वादित्येव वा विवक्षितम्।

न्यायलीलावतीप्रकाशः

अन्धकारेऽनुपलम्भवारणार्थं सालोकेति। ननु चक्षुरिन्द्रियानुपलम्भे नेदमनैकान्तिकम्(१)। अथ यादृशो गुणविशेष उपलम्भाव्यभिचारी तादृशस्तत्रापि नास्त्येव। तर्हि गन्धानुपलम्भेन व्यभिचारवारणाय विशेषणं व्यर्थम्, तत्रापि तादृशगुणाभावस्य वक्तुं शक्यत्वात्। किञ्चादृष्टविपर्ययाधीनत्वेन दूरसाक्षात्कारे मायराज्यादौ संयोगविशेषस्यापि साक्षात्कारकारणत्वदर्शनात्तदभावेन वाऽर्थान्तरम्। मैवम्। द्व्यणुकं चाक्षुषसाक्षात्कारासाधारणकारणैकवृत्तिगुणाभाववत् आलोकेन्द्रियसन्निकृष्टत्वे सत्यचाक्षुषत्वादिति विवक्षितत्वात्।

न्यायलीलावतीप्रकाशविवृतिः

स्तथा सत्ययमर्थो व्यक्त एव। न च चाक्षुषपददानेऽपि श्रोत्रेन्द्रियानुपलम्भेन चाक्षुषेण व्यभिचारः, तत्र रूपाभावेन साध्यसत्त्वात्। सलौकिकेति। (सालोकेतीति ?) न च संयोगाभावधीनतया (साध्य ?) सत्त्वादेव न तत्र व्यभिचार इति वाच्यम्, साध्येऽव्यासज्यवृत्तित्वस्य गुणे विशेषणत्वात्। अन्यथाऽदृष्टवदात्मसंयोगव्यतिरेकाधीनत्वेनार्थान्तरमाकर एव वक्ष्यति। न चैवं व्यासङ्गे व्यभिचारः, मनःसंयुक्तत्वेनापीन्द्रियविशेषणात्। तत्रापीति। उद्भूतत्वविशिष्टगन्धविपर्य्ययाधीनत्वस्य गन्धानुपलम्भेऽपि सत्त्वादित्यर्थः। ननु स्वविषयनिष्ठो यो गुणविशेषविपर्य्ययस्तदधीनत्वं साध्यमिति नोक्तदोषः। अत एव मनःसंयुक्तत्वविशेषणदानव्यावृत्तिरपि हेतौ परास्तेत्यरुचेराह—किञ्चेति। द्व्यणुकमिति। उद्भूतरूपमिति शेषः। गुणाभाववत्त्वं

(१) रूपमहत्त्वयोव सत्त्वादिति भावः।

कृष्टचाक्षुषद्रव्यानुपलम्भत्वात्(१), पवनानुपलम्भवत्। दीर्घत्वं च उपर्यधोभावा(२)वच्छिन्नप्रचुरदेशव्यापकत्वम्। न चात्रापि प्रचुर-देशव्यापकत्वानुपलम्भो, महत्त्वोत्कर्षेणैव तदनुमानात्। न चेदेवं

---

न्यायलीलावतीकण्ठाभरणम्

दीर्घत्वं परिमाणविशेषस्तत्रान्यथासिद्धिमाह—दीर्घत्वं चेति। प्रचुरदेशव्यापकत्वमपि दुरुन्नेयमत आह—महत्त्वेति। ननु महत्सु दीर्घमानीयतामिति निर्द्धारणान्यथानुपपत्त्या दीर्घत्वं परिमाणविशेषः स्यादित्यत आह—न चेदेवमिति। महत्सु दीर्घमानीयतामिति निर्द्धारणात् खर्वत्वादिकमपि स्यादित्यर्थः। यद्यपि खर्वत्वं ह्रस्वत्वमेव तथापि त्रिकोणपरिमण्डलादिकं ग्राह्यम्। तथा चावयवसंयोगविशेषादेव प्रतीतिरुपपत्तिरिति भावः। सम्प्रदाये तु परिमाणचातुर्विध्यम्।

न्यायलीलावतीप्रकाशः

दीर्घत्वविपर्ययाधीनत्वेनार्थान्तरं निराकरोति—दीर्घत्वं चेति। उपर्यधोभावेति। योग्यतोपलक्षणमिदम्। तदवच्छेदकं महत्त्वं जातिविशेष एव। ननु महत्सु दीर्घमानीयतामिति प्रत्यक्षाद्दीर्घत्वं तद्भिन्नं स्यात् महत्सु लघ्वानीयतामित्यनुभवात् तत्कल्पनापत्तेः। यदि चावयवसंस्थानविशेष एव तत्तदा दीर्घत्वमपि तथेत्यभिप्रेत्याह—न चेदेवमिति।

न्यायलीलावतीप्रकाशविवृतिः

गुणासमवाहितत्वमन्यथालोकरूपाभावेन सिद्धसाधनापत्तेः। अदृष्टेनार्थान्तरवारणार्थमसाधारणेति। इन्द्रियसंयोगेनार्थान्तरवारणाय एकवृत्तीति। महत्त्वस्य गुणत्वसिद्ध्यर्थं गुणेति। चाक्षुषसाक्षात्कारकारणयावत्सन्निकर्षसमवहितत्वं सत्यन्तार्थस्तेन व्यासङ्गदशायामचाक्षुषे घटे न व्यभिचारः। तत्रापीन्द्रियमनःसन्निकर्षासमवधानात् तिर्यगवस्थिताव्याप्तिरित्याह—योग्यतेति। महत्त्वं जातीति। जातिविशेषविशिष्टं महत्त्वमेवेत्यर्थः। यद्यप्येवं दीर्घत्वव्यवहारहेतुरपि तदेवास्तु एकत्रैव परिमाणे मद्धत्त्वत्वदीर्घत्वत्वव्यवहार इति वदन्ति। तदयुक्तम्। समानाधिकरणपरिमाणस्य परिमाणप्रतिबन्धकतया एकत्र परिमाणद्वयाभावात्। केचित्तु जातिविशेषापेक्षया संस्थानविशेषस्यैव परम्परास-

---

(१) ०लम्भात्। (२) धोभागाव०।

वक्रत्व(१)ऋजुत्वादिकमपि परिमाणान्तरं(२)स्यात् । [ इति परिमाणम् । ]

अथ पृथक्त्वे किं प्रमाणम् । पृथगिति प्रत्यय इति चेत्, न, तस्यान्योन्याभावावलम्बनत्वात् । अन्यथा गुणादौ तदनुपपत्तेः । तथा सति इदमिदं न भवतीति प्रत्ययः स्यात् न तु पृथगिति चेन्न, सत्यादिपदवदन्तर्भावितनञर्थ एव भावात्मनि पृथक्शब्दसङ्केतादुपपत्तेः । मैवम् । अभावस्य प्रतियोगिसापेक्षनि-

न्यायलीलावतीकण्ठाभरणम्

तत्र दीर्घत्वं महत्त्वसमानाधिकरणं परमदीर्घत्वं परममहत्त्वसमानाधिकरणं परमह्रस्वत्वं परमाणुत्वसमानाधिकरणमित्याद्यूह्यम् ।

पृथक्त्व इति । पृथक्त्वं तावदनुभवसिद्धं तस्य गुणत्वे किं प्रमाणमित्यर्थः । तथा सतीति । पृथक्त्वस्यान्योन्याभावत्वे सतीत्यर्थः । सत्यादिपदवदिति । यथा व्यधिकरणप्रकारानवच्छिन्नत्वं सत्यत्वं नञ्त्वान्तर्भावेण तथा पृथक्त्वमपीत्यर्थः । दै(मै?)वमिति । घटः पटो न भव-

न्यायलीलावतीप्रकाशः

आदिपदात्त्रिकोणमण्डलादिपरिग्रहः ।

पृथक्त्व इति । एतस्मात्पृथगिदमिति प्रतीतेस्त्रयोविंशतिगुणाविषयाया गुणविषयत्वे किं मानमित्यर्थः । तस्येति । इदमस्मात्पृथगिति प्रत्ययस्य इदमिदं न भवतीतिप्रत्ययान्न्यूनानतिरिक्तविषयत्वादन्योन्याभावेनैव तदुपपत्तिरित्यर्थः । अन्यथेति । तस्य गुणविषयकत्व इत्यर्थः । तथा सतीति । अन्योन्याभावविषयत्वे विधिमुखः प्रत्ययो न स्यादित्यर्थः । सत्यादीति । विशेष्यावृत्त्यप्रकारकत्वज्ञाने यथा सत्यपदस्य शक्तिस्तथा पृथक्शब्दस्यापि अन्योन्याभावविशिष्टेऽभावे शक्तिर्न हि नञोऽप्रयोग इत्येव विधिरित्यर्थः । अभावस्येति । इदमस्मात्पृथ-

न्यायलीलावतीप्रकाशविवृतिः

म्बन्धेनावयविनिष्ठस्य दीर्घत्वव्यवहारहेतुत्वमन्यथा पारिमाण्डल्यत्वादेरपि जातिविशेषस्य स्वीकारापत्तेरित्याहुः । परिमाणम् ।

सिद्ध्य(सिद्धि?)व्याघातादाह—एतस्मादिति । भावे धर्मिणीत्यर्थः ।

(१) खर्वत्वऋ० । (२) पारिमाणं स्या० ।

रूपणत्वात् । अस्य चावधिनिरूप्यत्वात् । आनुशासनिकपञ्चमी-विभक्त्यन्तवाचकपदाभिलप्यमानत्वमवधित्वमिति चेन्न, अनधीतशब्दविद्यानां तथाप्रतीतिविरोधात् । दण्डी पुरुष इति [प्रतीति]-

---

न्यायलीलावतीकण्ठाभरणम्

तीति प्रतीतेर्घटः पटात् पृथगिति विलक्षणा प्रतीतिरेवान्योन्याभाव-भेदे पृथक्त्वस्य प्रमाणमित्यर्थः । ननु यदेव प्रतियोगित्वं तदेव अवधित्वं किन्त्वनुशासनबलात् पृथक्शब्दप्रयोगे पञ्चमीत्याह—आनुशासनिकेति । आनुशासनिकी या पञ्चमी विभक्तिस्तदन्तं यद्वाचकं पदं घटादिति तदभिलप्यमानत्वमित्यर्थः । तर्हि अवैयाकरणानामवधित्वज्ञानं न स्यादित्याह—नेति । नन्वनधीतव्याकरणा(ना?)मपि यथा दण्डीति प्रत्ययस्तथा प्रकृतेऽपि स्यादित्याह—दण्डीति । दण्डाधारत्वं

न्यायलीलावतीप्रकाशः

गिति प्रतीतिविषयः पृथक्त्वमवधिनिरूप्यम् । न च अन्योन्याभाव एतद्विषयः, इदमिदं न भवतीतिप्रतीत्यापत्तेः । न च पृथक्शब्दोऽन्योन्याभावार्थकः, अन्योन्याभावस्य प्रतियोगिनिरूप्यत्वात्, पृथक्त्वस्य चावधिनिरूप्यत्वादित्यर्थः । ननु पञ्चम्यन्तपदाभिलप्यमानप्रतियोगित्वमेवावधित्वमित्याह—आनुशासनिकेति । पञ्चम्यन्तपदाज्ञानेऽपि पृथक्त्वव्यवहारात् पञ्चमीप्रयोगस्यावधिज्ञानोत्तरकालीनत्वाच्च नैवमित्याह—अनधीतेति । प्रतियोगित्वावधित्वयोरभेदे घटात्पटो नेत्यपि प्रतीतिः स्यात् । न च घटः पटो न भवतीत्यत्रापि सामानाधिकरण्यस्य प्रतीतेर्नशब्दस्याभावप्रतियोगित्ववाचकतया तेनैव प्रतियोगित्वस्याभिहितत्वान्न तदर्थिका पञ्चमीति वाच्यम्, नशब्दस्याभावाश्रयवाचकत्वे सामानाधिकरण्योपपत्तेरिति भावः । ननु यथा दण्डी पुरुषो दण्डपुरुषसम्बन्ध इतिप्रतीत्योर्विषयावैचित्र्येऽपि वैलक्षण्यं तथेदमिदं न भवतीदस्मात्पृथगित्यनयोरपि प्रतीत्योस्तत् स्या-

न्यायलीलावतीप्रकाशविवृतिः

घटः पटो नेति । इदमुपलक्षणं घटः पटः(टात् ?)पृथगित्यपि द्रष्टव्यम् । न चानुशासनमेव नियामकं तेन प्रयोगनियमनेऽपि प्रतीत्यनियमात् । न तदर्थेति ? ( र्थिकेति ? । ) उक्तार्थानामप्रयोगादिति भावः । नशब्दस्येति ।

वदुपपत्स्यत इति चेन्न, तत्र दण्डाधिकरणत्वस्य मत्वर्थीयेन प्रतिपाद्यमानत्वात् । तस्मात् पृथक्त्वगुणनिरूपकत्वमेवावधि-

न्यायलीलावतीकण्ठाभरणम्

प्रत्यक्षमेव तत्र प्रयोगमात्रदर्शनात् दण्डीति व्यपदिश्यते । प्रकृते तु अनुशासनस्य पञ्चम्या वाचकत्वस्याभिलप्यमानस्य च ज्ञानमवधित्वज्ञानेऽपेक्षितमिति वैषम्यमित्याह—नेति । यत्तु दण्डी पुरुषो दण्डपुरुषसंयोग इति विषयावैचित्र्येऽपि प्रतीतिवैचित्र्यं यथा तथा घटः पटात् पृथक् घटः पटो न भवतीत्यपि विषयावैचित्र्येऽपि वैचित्र्यमेव स्यादिति व्याख्यानं तच्चिन्त्यं मूलानुरोधात् । तर्हि किमवधित्वमत आह—तस्मादिति ।

न्यायलीलावतीप्रकाशः

दित्याह—दण्डीति । तत्रापि विषयवैचित्र्यमस्त्येवेत्याह—तत्रेति । तस्मादिति । ननु अवधित्वं न पृथक्त्वनिरूपकत्वमन्योन्याश्रयात् । न च यो वस्तुगत्याऽवधिस्तन्निरूप्यं पृथक्त्वं पृथक्त्वनिरूपणात् प्राक् तत्रावधित्वाभावात् । अत एव पृथक्त्वात्यन्ताभाववत्त्वमवधित्वमपास्तम् । अवधौ ज्ञाते पृथक्त्वज्ञानं तज्ज्ञाने च तदत्यन्ताभाववत्त्वज्ञानमिति परस्पराश्रयत्वात् । मैवम् । पृथक्त्वसामान्यज्ञानपूर्वकत्वात्

न्यायलीलावतीप्रकाशविवृतिः

तथा चोक्तार्थतैव नास्तीति भावः । 'वाचकत्वे' प्रतिपादकत्वे । वस्तुतः प्रतियोगित्वावधित्वयोर्भेदेऽनुभव एव मानम् । प्रतियोगित्वे च पञ्चम्याः शक्तिरक्लृप्तैवेत्येव पृथक्त्वसिद्धौ मानम् ।

मिश्रास्तु द्वौ पृथगिति प्रतीत्या द्वित्वावधित्वं (वच्छिन्नत्वं?) पृथक्त्वस्य विषयीक्रियते । न चान्योन्याभावस्य तदवच्छिन्नत्वम्, अतिरिक्तवृत्तित्वात् । अन्यूनानतिरिक्तव्यक्तिकत्वस्य च प्रकृतेऽवच्छेदकत्वपदार्थत्वात् । न च द्वित्वसामानाधिकरण्यमात्रं तत्र विषयोऽवच्छेदकत्वबाधे सत्येव तथा कल्पनादिति पृथक्त्वं गुणः । एवं तदसमवायिकारणत्वेनैकपृथक्त्वमपि गुणः । न चैकत्वमेव तदसमवायिकारणं तदसमवायिकारणत्वे संख्यात्वापत्तेरिति वदन्ति ।

अन्योन्याश्रयादिति । अवधित्वे ज्ञाते पृथक्त्वज्ञानं तज्ज्ञाने चावधित्वज्ञानमित्यर्थः । ननु पृथक्त्वसामान्यज्ञानस्याप्यवधिज्ञानसाध्यत्वाद-

त्वम् । अन्यपर्यायशब्दसम्बन्धे पञ्चम्यनुशासनव्यवहाराच्च पाणिने-रन्यादिशब्दानां पृथक्त्वगुणयोगिपदार्थप्रतिपादकत्वमुन्नीयते । अन्यथा अघटः पट इत्यन्योन्याभाववाचकनञ्(१)प्रयोगेऽपि

---

न्यायलीलावतीप्रकाशः

पृथक्त्वविशेषज्ञानस्य नान्योन्याश्रयः । यद्वा पृथक्त्वनिरूपकत्वज्ञानं न पृथक्त्वज्ञानकारणमपि तु यत्रैतद्वर्त्तते तज्ज्ञानमन्यथा प्रतियोगि-त्वज्ञानेऽप्यन्योन्याश्रयापत्तेः । पारावारवत् पृथक्त्वावधित्वयोः समा-नसंवित्संवेद्यत्वमित्यप्याहुः। अन्यपर्यायेति । अन्यपर्यायशब्दयोगे पञ्च-म्यनुशासनादर्थैक्ये च पर्यायत्वाद् य एवैकोऽर्थोऽन्यादिपदानां तदेव पृथक्त्वम् । अत एव घटात्पटोऽन्यो भिन्नो विधर्माऽर्थान्तरमितरः पृथगित्यत्र पञ्चमी भवति । न च भेद एव पृथक्त्वं स चान्योन्याभावो वैधर्म्यं स्वरूपभेदश्चेति तद्वाचकयोगे पञ्चमीति वाच्यम्, घटः पटो नेत्यत्र तत्प्रसङ्गात् । न च भेदवद्वाचकयोगे पञ्चमी, अघटः पट इत्यत्रापि तत्प्रसङ्गात् । घटः पटो न भवतीत्यत्रापि सामानाधिकर-ण्यप्रतीतेर्नञ्शब्दस्याभाववद्वाचकत्वाच्चेत्यर्थः । नन्वन्यशब्दार्थ एव क्वचिद् प्रतियोगिना निरूप्यते क्वचिदवधिना, यत्रावधिना स निरूप्यते तत्र पञ्चमी, शब्दशक्तिवैचित्र्यात् । यथा ग्रामादागत इत्य-त्रागमनमवधिनिरूप्यं तत्र पञ्चमी, ग्रामस्यागमनवानयमित्यत्र च तदेव सम्बन्धिमात्रनिरूप्यमिति न तत्र पञ्चमी । मैवम् । शब्दश-क्तिवैचित्र्यासिद्धेः । दृष्टान्ते नावधौ पञ्चमी किन्त्वपादाने । यद्वा

न्यायलीलावतीप्रकाशविवृतिः

न्योन्याश्रय इत्यत आह—यद्वेति । अवधितावच्छेदकप्रकारकावधि-ज्ञानमेव पृथक्त्वधीहेतुर्न त्ववधित्वेन ज्ञानमित्यर्थः । नन्वेवं तत्राव-धित्वानुभवो न स्यादित्यत आह—पारावारवदिति । तथा चावधित्वस्य पूर्वमप्रतीतेरपि पृथक्त्वप्रत्यय एव विषयत्वमिति भावः । एतच्च स्वरूपसम्बन्धविशेष एवावधित्वमित्यभिप्रेत्य, अन्यस्य समानसं-वित्संवेद्यत्वाभावादित्यवधेयम् । केचित्तु पारावारवदित्यादिग्रन्थं पृथक्त्वेऽपि योजयन्ति । एतन्मते च पृथक्त्वात्यन्ताभाववत्त्वमेवा-

---

(१) नञ्प्रतियोगे पञ्च०

पञ्चमीप्रसङ्गात्। पृथक्त्वं च रूपवत्सत्त्वासम्बन्धितया प्रतिभासते। न च तमोवदेतत् स्यादिति वाच्यम्, तद्भावत्वे बाधकाभावात्। [इति पृथक्त्वम्।]

अथ द्विपृथक्त्वे किं प्रमाणम्। अनुभव [एव] इति चेत्, न, तस्य द्वित्वसाहचर्यादेवोपपत्तेः। ततो नैतद्व्यवस्थेति(१)चेत्, मैवम्। द्वित्वसामानाधिकरण्येन पृथक्त्वप्रतीतेः। द्वित्वं च न घटत्ववत् अयं घटोऽयं घट इत्येकैकसंसर्गितया भासते। अयं च

न्यायलीलावतीप्रकाशः

चापादानमेव सम्बन्धित्वेन विवक्ष्यते तदा ग्रामस्यागमनवानयमित्यत्र षष्ठीत्यविरोधात्। नाप्यघटः पट इत्यत्र समासेनैवावधित्वस्योक्तत्वान्न तदर्थिका पञ्चमीति वाच्यम्, घटस्यान्योन्याभाववानयमित्यत्र पञ्चमीप्रसङ्गात्। अत एव वैधर्म्यमेव पृथक्त्वमित्यपास्तम्। वैधर्म्यस्य सातिशयत्वात् पृथक्त्वस्य निरतिशयितत्वात्। पृथक्त्वस्य च भावत्वे मानान्तरमाह—पृथक्त्वं चेति। तद्भावत्व इति। पृथक्त्वभावत्व इत्यर्थः। तमसस्तु भावत्वे बाधकस्य वक्ष्यमाणत्वादिति भावः।

अथेति। लोष्ठाद्घटपटौ द्वौ पृथगिति प्रतीतिर्द्वित्वान्यूनानतिरिक्तवृत्तिगुणजन्येत्यत्र किं मानमित्यर्थः। तस्येति। द्विपृथक्त्वानुभवस्य द्वित्वसामानाधिकरण्यविषयत्वेनेत्यर्थः। द्वित्वसामानाधिकरण्येनेति। द्वौ पृथगितिप्रतीतेः पृथक्त्वस्य द्वित्वेनान्यूनानतिरिक्तव्यक्तिकत्वानुभवात्। यावति द्वित्वं परिसमाप्यते तावति द्विपृथक्त्वं गुणान्तरमित्यर्थः। ततोऽपि द्वित्वस्यैकैकशः द्विव्यक्तिवृत्तित्वेन तत्सिद्ध्यतीति द्वित्वस्यैकत्र समाप्त्यभावमाह—द्वित्वं चेति। तर्हि एकपृथक्त्वा-

न्यायलीलावतीप्रकाशविवृतिः

वधित्वमित्यभिप्रायः। प्रतियोगिज्ञानं विना कथमभावज्ञानमित्यरुचिबीजं च कल्पयन्ति।

समासस्यावधित्वेऽनुशासनाभावादिति दोषे सत्येवाह—घटस्यान्योन्येति। घटादन्योन्याभाववानयमित्यपि स्यादित्यर्थः।

(१) नैव तद्व्यवस्थेति चेत्। नैतद् व्यवस्थितिरिति चेत्। लि० केचित्। मैवम्।

द्वावयं च द्वाविति प्रत्ययप्रसङ्गात् । न चैकपृथक्त्वमुभयाश्रितम् । एकपृथक्त्वयोरभेद आरोप्यत इति चेन्न, असति बाधके उभयाश्रितपृथक्त्वप्रतीतेर्भ्रान्तत्वानुपपत्तेः । न चेदेवं चित्रमप्येकं रूपं न स्यात् । नीलादीनां विजातीयानारम्भकत्वनियमे व्यापकैरव्यापकैर्वा नीलपीतादिनानारूपैरेव चित्ररूपप्रतीतेरुपपत्तेः(१)। चित्रैकरूपानुभवबलात्(२) तद्व्यवस्थितिरिति चेत्तुल्यं प्रकृतेऽपि।

---

न्यायलीलावतीप्रकाशः

देव तादृशानुभवः स्यादित्यत आह—न चैकेति । तस्य द्वित्वेन सहान्यूनानतिरिक्तवृत्तित्वाभावादित्यर्थः । ननु द्वौ पृथगित्यनुभवस्य द्वित्वसामानाधिकरण्यं विषयो न तु द्वित्वान्यूनानतिरिक्तवृत्तित्वमित्येकपृथक्त्वेनान्यथासिद्धिः । अत्राहुः । द्वित्वसमानाधिकरणैकपृथक्त्वात्तादृशानुभवे घटात्पटाच्च घटौ द्वौ पृथगिति प्रतीतिः स्यात् । अथ पृथक्त्वाश्रयतावच्छेदकत्वेन द्वित्वं प्रतीयते । द्वित्वाश्रयतया च घटपटयोः प्रतीत्या कथं तस्यावधित्वं प्रतीयताम् । पृथक्त्वाश्रयतावच्छेदकरूपविरहेणोपलभ्यमानस्यैवावधित्वादित्युच्यते । तन्न । आश्रयमात्रवृत्तेरेव धर्मस्याश्रयतावच्छेदकत्वाद् द्वित्वस्य चैकपृथक्त्वाश्रयमात्रवृत्तित्वाभावात् । अव्यापकैर्वेत्यभ्युपगमवादः । तुल्यमिति । पृथक्त्वमपि द्वित्वेन सहान्यूनानतिरिक्तवृत्त्यनुभूयत इति

न्यायलीलावतीप्रकाशविवृतिः

घटाच्च(त्?)पटाच्चेति । एकपृथक्त्वयोरन्योन्यावधित्वात् द्विपृथक्त्वस्य चातथात्वेन तथाप्रतीतिरिति भावः । आश्रयमात्रवृत्तेरिति । तथा चायमपि प्रकारो द्विपृथक्त्वाभ्युपगमपक्ष इति भावः । न चाश्रयावृत्तीतिधर्मेणोपस्थितस्यावधित्वमतो न घटाच्च(त्?)पटाच्चेत्यादिप्रतीतिरिति वाच्यम्, घटत्वादिना तादृशेनाऽप्युपस्थितेः। न चाश्रयावृत्तिमात्रेणोपस्थितस्यावधित्वमत्र त्वाश्रयवृत्तिना द्वित्वेनापि तदुपस्थितिरिति वाच्यम्, प्रमेयाद्घटात्पटः पृथगिति प्रत्ययानापत्तेरिति भावः ।

केचित्तु द्वौ पृथगितिप्रतीतेः पृथक्त्वविषयता । सा च नाना-

---

(१) विचित्रप्रत्ययोपपत्तेः । (२) विचित्रैकानुभ० ।

द्विपरत्ववन्दी(१)त्ववशिष्यते। सा तु परत्वापरत्वप्रक्रियायां निरसनीयेति। [इति] द्विपृथक्त्वम्।

---

न्यायलीलावतीप्रकाशः

प्रत्यक्षमेव तत्र प्रमाणमित्यर्थः। अनुमानमप्याहुः। संख्यात्वमेकानेकवृत्तिवृत्ति गुणत्वसाक्षाद्व्याप्यजातिसमानाधिकरणात्यन्ताभावप्रतियोगिगुणत्वसाक्षाद्व्याप्यजातित्वात्, रूपत्ववत्। विपक्षे बाधकं चोक्तमेव।

द्विपरत्वेति। द्वौ पराविति द्वित्वेन सहान्यूनानतिरिक्ततया परत्वस्यानुभवाद् द्विपरत्वमपि गुणः स्यादित्यर्थः। सा त्विति। भिन्नदेशस्थयोर्द्वौ पराविति प्रतीतेरेवाभावः। किन्त्वेतौ परपरतराविति। समानदेशस्थयोश्च तादृशी द्वित्वधीर्द्वित्वसमानाधिकरणपरत्वादेवान्यथासिद्धा। न चैवं घटात्पटाच्च घटपटौ द्वौ पराविति प्रती-

न्यायलीलावतीप्रकाशविवृतिः

पृथक्त्वविषयत्वे गौरवाल्लाघवसहकृतं द्विपृथक्त्वमेव विषयीकरोति। न च द्वौ रूपवन्ताविति प्रत्ययेन व्यासज्यवृत्तिरूपापत्तिरेवमिति वाच्यम्, तत्र समानाधिकरणरूपस्य रूपप्रतिबन्धकतयैकत्र एकदा रूपद्वयासम्भवेन बाधकसत्त्वात्। अत्र तु द्वित्वस्याभ्युपगमे बाधकाभावात् द्विपृथक्त्वसिद्धिरिति वदन्ति। तदयुक्तम्। अत्रापि समानाधिकरणसंख्यायाः संख्याप्रतिबन्धकत्वात्। अप्रतिबन्धकत्वे वा रूपेऽपि तथात्वप्रसङ्गादिति।

संख्यात्वमिति। अत्र हेतुसाध्ययोः साक्षात्पदं भेदलाभाय। दृष्टान्ते सङ्ख्यात्वमादाय साध्यं पक्षे बाधसहकारेण पृथक्त्वत्वमादाय पर्यवसानम्। समानदेशस्थयोरिति। प्रकृते तु घटपटयोरपि परस्परावधिकं पृथक्त्वमस्तीति विशेष इति भावः। ननु समानाधिकरणकिञ्चिद्विभागासमानकालत्वमेकविभागध्वंसेऽपि विभागान्तरसमानकालीने यावद्विभागसमानकालत्वाविवक्षायामुकाप्रसिद्धिरेव समानाधिकरणविभागत्वावच्छिन्नासमानकालत्वविवक्षायां तत्तदवच्छिन्नत्वं लाघवेन ध्वंस एव प्रतियोगिद्वारा विशेषणमस्त्वित्यरुच्या तथैव सिद्धान्तयति—समानाधिकरणेति। उत्पन्नसमा-

(१) वान्दिस्त्वव०।

संयोगसिद्धौ किं प्रमाणम् । संयुक्त इति प्रत्यय इति चेत्, न, तस्य विभागाभावावलम्बनत्वात्(१) । कः पुनरयं विभागः, किं सम्बन्धाभावमात्रम्,(२)उताभावभेदः, भावभेदो वा । नाद्यः। समवायादेरपि संयोगतापत्तेः । इष्टत्वाच्च न द्वितीयः । अभा-

---

न्यायलीलावतीकण्ठाभरणम्

संयोगसिद्धाविति । संयुक्ताविति प्रत्यक्षं विभागाभावविषयतयाऽन्यथासिद्धमतः संयोगस्य गुणत्वसिद्धौ न मानमित्यर्थः । कः पुनरिति । विभाग एव तावन्निरूपितोऽस्ति येन तदभावमादायान्यथासिद्धिः स्यादित्यर्थः। 'सम्बन्धाभावमात्रं' सम्बन्धसामान्याभावः। 'अभावभेदः' सम्बन्धप्रागभावः। 'भावभेदो' गुणरूपः। समवायेति। सम्बन्धाभावाभावस्य समवायपर्य्यवसानादपीत्यर्थः। इष्टत्वाच्चेति। सम्बन्धाभावाभावस्य संयोगपर्य्यवसानादपीत्यर्थः। यद्वा न द्वितीय इत्यनेनेष्ट-

न्यायलीलावतीप्रकाशः

त्वापत्तिः। समानदेशस्थयोस्तयोः परस्परापेक्षया संयोगसंयुक्तबहुत्वाभावेन परत्वस्यैवानुपपत्तेरिति भावः ।

'सम्बन्धाभावमात्रं' सम्बन्धसामान्याभावः । 'अभावभेदः' सम्बन्धप्रागभावः । 'भावभेदो' गुणरूपः । इष्टत्वादिति न द्वितीय

न्यायलीलावतीप्रकाशविवृतिः

नाधिकरणविभागत्वावच्छिन्नध्वंसस्येत्यर्थः । यथाश्रुते उत्पत्स्यमानविभागवति तादृशसामान्यध्वंसाभावात् संयुक्तप्रतीत्यनापत्तेः । स च ध्वंसः क्वचिदेकप्रतियोगिकः क्वचिन्नानाप्रतियोगिकः । सामान्यध्वंसता चोत्तरस्थल एव। न च नानाप्रतियोगिनामेकदाऽसत्त्वाद् ध्वंसस्य च प्रतियोगिजन्यत्वात्कथं सामान्यध्वंसोत्पत्तिरिति वाच्यम्, प्रतियोगित्वेनैव जनकतेति चरमप्रतियोगिन एव तज्जनकत्वात्। न हि कारणतावच्छेदकावच्छिन्नयावत्सत्त्वे कार्यम्। न चैवं प्रथमघटध्वंसकाले सामान्यध्वंसोत्पत्तिः स्यात् चरमप्रतियोगिनाशकस्यैव तत्कारणत्वात् । यद्वा चरमप्रतियोगित्वेनैव जनक-

(१) ०माणं तस्य विभागाभावात्मकत्वात् । कः पुनर० ।
(२) सम्बन्धावभासमात्रम्, उता० ।

वाभावत्वे भावत्वव्यवस्थितेः । नेतरः । गुणगुणिनोर्विषयविषयिणोरपि संयोगितापत्तेः । विभागध्वंसः संयोग इति चेन्न, संयुज्य विभक्तेऽपि तत्प्रत्ययप्रसङ्गात् । तमःप्रत्ययवद् यावदुत्पन्नप्रतियोगिध्वंसावलम्बनत्वात् संयोगप्रतीतेः, असिद्ध एव संयोग इति चेन्न, सहोत्पन्नयोरविभक्तयोरेव(१) संयोगात् । जातस्तत्रा-

---

न्यायलीलावतीकण्ठाभरणम्

त्वादिति सम्बध्यते । इष्टत्वमेवोपपादयति—अभावेति । संयोगप्रागभावो विभागस्तदभावश्च संयोगः स्यादित्यर्थः । गुणगुणिनोरिति । विभागाभावस्य तत्रापि विद्यमानत्वादित्यर्थः । ननु विभागात्यन्ताभावसत्त्वेऽपि ध्वंसो नास्ति विभागध्वंसस्य द्रव्यमात्रवृत्तित्वादित्याह—विभागेति । संयुज्येति । विभागध्वंसात्मकसंयोगानन्तरं पुनर्विभागेऽपि पूर्वसंयोगरूपध्वंसविषयकसंयोगप्रतीत्यापत्तेरित्यर्थः । यावदिति । विभागासमानकालीनविभागध्वंसस्य विभागत्वावच्छिन्नप्रतियोगिकविभागध्वंसस्य वा संयुक्तप्रतीत्यालम्बनत्वात् । अतो नैकविभागवति यावदर्थासम्भवाद्दोषः । सहेति । अविभक्तयोरपि संयुक्तप्रतीतिदर्शनान्नैवमित्यर्थः । तत्रापीति । सहोत्पन्नयोरपीत्यर्थः ।

न्यायलीलावतीप्रकाशः

इत्यत्र हेतुः । इष्टत्वमुपपादयति—अभावाभावत्व इति । गुणगुणिनोरिति । विभागात्यन्ताभावस्य तत्रापि विद्यमानत्वात् । संयुक्तव्यवहारापत्तेरित्यर्थः । विभुद्रव्ययोर्हिमवद्विन्ध्ययोश्च संयुक्तप्रत्ययापत्तिश्चेत्यपि द्रष्टव्यम् । विभागध्वंस इति । अतो न गुण्यादिषु संयोगधीरित्यर्थः । संयुज्येति । विभागध्वंसात्मकसंयोगानन्तरं पुनर्विभागेऽपि पूर्वविभागध्वंसविषयकसंयोगधीप्रसङ्गादित्यर्थः । यावदुत्पन्नेति । न च यत्रैकस्यैव विभागस्य ध्वंसस्तत्र यावदर्थाभावः । समानाधिकरणविभागासमानाकालीनविभागध्वंसस्य समानाधिकरणविभागसामान्यध्वंसस्य वा विवक्षितत्वात् । सामान्याभावस्य यावद्विशेषाभावव्याप्यत्वात् । सहेति । विभागपूर्वकत्वात् तद्ध्वंसस्य सहोत्पन्नयोर्विभाग एव न

---

(१) संयुक्तयोराप्यपार्थिवपरमाण्वोः, आप्यपार्थिवपरमाण्वन्तरसंयोगाज्जातयोर्द्व्यणुकयोः । एवं स्थूलयोरपीति । इति दीधितिः ।

पि(१) विभाग इति चेन्न, तद्धेतूनां कर्मविभागादीनामभावात्। अजोऽसाविति चेन्न, ध्वंसानुपपत्तेः। ततः(२) संयोगप्रागभाव एवासौ तदभावस्तु संयोग इति स्थितम्। संयोगः सन् इत्यबाधितद्बुद्धिवेद्यत्वाच्च [ सम्बन्धबुद्धिवेद्यत्वात्(३) ] समवायवत्।

---

न्यायलीलावतीकण्ठाभरणम्

कर्म्मविभागादीनामित्यत्रादिपदात् विभागध्वंसकारणसंग्रहः। त्यक्तमर्य्यादः शङ्कते—अज इति। तर्हि विभागध्वंसः संयोग इति व्याहतमित्याह—ध्वंसेति। अत इति। त्वयाऽप्यगत्या संयोगप्रागभाव एव विभागो वाच्यस्तदभावश्च संयोग एवेत्यर्थः। सन्निति। सत्तायोगीत्यर्थः। न च दृष्टान्तविरोधः, तत्रापि सत्तासम्बन्धस्य स्वरूपस्य विद्यमानत्वात्। अन्यथा तस्य भावत्वमपि न स्यात्। सम्बन्धबुद्धिविषयत्वादिति। सम्बन्धत्वप्रकारकप्रमाविषयत्वादित्यर्थः। न च स्वरूपसम्बन्धेन व्यभिचारः, तस्यातिरिक्तस्याभावात्। उप-

न्यायलीलावतीप्रकाशः

जातस्तत्र मिथः कर्मण्यपि संयोगो न जायेतेत्यर्थः(४)। जात इति। अतस्तद्ध्वंसोऽपि तत्रोत्पन्न इत्यर्थः। कर्मविभागादीनामित्यादिपदाद्विभागध्वंसहेतुसङ्ग्रहः। अन्यस्य तत्संग्राह्यस्याभावात्। तत इति। विभागध्वंसात्मकसंयोगवादिनापि संयोगप्रागभाव एव विभागो वाच्यः। तथा चेष्टापत्तिरित्युक्तमित्यर्थः। सन्निति। भाव इत्यर्थः, न तु सत्तायोगित्वं समवायस्य दृष्टान्तत्वविरोधात्। चकारौ हेतुद्वयनैरपेक्ष्यसूचकौ। द्वितीयो हेतुः स्वरूपसम्बन्धान्यत्वेन विशेषणीयः।

न्यायलीलावतीप्रकाशविवृतिः

त्वमिति दिक्। सिद्धान्तस्थादिपदानुरोधादाह—तद्ध्वंसोऽपीति। आदिपदादिति। एवं च तद्धेतूनामिति मूले तत्पदं विभागतद्ध्वंसपरमन्यथाऽनन्वयापत्तेरिति भावः। यत्र मूले चकारद्वयमस्ति तत्समञ्जसयन्नाह—चकाराविति। स्वरूपेति। यद्यपि स्वरूपसम्बन्धस्य केवलान्वयितया तदन्यत्वमप्रसिद्धं तथापि सम्बन्धिद्वयभिन्नत्वेन हेतुर्वि-

---

(१) तत्तदापि वि०। (२) अत इति कण्ठाभरणसम्मतः पाठः।

(३) ०द्धिविषयत्वाच्च सम०।

(४) अपिः कारणासंयोगसमुच्चयार्थः। 'न जायेत' न प्रतीयेत।

अन्यथाऽसमवायाख्यभावाभाव एव समवायोऽपि स्यात्। गगन-पवनसंसर्गजध्वानस्य च द्वितीयशब्दवत् भावासमवायिकारण-त्वानुमानात्। तथोत्पादस्तु(१) न संयोगः क्षणभङ्गनिषेधाद-

---

न्यायलीलावतीकण्ठाभरणम्

श्लिष्टप्रत्ययजनकत्वाधीनश्चाभावादौ स्वरूपसम्बन्धव्यपदेशः। अन्यथेति। भावत्वेन प्रतीयमानत्वस्याभावत्वस्वीकार इत्यर्थः। गगनेति। शब्दविभागाजन्यः शब्दो गुणासमवायिकारणकः शब्दत्वात् मतवत्। स च गुणः पारिशेष्यात् संयोग एव स्यात्। न च गगनमात्रवृत्तिरेव स्यादिति वाच्यम्, सङ्ख्यापरिमाणपृथक्त्वानां सदा शब्दजन्मापत्ति-दोषादजनकत्वस्थितौ शब्दाजन्यत्वेन पक्षविशेषणादन्यस्य च सामान्यगुणस्य विशेषगुणस्य वा गगनेऽसम्भवात्। अनेकवृत्तित्वेन वा साध्यं विशेष्यम्। विभागजन्यः शब्दो दृष्टान्तीकर्त्तव्य इत्यप्याहुः।

बौद्धमतमाशङ्क्य निराकरोति—तथेति। तथोत्पन्न इति। संयुक्तधीरेव कुर्वद्रूप इत्यर्थः। ननु संयोगोऽस्त्वतिरिक्तस्तथापि व्याप्यवृत्ति-

न्यायलीलावतीप्रकाशः

तेनाभावेन स्वरूपसम्बन्धात्मकेन न व्यभिचारः। गगनपवनेति। भावेति स्वरूपनिर्वचनम्। अभावोऽपि असमवायिकारणमितिमतनि-राकरणसूचनार्थं वा। शब्दविभागाजन्यस्त्रयोविंशतिगुणासमवा-यिकारणकत्वशून्योऽयं गुणासमवायिकारणक इति साध्यम्। अतो नार्थान्तरम्। न च गगनमात्रसमवेतगुणासमवायिकारणकत्वेना-र्थान्तरम्, अनेकवृत्तित्वेन(२)विशेषणात्। असमवायिकारण-

न्यायलीलावतीप्रकाशविवृतिः

शेष्य इत्यर्थः। सम्बन्धिद्वयभिन्नसम्बन्धत्वमेव हेतुः। कुण्डबदर-मित्यादौ च संयोगस्य तथात्वान्नासिद्धिरित्यन्ये। संसर्गस्य संयो-गरूपतया तेन रूपेण पक्षतायां विशेषणासिद्धिरिति पक्षतावच्छे-दकमाह—शब्दविभागेति। एवमपि गुणान्तरेणार्थान्तरमित्यरुच्या प्रकारान्तरमाह—त्रयोविंशतीति। कर्मणाऽर्थान्तरवारणाय साध्ये गुण-पदम्। अनेकवृत्तित्वेनापीति। यद्यप्येवमपि व्याप्यवृत्तितादृशगुणेनार्था-

---

(१) ०थोत्पादकस्तु। (२) अनेकवृत्तित्वेनापीति विवृतिसम्मतः पाठः।

तिरेकेऽपि(१) सर्वत्र ध्वानोत्पत्तिप्राप्तिरिति चेन्न, (२)अन्या·

---

न्यायलीलावतीकण्ठाभरणम्

रेव स वक्तव्य इति। गगनं व्याप्य शब्दमुत्पादयेदित्याह—अतिरेक इति। भवेदेवं यदि संयोगो व्याप्यवृत्तिः स्यात्तदेव तु नास्तीत्याह—नेति।

न्यायलीलावतीप्रकाशः

विभागजशब्दस्य च दृष्टान्तत्वात्। तथोत्पादः संयुक्तधीकुर्वद्रूप इत्यर्थः। अतिरेकेऽपीति। विभागध्वंसभिन्नसंयोगस्वीकारेऽपीत्यर्थः। यद्यपि गगनस्यैकत्वान्न तत्र सर्वशब्दार्थान्वयस्तस्यानेकाशेषवाचित्वात्। अवच्छेदकानां च ततो भिन्नत्वात्। तथापि यदि शब्दो व्याप्यवृत्तिः स्यात् तदा देशान्तरीयभेर्यभिघातेऽत्रस्थैः शब्दः श्रूयेत। न च विभुगगनात्मकश्रोत्रस्य सर्वसाधारण्यादव्याप्यवृत्तित्वेऽप्ययं दोषः। इह शब्दो नेह शब्द इत्यनुभवाच्छब्दस्याव्याप्यवृत्तित्वे सिद्धे यस्य समवायवृत्त्याधारता कर्णसंयोगेनावच्छिद्यते स गृह्यते।

न्यायलीलावतीप्रकाशविवृतिः

न्तरम्। न च त्रयोविंशतिभिन्नो व्याप्यवृत्तिगुणो बाधित इति न तेनाऽर्थान्तरमिति वाच्यम्, तर्हि तद्भिन्नो गगनमात्रसमवेतोऽपि गुणो बाधित इति तुल्यम्। तथापि ताद्रूप्यसिद्ध्यर्थं विशेषणमिति ध्येयम्। विभागजेति। हेतुश्चात्राद्यशब्दत्वमिति भावः। अवच्छेदकानी(नां?)चेति। यद्यपि भिन्नत्वेऽपि तावदवच्छेदेन शब्दोत्पत्तिस्स्यादित्यापादानं युज्यत एव तथापि तत्रेष्टापत्तिरेवेति तात्पर्यम्। अत एव परसिद्धं व्याप्यवृत्तित्वमापादकीकृत्यापादयति—तथापीति। अन्यथा मूले व्याप्यवृत्तित्वस्यापाद्यतया परसिद्धत्वेता(नापा?)दकानुपपत्तेः। एवं चानेन तर्केणेष्टापत्तिनिरासे मूलोक्तव्याप्यवृत्तित्वापादनं सम्यक् सम्पद्यत इति भावः। न चेति। न चैवं पूर्वपक्षः सिद्धान्तोपरि युक्त इति वाच्यम्, नेदमनिष्टापादनं ममैव, किन्तु तवापीति सकलसिद्धतया तर्काभास एवायमित्यभिसन्धानेन सत्यपि सिद्धान्तसङ्गतत्वेऽत्रैव तस्य करणात्।

अन्ये तु अतिरेकेऽपीति कृत्वा पूर्वपक्षसिद्धान्ततयोद्धृतत्वात् सिद्धान्त एवायमाक्षेपः। पुनः सिद्धान्तफक्किकालिखनं च शेषपूरणार्थमित्याहुः।

---

(१) ०तिरिक्तेऽपि। (२) इति चेद्।

प्यवृत्तित्वात् ।

किं पुनरव्याप्यवृत्तित्वम् । एकस्यैकदा भावाभावौ, विचारासहत्वादिदमयुक्तम् । तथा हि न तावत्तत्र संयोगस्य प्रागभावप्रध्वंसाभावौ । तयोः प्रतिपक्षसमानकालत्वाभावात् । नात्यन्ताभावः । तेन सादेश्यव्याघातात् । नान्योन्याभावः । व्याप्यवृत्तीनामपि स्वाश्रये तादात्म्याभावबलेनाव्याप्यवृत्तिताप्रसङ्गात् । यथा एकत्रैव बीजे कारणत्वं तदत्यन्ताभावश्च कार्यभेदावच्छेदात् तथाऽत्राप्यवच्छेदभेदमादायाविरोध इति चेन्न(१), अवच्छेदो [हि] यद्यनर्थान्तरमर्थान्तरं वा व्यापकं तदा तदवच्छिन्न एव विधिनिषेधाविति स एव विरोधः । अर्थान्तरमव्या-

---

न्यायलीलावतीकण्ठाभरणम्

विप्रतिपन्नः पृच्छति—किमिति । एकस्येति । स्वाभावसामानाधिकरण्यमित्यर्थः । विप्रतिपत्तिबीजमुद्घाटयति—तथा हीति । प्रागभावप्रध्वंसाविति । प्रतियोगिसमानदेशकालाविति शेषः । एवमन्यत्रापि । तेनेति । अत्यन्ताभावस्य प्रतियोगिवैयधिकरण्यनियमादित्यर्थः । व्याप्यवृत्तीनामपीति । एतादृशस्य व्याप्यवृत्तितारूपादीनामपीत्यर्थः । अवच्छेदेति । अवयविनि तदभावादन्यत्र तु दिगादय एवेत्यर्थः । स एवेति । य एव अ-

न्यायलीलावतीप्रकाशः

यस्य तु तदत्यन्ताभावेन स न गृह्यते कर्णसंयोगस्य समवायवृत्त्या शब्दाधारतायां परिचायकत्वात् । अव्याप्यवृत्तित्वादिति । शब्दासमवायिकारणसंयोगस्याव्याप्यवृत्तित्वात् तदनुविधानाच्छब्दस्याप्यव्याप्यवृत्तित्वादित्यर्थः ।

प्रतिपक्षेति । प्रतियोग्यसमानकालत्वादित्यर्थः । तेनेति । तेनात्यन्ताभावेन सह प्रतियोगिनः समानदेशत्वव्याघातादित्यर्थः । अवच्छेदेति । नित्ये तत्तत्प्रदेशा अवच्छेदका अवयविनि त्ववयवा

न्यायलीलावतीप्रकाशविवृतिः

अयं दोष इति । विरोध इत्यर्थः। तदत्यन्ताभावेनेति । यस्य तु समवायवृत्त्या संयोग(गो ?)नावच्छिद्यते स न गृह्यत इत्यर्थः । यथाश्रुते संयो

---

(१) इति चेव, अं०व० ।

पकं चेदयमपरोऽवच्छेदभावाभावस्वभावो विरोधः ।

अत्रोच्यते । वस्तुस्वभाववैचित्र्यात्संयोगस्य स्वाभावसमानदेशकालत्वात् । रक्तारक्तस्वभावः पटो यथा विज्ञानात्मकं(१)

---

न्यायलीलावतीकण्ठाभरणम्

वच्छिन्ने विरोध उक्तः स एवावच्छेदकेऽपीत्यर्थः । अयमिति । अवच्छेदकभावाभावसामानाधिकरण्यलक्षण इत्यर्थः । अवच्छेदके संयोगसत्त्वे गगने शब्दानुत्पत्तिप्रसङ्ग इत्यपि द्रष्टव्यम् ।

वस्त्विति । अन्येषां स्वाभावासामानाधिकरण्येऽपि प्रतीतिबलात् संयोगे स्वाभावसामानाधिकरण्यमभ्युपेयम् । अन्यथा वस्तूनामेकस्वभावत्वे जगद्वैचित्र्यमेव भज्येतेत्यर्थः। स्वाभावसामानाधिकरण्यं स्फुटयति—रक्तेति । अन्यथा महारजनसंयोगतदभावाधीनरक्तारक्तप्रतीत्यनुदय एव पटे स्यादित्यर्थः। क्षणिकविज्ञानवाद्यपि संयोगे विमत एवातन्मतेनाप्यविरोध इति द्योतनाय तदनुरूपमुदाहरति–यथेति । स्वमते रक्तारक्तविषयं परमते रक्तारक्तस्वरूपं भेदे विषयविषयीभावो नास्त्येवातः सर्वं ज्ञानं स्व(प्र?)काशमिति योगाचारमतमतः स एव विकल्प-

न्यायलीलावतीप्रकाशः

एवेति भावः । अयमिति । आकाशभिन्नेऽवच्छेदके संयोगसत्त्वेऽपि शब्दस्य तत्रानुत्पत्तिरित्यपि द्रष्टव्यम् ।

वस्तुस्वभावेति । भावाभावानान्तरयोर्मिथो वैयधिकरण्यनियमेऽपि संयोगतदत्यन्ताभावयोः प्रतीतिबलात्सामानाधिकरण्यमभ्युपेयम् । न ह्येकं वस्तु यत्स्वभावकं तत्स्वभावकं वस्त्वन्तरमपि, जगद्वैचित्र्यभङ्गापत्तेरित्यर्थः । यद्यपि 'क्षणभङ्गनिषेधा'दित्यनेन स्थिरवाह्यवाद्येव पूर्वपक्षी, तथापि यदि कदाचिद्विज्ञानवादमपि परोऽभ्युपगच्छेत्तदा तदनुरूपमुदाहरति—यथा विज्ञानमिति । स्वमते रक्तारक्तविषयं परमते तु रूपशब्दस्वरूपार्थः । ननु वाह्यपक्षे भेदग्रहसम्भवादयं दोषः सम्भवति विज्ञानवादिनये तु तदसम्भवात् नायं दोष

न्यायलीलावतीप्रकाशविवृतिः

गात्यन्ताभावस्याधिकदेशत्वेनावच्छेदकत्वादिति भावः । अर्द्धरक्ते

---

(१) विज्ञानमेकं रक्तारक्तपटरूपम् ।

रक्तारक्तरूपम् । विज्ञानस्य भेदानुभवो ज्ञानान्तरेण वा तेनैव वा । नाद्यः, भेदे ग्राह्यलक्षणायोगात्, अभेदे तु रक्तारक्तात्मना (१)स्वसंवेदनेन भेदानुभवस्यापनयनादभिन्नं ज्ञानमिति चेन्न, अभेदेऽपि रक्तस्वभावमरक्तस्वभावं वाऽनुभूयते न तु रक्तारक्तस्वभावमिति प्रकाशमानस्य भेदस्यापह्नवायोगात् । भेदाभेदाभ्यामशक्यविवेचनमाकारचक्रमिति चेन्न, बाह्यमप्येवमेव । बाह्य-

---

न्यायलीलावतीकण्ठाभरणम्

यति विज्ञानवादी—विज्ञानस्येति। रक्तारक्तस्वरूपमेकमेव ज्ञानं तच्च न रक्तत्वारक्तत्वलक्षणविरुद्धधर्म्मसंसर्गज्ञानात्मना तयोरनाकलनादित्यर्थः । एकं चेत् कुतो विरुद्धोभयस्वाभाव्यमात्मनो गृह्णीयात् कथं वा तादृशमुत्पद्येतेत्यत आह सिद्धान्ती—नेति । रक्तारक्तस्वभावस्य विरुद्धोभयस्वाभाव्यं स्वयमप्यनुभूयमानं दुरपह्नवमतः किञ्चित् ज्ञानमेकस्वभावं किञ्चिच्चानेकस्वभावमगत्याऽभ्युपेयमिति शङ्कते—प्रकाशेति । विज्ञानाद्विषयचक्रं भिन्नमभिन्नं वेत्यशक्यविवेचनमिति शङ्कार्थ इति केचित् । एवं किञ्चिद्वस्तु स्वाभावव्यधिकरणं किञ्चिच्च समानाधिकरणमिति न विरोध इति परिहरति—नेति । रक्तात् पटादरक्तः पटो भिन्न एव परन्तु य एव रक्तः स एवारक्त इत्याविद्यकः प्रत्यय इति

न्यायलीलावतीप्रकाशः

इत्याह—विज्ञानस्येति । रक्तज्ञानस्यारक्तज्ञानस्य च मिथो भेदानुभव इत्यर्थः । अभेदे त्विति । रक्तत्वारक्तत्वयोर्ज्ञानात्मकत्वस्य चाभिन्नत्वात् क विरोध इत्यर्थः । रक्तत्वमरक्तत्वं च विरोधि चेत् कथं तदात्मकं विज्ञानमेकम् । अथैकत्र प्रतीतत्वान्न तयोर्विरोधस्तदा बाह्येऽपि समानमेतदित्याह—अभेदेऽपीति । ननु प्रकाशमानभेदस्यापह्नोतुमशक्यत्वाद्भेदे च ग्राह्यलक्षणायोगादभेदे चोक्तविरोधात् विषयचक्रं विज्ञानाद् भेदाभेदाभ्यामशक्याविवेचनमेवेत्याह—प्रकाश्य(शा?)मानस्येति । यद्यन्यत्राभेदेन शक्यविवेचनमप्याकारचक्रमनुभवबलादशक्यविवेचनमभ्युपेयं तदा बाह्यमपि संयोगतदत्यन्ताभाववदभ्युपेयतामनुभवबलादेवेत्याह—बाह्यमपीति । अभ्युपेत्याह—बाह्यस्येति । तथा

---

(१) ०क्तात्मनि ।

स्य भेदेऽप्येकत्वप्रतीतिरविद्यावशादिति चेत्तुल्यं ज्ञानेऽपि। ज्ञानानां भिन्नत्वेऽन्येनाऽन्यस्य वेदनात्(१) कथं रक्तारक्तप्रतीतिरिति चेन्न, अभेदेऽपि कथं रक्तारक्तप्रतीतिरिति तुल्यम्। अभिन्न(२)-भेदावसायोऽविद्यावशादिति चेन्न, अनात्मनो(३) भेदस्याविद्यावशादप्यनुल्लेखात्। उल्लेखे[ऽपि] वाऽनात्मनो भेदस्य(४) पारमार्थिकतापत्तेः। अभिन्नमेवानुभूतमरक्तव्यावृत्त्या रक्तं रक्तव्यावृत्त्या चारक्तमित्युच्यत इति चेन्न, रक्तव्यावृत्तस्यारक्तव्यावृ[त्त?]तानुपपत्तेः। अनुभवबलादेवमिति चेत्तुल्यं संयुक्तस्यासंयोगित्वेऽप्य-

---

न्यायलीलावतीकण्ठाभरणम्

शङ्कते—बाह्यस्येति। तुल्यमिति। रक्तारक्तप्रकारकमपि ज्ञानं भिन्नमेवाभिन्नत्वेन ज्ञानमाविद्यकमित्यर्थः। ननु भेदे ग्राह्यग्राहकभाव एव नास्ति तथा च भिन्नमेव ज्ञानं कथमभिन्नं प्रथतामिति शङ्कते—ज्ञानानामिति। तर्हि ग्राह्यग्राहकाभेदेऽपि रक्तारक्तस्वाभाव्यमेकस्यैव कथं भवेदित्याह—नेति। ननु रक्तारक्तत्वे विरुद्धे एव न भवतः किन्तु तयोरैक्यमेव, विरोधप्रतिभासस्त्वाविद्यक इति शङ्कते—अभिन्न इति। तर्हि ज्ञानस्यानात्मभेदः कथमविद्यायामपि भासतां त्वन्मते भेदे ग्राह्यग्राहकभावाभावादित्याह—नेति। उल्लेखे वेति। तन्मते यदुल्लिख्यते तत्परमार्थसा(दे?)वेत्यर्थः। यदेव रक्तं तदेवारक्तं परन्तु व्यावृत्तिभेदाधीनं भेदप्रतिभासनमित्याह—अभिन्नमिति। वस्तवभेदव्यावृत्त्योरपि न भेद इत्याह—नेति। ननु अनुभवो न पर्यनुयोज्यः, तथा च विरोधम(व?)धूय यदेव रक्तं तदेवारक्तमगत्या अभ्युपेयमित्याह—अनुभवेति। तर्हि य एव संयुक्तः स एवासंयुक्त इति न विरोध इत्याह—तुल्यमिति। संयोगाभावस्यावच्छेदकद्वयाभ्युपगमे

न्यायलीलावतीप्रकाशः

च नैकधर्मिणि संयोगतदत्यन्ताभावावित्यर्थः। अभेदेऽपीति। मिथो विरुद्धरक्तत्वाभेदोऽप्येकत्र विरुद्ध इत्यर्थः। अनात्मन इति। अपारमार्थिकभेदेन पारमार्थिकविद्याया अभेदे तस्या अप्यपारमार्थिकतापत्तेः। यद् यत्र प्रकाशते तत्तस्यात्मेति योगाचारस्थितेरित्यर्थः। उल्लेखेति तद्दर्शने उल्लेखस्यैव पारमार्थिकत्वादित्यर्थः। तुल्यमिति। संयोगतदभावयोर-

---

(१) ०स्यावेदनात् क०। (२) ०न्ने भेदा०। (३) आत्मनो भे०। (४) भेदस्यापार०।

भेदबुद्धेरन्यथासिद्धत्वादविरोधात्(१)।

ननु च संयोगस्यैकत्र सदसत्त्वे रक्तारक्तस्वभावत्वेनैव पटोऽवसीयेत(२)न तु कदाचिद्रक्तत्वेनैवेति चेत्, न, रक्तावयवावच्छेदोपाधितिरस्कृतरक्तारक्तस्वभावत्वात्। तन्न, संयोगस्याव्याप्यवृत्तित्वादुपाधीनामपि रक्तारक्तस्वभावत्वे तिरस्कारकत्वव्याहतेः(३)। किञ्चाभावस्य स्वप्रतियोगिसमानदेशकालत्वे स्वभावमात्र(४)विरोधादन्योन्याभावत्वप्रसङ्गः। मैवम्। संयोगस्य

न्यायलीलावतीकण्ठाभरणम्

संयोगस्यापि तथात्वं स्यादित्यप्रत्यक्षता संयोगस्य स्यादिति भावः।

सर्वरक्ताभिप्रायेणाह—नन्विति। भूयोऽवयवावच्छेदेन महारजनसंयोगात् स्वल्पावयवावच्छेदेन च तदभावात् सर्वरक्तप्रतीतिरित्याह—नेति। संयोगवृत्तौ य उपाधिर्वाच्यस्तत्रापि संयोगो न व्याप्य वर्तत इति कथं तेन तदभावस्तिरस्क्रियतामित्याह—तन्नेति। दूषणान्तरमाह—किञ्चेति। अत्यन्ताभावस्यान्योन्याभावलक्षणाक्रान्तत्वादन्योन्याभावत्वमेव स्यादित्यर्थः। अत्रानुभवविरोधः स्यादित्याह—मैव-

न्यायलीलावतीप्रकाशः

नुभवविषयतयैकस्य शेषयितुमशक्यत्वात् तृतीयकोटेरभावात्। अवच्छेदेनाभावस्यान्यथासिद्धौ संयोगस्यापि तथात्वादप्रत्यक्षत्वापत्तेः समानदेशमित्यर्थः।

सर्वरक्ताभिप्रायेणाह—ननु चेति। रक्तावयवेति। संयोगस्याव्याप्य स्थितौ रक्तत्वारक्तत्वनियमात्। तद्प्रतीतिस्तु प्रचुरभागावच्छेदेन रजतद्रव्यसंयोगावच्छेदकोपाधितिरस्कृतत्वादित्यर्थः। संयोगस्येति। अन्यथाऽवच्छेद्यावच्छेदकयोर्विरोधादिति भावः। स्वभावविरोधादिति। संसर्गाभाव-

न्यायलीलावतीप्रकाशविवृतिः

भवत्येव रक्तारक्तप्रतीतिरत आह—सर्वरक्तेति। अन्यथाऽवच्छेद्येति। न हि पटनिष्ठसंयोगाभावेऽवच्छेद्ये तदवच्छेदकोऽप्यवयवो महारजनसं-

(१) संसर्गस्यासंयोगिन्येऽपीत्यभेदबु०। संयोगस्यासंयो०।

(२) ०वस्थीयते। (३) स्वभावतेति रक्तारक्तत्वव्याहतेः।

(४) स्वभावविरोधित्वाद०। स्वभावविरोधादिति प्रकाशधृतः पाठः।

स्वाभावेन सह सादेश्यविरोधसाधकमानाभावात् । भावान्तराणां स्वाभाववैदेश्यनियमात् संयोगोऽपि तथेत्यवधार्यत इति चेत्, सोऽयं भावजातीयस्य स्वाभाववैदेश्यनियमो व्यभिचारानुपलम्भमात्रेण वा सिद्ध्यति विपर्यये बाधकप्रमाणप्रवृत्तेर्वा । नाद्यः । तस्य नियमानियमसाधारणत्वात्(१) । नापरः(२) । तदभावात् । भावाभावयोः समानदेशकालत्वे भावाभावव्यवहारगोचरत्वं न स्यादिति चेत्, न, न हि वैदेश्यभिन्नकालतानिमित्तो

न्यायलीलावतीकण्ठाभरणम्

मिति । अनुभूयमानं संयोगस्य स्वाभावसादेश्यं कुतः प्रमाणात् ग्राह्यमित्यर्थः । भावान्तरवैधर्म्यादनुभवोऽप्ययं कूटसाक्षी स्यादित्याह—भावान्तराणामिति । तथा च यो यो भावः स स्वाभावसमानाधिकरण इति व्याप्तिबलात् संयोगोऽपि तथा स्यादिति भावः । एतादृशव्याप्तौ न प्रमाणमित्याह—सोऽयमिति । तस्येति । व्यभिचारानुपलम्भस्येत्यर्थः । पार्थिवत्वलौहलेख्यत्वयोरप्यापाततो व्यभिचारानुपलम्भादिति भावः । तदभावादिति । भावत्वाक्रान्तस्य स्वाभाववैदेश्यसाधकप्रमाणाभावादित्यर्थः । ननु प्रमाणं माऽस्तु तर्क एव विपर्य्यये बाधकोऽस्तीत्याह—भावाभावयोरिति । यदि संयोगः स्वाभावसमानाधिकरणः स्यात् भावो न स्यात्, संयोगाभावो यदि प्रतियोगिसमानदेशः स्यात् अभावो न स्यादित्यर्थः । विधिमुखप्रत्ययवेद्यत्वनिषेधमुखप्रत्ययवेद्यत्वाभ्यां संयोगतदभावयोर्भावत्वाभावत्वव्यवस्थितौ तर्कमूलभूतव्याप्तौ विपक्षबाधकाभाव इत्याह—न हीति । अनुभवबलात् भावा-

न्यायलीलावतीप्रकाशः

स्वभावविरोधादित्यर्थः । एतद्बाधकद्वयं किं संयोगतदभावयोर्मानान्तरसिद्धं विरोधमुपजीव्य यद्वैतत् स्वातन्त्र्येण तयोर्विरोधसाधकम् । आद्ये संयोगस्य स्वाभावेति । यद्यपि निरुपाधिसहचारग्रह एव व्याप्तिग्राहक इत्युक्तम् । तदनुकूलतर्काभावे नोपाध्युन्नयनात् तदभावानिश्चय इत्याशयेनाह—विपर्यय इति । न हीति । अन्योन्याभावतत्प्र-

न्यायलीलावतीप्रकाशविवृतिः

योग्येवेति । तथा च कथं तिरस्कारकत्वमिति भावः । इत्युक्तमिति ।

(१) साधारण्यात् । (२) नेतरः ।

भावाभावव्यवहारः, किन्तु भावाभावाकारव्यवहारयोग्यस्वरूप-निमित्तो घटतदन्योन्याभावयोरिवेत्यतोऽविशेषात् । तस्माद्भावान्तराणां स्वाभावसमानदेशकालत्वविरोधेऽपि संयोगादीनां स्वभाववैचित्र्यात्समान[देश]कालस्वाभावाविरुद्ध[देश]त्वमव्याप्यवृत्तित्वमाख्यायते । न च वस्त्वन्तरासाधारणमिदं रूपं संयोगादीनामसम्भावनीयम् । सर्ववस्तूनामसाधारणरूपोच्छेदप्रसङ्गात् । न चैवं रक्तेऽप्यवयवे रक्तारक्तप्रतीतिः । तदहश्यभागवृत्तित्वेन संयोगाभावस्याप्रतीतेः । न चैवं स्वप्रतियोगिना सह समानदेशकालत्वे संयोगाभावस्यान्योन्याभावत्वापत्तेः(१) ।

---

न्यायलीलावतीकण्ठाभरणम्

न्तरवैधर्म्यं संयोगतदभावयोः स्वीकार्य्यमित्युपसंहरति—तस्मादिति । भावान्तरवैधर्म्यादनुभव एव तिरस्क्रियतामित्यत आह—न चेति । ननूक्तमवच्छेदकेऽपि संयोगस्य व्याप्यवृत्तित्वात् न तिरस्कारकत्वमित्यत आह—न चैवमिति। अदृश्यभागावच्छेदेन पटे महारजनसंयोगाभावसत्त्वेन सर्वरक्ताप्रतीतिरित्यर्थः । अन्योन्याभावत्वमाशङ्क्य निराकरोति—न चैवमिति। प्रतीतिबलादेव तयोर्भेदसिद्धिरित्यर्थः। पक्षा-

न्यायलीलावतीप्रकाशः

तियोगिनोस्तदभावाद्व्यासेश्चेत्यर्थः । तस्मादिति । नन्वेकत्रैकस्यैकदा भावाभावयोर्विरोधबलात्तत्प्रतीतिर्भ्रम एव कुतो न स्यात् । मैवम् ! अवच्छेदभेदेन विरोधस्यैवाभावात् । येन प्रकारेणैकत्र धर्मिणि उपसंहारात्तयोर्विरोधस्ततोऽन्येनापि प्रकारेण यदि विरोधः स्यात्, तदोभयच्छेदप्रसङ्गः । रक्तेऽप्यवयव इति । तत्रापि रजतद्रव्यसंयोगस्याव्याप्यवृत्तित्वादित्यर्थः । तददृश्येति । अवयवस्यादृश्यभागे संयोगाभाववृत्तेस्तदग्रहात्तदग्रह इत्यर्थः । द्वितीयं पक्षमाशङ्क्य निराकरोति—न चैव-

न्यायलीलावतीप्रकाशविवृतिः

तथा च न द्वितीयकल्पावकाश इति शेषः । द्वितीयमिति । यद्वैतदेवे

---

(१) पत्तिः ।

न चेदमिदं(१) नेदमिहेति विलक्षणबोधवेद्यत्वात् । विद्यमानस्यैव

---

न्यायलीलावतीकण्ठाभरणम्

न्तरमाह—विद्यमानस्यैवेति । संयोगस्य एकत्र एकदैव पुरुषेणोपलम्भा-

न्यायलीलावतीप्रकाशः

मिति । नेदमिति । यद्य ( प्या ? ) पादा ( द ? ) ने बाधितत्वमनुकूलमेव तथापि प्रतियोगिसमानदेशकालत्वेनात्यन्ताभावस्यान्योन्याभावत्वापादा ( द ? ) ने व्याप्यवृत्तित्वमुपाधिरित्यर्थः । वस्तुतः प्रतियोगितावच्छेदकधर्ममारोप्य(२) यत्र निषेधधीः, सोऽन्योन्याभावो यत्र तु प्रतियोगिनमारोप्य तदवगमः सोऽत्यन्ताभाव इत्यादि न्यायद्वितीयाध्यायनिबन्धप्रकाशे व्युत्पादितमस्माभिस्तत्रैव तदनुसन्धेयम् ।

न्यायलीलावतीप्रकाशविवृतिः

त्यादिकमित्यर्थः । यद्यप्यापादन इति । यद्यप्यापाद्यबाधो व्यतिरेके पक्षधर्मतासरूपादकतया तत्र तर्केऽणु ( नु ? ) गुणो यत्र तन्मूलभूतव्याप्त्यविरोधी यथा निर्धूमत्वबाधः, न तु तद्विरोध्यपि केवलपक्षधर्मताग्राः पण्डत्वात् । प्रकृते चान्योन्याभावत्वाभावग्राहकेण प्रत्यक्षेण स्वप्रतियोगिसमानदेशकालत्वस्यापि विषयीकरणाद्बाधोऽयं व्यभिचारपर्यवसिततया व्याप्तिविरोध्येवेति नानुगुणस्तथापि व्यभिचारव्यापकोपाधिविरहे व्यभिचार एव न स्यादिति बाधाननुगुणताप्रयोजकव्यभिचारनिर्वाहाय उपाधिरेवोक्तः । वस्तुतः सत्तर्के सर्वत्र बाधोऽनुगुण एव मूलभूतव्याप्तिविरहहेतुस्तर्काभास एवेति वस्तुगतिस्तथा चान्यसत्तर्कत्वे बाधोऽनुगुणो भवेदिति तर्काभासताप्रतिपादनायोपाधिरुपन्यस्त इति रहस्यम् ।

ननु स्वप्रतियोगिसमानदेशकालत्वमेवान्योन्याभावलक्षणं तत्रास्त्येवेति व्याप्यवृत्तित्वोपाधेरप्रयोजकत्वमित्यत आह—वस्तुत इति । तथा च नोक्तं तल्लक्षणमपि त्विदानीयुज्य ( मुच्य ? ) मानमिति भावः । प्रतियोगितावच्छेदकमिति । नन्वन्योन्याभावस्थलेऽपि प्रतियोग्येवारोप्यः, अन्यथा आरोप्य निषिध्यत इति सिद्धान्तव्याकोपात् । इयांस्तु विशेषो यदेकत्र तादात्म्येन, प्रतियोग्यारोप्योऽपरत्र संयोगादिना संसर्गेणेति चेन्न, तादात्म्येन प्रतियोगिनमारोप्य संयोगा-

---

(१) नेत्ययमिदं । (२) प्रतियोगितावच्छेदकमारोप्येति विवृतिसम्मतः पाठः ।

वा संयोगस्योपलम्भानुपलम्भावव्याप्यवृत्तित्वम्। ननु किं देशभेदेनोपलम्भानुपलम्भौ कालभेदेन पुरुषभेदेन वा ।नाद्यः। अभि-

---

न्यायलीलावतीकण्ठाभरणम्

नुपलम्भावेवाव्याप्यवृत्तित्वमित्यर्थः। एतदेव विकल्प्य निष्टङ्कयति—नन्विति। अभिन्नदेशत्वात् यत्रैव देशे कपिसंयोग उपलभ्यते तत्रैव नोप-

न्यायलीलावतीप्रकाशः

नन्ववच्छेदकस्यावयविनोऽर्थान्तरत्वे तत्र संयोगस्य वृत्त्यवृत्तिभ्यामवयविनि वृत्त्यवृत्तिविरोधे न कश्चिदुपयोगोऽनर्थान्तरत्वे च तदवयव एव तयोर्विरोधः। अत्राहुः। संयोगस्यावयविनि समवायेऽप्यवयवावच्छेदप्रतीतिबलात् कस्मिंश्चिदवयवे तस्याधारताऽस्ति न तु सर्वत्रेत्यव्याप्यवृत्तित्वार्थः। यद्वाऽवयवसंयोग एवोपलभ्यमानेऽवयविनि संयोग उपलभ्यते। यत्र त्ववयवे संयोगाभावस्तस्मिन्नुपलभ्यमानेऽप्यवयविनि स नोपलभ्यत इत्यव्याप्यवृत्तित्वार्थः। अथ वा पूर्वापरितोषेणाह—विद्यमानस्यैवेति । अभिन्नदेशत्वादिति। संयोगतदत्य-

न्यायलीलावतीप्रकाशविवृतिः

दिति च क्रमेण तदुभयनिर्वचनात्। न चैवं सम्प्रदायमताभेदः। तत्र हि संसर्गादेरारोप्यत्वमित्युक्तम्। तच्चायुक्तम्। विशेषणस्यैवारोप्यत्वादिहेतुसंसर्गादेरारोप्यसम्बन्धत्वमित्यभिधानात। न च प्रतीतिविशेषजन्यत्वमवच्छेदरूपापरिचये दुर्ग्रहं तत्परिचयश्च प्रतीतिविषयविशेषाप्रतीतावशक्य इति वाच्यम्, अभावाभावत्वतदत्यन्ताभावत्वयोरेव विषयतानवच्छेदीकभूयावच्छेदकत्वात्। न च तदेव लक्षणमस्तु एतस्याप्यदुष्टत्वात्। वस्तुतः स्वरूपसम्बन्धविशेष एवानुभवसाक्षिकस्तयोर्भेदक इत्यभावविशेष एव विषयीभूयावच्छेदकः। अत एव धर्मात्यन्ताभावधर्म्यन्योन्याभावयोर्द्वयोरभेद एव। घटत्वस्य पटा (घटत्वा ? ) त्यन्ताभावात्यन्ताभावात्मकतया घटान्योन्याभावस्यापि घटत्वात्यन्ताभावात्मकत्वात् परस्परविरहरूपताया अत्यन्ताभावस्थले दृष्टत्वादिति मतमपास्तम्। प्रतीतिवैचित्र्येण भेदादित्यन्यत्र विस्तरः।

अवयविन इति पञ्चम्यन्तम्। विरोधोपनीहारे ('विरोधे' विरोधपरीहारे?) 'समवायेऽपि' व्याप्त्या समवायेऽपीत्यर्थः। आधारतास्तीति। अवच्छेदकतासम्बन्धेनेति शेषः। यत्र त्विति। तस्मिंस्तूपलभ्य-

न्नदेशत्वात् । नापरौ । रूपादीनामव्याप्यवृत्तित्वापत्तेः । देशकालपुरुषाभेदेन पुनरेकस्य वस्तुन उपलम्भानुपलम्भौ विरोधादेवानुपपन्नौ । मैवम् । एकदा तावदुपलम्भानुपलम्भौ भिन्नेष्वेवावयवेषु न त्ववयविनि । अत एव विरोधात्कालभेदेन

न्यायलीलावतीकण्ठाभरणम्

लभ्येतापीत्यर्थः। कालभेदपुरुषभेदाभ्यामुपलम्भानुपलम्भौ रूपादिसाधारणाविति तेषामव्याप्यवृत्तित्वं स्यादित्याह—रूपादीनामिति । एकदेति । भिन्नभिन्नावच्छेदेन उपलम्भानुपलम्भावेकदाऽपीत्यर्थः । भिन्नेष्वेवावयवेष्विति । भिन्नावयवावच्छेदेनैवेत्यर्थः । न त्ववयविनीति । न त्वनवच्छिन्न एवावयविनीत्यर्थः । अत एवेति । न हि समानविषययोरुपलम्भानुपलम्भयोरेकत्रावयविनि एकदा सम्भव इत्यर्थः । नन्विन्द्रियसंयुक्ते रक्ते पटे कालान्तरेऽपि संयोगानुपलम्भः कथं स्यादित्यत आह—काल-

न्यायलीलावतीप्रकाशः

न्ताभावयोर्भिन्नदेशत्वे तु व्याप्यवृत्तिरूपादितुल्यत्वम् । अथैकत्र देशेऽवच्छेददेशभेदेन भिन्नदेशत्वं तदा प्रागुक्तपक्षाभ्युपगम इति भावः । एकदेति । यद्यप्येतद्व्याप्यवृत्तिरूपादिसाधारणं देशभेदेन तत्राप्युपलम्भानुपलम्भात् तथापि यज्जातीयं किञ्चिदवयवनिष्ठतयोपलभ्यमानं सत्किञ्चिद्योग्यावयवनिष्ठतयाऽनुपलभ्यमानमवयविवृत्ति तज्जातीयमव्याप्यवृत्तीति सम्प्रदायः(१)। 'अत एव' पूर्वोक्तादेवेत्यर्थः । काल-

न्यायलीलावतीप्रकाशविवृतिः

मानोऽपि नोपपद्यत इत्यर्थः । वस्तुतोऽवच्छेदकस्यार्थान्तरत्वेऽपि तदवच्छेदेन भावाभावयोरभावबलाद्विरोध एव नेति पूर्वोक्तमव्याप्यवृत्तित्वमुपपद्यत इत्येव रहस्यम् । (अवयविसंयोगग्रहस्य ?) अवयवसंयोगग्रहनियमे त्रसरेणुसंयोगो न प्रत्यक्षः स्यादित्यरुचेराह—अथेति । यद्यप्येतदिति । न हि या रूपव्यक्तिरेकतन्तौ सैवापरतन्तावपीति भावः । अतीन्द्रियसंयोगसाधारण्यार्थमाह—यज्जातीयमिति । चित्राचित्रतन्त्वारब्धे पटे विद्यमानं चित्रं रूपम् । न च तज्जातीयमव्याप्यवृत्तीति व्यवह्रियत इत्यपरितोषादाह सम्प्रदायविद इति । तज्जातीयमिति । न चेदं रूपादावतिप्रसक्तं किञ्चिदवयववृ-

(१) सम्प्रदायविद इति विवृतिसम्मतः पाठः ।

तु संयोगानुपलम्भः । तन्निरूपकस्य महारजनादेः संयोगिनोऽनिरूपणात् । कुतः पुनः पटनिरूपणेऽपि महारजनाद्यनिरूपणम् । पटस्य भूरिदेशव्यापकत्वेनानावृतत्वेनेन्द्रियसन्निकर्षेऽपि महारजनादेरिन्द्रियासन्निकर्षात् । कुतस्तर्हि पटोऽरक्त इति प्रतीतिरिति चेत् न कुतश्चित् । न हि यत्र संयोगः प्रतीयते, तत्रैव तदैव तदभावः प्रत्येतुं शक्यते(१) । पटोऽरक्त इति व्यपदेशस्तर्हि कथम् । अवयववर्तिना रागाभावेन परम्परासम्ब-

न्यायलीलावतीकण्ठाभरणम्

भेदेन त्विति । रक्तभागस्यारक्तभागेन तिरोधानादनुपलम्भ इति समुदायार्थः । अवयविन्युपलभ्यमानेऽपि यज्जातीयमवयविग्राहकेन्द्रियग्राह्यं सन्नोपलभ्यते तज्जातीयमव्याप्यवृत्तीति भावः ।

ननु महारजनसंयोगाभावश्चेन्न पटनिष्ठस्तदा पटोऽरक्त इति कथमर्धरक्ते पटे स्यादित्याह—कुत इति । पटे महारजनसंयोगाभावाभावेऽपि तदवयववृत्तिना संयोगाभावेन परम्परासम्बन्धेन प्रती-

न्यायलीलावतीप्रकाशः

भेदेन त्विति । आवृत्तरक्तार्द्धभागेऽवयविनि महारजनादेरावृत्तित्वेन तत्संयोगस्यानुपलम्भ ,इत्यर्थः । यज्जातीयावयविन्युपलभ्यमानकालान्तरे आश्रयान्तरस्येन्द्रियासन्निकर्षान्नोपलभ्यते तज्जातीयमव्याप्यवृत्ति, रूपादि तु नैवमिति भावः । इन्द्रियासन्निकर्षादित्यत्रावृत्तत्वेनेति शेषः । कुतस्तर्हीति । अर्धरक्ताभिप्राये द्रष्टव्यम् । न हीति । किन्तु तदवयवेष्ववति शेषः । पटोऽरक्त इति । पटे महारजनसंयोगाभावादित्यर्थः । अवयववर्त्तिनेति । एतच्चाभ्युपगमवादः । वस्तुतस्तु रक्तः पट एव नास्ति किन्त्वत्र प्रदेशे न रक्त इति । तथा चावयवेष्ववय-

न्यायलीलावतीप्रकाशविवृतिः

त्तित्वे सति किञ्चिदवयवावृत्तित्वस्य विशेषणत्वेऽपि चित्राचित्रावयवारब्धपटनिष्ठचित्ररूपेऽपि प्रसक्तमिति वाच्यम् , आश्रयान्तरस्येत्यत्र एकस्वाश्रयभिन्नस्वाश्रयस्येत्यर्थात् । न च चित्ररूपं तथाऽप्यासज्यवृत्तित्वात् ।

(१) प्रत्येतुं न शक्यते ।

न्धेन तद्व्यपदेशात् । न चावयवसंयोगेनैव संयुक्तप्रत्ययोपपत्तौ संयोगोऽप्यवयविनि नास्तीति वाच्यम्, सर्वत्रावयविनि संयोगोच्छेदे संयुक्तप्रत्ययस्यैवोच्छेदप्रसङ्गात्। कारणसंयोगस्य कार्य-

---

न्यायलीलावतीकण्ठाभरणम्

तिरियमुपपद्यत इत्यर्थः । ननु संयोगोऽवयविनि न स्यादित्याह—न चेति । संयोगस्यावयवमात्रविश्रान्ततावकल्पने तस्य परमाणुवृत्तिता-पत्तावतीन्द्रियत्वं स्यात्तथा च तदभावो न गृह्येतेति प्रतियोग्यनुप-लम्भादित्याह—सर्वत्रेति । किञ्च परमाणुपर्य्यन्तं संयोगस्य स्वी-कारेऽपि पुनरवयविपर्य्यन्तं संयोगः स्यादेवेत्याह—कारणेति । ननु संयोगाभावेऽपि रीतिरियं तुल्यैव अवयवसंयोगिनाऽप्यवयविनोऽसं-योगादिति चेन्न, संयोगासिद्धौ तदभावस्याऽप्यसिद्धेः । सिद्धौ वो-क्तप्रकाराभ्यामेव प्रतीत्युपपत्तेरिति भावः । अवयववृत्तिना स्वा-भावेन अवयविनि सादेश्यव्यपदेशविषयत्वं संयोगस्याव्याप्यवृत्ति-

न्यायलीलावतीप्रकाशः

वसंयोगाभावः प्रतीयते न त्ववयविनि । सर्वत्रेति । सर्वत्रावयविन्य-वयवसंयोगेनान्यथासिद्धौ परमाणुवृत्तिसंयोगस्यातीन्द्रियत्वात् स-र्वत्र संयोगसाक्षात्काराभावप्रसङ्ग इत्यर्थः । न च त्रसरेणोरवयवा-वच्छेदाग्रहात्तत्र न तदवच्छेदेनान्यथासिद्धिः, तत्रापि दिगुपाधेरेवा-वच्छेदकत्वसम्भवात् । कारणसंयोगस्येति । तत्रापि परमाणुमात्रेऽपि संयो-गाभ्युपगमेऽवश्यमवयविनि संयोग इति भावः । यद्यपि कारणसंयो-गिनाऽवश्यं कार्यासंयुक्तेन भवितव्यम्, इत्यपि नियम एव । तथापि संयोगसाधने यदि कारणसंयोगिना न कार्यं संयुज्येत तदा कार्य-कारणयोर्मिथो युतसिद्धिप्रसङ्गोऽनूकूलस्तर्कः । न च संयोगाभाव-

न्यायलीलावतीप्रकाशविवृतिः

केचित्तु अवच्छेदभेदेन भावाभावयोरविरोध एवेति पूर्वोक्त एव सर्वतात्पर्यमिति वदन्ति । तत्रापि दिगिति । उपहिता-या दिश इत्यर्थः । उपाधेः सूर्यसंयोगात्मकतया तत्र संयो-गाभावात् । यद्यपि दिशोऽप्यतीन्द्रियत्वमिति तद्दोषतादव-स्थ्यं तथाप्यालोकस्थस्यैव त्रसरेणोर्महत्त्वस्यैवावच्छेदकत्वमिति

संयोगोपार्जनानियमाच्च । तस्मादवयववर्तिना संयोगाभावेनाव-यविनि संयोगस्य सादेश्यव्यपदेशविषयत्वमेवाव्याप्यवृत्तित्वम् ।

नन्वेवं देशान्तरोच्चरितस्यापि शब्दस्येहस्थेन ग्रहणं स्यात् । न । एतच्छ्रोत्रेण तस्याप्राप्तेः । कर्णशष्कुलीतत्संयोगयोरेकत-रस्य श्रोत्रत्वे अत्रोच्चारितस्यापि शब्दस्याग्रहणम् । ताभ्याम-

---

न्यायलीलावतीकण्ठाभरणम्

त्वमिति पक्षान्तरमुपसंहारव्याजेनाह—तस्मादिति । शब्दबुद्ध्यादीनां स्वाभावसादेश्यमेवाव्याप्यवृत्तित्वमित्यवसेयम् ।

ननु संयोगश्चेद् व्याप्यवृत्तिरेव तदा क्वचिदभिहतायां भेर्यां सर्वत्र शब्दोपलम्भः स्यात् विभुकार्याणामसमवायिकारणावच्छेनोत्पादा-दित्याह—नन्विति । गूढाभिसन्धिराह—एतदिति । ताभ्यामिति । सम-वायप्रत्यासत्त्या शब्दग्रहस्तयोः शब्दसमवायाभावादित्यर्थः । आश-

न्यायलीलावतीप्रकाशः

साधनेऽपि तयोर्युतसिद्ध्यापत्तिस्तर्कस्तर्हि सर्वथाऽवयविनि संयो-गाभावादव्याप्यवृत्तित्वविरोधात् । उपसंहारव्याजेनाव्याप्यवृत्ति-तायां परिभाषान्तरमाह—तस्मादिति ।

नन्वेवमिति । शब्दासमवायिकारणस्य भेर्याकाशसंयोगस्य व्या-प्यवृत्तित्वाद्विभुविशेषगुणानां चासमवायिकारणावच्छिन्नेऽवश्य-मुत्पत्तेः देशान्तरीयशब्दस्य देशान्तरस्थेन पुरुषेण ग्रहप्रसङ्ग इत्यर्थः । एतच्छ्रोत्रेणेति । श्रोत्रस्य च प्राप्यकारित्वादित्यर्थः । ताभ्यामिति ।

न्यायलीलावतीप्रकाशविवृतिः

तात्पर्यम् । तर्हीति । यदि यत्किञ्चित्कारणसंयोगिना कार्यं न संयु-ज्यत इति मतं तदाऽवयविनि संयोगो न स्यादेवेत्यव्याप्यवृत्तिता-ऽनुभवो विरुध्येत सकलकारणासंयोगः ( गि ? ) ना च कार्यासं-योग इष्ट एवे ( ति ? ) भावः । यद्यपि यत्किञ्चित्कारणासंयोगिना कार्यासंयोगनियमेऽपि सकलकारणसंयोग्याकाशादिना संयोगो-ऽविरुद्ध एव तथाप्यङ्गुलीसंयुक्ते वृक्षे शरीरसंयोगानुभवो विरुध्येते-ति तात्पर्यम् । उपसंहारव्याजेनेति । केचित्तु ईश्वरविशेषगुणभिन्नत्वे स-ति मूर्तवृत्त्येकवृत्त्यवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वमेवाव्याप्य-

सम्बन्धात् । नभसस्तु श्रोत्रत्वे तस्यापि ग्रहणम्, श्रोत्रप्राप्तेर-विशेषादिति चेत्, न, एतद्देशवासिपुरुषं प्रति विशिष्टादृष्टप्र-सूतकर्णशष्कुलीभेदस्य तत्संयोगभेदस्य वा शब्दविशेषोपलम्भ एव सहकारित्वाभ्युपगमात्। सैव तर्हि कर्णशष्कुली अत्र स्थित-

न्यायलीलावतीकण्ठाभरणम्

यमुद्घाटयति—एतद्देशेति। विशिष्टादृष्टोपगृहीतकर्णशष्कुल्यवच्छिन्नन-भोभागस्य श्रोत्रत्वं तदवच्छिन्न एव देशे यः शब्द उत्पद्यते स गृह्य-ते नान्यः शब्दासमवायिकारणसंयोगस्य व्याप्यवृत्तित्वेन शब्द एव नियतदेशे कथमिति चेत्, असमवायिकारणसत्त्वेऽपि निमित्त-वाय्ववच्छेदेन तदुपपत्तेः शब्दोपलम्भानुपलम्भनैयत्येन तथैव कल्पनात्। गच्छन् वायुः स्वदेशे शब्दमुत्पादयति। अत एव कोष्ठ्यस्य वायोरेवाधःकण्ठादिदेशसंयोगात् कण्ठ्यादिवर्ण-निष्पत्तिः। सैवेति। देशान्तरोत्पन्नशब्दसान्निति (संवितिः?) तत् पुरुष-

न्यायलीलावतीप्रकाशः

कर्णशष्कुलीतत्संयोगाभ्यामित्यर्थः। शब्दस्य च तदसमवेतत्वात्। नभसोऽपि श्रोत्रत्वेऽपि निमित्त-समवायेन शब्दग्रहणादिति भावः। वैचित्र्यान्न सर्वशब्दोपलम्भप्रसङ्ग इत्याह—एतद्देशेति। शब्दविशेषोपल-म्भ इति। सन्निधानोच्चरितशब्दविशेषोपलम्भ इत्यर्थः। एतच्चाव-श्यं वाच्यमन्यथा संयोगस्याव्याप्यवृत्तित्वेऽपि प्रत्यासत्तिसत्त्वात्स-र्वशब्दग्रहप्रसङ्ग इत्यर्थः। न च कर्णशष्कुल्यवच्छेदेन देशान्तरो-च्चारितशब्दस्य नोत्पत्तिरिति वाच्यम्, अवच्छेदो ह्याकाशा-द्भिन्नमभिन्नं वा। आद्ये न तत्र शब्दसमवायः। अन्त्ये न कश्चिद् विशेषः। इत्याहुः। वस्तुतो यदवच्छेदेन कर्णशष्कुलीसंयोग आकाशे तत्परिचिततत्संयोगात्तदवच्छेदकानवच्छिन्न आकाशः श्रोत्रं तत्-समवतः शब्दो गृह्यते। अथ वा कर्णशष्कुलीसंयोगावच्छेद-कावच्छिन्ने आकाशे वर्त्तमानः शब्दो गृह्यते। तस्यावच्छेदकतया देशोऽधिकरणं समवायित्वेनाकाशः। तथा च कर्णशष्कुली-संयोगावच्छेदकदेशवृत्तिः ,शब्दो गृह्यते, न तदनवच्छेदकदे-शवृत्तिरिति वय(म्?)। सैवेति। देशान्तरस्थितैवेत्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

वृत्तित्वमित्याहुः। वस्तुत इति। यद्यपि संयोगस्य व्या( प्य ?)वृत्ति-

पुरुषस्य तच्छब्दोपलम्भे सहकारिभूताऽस्त्विति चेत्, न, तस्या एतत्पुरुषादृष्टानुपगृहीतत्वादिति मूकीभव। [इति] संयोगः।

विभागः संयोगप्रध्वंसोऽस्त्विति चेत्, न, संयोगवदुक्तो-

---

न्यायलीलावतीकण्ठाभरणम्

कर्णशष्कुलीत्यर्थः। तस्या इति। परकीयकर्णशष्कुल्याः परकीयादृष्टाघटितत्वादित्यर्थः।

स्वजनककर्म्मोत्पत्त्यव्यवहितोत्तरक्षणोत्पत्तिरवृत्तिगुणत्वसाक्षाद्व्याप्यजातित्वं विभागत्वमिति लक्षणम्। संयोगत्वं द्विष्ठमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिभिन्नं जातित्वात् गोत्ववत् प्रमेयत्वाद्वा घटवदिति प्रमाणं विभागे स्फुटमिति संक्षेपतस्तन्निरूपयितुं पूर्व्वपक्षयति—विभाग इति। संयोगात्यन्ताभावान्योऽन्याभावावतिप्रसक्ताविति संयोगध्वंस इत्युक्तम्। संयोगवदिति। यथा सन्नित्यबाधित-

न्यायलीलावतीप्रकाशः

तस्या इति। अदृष्टोपग्रहश्च कर्णशष्कुल्या (म ?) वश्यमन्यथा रोगादिकं विना बाधिर्यानुपपत्तेरिति भावः।

यदि संयोगाभावं (वो?) विभागः स्यात्तदा गुणादावपि विभक्तधीः स्यात्तदुक्तं संयोगप्रध्वंस इति। विभागस्योत्तरदेशसंयोगनाश्यतया क्षणत्रयमात्रस्थायित्वात्तदुत्तरक्षणे विभक्तप्रतीतेः संयोगध्वंसावलम्बनत्वेन त्वयाऽप्यनुमतत्वादिति भावः। स च यद्यप्येकस्मिन् संयोगे नष्टे संयोगान्तरसत्त्वेऽप्यस्ति यावदुत्पन्नसंयोगध्वंसश्चैकमात्रसंयोगनाशे न सम्भवति तथापि संयोगसमानकालीनसंयोगध्वंस उत्पन्नसंयोगत्वावच्छिन्नसंयोगप्रतियोगिको ध्वंसो वा विभागः। न त्वेवमेकतरसंयोगिनाशेऽपि एकस्मिँस्तत्र विभक्तधीः स्यात्तत्रापि संयोगनाशात्। न च द्वौ संयोगिनौ नष्टसंयोगौ विभक्तधीविषयः प्रमेयाधि-

न्यायलीलावतीप्रकाशविवृतिः

त्वे आकाशमेव तत्परिच्छितम्, असमवायिकारणानुरोधाच्च सर्वशब्दस्यापि व्याप्यवृत्तित्वमतः सर्वशब्दोपलम्भस्तदवस्थ एवेति प्रकारद्वयमप्येतदयुक्तम्। तथापि पूर्वोक्तरीत्या शब्दस्याव्याप्यवृत्तित्वमेव व्याप्यवृत्तिताभिधानं चैकदेशिमतेनेति तात्पर्य्यम्।

उत्पन्नेति। उत्पन्नतदुभयप्रतियोगिकसंयोगत्वावच्छिन्नध्वंस इत्य-

न्यायलीलावतीकण्ठाभरणम्

प्रत्ययात् संयोगसिद्धिस्तथा विभागस्यापि यथा शब्दासमवायिकारणतया संयोगसिद्धिस्तथा विभागस्यापि सिद्धिरित्यर्थः। किञ्च यदा अवयविकर्म्मणा युगपदेवाङ्गुलीतरुसंयोगहस्ततरुसंयोगशरीरतरुसंयोगा उत्पन्नास्तत्राङ्गुलीमात्रोत्पन्नेन कर्म्मणा अङ्गुलीतरुविभागात् विभागपरम्परयैव हस्ततरुसंयोगपरम्परानाशाय अवश्यं

न्यायलीलावतीप्रकाशः

कथाभावात्। न च द्वित्वमेवाधिकम्। विशेषणद्वित्वैकत्वयोर्विशिष्टप्रत्ययाविशेषाद्दण्डी पुरुष इत्यत्र तथा दर्शनात्। मैवम्। स्वप्रतियोग्यधिकरणात्यन्ताभावाप्रतियोगिनो द्रव्यध्वंसाजन्यस्य वा संयोगध्वंसस्य विभक्तप्रत्ययालम्बनत्वात्। प्रमेयाधिक्यसम्भवाद्विभागः। ( स ? ) नित्यबाधितबुद्धिवेद्यत्वाच्च शब्दासंयोगाजन्यशब्दासमवायिकारणत्वाच्च। विभागस्य गुणत्वमभिप्रेत्याह—संयोगवदिति।

न्यायलीलावतीप्रकाशविवृतिः

र्थः। एतच्च सामान्यध्वंसस्वीकारपक्षे तदस्वीकारे तु यावदुत्पन्नतदुभयप्रतियोगिकसंयोगध्वंसमादाय तथेति ध्येयम्। यावत्पदं चाशेषपरम्। विशेषणेति। संयोगनाशात्मकविभागस्य तत्र प्रयोजकत्वादाश्रयद्वित्वैकत्वयोरप्रयोजकत्वादिति भावः। न चाश्रयनाशजन्यसंयोगध्वंसस्य कथं नष्टेऽत्यन्ताभावः। पूर्वं प्रतियोगिसत्त्वादग्रे चाश्रयस्यैवाभावादत आह—द्रव्येति। यद्यप्येतदुभयमप्ययुक्तं तत्र संयोगिद्वयसत्तायामेव संयोगध्वंसो जातस्तदनन्तरं चैकः संयोगी नष्टस्तत्रापरत्र च विभक्तप्रत्ययतादवस्थ्यात् तथापि यावत्प्रतियोगिस्वाश्रयसमानकालीनयावदुत्पन्नसमानाधिकरणसंयोगध्वंसस्य तथात्वे तात्पर्यम्। एतेन द्रव्यपदं प्रतियोग्याश्रयद्रव्यपरमेव वाच्यम्। अन्यथा प्रतिबन्धकद्रव्यध्वंसजन्यसंयोगध्वंसस्थलेऽव्याप्तिः। तथा च परमाणुविभागेऽप्रसिद्धिरिति परास्तम्। ननु सद्बुद्धेरेवाबाधितत्वं भावत्वसिद्धिमन्तरेणासिद्धं तत्र हि कश्च हेतुरन्धकारादौ व्यभिचारीत्यरुचेराह—शब्देति। शब्दसंयोगाजन्यं शब्दं पक्षीकृत्य गुणासमवायिकारणकत्वं शब्दत्वेन साधनीयमिति भावः। यद्वा शब्दसंयोगाजन्यशब्दासमवायिकारणं पक्षीकृत्य शब्दासमवायिकारणत्वेन

त्तरत्वात् पल्लवः प्रक्रियायामित्यलम्। इति विभागः (१)।

---

न्यायलीलावतीकण्ठाभरणम्

विभागोऽङ्गीकर्त्तव्य इति भावः। अत्र सङ्क्षेपे हेतुमाह—पल्लव इति।

न्यायलीलावतीप्रकाशः

यत्र संयोगध्वंसानन्तरमाश्रयो नष्टः, तत्राश्रयान्तरव्यङ्ग्यत्वात् ध्वंसधीरस्ति। न चात्र विभक्तप्रत्ययः। यद्वा घटात्पटो वि· भक्त इत्यादिप्रतीतेर्न च ध्वंसेनान्यथोपपत्तेः, ध्वंसस्य प्रतियोगि· निरूप्यत्वात्, विभागस्य चावधिनिरूप्यत्वात्। न च संयोगाभाव एव विभागप्रत्ययः कथमन्यथा हिमवद्विन्ध्यौ विभक्ताविति धीरि· ति वाच्यम्, विभागपदस्य नानार्थत्वात्। किञ्च यत्रावयवावयविनोः कर्मणा युगपदेव संयोगो जनितः पश्चाच्चावयवकर्मणा विभागजवि· भागः परस्परया संयोगनाशस्तत्र संयोगनाशकतया विभागो मन्तव्यः। तत्र न हि अवयवकर्मणा तन्नाशः, व्यधिकरणत्वात्। नाऽप्यवयवसंयोगनाशेनैवावयविनि संयोगनाशः, अवयवसंयोगना· शस्यावयविसंयोगाजनकत्वादकारणनाशस्याकार्यनाशकत्वादित्य· भिसन्धिः। पल्लव इति। सा च प्रक्रिया परिच्छेदे निरूपणीयेति भावः।

न्यायलीलावतीप्रकाशविवृतिः

गुणत्वमनुमेयम्। शब्दपदं चात्र कर्मणि व्यभिचारवारणायेति तात्पर्यम्। ननु निमित्तकारणत्वेनावश्यं स्वीकृतो वायुसंयोग एवासमवायिकारणमस्तु संयोगजविभागजयोः परस्परं वैजात्यं च सामग्रीवैचित्र्यादेव। तच्च निमित्तकारणत्वेऽपि विभागस्या· क्षतमित्यरुचेराह—यत्र संयोगेति। इदं च यथाश्रुतमभिप्रेत्य यदि तु यावत्स्वाश्रयसमानकालीनो यावदुत्पन्नसमानाधिकरणसंयोगध्वं· सो विभाग इति पूर्वनिरुक्ते ग्रन्थस्य तात्पर्यं तदा नेदं दूषणमित्यरु· चेराह—यद्वेति। नानार्थत्वे गौरवमित्यरुचेराह—किञ्चेति। तथा च प्रा· माणिकं गौरवमिति भावः। अवयवसंयोगनाशस्य समानाधिकरण· तया नाशकत्वं भवेदत आह—नापीति। अकारणेति। विभागस्य च स· मानाधिकरणविरोधिगुणत्वेन नाशकत्वासम्भवादिति भावः।

---

(१.) व्यामित्ययं विभागः।

कथं पुनः परत्वापरत्वे। [संयुक्त] संयोगाल्पीयस्त्वभूयस्त्वयोरेव तद्व्यवहारहेतुत्वात्। अनुमेयात्प्रचुरतरातीततपनपरिस्पन्दावच्छेदादेर्विलक्षणे एव प्रत्यक्ष(१)प्रतिभासिनी परत्वापरत्वे। तथाऽन्यत्रानुमान(२)मिति चेन्न, चिरक्षिप्रादेरपि बहिर्भावा-

---

न्यायलीलावतीकण्ठाभरणम्

कथमिति। दिक्कृतपरत्वापरत्वयोरुत्पादार्थं संयुक्तसंयोगभूयस्त्वधीस्तदल्पीयस्त्वधीश्च त्वया निमित्तकारणत्वेनाभ्युपेया। तथा च तत एव तद्व्यवहारद्वारा (तद्व्यवहारोप?) पत्तौ किं ताभ्यामित्यर्थः। ननु कालिकपरत्वापरत्ववद् दैशिके अपि स्यातां न हि तत्र * * पिण्डयोः प्रत्यक्ष एवानुभूयमाने परत्वापरत्वे अतीन्द्रियप्रचुरतरातीततपनपरिस्पन्दावच्छेदेनान्यथा साधयितुं शक्येते इति शङ्कते—अनुमेयेति। तथान्यत्रेति। तद्दृष्टान्तेन दिक्कृते अपि परत्वापरत्वे अनुमेये इत्यर्थः। दृष्टान्तीभूते परत्वापरत्वे चेदङ्गीकर्त्तव्ये तदा चिरक्षिप्रादिकमपि गुणान्तरमङ्गीक्रियतामित्याह—चिरक्षिप्रादेरिति। तर्हि

न्यायलीलावतीप्रकाशः

दिक्कृते परत्वापरत्वे आक्षिपति—कथमिति। संयुक्तेति। परत्वापरत्वोत्पत्तावपि तद्गोचरापेक्षाबुद्धेर्हेतुत्वेन तस्यावश्यापेक्षणीयत्वादिति भावः। कालकृतपरापरव्यवहारस्य परत्वापरत्वव्यवहारहेतुत्वात्तद्दृष्टान्तेन दिक्कृतस्यापि तस्य तद्धेतुकत्वं साध्यमिति अभिप्रेत्य परत्वापरत्वे साधयति—अनुमेयादिति। परापरबुद्धेरप्रत्यक्षायाः सूर्यक्रियाभूयस्त्वादिनाऽतीन्द्रियेणानिर्वाहात्तदर्थमप्रत्यक्षे परत्वापरत्वे स्वीकार्ये इत्यर्थः। परिस्पन्दावच्छेदादेरिति। आदिपदेनाल्पतरसूर्यपरिस्पन्दस्यापरहेतोः संग्रहः। अन्यत्रापीति। दिक्कृतपरापरव्यवहारेऽपीत्यर्थः। विप्रतिपन्नं प्रति संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वातिरिक्तयोः परत्वा-

न्यायलीलावतीप्रकाशविवृतिः

संयुक्तेत्यग्रिमग्रन्थानुरोधादाह—दिक्कृत इति। एवं सति कालिकपरत्वादिसाधनमर्थान्तरमत आह—कालकृतेति। ननु प्रत्यक्षसिद्धे दैशिकपरत्वादौ किमित्यनुमानव्यवस्थाप्यत्वमुच्यत इत्यत आह—विप्रतिप-

---

(१) प्रत्ययम०। (२) तथाऽन्यत्राप्यनु०।

पत्तेः। ततः परापरधीरप्यनध्यक्षैवाभ्यासपाटवाद्वायुवर्तीति प्रत्ययवदाभासते।

ननु भिन्नदिगवस्थितयोर्योजनतदर्द्धान्तरितत्वे दूरादूरबुद्धावपि परापरव्यवहाराभावेनातिरिक्तनिमित्तत्वमस्तु । तत्रापि परापरादिव्यवहारोऽस्तीति चेन्न, मध्यव्यवहार [स्यापि] प्रसङ्गात्। उभयापेक्षसंयुक्तसंयोगाल्पीयस्त्वज्ञानजन्यमुभयापेक्षमपर-

---

न्यायलीलावतीकण्ठाभरणम्

तयोः प्रत्यक्षप्रातिभासः कथमित्यत आह,—तत इति । चिरातीततपनपरिस्पन्दावच्छेद एवाभ्यासदशापन्नवलिपलितादिलिङ्गानुमेयस्तदा भासत इत्यर्थः। ननु यदि संयुक्तसंयोगभूयस्त्वाल्पीयस्त्वनिब-(न्ध ?) नश्चेद्दिक्कृतपरापरव्यवहारस्तदा भिन्नदिगवस्थितयोरपि स्यादिति शङ्कते—नन्विति । 'अतिरिक्तनिमित्तत्वं' परत्वापरत्वनिमित्तत्वम्। अत्रेष्टापत्तिमाशङ्कते—तत्रापीति । मध्यताव्यवहारेऽपि इष्टापत्तिमाशङ्क्याह—उभयापेक्षेति । यदेवापरत्वाधिकरणं तत्र मध्य-

न्यायलीलावतीप्रकाशः

परत्वयोर्व्यवस्थापनमशक्यं प्रत्यक्षसिद्धसंयुक्तसंयोगाल्पीयस्त्वभूयस्त्वाभ्यामेव परत्वापरत्वव्यवहारोपपत्तेरिति भावः । कालकृतपरत्वापरत्वगोचरं प्रत्यक्षसिद्धमित्याह—चिरक्षिप्रेति । तस्यापि प्रत्यक्षगुणान्तरतापत्तेरित्यर्थः । प्रत्यक्षसिद्धिं स्फुटयति—तत इति। ननु परापरव्यवहारो न संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वादिधीहेतुः तत्सत्त्वेऽपि तदभावादित्याह—भिन्नेति। अतिरिक्तेति। तदेव परत्वमपरत्वं चेति भावः। मध्येति । परादिव्यवहारस्य तन्नियतत्वादित्यर्थः। नियममेवोपपादयति—उभयेति । संयुक्तसंयोगभूयस्त्वस्याविशेषाद्दि-

न्यायलीलावतीप्रकाशविवृतिः

त्यमिति । तथा च विप्रतिपन्नं प्रति प्रत्यक्षत्वमन्यथाशङ्काकलङ्कितत्वेनासाधकमित्यनुमानमुच्यत इति भावः। अशक्यमिति । प्रत्यक्षेणेति शेषः। प्रत्यक्षेति। कालिके तु प्रत्यक्षमेव मानम्। अतीन्द्रियेण (र ?) विक्रमेण तदनुपपत्तेरिति भावः। उभयेतीति । ययोरेव यदन्तरालं तदन्यतरापेक्षया अन्यतरावधिकं यदेकत्रापरत्र द्वयं तदेव मध्यत्वमित्यर्थः। ननु पूर्वप्रक्रान्तोपपाद्याभावान्नवति हीत्यत्रेतिशब्दो व्यर्थ-

मेव मध्यता। भवति हि इदमनयोरन्तरालमित्यत्रैकैकावध्यपेक्ष-याऽवध्यन्तरे संयुक्तसंयोगभूयस्त्वबुद्धौ सत्यामन्यत्र संयुक्तसं-योगाल्पीयस्त्वमतिः। मैवम्। आर्जवावस्थितेरप्युपयोगात्। भवति हि चतुर्योजनान्तरिता मत्तो वाराणसी, द्वियोजनान्तरितं च श्रुघ्नपुरमित्यनुसन्धाय वाराणसी परा अपरं च श्रुघ्नपुरमिति व्यवहारः। स यदि संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वावच्छेदकज्ञा-ननिबन्धनस्तदा प्रमातर्यपि परापरव्यवहारप्रसङ्गः। ततोऽतिरि-क्तपरत्वापरत्वानिबन्धनः। परत्वापरत्वयोरुत्पादनियमः कुत इति चेत्, जनकशक्तिवैचित्र्यात्। यथा भेर्याकाशसंयोगस्योभया(१)-

---

न्यायलीलावतीकण्ठाभरणम्

त्वव्यवहारो दृश्यते तद्यदि विभिन्नदेशयोः संयुक्तसंयोगभूयस्त्वाल्पी-यस्त्वनिबन्धनः परत्वापरत्वव्यवहारः स्यात्तदाऽपरत्वाश्रयाभिमते म-ध्यताव्यवहारोऽपि स्यादित्यर्थः। एतदेव हि स्फुटयितुं शब्दवन्तमेव किरणावलीग्रन्थं लिखति—भवति हीति। प्रमा * तः परत्वाश्रयाच्च संयु-क्तसंयोगाल्पीयस्त्वमपरत्वाश्रय एव तत्रैव च मध्यताव्यवहार इत्य-र्थः। विभिन्नदेशयोः परत्वापरत्वे नोत्पद्येते तत्रार्जवावस्थानाभा-वादित्याह—आर्जवेति। परत्वापरत्वोत्पत्तिक्रममभिधाय परापादि-तामन्यथासिद्धिं निरस्यति—स यदीति। तयोरुत्पत्तावपि कथं नायं प्रसङ्ग इत्याह—परत्वापरत्वयोरिति। समाधत्ते—जनकेति। तत्रैव दृष्टान्तमा-ह—यथेति। प्रमाभावप्रसङ्गेन किरणावलीकृता यत् समाहितं तन्नेत्याह—

न्यायलीलावतीप्रकाशः

त्यर्थः। आर्जवेति। एकदिगवस्थितेरित्यर्थः। त्वयापि परत्वापरत्वोत्प-त्तौ तथैवान्व(न्व?)यव्यतिरेकाभ्यां तन्नियामकत्वोपगमादिति भावः। भवति हीति। यथाश्रुतो हि शब्दवानेव ग्रन्थो लिखितः। प्रमातर्यपीति। संयोगसंयुक्तभूयस्त्वाल्पीयस्त्वस्याविशेषादित्यर्थः। जनकेति। अयं

न्यायलीलावतीप्रकाशविवृतिः

इत्यत आह—यथाश्रुत इति। किरणावल्यां पूर्वप्रक्रान्तसत्त्वात हिशब्दो

(१) ०याश्रयत्वेऽपि न०। ०याश्रितत्वेऽपि न०।

श्रयत्वे नभसि शब्दजननियम(१) इति किरणावलीकारः। तन्न, यत्संयुक्तसंयोगबहुत्वविशेषावच्छिन्नसंयोगाधिकरणत्वेन प्रतिसन्धीयते तत्र परव्यवहारो न तु प्रमातरि तस्यावधित्वेन प्रतीतेः। यदा तु प्रमातैव तदधिकरणत्वेन प्रतीयते(२) तदा भवत्येव प्रमातरि परव्यवहारो वाराणसीतः परोऽहमिति। संयोगस्वभावत्वे परत्वस्य संयोगिनिरूप्यत्वं स्यात्, न त्ववधिनिरूप्यत्वमिति चेन्न, संयोगभूयस्त्वाल्पीयस्त्वयोः परापरव्यवहारविषयत्वेनैव तदुपपत्तेः।

---

न्यायलीलावतीकण्ठाभरणम्

तत्रेति। अत्रावधित्वेनाप्रतीयमानत्वे सति संयुक्तसंयोगाधिकरणत्वेन प्रतीयमानत्वं परत्वापरत्वधीनिबन्धनमतो न प्रमातरि प्रसङ्ग इत्यर्थः। तत्रैव व्यवहारं दर्शयति—यदा त्विति। तदुपपत्तेरिति। अवधित्व-

न्यायलीलावतीप्रकाशः

अभ्युपगमवादः। वस्तुत आत्मनो विभुत्वात्तत्र परादिव्यवहाराभावात्। मूर्त्तत्वस्यैतत्समवायिकारणतावच्छेदकत्वात्। किञ्चित्संयुक्तसंयोगभूयस्त्वाधिकरणत्वेन प्रतीयते किञ्चित्तदवधित्वेन। तत्राद्ये परापरव्यवहारो नित्यः, मत्तः परा वाराणसीत्यत्रावधित्वेन प्रमातुः प्रतीतेर्न तत्र व्यवहारः स्यादित्याह—यत्संयुक्तेति। यदा त्विति। न त्ववधित्वेनेति शेषः। प्रमातरीति। शरीर इत्यर्थः। न त्वात्मनि तस्य विभुत्वादित्युक्तम्। ननु परत्वादेः सावधित्वेन प्रतीतेर्न संयोगेन तदन्यथासिद्धिः। संयोगस्य सावधित्वाभावात्। इदमनेन संयुक्तमिति प्रतिपत्तिवत्, न त्वस्मादिदं संयुक्तमित्याह—संयोगस्वभावत्व इति। संयोग-

न्यायलीलावतीप्रकाशविवृतिः

व्यक्त एव अनेन च किरणावलीलिखनानुरोधेनैव लिखित इति भावः।

ननु जनकशक्तिवैचित्र्यं जनकस्वभाववैचित्र्यं तच्च नात्र नियामकम्, सत्यात्मनो योग्यत्वे परत्वाद्युत्पत्तेरावश्यकत्वान्नित्यस्येत्यादिन्यायादित्यरुचेराह—वस्तुत इति। किञ्चिदिति। भूयःसंयुक्तसंयोगा-

---

(१) ०जननशक्तिरिति कि०। (२) ०तिसन्धीयते०।

अत्रोच्यते । किं पुनः संयोगस्य भूयस्त्वमल्पत्वं च किं परिमाणविशेषः संख्याभेदावच्छेदो वा । द्वयमपि न । गुणानां गुणसंसर्गायोगात् । आरोपिता संख्येति चेत्, न, द्वित्वत्रित्वादेर्व्यभिचारात् । क्वचिद्द्वित्वं क्वचित्त्रित्वादिकमिति चेत्, न, अनुवृत्तपरव्यवहारविरहापत्तेः, एकत्र चतुष्टे त्रि-

---

न्यायलीलावतीकण्ठाभरणम्

रूप्यत्वोपपत्तेरित्यर्थः । किरणावलीकारमतं दूषयित्वा स्वमतेनान्यथासिद्धिं निरस्यति—किं पुनरिति । परत्वापरत्वे गुणे विहाय संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वे एव निर्वक्तुमशक्ये इति भावः । तदेव स्फोरयति—किमिति । संयोगे पारमार्थिकसंख्याभावेऽप्यारोपिताऽस्त्वित्याह—आरोपितेति । द्वित्वनिबन्धना चेत्तदा तच्छून्ये न स्यादिति व्यभिचारमाह—द्वित्वेति । तथा सत्यननुगममाह—नेति । दूषणान्तरमाह—एक-

न्यायलीलावतीप्रकाशः

स्य निरवधित्वेऽपि तद्भूयस्त्वादेरवधित्वानिरूप्यत्वात् सावधित्वेन धीरुपपन्नेत्याह—संयोगस्य भूयस्त्वेति । गुणानामिति । संख्याया गुणत्वव्यवस्थापनादिति भावः । आरोपितेति । यथा चतुर्विंशतिर्गुणा इत्यर्थः । द्वित्वत्रित्वादेरिति । न चानेकवृत्तिसंख्यात्वेनानुगमः । अविचित्रेण विचित्रपरापरव्यवहारानापत्तेः । अवान्तरवैजात्यस्याभावात् । एकत्र चतुष्ट इति । ननु या संख्या यत्संख्यासमानाधिकरणात्यन्ताभावाप्रतियोगिनी सती च तदत्यन्ताभावसमानाधिकरणा सा तदपेक्षया परा, या च यत्समानाधिकरणात्यन्ताभावप्रतियोगिनी सती यदत्यन्ताभा-

न्यायलीलावतीप्रकाशविवृतिः

धिकरणत्वेनेत्यर्थः । प्रमातुरिति । शरीरस्येत्यर्थः । या संख्येति । व्यधिकरणयोरपि त्रित्वयोः परस्परं परव्यवहारापत्तेः प्रथमप्रतीकम् । तावन्मात्रे चाभेदेऽपि परत्वं स्यादित्युत्तरप्रतीकम् । एवञ्चापिव्यत्यासेन दलयोः प्रयोजनम् । यद्यपि प्रथमे द्वितीयस्य द्वितीये प्रथमस्य विशेषस्य गुरुतरत्वं भेदमात्रगर्भतयैव सङ्गतेः, तथापि परापरव्यवहारौपयिकमिदमिति गौरवमप्यकिञ्चित्करम् । मीमांसकानां ज्ञानत्वस्य प्रमालक्षणत्वेऽपि याथार्थ्यविशेषणगौरववदिति भावः । ननु

त्वपञ्चत्वाद्यपेक्षया परापरव्यवहारानुपपत्तेश्च । चतुष्टे त्रित्वप-ञ्चत्वाद्यपेक्षया बहुत्वमल्पत्वं च तद्व्यवहारनिमित्तमिति चेत्, न, चतुष्टे बहुत्वाल्पत्वयोरभावात् । परसंख्यावच्छिन्नत्वं भूय-स्त्वमिति चेत्, न, संख्यायाः स्वाभाविकपरत्वाभावात् । आरो-पितत्वेऽपि क्वचिद्वास्तवपरत्वस्वीकारात् । संख्यायाः प्राथम्य-मपरत्वं पश्चाद्भावश्च परत्वमिति चेत्, न, परत्वापरत्वेतरस्य

---

न्यायलीलावतीकण्ठाभरणम्

त्र चतुष्ट इति । यत्र चत्वार एव वस्तुगन्ध्यसंयुक्तसंयोगास्तत्र परत्वाप-रत्वं च त्रित्वपञ्चत्वापेक्षया दृष्टं तन्न स्यादित्यर्थः । तत्रापि बहुत्वाल्प-त्वे अपेक्षिते तदेव विशिष्टचिन्त्रव्यवहारायेत्याह—नेति । संख्याया इति । ननु

न्यायलीलावतीप्रकाशः

वव्यापकात्यन्ताभावप्रतियोगिनी सा तदपेक्षयाऽपरा । तथा चारो-पितसंख्ययैव परापरव्यवहारः स्यात् । अत्राहुः । परत्वापरत्वे एक-वृत्तितया प्रतीयमानतया व्यासज्यवृत्तेः संयोगाद्भिद्येते संयोग-भेदापरिगणने परापरव्यवहारश्च न स्यात् । किञ्च संयुक्तसंयोगाल्पी-यस्त्वभूयस्त्वेनाकाशाद्यपेक्षया तेषामविशिष्टत्वादतीन्द्रियत्वाच्च । किन्तु मध्यवर्त्यालोकापेक्षया । तथा चैकदिगवस्थितयोरेव द्वयोरे-

न्यायलीलावतीप्रकाशविवृतिः

संयोगस्य व्यासज्यवृत्तित्वेऽपि इन्द्रियसंयुक्तोऽयमितिवदेकत्रापि प्रतीतिः सम्भवत्येव । किञ्च समवायेन व्यासज्यवृत्तित्वेऽपि दिशा सम्बन्धेनैकत्र प्रतीतिरस्तु इह संयोग इति प्रतीतिवत् । अतो युक्त्य-न्तरमाह—संयोगभेदेति । तथा च तद्भूयस्त्वविषयत्वेन नान्यथा सिद्धिरिति भावः । नन्विदमप्ययुक्तं विशेष्यभेदपरिगणनेऽपि सामा-न्यतः परिगणनात् । अन्यथा परत्वोत्पत्तिरपि न स्यान्नियामकाभा-वात् । न च स्वभावविशेष एव नियामक इत्यग्रे स्फुटमिति वाच्यम्, विषयकृतस्य तस्याभावाज्जातिकृतस्य च जातिसङ्करदुष्टत्वादित्य-रुचेर्युक्त्यन्तरमाह—किञ्चेति । ननु द्व्यणुकाद्यपेक्षया तद्वाच्यमतो नावि-शेष इत्यत आह—अतीन्द्रियत्वाच्चेति । तथा च न प्रत्यक्षायाः परत्वादि-प्रतीतेस्तेनान्यथासिद्धिरिति भावः । किन्त्विति । त्वया वाच्यमिति

प्रथमपश्चाद्भावस्यैवासिद्धेः । पराचीनापराचीनापेक्षाबुद्धिजन्यत्वं तदिति चेत् , न, परत्वापरत्वे विहाय परावाग्भावयोरभावात् । येन विषयेणापेक्षाबुद्धेर्वैचित्र्यं स इति चेत् , न, अपेक्षाबुद्धेर्विषयवैचित्र्यमन्तरेणापि विचित्रकार्यजननशीलत्वेन विलक्षणफलजनकत्वाविरोधात् । अत एव तर्हि विचित्रव्यवहारजनकत्वम-

---

न्यायलीलावतीकण्ठाभरणम्

या संख्या यत्संख्यासमानाधिकरणात्यन्ताभावाप्रतियोगिनी सती यदत्यन्ताभावसमानाधिकरणा सा तदपेक्षया परा, या च यत्समानाधिकरणात्यन्ताभावप्रतियोगिनी सती यदत्यन्ताभावव्यापकात्यन्ताभावप्रतियोगिनी सा तदपेक्षयाऽपरेति तन्निबन्धन एव(?) परापरव्यवहारोपपत्तौ किन्ताभ्यामिति चेत् , न, परत्वापरत्वे एकैकमात्रवृत्तितया अनुभूयेते संयुक्तसंयोगास्तु व्यासज्यवृत्तय इति न तैरन्यथासिद्धिः । किञ्च संयुक्तसंयोगानां योग्यायोग्यघटितत्तया अयोग्यत्वादिति । एकद्वयसमूहालम्बनं पराचीनमेकत्रयसमूहालम्बनमपराचीनमिति विशेष इत्याह —पराचीनेति । ननु अपेक्षाबुद्धिवैचित्र्यनिमित्तं त्वयापि वाच्यं तदेव व्यवहारनिबन्धनं स्यादित्याह—येनेति । एकत्वसमूहालम्बनमपेक्षाबुद्धिरविचित्रापि विचित्रं कार्यं शक्तिवैचित्र्यात् करिष्यतीत्याह—नेति । 'शीलं' स्वभावः । 'विलक्षणं फलं' परत्वमपरत्वं च ' ननु शीलवैलक्षण्याधीनं व्यवहारवैलक्षण्यमेव किं न स्यादित्याह— अत एवे-

न्यायलीलावतीप्रकाशः

कस्य घनतरालोकमध्यवर्त्तिनः संयुक्तसंयोगाल्पीयस्त्वे यदपरत्वं विरलालोकमध्यवर्त्तिनः संयुक्तसंयोगभूयस्त्वे यत्परत्वमुत्पद्यते तन्न स्यात् । ननु परत्वापरत्वयोरुत्पत्तिनियमेऽपेक्षाबुद्धिविषयनियमो वाच्य इति तत एव तद्व्यवहारः स्यादावश्यकत्वादित्याह—येनेति । द्वित्वादिजनकापेक्षाबुद्धेर्विषयनियमं विनापि तत्स्वभावात्तदुत्पत्तिनियमः स्यादित्याह—अपेक्षाबुद्धेरिति । अत एवेति । विचित्रकार्यजनकस्वभावादेदे-

न्यायलीलावतीप्रकाशविवृतिः

शेषः । तत्संयोगस्य योग्यत्वेन प्रत्यक्षपरत्वादिप्रतीतेस्तेनान्यथासिद्धिसम्भवादिति भावः । 'अपरत्वम्' अपरत्वव्यवहारः । एवमग्रेऽपि ।

स्त्विति चेत्, न, विषयविशेषविमर्शमन्तरेण विलक्षणव्यवहा-रोपहारविरोधात्(१)। बुद्धेः स्वरूपवैचित्र्यस्य परापरव्यवहारास्पद-स्य परत्वापरत्वैककार्योन्नेयत्वात्। कुतस्तर्हि संयुक्तसंयोगाल्पत्व-बहुत्वप्रतिभासनमिति चेत्, न, परत्वापरत्वोत्पत्तेः पूर्वं न कुत-

---

न्यायलीलावतीकण्ठाभरणम्

ति। व्यवहारवैलक्षण्यं व्यवहर्त्तव्यवैलक्षण्याधीनमेव तत् कथमपेक्षा-बुद्धेर्वैचित्र्ये स्यादित्याह—नेति। ननु कार्यवैचित्र्यप्रयोजनकं यत् स्वभाववैचित्र्यं तदेवापेक्षाबुद्धेः कथमुन्नीयतामित्यत आह—बुद्धेरि-ति। सुहृद्भावेन पृच्छति—कुत इति। तदपि परत्वकृतमेवेत्याह—पर-त्वेति। परापरसङ्ख्याकृतोऽपि संयुक्तसंयोगविशेषस्तदा स्याद्यदि**

न्यायलीलावतीप्रकाशः

त्यर्थः। विषयेति। व्यवहारस्य व्यवहर्त्तव्यज्ञानविशेषजन्यत्वात्। पर-त्वाद्युत्पत्तिस्वरूप एव तस्मादित्यर्थः। नन्वपेक्षाबुद्धौ विचित्रकार्य-जननानुकूलस्वभावविशेषो योग्यानुपलम्भबाधित इत्यत आह--बुद्धे-

न्यायलीलावतीप्रकाशविवृतिः

न च घनतरालोकसंयोगस्यापि तत्रानुपवेशात् दूरस्थे संयोगभूय-स्त्वमिति वाच्यम्, उपरिगतेनालोकेन संयोगे तदभावात्। न च दिशा सम्बन्धेन सोऽपि संयोगो दूरस्थ इति वाच्यम्, तेन सम्बन्धेन तदा तदज्ञानात्। न च तवापि कथं परत्वाद्युत्पत्तिनियमः स्वभाव-वैचित्र्यान्नियमस्य निरस्तत्वादिति वाच्यम्, द्व्यणुकादिघटितभूयः-संयोगादेवानुमानिकापेक्षाबुद्धिविषयस्य नियामकत्वात्। न च ममा-पि तस्यैव व्यवहारनियामकत्वम्। तस्याऽतीन्द्रियतया प्रत्यक्षपर-त्वादिप्रतीतिविषयताविरोधादिति सङ्क्षेपः।

मिश्रास्तु परापरव्यवहारो विना बाधकमखण्डगुणसाध्यो लाघवादन्यथा व्यञ्जकेनाऽन्यथासिद्धा जातिरपि न सिद्ध्येदिति पर-त्वापरत्वयोर्गुणयोर्मानमाहुः।

बुद्धेरितीति। न च स्वभावविशेषः पूर्वं निरस्त एवेति वाच्यम्, परत्वादिस्वीकारे तस्यैव सामानाधिकरण्येनापेक्षाबुद्धिवैचित्र्यरूप-

---

(१) व्हारविलक्षणफलजनकत्वविरोधात्।

श्चिदसत्त्वात् । न च संयुक्तसंयोगस्वरूपं कश्चिद्गणयति । प्रत्येकं सामान्यतस्तदनुमानमिति चेत्, न, न ह्यविद्यमानमनुमातुं शक्यम् । न च लिङ्गमस्ति । दूरत्वादूरत्वे लिङ्गमिति चेत्, न, दूरत्वादूरत्वयोः परत्वापरत्वातिरिक्तयोरभावात् । ततः परत्वापरत्वसामानाधिकरण्यमेव संयुक्तसंयोगस्य भूयस्त्वमल्पत्वं चोत्पन्ने परत्वापरत्वेऽवभासते । यत्तु भासर्वज्ञीयं मतं पूर्वोत्पन्नत्वं

---

न्यायलीलावतीकण्ठाभरणम्

**स्यान्न त्वेवमित्याह— न चेति । ननु गणनामन्तरेणैव सामान्यत एव संयुक्तसंयोगबहुत्वमल्पत्वं वा उन्नीय परापरव्यवहारः स्यादित्याह— सामान्यत इति । बहुत्वं सङ्ख्याविशेषः स यद्युत्पद्येत तदाऽनुमीयेतापि गणनामन्तरेण तदुत्पत्तिरेव नास्तीत्याह—न हीति । न च संयुक्तसंयोगभूयस्त्वादिकं प्रतिलिङ्गमस्ति येन तदनुमीयेतेत्याह—न चेति । ननु दूरत्वेन भूयस्त्वं अदूरत्वेन चाल्पत्वं संयुक्तसंयोगानामनुमयितेत्याह— दूरत्वेति । उपसंहरति—तत इति ।

उत्पन्न इति । आरोपित इत्यर्थः तथा च परत्वारोपात् संयुक्तसंयोगभूयस्त्वधीरपरत्वारोपात् तदल्पत्वधीस्तयोरुत्पत्तिरिति भावः । अन्यथा अन्योन्याश्रयः स्यात् । भाष्यं चैवमुपपादितं भवति ।

न्यायलीलावतीप्रकाशः

रिति । कुतस्तर्हीति । उक्तरीत्या संयोगे तदभावादित्यर्थः । न चेति । व्यापकं विना व्याप्याभावादित्यर्थः । अनुभवसिद्धां संयोगभूयस्त्वादिधियमुपपादयति—तत इति । कालकृतपरत्वापरत्वे अधिकृत्याह—यत्त्विति । ननु परत्वधीरपरत्वाश्रयाभिमतावच्छेदकाद्यसूर्यक्रियाप्रागभावसमानकालत्वालम्बना तत्पिण्डप्रागभावसमानकालीनत्वालम्बना वा । अपरत्वधीस्तु परत्वाधारताभिमतपिण्डसमानकालपदार्थध्वंसकालोत्पत्तिमत्त्वविषया तदुत्पत्तिकालानाश्रयत्वे सति तदुत्तरकालत्वविषया वा अस्तु,

न्यायलीलावतीप्रकाशविवृतिः

त्वात् । तत्पिण्डेति । परत्वाश्रयाभिमतपिण्डेत्यर्थः । तदुत्पत्तिकालेति । अत्रोभयदलेऽपि परत्वाधाराभिमतः पिण्डस्तत्पदार्थः । सत्यन्तं चो-

परत्वं पश्चादुत्पन्नत्वमपरत्वमिति तत्क्षणभक्षपक्षाक्षमामात्रविजृम्भितम् । पूर्वपश्चाद्भावस्य परत्वापरत्वातिरिक्तस्य निर्वक्तुमशक्यत्वात् । यथा चैतत्तथाऽस्माभिरपीश्वरसिद्धावुक्तम् । [ इति परत्वापरत्वे । ]

---

न्यायलीलावतीकण्ठाभरणम्

अक्षमेति । परत्वापरत्वयोरेककालिकयोरेवमपि समर्थनादित्यर्थः । परत्वापरत्वयोरनुमानम्,—घटः संयोगासमवायिकारणकैकवृत्तिगुणद्वयवान् मूर्त्तत्वात् पार्थिवपरमाणुवत् । ननु परत्वाधाराभिमतसमानकालीनपदार्थध्वंससमानकालत्वमपरत्वमपरत्वाधाराभिमतप्रागभावसमानकालीनत्वं च परत्वमतस्तत् किं कालिकाभ्यां ताभ्यामत आह—यथा चैतदिति । प्रागभावप्रध्वंसाप्रतिसन्धानेऽपि परापरव्यवहारदर्शनान्नैवमिति भावः ।

न्यायलीलावतीप्रकाशः

किन्ताभ्यामित्यत आह—यथा चेति । प्रागभावोत्पत्त्योस्तदानीमतीतत्वेन परत्वापरत्वयोर्वर्त्तमानताभानानुपपत्तेरिदानीमयमेतस्मात्पर इति वर्त्तमानतानुभवात् प्रागभावादेरवध्यनिरूप्यत्वेन परत्वादेश्चावधिनिरूप्यतया तद्भिन्नत्वाच्च नैवमिति भावः । परत्वापरत्वयोरनुमानमप्याहुः—घटः संयोगासमवायिकारणकैकवृत्तिसमानाधिकरणगुण-

न्यायलीलावतीप्रकाशविवृतिः

द्वयकालान्वयि । प्रागभावोत्पत्त्योरिति । वस्तुतः प्रागभावत्वाद्यप्रतिसन्धानेऽपि परत्वादिप्रतीतेरतिरिक्तगुणसिद्धिः । किञ्च प्रतीतेरखण्डगुणसाध्यत्वे लाघवमिति प्रागुक्तमेव । किञ्च मूलकृन्मते महाप्रलयो नास्त्येव येन महाप्रलयावृत्तित्वेन प्रागभावनिर्वचनं स्यादिति प्रतियोग्यन्यूनेत्यादिना परत्वगर्भेणैव तन्निर्वचनमिति तदसिद्धौ तदप्यसिद्धमित्यभिमानमिति सङ्क्षेपः । उक्तयुक्त्यनवष्टम्भेऽनुमानमप्रयोजकं तदवष्टम्भे किमनेनेत्यरुचिं प्रकाशयति—आहुरिति । घट इति । नोदनजन्यकर्मणा परत्वापरत्वयोरन्यतरेण चार्थान्तरमिति चरमगुणपदम् । संयोगजसंयोगेनैकेन चार्थान्तरमित्येकवृत्तीति । रूपादिना उक्तेन चार्थान्तरमिति संयोगासमवायिकारणकेति । तथाप्यदृष्टवदात्मसंयोगमादाय तद्दोषतादव-

न्यायलीलावतीप्रकाशः

वृत्तिगुणत्वव्याप्यजातिशून्यसंयोगासमवायिकारणैकवृत्तिगुणवान् मूर्त्तत्वात् पार्थिवपरमाणुवत्। तादृशो गुणो दृष्टान्ते गन्धादिरुभयसि-

न्यायलीलावतीप्रकाशविवृतिः

द्धयमित्यसमवायीति । घटरूपं तु न पाकजमिति भावः । एव-मप्यन्यतरासिद्ध्याऽर्थान्तरमिति शून्यान्तं गुणविशेषणम् । तत्रापि नानापरत्वैरर्थान्तरमिति गुणत्वव्याप्यजातिगर्भता । गुणत्वव्याप्य-जातिपदं च गुणविभाजकोपाधिपरमन्यथा दैशिककालिकपरत्वयोः परस्परविजातीयतया परत्वापरत्वासिद्धिः।वस्तुतोऽग्रे वक्तव्यकालाप्र-तियोगिकत्वादिविशेषणादेवैतद्दोषानवकाशः। रूपादिव्यावर्त्तनाय संयो-गासमवायिकारणकेति । तत्राप्यदृष्टवदात्मसंयोगमादाय बाध इत्यस-मवायीति। संयोगव्यावर्त्तनाय एकवृत्तीति। परमाणुरूपादिव्यावर्त्तनाय समानाधिकरणेति। प्रचयाख्यसंयोगजन्यं परिमाणं घटे बाधितमेवेति-न तेनार्थान्तरम्। गुणत्वव्याप्यपदं तु सत्तादिना बाधवारणाय। प्रथम-गुणपदं तु सम्पातायातम्। न च दैशिकसाधने कालिकाभ्यां कालि-कसाधने च दैशिकाभ्यां परत्वापरत्वाभ्यामर्थान्तरमिति वाच्यम्, दैशिकसाधने कालाप्रतियोगित्वस्य कालिकसाधने दिगप्रतियोगि-त्वस्योभयदले संयोगविशेषणत्वात्। क्वचित्तु समानाधिकरणपदोत्तरं द्विष्ठपदमग्रिमप्रतीके चैकवृत्तिपदहीन एव पाठस्तत्र समानाधिकरण-पदानन्तरं गुणपदं विजातीयपदं च प्रवेश्यमतो नाभिघातजकर्मसा-मानाधिकरण्येन सजातीयव्यक्तिविशेषसामानाधिकरण्येन वाऽर्था-न्तरम् । तादृशस्वसमानाधिकरणगुणविजातीयद्विष्ठगुणवृत्तिगुणत्व-व्याप्यजातिशून्यश्च यस्तादृशो गुणस्तद्वत्त्वमिति च साध्यनिरुक्ति-रिति दिक् ।

मूर्त्तत्वादिति । न च परिमाणवत्त्वादित्येव साधु दिक्कालयोर्व्यवच्छे-द्ययोः परत्वाद्यसिद्धिदशायामसिद्धेरिति वाच्यम्, प्रकारान्तरेणापि तयोः सिद्धेरसिद्धावप्याकाशे निरुक्तसाध्याभावेन व्यभिचारात्। क्षणद्वयावस्थायित्वं च हेतुविशेषणमतो न तृतीयक्षणनष्टघटे व्यभि-चारः । तत्र द्वितीयक्षणेऽसमवायिसंयोगोत्पत्त्या परत्वाद्यनुत्पत्तेः। कालिकपरत्वसाधने च गन्धवत्त्वं विशेषणमतो न मनसि न वा जला-दिपरमाणौ व्यभिचारः । न च विशेष्यदलं तथा सति व्यर्थमिति

प्रकाशो बुद्धिः । सा च द्विविधा । विद्या चाविद्या च ।

---

न्यायलीलावतीकण्ठाभरणम्

प्रकाश इति । अनेन बुद्धित्वं लक्षणमुपलक्षयति विषयप्रकरणत्वं

न्यायलीलावतीप्रकाशः

त्वः । दिक्कृतकालकृतपरत्वापरत्वयोरपेक्षाबुद्धिविशेषजन्याविभुवृत्ति मात्रवृत्तिगुणत्वव्याप्यजातिमत्त्वंनैकोपाधिना एकगुणत्वमित्याहुः ।

प्रकाश इति । ननु प्रकाशो बुद्धिरिति पर्यायौ न च पर्यायेन लक्षणम् । किञ्च चैत्रादिपदवत् यत्र बुद्ध्यादिशब्दः सङ्केत्यते तत्रातिव्याप्तिः । ईश्व-

न्यायलीलावतीप्रकाशविवृतिः

वाच्यम्, तत्र तदनुपादानात् । चतुर्विंशतित्वव्याघातमाशङ्क्याह— दिक्कृतेति । परत्वयोरपरत्वयोश्चेत्यर्थः । अपेक्षाबुद्धिविशेष उभयापरत्वा- जनक उभयपरत्वाजनकश्च । अपेक्षाबुद्धिविशेषाजन्यं चाविभुवृत्ति- मात्रं चेति विग्रहस्तेनेश्वरापेक्षाबुद्धिजन्यपरत्वादिवृत्तितया परत्वाप रत्वयोर्नासम्भवः । एवञ्च सुखेऽतिव्याप्तिवारणायाऽविभुपदम् । द्वित्वे ऽतिव्याप्ति (रिति?) मात्रपदम् । गुणत्वव्याप्यपदं च स्पष्टार्थम् । स- त्तागुणत्वादीनां मात्रपदेनैव वारणात् । द्रव्यत्वादेश्च प्रथमप्रतीकेनै- वाप्रसङ्गात् ।

केचित्तु भूयस्त्वाल्पत्वविषयत्वमेव विशेषः । भूयस्त्वादिकं च क- चित्संयोगनिरूपितं क्वचिच्च स्पन्दनिरूपितमित्यन्यदेतत् । एवञ्चाहं भू- योगुणवानित्याभिमानिकसुखातिव्याप्तिवारणायाविभुवृत्तीति । गुणत्व- मादाय तथापि तद्दोषतादवस्थ्यमिति मात्रपदम् । गुणत्वव्याप्यपदं वा भूयस्त्वादिविषयत्वेन च जनकत्वमतो नेश्वरबुद्धिमादाय रूपादाव- तिव्याप्तिरिति व्याचक्षते । तदयुक्तम् । तथा सति तादृशबुद्धिजन्या- विभुवृत्तित्वमात्रस्य च क्षणत्वे जातिगर्भतावैयर्थ्यादिति दिक् ।

पर्यायेति । यद्यप्युभयपदवाच्यत्वमपि लक्षणमविकलमेव नाम कु- र्यादित्यत्र विधेयगतत्वेनैकत्वस्य विवक्षितत्वादन्यत्र पदद्वयवाच्यत्वा- भावास्तथापि शक्यतावच्छेदकमप्रतीत्य वाच्यत्वं प्रत्येतुमशक्यमिति प्रथमोपस्थितत्वेन तदेव लक्षणमुक्तम् । केचित्तु उभयपदवाच्यत्वं करणेऽतिप्रसक्तमिति तदुक्तमित्याहुः । तदयुक्तम् । तद्वाचकत्वे वाक्य- तया सङ्केता(भा?)वात् । नवीनास्तु प्रथमचरमाश्रमविरहितोभयनाम-

तत्राविद्या संशयविपर्ययस्वप्नानध्यवसायलक्षणा। तत्र न ताव-त्संशयस्योभयविधिर्विषयः। पुरुषः स्थाणुश्चेति समुच्चयप्रसङ्गे विकल्पानुपपत्तेः। नाप्युभयनिषेधः। स्थाणुर्न पुरुषो नेतिप्रतीतिप्रसङ्गात्। नाप्यन्यतरनिषेधः। स्थाणुरेवेत्यवधारणप्रसङ्गात्।

---

न्यायलीलावतीकण्ठाभरणम्

वा, इच्छासाक्षात्कारणात्मविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमत्त्वं वा। सूचीकटाहन्यायेन चरमोक्तामप्यविद्यां विभजते—तत्रेति। विषयापेक्षद्वारा संशयमाक्षिपति—तत्र न तावदिति। उभयविधिरिति। उभयोः संशयकोट्योर्विधिरित्यर्थः। न च विरुद्धोभयविषयत्वेन समुच्चयाद्भेदस्तथापि तर्केऽतिव्याप्तिः। उभयनिषेध इति। प्राधान्येनेति शेषः। अन्यतरेति। एकैकनिषेध इत्यर्थः। पुरुषत्वनिषेधपक्षे दोषमाह—स्थाणुरेवेति।

न्यायलीलावतीप्रकाशः

रसङ्केतितत्वस्यापि विवक्षितत्वे तत्रातिव्याप्तेः, द्वादशेऽहनि पिता नाम कुर्यादिति सामान्यतस्तस्यापीश्वरसङ्केतविषयत्वात्। अत्राहुः—पर्यायशब्दाभिधानेन बुद्धित्वं प्रवृत्तिनिमित्तं लक्षणमभिमतम्। न चेदमसिद्धं जानामीत्यनुगतबुद्धिवेद्यत्वात् विशिष्टज्ञानकारणतावच्छेदकतया निर्विकल्पकसविकल्पकसाधारणस्य तस्यावश्यकत्वाच्च। अविद्येति। तद्विशेष्यावृत्त्यप्रकारकं ज्ञानं विद्या। यद् यत्रास्ति तत्र तस्य ज्ञानं वा। तद्भिन्नं ज्ञानमविद्या। संशयमाक्षिपति—तत्रेति। उभयकोटेर्विधिः। विधानमित्यर्थः। पुरुष इति। न च मिथो विरुद्धोभयविषयत्वेन समुच्चयाद्भेदः समुच्चयस्य परस्पराविरुद्धविषयत्वादिति वाच्यम्, तथापि तर्केऽतिव्याप्तेः। 'अन्यतरनिषेधः' एकैकनिषेध इत्यर्थः। स्थाणुरेवेति। ए-

न्यायलीलावतीप्रकाशविवृतिः

वाच्येऽतिव्याप्तिरिति जातिधावनमिति वदन्ति। विशिष्टेति। यद्यपि न ज्ञानत्वं कारणतावच्छेदकमपि तु विशेषणज्ञानत्वं तथापि ज्ञानत्वासिद्धौ तदपि दुर्ज्ञेयमिति तदावश्यकत्वे बाधकाभावाज्जातित्वमिति भावः। विशेष्येति। निर्विकल्पकसङ्ग्रहाय नञ्गर्भता। स्मृतिसंग्रहायानुभवपदमपास्य ज्ञानपदम्। विरुद्धाप्रकारत्वं स्वप्नभिन्नत्वं च विशेषणमतो नातिव्याप्तिः। संशयमिति। संशयलक्षणमित्यर्थस्तेनोपसंहारे संशयव्युत्पादनेन न विरोधः। करणभ्रमनिरासायाह—विधानमिति। वैशिष्ट्यमित्यर्थः। तर्क इति। धूमवानयं यदि धूमाभाववान् स्याद् वह्नि-

नाप्युभयविधिनिषेधौ । उभयावधारणप्रसङ्गात् । निषेधस्यानुपलम्भमात्राद्वा निश्चयः, योग्यतासहिताद्वा । नाद्यः । अतीन्द्रियनिषेधावभासापत्तेः । न द्वितीयः । तत्त्वस्फुरणे अतत्त्वारोपानुपपत्तेः । स्थाणुत्वोपलम्भे च तदनुपलम्भाभावात् । शुक्तिकायां रजतावभास इवाभावावभासानुपपत्तेः । तत्र दोषवशादभावानुपलम्भस्यात्रापि तुल्यत्वात्(१) । दूरत्वादेरप्यत्र(२) सत्त्वात् ।

---

न्यायलीलावतीकण्ठाभरणम्

स्थाणुत्वनिषेधे च पुरुष एवेत्यवधारणप्रसङ्गः । नापीति । स्थाणुरयं न पुरुषः पुरुषोऽयं न स्थाणुरित्यपि न संशयविषय इत्यर्थः । उभयेति । विरोधिकोटिनिषेधस्य विरोधिनिश्चयपर्य्यवसायित्वादिति भावः । निषेधस्फुरणमाक्षिपति—निषेधस्येति । संशयो न निश्चयाभिन्नः सिद्ध इति संशये वक्तव्ये निश्चय इत्येवाह—तत्त्वस्फुरणेति । विधिस्फुरणेत्यर्थः तत्र योग्यानुपलब्धेरभावमाह—स्थाणुत्वेति । अत्र दृष्टान्तमाह—शुक्तिकायामिति । रजतत्वोपलम्भाधीनो न रजतत्वाभावानुपलम्भः किन्तु दोषाधीन इत्याह—तत्रेति । उक्तदोषेण व्य(वाऽ?)र्थं विकल्प्य दूषयति—

न्यायलीलावतीप्रकाशः

तच्च पुरुषनिषेधपक्षे । स्थाणुनिषेधपक्षे तु पुरुष एव स्यादित्यपि द्रष्टव्यम् । उभयविधिनिषेधः पुरुषोऽयं न स्थाणुः स्थाणुरयं न पुरुष इत्यर्थः । उभयेति । अन्यतरकोटिनिषेधस्यापरकोटिनिश्चायकत्वादित्यर्थः । योग्यतेति । यद्यपि योग्यानुपलब्धिरभावनिश्चयहेतुरयं च संशयः । अत एवानुपलम्भमात्रादतीन्द्रिये संशयो भवत्येव तथापीदं तयोर्भेदसिद्धाविव स्यात् सैव चासिद्धेति भावः । तत्त्वस्फुरण इति । स्थाणुत्वपुरुषत्वस्फुरणे तयोरभावारोपानुपपत्तेः । विशेषदर्शने तदभावादित्यर्थः । न वा स्थाणुत्वपुरुषत्वयोरनुपलम्भोऽपि येन निषेधावगमः स्यादित्याह—स्थाणुत्वोपलम्भे चेति । शुक्तिकायामिति । यथा शुक्तौ रजतत्वारोपे रजतत्वाभावः सन्नपि न भासत इत्यर्थः । अत्रापीति । संशयस्यापि दोषजन्यत्वादित्यर्थः । ननु वाशब्दार्थः संशयविषयः स्यादित्यत आह—

---

(१) समानत्वात् । (२) ०पि तत्रापि सत्त्वात् ।

वाऽर्थश्च न द्वयविधिः।न द्वयनिषेधः। अन्यतरनिषेधो वा। कीर्तिं-तद्दोषात्। नापि चरमो, नित्योऽनित्यो वेत्यत्राधिकाभावासत्त्वे तदनुपपत्तेः। नापि विरोधः। तन्निश्चये वाशब्दसम्भेदानुपपत्तेः। एककोटिस्वीकारप्रश्ने (१)च तदनुपपत्तेः। अन्य एवायमाकारभेदः स्ववासनायातो वाशब्दसम्भेदी। अस्थाण्वादिव्यावृत्तिकृतश्च स्थाण्वादिपदप्रयोगः। चित्राकारे(२) नीलादिशब्दसम्भेदवदिति समा-

न्यायलीलावतीकण्ठाभरणम्

व्य(वाऽ?)र्थश्चेति। उभयविधिनिषेधौ वेति चरमं दूषितमपि दूषणान्तरदानाय विशिष्याक्षिपति—नापीति। परस्परविरहरूपयोः कोट्योर्भावत्वाभावत्वयोर्विधिकोटिचतुष्टयाभावादित्याह—अनित्य इति। नित्यत्वानित्यत्वयोः परस्परविरहस्वभावत्वमभ्युपेत्योक्तम्। अन्यथा तयोः सत्तागर्भत्वेन ध्वंसप्रागभावयोर्व्यतिरेक एव तदनुपपत्तेरिति कोटिचतुष्टयानुपपत्तेरित्यर्थः। नापि विरोध इति। वानर्हत्वर्हत्यनुषञ्जनीयम्? । संशयविषय इत्यनुषञ्जनीय इत्येके। गोत्वाश्वत्वे विरुद्धे इत्यत्रापि वाकारसम्भेदापत्तेरित्याह—तन्निश्चय इति। किञ्च चैत्रः श्यामो वा गौरो वेत्यत्राविरोधाभानेऽपि वाकारसम्भेददर्शनादित्युभयतो व्यभिचार इत्याह—एककोटीति। तत् किं संशयविषयो नास्त्येव तथा चानुभवविरोध इत्यत आह—अन्य एवेति। समानधर्मजत्वादिकमिति। आ-

न्यायलीलावतीप्रकाशः

वाऽर्थश्चेति। नापीति। प्रागुक्तविकल्पे चरमः कल्पः उभयविधिनिषेधरूपो वाकारार्थो नापीति संशयस्य विषय इत्यनुपपत्तेर्विरोधोल्लेखानुपपत्तेः न हि नित्यत्वानित्यत्वे सहानवस्थायिनीति तत्र वाशब्दार्थः। तथा च तज्ज्ञानं संशयो न स्यादित्यर्थः। तत्किं संशयस्य विषय एव नास्ति? नेत्याह—अन्य एवेति। स्ववासनेति। अनादितादृशज्ञानजसंस्कारप्रभव इत्यर्थः। वाशब्देति। वाशब्दार्थोऽपि स एव ज्ञानाकार इत्यर्थः। नन्वेवं संशयविषये कथं स्थाणुत्वाद्यवभास इत्यत आह—अस्थाण्वादीति। विचि-

न्यायलीलावतीप्रकाशविवृतिः

मानपि वह्न्यभाववान् स्यादित्यत्रेत्यर्थः। नन्वेवमिति। संशयस्याकार-

(१) ०रपक्षे च त०। (२) विचित्राकार इति प्रकाशधृतः पाठः।

नधर्मादिजत्वं(१) लक्षणमसिद्धमिति केचित्। तन्न(२)। उभयवि-

न्यायलीलावतीकण्ठाभरणम्

दिपदाद् विप्रतिपत्तिजत्वसङ्ग्रहः। तस्याप्यत्यनभ्युपगमे सामान्य-
लक्षणसङ्ग्रहः। असमानधर्म्मजत्वमनध्यवसायलक्षणम्। उभयविधेरि-

न्यायलीलावतीप्रकाशः

त्राकार इति। यथा विचित्राकारेऽलीक एवानीलादिव्यावृत्तिनिबन्धनो
नीलादिपदप्रयोग इत्यर्थः। समानधर्मादीति। आदिपदाद्विप्रतिपत्तेः संश-
यसामान्यलक्षणस्य च संग्रहः। असाधारणधर्मजज्ञानस्याऽनध्यवसा-
यत्वात् संशयस्य स्थाण्वादिभिन्नविषयतया समानधर्मस्य कोऽप्यनुप-
स्थापकत्वात् समानधर्मादिजत्वं लक्षणमसिद्धमित्यर्थः। उभयविधे-
रिति। उभयस्य स्थाणुत्वस्य पुरुषत्वस्य च यो विधिर्वैशिष्ट्यं तस्य
यदुभयनिषेधवैशिष्ट्यं तस्य संशयविषयत्वादित्यर्थः। भावाभावस-
न्देहे च तदभावेऽप्येकस्मिन् धर्मिणि विरोधिनानाप्रकारवैशिष्ट्यं सं-
शयविषय इति भावः। ननु धूमाभाववानयं यदि धूमवान् स्यात् तदा
वह्न्यभाववानयं वह्निमान् स्यादिति तर्केऽतिव्यापकमिदम्। अथ तत्र
धूमाभावविशिष्टे धूमवैशिष्ट्यं विषयः संशये च तुल्यवदुभयवैशिष्ट्यं
विषय इति चेत्, तथाप्येकस्मिन् धर्मिणि विरोध्युभयवैशिष्ट्यमिति
शब्देन जनिते ज्ञानेऽतिव्याप्तिः। जिज्ञासाजनकं ज्ञानं संशयः, न हि सा
निश्चयजन्या अनुच्छेद्यत्वापत्तेरिति चेत् न, उपेक्षणीयसंशयाव्या-

न्यायलीलावतीप्रकाशविवृतिः

विषयत्वे यद्यपि मूले प्रयोगः समर्थ्यत इत्यवभाससमर्थनव्याख्यानं
विरुद्धं तथापि करणव्युत्पत्त्याऽवभासपदेनापि प्रयोग एवोक्त इति
ध्येयम्।

यथेति। यद्यप्यलीकेऽनीलव्यावृत्तिरपि नास्ति तथापि तन्मते
व्यावृत्तेरलीकतयाऽसत्ख्यात्या तदुपस्थितेस्तत्प्रयोग इति भावः।
संशयसामान्यलक्षणस्येति। पूर्वं दूषितस्य विरुद्धोभयविधिविषयत्वादेरि-
त्यर्थः। नन्वसाधारणधर्मजत्वमेव किमित्यादि पदसंग्राह्यं नोक्तमि-
त्यत आह—असाधारणेति। तथा च तत् संशयलक्षणमेव नेति भावः।

(१) समानधर्म्मजत्वादिकं (२) ति चेन्न,

न्यायलीलावतीकण्ठाभरणम्

ति । चतुष्कोटिकमनेनोक्तम् । भावाभावसन्देहेऽपि भावत्वमभावत्वं स्वभावाभावत्वं भावाभावत्वं च कोटिचतुष्टयं यथाकथञ्चिदुपपाद्यम् ।

न्यायलीलावतीप्रकाशः

पनाश्चैतद्योग्यतायाश्च तदवच्छेदकधर्माज्ञानादप्रतीतेः । ज्ञाने वा तस्यैव लक्षणत्वापत्तेः । अनध्यवसायेति व्याप्तेश्च संस्काराजनकं ज्ञानं संशयः । यद्यपि निश्चयोऽपि क्वचित्तथा तथापि तत्र तज्जनकतावच्छेदकरूपवत्त्वमस्ति संशये तु न तथात्वं स्थाणुर्वा पुरुषो वेति स्मरणाभावात् । संशयस्य हि नेन्द्रियार्थसन्निकर्षमन्तर्भाव्य सामग्री तद्विच्छेदेऽपि मनसैव तज्जननादिति चेन्न, तस्याप्यनुगतरूपानुपस्थितौ तत्राग्रहात् । अथ संशयत्वं जातिः । न च चाक्षुषत्वादिना परापरभावानुपपत्तिः, सर्वत्र हि मानस एव संशयः सौदामिनीस्फुरितादौ कश्चित्समानधर्मवन्तं धर्मिणमालोक्यान्धकारेऽपि सन्देहात् चक्षुराद्यनुविधानस्य चानुमिताविव धर्मिग्रहोपक्षीणत्वात् बहिरिन्द्रियजन्यत्वेऽपि गत्वतारत्वत्वचाक्षुषत्वादिव्याप्यतज्ज्ञानात्वेनाप्युपपत्तेः । मैवम् । तथासति धर्म्यंशेऽपि संशयत्वापत्तेः, जातेर्व्याप्यवृत्तित्वनियमात् ।

अत्राहुः । संशयविषयबोधकशब्दस्यायोग्यतया ज्ञानाजनकत्वाच्च

न्यायलीलावतीप्रकाशविवृतिः

तथापि तज्जनकेति । निश्चयत्वमेवावच्छेदकमिति योग्यता तत्राप्यस्त्येव । तदभाव एव च लक्षणमिति भावः । नन्विन्द्रियार्थसन्निकर्षजत्वेन संशये निश्चयत्वमस्त्येवेति तदपि संस्कारजननयोग्यमेवेत्यत आह— संशयस्य हीति । तथा च तदद्वयसिद्धमेवेति भावः । यद्वा संशयात्मकस्मरणाभावादित्येवासिद्धम्, इन्द्रियव्यापारविगमेऽप्यनुभूयमानस्य संशयस्य स्मरणत्वावश्यकत्वादत आह—संशयस्य हीति । न च बहिरिन्द्रियसन्निकर्षमन्तर्भाव्यैव तत्सामग्रीति मनसैव ज्ञानात्मकसन्निकर्षसहितेन तत्रानुभवात्मकसंशयजननम्, अननुभूतबहिरिन्द्रियगोचरार्थनिश्चये मनसो ज्ञानसन्निधिकल्पनादिति भावः । तस्येति । संस्कारजनकत्वाभावस्याप्यनुगताधिकरणानिष्ठरूपाऽप्रत्ययेऽप्रत्यय एव । तत्प्रत्यये तु तदेव लक्षणमिति भावः । तज्ज्ञानात्वेति । इदं चापाततो वस्तुतः पूर्वोक्तमेव सम्यक् । एवं सत्यननुगमेन लक्षणत्वाभावादित्यवधेयम् । संशयविषयेति । तथा चैकस्मिन् धर्मिणि विरोधि-

धेरुभयनिषेधवैशिष्ट्यस्य विषयत्वात्। दूरत्वात्तु(१) विशेषाग्रहे स्मृतिस्तयो(२)र्भावाभावयोरारोपात्। ऊर्ध्वत्वस्यैवोभयराशिसा-

न्यायलीलावतीकण्ठाभरणम्

तत्त्वस्फुरण इति दूषयति—दूरादिति। अनेन वैशेषिकमते संशयसाम ग्र्येवोक्ता सन्निकर्षाभावादिति दोषमाहात्म्यप्रकाशनार्थं विकल्प

न्यायलीलावतीप्रकाशः

तत्रातिव्याप्तिः। यद्वा एकस्मिन् धर्मिणि विरोधिनानाप्रकारकं ज्ञानं संशयः। न चैतल्लक्षणवाक्यजज्ञानेऽतिव्याप्तिः, तस्य विरोधिनानाप्रकारकत्वप्रकारकत्वात् संशये च विरोधिनोरेव प्रकारत्वात्। यद्वा विरोधिनानारूपावच्छिन्नविषयताप्रतियोगिज्ञानं संशयः। समूहालम्बने तु विरोधिप्रत्येकप्रकारावच्छिन्ना भिन्नैव विषयता न तु विरोधिनानारूपं निरूपितैकेति। तत्त्वस्फुरण इति दूषयति—दूरत्वादिति। विशेषाग्रहे धर्मिनिष्ठतया व्यावर्त्तकधर्माग्रह इत्यर्थः। एतेन स्मर्यमाणारोपरूपे संशये कोटिस्मारकत्वेन समानदर्शनस्य हेतुत्वमुक्तम्। न च समानधर्मज्ञानं न संशयहेतुः, तस्य कोटिस्मरण एवोपक्षयात् तदन्तरेणापि संशयोपपत्तेश्चेति वाच्यम्। तुरगादौ वेगेन गच्छतः को-

न्यायलीलावतीप्रकाशविवृतिः

नानावैशिष्ट्यविषयकज्ञानत्वमेव लक्षणम्। न चोक्ततर्केऽतिव्याप्तिः। पूर्वमेव निरस्तत्वादिति भावः। ननु संशयानुव्यवसायेऽतिव्याप्तिः। तस्यापि संशयविषयवैशिष्ट्यविषयकत्वादित्यरुचेराह—यद्वेति। विरोधित्वं भासमानविरोधकत्वमतो विरोधाभानकालीनस्थाणुपुरुषसमुच्चये नातिव्याप्तिः। संशये चावश्यं विरोधभानात्। न चानव्यवसाये अतिव्याप्तिः। विशेषतो नानाप्रकारकत्वस्य विवक्षितत्वात्। नन्वाहार्यभ्रमातिव्याप्तिः। न चाहार्य्यान्यत्वेन विशेषणमाहार्यसंशयाव्याप्तेरिति चेन्न, विरोधभानकालीनस्याहार्यज्ञानस्य संशयतया सङ्ग्राह्यत्वात्। तदभानकालीनस्य लक्षणायोगादिति दिक्। तस्येति। एतेन संशयानुव्यवसायातिव्याप्तिरपि परास्तेति भावः। अतिरिक्तविषयतामाश्रित्याह—यद्वेति। एकस्मिन्धर्मिणीति विशेषणं विरोधिवत्त्वं च प्रागिवातो न समुच्चयेऽतिव्याप्तिः। वस्तुतो विरोधिपदेन भावाभा-

(१) दूरादिति कण्ठाभरणधृतः पाठः। (२) स्मृतिस्थयोर्भा०।

धारण्येनोभयराशिस्मारकत्वात् । दोषमाहात्म्यात् तदनुपलम्भा-भावेऽपि सन्निकर्षाभावे रजतारोपवत्(१) कोटिचतुष्टयारोपोप-

---

न्यायलीलावतीप्रकाशः

ह्युपस्थितौ विशेषाग्रहे च समानधर्मग्रहं विना संशयादर्शनात् समानधर्मोत्कर्षेण संशयोत्कर्षदर्शनाच्च योग्यानुपलम्भाभावे कथमभावग्रह इति दूषयति—दोषेति । योग्यानुपलम्भो ह्यभावप्रमां प्रति कारणं न त्वभावज्ञानमात्रं प्रतीति भावः । सन्निकर्षाभाव इति । यद्यपि विशिष्टप्रत्यक्षमात्रे न विशेषणसन्निकर्षो हेतुः किन्तु विशेष्यसन्निकर्षः । स च भ्रमेऽस्त्येव तथाप्ययं स इति भ्रान्तविपरीतप्रत्यभिज्ञाने तत्ताश्रयस्य विशेष्यस्यासन्निकर्षेऽपि भ्रमोत्पत्तिमभिप्रत्योक्तं स्फुरितयोरिति । स्फुरितत्वं विशेषणं न तूपलक्षणम् । 'विकल्पविषयत्वात्'संशयविषय-

न्यायलीलावतीप्रकाशविवृतिः

त्वेवोक्तौ । न च तयोः समुच्चयसम्भवः । न च स्थाणुपुरुषसंशयाद्यव्याप्तिस्तस्यापि चतुःकोटिकत्वाभ्युपगमात् । अयं च प्रकारः पूर्वलक्षणेऽपीति सारम् । अन्यथा पीतः शङ्ख इत्यत्रातिव्याप्तिः । न च तत्र विरोधभानमेव नेति वाच्यम् , उपनीतस्य तस्य भानाविरोधात् । न चोपनायकविरोधज्ञाने सति तादृशं ज्ञानमेव नेति वाच्यम् , प्रत्यक्षे विरोधिज्ञानमात्रस्याप्रतिबन्धकत्वात् । समानधर्मग्रहं समानधर्मवद्धर्मिग्रहम् । संशयोत्कर्षेति । उत्कर्षश्च बहुकालस्थायिसजातीयसाहित्यमेवेति भावः । अभावप्रमामिति । अभावनिश्चयत्वावच्छिन्नमित्यर्थः । भेदश्च निश्चयसंशययोरुपपादित एवेति भावः । यदि च योग्यानुपलम्भो विशेषसामग्री तदा यथाश्रुतमेव । तथाप्ययं स इति । तत्राश्रयतया विशेष्यत्वमिति विपरीतेत्युक्तम् । यद्यपि विशेषासन्निकर्षे साक्षात्काराभावादयुक्तमिदम्, एतादृशप्रत्यभिज्ञानस्य च मानसस्य मनःसन्निकर्षेण ज्ञानेनैवोपपत्तेः । तथापि यः कश्चिदेकदेशी सन्निकर्षं विनापि बहिरिन्द्रियेणैवायं भ्रम इति मन्यते तन्मतेनायं दृष्टान्त इति भावः । अत एवाह—अभिप्रेत्येति । अभ्युपेत्येत्यर्थः । वस्तुतो विशेषणसन्निकर्षस्य सामान्यकारणत्वं सम्भवदपि रजतभ्रमानुरोधेन यथा त्यज्यते तथा

---

(१) ०रोपात् को० ।

पत्तेः। एकत्र धर्मिणि स्फुरितयोर्विरोधस्यैव(१) विकल्पविषयत्वात्। तस्यैव वाशब्देनाभिलापादिति सर्वं सुस्थम्। परस्परविरुद्धार्थावमर्शः संशय(२) इति लक्षणम्। [इति संशयः।]

---

न्यायलीलावतीकण्ठाभरणम्

विषयं विवेचयनवाधारार्थमपि(?)विवेचयति—एकत्रेति। संशयविषय एव विरोधो वाशब्देनाभिलप्यत इत्यर्थः। एककोटिपरिग्रहप्रश्नेऽपि कथञ्चिद्विरोध एव वाकारार्थः। स गौरः श्यामो वेतिवत्। यद् द्रव्यं घटो वेतिप्रश्नानुदयात्। परस्परेति। ननु धूमाभाववानयं यदि धूमवान् स्याद् वह्न्यभाववानयं वह्निमान् स्यादिति तर्के अतिव्यापकमेतत्। किञ्च लक्षणवाक्यजन्यज्ञानेऽतिव्याप्तिस्तेनापि तादृशज्ञानजननात्। न च जिज्ञासाजनकज्ञानवत्त्वं लक्षणम्, उपेक्षणीयसंशयेऽव्याप्तेः, जनकतावच्छेदकप्रकारापरिचयाच्च। परिचये वा तस्यैव लक्षणत्वात्। अनध्यवसायातिव्याप्तेश्च। संस्काराजनकज्ञानत्वं च क्वचिन्निश्चयेऽतिव्यापकं तत्र निश्चयत्वेनैव संस्कारजननयोग्यतेति चेत्, न, स्थाणुपुरुषसंशयानन्तरं स स्थाणुः पुरुषो वेति स्मृतिसम्भवेन संशयस्यापि संस्कारजनकत्वात् तन्न स्मरणं किन्तु संशय एवायमपरो न हि चक्षुरादिसन्निकर्षावश्यकत्वं संशये विद्युत्सम्पतनादौ धर्मिदर्शनानन्तरं तादृशमानससंशयाद्यनुभवादिति चेन्न, निश्चयव्यावृत्तेन रूपेण संस्काराजनकत्वस्यैवाग्रहात्। न च संशय-

न्यायलीलावतीप्रकाशः

त्वादित्यर्थः। तस्यैवेति। संशयविषयस्यैवेत्यर्थः। न चैवं धर्मिण्यपि वाकारान्वयः स्यात्तस्यापि विषयत्वादिति वाच्यम्, प्रकारस्यैव विषयत्वेन विवक्षितत्वात्। परस्परेति। एकस्मिन् धर्मिणीति शेषः। तेन न समूहालम्बनातिव्याप्तिः।

न्यायलीलावतीप्रकाशविवृतिः

योग्यानुपलम्भस्यान्यभावज्ञानसामान्यकारणत्वमिति मूलार्थ इति भाति। अतीतत्वमर्थो न विवक्षित इत्याह—स्फुरितत्वमिति। स्फुरणमित्यर्थः। तथा च स्फुरितो मूलार्थ इति भावः।

---

(१) ०योराकारयोर्वि०। (२) परस्परविरुद्धयोरवमर्श इति ल०।

विपर्ययोऽप्यतस्मिंस्तदिति प्रत्ययः । यथा शुक्तिकायां रजतमिति ज्ञानम् । ननु चात्र पुरोवर्त्तिज्ञानं दोषवशोपजाततदंशमोषं रजतत्वसामान्यस्मरणं, रजतत्वस्य च पुरोवर्तिनि समवायतदभावयोरज्ञानं प्रवृत्तिव्यपदेशादिरूपव्यवहारे कारणम् । सत्यरजतेऽपि तथैव प्रवृत्तिदर्शनात् । तत्रापि रजतव्यक्तिज्ञानं

---

न्यायलीलावतीकण्ठाभरणम्

त्वं जातिश्चाक्षुषत्वादिना परापरभावानुपपत्तेः । न च सर्वत्र मानस एव संशयः, चक्षुराद्यन्वयव्यतिरेकदर्शनात् । सौदामिनीसम्पातादिस्थले मानसोऽपि स्यान्न विरोधः, धर्म्मांशेऽपि संशयत्वापत्तेः, जातेर्व्याप्यवृत्तित्वात् । मैवम् । एकधर्म्मिकविरोधिनानाप्रकारकज्ञानस्य संशयत्वात् लक्षणवाक्यजन्यज्ञानस्य विरोधिनानाप्रकारकत्वप्रकारकत्वादिति ।

विपर्य्ययोऽपीति । जाग्रद्दशाकविशेष्यावृत्तिप्रकारकनिश्चयत्वमिति लक्षणम् । ननु प्रवृत्तिः पुरोवर्त्तिनि ज्ञानं च रजतत्वप्रकारकमतः प्रवृत्त्यनुरोधादन्यथाख्यातिः स्वीकर्त्तव्या प्रवृत्तिश्चान्यथोपपन्नेत्याह—ननु चेति । पुरोवर्त्तिनि रजतत्वस्य समवायज्ञानेऽन्यथाख्यातिस्तदज्ञाने चाप्रवृत्तिरित्याशङ्क्याह—रजतत्वस्येति । नन्वेमननुगम इत्यत आह—सत्यरजतेऽपीति । अनुगमने वाऽह—तत्रापीति । ननु तत्र समवाये सति कथं

न्यायलीलावतीप्रकाशः

विपर्ययोऽपीति । निश्चयत्वे निद्राद्यजन्यत्वे च सति विशेष्यावृत्तिप्रकारकं ज्ञानमित्यर्थः । ननु पुरोवर्त्तिनि रजतत्वसमवायग्रहणे विशिष्टज्ञानस्वीकारापत्तिः, तदभावग्रहणे चाप्रवृत्तिप्रसङ्ग इत्यत आह—समवायेति । ननु संवादिरजतार्थिप्रवृत्तौ सामग्र्यन्तरकल्पनादननुगमः

न्यायलीलावतीप्रकाशविवृतिः

संशयानध्यवसायस्वप्नेष्वतिव्याप्तिभयादाह—निश्चयत्व इति । निश्चयत्वं न संशयभिन्नत्वमनध्यवसायातिव्याप्तितादवस्थ्याद , किन्तु अविरोधिकोटिकत्वम् । केचित्तु निद्रादीत्यादिपदेनानध्यवसायकारणग्रहात्तेनैवानध्यवसायवारणे निश्चयत्वं संशयभिन्नत्वमेवेत्याहुः ।

रजतत्वबोधश्चान्तरालिकव्यक्त्यन्तरापरिस्फुरणं समवायाज्ञानं च तत्प्रतिपादकलिङ्गाभावात् । अविसंवादिव्यवहारजनकत्व-विशिष्टसाकाङ्क्षरूपरूपिसहोपलम्भो हि तल्लिङ्गम् । विसंवादि-व्यवहारजनकयोः पीतत्वशङ्खयोः समवायाभावात् । तदविसं-वादित्वं तु प्रवृत्त्युत्तरकालगम्यम् । प्रवृत्तेः पूर्वमप्रतीतमसिद्ध-

---

न्यायलीलावतीकण्ठाभरणम्

समवायाज्ञानमत आह—तत्प्रतिपादकेति । भ्रमस्थलेऽपि साकाङ्क्षरूप-रूपिसहोपलम्भो न तु समवाय इत्यत उक्तमविसंवादीति । 'सहोप-लम्भो' ज्ञानान्तरानन्तरितोभयोपलम्भो न त्वेकज्ञानारोहः, अन्यथा विशेषणवैयर्थ्यात् । अप्रतीतमित्यस्य विवर[णम]सिद्धमिति । नन्वज्ञा-

न्यायलीलावतीप्रकाशः

स्यादित्यत आह—सत्यरजतेऽपीति । आन्तरालिकेति । रजतत्वानाश्रयव्य-क्त्यस्फुरणमित्यर्थः । ननु सत्यरजते सन्नपि रजतत्वसमवायः कुतो न भासत इत्यत आह—समवायाज्ञानं चेति । शब्दरूपादिन्द्रियसम्बन्धः(?)प्रत्य-क्षत्वादितीन्द्रियप्रत्यासत्तितया समवायसिद्धेस्तस्यातीन्द्रियत्वे तज्ज्ञा-पकलिङ्गाभावादित्यर्थः । तदेव स्पष्टयति—अ(वि?)संवादीति । साकाङ्क्षेति । अगृहीतासंसर्गत्वं साकाङ्क्षत्वं तादृशधर्मधर्मिविषयकमित्यर्थः । तच्च विसंवादिप्रवृत्तिस्थलेऽप्यनैकान्तिकमत उक्तमविसंवादीति । ताव-न्मात्रं समवेताकाशाद्युपलम्भेऽनैकान्तिकमत उक्तं साकाङ्क्षेति । नत्वे-तदप्यभावतदाश्रयसहोपलम्भेन व्यभिचारि भावत्वेन विशेषणेऽपि समवायतद्वत्सहोपलम्भेन व्यभिचारः । मैवम् । अविसंवादित्वस्य बाधकाभाववैशिष्ट्यात्मकत्वात् । तथा च बाधकाभावविशिष्टसाका-

न्यायलीलावतीप्रकाशविवृतिः

रजतत्वानाश्रयेति । रजतत्वानाश्रये पुरोवर्तिव्यक्त्यस्फुरणमित्यर्थः । अ-न्यथा प्रकृतानुपयोगात् । प्रत्यासत्तितयेति । अतीन्द्रियत्वं चालौकि-कप्रत्यासत्तितया । अन्यथा ज्ञानादौ व्यभिचारादिति वदन्ति । वस्तुतो गुरूणामिदमनुमानमिति यथाश्रुतमेव सम्यक् । व्यभिचारीति । अति-रिक्तसम्बन्धजन्यत्वे साध्य इति शेषः । अविसंवादित्वस्य अविसंवा-दिव्यवहारजनकत्वस्य । तथा चेति । न च बाधकाभावादित्येव सम्यक्

माभासभूतं देशकालानवच्छिन्नरजतत्वसमवायिस्मरणदर्पणारूढ-

---

न्यायलीलावतीकण्ठाभरणम्

नरूपाऽसिद्धिर्न दोष इत्यत आह—आभासभूतमिति । तस्याप्याभास-त्वादित्यर्थः। रजतत्वासंसर्गाग्रहस्य प्रवर्त्तकत्वमुक्त्वा इष्टभेदाग्रहस्य तदाह—देशेति। भेदज्ञानार्थमाह—देशकालानवच्छिन्नेति। रजतत्वपुरोव-

न्यायलीलावतीप्रकाशः

क्षधर्मिसहोपलम्भस्य सम्बन्धनियतत्वात् संयोगबाधे समवायसि-द्धिः। अप्रतीतत्वमात्रं न दोष इत्यत उक्तमसिद्धम्। अस्यापि दोषत्व-माह—आभासेति। हेत्वाभासस्य चानुमित्यसाधारणदोषत्वमिति भावः। एवं पुरोवर्त्तिव्यक्तिरजतत्वयोरसंसर्गाग्रहस्य प्रवर्त्तकत्वमुक्त्वा पुरोव-र्त्तिव्यक्तिरजतत्वाश्रययोर्भेदाग्रहस्य तदाह—देशकालेति। प्रत्यक्षेणेदमिति शुक्तिर्गृह्यते दोषात्तत्र शुक्तित्वं न गृह्यते गृहीतेन शुक्लभास्वरत्वेन रजतं स्मार्यते दोषात्तयोर्भेदः सन्नपि न भासते। एतावता रजतार्थिप्रवृत्तिर्जा-यते। यत्र सत्यरजते प्रवृत्तिस्तत्रापि रजतेन भेदाग्रहोऽस्त्येव परं तत्र विद्यमानतया भेदो न गृह्यते। शुक्तिरजतयोस्तु सन्नपि न गृह्यत इति न कश्चिद्विशेष इत्यर्थः। येनापि शुक्तिरजतयोस्तादात्म्यभानं वाच्यं तेनापि तयोर्भेदाग्रहो वाच्यः, भेदग्रहे सत्यभेदारोपायोगात्। तथा च तावन्मात्रमेवास्तु लाघवादिति यदारोपे हेतुस्तत्प्रवृत्तावेवास्तु। न चैवं ज्ञानसाध्यव्यवहारोपपत्तौ ज्ञानमात्रापलापः, अनन्यथासिद्ध

न्यायलीलावतीप्रकाशविवृतिः

बाधकाभावपदेन स्वरूपसम्बन्धाविषयत्वस्योक्तत्वात्। न च विसं-वादिस्थले व्यभिचारः। अविसंवादिव्यवहारजनकत्वस्यापि विशे-षणत्वात्। एवञ्च बाधकाभाववैशिष्ट्यात्मकत्वादित्यस्य बाधकाभाव-वैशिष्ट्यविशेषणकत्वादित्यर्थः सम्पद्यते। केचित्तु निर्विषयकभाव-मात्रविषयकविशिष्टसाक्षात्कारित्वमेव हेतुरनेनोपलक्षित इत्याहुः। 'स म्बन्धनियतत्वात्' अतिरिक्तसम्बन्धनियतत्वात्। ननु भेदग्रहापेक्षया ऽभेदज्ञानमेव लघिवति तदेव प्रवृत्तिकारणमस्त्वित्यत आह—येनापीति। तथा च तस्यावश्यकतया तद्धेतोरेवेतिन्यायात्स एव कारणमिति भावः। ननु शुक्तिं रजततयाऽज्ञासिषमिति प्रतीतिबलाद्भ्रमोऽपि वि-

मनुभूतपुरोवर्तिना वस्तुना अगृहीतभेदं वा प्रवृत्तिकारणं भेद-
ज्ञानमसमवायज्ञानं च निवर्तकमिति व्यवस्थिते प्रयुज्यते विवा-

---

न्यायलीलावतीकण्ठाभरणम्

र्त्तिनोभेदाग्रह इत्यर्थः। भेदज्ञानमिति। इष्टभेदाज्ञानमित्यर्थः। असमवायज्ञान-
मिति। रजतत्वासंसर्गज्ञानमित्यर्थः। उभयसिद्धयथार्थज्ञानेऽज्ञातः स्वि-

न्यायलीलावतीप्रकाशः

जानामीत्यनुव्यवसायसाक्षिकत्वात्तस्य। भ्रान्तिश्च न पुरोवर्त्तिरज-
तयोस्तयोः सत्त्वात्। नापि तयोस्तादात्म्ये तस्यात्यन्तासत्त्वेना-
सत्ख्यात्यापत्तेरिति भावः। न त्विदं रजतमित्यत्र शुक्त्या समं
पुरोवर्त्तिनो भेदग्रहेऽन्यथाख्यात्यापत्तिः, तदग्रहे चानिष्टभेदाग्र-
हान्निवर्त्तेत।

अथानिष्टतावच्छेदकरूपेणोपस्थितानिष्टभेदाग्रहान्निवृत्तिर्न चेद-
न्त्वमनिष्टतावच्छेदकं तथापीदं रजतं न शुक्तिरित्यत्रानिष्ट-
तावच्छेदकशुक्तित्वेनोपस्थितभेदाग्रहान्निवर्त्तेत। मैवम्। स्वात-
न्त्र्येणोपस्थितेष्टानिष्टभेदाग्रहयोः प्रवृत्तिनिवृत्तिहेतुत्वात्, अभाववि
शेषणत्वेनानुपस्थितिश्च स्वातन्त्र्यमनिष्टं च तत्राभावविशेषणतया
भासते। ननु तथापि भेदाग्रहो न प्रवर्त्तकः सत्यरजतस्थले तदभा-
वात्। न हि तत्रेष्टपुरोवर्त्तिप्रतियोगिको भेदोऽस्ति यस्याग्रहः प्रवर्त्त-
येत्। मैवम्। पुरोवर्त्तिनीष्टभिन्नत्वप्रकारकज्ञानाविषयत्वाभावस्य प्रव-
र्त्तकत्वात् सत्यरजतस्थले पुरोवर्त्तिरजतत्वविशिष्टज्ञानसत्त्वेऽपि त-

न्यायलीलावतीप्रकाशविवृतिः

शिष्टज्ञानात्मा स्वीकर्त्तव्य इत्यत आह—भ्रान्तिश्चेति। तथा च बाधका-
त्सोऽप्यसंसर्गाग्रह इति भावः। अभावविशेषणतयेति। न चैवं गृहनि-
ष्ठाभावप्रतियोगीदं रजतमित्यतोऽप्रवृत्त्यापत्तिः। तत्र च रजतमित्यं-
शस्याभावाविशेषणतयोपस्थितिरूपत्वादित्यन्यत्र विस्तरः।

पुरोवर्त्तिनीति। पुरोवर्त्त्यगृहीतासंसर्गं यदिष्टभिन्नत्वं तत्प्रकारक-
ज्ञानाभावस्येत्यर्थः। अन्यथा रजत एव नेदं रजतमिति ज्ञानात्प्रवृ-
त्त्यापत्तेः। न च रजतत्वे रजतनिष्ठाभावप्रतियोगित्वारोपस्तत्राप्येवं
प्रवर्त्तेतेति वाच्यम्, इष्टतावच्छेदकागृहीतासंसर्गं यत्पुरोवर्त्तिनिष्ठा-
भावप्रतियोगित्वं तज्ज्ञानाभावस्यापि कारणत्वात् प्रतिबन्धकाभाव-

दाध्यासिताः सर्वे प्रत्यया यथार्थाः प्रत्ययत्वात् घटप्रत्ययवदिति गुरुमततत्त्ववेदिनः ।

अत्रोच्यते । व्यवहारो हि व्यवहर्तव्योपलम्भनिबन्धनो

---

न्यायलीलावतीकण्ठाभरणम्

द्धसाधनवारणाय विवादाध्यासिता इति ।

व्यवहारो हीति । इदं रजतमित्यत्राभेदो व्यवह्रियते । स चाभेदोपल-

न्यायलीलावतीप्रकाशः

स्य रजतत्वपुरोवर्त्तिज्ञानत्वेन हेतुता न तु रजतपुरोवर्त्तिविशिष्टज्ञानत्वेन गौरवात् । एवं च तत्र रजतपुरोवर्त्तिज्ञानत्वमेकत्र ज्ञाने अत्र ज्ञानद्वय इति विशेषः । सर्वे प्रत्यया इति । ननु प्रसिद्धज्ञानपक्षत्वे सिद्धसाधनमतिरिक्तज्ञानपक्षत्वे चाश्रयासिद्धिः। किञ्च धर्मिणि सर्वज्ञानानां यथार्थत्वात् सिद्धसाधनम् । न चायथार्थत्वाभावः साध्यः प्रतियोग्यप्रसिद्धेः । मैवम् । ज्ञानत्वं न विशेष्यावृत्तिप्रकारावच्छिन्नवृत्ति ज्ञानमात्रवृत्तिधर्मत्वात् प्रमात्ववदिति विवक्षितत्वात् । भेदाग्रहकारितायां शुक्तौ रजतत्वेन पुरोवर्त्तिनमिच्छामीत्यत्र इच्छायां विशेष्यावृत्तिना रजतत्वेनावच्छेदस्य प्रसिद्धत्वात् ।

व्यवहारो हीति । व्यवहारोऽत्रेच्छाप्रवृत्तिरूपः । अयमर्थः—रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिजनकं रजतज्ञानं शुक्तिविषयकं तद्विषयतां विना तद्विषयप्रवृत्त्यजनकत्वात् सर्वैरेवाद्यप्रवृत्तौ लाघवादुपस्थितत्वाच्च ज्ञानं स्वविषये प्रवृत्तिं जनयतीत्यनन्यथासिद्धकारण-

न्यायलीलावतीप्रकाशविवृतिः

कूटस्याकारणत्वात् । न चैवं गौरवं कारणबाधेन विशिष्टज्ञानबाधे प्रामाणिकत्वादिति दिक् । अत्रेति । भ्रमस्थल इत्यर्थः । यद्यपि रजतपुरोवर्त्तिज्ञानत्वं तदुभयविषयज्ञानत्वं तच्च न प्रत्येकमिति नोभयत्रापि, तथापीष्टज्ञानं भेदाग्रहे कारणतावच्छेदकमिदं ज्ञानमेव समानविशेष्यकतया प्रवर्त्तकमित्यत्र तात्पर्यम् । व्यवहारो यदि व्यवह्रियत इति व्युत्पत्त्या ज्ञानमुच्यते तदा तस्य व्यवहर्त्तव्योपलम्भनिबन्धनत्वं विरुध्येतेत्यत आह—व्यवहारोऽत्रेति । ननु व्यवहर्त्तव्यस्य शुक्त्यादेरिदमित्याकारोपलम्भो वर्त्तत एवेत्यत आह—अयमर्थ इति ।

न तु व्यवहरणीयविपर्ययानुपलम्भनिबन्धनः। न हि घटव्यव-
हारस्तन्मतिमतिक्रम्य कलसाविपर्ययानुपलम्भेन भवति। यदि तु

---

न्यायलीलावतीकण्ठाभरणम्

म्भात् भवति न त्वभेदाभावस्यानुपलम्भादित्यर्थः। न हीति। घटाभा-
वानुपलम्भाधीनो न घटव्यवहारः किन्तु घटोपलम्भाधीन इत्यर्थः।
ननु व्यवहर्त्तव्याभावानुपलम्भनिबन्धन एवास्तु को दोष इत्यत आह—
यदि त्विति। रजतत्वस्य पुरोवर्त्तिनि संसर्गो न गृह्यते इति त्वया वाच्यम्।
अन्यथा अन्यथाख्यातिरेव स्यात्। तथा च तदनुपलम्भबलेनासंसर्ग-
व्यवहारो निवृत्तिरूपः स्यादित्यर्थः। अनिष्टप्रसङ्गमुक्त्वा तदुपकार्य्य-

न्यायलीलावतीप्रकाशः

ताग्राहकमानेनात्रधृतत्वात् सर्वैरेव प्रथमं गृहीतत्वेन तस्य बलव-
त्त्वात् तत्र बाधकं विना तद्विरोधेन कल्पनान्तरानुदयादिति।

किञ्च संवादिप्रवृत्तिस्थले रजतपुरोवर्त्तिज्ञाने कारणे रजतपु-
रोवर्त्तिवैशिष्ट्यतया तद्वैशिष्ट्यं कारणतावच्छेदकमात्रं कल्प्यता-
मुताभावः कारणं स्वातन्त्र्योपस्थितभेदग्रहाणां प्रतियोगितया त-
द्विशेषकतया च कारणतावच्छेदकत्वमिति संशये ज्ञानवित्तिवे-
द्यतयोपस्थितत्वात् लाघवाच्च रजतार्थिप्रवृत्तिमात्रे वैशिष्ट्यं का-
रणतावच्छेदकत्वेन क्लृप्तमिति न भेदाग्रहः कारणं स्वातन्त्र्या-
दीनां च तदवच्छेदकं कल्प्यते। न च भ्रमकल्पनागौरवं दोषः फलमु-
खगौरवस्य सिद्ध्यसिद्धिपराहतत्वेन प्रामाणिकत्वेन वाऽदूषकत्वा-
दित्यस्मात्पितृचरणाः।

गौरवमेव स्फुटयति—न हीति। प्रतिकूलतर्कोऽयपि न तथे-
त्याह—यदि त्विति। यथा रजतत्वासंसर्गानुपलम्भेन शुक्तौ रजत-
त्वसंसर्गव्यवहारस्तथा रजतत्वसंसर्गानुपलम्भेन रजतत्वासंसर्ग-
व्यवहारोऽपि स्यादित्यर्थः। किञ्च स्वातन्त्र्यस्येष्टाविशेषणत्वे व-
णिग्वि(र्वी?)थीस्थाभावप्रतियोगीदं रजतमिति ज्ञानादप्रवृत्त्यापत्तिः।

न्यायलीलावतीप्रकाशविवृतिः

ज्ञानवित्तीति। समवायात्मकस्य वैशिष्ट्यस्यातीन्द्रियत्वेऽपि धर्मध-
र्मिभावात्मकमेव वैशिष्ट्यं तद्विषय इतिमतेन न्यायमतेन वा
इदमुक्तम्। ननु रजतमित्येवमाकारिका स्वतन्त्रोपस्थितिरपि त-

स्यात् संसर्गानुपलम्भबलेनासंसर्गव्यवहारोऽपि दुर्वारः। तस्माद् यो व्यवहारः स व्यवहर्तव्यप्रकाशनिबन्धनो यथा कलसव्यवहारः। व्यवहारश्चायं विमतिगोचर इति। अपि च वाष्पपूरगोचरधूमव्यवहारोपचाराद्भवति शिखरिशिखरगोचरविचित्रचित्रभा-

---

न्यायलीलावतीकण्ठाभरणम्

प्रमाणमाह—तस्मादिति। नन्विष्टतावच्छेदकप्रकारोपस्थितेष्टभेदाग्रहात् प्रवृत्तिरस्तु न त्वनिष्टभेदाग्रहान्निवृत्तिरपि अनिष्टस्यानिष्टतावच्छेदकप्रकारेणानुपस्थितेरिति चेत्, इदं रजतं न शुक्तिरित्यत्रोभयापत्तेः। अनिष्टमनिष्टतावच्छेदकप्रकारेण उपस्थितमपि न स्वातन्त्र्येण किन्त्वभावप्रतियोगितयेति चेन्न गृहनिष्ठाभावप्रतियोगीदं रजतमित्यादिप्रकारकभ्रमादप्रवृत्त्यापत्तिप्रसङ्गात् तत्र इष्टस्य स्वातन्त्र्येणानुपस्थितत्वात्। किञ्च इमे रङ्गरजते इति भ्रमे युगपत् प्रवृत्तिनिवृत्तिप्रसङ्गात्। इष्टानिष्टयोस्तुल्यवदुपस्थितेः शुक्तिविषयप्रवृत्तिजनकं रजतत्वप्रकारकं शुक्तिविषयकं तद्विषयतां विना तद्विषये प्रवृत्त्यजननात्। ज्ञानस्य स्वविषये प्रवर्तकत्वस्य सर्वैरेवादृतत्वात्। अन्यथाऽतिप्रसङ्गात्। प्रत्यक्षप्रमाया अन्यथाख्यातित्वमुपपाद्यानुमित्यादेस्तदुपपादयति—अपि चेति। धूमज्ञानानन्तरं पर्वते वह्निज्ञानात् प्रवृत्तिर्दृश्यते। सा यदि

न्यायलीलावतीप्रकाशः

अपि च रजतरङ्गयोरिमे रङ्गरजते इति समूहालम्बनभ्रमादिष्टानिष्टतावच्छेदकरूपेण स्वातन्त्र्योपस्थितोभयभेदाग्रहात्प्रवृत्तिवन्निवृत्त्यापत्तिः। अथेमे रङ्गरजते इत्यत्र रङ्गे किञ्चिद्भेदः प्रतीयते रजतभेदस्तु न ज्ञाय (त?) इत्युभयसिद्धम्। तथा च रङ्गनिष्ठतयोपस्थितस्य भेदस्य रजतप्रतियोगित्वाभावग्रहादूरङ्गे प्रवर्त्तते रजतनिष्ठतयोपस्थितस्य भेदस्य रजतप्रतियोगित्वाभावो न गृह्यत इति न तत्र प्रवर्त्तते। यद्वा रजतवृत्तितयोपस्थितभेदस्य रजतभेदेन सह भेदाग्रहो रजते

न्यायलीलावतीप्रकाशविवृतिः

त्रास्त्येव। यद्वा पुरोवर्त्तिगृहीत(१)संसर्गभेदप्रतियोगित्वेनानुपस्थितत्वमिष्टे तादृगत्यन्ताभावप्रतियोगित्वेनानुपस्थितत्वमिष्टतावच्छेदके च स्वातन्त्र्यमिति नोक्तदोष इत्यनुशयादाह—अपि चेति।

---

(१) पुरोवर्त्त्यगृहीतास०।

नुव्यवहृतिः । सा किं संसर्गविज्ञप्तिपूर्विका असंसर्गाग्रहपूर्विका वा । नाद्यः । अन्यथाख्यातिस्वीकारचमत्कारात् । न द्वितीयः । अनुमानमात्रोच्छेदप्रसङ्गात्(१) । एवं शब्देऽपि(२) वाच्यम् ।

न्यायलीलावतीकण्ठाभरणम्

वह्निसंसर्गज्ञानाद् भवेत्तदा निर्वह्नौ संसर्गज्ञानमित्यन्यथाख्यातिरेव । असंसर्गग्रहादेव तत्र प्रवृत्तिरिति यदि तत्राह--अनुमानोच्छेदेति । सद्नुमितिस्थलेऽपि असंसर्गग्रहादेव प्रवृत्तिसम्भवादित्यर्थः । एवमनाप्तोक्ते यदि संसर्गप्रतीतिस्तदा अन्यथाख्यातिः । यदि चासंसर्गग्रहादेव प्रवृत्तिस्तदाऽन्यत्रापि तथेति शब्दाप्रामाण्यमित्याह—एवमिति ।

न्यायलीलावतीप्रकाशः

प्रवृत्तिप्रतिबन्धकः । एवं रङ्गे निवृत्तावपि । अथ वा रङ्गवृत्तितया यो भेद उपस्थितो यश्च रजतप्रतियोगिको भेद उपस्थितस्तयोर्भेदाग्रहो रजते प्रवृत्तिप्रतिबन्धकः । एवं रङ्गनिवृत्तावपि प्रतिबन्धककुह्यः(?) । मैवम् । तथा हि नाद्यः, प्रवृत्तिविषयस्येष्टतया ग्रहः प्रवर्त्तक इति लघुविषयतयैव प्रवर्त्तकत्वे सम्भवति बहुविषयतया प्रवर्त्तकतया प्रवर्त्तकत्वे मानाभावात् । न द्वितीयोऽपि, शब्दाभासाद्विपरीतचतुष्के युगपत्प्रवृत्तिनिवृत्त्यापत्तेः शब्दाद्रजतभेदस्यानुपस्थितेः । अत एव न तृतीयः । अन्यथाख्यातीति । ननु तत्र लिङ्गविशिष्टपक्षज्ञानरूपा नानुमितिसामग्री किन्तु लिङ्गासंसर्गाग्रहमात्रम् । एवमनाप्तोदीरितपदस्मारितपदार्थेष्वपि न योग्यता विशिष्टज्ञानमपि तु तदसंसर्गाग्रहमात्रम् । अत्राहुः । या विशिष्टज्ञानसामग्री सैव प्रवृत्तिहेतुरिति त्वदभ्युपगमः सा चासंसर्गाग्रहरूपेति विषयतया न तत्र वैशिष्ट्यं कारणतावच्छेदकमिति दिक् । अनुमानमात्रेति । ननु प्रत्यक्षाभासं परिहृत्य किमित्य

न्यायलीलावतीप्रकाशविवृतिः

अथ वा रङ्गवृत्तितयेति । रङ्गत्वेनाभिमतं रजतमेवात्र रङ्गपदार्थः । न चैवं पूर्वाभेदः पूर्वमनुपस्थितेन रजतभेदेन रजतनिष्ठतयोपस्थितस्य भेदस्य भेदाग्रह इत्युक्तमधुना तूपस्थितयोस्तयोर्भेदाग्रह उच्यत इति भेदात् । ननु तत्रेति । यद्यपि विकल्पदूषणेनायं पूर्वपक्षः प्रकृतफक्किकोपरि सम्भवी तथापि द्वितीयपक्षस्याग्रे दूषितत्वादिदमेव सिद्धान्तिनो हृदि विपरिवर्त्तते इत्याखण्डलकोपर्य्येवायं पूर्वपक्ष इति प्रति-

(१) अनुमानोच्छेदप्रसङ्गादिति कण्ठाभरणधृतः पाठः । (२) च शब्देऽपि ख० ।

असंसर्गाग्रहस्य बाधिताबाधितव्यवहारकारणत्वे व्यवहारवैचित्र्यं संवादित्वासंवादित्वरूपं न स्यादिति संवादिव्यवहारः संसर्गवि-

---

न्यायलीलावतीकण्ठाभरणम्

अबाधितो व्यवहारः संसर्गाधीन इति लिङ्गादीनां संसर्गव्यवहारजनकत्वात् प्रामाण्यमिति शङ्कते—असंसर्गेति । संसर्गस्य वास्तवत्वावास्त·

न्यायलीलावतीप्रकाशः

नुमानाभास उदाहृतः, यावता तत्रापि शक्यते वक्तुं यद्यसंसर्गाग्रहात्संसर्गव्यवहारः तदा संसर्गज्ञानोच्छेदप्रसङ्गः । न च बाधाबाधाभ्यां व्यवस्थाबाधस्य विपरीतप्रमात्वे तस्यापि विशिष्टज्ञानत्वे मानाभावात् । अत्रोच्यते—प्राथमिकसत्यरजतप्रत्यक्षस्थले रजतत्वस्य न स्मृतिः प्रागननुभवात् ग्रहणं च तस्याक्षसंयुक्तयोग्यविशेष्यरजतसमवायेन भवद्धर्मधर्मिविषयकमेकमेवोत्पद्यते विशेष्यभानसामग्र्यन्तर्भूतत्वाद्विशेषणभानसामग्र्याः अगृहीतासंसर्गधर्मधर्मिविषयैकैकज्ञानविषयत्वमेवं च परदर्शने विशिष्टत्वमित्यनुभवसिद्धं यथार्थप्रत्यक्षस्य विशिष्टज्ञानत्वमित्यनुमित्याद्युच्छेद उक्तः । अथ वन्हिसंशयानन्तरं यत्र धूमासंसर्गाग्रहाद्वह्न्यर्थिप्रवृत्तिर्दृश्यते तत्र यदि वह्न्यसंसर्गाग्रहस्तस्य व्यापारः स्यात्तदा धूमासंसर्गाग्रहात्प्रागपि प्रवृत्त्यापत्तिः संशयानुरोधेन प्रागपि सत्त्वात् । तस्मान्निर्वह्नौ तस्य वह्न्यनुमितिर्द्वारमिति नानुमित्युच्छेदः । किञ्च पर्वतेनेन्द्रियसन्निकर्षे व-

न्यायलीलावतीप्रकाशविवृतिः

भाति । ये·(सा?) चेति । तथा च यथा प्रवृत्तावसंसर्गाग्रहरूपा सामग्री तद्धेतोरिति न्यायात् तथानुमितावपीति न सामग्रीवैकल्यमन्यथा तु प्रवृत्तिकारणतयैवान्यथाख्यातिसिद्धिरिति भावः । एवं शाब्देऽपि योग्यतासंसर्गाग्रह एव सामग्री त्वदीयेति ध्येयम् ।

न च बाधेति । यद्यपि नैतत् प्रत्यक्षासाधारणमनुमितिशाब्दयोरप्येवमवच्छेदादिति नात्रेयं शङ्का युक्ता । तथापि संसर्गज्ञानमात्रोच्छेदो यदि मूलकृतोच्यते तदेतदपि समाधानं शक्येतातो विशेषोच्छेद उक्त इत्यभिसन्धिः । मानाभावादिति । तथा च तस्याप्यसंसर्गाग्रहात्मकत्वे बाधकत्वानुपपत्तेरिति भावः । व-न्ह्यनुमितिर्द्वारमिति । यद्यपि अयं पूर्वपक्षो न मीमांसकस्य तेना·

ज्ञप्तिपूर्वक इति चेत् , न, संसृष्टयोरसंसर्गाग्रहस्य संवादिव्यव-
हारहेतुत्वात् , शाब्देऽपि चानाप्तप्रणीतवाक्यप्रभवस्मृतिसन्ताना-

न्यायलीलावतीकण्ठाभरणम्

वत्वाभ्यां संवादिविसंवादिरूपकार्यवैचित्र्यमिति परिहरति—नेति । स्मृतिसन्तानासंसर्गाग्रहस्येति । स्मर्यमाणपदार्थासंसर्गाग्रहस्येत्यर्थः । ननु एतादृशासंसर्गाग्रहादनाप्तोक्तेऽपि संवादिन्येव प्रवृत्तिः स्यादत उक्तम् अनाप्तप्रणीतेति । आप्तप्रणीतेति वक्तव्ये वेदस्य तन्मतेऽपौरुषेयस्य तदभावात् प्रवृत्तिर्न स्यादिति व्यतिरेकप्राधान्यम् । तथा च शब्दप्रामाण्यं न स्यादित्यर्थः । यद्वा वैपरीत्यमेवास्तु तथा च भ्रमो विशिष्टज्ञा-

न्यायलीलावतीप्रकाशः

ह्नेश्च स्मरणे यदि धूमभ्रमानन्तरमपि वह्न्यसंसर्गाग्रहात् प्रवृत्तिस्तदा प्रत्यक्षभ्रमान्न कश्चिद्विशेष इति वह्निं साक्षात्करोमीत्यनुव्यवसायः स्यान्न त्वनुमिनोमीति । मैवम् । धूमासंसर्गाग्रहस्य हि स्वातन्त्र्येण निर्वह्नित्वोपस्थितिप्रतिबन्धे सति स्वातन्त्र्येण वह्निमत्त्वोपस्थितिर्व्यापारः स्यात् लिङ्गज्ञानानन्तरभावित्वप्रतिसन्धानाच्च न साक्षात्करोमीत्यनुव्यवसायः । संसृष्टयोरिति । लिङ्गलि(ङ्गि?)नोर्यत्र संसर्गस्तत्राविद्यमानासंसर्गाग्रहः संवादिव्यवहारजनकः यत्र दोषात्त सतोऽपि तस्याग्रहस्तत्र विसंवादिव्यवहार इत्यर्थः । यद्यपि शाब्देऽप्येवं(१) सम्भवति तथापि तत्र गत्यन्तरमाह—शाब्देऽ

न्यायलीलावतीप्रकाशविवृतिः

न्यथाख्यातेरस्वीकारात् । नापि नैयायिकस्य तदुक्तानुमानोच्छेदेऽस्यावतारितत्वादिति चेत्, न, अनुमानोच्छेदमसहमानस्य तस्य तटस्थस्यान्यथाख्यातिमभ्युपेत्यैव पूर्वपक्षित्वात् । यद्यपि सिद्धान्तिन एवमयत्नसिद्धैवान्यथाख्यातिस्तथापि तस्यापि(२) परस्याशयो न युक्त इत्यभिप्रेत्याह—मैवमिति । तथा च मीमांसकरीत्यैव त्वदुक्तमिति भावः । लिङ्गलिङ्गिनोरिति । हेतुसाध्ययोर्यत्र पक्षे संसर्ग इत्यर्थः । लिङ्गसत्ता च प्रवृत्तौ यद्यपि साक्षान्नोपयुज्यते तथाप्यविद्यमानलिङ्गसंसर्गाग्रहद्वारा साऽप्युपयुज्यत इत्याशयेनोक्ता यद्यप्येवमिति । अनया रीत्येत्यर्थः । तथा चाविद्यमानपदार्थासंसर्गाग्रहस्तत्रापि नियामकः

(१) यद्यप्येवं शाब्देऽपि इति विवृतिधृतः पाठः । (२) पि ज्ञातस्यापि प० ।

संसर्गाग्रहस्याविसंवादिसंसर्गव्यवहारहेतुत्वात्(१)। संसर्गग्रहस्य च(२) विसंवादिव्यवहारहेतुत्वे असंसर्गाग्रहादविसंवादिव्यवहारे व्यवहारवैचित्र्यस्यान्यथासिद्धेः। रजतत्वतद्व्यञ्जकयोः संसर्गाग्रहेऽपि संवादिव्यवहारदर्शनेनानैकान्तिकत्वाच्च। यो यद्विलक्षण आभासः स तद्विजातीयप्रमाणप्रतिरूपकः, यथा प्रत्यक्षाभासः। शब्दाद्याभासात् विलक्षणौ च शब्दलिङ्गाभासौ प्रत्यक्षाभासादिति शब्दानुमानसिद्धिरिति चेत्, न, विचारासहत्वात्। तत्सादृश्यं वा तदाभासत्वं विपर्यस्तव्यवहारजनकत्वं वा तद्वि-

न्यायलीलावतीकण्ठाभरणम्

नमेवास्तु इत्याह—संसर्गग्रहस्येति। समवायातीन्द्रियत्वपुरस्कारेणाह—रजतत्वेति। तद्व्यञ्जिका व्यक्तिः। अनैकान्तिकत्वं न संसर्गग्रहस्य क्वापि न प्रवर्त्तकत्वमित्यर्थः। शब्दानुमानयोः प्रमा[illegible]ं शङ्कते—यो यदिति। प्रत्यक्षाभासाद्विलक्षणौ शाब्दानुमित्याभासौ प्रत्यक्षविजातीयप्रमा-

न्यायलीलावतीप्रकाशः

पीति। वेदे नाप्तोक्तत्वसम्भव इत्यत उक्तम् अनाप्तप्रणीतेति। किञ्च विनिगमकाभावाद्वैपरीत्यमेव कुतो न स्यादित्याह—संसर्गग्रहस्य चेति। रजतत्वेति। तद्व्यञ्जिका रजतत्वसमवायिनी व्यक्तिस्तद्रजतत्वं संसर्गस्य समवायरूपतयाऽतीन्द्रियत्वेनाह इत्यर्थः। यद्वा तद्व्यञ्जकपदेन या पुरोवर्त्तिव्यक्त्या रजतत्वस्यासंसर्गाग्रहो विवक्षितः सैवोच्यते। संवादिव्यवहारदर्शनेनेत्यत्र पुरोवर्त्तिगोचरेणेति द्रष्टव्यम्। तद्विजातीयेति। तद्विलक्षणप्रमावृत्तिज्ञानत्वव्याप्यजातिमानित्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

सम्भवत्येवेति भावः। वेद इति। परस्येति शेषः। तथा च परमतेनैवायं सिद्धान्त इति ध्वनितम्। स्मृतिसन्तानेति मूलम्। स्मृतेः सन्तानं यत्रेति पदार्थ एवोक्तः। विशेषणताख्यः सम्बन्धस्तत्रापि गृह्यत इति मतेन व्याचष्टे—यद्वेति। संवादित्वार्थमाह—पुरोवर्त्तिगोचरेणेति। तद्विलक्षणेति। एवञ्च मूले आभासपदेन ज्ञानमुक्तमिति भावः। तत्सादृश्यस्येत्या-

(१) ०नासंसर्गव्यव०। ०दिव्यव०। (२) ०स्य वा वि०।

पर्यंयत्वं वा। नाद्यः। अनेकान्तात्। भवति [हि] प्रत्यक्षाभासाद्वि-
लक्षणस्तर्कदृष्टान्तस्मरणदूषणाभासो न तु प्रत्यक्षेतरप्रमाणप्रति-
योगिकः। अत एव न द्वितीयः। दृष्टान्ताभासादेरपि विपर्यस्त-
व्यवहारजनकस्य प्रमाणप्रतियोगिकत्वाभावात्। यो यद्विलक्षणः
प्रमाणाभास इति विशेषणादयमदोष इति चेत्, न, शब्दलिङ्ग-
योः प्रामाण्यसिद्धिमन्तरेण शब्द(१)लिङ्गाभासयोः प्रमाणाभास-
त्वासिद्धेः। शब्दाभासो(२)हि पदार्थस्मृतिसन्तानासंसर्गाग्रह-
रूपत्वात् स्मरणाभासः स्यात्। शब्दप्रामाण्यसिद्धौ च तदाभास-

न्यायलीलावतीकण्ठाभरणम्

णयोः प्रतिरूपकौ भविष्यत इति शब्दानुमानयोः प्रमाणत्वं सिध्यती-
त्यर्थः। अनेकान्तादिति। शब्दानुमानाभासौ प्रमाणप्रतिरूपकौ प्रत्यक्षा-
भासविलक्षणाभासत्वात्। अत्र सामान्यतो व्याप्तिः—यद्यदाभासवि-
लक्षणाभासः स तद्विजातीयप्रमाणप्रतिरूपकः यथा अनुमानाद्याभास-
विलक्षणः प्रत्यक्षाभासस्तद्विजातीयप्रमाणप्रतिरूपक इति। एतच्च त-
र्काभासादावनैकान्तिकमित्यर्थः। तर्काभासः प्रमाणाभास एव न
भवतीति न तत्र व्यभिचार इत्याह—यो यदिति। साध्यविशेषो(षणा?)
दयमहेतुरित्याह-नेति। तदेव स्फुटयति—प्रामाण्यसिद्धिमन्तरणेति। शब्दस्य
प्रामाण्यं चेन्न सिद्धं तदा स्मर्य्यमाणपदार्थासंसर्गाग्रहमात्रोपयोगी
शब्द इति तदाभासः स्मरणाभावपर्य्यवसित इत्याह—शब्दाभासो हीति।
ननु शब्दात् पदार्थानां संसर्ग एव भासते अन्यथा ततः प्रवृत्ति-
रेव न स्यादित्यत आह—शब्देति। तर्हि प्रवृत्त्यन्यथाऽनुपपत्त्या शब्दाभा-

न्यायलीलावतीप्रकाशः

न त्विति। प्रत्यक्षेतरदृष्टान्तादिरूपप्रमाणप्रतियोगिक इत्यर्थः। प्रमाणाभास
इति। दृष्टान्तादेश्च न प्रमाणत्वमित्यर्थः। स्मृतिसन्तानेति। स्मर्यमाणपदार्था-

न्यायलीलावतीप्रकाशविवृतिः

दिमूले उपनयेन व्यज्यमानज्ञानस्याभासत्वस्य विकल्पः। तदाभास-
स्यापीति मूलम्। सत्यस्थले विशिष्टज्ञानस्य प्रवृत्तिजनकत्वावधारणा-

(१) शाब्दलि०। (२) शाब्दाभा०।

स्याऽप्यन्यथाख्यातिस्वभावत्वसिद्धेः। न (१)तृतीयः। अन्यथाख्यातिस्वीकारात्। यश्चाभासो नासौ संसर्गवेदनप्रतियोगिकः यथेदं रजतमित्याभासः। आभासश्च शाब्दादिः। यः संसर्गव्यवहारः सोऽसंसर्गाप्रतिभासपूर्वकः यथा रजतव्यवहारभेदः। तथा च विवा-

न्यायलीलावतीकण्ठाभरणम्

सादपि संसर्ग एव भासत इत्यन्यथाख्यातिसिद्धिरित्यर्थः। अनुमानस्यापीयमेव गतिरिति भावः। तर्हि विपर्यस्तत्वमनुमानादिबोध्यसंसर्गविपरीतसंसर्गबोधकत्वमनुमानाद्याभासत्वमिति दूषयति—नापीति। इदानीं सत्प्रतिपक्षरूपतया प्रत्यक्षस्यापि प्रामाण्यमास्कन्दति—यश्चेति। यथेदं रजतमिति प्रत्यक्षादावपि विशिष्टभ्रमानुदयात् असंसर्गाग्रहादेव प्रवृत्तिसम्भवात् भ्रमस्थलवदित्यर्थः। प्रमास्थले यत्संसर्गव्यवहारः प्रवृत्तिव्यवदेशश्च तयोरप्यसंसर्गाग्रहपूर्वकः स्याद् यदि भ्रमोऽन्यथाख्यातिरूपो नाङ्गीकार्य्य इत्याह—यश्चेति। यो यद्विलक्षण

न्यायलीलावतीप्रकाशः

ग्रहरूपत्वादित्यर्थः। संसर्गवेदनप्रतियोगिक इति। संसर्गबोधकप्रमाणप्रतियोगिक इत्यर्थः। यथेदमिति। शुक्तौ रजतत्वस्यासमवायात् तत्र प्रमाणाप्रसरादित्यर्थः। यथा रजतेति। यथा शुक्तौ रजतव्यवहारो न व्यवहर्त्तव्यसंसर्गज्ञाननिबन्धन इत्यर्थः। अनुमानप्रामाण्यानभ्युपगमे

न्यायलीलावतीप्रकाशविवृतिः

दिति भावः। शुक्तौ रजतत्वस्येति। यद्यप्येवं शब्दाभासस्थलेऽपि प्रमाणाप्रसरस्योभयवादिसिद्धत्वात् सिद्धसाधनम्। यदि च तज्जन्यप्रमावृत्तिज्ञानत्वव्याप्यजातिमत्त्वाभावः साध्यस्तदा दृष्टान्तासिद्धिस्तथापि समवायातीन्द्रियतया संसर्गविषयकप्रमावृत्तितादृशजातिमत्त्वाभावे साध्ये भवति प्रत्यक्षाभासस्य दृष्टान्ततेति भावः। यद्यपीत्थमपि शुक्तौ रजतत्वस्येत्यादिहेतुरयुक्त एव तथापि दोषवशादतीन्द्रियोऽपि रजतत्वसमवायः शुक्तौ भासत इति तदेवादाय दृष्टान्तासिद्धिरिति यदि कश्चिद्भ्रान्त्या देशयेत्तदा तं प्रतीदमुक्तम्। तथा च तत्र संसर्गवेदनस्वीकारेऽपि न तस्य प्रमात्वमिति न दृष्टान्तासिद्धिरिति भावः। यथा शुक्ताविति। यद्यपि समवायातीन्द्रियतया रजते

(१) नापीतिकण्ठाभरणधृतः पाठः।

दाध्यासित(१) इति निषेधाच्च। शब्दानुमानार्थापत्तिप्रामाण्याक्षेपकं प्रत्यनुमानोपन्यासानवकाशाच्च। यथा (२)दीपैकत्वव्यवहारो भेदाग्रहात्। तथा च प्रत्यभिज्ञानमात्रमुच्छिद्येत। तत्तुल्ययुक्तिकत्वात्। यत्राभेदोऽस्ति तत्रावभासते न सर्वत्रेति चेत्, न, यत्राभेदोऽस्ति तत्र व्यवह्रियते न सर्वत्रेति तुल्यम्। अविद्यमानोऽप्यभेदस्तदभावाग्रहाद्व्यवह्रियत इति चेत्तुल्यम्। असन्नप्यभेदो भेदाग्रहादवभासते।

---

न्यायलीलावतीकण्ठाभरणम्

आभास इत्यादि प्रकारान्तरेणापि निव्याचष्टे—शब्देति। शब्दविधया चेदिदं गमकं तदा शब्देत्युक्तम्। यद्यपि प्रत्यक्षप्रामाण्येऽपि प्रतिवन्दिविधया सिद्धान्तिनो विमतिरेव तथापि परेण तन्नोपन्यस्तमिति तथोक्तम्। किञ्च प्रत्यभिज्ञानमपि पूर्वापराभेदग्राहकं न स्यात् तथावादिनः क्व स्थैर्यसिद्धिरपीत्याह—यथा चेति। यथा तत्र एकत्वासंसर्गाग्रहस्तथा प्रमाप्रत्यभिज्ञानेऽपि स्यादित्यर्थः। विषयसत्त्वं प्रमाप्रयोजकमिति शङ्कते—यत्रेति। भानव्यवहारयोस्तुल्यत्वमाह—नेति। तथा च तद्व्यवहारात्तथाख्यातिरेवेति भावः। भेदाग्रहादविद्यमानव्यवहारं स्यान्न तु भानं येनान्यथाख्यातिः स्यादिति शङ्कते—अविद्यमान इति। तद्भेदाग्रहादविद्यमानभानमपि स्यादित्याह—तुल्यमिति। तुल्यतामेव दर्शयति—असन्नपीति।

न्यायलीलावतीप्रकाशः

कथं तेनैव विरोधापादानमित्याह—शब्दानुमानेति। क्वचित्प्रत्यक्षसंसर्गज्ञानोच्छेदमप्याह—यथेति। सर्वत्रेति। न विसंवादिज्ञानेऽपीत्यर्थः। तथा च न प्रत्यभिज्ञानमात्रोच्छेद इत्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

रजतव्यवहारोऽपि दृष्टान्तो भवत्येव तथापि विशेषणतालक्षणसंसर्गस्तत्र भासत इति मतेन पूर्वारुच्यैव मूलकृता प्रकारान्तरमुक्तमिति तदनुरूपोभयसिद्धभ्रमजन्यव्यवहार एव प्रकाशकृता दृष्टान्त उक्त इति भावः। यत्राभेदोऽस्तीति मूलम्। तथा च शुक्तौ रजताभेदव्यवहारो-

---

(१) विवादाध्य इ०। (२) यथा चेति कण्ठाभरणसम्मतः पाठः।

ननु चैवमन्यथाख्यातिरनुपपन्ना, कारणाभावात्। दोषाः कारणमिति चेत्, न, दोषाणां यथार्थज्ञानजननप्रतिबन्धसामर्थ्यात् (१)विपरीतज्ञाने त्वसामर्थ्यात्। न खलु दुष्टं कुटजबीजं न्यग्रोधधानायै(२)कल्पते। दवदहनदग्धवेत्रबीजस्य कदलीकाण्डजनकत्ववद् भस्मकदुष्टजठरानलस्य बहुतरान्नपाकहेतुत्ववच्च दोषाणां विपर्ययहेतुतेति चेत्, न, दग्धस्यावेत्रबीजत्वात्। अन्यस्यैव विजातीयफलहेतुत्वात्। प्रभूतदाह्यदहनशक्तेरनलेषु स्वाभाविक्या अन्नरसजननशक्त्या अभि-

---

न्यायलीलावतीकण्ठाभरणम्

ननु विशिष्टज्ञाने विशेषणविशेष्येन्द्रियसन्निकर्षः कारणं प्रकृते च विशेषणस्य रजतत्वस्यासन्निकर्षाद्विशिष्टभानं न स्यादित्याह—नन्विति। असन्निकृष्टमपि दोषवशाद् भासत इत्याह—दोषा इति। प्रमाणप्रतिबन्धकत्वं दोषत्वमित्यभिप्रेत्याह—नेति। दुष्टमिति। भर्ज्जनादितदोषवदित्यर्थः। 'न्यग्रो(ध?)धाना' वटाङ्कुरः। दोषाणां विपरीतकार्य्यजनकत्वमुदाहरति—दवेति। 'दवो'वनम्। 'भस्मको' रोगविशेषः। दाहात्तद्वेत्रबीजं विनष्टमेव तद्भस्मनस्तु कदलीजनकत्वं रसाञ्जनशक्त्या जीवनादृष्टाधीनतया स्वाभाविकी जठरानलस्य दाहकत्वशक्तिर्या प्रतिबद्धाऽऽसीत् सैव भस्मकेन दाहशक्तिर्न जन्यते किन्तु रसाञ्जनशक्तेः प्रतिबन्ध एव क्रियते इति विपरीतकार्य्यजनो (ननेन?) तदुदाहरण-

न्यायलीलावतीप्रकाशः

प्रत्यक्षान्यथाख्यातिमाक्षिपति—ननु चेति। रजतरजतत्वसाक्षात्कारे इन्द्रियेण रजतसंयोगतत्संयुक्तसमवाययोः कारणत्वादित्यर्थः। 'धाना' अङ्कुरः। अन्यस्यैवेति। वेत्रबीजभस्मन एव

न्यायलीलावतीप्रकाशविवृतिः

ऽपि न स्यादिति भावः। अनुमित्यादौ लिङ्गासंसर्गाग्रहादेः कारणस्य सम्भवाद्विशेषपरतामाह—प्रत्यक्षान्यथाख्यातिमिति। दाहो यदि रूपपरावृत्तिर्यदि वा भस्मीभाव उभयथापि नोक्तं विनाशकत्वमित्यन्यथा

---

(१) प्रतिबन्धे सामर्थ्यात्। (२) ०लु दुष्टं न्यग्रोधबीजं कुटजधानाय कल्पते। भृष्टं कुट०।

भवे भस्मकेन रसहेतुशक्तिप्रतिबन्धे प्रभूतदाह्यदहनशक्तेरन-भिभवात् । तदेतदपेशलम् । यथा दाहस्य वेत्रबीजविनाशकत्वं रूपान्तरजनकत्वं च तथा दोषाणामप्ययथार्थज्ञानजनकत्वमन्य-विज्ञानप्रतिबन्धकत्वं (१)च स्यात् । दहनस्य प्रचुरदाहशक्तिः किं स्वरूपमुतातीन्द्रियं रूपमथ सहकारिभेदः । तत्र न तावदा-द्यः । तथा सति रसार्जनदाहसामर्थ्ययोरभेदेनाभिभाव्याभि-भावकभावाभावात् । न द्वितीयः । असिद्धेः । न तृतीयः । भ-स्मकाभावस्य रसजननसहकारित्वेन तदभावस्य प्रचुरदाहजन-कत्वमिति दोषकारणतापत्तेः । यथा चाऽविसंवादिव्यवहारोप-

---

न्यायलीलावतीकण्ठाभरणम्

मित्याह-नेति । 'दाहो'ऽग्निसंयोगः। 'अन्यविज्ञप्तिः'प्रमा। अतीन्द्रियमिति । मीमांसकाभिमता शक्तिरित्यर्थः । जठरानलस्वरूपमेव रसार्ज्जनसा-मर्थ्यं तदा नाभिभाव्याभिभावकभाव इत्याह—तथा सतीति।स्वरूपे सती-त्यर्थः । तदभावस्य भस्मकस्य यथा अस्माकं भ्रमज्ञाने दोषकारणत्वं तथा तव विपरीतव्यवहारइत्याह—यथा वेति । विशेषणज्ञानं विशे

न्यायलीलावतीप्रकाशः

कदलीकाण्डजनकत्वादित्यर्थः । यथेति । 'दाहो'ऽग्निसंयोगः करणव्युत्पत्तेरेकस्यैवाग्निसंयोगस्य पूर्वद्रव्यनाशकत्वं द्रव्या-न्तरवर्त्तिरूपजनकत्वं चेति मतमाश्रित्यैतदुक्तम् । तथा सतीति। दाहसामर्थ्यवद्रसार्जनशक्तेरपि दहनस्वरूपात्मकत्वादित्यर्थः । 'अ-सिद्धेः' शक्तेः पदार्थान्तरस्य निरासादित्यर्थः । भस्मकाभावस्येति । अ-भावस्य भावत्वादित्यर्थः । ननु भ्रमो न विशिष्टज्ञानं किन्त्वसंसर्गाग्र-हः सप्रतियोगिनि बुद्धिस्थेऽधिकरणस्वरूपं तच्चाजन्यमेवेति न दोष इत्यत आह—यथा वेति । धियामौत्सर्गिकस्य प्रमात्वस्य बाधकैकायोग्य-

न्यायलीलावतीप्रकाशविवृतिः

व्याचष्टे-दाह इति। "पुनरन्यस्मादग्निसंयोगात्पाकजा जायन्त"(२) इति भाष्यविरोधमाशङ्क्याह-एकस्येति। ननु भ्रम इति। यद्यपि भ्रमो विशिष्टज्ञा-

---

(१) ०नजननमन्यविज्ञप्तिप्र० । (२) प्रशस्तपादभाष्यम्, पाकजोत्पत्तिविधानम् ।

हारशीलानां विज्ञानानां दोषवशात् तदजननेऽपि विसंवादिव्यवहारप्रसवक्षमत्वं तथैव तदपि स्यात् । अयथार्थत्वे ज्ञानस्य ज्ञानमात्रेऽनाश्वासप्रसङ्गः(१) स्यादिति चेत्, न, विसंवादिव्यवहारजनकत्वेऽपि तुल्यत्वात् । यत्र विशेषदर्शनं संशयहेतुदोषानुपलम्भो वा न तत्र व्यवहारविसंवादशङ्केति चेत्, तुल्यमयथार्थविषयत्वेऽपि । स्वाभाविकं ज्ञानस्य संवादिव्यवहारजनकत्वमा-

न्यायलीलावतीकण्ठाभरणम्

ष्यसन्निकर्षः तदुभयासंसर्गाग्रहश्च विशिष्टज्ञानकारणं न तु विशेष्यासन्निकर्षोऽपीति न कारणाभाव इति भावः । दोषान्तरमन्यथाख्यातावाशङ्कते—अयथार्थत्व इति । अनाश्वासः स्यादिति । तथा च निष्कम्पप्रवृत्तिः क्वापि न स्यादिति भावः । यथार्थस्यापि ज्ञानस्य विसंवादिव्यवहारजनकत्वं चेत्तदा तुल्य एवानाश्वास इत्याह—नेति । प्रथममनाश्वासेऽपि प्रामाण्यग्रहादाश्वासः स्यात् प्रामाण्यग्रहोपायः सम एवेति भावः। स्वतः प्रामाण्यं तु अदूर एव प्रतिक्षिप्तमिति हृदयम् ।

न्यायलीलावतीप्रकाशः

त्वात्तथा स्वभाव इत्यर्थः । अनाश्वासेति । तथा च प्रवृत्तिमात्रस्य प्रामाण्यसन्देहादप्युपपत्तौ बहुवित्तस्य(व्य?)यायाससाध्ये कर्मणि प्रवृत्तिर्न स्यादित्यर्थः । अयथार्थत्वेऽपि तुल्यमिति स्फुटतयोपेक्ष्यान्य-

न्यायलीलावतीप्रकाशविवृतिः

नमित्येव पूर्वदृष्टान्तेन साधितं तत्र च बाध इति सन्धानकल्पनेना-भ्रमदृष्टान्तेनापि सङ्गतिः, तथापि पूर्वदृष्टान्तः स्वमतेनैव भाष्यविरोधादसङ्गत इति तात्पर्यम् । तथा स्वभाव इति । स्वभावश्च संवादिव्यवहारजनकत्वं दोषसाहित्येन भ्रमजनकत्वमित्येवंरूपः । तथा च तद्वत्स्वभावतो ज्ञानहेतूनां प्रमाजनकत्वं दोषसाहित्येन च भ्रमजनकत्वं स्यादित्यर्थः । तद्विशेषतद्विशेषस्येति(?) । विशेष्यसन्निकर्षत्वेनैव सामान्यकारणतेति रजतस्य विशेषणतास्थले रजतसंयोगस्याकारणत्वात्, विशेष्यीभूतशुक्तिसंयोगस्यैव तथात्वादिति भावः । नन्वनुभवव्यतिरेकाभ्यां

(१) अनाश्वासः स्यादिति कण्ठाभरणसम्मतः पाठः ।

प्रवादिकमन्यथात्वमिति चेत्, न, शब्देऽपि(१) तथापत्तिरिति लौकिकवाक्यानामप्रामाण्यं न स्यात्। ननु च कारणत्वं वा विषयत्वं तद्गोचरव्यवहारजनकत्वं वा तत्प्रतिबद्धव्यवहारजनकत्वं वा।

---

न्यायलीलावतीकण्ठाभरणम्

अन्यथात्वमिति। विसंवादिव्यवहारजनकत्वमित्यर्थः। तथा च स्वरसतो मम पक्षे नानाश्वास इति भावः। लौकिकं वाक्यं पौरुषेयत्वेन भ्रमाद्यधीनमपीति शङ्कया न प्रथमं प्रमां जनयति किन्त्वाप्तोक्तत्वग्रहात् शङ्कात्यये पश्चात् प्रमापकं तथा चाप्तोक्तत्वग्रहादनुमानस्यैव सम्भूतसामग्रीकत्वात् प्रमाजनकत्वस्थितौ तदनुवादकत्वमित्यपि तव सिद्धान्तो भज्येत । यतः शब्दानां स्वाभाविकप्रमाजनकत्वमिति लौकिकेनापि वाक्येन प्रथमं प्रमैव जन्येतेत्याह—शब्देऽपीति । अप्रामाण्यं न स्यादिति। वैदिकवाक्यतुल्यता स्यादित्यर्थः। पुरोवर्त्तिरजततादात्म्यस्यापि अत्यन्तासतो विषयत्वमसम्भावि मतः काऽन्यथाख्यातिरिति शङ्कते—ननु चेति । अतीतादेरित्युपलक्षणं चक्षुरादेरपि विष-

न्यायलीलावतीप्रकाशः

दाह—शब्देऽपीति । लौकिकवाक्यानां सर्वेषामिति शेषः । प्रथमं शङ्काकलङ्कगुंठितत्वात्(?)पश्चादप्यनुवादित्वाल्लोके शब्दाप्रामाण्यं त्वदभिमतं यदा च बाधकाभावाधीनं प्रामाण्यं तदा लौकिकवाक्यानामपि केषाञ्चित् बाधकाभावात् प्रामाण्यं स्यादेवेत्यर्थः। नन्वेतावतापि क्लृप्तकारणाभावात् शुक्तौ रजतसाक्षात्कारो न स्यादिति न समाहितम्। अत्र वदन्ति । विशेषणज्ञानं विशेष्येन्द्रियसन्निकर्षस्तयोरसंसर्गाग्रहः प्रत्यभिज्ञानसत्यप्रत्यक्षसाधारणो विशिष्टप्रत्यक्षहेतुत्वनियमात् संयोगस्य विशेष्यभानसामग्र्यन्तर्गतत्वेनान्यथासिद्धतया विशेषणभानसामग्र्यन्तराकल्पनात् तुल्यमयथार्थविषयेऽपीत्य-

न्यायलीलावतीप्रकाशविवृतिः

रजतसंयोगत्वेन कारणताग्रहः स्यादित्यत आह—संयोगस्येति । विशेषणज्ञानविशेष्यभानसामग्रीभ्यामेव तन्निर्वाहे नोक्तरूपेण कारणता, अन्यथासिद्धेरिति भावः । ननु तत्साक्षात्कारे तदिन्द्रियसन्निकर्ष-

---

(१) शब्देऽपीति प्रकाश-कण्ठाभरणधृतः पाठः।

नाद्यः। अतीतादेरविषयतापत्तेः। न द्वितीयः। रजतप्राप्तिवद्रज-ताभावप्राप्तिव्यवहारस्यापि जननाद्रजताभावविषयताप्रसङ्गात्। तृतीये तु पुरोवर्तिरजततादात्म्यविषयत्वमसम्भावितमेव, तन्नि-यतव्यवहारजननाभावादिति चेत्, न, यत्र यस्येच्छाप्रयत्नजन-

---

न्यायलीलावतीकण्ठाभरणम्

यतापत्तेरित्यपि द्रष्टव्यम्। रजतप्राप्तिवदिति। यथा सत्यरजते रजत-प्राप्तिस्तथा रजतभ्रमे रजताभावप्राप्तिरपीति तस्यापि विषयत्वप्र-सङ्गात्तत्र प्रवृत्तिरेव न स्यादिति भावः। असम्भावितमिति। तत्तादा-त्म्येऽस्यासम्भावितत्वेन तन्नियतव्यवहाराभावादित्यर्थः। यत्र यस्येति।

न्यायलीलावतीप्रकाशः

त्राक्षिपति—ननु चेति। रजतप्राप्तिवदिति। सत्यज्ञाने यथा रजतस्य प्राप्ति-रिति रजतं विषयस्तथा विसंवादिज्ञाने रजताभावस्यापि प्राप्तेः सो-ऽपि विषयः स्यादिति ततः प्रवृत्तिर्न स्यादित्यर्थः। तन्नियतेति। शुक्ति-रजततादात्म्यस्यात्यन्तासत्त्वेनाव्यापकतया तद्व्याप्यव्यवहाराजनक-त्वादित्यर्थः। यत्रेति। ननु यत्रेति विषयसप्तमीत्वात् येन वा निरूपण-मित्यत्र च तद्विषयेण तन्निरूपणादात्माश्रयः, उपेक्षाज्ञानाव्याप्तिश्च

न्यायलीलावतीप्रकाशविवृतिः

त्वेन लाघवात्कारणतेति रजतविषयसाक्षात्कारे रजतसंयोगो हेतुः "यत्सामान्ययोरिति" न्यायादिति चेत्, न, गुरुमते रजतानुमितेऽपि रजतसाक्षात्कारत्वेन व्यभिचारात्। न च रजतावच्छेदेन यत्साक्षा-त्काररूपं तत्र रजतसंयोगो हेतुर्न त्वेवमनुमितिरिति वाच्यम्, तर्हि तवैव रीत्या साक्षात्कारासाक्षात्काररूपात्मकमेकं ज्ञानमन्यथाख्या-तिरस्तु, कारणबाधस्य निरस्तत्वात्। अनुभूयमानरजतारोपस्थले च सुतरान्न (सुतरां न ?) कारणबाध इति तदाऽन्यथाख्यातिरप्रत्यू-हा। न च विशेष्यवृत्तिविशेषणज्ञानादिकं तव यत्प्रमाप्रयोजकं तदेव लाघवेन ज्ञानसामान्यहेतुरिति कारणबाध इति वाच्यम्, ज्ञानवैचित्र्या-सिद्धौ तस्य कारणत्वे मानाभावात्। तत्सिद्धौ चोपजीव्यविरोधेन तस्य सामान्याकारणत्वादित्यन्यत्र विस्तरः।

प्रवृत्तिर्न स्यादिति। रजतार्थिप्रवृत्तिर्न स्यादिति। नन्वेवं घटज्ञानस्यापि-

कत्वं येन वा निरूपणं तस्य तद्विषयत्वात् । कारणमेव साक्षा-

न्यायलीलावतीकण्ठाभरणम्

यद्यपि यत्रेति विषयसप्तमी । येन वेति । तद्विषयत्वमेव तन्निरूपकमित्युभयत्रात्माश्रयः, व्यवहाराजनकमुपेक्षाज्ञानमिति तत्राव्याप्तिस्तथापि विषयत्वं ज्ञानस्वरूपमेव । ननु स्वरूपस्याविशेषाद् घटज्ञानं पटविषयकमपि स्यादिति चेन्न, स्वरूपस्यैव विलक्षणत्वात् । न हि यद् घटज्ञानस्वरूपं तदेव पटज्ञानस्वरूपमपि तेषां च स्वरूपाणामननुगमेन घटादिना विषयेणैवानुगमात् दण्डिनीव दण्डेन । ननु धर्मान्तरमेव विषयत्वमस्तु यस्याग्रहात् चैत्रस्य ज्ञानस्वरूपे ज्ञाते चैत्रो घटं जानाति न वेति संशयः, अन्यथा स न स्यादिति चेन्न, तत्र तदीयत्वस्याग्रहात् संशयः । तदीयत्वं हि तत्सम्बद्धव्यवहारजनकत्वं तत्सम्बद्धस्वरूपं वा । अन्यथा घटाभावभूतलयोर्विशकलितयोर्ज्ञाने घटाभाववद् भूतलमिति प्रतीतिः स्यात् । किञ्चैवं पदार्थान्तरमेव विषयत्वं स्यात्तच्च प्रतिषिद्धम् । किञ्च विषयतापि तदीया सम्बन्धान्तराधीनेत्यनवस्थापात्तिः । कारणमेवेति । भ्रमे च न रजतं कारणमिति न विषयः स्यादित्यर्थः । साक्षात्कारिज्ञानेऽव्यकारणं

न्यायलीलावतीप्रकाशः

तेन व्यवहाराजननात् योग्यतायाश्च तदवच्छेदकरूपग्रहं विना ज्ञातुमशक्यत्वात् तद्विषयत्वस्यैव तदवच्छेदकतायामात्माश्रयापत्तेः तस्माद्धर्मान्तरमेव विषयत्वम् । कथमन्यथा घटं जानाति चैत्रे चैत्रः किञ्चिज्जानाति अयं च घट इति विजानतां घटविषयकज्ञानवांश्चैत्रो न वेति संशयः स्यात् ।

अत्राहुः । ज्ञानस्वरूपमेव विषयत्वं न च तज्ज्ञानस्वरूपमन्यत् येनातिप्रसङ्गः । तेषां ज्ञानानां प्रतिस्वं भेदेऽपि घटेन विषयेणानुगमात् दण्डिनीव दण्डेन । यद्वा तदनुव्यवसायकारणत्वावच्छेदकरूपवत्व-

न्यायलीलावतीप्रकाशविवृतिः

पटविषयत्वं स्यात् ज्ञानरूपत्वस्याविशेषादित्यत आह—न चेति । तथा च तज्ज्ञानरूपत्वं तद्विषयत्वमिति नातिप्रसङ्ग इति भावः । नन्वेवमननुगम इत्यत आह—तेषामिति । तदनुव्यवसायेति । तस्य ज्ञानस्यानुव्यवसायात्कारणत्वावच्छेदकं यद्रूपं घटादि तदेव विषयस्तत्त्वमेव विषयत्वं तन्निरूपक-

त्कारिणो ज्ञानस्य गोचरो नाकरणं रजतमिति चेत्, न, प्रत्यभिज्ञाया अपि(१)गोचरत्वात् । यदसत्तन्न प्रकाशते यथा व्योमकमलम् । असच्च पुरोवर्त्तिरजततादात्म्यमिति

---

न्यायलीलावतीकण्ठाभरणम्

प्रागवस्थाविषय इत्याह—प्रत्यभिज्ञायामिति । प्रत्यभिज्ञानमपि स्मृत्यनुभवरूपज्ञानद्वयमेवेति न वाच्यम्, अभेदोच्छेदापत्त्या तदेकत्वस्य व्यवस्थापनात् । तथा च तदेकं संस्कारेन्द्रियाभ्यां जन्यते तथा भ्रमोऽपीत्यविशेषात् यथाव्योमकमलमपि दृष्टान्तोऽभासमानत्वे साध्ये व्याहतः, भासमानतयैव दृष्टान्तत्वात्, तथापि सदुपरागेणाभासमानत्वस्य साध्यत्वात् । असत्ख्यात्यवष्टम्भेन च दृष्टान्तत्वमित्यविरोधः।

न्यायलीलावतीप्रकाशः

मेव तद्विषयत्वम् । न च निर्विकल्पकाव्याप्तिः, घटज्ञानत्वेनैव तस्याप्यनुव्यवसायकारणत्वात् न च संशयानुपपत्तिः घटतज्ज्ञानयोः स्वरूपग्रहेऽपि तदीयत्वं तद्विषयत्वं न गृहीतमिति तद्विषयत्वे सन्देहः । तदीयत्वं च सम्बन्धिना तत्सम्बद्धस्वभावत्वं सम्बन्धं विना कथं तदीयत्वं सम्बन्धस्यैव स्वभावत्वात् । यथा तवैव विशेषणतायामन्यथानवस्थानात् । कारणमेवेति । विसंवादिरजतप्रत्यक्षे च न कारणं रजतमिति न विषय इत्यर्थः । यत्किञ्चित्कारणं प्रत्यक्षविषयः, तदेष्टापत्तिः भ्रमविषयरजतस्यापि तत्त्वात् । अथ तत्कारणमेव तद्विषयस्तत्राह—प्रत्यभिज्ञायामिति । प्रत्यभिज्ञावत् संस्कारेन्द्रियाभ्यां विशिष्टज्ञानं भविष्यति न च प्रत्यभिज्ञा न ज्ञानद्वयम्, अभेदो-

न्यायलीलावतीप्रकाशविवृतिः

त्वमेव विषयित्वमित्यर्थः । घटज्ञानत्वेनेति । न चैवं निर्विकल्पकस्यापि फलोपाधानापत्तिः सम्बन्धितावच्छेदकप्रकारकसम्बन्धिज्ञानस्य सम्बन्धिकपदार्थधीहेतुतया तद्विरहादेव तद्विरहात् । यद्यपि घटज्ञानत्वं घटगोचरज्ञानत्वमिति पूर्ववदात्माश्रयः न च घट एवावच्छेदकः तस्यापि सम्बन्धाकांक्षायां विषयतायामेव पर्यवसानात् । किञ्च घटज्ञानत्वस्यावच्छेदकत्वे विशिष्टज्ञानव्यवहितप्राक्कालिकनिर्विकल्पक-

---

(१) प्रत्यभिज्ञायां पूर्वकालताया अपि ।

चेत्, न, गगनकमलस्यापि शब्दाभासप्रतिभासित्वेन दृष्टान्तस्य साध्यविकलत्वात्। पुरोवर्तिरजततादात्म्यप्रतीतौ चान्यथाख्यातिस्वीकारात्। अप्रतीतावाश्रयासिद्धेः। असंसर्गाग्रहबलेन च व्यवहारे(१)तत्रासत्त्वस्याप्रतीतौ हेतोरपक्षधर्मत्वात्। असत्त्वेनासंसर्गाग्रहात् पक्षधर्मताव्यवहार इति चेत्, न, सत्त्वेनापि

---

न्यायलीलावतीकण्ठाभरणम्

सदुपरागेणासतोऽपि भानस्वीकारादित्याह— गगनेति। किञ्च पुरोवर्त्तिरजततादात्म्यस्यैव पक्षत्वं प्रतीत्यप्रतीतिभ्यां व्याहतमित्याह— पुरोवर्तीति। पक्षो न प्रतीयते किन्तु संसर्गाग्रहात् व्यवह्रियते परमित्याह—असंसर्गेति—असत्त्वं यत्त्वया हेतु कृतं तदप्यप्रतीयमाने पक्षे न प्रतीयेतेति हेतुराश्रयासिद्धः स्यादित्यर्थः। पक्षे हेतोरसंसर्गाग्रहाधीन एव पक्षसत्त्वव्यवहार इति शङ्कते—सत्त्वेनापीति। असत्त्वासंसर्गाग्रहवत् सत्त्वासंसर्गाग्रहोऽप्यस्तीति सत्त्वं हेतुः स्वरूपासिद्धः

न्यायलीलावतीप्रकाशः

च्छेदापत्तेः, तस्य तदेकमानत्वात्। न च संस्कारेन्द्रिययोः समानविषयत्वेन मिथः सहकारित्वं तत्तांशे तदभावात्। न चातिप्रसङ्गः, भेदाग्रहस्यापि तद्धेतुत्वादित्यर्थः। 'तथापत्तेः' असंसर्गाग्रहापत्तेरित्यर्थः। तथा चासत्त्वं हेतुः स्वरूपासिद्ध इति भावः। पूर्वं प्रत्यक्षविषयत्वे कारणत्वं व्यापकमित्युक्तमधुना षोढा प्रत्यासत्त्या इन्द्रियसन्निक-

न्यायलीलावतीप्रकाशविवृतिः

साक्षात्कारापत्तिः, तत्रोक्तसामग्रीविरहाभावात्, तथापि स्वरूपसम्बन्धविशेष एव विषयता स च ज्ञानरूप एवेति प्रागुक्त एव तात्पर्यम्। असंसर्गाग्रहापत्तेरिति। त्वयाऽलीकत्वाभ्युपगमादिति भावः। तथा( चा? ) सत्त्वमिति। पुरोवर्त्तिरजततादात्म्यस्य पारमार्थिकस्यैव भानाभ्युपगमात्। भ्रमत्वं तु व्यधिकरणप्रकारकत्वेनाऽन्यथा भ्रमानुव्यवसायस्य भ्रमत्वापत्तेरिति भावः। पूर्वमिति। कारणत्वमेव विषयतानियामकमिति प्रागुक्तमधुना तु संयोगाद्यन्यतमप्रत्यासत्तिमत्त्वमेव तन्नियामकम्। तच्च कारणत्वनियतमिति परम्परया तन्नियामकमित्युच्यत इति भेद इति

---

(१) घ तद्व्यवहारे त०।

तथापत्तेः। असतोऽकारणत्वात्कथं साक्षात्कारिप्रतीतिविषयत्व-मिति चेत्, न, संस्कारोपनीतस्याकारणस्यापि प्रत्यभिज्ञायां तत्तांशस्य प्रतीतिविषयत्वात्। प्रत्ययत्वं त्वदृष्टसामग्रीप्रसूतत्वप्र-युक्तसत्यभावमित्यसिद्धप्रतिबन्धमित्यास्ताम्।

---

न्यायलीलावतीकण्ठाभरणम्

सत्त्वासंसर्गाग्रहेण सत्त्वव्यवहारस्यैव सिद्धेरित्यर्थः। साक्षात्कारिणि कारणमेव विषयो रजततादात्म्यं चाकारणमतो विषयो न स्यादिति शङ्कते—असत इति। रजततादात्म्यं सदेव संस्कारोपनीतमिह भा-सत इत्यदोष इति परिहरति—नेति। सर्व्वासां धियां याथार्थ्यसाधकं प्रत्ययत्वं हेतुस्वरूपमुपाध्युपन्यासेन दूषयति—प्रत्ययत्वन्त्विति। दोषाज-

न्यायलीलावतीप्रकाशः

ष्टमेव प्रत्यक्षविषयस्तच्च कारणमेवेति विवक्षितत्वाह—असत इति। उक्त-युक्तिमभिप्रेत्याह—संस्कारेति। प्रत्ययत्वस्य ज्ञानमथार्थत्वसाधकत्वं दूषयति—प्रत्ययत्वमिति। दोषाजन्यत्वमुपाधिरित्यर्थः। न च दोषजन्य-त्वमसिद्धं भ्रमे दोषस्यान्वयव्यतिरेकात्। न चासंसर्गाग्रहेण तदन्यथा-सिद्धिः, तस्यासिद्धेः, तस्याधिकरणरूपत्वेनासाध्यत्वात् ज्ञानरूपत्वे च तस्य प्रमात्वात् न दोषजन्यत्वम्। एतच्च स्वमतेनोक्तं परेषां सर्व-ज्ञानानां यथार्थतया दोषाजन्यत्वं साधनव्यापकम्। किञ्च दोषस्य विशिष्टज्ञानमेव व्यापारः प्रवृत्तौ तद्धेतुत्वात् नासंसर्गाग्रहः कल्पनीय-कारणभावत्वादिति भावः।

मानं तु अन्यथाख्यातौ प्रत्यक्षमेव कारणबाधाभावात्। इदं रजत-तया जानामीत्यनुव्यवसायाद्विषयतायां तस्यैव मानत्वात् तस्य च प्रमाणत्वनियमात्। न च भेदाग्रहाद्रजतज्ञानविषयत्वासंसर्गाग्रहः शुक्तौ भेदग्रहेऽपि शुक्तिर्मया रजतत्वेन ज्ञातेत्यनुव्यवसायात्। न च विचा-रसाध्यासंसर्गग्रहबाध्योऽयमसंसर्गाग्रहस्तेन विचारं विनापि भेदग्रहे-

न्यायलीलावतीप्रकाशविवृतिः

भावः। न चासंसर्गाग्रहेणेति। विशिष्टज्ञानं तत्र नास्त्येवातो दोषाजन्यत्वं साधनव्यापकमिति भावः। 'ज्ञानरूपत्वे' अधिकरणज्ञानरूपत्वे। प्रवृत्तौ तद्धेतुत्वस्येति ( त्वादिति ? )। उक्तयुक्तेरिति शेषः। विचारसाध्येति। अन्य-

न्यायलीलावतीप्रकाशः

ऽप्यवतिष्ठत इति वाच्यम्, इदं रजततया जानामीत्यत्र शुक्तिकर्मकरज-तत्वप्रकारकज्ञानासंसर्गाग्रहस्यात्मन्यसम्भवात् तादृशज्ञानाप्रसिद्धेः। अनुमानमप्युच्यते ज्ञानत्वं विशेष्यावृत्तिप्रकारक( प्र ? )वृत्तिहेतु प्र-त्यक्षात्मविशेषगुणवृत्तिधर्मत्वात् इच्छात्ववत्। साध्यप्रसिद्धिरुक्तैव। न च द्वेषत्वे व्यभिचारः, अशत्रावेव शत्रुं द्वेष्मीत्यनुभवात्तत्रापि तत्सि-द्धेरिति सामान्यतः, विशिष्य तु रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिज-नकं रजतज्ञानं शुक्तिविषयकं शुक्तिविषयकप्रवृत्तिहेतुज्ञानत्वात् शु-क्त्यर्थ(र्थि?)न इयं शुक्तिरिति ज्ञानवत् पक्षविशेषणमहिम्ना न समूहा-लम्बनेनार्थान्तरं तथाविधमिदं ज्ञानं चारजतत्वप्रकारकं रजतेच्छा-जन्यप्रवृत्तिहेतुज्ञानत्वात् सत्यरजतविषयकेदंज्ञानवत्। न च ग्रहण-स्मरणयोर्विशिष्टज्ञानस्य वा पक्षत्वे बाध आश्रयासिद्धिर्वा शुक्तिविष-यप्रवृत्तिहेतुज्ञानत्वेनोभयसिद्धेन पक्षत्वात्। अन्यथा साध्यतदभाव-वतः पक्षत्वे अनुमानमात्रोच्छेदापत्तेः। न च विसंवादिप्रवृत्त्यजनकत्व-मुपाधिः, तथाविध इदंज्ञाने रजतज्ञाने च साध्याव्यापकत्वात् नापि

न्यायलीलावतीप्रकाशविवृतिः

थाख्यातिबाधकरूपविचारसाध्यो यः शुक्तौ रजतत्वप्रकारकज्ञानवि-षयत्वासंसर्गग्रहस्तद्बाध इत्यर्थः। तादृशज्ञानाप्रसिद्धेरिति। यद्यपि खण्डशः प्रसिद्धिरस्त्येव तथापि शुक्तिकर्मकत्वरजतत्वप्रकारकत्वयोः परस्पर-विरोधाचरणात् कथमन्यतररूपोपस्थितावन्यतरारोप इति भावः। प्रवृत्तीति। अत्र सुखे व्यभिचार इति प्रवृत्तिहेत्विति। धर्मत्वादौ व्यभि-चार इति प्रत्यक्षेति। आत्मपदविशेषपदे सम्पातायाते। धर्मपदं च जातिपरं गुणविभाजकोपाधिपरं वा। अतो न प्रमादौ व्यभिचारः। यत्तु आत्मपदं स्वज्ञानद्वारा प्रवृत्तिहेतौ रूपादौ व्यभिचारवारकमिति तत्तुच्छम्, एवं सति सुखे व्यभिचारापत्तेरिति दिक्।

केचित्तु प्रत्यक्षत्वं जातिविशेषणमत आत्ममनःसंयोगमादाय संयोगत्वे व्यभिचारवारणाय विशेषपदम्। आत्मपदं तु पूर्ववदेवेति वदन्ति।

रजतेच्छेति। अत्र शुक्तिरित्यादिकं(१)ध्रुवं कृत्वा पूर्वोत्तरदलयोर्वि-कल्पेनान्वयादुभयथा पक्षतावच्छेदकनिरुक्तिः। इदंज्ञान इति प्रथमे रजतज्ञान

(१) शुक्तीत्यादिकं।

स चायं सादृश्यानपेक्षस्तिक्तो गुड इत्यादौ भ्रमः । अन्य-

न्यायलीलावतीकण्ठाभरणम्

न्यत्वमत्रोपाधिरित्यर्थः । प्रकृते च दोषजन्यत्वस्यान्वयव्यतिरेकासत्त्वा-दिति भावः । असंसर्गाग्रहस्य तन्मतेऽधिकरणरूपत्वान्न तेनान्यथासि-द्धिः। आरोप्यारोपविषयसारूप्यज्ञानमारोपे तन्त्रमिति किरणावलीकारमत-मास्कन्दति—स चायमिति । न हि शुक्तिरजतसारूप्यवदत्रापि सारूप्यम-स्तीति भावः । ननु रजतभ्रमे सारूप्यनिबन्धनत्वदर्शनात् अन्यत्रा-पि तत् कल्प्यतामित्यत आह—अन्यत्रापीति । अन्यथासिद्धं तत्रापि

न्यायलीलावतीप्रकाशः

दोषजन्यत्वं परेषां ज्ञानमात्रस्य तादृशतया साधनव्यापकत्वात् । अ-न्यथा तयोरेव साध्याव्यापकत्वात् । नाप्यप्रयोजकत्वं प्रवृत्तिं प्रति वि-शिष्टज्ञानत्वेन हेतुत्वस्य व्यवस्थापितत्वादिति संक्षेपः । अधिकं तु न्यायप्रथमाध्यायनिबन्धप्रकाशे विपश्चितमस्माभिः ।

सर्वत्रारोपे आरोप्यारोपविषययोः सारूप्यग्रहः कारणमिति मतं व्यभिचारान्निराकरोति—स चेति । विपर्यय इत्यर्थः । न च गुडे तिक्त-ससंसर्गारोपेऽप्यसंसर्गाग्रहः संसृष्टसारूप्यमस्त्येवेति वाच्यम्, अ-संसर्गाग्रहस्य स्वरूपसत एवारोपहेतुत्वात् सारूप्यस्य च ज्ञातस्य तत्वात् संसृष्टाविमाविति प्रतीत्यापत्तेश्च । नन्वनुभूयमानारोपे व्यभि-चारेऽपि स्मर्यमाणारोपे तदभावात् कारणत्वं स्यादित्यत आह—अन्यत्रापीति । तथा हि सारूप्यं न स्वरूपे सदेव भ्रान्तौ हेतुः, आरोप-

न्यायलीलावतीप्रकाशविवृतिः

इति द्वितीये । प्रकृति (वृत्ति?) तुल्यन्यायतया लिङ्गासंसर्गाग्रह एवाऽनु-मितिसामग्रीति सामग्रीबलादेवाऽन्यथाख्यातिसिद्धिः । अथ लाघवेना-नुमितौ विशिष्टज्ञानं कारणं तर्हि तद्वदेव प्रवृत्तावपि तत्कारणमिति कारणत्वेनैवाऽन्यथाख्यातिकारणबाधस्यानिरस्तत्वेन गौरवस्य प्रामा-णिकत्वाभावादित्यभिसन्धायाह—सङ्क्षेप इति ।

तिक्तो गुड इत्यादावेव सादृश्यानपेक्ष इति भ्रमं निवारयति—विपर्यय इतीति । तथा च विपर्ययः सादृश्यानपेक्षस्तिक्तो गुड इत्यत्र भ्रमो यत इति हेतुत्वेन तदुपन्यस्तमिति भावः । असंसर्गाग्रह इति । अगृहीतासंसर्गत्वमित्यर्थः । संसृष्टाविमाविति । संसृष्टसारूप्येण प्रती-

त्रापि तस्यारोप्यस्मृत्युपक्षीणत्वात् । न च हस्तिनि मशकारोपापत्तिः । आरोप्यव्यावर्तकाग्रहस्याभावात् । नीलं शार्वरं तम

---

न्यायलीलावतीकण्ठाभरणम्

तदित्यर्थः । ननु सारूप्यस्यातन्त्रत्वेऽतिप्रसङ्ग इत्यत आह—न चेति । यत्रारोप्यव्यावर्त्तकधर्म्मग्रहस्तत्रारोपप्रतिबन्धकः स एवेति नातिप्रसक्तिरित्यर्थः । तथा च नानुभूयमानारोपे न वा स्मर्य्यमाणारोपे सारूप्यग्रहो हेतुस्तिक्तो गुड इत्यादावसंसर्गाग्रहस्य कथञ्चित् सारूप्यस्य सत्त्वेऽपि न तज्ज्ञानं तन्त्रं स्मर्य्यमाणारोपेऽप्यारोप्यस्मारकतयैव तदुपयोग इत्यपि न वाच्यम्, प्रकारान्तरेणापि आरोप्यस्मृतिसम्भवात् । ननु मसीगुटके माषारोपदर्शनादनुभूयमानारोपेऽपि सारूप्यं तन्त्रमिति चेन्न, तत्रापि स्वरूपसत एव तस्य तन्त्रत्वात् । यत्र सारूप्यस्मारितं रङ्गं तत्र रङ्गानारोपे तद्व्यावर्त्तकधर्म्मग्रह एव तन्त्रं न तु सारूप्यग्रह इति । किञ्च स्वभावे नीलरूपारोपे नीलरूपवदभेदारोपे वा सारूप्याभावात् तद्ग्रहो न कारणमित्याशयेन तमोवादमवतारयति—नीलं शार्वरं तम इति । सादृश्यानपेक्ष इत्यनुषज्यते । ननु तिक्तो गुडः पीतः शङ्ख इतिवद् भाव एव क्वचित् नी-

न्यायलीलावतीप्रकाशः

स्थित्या तस्याऽन्यथासिद्धत्वात् । नाऽप्यरोप्यस्मारकतया अदृष्टादिना संस्कारोद्बोधेऽप्यारोप्योपस्थितेः । न च शुक्तिनिष्ठसारूप्येण यत्र रजतं स्मर्यते रूपान्तरेण च रङ्गं तत्र शुक्तौ रजतत्वमेवारोप्यते न रङ्गत्वमतस्तत्र सारूप्यं प्रयोजकमिति युक्तं तत्र रङ्गव्यावर्त्तकधर्मग्रहादेव तदनारोपोपपत्तेः । तदग्रहे च तत्र रङ्गरजतसंशयस्यैव भावादिति भावः ।

नीलं शार्वरं तम इति । सादृश्यानपेक्ष इत्यनुषज्यते । आलोकाभावनीलरूपवतोः सारूप्याभावादित्यर्थः । ननु नीलं तम इत्यनुभूयमानारोपः स्मर्यमाणारोपे च सारूप्यं हेतुः । तथा हि यत्र साक्षात्कारि-

न्यायलीलावतीप्रकाशविवृतिः

तिर्भवतां संसृष्टत्वविशेषणिकैव स्यादिति भावः ।

ननु नीलं तम इति । तमसि नीलरोपो(रूपा?)रोपोऽप्रसिद्ध एव नीलरूपस्यैव तमस्त्वात् । नीलरो(रू?)पारोपश्चानुभूयमानारोप एव ।

इति च भ्रमः। तमो नाभावात्मकं विध्याद्यात्मकतया(१) वेदनात्। न च नित्यं, रात्रिन्दिवविभागानुपपत्तेः। अनित्यं च न चलनात्मकं, तथाऽनवभासात्। अचलनात्मकं च न गुणवत्, आरभ्यत्वानारभ्यत्वाभ्यां व्याकोपात्। न निर्गुणमद्रव्यद्रव्यगं

---

न्यायलीलावतीकण्ठाभरणम्

लरूपारोपस्तत्र चासंसर्गाग्रह एव सारूप्यमित्यभिप्रायेण परिशेषमवतारयति—तम इति। विध्यात्मकतयेति। विधिमुखप्रत्ययवेद्यत्वादित्यर्थः। सामान्यविशेषसमवायानां भेदकमाह—न चेति। तमःप्रध्वंसमन्तरेण रात्रिन्दिवविभागानुपपत्तेरित्यर्थः। कर्म्मतो भेदकमाह—अनित्यं चेति। तथेति। तमोयुक्ते गृहादौ चलतीति प्रत्ययप्रसङ्गादित्यर्थः। द्रव्याद् भेदकमाह—अचलनात्मकं चेति। आरभ्यत्वे निःस्पर्शत्वानुपपत्तिरनारभ्यत्वे चानित्यत्वानुपपत्तिरित्यर्थः। गुणभेदकमाह—न निर्गुणमिति। 'अद्रव्यद्रव्यगं' असमवेतद्रव्यसमवेतमित्यर्थः। ततश्च परमाणुगुणत्वे

न्यायलीलावतीप्रकाशः

भ्रमे आरोपविषयस्यैवारोप्यस्मारकत्वं तत्रारोपे सारूप्यग्रहो हेतुः स्यादिति मनसि कृत्य परिशेषमुखेनाह—तम इति। विध्यादीत्यादिपदान्नीलरूपाश्रयत्वादिसंग्रहः। रात्रिन्दिवेति। न च तमसो गतिमत्त्वात्तद्विभागोपपत्तिः चाक्षुषत्वेन तस्य महत्त्वान्नित्यमहतश्च गतिविरोधात्। सामान्यादित्रयात्मकत्वमनित्यत्वेनैव निरस्तमिति कर्मत्वं निराकरोति—न चलनेति। द्रव्यत्वं निराकरोति—अचलनेति। आरब्धतायामस्पर्शत्वव्याघातः, अनारब्धत्वे च तत्र नित्यत्वापत्तेः। तत्र चोक्त एव दोष इत्यर्थः। गुणत्वं निराकरोति—न निर्गुणमिति। 'अद्रव्यद्रव्यगं'

न्यायलीलावतीप्रकाशविवृतिः

स्मर्यमाणारोपत्वे वा रूपवत्त्वमेव तदाश्रयसाधर्म्यमित्याक्षेप्तुरभिसन्धिः। रात्रिन्दिवेतीति। रात्रौ दिवा च यः प्रतीत्यप्रतीतिरूपो विभागः स न स्यादिति मूलार्थः। चाक्षुषत्वेनेति। चाक्षुषद्रव्यत्वेनेत्यर्थः। यद्वा तस्येत्यस्य गतिमत इत्यर्थः। एवं च चाक्षुषत्वे सति गतिमत्त्वा(दि?)तिहेतुर्लभ्यते। यथाश्रुतस्य घटस्पर्शादौ व्यभिचारादाह—

(१) विध्यात्मकतयेति कण्ठाभरणधृतः पाठः।

चाक्षुषत्वात् । नानेकद्रव्यद्रव्यगम्, आलोकनिरपेक्षवेदनत्वात् । ततो भूरूपमारोपितं तम इति चेत्, न, विचारासहत्वात् । स हि अनुभूयमानारोपो वा सावित्रतेजसि पित्तपीतिमवत्, स्मर्यमाणारोपो वा नेदीयस्यणीयस्यपि महत्त्ववत्स्यात् । नाद्यः । आलोकं विना तदननुभवात्(१) । तुल्यमभावेऽपीति चेत्, न, अभावग्रहेऽपि प्रतिपक्षापेक्षायां तद्ग्रहव्याघातात् । रूपे तु तदनपेक्षाया दोषात्(२) । नेतरो, गगनादेरतीन्द्रियत्वात् । क्षित्यादेरा-

---

न्यायलीलावतीकण्ठाभरणम्

चाक्षुषत्वानुपपत्तिरिति भावः । अवयविसमवेतत्वे दोषमाह—नानेकेति । अतथारोपितं पार्थिवनीलरूपं तमो न त्वभाव इत्युपसंहरति—तत इति । स हीति । लवणगतपित्तद्रव्यगतः पीतिमा यथा अनुभूयमान एवारोप्यत इत्यर्थः । नेदीयसीति । चक्षुर्निकटवर्त्तिनि केशादौ महत्त्वं स्मर्य्यमाणं यथाऽऽरोप्यत इत्यर्थः । आलोकमिति । अनुभूयमानतैव नीलरूपस्य आलोकं विना न स्यात् । अतथाऽऽरोप इत्यर्थः । तुल्यमिति । आलोकं विना अभावो धर्म्मी नीलरूपं वा कथं भासतामित्यर्थः । अभावेति । आलोकाऽभाव एव तमस्तद्ग्रहे च नालोकाऽपेक्षा न हि घटाभावग्रह इत्यर्थः । रूपे त्विति । रूपं चालोकाऽनपेक्षं न भासत एव किमारोप्यतामित्यर्थः । गगनादेरिति । तथा च कुत्र धर्म्मिणि स्मर्य्यमाणं नीलरूपमारोप्यतामित्यर्थः । क्षित्यादेरिति । आरोपविषयस्य स्वरूपयोग्यतायामपि सहका-

न्यायलीलावतीप्रकाशः

असमवेतद्रव्यसमवेतद्रव्यसमवेतामित्यर्थः । आलोकेति । आलोकानपेक्षचक्षुर्ग्राह्यत्वादित्यर्थः । भूरूपमिति । पार्थिवं नीलं रूपमित्यर्थः । 'तदननुभवात्' नीलरूपाऽननुभवादित्यर्थः । तुल्यमिति । आलोकाभावेऽपि नीलरूपारोपो नालोकं विना स्यादित्यर्थः । तद्ग्रहेति । तथा सत्यालोकाभाव एव न स्यात्तद्ग्रहणे तेजोऽपेक्षा स्यादित्यर्थः । स्मर्यमाणारोपविषयो नित्योऽनित्यो वा ? आद्ये गगनेति । अन्त्ये क्षित्यादेरिति । आरोप्य-

न्यायलीलावतीप्रकाशविवृतिः

आलोकानपेक्षचक्षुर्ग्राह्यत्वादिति । नन्वसवयोरपि(?) प्रतीतिरूपो व्यवहार ए

---

(१) तदननुभवात् । (२) यामेव दोषात् ।

लोकसापेक्षवेदनत्वात् । ततो भावाभाव(१) एवायम् । शुक्लादि-व्यावृत्तिनिबन्धनस्तु नीलादिव्यवहारः सषयोरिव ष(२)व्यवहारो गौडानाम् । भावत्वेन वेदनमप्यसिद्धमित्यादि तात्पर्यशुद्धा(३)वुदयनः, अथ वा प्रतियोगिवाचकावच्छिन्ननञभिलापप्रतिभास-शून्यतया विधिमुखत्वाभिमानात् । एतच्चालोकप्रतियोगिकनिषेधबोधकैरन्धकारतिमिरादिपदैरवच्छिन्नस्य तस्य भासनात् ।

---

न्यायलीलावतीकण्ठाभरणम्

रियोग्यताविरहान्न तद्ग्रहस्तथा च कुत्रारोप इत्यर्थः । तत इति । तेजोऽभावग्रहे प्रतिपक्षस्यालोकस्य तावन्नापेक्षा नीलव्यवहारस्तु तत्राऽन्यथोपपन्न इत्यर्थः ।अन्यथोपपत्तिमाह—शुक्लादीति । ननु रूपान्तरव्यवहार एव तत्र कथं न स्यादत आह—शषयोरिति । यथा वर्णान्तरव्यावृत्तिकृतत्वेन तत्र नियमस्तथा प्रकृतेऽपीत्यर्थः । भावत्वेनेति । विधिमुखप्रत्ययवेद्यत्वमसिद्धमित्यर्थः । विधिमुखप्रत्ययवेद्यत्वाभिमानमात्रं प्रकृते न तु परमार्थत एव तथा । अभिमानबीजमाह—अथ वेति । प्रतियोगिवाचकं यत्पदं तत्र नञ्समभिव्याहारो नास्तीत्येतावतैवाऽयमभिमानः । नञभिलापशून्यत्वमेव कथं यद्यभावस्तम इत्यत आह—एतच्चेति । अन्धकारतिमिरादिपदानामालोकाभाव एव सङ्केतितत्वात्तत्र च नञ्समभिव्याहारेऽनन्वयापत्तेरिति भावः । 'अव-

न्यायलीलावतीप्रकाशः

स्मरणेऽप्यारोपविषयाज्ञानादारोपानुपपत्तेरित्यर्थः। एकदेशिमतमाह—शुक्लादीति । नीलादिव्यवहारः शब्दप्रयोगमात्रं न तु प्रतीतिरित्यर्थः । अथ वेति । अभावत्वेनेति । साधकमानाभावात्तत्र बाधकाच्चेत्यर्थः । अथ वेति । अभावत्वेनेति । साधकमानाभावात्तत्र बाधकाच्चेत्यर्थः । प्रतियोगिवाचकेत्यादि त्वभावप्रत्त्र नञभिलापशून्यत्वमेव प्रयोजकं

न्यायलीलावतीप्रकाशविवृतिः

(का?)कारो नास्त्येवातो विशेषयति—शब्दप्रयोगमात्रमिति। भावत्वेनेतीति । यद्यपि विशब्दस्य निषेधार्थतया नञर्थकपदाभिलापशून्यत्वमसिद्धं तथापि नञभिलापशून्यत्वमेव विवक्षितमन्यथा तिमिरादिपदस्यापि नञर्थकतया प्रकृतेऽप्यसिद्धापत्तेस्तद्याप्त्येवेति भावः । वस्तुतो वि-

---

(१) ततोऽभाव ए० । (२) शषयोरिव स । (३) ०र्यपरिशुद्धावु० ।

विमलं जलं तिष्ठति भूपतिरितिवत् कदाचिन्नालोकाभावोऽधुने-त्यनेनाकारेण प्रतीयत इति । न चैकवाचकावच्छेदेन(१) वस्तु प्रतिभासते, घटः कलश इति बहुशः प्रतीतेः। यदि वाऽऽलोका-भाव एव नीलत्वं भावत्वं चारोप्यते चलनवत् न च प्रतिपक्षाप्रतीता-

न्यायलीलावतीकण्ठाभरणम्

च्छिन्नस्य' वाच्यस्य। अत्र दृष्टान्तमाह—विमलमिति। मलाभाववदित्य-र्थः। तिष्ठतीति। इति (गतिनिवृत्तिमा ?) नित्यर्थः । ननु तमसो-ऽभावत्वे कदाचिंन्निषेधमुखेनापि प्रतीतिः स्यादित्यत आह—कदाचि-दिति। ननु तमस्त्वेनं भासमानमालोकाभावत्वेन कथं भासतामत आह—न हीति। स्वाभिमतं सिद्धान्तमाह—यदि वेति। मूर्त्तं नीलमिति-व्यपदेशमात्रमुक्तं इदानीं नीलरूपभानमेवाभ्युपगम्यते । चलति तम इत्यत्र कर्म्मारोपवदित्यर्थः । ननु यद्यालोकाभाव एव तमस्तदा

न्यायलीलावतीप्रकाशः

-तिपत्तिक्रमकथनोपयोगिमात्रम्। विमलमिति। मलाभावमात्रम्। 'तिष्ठति' गतिनिवृत्तिमानित्यर्थः। तथा च विध्यात्मकतया वेदनमसिद्धमिति भावः। स्वाभिमतमाह—यदि वेति। शब्दप्रयोगमात्रं तदा कल्प्येत यद्यारोपरूपतायामनुभवसिद्धायां बाधकं स्यान्न त्वेवम्, आरोपे साद-

न्यायलीलावतीप्रकाशविवृतिः

शब्दस्यात्र द्योतकत्वमेवेति नञ्पर्यायाभिलापशून्यत्वमस्त्येव। तिमि-रपदमपि न नञ्पर्यायोऽधिकवाचकत्वादिति न प्रकृतेऽव्याप्तिसिद्धि-रिति द्रष्टव्यम्। स्वच्छत्वपर्यन्तामिति यदि विमलशब्दार्थः स्यात्तदा तत्र भावत्वप्रतीतिः प्रमैव स्यादिति न दृष्टान्तसङ्गतिरतो मात्रग्रह-णम्। 'वेदनं' प्रमा वेदनमात्रं च व्यभिचार्यैवेति भावः। स्वाभिमतमिति। नीलत्वं तमसि न प्रतीयत एव व्यपदेशस्त्वनीलव्यावृत्तिकृत इति प्रागुक्तं तत्राऽनभिमत्या नीलत्वारोपं स्वाभिमतमाहेत्यर्थः। भावत्वारोपो यद्यपि पूर्वेणाऽप्युक्तस्तथापि पूर्वतरेण नोक्त इति तत्रापि स्वाभिमतत्वविशेषणाऽविरोधः । आरोप इति । एतच्च वस्तुगतिमति (मि?) सन्धाय । वस्तुतो यथाकथञ्चित्सा-

(१) न हीति कण्ठाभरणधृतः पाठः। ०च्छेदेनैव व०।

वप्रतीतिः । दोषवशादिन्द्रियविषयेषु इन्द्रियाणां प्रतीतचरसहकारिनिरपेक्षतादर्शनात् । भवति हि कामातुरस्य कामिनीसाक्षात्कारे सन्निकर्षाऽनपेक्षा आलोकाऽनपेक्षेव परेषाम् । न च दोषाभावः । तेजोऽभावस्य सकलस्वप्रतिपक्षनिवृत्तिसाहचर्यस्यैव दोषत्वात् । अत एव दिवा तुहिनकरकरप्रसाराभावेऽपि न नीलारोपः ।

---

न्यायलीलावतीकण्ठाभरणम्

प्रतियोगिस्मरणमन्तरेण तत्प्रतीतिर्न स्यादित्यत आह—दोषवशादिति। प्रतियोगिस्मरणमन्तरेणापि दोषात्तमः प्रतीतिः । दोषश्च विषय एवात्रेति भावः । एतच्चाभ्युपगमवादः, परन्तु प्रतियोगिज्ञानं कथञ्चित्तत्राप्यस्त्येव। इन्द्रियदोषात् सहकारिनैरपेक्ष्ये दृष्टान्तमाह—भवतीति । हीति । कामिनीसाक्षात्कारे सन्निकर्षापेक्षायामपि ध्याने यथा तदनपेक्षेत्यर्थः । किञ्च परेषामारोपितं भूरूपमेव तम इतिवादिनां यथा रूपारोपेऽन्यत्र पीतः शङ्ख इत्यादावालोकानपेक्षा तथा नीलरूपारोपात्तमःप्रत्यये दोषप्राधान्यान्न तदपेक्षेति दृष्टान्तत्वम् । यावत्तेजःसंसर्गाभाव एव प्रकृते दोष इत्याह—सकलेति । अत एवेति । यतो न तत्र

न्यायलीलावतीप्रकाशः

ध्यानपेक्षाया उक्तत्वादिति भावः । 'प्रतिपक्षः' प्रतियोगी । अस्माकमालोकाऽनपेक्षा परेषां सन्निकर्षाऽनपेक्षेवेति योजना । तेजोऽभावस्येति । उद्भूतरूपयावत्तेजःसंसर्गाभावस्य विषयस्यैव दोषत्वादित्यर्थः । अत एव सर्वसाधारणी भ्रान्तिरिति भावः। 'तदारोपो' नीलरूपारोपः । दोषेति । दोषस्वभावविशेषादेवाऽभावविशेषे आरोपोऽधिगतनील एव

न्यायलीलावतीप्रकाशविवृतिः

दृश्यमपि सम्भवत्येवेत्यवधेयम् । प्रतिपक्षाप्रतीतिरिति मूलम् । अत्रालोकाभाव इत्येवार्थोऽप्रतीतिस्तु साधकतयोक्ता । तेनाऽऽलोकाऽनपेक्षेत्यग्रेतनेनाविरोधः । उष्णादिरूपस्य तेजसो विद्यमानत्वादाह—उद्भूतेति। परप्रकाशकेत्यर्थोऽन्यथा सुवर्णादिसत्त्वेनासम्भवतादवस्थ्यात् । अनधिगतनीलभावस्य तदारोपो वेति मूलं सुगममेव । यदि तु तदानारोप इति पाठस्तदा न चेति पूर्वत्रान्वयीत्येक एवार्थः । महाप्रलयस्य व्यवहाराधिकरणत्वं प्रतीयत इति विरोधमाशङ्क्याह—आरोपेति । व्यवहारपदेन

न चाभावमात्रे तदारोपः । अनवगत(१)नीलभावस्था(२)तद-
नारोपो वा दोषवैचित्र्यादेवाधिष्ठाननियमोपपत्तेः । वंशोरगभ्र-
मवत् । न चाऽऽलोकाऽनपेक्षा दोषः । अभावग्रहे प्रतिपक्षापेक्षाया-
मभावग्रहणप्रसङ्गात्(३) । न चाभावे भावधर्माऽनारोपः । दुःख-
संयोगाभावादौ सुखविभागादिव्यवहारदर्शनात् । महाप्रलये च

---

न्यायलीलावतीकण्ठाभरणम्

यावत्तेजःसंसर्गाभाव इत्यर्थः । एवं सति घटाभावादावपि नील-
रूपारोपः स्यान्नीलाननुभवदशायां च तदनारोपः स्यादित्याशङ्क्याह—
न चेति । प्रथमे देश्ये दोषमाहात्म्यं द्वितीये त्वाभिप्रायिकं स्मर्यमाणा-
रोपत्वं समाधानम् । प्रथमदेश्ये दृष्टान्तमाह—वंशेति । यथा मण्डूकव-
साक्तनयनस्य वंश एवोरगभ्रमो नान्यत्रेत्यर्थः । 'आलोकानपेक्षा' आ-
लोकासमवधानम् । अभावग्रहे प्रतियोगिसमवधानं विरुद्धमेवेत्याह—
अभावग्रह इति । दुःखसंयोगाभावादाविति । दुःखाभावे सुखारोपः सं-
योगाभावे विभागारोपः । महाप्रलय इति । विषयसप्तमी पूर्वदेशदर्शने
सत्युत्तरदेशदर्शनं देवदत्तादौ गतिमति यत्तादिहाप्यस्तीति अत्रापि

न्यायलीलावतीप्रकाशः

चारोपयतीत्यर्थः । अधिष्ठाननियमेत्युपलक्षणम्, अधिगतनीलनियमे-
त्यपि द्रष्टव्यम् । वंशेति । मण्डूकवसाक्तनेत्रस्य यथा वंश एवोरगभ्रम
इत्यर्थः । अभावग्रह इति । पूर्वमन्यमतमाश्रित्येदानीं स्वमतमाश्रित्या-
भिधानमित्यपौनरुक्त्यम् । दुःखसंयोगेति । न चात्मन्येव सुखारोपो नष्ट-
संयोगद्रव्यद्वय एव च विभागारोपो न त्वभाव इति वाच्यम्, इदा-
नीमुत्पन्नं सुखं भारापगमादिति प्रत्ययादिदानीमुत्पन्ने सुखत्वारोपो
दुःखाभाव एव च तथेत्यर्थात् दुःखरहिता वयमिति तद्विवरणाच्च । एवं
च विभागत्वारोपोऽपि तादृशसंयोगाभाव एवेति भावः । महाप्रलये चे-
ति । आरोपाधिकरणत्वे सप्तमी प्रलये चाभावे यथा महत्त्वारोप इत्य-
र्थः । विभिन्नदेशत्यादिनोत्पाद इत्यन्तेन कारणकथनं पूर्वनाशे सती-

न्यायलीलावतीप्रकाशविवृतिः

च करणव्युत्पत्त्या ज्ञानमुक्तमिति भावः । पौनरुक्त्यभयादाह—विभिन्नदे-

---

(१) अनधिगतनी० । (२) ०भावस्य तदना० । (३) ०णव्याघाताव ।

महत्त्वव्यवहारदर्शनात् । चलनारोपश्च विभिन्नदेश(१)वर्त्तिनोर-भावयोरुत्पादे पूर्वनाशे सति उत्तरजन्मनि पूर्वदेशादर्शने सत्यु-त्तरदेशदर्शनात् । स्मृतिविपर्ययपक्षस्त्वसम्भावित एव । जाग्रतां तदनुपपत्तौ छायादिव्यवहारविलयात् । अन्यथा विश्वप्रकाश-प्रत्ययस्यास्तमयत्वप्रसङ्गात् । अवश्यं चैवम् (२) । अन्यथा तमः-

---

न्यायलीलावतीकण्ठाभरणम्

गतिव्याहारस्तदेव कथमत्रेत्यत आह—विभिन्नदेशयोरिति । अबाधकद्र-व्ये सर्पति पूर्व्वस्य तेजसो नाशे उत्तरस्य तेजस उत्पादे विभिन्नदे-शयोस्तेजोध्वंसयोरुत्पादे पूर्वदेशेऽदर्शनमुत्तरदेशे दर्शनं गतिव्यव-वहारहेतुरित्यर्थः । स्मृतिविपर्य्ययस्त्विति । स्वप्नज्ञाने परेषां स्मृतिविपर्य्य-यसंज्ञा । असम्भावनायां हेतुमाह—जाग्रतामिति । अन्यथेति । जाग्रद्-शाज्ञानस्यास्वप्नत्वे विश्वेषां स्वप्नत्वमेव स्यादित्यर्थः । अवश्यं चैवमिति । आरोपितनीलरूपोऽभावस्तम इत्यवश्यमित्यर्थः । अन्यथेति । यद्यारोपि-

न्यायलीलावतीप्रकाशः

ति प्रकारकथनम् । 'पूर्वनाशे' आलोकप्रागभावनाशे । आलोकस्यो-त्पाद इति यावत् । 'उत्तरजन्मनि' उत्तरदेशेऽभावजन्मनीत्यर्थः । पूर्वदेशेति । पूर्वदेश आलोकाभावादर्शने सत्युत्तरदेशे आलोकाभावदर्श-नादित्यर्थः । 'स्मृतिविपर्ययो' निद्राजन्यो ज्ञानविशेष इत्यर्थः । 'विल-यात्' विलयापत्तेरित्यर्थः । ननु निद्राजन्य एव तदनुभव इत्यत आह—अन्यथेति । एवं सति जाग्रद्दृष्टानुभवोऽपि निद्राजन्यः स्यादित्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

शेत्यादिनेति । कारणेति । अत्र वक्ष्यमाणयोरालोकाभावादर्शनादर्शन-योरिति भावः । तथा चाभावयोरिति मूलस्यालोकप्रागभावालोकयोर्या-भावौ आलोकतद्ध्वंसात्मकौ तयोरित्यर्थ इति भावः । प्रकारकथनमि-ति । कुत्र कस्योत्पाद इति विशेषजिज्ञासायां सामान्योक्तस्यैव प्रका-रकथनमतो न पौनरुक्त्यमिति भावः । एवञ्च पूर्वनाश इति मूलस्य पूर्वत्र नाश इत्यर्थः । 'अभावजन्मनि' आलोकाभावजन्मनीत्यर्थः ।

---

(१) ॰भिदिगूवर्त्ति॰ । ॰न्नदेशयोर॰ । (२) ॰श्यं चैतदेवम्॰ ।

सामानाधिकरण्यप्रतीतेरनुपपत्तेः । न हि नीलं रूपं समारोपित- तथाभावं वा तमः । अतिप्रसङ्गात् । किं त्वालोकमात्राभाव ए- वेति । विपर्ययः(१) ।

---

न्यायलीलावतीकण्ठाभरणम्

तं रूपमेव तमः स्यादित्यर्थः । दूषणान्तरमाह—न हीति । नीलीवस्त्र- चर्म्मकम्बलादावपि तमःप्रत्ययप्रसङ्ग इत्यर्थः । उपसंहरति—किन्त्विति । चाक्षुषसाक्षात्कारकारणयावत्तेज(स ? )श्च संसर्गाभावस्तमः । कि- ञ्चित्तादृशतेजःसमवधाने तु स एवान्धतमसम् । अत्यन्ताभावप्र- ध्वंसात्मकसमुदायस्य किञ्चित्समुदायविरहप्रयुक्तः कादाचित- कव्यवहारो धान्यादिराशाविव ।

पनसादौ किंस्विदिदमिति ज्ञानमसाधारणधर्म्मजन्यमनध्यव- सायः । स च वैशेषिकमते संशयाद् भिन्नः । तद्विषयं विवेक्तुं विक-

न्यायलीलावतीप्रकाशः

एवम् आरोपितनील आलोकाभावस्तम इत्यर्थः । सामानाधिकरण्येति । यदि नीलं रूपमारोपितं तमः स्यात् तमो नीलमिति प्रतीतिर्न स्यात् नीलस्यैव तमस्त्वादित्यर्थः । न हीति । यदि नीलरूपमात्रं यदि चारो- पितनीलं वस्त्वन्तरं तमस्तदाऽऽलोके सत्यपि नीलीरक्तवस्त्रादिष्वपि तमःप्रतीतिः स्यादित्यर्थः । किन्त्विति । चाक्षुषसाक्षात्कारकारणया- वत्तेजःसंसर्गाभावोऽन्धतमसं किञ्चिद्बाह्यालोकसम्बलनेन तु तारत-

न्यायलीलावतीप्रकाशविवृतिः

अभिमतं सारूप्यमाह—आरोपितनीलमिति । आरोपितनीलवस्तुमात्रमि- त्यर्थः । आलोकाभाव इति मूले आलोकशब्दस्य किञ्चित्परत्वे अतिप्रस- ङ्गो यावत्परत्वे चासम्भव इत्यरुचेराह—चाक्षुषेति । अत्र कारणान्तं प्र- त्यक्षरूपवत्परमतो न चक्षुःसुवर्णादिकमादायातिव्याप्तिः । द्रव्यवृ- त्तिश्चायमन्धकार इति रूपादौ दिवापि तत्सत्त्वमादाय नातिव्याप्तिः । अवतमसलक्षणमाह—किञ्चिदिति । बाह्यत्वं योग्यरूपवत्त्वमतो न चक्षु- रादिकमादायान्धतमसातिव्याप्तिः । तारतम्यमुत्कर्षापकर्षौ । तौ चा- लोकासम्बलनतत्सम्बलने एव । ननु दिनेऽप्यतिव्याप्तिः, तदापि पूर्वा-

---

(१) इति वि० ।

अनध्यवसायोऽपि समुच्चिताशेषविशेषविषयो वा वाच्यो, व्याप्तिबोधवत्, अनिश्चितैकविषयो वा, असमुच्चितनानाविषयो

---

न्यायलीलावतीकण्ठाभरणम्

रूपयति—अनध्यवसायोऽपीति । सर्ववाचकवाच्योऽमिति वा तस्य विषयः किञ्चिद्वाचकवाच्योऽयमिति वा आत्माऽयं वा कोविदारोऽयमिति

न्यायलीलावतीप्रकाशः

ऽयमित्यर्थः । ननु तमसः कादाचित्कत्वान्नात्यन्ताभावरूपत्वं प्राग-भावप्रध्वंसौ च न समानकालप्रतियोगिनौ । मैवम् । अभावसमुदा-यगोचरप्रत्यये किञ्चित्समुदायिव्यतिरेकात् कादाचित्कत्वोपपत्तेः पृथग्भूतेषु समुदायिषु नेदानीं राशिरितिवत् । अधिकन्तु द्रव्यप्रकाशे विपाञ्चितमस्माभिः ।

अनुपलब्धसपक्षविपक्षसहचारस्यासाधारणधर्मस्य दर्शनात् प-नसादौ किञ्चिदयमिति ज्ञानमनेककोटिकमनध्यवसायः संशयभिन्नो विषयभेदादिति-तद्विषयं विकल्पयति—अनध्यवसायोऽपीति । अयं धर्मी मिलितसर्ववाचकवाच्य इति विषय इत्यर्थः । व्याप्तीति । यथा धूमो वह्नि-व्याप्य इत्याकारे व्याप्तिग्रहे सर्वधूमवह्निव्याप्तिर्विषय इत्यर्थः । अनि-श्चितेति । अनिर्द्धारितैकवाचकवाच्यत्वं विषय इत्यर्थः । असमुच्चितेति ।

न्यायलीलावतीप्रकाशविवृतिः

परदिनतेजसोः संसर्गाभावात् । न च दोषातनत्वं विशेषणं दिवात-नाऽवतमसाव्याप्तेः । न च अन्यूनसंख्यतेजःसंसर्गाभावोऽवतमसमि-ति वाच्यम्, अनन्तदिनसम्बन्धितेजसां संसर्गाभावसत्त्वेन तथापि दिनेऽतिव्याप्तेरिति । मैवम्, आलोकाजन्यनीलविशिष्टचाक्षुषसाक्षात्का-रविषयत्वं तमःसामान्यलक्षणम् । बाह्यालोकसम्वलितं च तदेवावत-मसलक्षणमिति भावात् । छाया च यदि नाऽवतमसं तदा तदन्यत्वम-पि विशेषणम् । छायात्वं चालोकाजन्यगत्यारोपाविषयतावच्छेदकाव-च्छिन्नभावसमुदायत्वमिति दिक् ।

प्रागभावेति । अन्धकारकालेऽपि देशान्तरे तत् सत्त्वादिति भावः । पृथगिति । न च तद्द्रव्यत्वगुणत्ववमात्रं(?) न व्यतिरेक इति वाच्यम्, तेद्देशे व्यतिरेकस्य सत्त्वादिति ।

अयं धर्मीति । सर्ववाचकेत्याद्युत्तरग्रन्थानुरोधेन वाचकवा-

वा। नाद्यः। धूमो वह्निनियत इतिवत् पनसे सर्ववाचकाध्यवसायापत्तेः। नेतरः। अविद्यात्वव्याकोपात्। एकं वाचकमिवावाचकमपि स्पृशतीति संविदविद्येति चेत्, न, संशयतापत्तेः। तृतीये तु संशय एवायमिति भूषणः। मैवम्। सामान्यतोऽवगते विशे-

न्यायलीलावतीकण्ठाभरणम्

षेति। नाद्य इति। वह्निव्याप्योऽयं धूम इतिव्याप्तिग्रहवत् सर्ववाचकवाच्योऽयमिति तदाकारः स्यात् स चानुपलम्भबाधित इत्यर्थः। नेतर इति। किञ्चिद्वाचकवाच्योऽयमितिप्रतीतेः सत्यत्वात् किञ्चित्त्वेनाऽऽत्मकोविदारादिकमपि विकल्पविषयस्तथा चाविद्यात्वमित्याह-एकमिति। दूषयति-नेति। जिज्ञासालक्षणेन फलेनैव अनध्यवसायं संशयविलक्षणं साधयति-सामान्यत इति। सामान्यतो वृक्षत्वादिना, विशेष-

न्यायलीलावतीप्रकाशः

एकैकवाचकवाच्यत्वं विषय इत्यर्थः। धू. इति। यथा व्याप्तिग्राहके ज्ञाने धूमत्ववह्नित्वाक्रान्ताः सर्वव्यक्तयः स्फुरन्ति तथा किंशब्दवाच्योऽयं वृक्ष इत्यत्र ज्ञाने सर्ववाचकस्फुरणे सर्ववाचकश(ब्द ?) वाच्योऽयं वृक्ष इति प्रत्ययः स्यादित्यर्थः। अविद्यात्वेति। विशेष्यावृत्त्यप्रकारकत्वादित्यर्थः। तृतीये त्विति। एकत्र धर्मिणि विरुद्धनानाकोटिकज्ञानत्वादित्यर्थः। सामान्यत इति। अयं किञ्चिद्वाचकवाच्यो वृक्षत्वादिति निश्चयेऽपि विशिष्यैतच्छब्दवाच्योऽयमित्यनिर्णय इत्यर्थः। ननु सामान्यतोऽवगमानन्तरं जिज्ञासोत्तरं किंशब्दाभिलापसमयेऽनध्यवसाय इति विप्रतिपिद्धम्, अनध्यवसायस्य जिज्ञासाजनकत्वेन प्राक्कालीनत्वात् नाना यदा तदेत्यनेन हि सामान्यतोऽवगमोत्तरजिज्ञासानन्तरं किंशब्दाभिलापसमयेऽनध्यवसाय इति विप्रेधिकरणस्य(?) विशिष्टस्यैव कालस्य विवक्षितत्वात्। तत्कालान्वयश्चैकदेश-

न्यायलीलावतीप्रकाशविवृतिः

व्यत्वपर्यन्तधावनम्। वस्तुतः सत्त्वादिसर्वाधिकरणोऽयमिति विषय इत्यपि विकल्पो युज्यत एव। तत्र पनसोऽयमाम्रोऽयमित्याद्युल्लेखापत्तिरिति दूषणम्। एवमितरविकल्पयोरपि। यदा तदेत्यनेनेति। मूलस्थितेनेति शेषः। विशिष्टस्यैवेति। मूल-

षतोऽज्ञाते जिज्ञासिते वाच्यविशेषे यदा किंशब्दाभिलापः, तदानध्यवसायः। अव्यवस्थितनानावाचकवाच्यत्वप्रतिभासे तु संशय इति। अविद्यात्वं तु विशेषव्यवहारपरिपन्थित्वादिति रम्यम्। अनध्यवसायः(१)॥

---

न्यायलीलावतीकण्ठाभरणम्

तः पनसत्वादिना। यदा तदेति। स्थूलकालोपाधिमादाय अनध्यवसायस्य जिज्ञासापूर्व्वकालीनत्वेन उत्पत्तियौगपद्याभावात्। ननु संशय एव तज्जनकः स्यादित्यत आह—अव्यवस्थेति। जिज्ञासापूर्वकाले विरुद्धनानाऽननुभावकत्वात् अनुभूयमानं तज्ज्ञानं विशेषतोऽनुल्लिखितनानाकोटिकत्वान्न संशयः किंस्विदिदमित्याकारमात्रस्यैव ज्ञानस्य तदाऽनुभवात् स चानध्यवसाय एवेति भावः। अनुल्लिखितनानाकोटिकं ज्ञानमनध्यवसायः स च उल्लिखितविरुद्धनानाकोटिकज्ञानात् संशयाद् भिद्यत एवेति व्यधिकरणप्रकारावच्छेदाभावेऽपि विशेषव्यवहारपरिपन्थित्वादविद्यात्वमित्याह—अविद्यात्वमिति।

न्यायलीलावतीप्रकाशः

द्वारापि न विरुध्यते, तथापि निश्चयसंशयभिन्ने तत्कालीनज्ञानान्तरे मानाभावः। न हि तावज्जिज्ञासा तत्र निर्णयजन्या अनुच्छेद्यत्वापत्तेः, नापि संशयात् सा कोटिद्वयानुल्लेखात्। तस्मात्संशयभिन्नं जिज्ञासाजनकमवश्यं वाच्यम्। न च संशयादभेदः विरुद्धनानाप्रकारकमेकधर्मिकं ज्ञानं संशयः विशेषतो विरुद्धकोट्यनुल्लेखात् नानध्यवसायः अनुल्लिखितनानाविरुद्धकोट्युल्लेखे हि सः अत्र पनसस्य च किञ्चित्त्वेन विरोधिनानाकोटेरुल्लेखात्।

न्यायलीलावतीप्रकाशविवृतिः

स्यैवेत्यर्थः। तथा च यत्र दण्डे तत्सर्वं तत्र प्रथमभागेऽनध्यवसायो विद्यत एवेति भावः। कोटिद्वयेति। विशेषत इति पूरणीयम्। अनध्यवसायेऽपि सामान्यतः कोटिद्वयोल्लेखोऽस्त्येवेत्यरुचेराह—यद्वेति। (२)विरुद्धकोटीति। नानाविरोधिकोट्यनुल्लेखादित्यर्थः। कोट्यनुल्लेखो नाना-

---

(१) इत्यनध्यवसायः। (२) इतिप्रतीकानुसारी पाठः प्रकाशे न लभ्यते।

कथं पुनः स्वप्नज्ञानमविद्या यतो यद्विद्यातो न विशिष्यते तद्विद्यात्मकं यथा सव्येतरकामिनीकुचकलशनिर्भासः(१)। न विशिष्यते च स्वप्नज्ञानं विद्यातः। इदं बाधितमिति चेत्, न, स्वरूपविषयफलापहारात्मकबाधविरहे विपरीतार्थोपदर्शनमात्र-

---

न्यायलीलावतीकण्ठाभरणम्

अविद्याचातुर्विध्यमाक्षिपति–कथमिति। 'न विशिष्यते' न व्यावर्त्तक-धर्म्मवत्। इदमिति। स्वप्नज्ञानमित्यर्थः। बाधितत्वमेव विद्याव्यावर्त्त-कमिति भावः। स्वरूपेति। स्वप्नज्ञानस्य स्वरूपं न बाधितमनुभूयमा-नत्वात्। विषयोऽपि न बाधितः विषयाणां यथास्थानं स्थितत्वात्। कामिनीविषयकस्वप्नज्ञानस्य सुखादेः फलस्य सत्वादित्यर्थः। विपरी-तेति। जाग्रदनुभवविपरीतार्थोपदर्शनेन यदि स्वप्नज्ञानस्याविद्यात्वं तदा विपरीतमेव किं न स्यादित्यर्थः। ननु पूर्वं स्वप्नज्ञानमुत्तरेण जा

न्यायलीलावतीप्रकाशः

अत्राहुः। (वि?)शेषतोऽनुल्लिखितनानाकोटिकं ज्ञानमनध्यवसायः। अत्रापि विशेषतः कोट्युल्लेखो नास्ति किञ्चित्त्वस्य सामान्यरूपत्वात् किंस्विदित्यत्रापि तथा विशिष्टव्यतिरेकस्योभयत्र सत्वात्। विशेषेति। किञ्चित्त्वेनासत्कोटेरप्युल्लेखाच्चेत्यपि मन्तव्यम्।

न्यायलीलावतीप्रकाशविवृतिः

कोट्यनुल्लेखः। विशिष्टेति। एकत्र विशेषतः कोट्युल्लेखाभावाद-(प?)रत्र द्वयोर्विशेषत उल्लेखाभावादिति भावः। केचित्तु यत्र सामान्यतो विशेषतो वा वाच्यत्वोल्लेखः सोऽनध्यवसायो यत्र च पनसत्वादेरर्थोल्लेखः संशयः स इति लक्षणमाहुः। तदयुक्तम्। अ-साधारणधर्मजज्ञानस्यैवानध्यवसायत्वेनार्थविषयस्यापि तादृश-स्यानध्यवसायात्। केचित्तु व्यतिरेकद्वयप्राधान्येऽनध्यवसायोऽन्वय-द्वयप्राधान्ये तु संशय इत्येव भेदकम्। प्रथमस्याव्यावृत्तत्वेन ज्ञातध-र्मजत्वात्परस्य च्वानुवृत्तत्वेन ज्ञातधर्मजत्वात्तथात्वसम्भवादित्या-हुः। तदप्ययुक्तम्। विप्रतिपत्तिजस्य समप्रधानोभयकत्वेनोभयव-

---

(१) ०शप्रतिभासः।

स्योभयत्रापि तुल्यत्वात्। अनादित्वेन पूर्वोत्तरभावस्यानियाम-कत्वात्। अव्यभिचारित्वस्य च स्वप्नेऽप्यप्रतिक्षेपात्। बाधात् तत्प्रतिक्षेप इति चेत् न, बाधस्यैवासिद्धेः। जाग्रदवस्थायां स-जातीयप्रबन्धसंवादात् स्वप्नस्य काकतालीयसंवादादिति चेत्, न, काकतालीयसंवादवतोऽपि चिरदृष्ट(१)पुनर्दर्शनादेरव्यभिचा-रात्।प्रबन्धसंवादवतोऽपि दीपैकत्वनिर्भासादेर्व्यभिचारात्। अर्थ-

---

न्यायलीलावतीकण्ठाभरणम्

ग्रदनुभवेन बाध्यत इत्यत आह—अनादित्व इति। अव्यभिचारी जा-ग्रत्प्रत्ययः स्वप्नबाधकः स्यादित्यत आह—अव्यभिचारित्वस्येति। स्वप्न-ज्ञानानां बाधितत्वेनाव्यभिचारित्वमसिद्धमित्याह—बाधादिति। बाधि-तत्वप्रकाराणां दूषितत्वात्तदसिद्धेरित्याह—नेति। संवादभूयस्त्वाल्प-त्वाभ्यां विशेष इति शङ्कते—जाग्रदिति। संवादाभूयस्त्वेऽप्यव्यभिचारि-त्वं दृष्टमित्याह—काकतालीयेति। संवादभूयस्त्वेऽपि व्यभिचारमाह—प्रबन्धेति। जाग्रदिति वैपरीत्यमेवाह—एकत्वेति। एक एवायं दीप इति प्रत्यभिज्ञाभूयस्त्वेऽपि व्यभिचारादित्यर्थः। जाग्रद्दशादृष्टेऽर्थक्रियासं-वादो यथा न तथा स्वप्न इत्याह—अर्थक्रियेति। स्वप्नेऽपि तदस्तीत्याह—

न्यायलीलावतीप्रकाशः

'न विशेष्यते' न व्यावर्त्तकरूपवदित्यर्थः। उभयत्रेति। स्वप्नज्ञान-स्यापि जाग्रदवस्थाज्ञानोपदर्शितार्थविपरीतार्थोपदर्शकत्वादित्यर्थः। ननु पूर्वं ज्ञानं बाध्यमुत्तरं ज्ञानं बाधकमित्यत आह—अनादित्वेनेति। अव्यभिचारित्वमपि साधारणत्वान्न नियामकमित्याह—अव्यभिचारि-त्वस्येति। भावाभावाभ्यामित्यनेन स्वप्नजागरात्मकमित्यत्र यथायोग्य-

न्यायलीलावतीप्रकाशविवृतिः

हिर्भावापत्तेरिति। साध्याविशेषमाशङ्क्याह—न व्यावर्त्तकेति। सव्येतरे-ति मूलं सामान्यव्याप्त्यभिप्रायकमन्यथा सव्येतरपदव्यर्थतापत्तेः। जाग्रदवस्थाया इत्यादिमूले पञ्चमीद्वयम्। असिद्धेरित्यसिद्धमिति साध्यान्वयेन योजनीयम्। मिथ्याप्रत्ययप्रवाह इति मूलेन दूषितस्यापि

---

(१) चिरादृष्ट०।

क्रियासंवादविसंवादैर्जागरणस्वप्नलक्षणमिति चेत् , न, स्वप्नप रिदृष्टजलादेरपि पानावगाहनाद्यर्थक्रियादर्शनात् । जाग्रदवस्थायां तदनुपलम्भेन बाधात् तासामर्थक्रियाणामसम्बद्ध(१)मिति चेत् , न, प्रबुद्धदृष्टार्थक्रियाचक्रस्यापि स्वप्ने विपर्यासोपलम्भात् । मिथ्या-प्रत्ययप्रवाहः स्वप्नः, तद्विपरीतप्रत्ययस्तु जागरणमिति चेत् , न, मिथ्याप्रत्ययप्रवाहस्यापि पीतशङ्खगोचरस्य जागरणत्वात् । प्रचुर-तरमिथ्याप्रत्ययप्रवाहः स्वप्नो भूरियथार्थप्रत्ययप्रवाहो जागरण-मिति चेत् , न, उन्मादाद्यर्जित(२)प्रचुरतरविपर्ययप्रत्ययप्रवाहस्यापि जागरत्वात् । बहिरिन्द्रियप्रवृत्तिभावाभावाभ्यामर्जितं ज्ञानं स्वप्नजागरात्मकमिति चेत् , न, योगिनां ध्यानसन्ततेरपि स्वप्नत्व-प्रसङ्गात् । सिद्धोपप्लुतान्तःकरणजं ज्ञानं स्वप्नोऽन्यच्च जागरणमि-ति चेत् , का सिद्धा(३)। निरिन्द्रियप्रदेशे मनसोऽवस्थानम् । कुत-

---

न्यायलीलावतीकण्ठाभरणम्

स्वप्नेति । स्वप्नदृष्टार्थक्रियापि जाग्रदवस्थाबाध्येत्याह—प्रबुद्धेति । मिथ्या-त्वसत्यत्वाभ्यां तयोर्भेदं शङ्कते—मिथ्येति । मिथ्यात्वस्य जागरेऽपि ग तत्वेन व्यभिचारमाह—नेति । मिथ्यात्वं स्वप्नस्य जागराद् भेदकं प्रचु-रत्वेन विशिनष्टि—प्रचुरेति । प्रचुरत्वविशेषितमपि व्यभिचारीत्याह—तन्मात्रेति । बहिरिन्द्रियजन्यत्वं जाग्रत्प्रत्ययात् स्वप्नस्य भेदकमित्या-ह—बहिरिति । तत्रापि व्यभिचारमाह—नेति । बहिरिन्द्रियानवच्छिन्ना-धारप्रदेशवर्त्तमानेन मनसा जनितत्वं स्वप्नस्य भेदकं शङ्कते—सिद्धेति । 'उपप्लवो' बहिरिन्द्रियासमवधानम् । इदमपि न भेदक इ(मि?)त्यनुश-येनापृच्छति—केति । एवं तर्हि स्वप्नज्ञानधाराया अवच्छेदात् सुषुप्तिः कदापि न स्यादित्याशयेन पृच्छति—कुत इति । सिद्धान्ती सुषुप्तिमुप

न्यायलीलावतीप्रकाशः

मित्यन्वयः। कुतस्तर्हीति । निरिन्द्रियप्रदेशस्थितस्यापि मनसो ज्ञानजन-

न्यायलीलावतीप्रकाशविवृतिः

पुनराशङ्क्य दूषणान्तरमालायेत्यवधेयम् । निरिन्द्रियेति । तथा च ज्ञाना-

---

(१) मप्रत्यत्वमि० । (२) तन्मर्य्यादाघटितप्र० । तन्मात्रेति कण्ठाभरणधृतः पाठः ।
(३) का सिद्धिः ।

स्तर्हि सुषुप्तिः । स्वप्नज्ञानजनकस्य संस्कारस्यादृष्टस्य वा कालविशेषसहितस्याभावात् । मैवम् । जाग्रत्प्रत्ययानामपि स्वप्न(त्य?)वत् पूर्वपरिदृष्टवासनाजन्यत्वे(१) निद्राभिभूतान्तःकरणजत्वानिवृत्तेरनवधारणात् । कथं तर्हि प्रथममेव जागरणगोचरपदार्थोपलम्भ इति चेत्, न, अनादित्वादस्य विभ्रमस्य । सजातीयावस्थाप्रबन्धसंवादो जागरोऽन्यस्तु स्वप्न इति चेत्, किं साजात्यम् । जाग्रत्प्रत्ययगोचरत्वं चेत्, स्वप्नेऽपीदमस्तीति सजातीयप्रबन्धसंवादोऽसिद्धः । प्रबन्धबाधकादिर्बाध्यप्रबन्धा-

---

न्यायलीलावतीकण्ठाभरणम्

पादयति—स्वप्नेति । अदृष्टसंस्कारयोरन्यतरस्याभावाच्च स्वप्नधारेत्यर्थः । तर्हि जागरप्रत्यया अपि संस्कारसहिततादृशमनोजन्या एवेति सिद्धोपप्लुतान्तःकरणजन्यत्वमपि न स्वप्नभेदकमित्याह—मैवमिति । संस्कारस्य जागरप्रत्ययजनकत्वे प्रथमं संस्काराभावात्तदनुत्पादमाह—कथमिति। अनादित्वेन प्राथम्यमेव नास्तीत्याह—अनादित्वादिति । 'अस्य' जागरप्रत्ययस्येत्यर्थः । सजातीयप्रतिबन्धसंवादविसंवादौ तयोर्भेदकावित्याह—सजातीयेति । जाग्रत्प्रत्ययगोचरत्वमिति । जाग्रत्प्रत्ययगोचरगोचरत्वमित्यर्थः । स्वप्नेऽपि जाग्रत्प्रत्ययगोचरा एव पदार्था भासन्त इत्याह—स्वप्नेऽपीति । असिद्ध इति । भेदकत्वेनेति शेषः । प्रबन्धेति । ज्ञानप्रबन्धस्य बाधकमादौ यस्य बाध्योऽपि प्रबन्धान्ते यस्य तज्जागरितमित्यर्थः । स्वप्नस्यापि क्वचिदेवमाह—

न्यायलीलावतीप्रकाशः

कत्वादित्यर्थः । अस्य विभ्रमस्येति । प्रथममयं पदार्थो मयोपलब्ध इत्येवंरूपस्येत्यर्थः । गोचरत्वं चेदिति । गोचरगोचरत्वं चेदित्यर्थः । स्वप्नेऽपीति । स्वप्नज्ञानस्यापि जाग्रत्प्रत्ययविषयविषयकत्वादित्यर्थः। संवादोऽसिद्धः स्वप्नप्रत्ययव्यावृत्तत्वेनेति शेषः । प्रबन्धेति । स्वप्नप्रबन्धबाधस्य

न्यायलीलावतीप्रकाशविवृतिः

भावलक्षणसुषुप्तिः कदापि न स्यादिति भावः। सर्वस्य ज्ञानस्य भ्रमत्वमयुक्तमित्यन्यथा व्याचष्टे—प्रथममिति। तथा च प्रथमत उपलम्भो जाग-

---

(१) ०त्वे ऽपि । ०त्वेन ।

न्तो जागरितं नान्य इति चेत्, न, क्वचित्स्वप्नेऽपि पूर्वजाग्रत्प्रत्ययप्रवाहो मिथ्येति प्रबन्धबाधकप्रत्ययस्यादिभूतस्य सत्त्वात्। तदन्तर्भूतस्य जाग्रद्विज्ञप्तिसन्तानस्य च स्वापानन्तरवर्त्तिना स्वप्नज्ञानेन(१)सर्व एव जाग्रत्प्रत्ययो मिथ्येति बाध्यमानत्वात्। ततो भेदलक्षणाभावान्न विशिष्यते जाग्रत्स्वप्नज्ञानमिति(२)। अत्रोच्यते। किं प्रमाणत्वेनाविशेषः स्वप्नप्रबोधयोरुत(३) अप्रमाणत्वेन उत स्वप्नजागरत्वाभ्याम्(४)। नाद्यः। सर्वजनसिद्धस्वप्नप्रबोधभेदप्रत्ययस्यस्यापि जागरत्वेन प्रमाणत्वाद्धेतोर्बा-

न्यायलीलावतीकण्ठाभरणम्

स्वप्नेऽपीति। तदन्तर्भूतस्येति। तयोः स्वप्नप्रबन्धयोरन्तर्भूतस्य जागरज्ञानसन्तानस्येत्यर्थः। एतदेव दर्शयति—स्वापानन्तरेति। स्वप्नप्रत्ययः प्रमा प्रत्ययत्वात् जागरप्रत्ययवदिति विवक्षितम्। जागरप्रत्ययोऽप्यप्रमा प्रत्ययत्वात् स्वप्नप्रत्ययवदिति वा। स्वप्नत्वजागरत्वे न भिन्ने तुल्यव्यक्तिकत्वात्। तत्राद्यं दूषयति—सर्वजनेति। स्वप्नप्रत्ययो न प्रमाणं जागरप्रत्ययस्तु प्रमाणमिति वह्नरौष्ण्यवत् स्वप्नस्याप्रामाण्यं सर्वजनीनमिति तस्य प्रामाण्यसाधने बाध इत्यर्थः। द्विती-

न्यायलीलावतीप्रकाशः

बाधकमादिर्यस्य स प्रबन्धबाधकादिर्बाध्यः स्वप्नलक्षणः प्रबन्धो यस्यान्तेऽसौ बाध्यप्रबन्धान्तः स्वप्नज्ञानस्य बाध्यप्रबन्धान्तत्वमाह—तदन्तर्भूतेति। तयोर्मध्यपतितस्य जाग्रद्विज्ञप्तिसन्तानस्येत्यर्थः। सर्वजनेति। स्वप्नप्रत्ययो मिथ्यात्वेन जागरप्रत्ययात् प्रमाभूताद्भिन्न इत्याकारस्यापि जागरप्रत्ययस्य प्रमाणत्वात्तत एवाभेदग्राहकहेतुबाधादित्यर्थः। ननु स्वप्नजागरयोर्नाभेदः साध्यते किन्तु तयोर्भेदसाधकस्य न साधकत्वमिति ब्रूमः। अत्राहुः। प्रमाणाप्रमाणविभागं विना

न्यायलीलावतीप्रकाशविवृतिः

रेऽप्यसिद्ध इति भावः। नाभेद इति। येनोक्तबाधः स्यादिति भावः। स्वप्नत्वजागरत्वयोरसाधारणधर्मयोरनुभवसिद्धत्वादन्यथा व्याचष्टे—

(१) स्वापानन्तरस्वप्नवर्त्तिना ज्ञानेन। (२) जाग्रत्प्रत्ययात् स्वप्नज्ञानमिति। (३) ०धज्ञानयोरु०। ०प्नप्रबोधाभ्यामु०। (४) स्वप्नत्वजाग्रत्त्वाभ्याम्।

धात् । न द्वितीयः । अविशेषप्रत्ययस्यैवाप्रामाण्ये विशेषनिषेधव्याघातात् । न तृतीयः । अनुभवबाधितत्वात् । मिथ्याऽयमनुभव इति चेत्, न, अनुभवमिथ्यात्वग्राहकं ज्ञानं सत्यं मिथ्या वा । मिथ्या चेद्भेदानुभवः सत्य इति हेतोर्बाधः । सत्यं चेत्तदेवासत्यप्रत्ययान्न(१) भिद्यते सत्यं चेत्यनेकान्तः । बाधितत्वाबाधितत्वाभ्यां विशेष इति चेत्, तुल्यं स्वप्नजाग्रद्बोधयोरपि । कथं तर्हि स्वप्नजाग्रद्बोधयोर्भेदव्यवहृतिः । विनापि लक्षणभेदमनुभवसिद्धत्वात्सुखदुःखवत् । तत्रानुकूलप्रतिकूलवेद्यत्वं(२) लक्षणमिति चेत्, न, सुखदुःखातिरिक्तयोरनुकूलप्रतिकूलयोरसिद्धेः । इष्टत्वमनुकूलत्वमिति चेत्, न, इच्छाया एव(३) लक्षणभेदासिद्धेः ।

---

न्यायलीलावतीकण्ठाभरणम्

ये त्वाह—अविशेषेति । जागरप्रत्ययेषु स्वप्नप्रत्ययादप्रामाण्येनाविशेषे साध्ये या अनुमितिः स्यात् सापि जागरप्रत्ययत्वेनाप्रमैव स्यादिति जागरप्रत्यये यो विशेषः प्रामाण्यं तन्निषेधे व्याघात इत्यर्थः । अनुभवबाधितत्वादिति । सर्व्वजनस्य तदुभयभेदानुभवेन बाधितत्वादित्यर्थः । अयमिति । भेदानुभव इत्यर्थः । अनुभवेति । जागर्मि स्वपिमीति भेदानुभवमिथ्यात्वग्राहकं ज्ञानमित्यर्थः । हेतोरिति । सर्वप्रत्यये मिथ्यात्वसाधकस्य हेतोरित्यर्थः । सत्यं चेदिति । तत्रैव प्रत्ययत्वमनैकान्तिकमित्यर्थः । ननु स्वप्नजागरप्रत्य(य)योर्भेदानुभवो बाधित इति तन्मिथ्यात्वग्राहकं ज्ञानमबाधितत्वात् सत्यमेवेति शङ्कते—बाधितेति । कथं तर्हीति । केन लक्षणेनेत्यर्थः । भेदकलक्षणस्याप्यनिर्वचनादिति भावः । लक्षणे सत्यपि जल्पवितण्डे आश्रित्याह—विनापीति । इच्छाया

न्यायलीलावतीप्रकाशः

व्याघातात्तस्याऽवश्यवाच्यतया जागरप्रत्ययस्यैव प्रमात्वं लोकसिद्धमुपेयमित्येवम्परोऽयं ग्रन्थः विशेषनिषेधः स्वप्नजाग्रत्प्रत्यययोर्विशेषो नास्तीत्येवमाकार इत्यर्थः । अनुभवेति । इदानीमहं जागर्मि न स्वपिमीत्यनुभवाज्जागरत्वस्वप्नत्वयोर्भेदाकलनादित्यर्थः । कथं तर्हीति । व्यावर्त्तकधर्मज्ञानाभावाद्व्यावृत्तबुद्धेरनुपपत्तेरिति भावः ।

---

(१) ०चेत् तत एवास० । (२) अनुकूलप्रति० । (३) इच्छाया एकल० ।

इच्छात्वं तदिति चेत्, न, तस्याप्यसिद्धेः(१) । सुखत्वं दुःखत्वं(२) लक्षणमिति चेत्, न, तयोरेव भेदासिद्धेः । अनुभवसिद्धं तदिति चेत्, तुल्यमत्रापि । एवं जल्पवितण्डाभ्यां परिभूते वादिनि सिद्धोपप्लुतान्तःकरणजप्रत्ययप्रवाह एव स्वप्न इति वादे लक्षणमनवद्यम् ।

---

न्यायलीलावतीकण्ठाभरणम्

इति । इच्छाविषयत्वमिष्टत्वमिच्छानिरूप्यमित्यर्थः । सुखदुःखत्वे सुखदुःखलक्षणे इत्याह—सुखेति । सिद्धेति । स्वप्नवहनाड्यवच्छिन्नात्मप्रदेशावस्थितमनोजन्यमित्यर्थः । तत्रापि त्वगिन्द्रियसम्बन्धासम्बन्धाभ्यां स्वप्नसुषुप्ती इति भावः ।

न्यायलीलावतीप्रकाशः

लक्षणभेदमिति । लक्ष्यतेऽनेनेति लक्षणं भेदानुमापको धर्मः, तं विना स्वप्नजागरयोर्भेदः प्रत्यक्षेणैव प्रतीयते इत्यर्थः । तुल्यमत्रापीति । एतेन व्यक्तीनां भेदसिद्धावपि न तज्जातीयभेदसिद्धिरित्यपास्तं स्वप्नत्वजागरत्वयोर्जात्योरनुभवसिद्धत्वात् । सिद्धेति । न चैतावता निद्रासहकृतमनोजन्यज्ञानं स्वप्न इत्युक्तं स्यात् । तथा चात्माश्रयः निद्रायाः स्वप्नत्वात् । मैवम् । अस्यानुभवसिद्धज्ञानजातिविशेषोपलक्षणत्वात् स्वप्नवहनाडीविशेषसहकृतमनोजन्यं ज्ञानं स्वप्नः, तदजन्यं जागर इ-

न्यायलीलावतीप्रकाशविवृतिः

लक्ष्यतेऽनेनेति । निद्राया इति । यद्यपि निरिन्द्रियप्रदेशे मनसोऽवस्थानं निद्रेति निरुक्तौ नात्माश्रयस्तथापि तदानीं ज्ञानमसिद्धमेवेत्याशयेन समाधत्ते—मैवमिति । ज्ञानस्य विशेषः स्वप्नत्वजागरत्वरूप इत्यर्थः । यद्यपि जागरत्वस्य साक्षात्त्वव्यापकत्वे स्वप्नस्यासाक्षात्त्वापत्तिस्तद्व्याप्यत्वे चानुमित्यादौ जागरत्वाभावापत्तिरिति साक्षात्कारिजागरे जातिसङ्करस्तथापि तारत्वादिवन्नानैव जागरत्वम् । अनुगमस्तु स्वप्नत्वासमानाधिकरणज्ञानवृत्तिजातित्वेन । स्वप्नत्वं तु साक्षात्त्वव्याप्यैव जातिरिति भावः । स्वप्नवहेति । इदं च नाडीविशेषपरिचयार्थमुक्तं(३) न तु लक्षणान्तर्गतमतो नात्माश्रयः ।

---

(१) तस्यासिद्धेः । (२) सुखदुःखत्वं ल० ।
(३) ०नाडीपरि० ।

ननु तथापि जाग्रत्प्रत्ययाः निरालम्बनाः प्रत्ययत्वात् स्वप्नप्रत्ययवदिति विद्याऽविद्याविभागोऽनुपपन्न इति चेत्, किमिदं निरालम्बनत्वम् । असत्प्रकाशशीलत्वं वा अन्यथाख्यातिरूपत्वं वा स्वात्मालम्बनत्वं वा । न तावदाद्यौ । प्रतिबन्धप्रत्ययस्य निरालम्बनत्वे हेतोः प्रतिबन्धासिद्धिप्रसङ्गात् । तदालम्बनत्वे [तु] तेनैव व्यभिचारात् । न तृतीयः । स्वप्नपद्धतिपतितानां विज्ञप्तीनां बाह्यालम्बनत्वेन स्वात्मालम्बनत्वासिद्धेः । तदसिद्धम् । सर्वस्यैव गौरगान्धारमधुरसुकुमारसुरभि(१)शातेतरादिभेदस्य वेदनस्वभावत्वात् । तथा हि यत्प्रकाश-

न्यायलीलावतीकण्ठाभरणम्

तथापीति । जाग्रत्प्रत्ययानां मिथ्यात्वे सत्यपीत्यर्थः । अव्याघातकत्वमस्य हृदि निधाय विकल्पयति—किमिति । स्वात्मालम्बनत्वमिति । 'आत्मा' ज्ञानं तदालम्बनत्वमित्यर्थः । 'प्रतिबन्धो' व्याप्तिः । तेनैवेति । प्रतिबन्धप्रत्ययेनैवेत्यर्थः । तत्रापि बाह्यालम्बनत्वमसहमानो योगाचारः प्रत्यवतिष्ठते—तदिति । बाह्यमित्यर्थः । ननु षड्भिरपीन्द्रियैर्बाह्यं विषयीक्रियत एव तथा च कथं तदसिद्धमित्यत आह—सर्वस्यैवेति । चक्षुःश्रोत्ररसनत्वगिन्द्रियघ्राणमनसां यथासंख्यं ये विषया गौरादयस्ते वेदनरूपा एवेत्यर्थः । 'शातं' सु-

न्यायलीलावतीप्रकाशः

त्यन्ये । विज्ञानवादिनमुपस्थापयति—तदसिद्धमिति । गौरेत्यादिना क्रमेण चक्षुःश्रोत्ररसनस्पर्शनघ्राणमनोविषयो दर्शितः । इतरपदेन गौरत्वादेस्तत्तदिन्द्रियग्राह्यस्य संग्रहः । आदिपदेन प्रत्यक्षान्यप्रमाणवि-

न्यायलीलावतीप्रकाशविवृतिः

अन्य इत्यरुचौ । तद्बीजन्तु जन्यतावच्छेदकजातिप्रतीतौ सैव लक्षणमप्रतीताविदमपि दुर्ग्रहमिति । विभागोऽनुपपन्न इति मूलम् । निरालम्बनत्वेनोभयोरप्यविद्यात्वादिति भावः । इतरपदेनेति । एतेन शातशातेतरादीति पाठोऽप्रमाणिक इति ध्येयम् ।

(१) ०भिशातशातेतरा० ।

ते तद्विज्ञानं यथा प्रकाशः। प्रकाशन्ते च नीलादयः। न च ज्ञानाद्भेदे प्रकाशमानत्वं सम्भावनीयम्। तद्धि न तावत्प्रकाशं प्रति कारणत्वं तेन समानसामग्रीप्रतिबन्धो(१) वा। रूपविज्ञाने(२) चक्षुषोऽपि प्रकाशतापत्तेः। नापि प्रकाशसारूप्यं साकारत्वे वित्तीनां बाह्यनीलादिभेदस्यासिद्धेः कस्य सारूप्यम्।

---

न्यायलीलावतीकण्ठाभरणम्

खं 'शातेतरं दुःखम्। आदिपदात् प्रमाणान्तरविषयोपग्रहः। यत् प्रकाशत इति। प्रकाशविषयत्वेन पक्षता प्रकाशमानत्वं हेतुः। न च पक्षतावच्छेदकहेतुतावच्छेदकयोरभेदः प्रकारयोर्भेदात्। न च ज्ञानांशे सिद्धसाधनं प्रकाशविषयत्वावच्छेदेन तत्रापि ज्ञानत्वस्यासिद्धस्यैव साधनात्। अत एव ज्ञानभिन्नत्वेन पक्षत्वे बाधः। विपक्षबाधकतर्कमाह—ज्ञानादिति। तेनेति। प्रकाशेन (स?)मानसामग्रीकत्वमित्यर्थः। उभयत्रदोषमाह—रूपेति। पुञ्जात्पुञ्जोत्पत्तिरिति नयेन चक्षुषोऽपि प्रकाशजनकत्वात् तदभिन्नसामग्रीकत्वाच्चेत्यर्थः। कस्य सारूप्यमिति। तस्य भेद-

न्यायलीलावतीप्रकाशः

षयो दर्शितः। यत्प्रकाशत इति ज्ञानत्वेन यदुभयपक्षसम्प्रतिपन्नं तद्भिन्नं पक्षस्तेन विषयमात्रं यदि पक्षस्तदा ज्ञानांशे सिद्धसाधनं ज्ञानभिन्नस्य च पक्षत्वे यदि भेदसिद्धिस्तदा बाधः, तदसिद्धौ पक्षत्वासिद्धिः, घटमात्रं यदि पक्षस्तदाऽन्येषां ज्ञानत्वासिद्धिः अनु(ग?)तधर्मोपसंग्रहं विना च सर्वेषां पक्षत्वासिद्धिरित्यपास्तम्। विपक्षे बाधकमाह—न चेति। समानेति। ज्ञानरूपयोरेकसामग्रीजन्यत्वमित्यर्थः। रूपेति। रूपज्ञानं प्रति चक्षुषः कारणत्वात् क्षणभङ्गपक्षे पुञ्जात्पुञ्जोत्पत्तिरितिन्यायेन चाक्षुषज्ञानकाले चक्षुःसामग्र्या अपि सत्त्वात् रूपचक्षुषोस्तुल्यसामग्रीकत्वाच्चेत्यर्थः। साकारत्व इति। बुद्धि(द्धी?)नां स्वाकारमा-

न्यायलीलावतीप्रकाशविवृतिः

प्रकाशमानत्वमिति। प्रकाशविषयत्वमित्यर्थः। तच्च कारणत्वादिरूपेण विकल्पितम्। द्वितीयविकल्पनिरासाभिप्रायेण व्याचष्टे—क्षणभङ्गेति। रूपचक्षुषोरिति। रूपज्ञानचक्षुषोरित्यर्थः। क्वचित्पाठोऽपि तथा। क्वचिच्छेषे

---

(१) ०मग्र्या प्रति०। (२) रूपपरिज्ञा०। रूपरूपिज्ञा०।

तद्धि न तावदनुभवादेव व्यवस्थाप्यम् । नीलाकारद्वयाननुभवात् । नाप्याकारकादाचित्कत्वात् । तस्य भ्रान्तप्रत्ययाकारवद्वासनापरिपाककादाचित्कत्वेनैवोपपत्तेः । ज्ञानसमानरूपत्वे च बाह्यस्य ज्ञानत्वापत्तेः । सादृश्यं समानत्वमिति चेत्, न, विधिरूपस्य तस्यासिद्धेः(१) । अनीलव्यावृत्तिर्नीलधियोः(२) सादृश्यमिति चेत्, किमनीलं बाह्यनीलाकारप्रच्युतिर्वा नीलज्ञानप्रच्युतिर्वा ज्ञानाज्ञानसाधारणनीलमात्रप्रच्युतिर्वा । नाद्यः । ज्ञानस्य(३) बाह्यनीलप्रच्युतिनिवृत्तिरूपत्वाभावात् । न द्वितीयः ।

---

न्यायलीलावतीकण्ठाभरणम्

गर्भत्वादिति भावः । बाह्यनीलादिभेदमभ्युपगम्याह—तद्धीति । बाह्यनीलानुभवे हि तत्सरूपमिदं ज्ञानमित्यनुभूयेत स एव नास्तीत्यर्थः । ननु नीलाकारं ज्ञानं कदाचिदुत्पद्यते तच्च नीलसन्निकर्षाधीनमिति शङ्कते—नापीति । व्यवस्थाप्यमित्यनुषज्यते । अत्रान्यथासिद्धिमाह—तस्येति । कामिनीं विनापि यथा कामिनीभ्रमो वासनातस्तथा नीलप्रत्ययोऽपीत्यर्थः । अत्यन्तसारूप्ये दोषमाह—ज्ञानेति । अनात्यन्तिकत्वं शङ्कते—सादृश्यमिति । नीलतद्बुद्ध्योर्भावरूपधर्मघटितं न साधर्म्यमित्याह—विधीति । व्यावृत्तरूपं शङ्कते—अनीलेति । बाह्यं यन्नीलतद्भिन्नं वा ज्ञानं यन्नीलं तद्भिन्नं वा अनीलं यद्व्यावृत्तिरुभयोः सारूप्यं स्यादिति विकल्प्य परिहरति—किमिति । बाह्यनीलभिन्नमनीलं ज्ञानमपि न तद्व्यावृत्तिस्तदन्योऽन्याभावो ज्ञान एवेत्याह—ज्ञानस्यैवेति । ज्ञानरूपनीलभिन्नमनीलं बाह्यमपीति तदनीलव्यावृत्तिरूपं कथं

न्यायलीलावतीप्रकाशः

त्रविषयत्वेन बाह्यानालम्बनत्वादित्यर्थः । तदेव स्फुटयति—तद्धीति । ज्ञानसमानरूपत्व इति । ज्ञानान्यूनानतिरिक्तरूपत्व इत्यर्थः । विधिरूपस्येति ।

न्यायलीलावतीप्रकाशविवृतिः

चकारोऽस्ति । तत्र एककालसामग्रीकत्वादेकसामग्रीकत्वाच्चेत्यर्थः । नीलादिभेदस्येति मूलम् । नीलादिलक्षणस्य विशेषस्येत्यर्थः । गुणत्वादेस्ताद-

---

(१) विधिरूपस्यासिद्धेः । (२) ०लानीलधि० । (३) ज्ञानस्यैवेति कण्ठाभरणधृतः पाठः ।

वाह्यस्य नीलज्ञानप्रच्युतिनिवृत्तिरूपत्वाभावात्(१) । न तृतीयः । ज्ञानाज्ञानसाधारणस्य नीलमात्ररूपस्यासिद्धेः । नापि प्रकाशेन सार्द्धं विषयविषयिभावः । नीलतज्ज्ञानयोरतिरिक्तस्य सम्बन्धस्याभावात् । स्वाभाविकः सम्बन्ध इति चेत् , न, स्वभावप्रभवस्यापि सम्बन्धस्याभावात् । स्वभावः [एव] सम्बन्ध इति चेत् , न, असम्बद्धत्वेन प्रतीयमानयोर्नीलतद्वेदनयोः सम्बन्धरूपताव्याघातात् । असम्बद्धस्यैव सम्बद्धव्यवहारजनकत्वमिति चेत् , न, सम्बन्धाभावाक्रान्तस्य तत्सत्ताव्यवहारजनकत्वविरोधात् सर्वत्र सम्बन्धोच्छेदप्रसङ्गाच्च । तन्निरूपणाधीननिरूपणत्वं तद्विषयत्वमिति चेत् , न, विषयविषयिभावानिरुक्तौ तस्येदं निरूपणमित्यस्यैवासिद्धेः । तेन व्यपदिश्यमानत्वमिति चेत् , न, व्यपदि-

---

न्यायलीलावतीकण्ठाभरणम्

स्यादित्याह—वाह्यस्येति । ज्ञानाज्ञानेति । एकस्य विरुद्धोभयसाधारण्याभावादित्यर्थः । नापि विषयविषयिभाव इत्यत्र प्रकाशमानत्वमित्यनुषज्यते । अभावादित्युपलक्षणमनभ्युपगमाच्चेत्यपि द्रष्टव्यम् । स्वाभाविकः सम्बन्ध इत्यत्रापि प्रकाशमानत्वमित्यनुषज्यते । स्वभावेति । न हि ज्ञानविषयाभ्यां कश्चित् सम्बन्धो जन्यत इत्यर्थः । ज्ञातता च त्वया नाभ्युपेयेत इति भावः । तद्धितस्य स्वार्थिकत्वाविवक्षायामाह—स्वभाव एवेति । ज्ञानविषययोः सम्बन्धरूपत्वाभावादित्यर्थः । सम्बन्धाभावेति । तथा सति सर्वत्र सम्बद्धव्यवहारः स्यात् सम्बद्धस्याभ्युपगतस्यापि विलोपः स्यादित्यर्थः । तस्येदमिति । षष्ठ्यर्थस्य सम्बन्धस्यापि

न्यायलीलावतीप्रकाशः

नीलतद्विज्ञान(२)मात्रवृत्तेरिति शेषः । स्वाभाविकं स्वभावजन्यं वा स्वभाव एव वा । आद्ये स्वभावेति । अनुपलब्धेरित्यर्थः । अन्त्यमाशङ्क्य निराकरोति—स्वभाव इति । सम्बन्धोच्छेदेति । सम्बन्धं विना तद्व्यवहा-

न्यायलीलावतीप्रकाशविवृतिः

रासत्त्वाशङ्कितं द्विरित्यत आह—नीलतज्ज्ञानमात्रेति । अन्यथा तु गुणान्तरे

---

(१) निवृत्तित्वाभावात् । (२) नीलतज्ज्ञानमात्रेति विवृतिधृतः पाठः ।

श्यमानतायाः व्यपदेशजनितज्ञानविषयताऽनतिरेकात् । ज्ञानजनितव्यवहारगोचरत्वमिति चेन्न, इच्छादिरूपस्य व्यवहारस्योपेक्षाज्ञाने(१)ऽभावात् । तद्गोचरसंस्कारस्मृतिजनकत्वमिति(२) चेत्, [न,] स्मृतेरपि तद्गोचरतायाः अनिरुक्तेः । व्यवहारजननयोग्यत्वमिति चेत्, न, योग्यताया एवाऽनवगमात् । सामग्रीविशेषप्रसूतत्वमिति चेत्, न तावत्सामग्र्याः असाधारणे ज्ञानरूपे जनकत्वम्(३) । अन्वयव्यतिरेकयोरभावात् । नाप्यवान्तरविशेषे(४) नीलज्ञानत्वरूपाऽपरसामान्यस्याभावात् । नीलविषयतारूपस्य विशेषस्यासिद्धेः । स्वरूपमेव ज्ञानस्य विषयित्वं नीलादेश्च विषयत्वमिति चेत्, न, स्वरूपस्य सर्वं प्रत्यविशेषात् ग्राह्यग्राहकव्यवहारनियमानुपपत्तेः(५) नीलादिवस्तुस्वरूपस्य सर्वसाधारणत्वोपलम्भेन ज्ञानस्यापि सर्वसाधारणत्वात् । सर्वविषयताप्रसङ्गाच्च । ततः प्रकाशतादात्म्यमेव प्रकाशमानत्वम् । नन्वेवं सति साध्याविशिष्टत्वं प्रकाशमानत्वज्ञा-

---

न्यायलीलावतीकण्ठाभरणम्

सिद्धेरित्यर्थः । स्मृतेरपीति । स्मृतिविषयत्वातिरिक्तस्य तद्गोचरत्वस्याभावादित्यर्थः । व्यवहारेति । तथा च उपेक्षाज्ञानेऽपि ततूसत्वादिति भावः । तत्त्वभावः । योग्यताया इति । तदवच्छेदकरूपाऽपरिचयादिति भावः । तत्त्व-नीलादिव्यक्तिविषयज्ञानसामग्रीप्रभवत्वं तद्विषयत्वञ्च दुर्ग्रहं नीलज्ञानसामग्रीप्रसूतत्वं नीलविषयत्वमित्यपि तथा नीलज्ञानत्वत्वादेः सामान्यस्याभावादित्याह—न तावदिति । नीलविषयकं ज्ञानमेवं सति पीतविषयकमपि स्यात् स्वरूपस्याविशेषादित्यर्थः । एतदेव प्रपञ्चयति—ग्राह्येति । विज्ञानवादी स्वपक्षमुपसंहरति—तत इति । यत् प्रकाशते तद्विज्ञानमेवेति साध्याविशेषं शङ्कते—नन्विति । धर्म्यभेदेऽपि व्यावृ-

(१) ०रस्यैवोपेक्षा० । (२) तद्गोचरस्मृतिज० (३) ०रणज्ञानरूपजन० । (४) ०न्तरज्ञानरूपे विशेषे । (५) हारानुप० ।

नत्वयोरभेदात् । न । प्रकाशमानज्ञानयोरभेदेऽपि व्यावृत्तिभेदस्य सत्त्वात् । अप्रकाशव्यावृत्तेः साधारणव्यावृत्तेर्वा ज्ञानतारूपत्वात्, अप्रकाशमानतानिवृत्तेश्च(१) प्रकाशमानतारूपत्वात् । ननु प्रकाशमानत्वं प्रकाशसम्बन्धः प्रकाशतादात्म्यं वा । द्वयमप्यसिद्धम् । न । (२)विशेषासिद्धावपि प्रकाशमानप्रत्ययगोचरस्वरूपस्योभयसिद्धत्वात् ।

अत्रोच्यते। अभेदपक्षेऽपि(३) किं प्रकाशस्य नीलगोचरत्वम् । नीलाकारत्वमिति चेत्, का नीलाकारता प्रकाशस्य, नील[त्व]सामान्ययोगः, बाह्यनीलगोचरत्वं वा, अनीलव्यावृत्तता(४) वा । नाद्यौ । तयोः प्रकाशभेदेन प्रकाशमानत्वानुपपत्तेः । अनी-

न्यायलीलावतीकण्ठाभरणम्

सिभंशाद् भेद इत्याह—नेति । व्यावृत्तिभेदमेव दर्शयति—अप्रकाशेति । नीलं ज्ञानं नीलस्यासाधारणमेवं सर्वत्र ज्ञाने साधारणताऽव्यावृत्तिरेव ज्ञानत्वमित्याह—साधारणेति । स्वप्रका[श]सम्बन्धस्त्वया दूषितः प्रकाशतादात्म्यात्तु पुनः प्रकाशमानत्वं मया दूषणीयमिति शङ्कते—नन्विति । विशेषविषयत्वया(?) सिद्धावपि सामान्यस्वरूपमुभयसिद्धमेवेति परिहरति—नेति ।

अभेदपक्षेऽपीति । ज्ञानस्य बाह्यभेदपक्षेऽपीत्यर्थः । तयोरिति । 'तथा

न्यायलीलावतीप्रकाशः

रोपगमादित्यर्थः । सुगममन्यत् । विशेषासिद्धाविति । न च प्रकाशसम्बन्ध प्रकाशतादात्म्ययोरेकसामान्यरूपासिद्धौ कथं विशेषासिद्धावपि सामान्याकारेण भानं स्यादिति वाच्यम्, अन्यतरत्वस्यैव तथावि-

न्यायलीलावतीप्रकाशविवृतिः

व्यभिचारस्तत्र ज्ञानात्मकत्वस्य सर्वसिद्धत्वादिति भावः । स्वाभाविकः सम्बन्ध इति मूलम् । प्रकाशमानत्वमिति शेषः । द्वयमप्यसिद्धमिति मूलम् । आद्यं स्वमते द्वितीयं परमत इति भावः । तयोरिति मूलम् । नीलत्व-

(१) माननि० । (२) द्वम् । अविशे० । (३) पक्षे किं० । (४) ०वृत्तिता वा० ।

लव्यावृत्तता तु प्रकाशस्याऽनीलव्यावृत्तिसम्बन्धो वा प्रकाश-रूपत्वं वा । नाद्यः । व्यावृत्तेरलीकत्वात् । प्रकाशाद्भेदेन प्रकाशमानताविरोधाच्च । न द्वितीयः । सर्वप्रकाशानां नीलाकारताप्रसङ्गात् । ( प्रकाशविशेषरूपत्वमिति चेत् वि-शेषरूपत्वमप्यसाधारणरूपत्वमात्रम् असाधारणैकरूपत्वं वा। ना-द्यः। सर्वप्रकाशानां नीलाकारता(१)पत्तेः।) नेतरः। द्वितीय[स्य]-[नील]ज्ञानस्यानीलाकारताप्रत्तेः। नियता एव प्रकाशभेदा येषां नीलाकारत्वमिति चेत्, भेदपक्षेऽपि यदीयं नीलग्राहकता स्यात् को विरोधः। नीलरूपेणासम्बन्धे(२) तस्य प्रकाश इति

---

न्यायलीलावतीकण्ठाभरणम्

च प्रकाशमानत्वं वाह्याभेदसाधनं दुर्ग्रहमेवेत्यर्थः। प्रकाशादिति। बौ-द्धमते ज्ञानादलीकस्य भेदात् पुनः प्रकाशमानत्वं साधनदुर्ग्रहमेवेत्य-र्थः। सर्वेति। पीतप्रकाशस्यापि प्रकाशत्वेन नीलाकारता स्यादित्यर्थः। ननु प्रकाशविशेषरूपत्वं नीलाकारतेत्याह—प्रकाशेति। सर्वप्रकाशानामि-ति। पीताकारप्रकाशस्याप्यसाधारणरूपतया नीलाकाररूपता स्या-दित्यर्थः। द्वितीयस्येति। तथा सत्येकैव नीलप्रकाशव्यक्तिर्नीलाकारा या स्यान्न तु अन्या नीलप्रकाशव्यक्तिरपि तथा स्यादित्यर्थः। भेदपक्षेऽपी-ति। ज्ञानाद् वाह्यभेदपक्षेऽपीत्यर्थः। ननु भेदपक्षे सम्बन्धाधीनस्तदीय-त्वव्यवहारः सम्बन्धश्च नास्तीति कथं स स्यादित्याह—नीलरूपेति।

न्यायलीलावतीप्रकाशः

धस्य सत्त्वात्। व्यावृत्तेरिति। तथा च प्रकाशेन न तत्सम्बन्ध इति भावः। सर्वप्रकाशानामिति। प्रत्येकं सर्वेषामसाधारणप्रकाशरूपत्वादि-त्यर्थः। भेदपक्षेऽपीति। यथा प्रकाशविशेषा एवं नीलाकारं तथाऽस्मत्प-क्षेऽपि केचिदेव विषया नीलाकारस्य ज्ञानस्येत्यर्थः। स्वरूपमेव ग्रा-

न्यायलीलावतीप्रकाशविवृतिः

सामान्यवाह्यनीलयोरित्यर्थः। प्रत्येकमिति। द्वितीयस्थानस्य सर्वप्रका-शानामित्यस्य व्याख्यानमिदम्।

---

(१) तापसङ्गात्। (२) रूपासं०।

प्रतीतिः कथमिति चेत्, स्वेन रूपेणासम्बद्धस्य स्वप्रकाश इति प्रतीतिः कथमिति तुल्यम्। स्वस्य प्रकाश इति नानुभवोऽपि तु व्यपदेशमात्रमिति चेत्तुल्यम्। नीलप्रकाश इत्यपि व्यपदेश एव। व्यपदेशे किं निमित्तमिति चेत्तुल्यं स्वप्रकाशव्यपदेशेऽपि। काल्पनिकोऽयं व्यपदेश इति चेत्, अस्माकमप्यौपचारिक इत्यवेहि। ज्ञानरूपं चेन्नीलविषयत्वं सर्वं प्रति साधारणं स्यात्(१)। अभिन्नत्वमपि ज्ञानस्वरूपमेव। तदपि सर्वसाधारण्येन व्यवह्रियेत। किञ्च साधारण्यं किं सर्वसम्बन्धित्वं सर्वैरेकरूपतया प्रतीयमानत्वं वा सर्वग्राहकता वा। नाद्यः। नीलेऽभावात्। न द्वितीयः। ग्रहीतृपुरुषसाकल्ये ज्ञानस्याप्येकरूप-

---

न्यायलीलावतीकण्ठाभरणम्

तादात्म्यपक्षेऽपि षष्ठ्यर्थोऽनुपपन्न इत्याह—स्वेनेति। औपचारिक इति। असम्बन्ध एव स्वरूपसम्बन्ध उपचर्य्यत इत्यर्थः। ननु नीलविषयत्वस्य ज्ञानत्वे यथा नीलं सर्वसाधारणं तथा ज्ञानमपि सर्वसाधारणं स्यादित्याह—ज्ञानरूपं चेदिति। किञ्च साधारण्यं यन्नीलादिदृष्टान्तेन ज्ञाने आपाद्यत इत्याह—किञ्चेति। नीलेऽभावादिति। सर्वसम्बन्धित्वस्येति शेषः। तद्दृष्टान्तेन कथमापाद्यत इत्यर्थः। ग्रहीतृपुरुषेति। यैर्ज्ञानं गृह्यते

न्यायलीलावतीप्रकाशः

नार्थयोर्विषयविषयिभावव्यवहारप्रवर्त्तकमिति भावः। ज्ञानरूपं चे[दि?]ति। नीलज्ञानस्य नीलापेक्षयेवानीलापेक्षयापि ज्ञानरूपत्वादित्यर्थः। नीलेऽ

न्यायलीलावतीप्रकाशविवृतिः

अतः परं मूलव्याख्या। नीलेऽभावादिति। असमत्सिद्धसर्वसाधारणनीलादिविषयदृष्टान्तेन नीलज्ञानस्य सर्वसाधारण्यमापाद्यम्। नीले च विषयरूपे सर्वसाधारण्यमसिद्धमिति दृष्टान्तासिद्धिरिति भावः। एकरूपत्वेनेति। तथा चेष्टापादनमिति भावः। नीलस्यापीति। विषयरूपस्येत्यर्थस्तथा च दृष्टान्तासिद्धिरिति भावः। नीलस्येति। विषयरूपस्येत्यर्थः। तथा च तदेव दूषणमिति भावः। अविशेषापत्तिरिति साधा-

---

(१) ०रणत्वात्।

त्वेन(१) वेद्यमानत्वात् ग्रहीतृतदितरसाकल्ये च नीलस्यापि तत्त्वासिद्धेः। न तृतीयः। नीलस्य सर्वग्राहकत्वासिद्धेः। न च ग्राह्यग्राहकयोरविशेषापत्तिः। ज्ञानत्वेनैव विशेषात्। तस्मात् प्रतिबन्धासिद्धमेव प्रकाशमानत्वम्। किञ्च साध्यसाधनयोर्व्यतिरेकः प्रतीतो न वा। न चेत् व्यतिरेकासिद्धिः। प्रतीत(२)श्चेदनेकान्तोऽज्ञानस्यापि प्रकाशमानत्वात्। न प्रतीतमज्ञानं किन्त्वध्यवसितमिति चेत्, कोऽध्यवसायः। तत्र व्यवहार इति चेत्, न, देहजन्यव्यवहारस्य तत्राभावात्। व्यपदेश इति चेत्, न, तत्रापि तस्य ज्ञानाजनकत्वे तदीयत्वाभावात्। ज्ञानजनकत्वे(३)तेनैव व्यभिचारात्। मानसस्यापि प्रत्ययस्य तद्विषयत्वेऽविषयत्वे च वि-

---

न्यायलीलावतीकण्ठाभरणम्

तैरेकरूपतयैवेतीष्टापत्तिस्तथा च दृष्टान्तासिद्धिरिति। तस्मादिति। वाह्यस्य ज्ञानाभेदे साध्ये प्रकाशमानत्वं व्याप्यत्वासिद्धमित्यर्थः। परस्यान्वयव्यतिरेकिमात्रमनुमानमित्यभिप्रेत्याह—किञ्चेति। अज्ञानस्यापीति। साध्यव्यतिरेकस्य साधनव्यतिरेकस्य चेत्यर्थः। तयोरज्ञानरूपे व्यतिरेको न ज्ञायते येन व्यभिचारः स्यात् किन्तु व्यवह्रियत इत्याह—न प्रतीतमिति। तत्रापीति। व्यतिरेकव्यवहारो हि शब्दप्रयोगस्तेन व्यतिरेकज्ञानजनने व्यभिचार एव तदजनने व्यतिरेकस्याऽयं व्यवहार इत्येव न स्यादित्यर्थः। मानसप्रत्ययोऽध्यवसाय इत्यभिप्रेत्याह—मानसस्येति। अध्यवसायाधीन एव यदि व्यतिरेकव्यवहार-

न्यायलीलावतीप्रकाशः

भावात् सर्वसम्बन्धित्वस्येति शेषः। न चेदिति। अन्वयव्यतिरेकिण एव परैरनुमानत्वोपगमादिति भावः। देहव्यवहारस्तदुद्देशेन स्पन्दना-

न्यायलीलावतीप्रकाशविवृतिः

रण्यासाधारण्ययोस्तुल्यत्वादित्यर्थः। अज्ञानस्येति। ज्ञानभिन्नव्यतिरेकस्येत्यर्थः। 'तेनैव' विषयिणैव। ननु मानसप्रत्यय एवाध्यवसाय इष्यत आह—मानसस्येति।

---

(१) ०रूपेण वे०। (२) अप्रती०। (३) जनने तु ते०।

रोधात् । नीलादयोऽपि हि प्रकाशाद्भिन्ना एवाध्यवसीयन्ते, न प्रकाशन्त इति प्रकाशमानत्वं नीलादीनामसिद्धमस्तु । अध्यवसायबलेन वा सकलबाह्यसिद्धिरस्तु । सहोपलम्भनियमादभेदोऽस्त्विति चेत्, न, यौगपद्योपलम्भस्य साहित्योपलम्भस्य वा भेदेऽप्यविरोधात् । एकोपलम्भविषयत्वस्य ज्ञानस्य स्वसंवेदनत्वासिद्धावसिद्धेः ॥ [ इति ] स्वप्नः ॥

अविद्यानन्तरं विद्या विचार्यते । सा द्विविधा । अध्यक्षमनु-

---

न्यायलीलावतीकण्ठाभरणम्

स्तत्राह—नीलादय इति । यथा साध्यसाधनव्यतिरेकसिद्धिरध्यवसायबलेन तथा तत एव सकलबाह्यसिद्धिरपि स्यादित्याह—अध्यवसायेति । नीलं ज्ञानाभिन्नं ज्ञानेन सह नियमेन उपलभ्यमानत्वादिति परः साधनं शङ्कते—सहोपलम्भेति । नियमपदाद्वह्निधूमादौ व्यभिचारवारणम् । 'भेदेऽपी'त्यपिशब्द एवकारार्थः । यौगपद्यसाहित्ययोरभेदेऽनुपपत्तेस्तथा च विरुद्धो हेतुरित्यर्थः । नीलव्यवसायस्य स्वाविषयत्वादेवोपलम्भविषयत्वनियमः स्वरूपासिद्ध इत्याह—एकोपलम्भेति ।

शब्दादीनामत्रैवान्तर्भाव्यत्वाभिप्रायेण विभज्यते—अध्यक्षमिति ।

न्यायलीलावतीप्रकाशः

दिः । अध्यवसायेति । यथा व्यतिरेकव्याप्तिरध्यवसायबलेन तथा नीलादिबाह्यसिद्धिरप्यस्त्वित्यर्थः । यौगपद्येति । विषये उपलभ्यमान एवंपरं ज्ञानमुपलभ्यते इत्येवंरूपस्येत्यर्थः । साहित्येनोपलम्भस्य विषये उपलभ्यमाने उपलम्भमात्रस्येत्यर्थः । ननु ज्ञानं न ज्ञानान्तरेण गृह्यते किन्तु येनानानी? ज्ञानेन नीलं गृह्यते तेनैव स्वात्मापि ग्रहीतव्य इत्यत आह—(ए ? ) कोपलम्भेति ।

न्यायलीलावतीप्रकाशविवृतिः

अतः परं प्रकाशव्याख्या । पौनरुक्त्यभिया व्याचष्टे—विषय इति । तया च यौगपद्यं नियमपर्य्यन्तम् । नियमानियमसाधारणन्तु साहित्यमिति भावः । अध्यक्षमनुमानं चेति मूलम् अध्यक्षमिन्द्रियमात्रकारणकम् । तेन यथार्थस्मृतेरपि विद्यात्वेनाकरगणितायाः सङ्ग्रहः । अत

मानञ्च अध्यक्षमपि द्वेधा सर्वज्ञीयमन्यथा च। सर्वज्ञासिद्धौ तत्कथम्। तथा हि न सर्वज्ञोऽध्यक्षगम्यः। परबुद्धेस्तदभावात्। नापि परमा-

न्यायलीलावतीकण्ठाभरणम्

सर्वज्ञीयमिति। यौगिकमैश्वरं चेत्यर्थः। अन्यथेति। लौकिकमित्यर्थः। तादृशमध्यक्षमसहमानः पूर्वपक्षयति—सर्व्वज्ञासिद्धाविति। षोढासन्निकर्षजज्ञानभिन्ने साक्षात्त्वं वर्त्तते न वेति विप्रतिपत्तौ सत्यामाह—तथा हीति। यद्यपि सर्वज्ञः स्वकीयाध्यक्षविषयस्तथापि तत्रैव न प्रमाणमिति भावः। तदेवाह—परबुद्धे[रि?]ति। परमाणवः कस्यचित् प्रत्यक्षाः मेयत्वसत्त्वद्रव्यत्वादिभ्यः घटादिवादित्यनुमानं शङ्कते—नापीति।

न्यायलीलावतीप्रकाशः

न सर्वज्ञ इति। यद्यपि सर्वज्ञासिद्धौ तस्य तज्ज्ञानस्य च निषेधः कर्त्तुं न शक्यस्तथाप्येतद्देशीयैतत्कालीनयोग्यपदार्थविषयकप्रत्यक्षस्य तद्भिन्नयावत्पदार्थविषयत्वमेव सार्वज्ञ्यं तद्व्यतिरेक एव सार्वज्ञ्या-

न्यायलीलावतीप्रकाशविवृतिः

एव सर्वज्ञासिद्धावित्युत्तराक्षेपोऽपि सङ्गच्छते। अन्यथा ईश्वरस्य साधितत्वात्तदसङ्गतेः। यद्यपीश्वरस्य प्रागेव साधना (त्?) योगिसाधनार्थमयमारम्भस्तत्र चेश्वरभिन्नं पक्षयित्वा सर्वज्ञत्वाभावसाधने दोषाभावस्तथापीश्वराप्रतीतिदशायामयमपि प्रकार इत्याशयेन समाधत्ते—तथापीति। यद्यपि तद्भिन्नेत्यत्र तत्पदेन तत्प्रत्यक्षविषयीभूतपदार्थपरामर्ष एतद्देशीयेत्यादिविशेषणं व्यर्थं तदनुपादाने तत्पदेन योग्यविषयपरामर्षसम्भवाद् यावद्योग्यविषयकप्रत्यक्षस्यासिद्धेः सर्वज्ञासिद्धिरिति तद्विशेषणम्। एतदेव च योग्यपदोपादानस्यापि प्रयोजनम्। यद्यप्येतद्भिन्नयावत्पदार्थविषयकत्वमप्यप्रसिद्धमेव शाब्दस्यापि ज्ञानस्य तादृशत्वाप्रतीतेरेवैतत्प्रकारानुसरणादन्यथा सर्वशब्दजन्यज्ञान एव प्रतियोगित्वसम्भवे कु(सृ?)ष्टरनादरात्तथापि शब्दे सर्वविषयकत्वाप्रतीतिदशायामुक्तयावद्विषयत्वप्रतीतिदशायां चायं प्रकारः सम्भवतीति भावः। केचित्तु घटप्रत्यक्षे घटभिन्नयावन्निरूपितत्वाभाव एव साध्य इति घटान्योन्याभाव एव प्रतियोगिप्रसिद्धिरित्याहुः।

णूनां मेयत्वेनाध्यक्षतया साध्यः। तेषामध्यक्षत्वव्याकोपात्। न च बुद्धिवत् स्वतोऽतीन्द्रियत्वेऽप्यध्यक्षत्वाविरोधः। असति विपरीततर्के प्रत्यक्षाणुत्वयोः स्वारसिकविरोधात्। विपरीततर्कसत्त्वाच्च। चक्षुरादीनां शक्तिविरहाद्रसवत्तत्राप्रवृत्तेः। मनसो बहिरस्वातन्त्र्यात्। स्वप्ने सिद्धासहकारितावद्योगजधर्मसहकारित्वे नयनाद्यारम्भवैयर्थ्यात्। स्वप्नस्य च स्मृतिविपर्यास-

न्यायलीलावतीकण्ठाभरणम्

तेषामिति। महत्त्वे सत्युद्भूतरूपवत्त्वं बहिर्द्रव्यप्रत्यक्षतावच्छेदकमात्मत्वं च मानसद्रव्यप्रत्यक्षतावच्छेदकं तदुभयरहितत्वेन परमाणवो न कस्यचित् प्रत्यक्षा अनात्मत्वे सति महत्त्वसमानाधिकरणोद्भूतरूपरहितद्रव्यत्वादिति सत्प्रतिपक्ष इत्यर्थः। प्रत्यक्षयोग्यतावच्छेदकरूपरहितत्वादिति वार्थः। 'बुद्धिवत्' परबुद्धिवत्। अतोऽतीन्द्रियत्वे परस्याप्रत्यक्षत्वेऽध्यक्षताविरोधः स्वस्येत्यर्थः। पूर्वाशङ्कितानुमाने विपक्षबाधकाभावमाह—असतीति। प्रतिकूलतर्कमाह—चक्षुरादीनामिति। उद्भूतरूपवत्त्वे सति महत्त्वमेव बहिर्द्रव्यप्रत्यक्षत्वे शक्तिस्तद्विरहादित्यर्थः। रसवदिति। रसग्रहे यथा चक्षुरयोग्यं चक्षुषो वा यथा रसोऽयोग्य इत्यर्थः। ननु मन(सः?)स्तद्विषयकज्ञानजनकत्वं स्यादित्यत आह—मनसो बहिरस्वातन्त्र्यादिति। सहकारिसामर्थ्यादयोग्यमपि योग्यमेवेत्याशङ्क्य योगिनां चक्षुरादिनिर्माणवैयर्थ्यमित्याह—नयनादीति। मनस एव योगजधर्मः सहकारी स्यात्तथा च रूपादि-

न्यायलीलावतीप्रकाशः

भावः। तेषामिति। बहिरिन्द्रियजन्यद्रव्यसाक्षात्कारविषययोग्यतायाः महत्त्वे सत्युद्भूतरूपवत्त्वेनावच्छेदात् मानसप्रत्यक्षद्रव्यस्य चात्मत्वेनैव योग्यत्वादित्यर्थः। बुद्धिवदिति। परबुद्धिवदित्यर्थः। अध्यक्षतां परं प्रतीत्यर्थः। विपरीतेति। परमाणुर्यदि प्रत्यक्षद्रव्यं स्यान्महान् स्यादिति प्रतिकूलतर्क इत्यर्थः। तदेव विशदयति—चक्षुरादीनामि[ति?] नयनादीति। योगजधर्मसाचिव्याद्रूपादिसाक्षात्कारस्यापि मनसैव जन-

न्यायलीलावतीप्रकाशविवृतिः

परमाणुर्यदीति। अत्र द्रव्यमापादकविशेषणम्। मा स्यादिति पाठे

त्वात् । नानापुरुषाध्यक्षत्वे असर्वज्ञत्वात् । अन्यथा प्रतिबन्धाभावात् । वेदनतारतम्यस्य क्वचिद्बहुज्ञ एव विश्रान्तेः। अपकर्षतारतम्यादेकमात्रज्ञतापत्तेश्च । मनुष्यादिवत् क्वचित्तुरगादिजा(१)तिभेदेऽपि सार्वज्ञ्यापत्तेः । भावनाभ्यासस्य च भाव्यविषयत्वेन सर्वविषयज्ञानजनकतानुपपत्तेः । तथैव शक्तेरवसायात् ।

---

न्यायलीलावतीकण्ठाभरणम्

साक्षात्कारोऽपि मानस एव स्यादिति भावः । सिद्धासहकारितया च विपर्ययो यथा तथा योगजधर्मसहकारितया विपर्ययः स्यान्न तु प्रमेत्याह—स्वप्नस्य चेति । स्मृतानां पदार्थानां विपर्यासः स्मृतिविषये वा विपर्यास इत्यर्थः । परमाण्वादयः प्रत्यक्षा इत्यत्र पूर्वानुमाने साध्यं विकल्पतो दूषयति—नानेति । तथा च न सार्वज्ञ्यमित्यर्थः । अन्यथेति । यद्यत् प्रमेयं तदेव पुरुषाध्यक्षमिति प्रतिबन्धासिद्धिरित्यर्थः। वेदनतारतम्यं परिमाणतारतम्यवत् क्वचिद्विश्रान्तं तथा च तत् यत्र विश्रान्तं स्यात् स एव योगीत्याशङ्क्याह—वेदनेति । सिद्धसाधनमुक्त्वा प्रतिकूलतर्कमाह–अपकर्षेति । तर्कपराहतान्तरमाह–मनुष्यादिवदिति । सामग्रीतौल्यादिति भावः । संस्कारवशात् परोक्षमप्यपरोक्षं स्यादिति सार्वज्ञ्यमाशङ्क्याह—भावनेति । तथैवेति । संस्कारस्य स्वविषयमात्रे ज्ञानजननशक्तेरवसायादित्यर्थः । तारतम्यविश्रान्तौ प्र

न्यायलीलावतीप्रकाशः

नादित्यर्थः । स्वप्नस्य चेति । स्मृतानां पदार्थानामसंसर्गाग्रहरूपत्वादित्यर्थः । न त्वयथार्थे स्मृतित्वं स्मरामीति तदनुव्यवसायापत्तेः । तथा च प्रमामात्र एव मनसो बहिरस्वातन्त्र्यमिति भावः । मेयत्वाच्च परमाणूनामध्यक्षत्वमात्रं वा साध्यं एकपुरुषैकाध्यक्षविषयत्वं वा । आद्ये दूषणमाह—नानेति । नानापुरुषाध्यक्षत्वेनार्थान्तरान्नैकपुरुषाध्यक्षत्वसिद्धिरित्यर्थः । अन्त्ये—अन्यथेति । एकपुरुषैकाध्यक्षविषयत्वे साध्य इत्यर्थः। वेदनतारतम्यं क्वचिद्विश्रान्तं तारतम्यत्वादित्यत्र सिद्धसाधनमित्याह—वेदनेति । प्रतिकूलतर्कपराघातश्चेत्याह—अपकर्षेति । सर्वविषयकैकज्ञानकारणानुपपत्तिमाह—भावनेति । तथैवेति । भाव्यमात्र-

(१) ०व करितु० ।

कर्तुः कर्तव्यतातिशयदर्शनाददेहिवदेहिनोऽपि सर्वकर्तृतापत्तेः। कायव्यूहादिकृतेरप्रामाणिकत्वात्। तथाविधादृष्टवशादेवोपपत्तेः। अभुक्तस्यैव वा कर्मणः क्षयाद्विपरीतनिश्चयाच्च। ज्ञानजातीयं कृति-

न्यायलीलावतीकण्ठाभरणम्

तिकूलतर्कान्तरमाह—कर्तुरिति। कृतितारतम्यविश्रान्तौ कस्यचित् सर्वकर्तृत्वं स्यादित्यर्थः। ननु कायव्यूहमन्तरेण यावन्त्यदृष्टानि तेषां च तत्तच्छरीरावच्छेदेन भोगं ज्ञात्वा कायव्यूहानुष्ठानमपि कथं स्यादित्याशङ्क्याह—कायव्यूहेति। अप्रामाणिकत्वादिति। अदृष्टानां तत्त्वज्ञाननाश्यतया न भोगार्थं कायव्यूह इत्यर्थः। ननु तारतम्यनो वै शरीरानिबद्धनियमे शूरेत्यादिस्मृतिः(?) वादरसौभरिप्रभृतीनां च कायव्यूहप्रसिद्धिश्च कथं स्यादित्यत आह—तथाविधेति। 'तथाविधत्वं' कायव्यूहनिर्वाहकत्वम्। अथ वा कायव्यूहस्याचिरेण भोगप्रयोजकं (कत्वं ?)तच्च नास्ति कर्म्मणः तत्त्वज्ञाननाश्यत्वात्। तथा च स्मृतिः "ज्ञानाग्निः सर्वकर्म्माणि भस्मसात् कुरुतेऽर्ज्जुन" इत्याह—अभुक्तस्यैवेति। विपरीतेति। ज्ञानस्यासर्वविषयत्वनिश्चयादित्यर्थः। एतदेव उपपादयति—ज्ञान-

न्यायलीलावतीप्रकाशः

विषयकज्ञानजनकत्वेनेत्यर्थः। ज्ञातुर्ज्ञातव्यातिशयदर्शनाद्यदि सार्व्वज्ञ्यं साध्यते तत्र प्रतिवन्दिग्रा(मा ?)ह—कर्तुरिति। अदेहिवदिति। त्वदभिमतेश्वरवदित्यर्थः। सार्वज्ञ्यं विनापीति शेषः। स्वात्मनो बहून्यदृष्टानि साक्षात्कृत्य भोगेन तत्क्षयार्थं योगी कायव्यूहे(हं?)करोति अदृष्टसाक्षात्कारश्च न सार्वज्ञं विनेति योगिसिद्धिरिति यदि ब्रूयात्तत्राह—कायव्यूहेति।

अथागमस्त(स्त ?)त्र मानं तत्राह—तथाविधे(ध ?)ति। तपःप्रभावादपीति द्रष्टव्यम। किञ्च कर्मफलभोगार्थं काययौगपद्यं(१) कर्म चादत्तफलमेव तत्त्वज्ञानाद्विनश्यतीत्याह—अभुक्तस्यैवेति। विपरीतनिश्चयमेव स्फुटयति—ज्ञानजातीयमिति उक्तारवेति(?) चक्षुरादीनां शक्तिविर-

न्यायलीलावतीप्रकाशविवृतिः

परमाणुद्व्यमिति पक्षनिर्देशो बोद्धव्यः। प्रमायामिति। अनुभव इत्यर्थः। मनुष्यादिवदिति मूलम्। यद्यपि योगिनः करितुरगादिशरीरोपग्रहाद् दृष्टापत्तिस्तथापि तच्छरीरावच्छेदेन सार्वज्ञ्यं नेष्यत इत्यभिसन्धानेनापाततः तदेवापाद्यम्। इष्टापत्तिमाशङ्क्याह—सार्वज्ञं विनापीति। तथा

(१) स्वीकरणीयामिति शेषः।

पयविषयतानियतं (१)तेन समं निरुपाधित्वात् यदेवं तदेवं यथा धूमो वह्निना(२)। विपक्षे तूक्ता एव तर्काः। तथा च सर्वमिदमनुपपन्नमिति चेत्, नैवम्। विरोधितर्काणां विपर्ययापर्यवसानात्। अणूनामप्रत्यक्षत्वे प्रत्यक्षत्वप्रमेयत्वयोर्निरुपाधिसाहचर्यव्याको-

न्यायलीलावतीकण्ठाभरणम्

जातीयमिति। ज्ञानत्वं कतिपयविषयत्वव्याप्तमित्यर्थः। तर्का इति। चक्षुरादीनां परमाणुषु शक्तिविरह इत्याद्युन्नेयम्। चक्षुरादयो यदि स्व(।?)योग्यं गृह्णीयुस्तदा रसादिकमपि गृह्णीयुरित्यादयः। सर्वमिदमिति। योगी तज्ज्ञानं सर्वविषयं तच्चक्षुरादयः परमाण्वादयो विषयाः कायव्यूहः योगजो धर्मश्चेत्याद्यसङ्गतमित्यर्थः। विरोधीति। योगिनां चक्षुर्यदि परमाणौ वर्त्तेत तदा रसेऽपि प्रवर्त्तेत। तस्मान्न परमाणावपि प्रवर्त्तते इत्यत्र योगिसिद्धौ तच्चक्षुरादेः परमाणवप्रवृत्तिसिद्धेरित्यर्थः। परमाणवः कस्यचित् प्रत्यक्षाः प्रमेयत्वादित्यत्रानिरुपाधिसम्बन्धशालित्वरूपप्रसङ्ग एव विपक्षबाधकतर्क इत्याह—अणूनामिति। रूपवत्त्वं म-

न्यायलीलावतीप्रकाशः

हादित्यादय इत्यर्थः। अत्र परमाणुर्यदि प्रत्यक्षद्रव्यं स्यात् महान् स्यान्न चैवं तस्मान्न प्रत्यक्षद्रव्यमित्यत्र निर्गुणत्वमुपाधिः। यदि योगिचक्षुषि शक्तिविरह आपाद्यते तदाऽऽश्रयासिद्धिः, अस्मदादिचक्षुषि तदापादने इष्टापत्तिरित्याह—विरोधीति। अणूनामिति। नन्वणवोपीश्वरप्रत्यक्षा ज्ञानान्तरोपनीतप्रत्यक्षाश्च जन्यसविकल्पकाजन्य-

न्यायलीलावतीप्रकाशविवृतिः

विधेतीति। युगपद्भो(ग?) जनकेत्यर्थः। अत्र परमाणुरिति। परमाणुर्द्रव्यमित्यर्थः। विपर्ययापर्यवसानं तदसमीचीनत्वेनातस्तदर्थमुपाधिमाह—निर्गुणत्वमिति। न चाकाशादौ साध्यापाक (व्यापक ?) त्वं परमाणुवत् तस्यापि प्रत्यक्षत्वादिति भावः। उपाधिः साधनावच्छिन्नसाध्यव्यापक इति क्वचित्पाठस्तत्र चानुमातृमते कालादौ साध्याव्यापकत्वपरीहाराय तदुक्तम्। नन्वणवोऽपीति। यद्यपीश्वरादिकं परो न मनुते तथाप्येतदनुमानेन तस्यैव सिद्धेरर्थान्तरतया न योगीसि-

(१) ०तानिष्ठं ते०। (२) वह्नीन्।

पात् । न चात्र रूपवत्त्वं महत्त्वं वोपाधिः । रूपादेरपि प्रत्यक्षत्वात् । रूपे रूपत्वं द्रव्येषु महत्त्वं रूपवत्त्वमिति(१) चेत्; न,

---

न्यायलीलावतीकण्ठाभरणम्

इदं च उपाधिरत्रेति निरुपाधित्वमस्त्वित्याह—रूपवत्त्वमिति । उपाधेः साध्याव्यापकत्वमाह—रूपादेरपीति । रूपे प्रत्यक्षत्वं साध्यमस्ति न च रूपवत्त्वमुपाधिरित्यर्थः । द्रव्यप्रत्यक्षतायामुपाधिरयं गुणप्रत्यक्षतायां च रूपत्वमेव तन्त्रमित्याह—रूप इति । अत्राप्युभयोः साध्या-

न्यायलीलावतीप्रकाशः

जन्यप्रत्यक्षत्वे साध्ये बाधः योगिज्ञानस्य विशिष्टज्ञानत्वेन विशेषणसविकल्पकजन्यत्वात् निर्विकल्पकस्य च योगिन्यनङ्गीकारात् । अत्राहुः। जन्यप्रत्यक्षत्वावच्छिन्नप्रतियोगिकविषयताश्रयत्वं साध्यं उपनीते च तदसम्भवः पटं साक्षात्करोमीतिवत् परमाणुं साक्षात्करोमीत्यस्मदादीनामनुव्यवसायापत्तेः । रूपादेरपीति । तथा च साध्याव्यापकत्वमित्यर्थः । ननु परमाणुरूपमात्रं न पक्षीकृतमपि तु तद्गु-

न्यायलीलावतीप्रकाशविवृतिः

द्धिरिति भावः । निर्विकल्पकस्येति । अनागतगोचरसाक्षात्कारमात्रस्यैव सविकल्पकत्वनियमादिति भावः । जन्यप्रत्यक्षत्वेति । यद्यप्येवमन(नु?)पनीतप्रत्यक्षविषयतामादायार्थान्तरम्। न च यावत्प्रत्यक्षविषयत्वं साध्यं बाधात्। परमाणुं साक्षात्करोमीत्यनुव्यवसायः स्वातन्त्र्येण परमाणुगोचरसाक्षात्काराभावादेवासम्भवी परमाणुज्ञानं साक्षात्करोमीति च भवत्येव तथापि सामान्यज्ञानलक्षणप्रत्यासत्त्यजन्यजन्यसाक्षात्कारविषयत्वं साध्यमिति भावः। यत्तु सामान्यप्रत्यासत्त्यजन्यजन्यप्रत्यक्षविशेष्यत्वं साध्यम्, उपनीतं च न विशेष्यमतो नार्थान्तरमिति तत्तुच्छम्। उपनीतस्यापि मानसप्रत्यक्षविशेष्यत्वात् । ननु परमाणुरूपेति । परमाणोः प्रत्यक्षत्वे साध्ये द्रव्यत्वावच्छिन्नसाध्यव्यापकं महत्त्वे सति रूपवत्त्वं तद्रूपस्य तथात्वे साध्ये गुणत्वावच्छिन्नसाध्यव्यापकं उद्भूतरूपत्वमुपाधिरित्यर्थः । यद्यप्युपाधेर्नित्यदोषत्वात्पक्षभेदोपन्यासो व्यर्थस्तथापि द्रव्यत्वगुणत्वयोः पक्षधर्मत्वप्रतीत्यर्थं तदुपन्यास इति भावः। गुणत्वपदं द्रव्यत्वस्याप्युपलक्षणम् । क्वचिद्गुण-

---

(१) ०षु च महत्त्वमि० ।

सुखादेरात्मनश्च प्रत्यक्षतोपलम्भात् । योग्यविशेषगुणवत्त्वमिति चेत्, न, गुणादावभावात् । तत्तद्रूप [भेद] माश्रित्य योग्यत्वं शेषामध्यक्षतायामन्वयव्यतिरेकावुपलभ्येते इति चेत्, न, तेषां प्रत्यक्षताविशेषव्यापकत्वेन प्रत्यक्षत्वमात्रेऽनुपाधित्वात् । प्रत्यक्षसामग्रीमध्यपातित्वप्रयुक्तं प्रत्यक्षत्वमिति चेत्, न, अस्य

---

न्यायलीलावतीकण्ठाभरणम्

व्यापकत्वमाह—सुखादेरिति । प्रत्यक्षत्वमात्रे योग्यविशेषगुणवत्त्वमु· पाधिं शङ्कते—योग्येति । अत्रापि साध्याव्यापकत्वमाह—गुणादाविति । यत्र द्रव्यादौ यदधीनं प्रत्यक्षत्वं तत्र स एवोपाधिरिति शङ्कते—तत्तद्रूपेति । एवं प्रत्यक्षत्वमात्रे साध्ये न कश्चिदुपाधिरिति सिद्धं तत्र प्रमेयत्वस्य निरूपाधि वमित्याह—तेषामिति । प्रत्यक्षसामग्र्यधीनत्वं प्रत्यक्षतामात्रे स्यादुपाधिरिति शङ्कते-प्रत्यक्षतायामिति । एतच्च प्रमेयत्वं साधनमपि व्याप्नोतीति साधनव्यापकत्वादनुपाधिरित्याह—अस्येति ।

न्यायलीलावतीप्रकाशः

णमात्रम्, तथा च न गुणत्वावच्छिन्नसाध्यव्यापकं रूपत्वमिति । एवं न परमाणुमात्रं पक्षीकृतमपि त्वाकाशादयोपीति । तथा च महत्त्वे सति रूपवत्त्वमपि न द्रव्यत्वावच्छिन्नसाध्यव्यापकम् । ( किं ? )न्तु साध्याव्यापकत्वं स्फुटमेवेत्यर्थः । गुणादाविति । नात्र द्रव्यमात्रं पक्षोऽपि तु गुणादयोऽपीति न पक्षधर्मावच्छिन्नसाध्यव्यापकत्व· मित्यर्थः । अस्येति । साध्यसामग्र्याः साधनव्यापकत्वादनुपा·

न्यायलीलावतीप्रकाशविवृतिः

'शादिति पाठः । स तु सुगम एव । परमाणुरूपमात्रमिति । यद्यपि तन्मा· त्रप्रत्यक्षीकरणेऽपि सुखादावुक्तोपाधेः साध्यव्यापकत्वमेव तथाप्यु· पाधिव्यतिरेकात् साध्यव्यतिरेके साध्ये रूपत्वस्योपलक्षणतया रूप· त्वरसत्वादीनां सर्वेषामेव स्वरूपसिद्धिप्रतीतये रूपस्य तद्भिन्नस्य च पक्षत्वलाभाय तदुक्तम् । रूपत्वं उपाधिरिति शेषः । एवमित्यादिग्रन्थे· ऽपीत्थमेव शङ्कासमाधानं च महत्त्वरूपवत्त्वयोरप्युपाधित्वनिरासा· र्थतया । यत्तु गुणत्वद्रव्यत्वयोरन्यथा पक्षधर्मत्वमेव न स्यादधिक· देशवृत्तित्वादिति शङ्कापोषणार्थमेवेदमुक्तमिति तत्तुच्छम् । अधिक·

साध्याव्यावृत्तत्वेन(१) धूमे आर्द्रेन्धनवदनुपाधित्वात्। प्रत्यक्षतायां दृष्टान्वयव्यतिरेकत्वप्रयुक्तं प्रत्यक्षत्वम्, अणूनां तु नियमेनास्मदादीनां परोक्षत्वमिति चेत्, न, परबुद्ध्यादेरतथाभावेऽपि प्रत्यक्षत्वात्। परप्रत्यक्षं प्रति परस्यान्वयव्यतिरेकाविति चेत्, तुल्यं योगिप्रत्यक्षत्वेऽपि। बुद्धित्वात्तत्रानुमानमिति चेन्न, अणुष्वपि पृथिवीत्वादेः सत्त्वात्। एकपुरुषापरोक्षबोधविषयत्वं च कल्पनालाघवात्। प्रतिबन्धस्य चानुपाधित्वेन निश्चयात्। रस

---

न्यायलीलावतीकण्ठाभरणम्

पक्ष एवासाधनव्यापकत्वं न हि तत्र काचित् प्रत्यक्षसामग्रीति शङ्कते—प्रत्यक्षतायामिति। योगिन एव तत्रापि प्रत्यक्षसामग्रीत्यभिप्रेत्य साधनव्यापकता प्रचययितुं दृष्टान्तमाह—परेति। चैत्रबुद्धौ मैत्रस्य प्रत्यक्षसामग्र्यभावेऽपि प्रत्यक्षत्वादित्यर्थः। मैत्रप्रत्यक्षसामग्र्येव स्वबुद्धावस्तीति न च तत्र तद्विरह इत्यत्राह—परप्रत्यक्षमिति। आकाशमुद्घाटयति—तुल्यमिति। परमाणोरपि न योगिप्रत्यक्षसामग्रीविरह इति साधनव्यापकत्वमेवोपाधिरित्यर्थः। अनुमानमिति। प्रत्यक्षसामग्र्या इति शेषः। नानापुरुषमादाय यत् सिद्धसाधनमुक्तं तत्राह—एकेति। लाघवाख्यतर्कोपष्टम्भादेकपुरुषवेद्यत्वमेव सर्वेषां सेत्स्यतीति सर्वज्ञसिद्धिरित्यर्थः प्रतिबन्धसामग्र्यामाह—प्रतिबन्धस्येति। परमाणवचाक्षुषत्वे रसेऽपि चाक्षुषत्वप्रसङ्गं परापादितं दूषयति—रसेति। रसोऽपि रूपादिषु मध्ये रूपमात्रग्राहकेन्द्रियग्राह्यः स्यादित्यापादने व्याघातः रूपग्राहकसापेक्षेन्द्रियग्राह्यः स्यादित्यत्र रूपग्राहकमनःसापेक्षरसनं

न्यायलीलावतीप्रकाशः

धित्वमित्यर्थः। अतथा(भा ? )वेऽपीति। अन्वयव्यतिरेकादर्शनेपीत्यर्थः। एकपुरुषेति। एकपुरुषाध्यक्षत्वेन व्याप्त्यभावेऽपि लाघवसाचिव्यादनुमानादेव तत्सिद्धिः सामान्यग्राहकमानस्यापि सहकारिविशेषाद्विशेषबोधकत्वात्। न चानुमितौ लाघवसाचिव्ये मानाभावः क्लृप्तकारणादेव तदुपपत्तेरिति वाच्यम्, यत्र प्रमाणे लघुगुरुविषयत्वसम्भवस्तत्र लघोरेव विषयत्वमिति प्रमाणस्वभावात्

---

(१) साध्याव्याप्तत्वेन।

चाक्षुषतायां रूपैकानियतेन्द्रियवेद्यत्वे व्याघातात्। अनियतवेद्यत्वे(१) वेदकस्य मनस्त्वेन सापेक्षत्वानपेक्षत्वाभ्यां(२) सिद्धसानव्याघातात्। तैजसेन्द्रियवेद्यत्वे रूपैकनियमात्। तैजसत्वावगतौ व्याघातात्। देह(३)व्यूहमाश्रित्य सर्पादावनापत्तेः।

---

न्यायलीलावतीकण्ठाभरणम्

ग्राह्यत्वेन सिद्धसाधनं निरपेक्षत्वे च व्याघाताच्च न हि निरपेक्षं मनो बहिः प्रवर्त्तत इत्याह—अनियतेति। तैजसेन्द्रियत्वं च रसाग्राहकत्वे सति रूपग्राहकत्वेनैव सिद्धमतस्तद्वेद्यत्वापादने व्याघात इत्याह—तैजसेति। करितुरगादावपि सार्वज्ञ्यमापादितमिष्टचापत्त्या परिहरति—कायव्यूहेति। तत्कर्म्मभोगार्थं योगिनस्तच्छरीरोपग्रहस्यापि सम्भवाद् यत् प्रत्यक्षं तत् सर्वेषामपि प्रत्यक्षमित्यत्र व्यभिचारमाह—

न्यायलीलावतीप्रकाशः

फलबलेन तस्यापि सहकारित्वादित्यर्थः। नन्वनुपाधित्वात्प्रत्यक्षस्यैव चाक्षुषप्रत्यक्षत्वस्यापि प्रमेयत्वं व्याप्यमिति रसोऽपि चाक्षुषः स्यादित्यत आह—रसेति। अनियतेति। यद्यनियतेन्द्रियग्राह्यो रसस्तदा रुद्ग्राहक(?)मनियतार्थग्राहकतया मनः स्यात् तथा सति यदि तच्चक्षुरादिसापेक्षं तदा सिद्धसाधनं तन्निरपेक्षत्वे च स्वातन्त्र्यप्रसङ्गान्मनस्त्वव्याघात इत्यर्थः। रूपैकेति। गन्धादिषु रूपस्यैव व्यञ्जकत्वादालोकवदित्यत एव तैजसत्वसिद्धेरित्यर्थः करितुरगादिभेदेऽपीति दूषयति—देहव्यूहमिति। कायव्यूहदशायां सर्पश-

न्यायलीलावतीप्रकाशविवृतिः

देशवृत्तित्वेऽपि पक्षधर्मत्वाविरोधात्। रसैकेति। रूपवत्त्वमात्रं महत्त्वमात्रं चेत्यर्थः। यद्यपि गुणत्वावच्छिन्नसाध्यव्यापकं महत्त्वसामानाधिकरण्यं प्रत्यक्षत्वावच्छिन्नसाध्यव्यापकं महत्त्वं बहिर्द्रव्यावच्छिन्नसाध्यव्यापकं च रूपवत्त्वमुपाधिरविकल एव परमाणुरसादीनामाकाशादि ( दी ? ) नां च पक्षत्वात्तथाप्यनागमरूपविपक्षबाधकेन हेतोः साध्यव्याप्यतयोपाधेः साध्याव्यापकत्वमिति भावः। नात्रेति।

---

( १ ) अनियतेन्द्रियवेद्यत्वे। ( २ ) सापेक्षत्वनिरपेक्षत्वाभ्यां।
( ३ ) कायव्यूहेति कण्ठाभरणसम्मतः पाठः।

परेच्छा च स्वतोऽप्रत्यक्षेति परस्यापि प्रत्यक्षता(१) न स्यात् । भावे वा परमानसतावत् परचाक्षुषतापि स्यात् । अप्रत्यक्षा अणव इत्यत्र तु अस्मदादियोगिविशेषापेक्षया सिद्धसाधनव्याघातात् । प्राणित्वादेः कीर्तितुतातिदृष्टान्तहतत्वात् । "द्वे ब्रह्मणी वेदितव्ये," "पश्यत्यचक्षु" रित्याद्यागमसम्भवाच्चेति निराकुलमेतत् । [इति] योगी ॥

---

न्यायलीलावतीकण्ठाभरणम्

परेच्छेति । परोक्तं सत्प्रतिपक्षमपाकरोति—अप्रत्यक्षा इति । योगी न सर्वज्ञः प्राणित्वादहमिवेत्यादौ कीर्त्तितुतातितादयो न स्वदर्शनामिज्ञः प्राणित्वादहमिवेति दृष्टान्तप्रतिहतत्वादित्याह--प्राणित्वादेरिति । द्वे ब्रह्मणी इति । वेदनमिह साक्षात्कारो विवक्षितो न तु योगिभिन्नस्य शरीरादिभिन्नत्वेन स्वात्मपरात्मसाक्षात्कारः सम्भवति । पश्यत्यचक्षुरिति चेश्वरसार्वज्ञ्यसाधकमित्यत उपदर्शित विपरीतागमविरोधः परिहृतः।

न्यायलीलावतीप्रकाशः

रीरवानपि सर्वज्ञ इतीष्टापादानमित्यर्थः । ननु परमाणूनां योगिप्रत्यक्षत्वेऽस्मदादिप्रत्यक्षता स्यादेकप्रत्यक्षस्यापरेण साक्षात्करणादित्यत आह—परेच्छा चेति । अप्रत्यक्षा इति । अस्मदाद्यप्रत्यक्षत्वे साध्ये सिद्धसाधनं योग्यप्रत्यक्षत्वे साध्ये प्रतियोग्यप्रसिद्धिः प्रसिद्धौ वा धर्मिग्राहकमानबाध इत्यर्थः । प्राणित्वादेरिति । विवादाध्यासितो न सर्वज्ञः प्राणित्वादित्यत्र च कीर्तिर्न बौद्धमताभिज्ञः प्राणित्वादहमिवेति प्रतिदृष्टान्तप्रतीघात इत्यर्थः । द्वे ब्रह्मणी इति । अत्र श्रौतानुमानिकपर-

न्यायलीलावतीप्रकाशविवृतिः

यद्यपि गुणादिसाधारणपक्षतायामपि द्रव्यत्वस्य पक्षधर्मत्वमविकलमित्येतदुपन्यासो व्यर्थः । अन्यथा उपाधेरनित्यदोषतापत्तेस्तथापि गुणादीनां पक्षत्वे तत्र उपाधिव्यतिरेकेण द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यतिरेकसाधनेऽपि नाप्रत्यक्षत्वसिद्धिर्विशेषणव्यतिरेकेणैवान्यथासिद्धेरिति सत्प्रतिपक्षोत्थापकत्वव्यतिरेकप्रदर्शनाय तदुपन्यास इति भावः । साध्यव्यापकत्वमित्यत्र दोष इति शेषः । सिद्धसाधनमिति ।

---

(१) ०त्यक्षा स्यात्० । त्यक्षा न स्यात् ।

लौकिकमविकल्प(क)मन्यच्च । शब्दादिसंयोजनारहितमविकल्पकम् । वाच्यवाचकतादात्म्यात्तदसिद्धम् । तथा हि घटोऽयमित्याद्यक्षराकारतादात्म्यमनुभूयते । न च घटत्वजात्यनुभवानन्तरं स्मर्यमाणघटशब्दावच्छिन्नघटत्वजातियोगमात्र-

---

न्यायलीलावतीकण्ठाभरणम्

संयोजनावैशिष्ट्यं तदसिद्धमिति योजनाराहित्यमसिद्धमित्यर्थः। घटानुभवे संज्ञास्मरणं ततः पुरोवर्त्तिनामवैशिष्ट्यप्रत्यय इत्याशङ्क्याह—न चेति। वाचकोऽन्यः शब्दात्मा त्वन्य इति तदधीना व्युत-

न्यायलीलावतीप्रकाशः

स्परात्मवेदनस्यान्यतः प्राप्तत्वादप्राप्तं साक्षात्कारिज्ञानं विधीयते 'पश्यत्यचक्षु' रित्यत्रापि दर्शनं साक्षात्कारिमात्रं विवक्षितं न चाक्षुषं तथैव वेदव्याख्यातृभिर्व्याख्यानात्।

'अन्यच्च' सविकल्पकं चेत्यर्थः। शब्दादीति। आदिपदाज्जात्यादिसङ्ग्रहः। संयोजनावैशिष्ट्यं निर्विकल्पकानन्तरं स्मृतवाचकशब्दवैशिष्ट्यं सविकल्पकस्य विषयो न निर्विकल्पकस्य तेन वैशिष्ट्याविषयकं ज्ञानं निर्विकल्पकमित्यर्थः। ननु नास्त्येव तज्ज्ञानं यत्र शब्दसम्भेदो न भासते अयं डित्थ इति शब्दार्थयोस्तादात्म्यानुभवादिति स्वरूपासिद्धमिदमित्याह--वाच्यवाचकेति। तदिति। तन्निर्विकल्पक-

न्यायलीलावतीप्रकाशविवृतिः

रसनेन्द्रियसापेक्षमनोग्राह्यत्वस्य रसे अभ्युपगमादिति भावः। एतच्च बहु(हि?)रिन्द्रियायोग्यं बहिरिन्द्रियेण योगी (न?)प्रत्येतीति मत(१)माश्रित्योक्तमन्यथा तु सामान्यप्रत्यासत्त्या रसचाक्षुषतावद्योगजधर्मेणापि तच्चाक्षुषतया क्षत्यभावादिति रूपस्यैवेति रसस्यापि व्यञ्जकत्वे तद्व्याघात इत्यर्थः। इष्टापादानमिति। तच्छरीरावच्छेदेनापि योगिनः सार्वज्ञ्ये बाधकाभावादिति भावः। धर्मिग्राहकेति। प्रतियोगिग्राहकेत्यर्थः। श्रौतादिनान्यथासिद्धेराह—अत्रेति वैशिष(शेषिक?) मते श्रौतानुमानिकयोरभेदेऽपि सामान्यविशेषभावं पुरस्कृत्य भेदेनोपन्यास इति।

---

(१) ०प्रत्येति सर्वमेव मनसा प्रत्येतीति मतमा० ।

मवभासते न तु तादात्म्यमिति वाच्यम्, घटोऽयमिति प्रत्ययस्यैकत्वेनानुभवत्वेन चानुभूयमानत्वात्(१), अत्यभिज्ञानवत्। अन्यथा तस्यापि स्मरणग्रहणात्मकत्वेन एकत्वाभावप्रसङ्गात्। न चेह स्मृतिचिह्नभूतस्तत्ताकारः प्रकाशते, न चाचाक्षुषवाचकाकारोपधानं जातेर्व्यक्तेर्वा चाक्षुषे चेतसि प्रकाशते, न च शब्दार्थयोर्भिन्नेन्द्रियवेद्यत्वं व्युत्पत्त्याद्यपेक्षा च न स्यादिति वाच्यम्, अर्थात्मभूतानात्मभूत(योः)वाच्यवाचकाकारयोर्भेदेऽपि सुसदृशत्वेन वकारभेद इवाभेदाभिमानात् (२)। मैवम्। अननुभवात्। न ह्ययं पुरोवर्ती घटशब्द इति कश्चिदनुभवति। न चा-

---

न्यायलीलावतीकण्ठाभरणम्

पत्तिरित्याह—अर्थात्मभूतेति। उपनीतः शब्दोऽध्यक्षे भासते इत्याचार्य्ये दूषयति—न चाभिलपेति। इन्द्रियान्तरगोचरतां निरस्यति—

न्यायलीलावतीप्रकाशः

लक्षणमसिद्धमित्यर्थः। ननु जातिजातिमन्निर्विकल्पकान्तरं शक्तिग्रहकालावगतशब्दस्मरणं जातिजातिमद्विषयकं सविकल्पकं च भवति न तु शब्दार्थयोस्तादात्म्यं भासत इत्याशङ्क्य निराकरोति—तच्चेति(?)। अन्यथेति। तथा च ततो नाभेदः सिद्ध्येदिति भावः। ततोऽपि न शब्दांशे स्मृतिरित्याह—न चेति। ननु ज्ञानैक्यानुव्यवसायाद्घटशब्दवाच्यत्वमेव चाक्षुषसविकल्पके भासत इत्यत आह—न चाचाक्षुषेति। न च शब्देति। शब्दार्थयोस्तादात्म्ये सतीति शेषः। अर्थात्मभूतेति। शब्दार्थयोस्तादात्म्येऽपि द्वावाकारौ भिन्नौ स्तस्तथा च भिन्नेन्द्रियवेद्यत्वं व्युत्पत्तिश्च नानुपपन्नेत्यर्थः। वकारभेद इवेति। औष्ठ्यदन्त्यौष्ठ्यवकार इत्यर्थः। न चाभिलापरूपमिति। अस्माकं तु संस्कारोपस्थितः शब्दः

न्यायलीलावतीप्रकाशविवृतिः

वैशिष्ट्यविषयकमिति। समवायातीन्द्रियत्वेऽपि धर्मधर्मिभावात्मकं वैशिष्ट्यं प्रतीतिविषय इति न जात्यादिविशिष्टप्रतीतावतिव्याप्तिः। औष्ठ्येति। वकारयोस्तादात्म्येऽपि तदाकारयोर्भिन्नयोः सुसदृशत्वेन

---

(१) ०कत्वेनानुभूयमानत्वाद्। (२) ०दानुमानात्।

भिलापरूपं नयनस्य गोचरः। न च स्मृतेस्तत्ता चिह्नभूता। अनुभूतवर्णस्मृतौ हरिहरादिस्मृतौ च व्यभिचारात्। न च शब्द-संसर्गः प्रत्यक्षगोचरः। ततो जातिसंसर्गमात्रमत्रावभासते,

---

न्यायलीलावतीकण्ठाभरणम्

न चेति। अत्रेति। सविकल्पक इत्यर्थः। तर्हि घटोऽयमिति कथं वाचकपुरः-

न्यायलीलावतीप्रकाशः

शब्दयोजनात्मकसविकल्पके तत्रैव प्रत्यभिज्ञाने भासत इत्यर्थः। न च शब्देति। वाच्यत्वलक्षणः संसर्ग इत्यर्थः। वाच्यत्वस्यातीन्द्रियत्वाभ्युपगमात् न व्यवहारः तस्य विकल्पकसाध्यत्वात्।

अथ गौरिति प्रत्यक्षं विशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वात् अनुमितिवत् दण्डीति प्रत्यक्षं न दृष्टान्तः विशेषणविशेष्यतत्सम्बन्धानां युगपज्ज्ञानसामग्रीत एव तदुत्पत्तौ दण्डज्ञानजन्यत्वासिद्धेः। ननु विशेषणविशेष्यज्ञानसामग्रीतः साकाङ्क्षोभयविषयकमेकं ज्ञानं विशिष्टज्ञानं तत्र प्रत्यक्षे योग्येन्द्रियसन्निकर्षादनुमितौ पक्षधर्मताबलाद्व्यापकतावच्छेदकप्रकारेण शाब्दे योग्यतादिवशात् पदार्थतावच्छेदकरूपेणापूर्वमेव विशेषणं भासते उपमितावप्येवमेवेति न क्वापि विशेषणज्ञानं जनकम्। न च प्रत्यभिज्ञायां तत्रानुभवस्तथा संस्कारस्यानुत्पादादनुद्बोधात्प्रत्यभिज्ञानुत्पादेनोद्बुद्धः संस्कार एव प्रत्यासत्तितया विशेषणभानार्थमिन्द्रियसहकारी भ्रमो विशिष्टज्ञानमेव न भवतीति। मैवम्। साध्यप्रसिद्धिपदार्थोपस्थितिवाच्यत्वज्ञानतत्तानुभवानामनुमित्यादिहेतुत्वात् साध्यप्रसिद्ध्यादिकं विनाऽनुमित्यादेरभावात् साध्यादिकं च विशेषणमिति तज्ज्ञानमनुमित्यादिहेतुः। न च परोक्षत्वमुपाधिः प्रत्यभिज्ञायां साध्याव्यापकत्वात् नापि विशिष्टविशेषणकत्वं पक्षेतरत्वात्। अत्र वदन्ति—स्मृतिवत् पूर्वानुभवस्यापि संस्कारद्वारा जनकत्वात्

न्यायलीलावतीप्रकाशविवृतिः

यथाऽभेदाभिमानस्तथाऽत्रापीत्यर्थः। वाच्यत्वलक्षण इति। न च पूर्वशब्दयोजनात्मक इत्यादिना स्वोक्तेन विरोधः। एतस्य मतान्तरत्वात् तथा चोपनीतं वाच्यत्वं चाक्षुषे चेतसि भासत इत्येकम्, तटस्थज्ञानान्तरविषय एतद्व्यावर्त्तकमित्यपरम्, आनुमानिकमेव तदित्यभ्य(न्य?)दिति मतत्रयमेवात्रेति भावः। ननु ज्ञानत्वमिति(?)। तथा च विभागो व्याहत

शब्दस्तु व्युत्पत्तिसमयावगतोऽत्र स्मर्यते। न च तस्य केनचित्संसर्गोऽवभासते, यदि तु तत्संसर्गोऽवभासत इति मन्यसे त-

---

न्यायलीलावतीकण्ठाभरणम्

सरमित्यत आह—शब्दस्त्विति। अत्रेति। अनुभवात् पूर्व्वमित्यर्थः। अनुभासमानः शब्दसंसर्गः कथमप्युपलभ्यत इत्यत आह—यदि त्विति।

न्यायलीलावतीप्रकाशः

सिद्धसाधनम्। न च विशिष्टानुभवत्वेनाव्यवहितविशेषणज्ञानजन्यत्वं साध्यं प्रत्यभिज्ञावत् स्मृत्यैवोपपत्तेरप्रयोजकत्वाच्च। नापि तत्र एवाव्यवहितविशेषणानुभवजन्यत्वं साध्यं प्रत्यभिज्ञायां व्यभिचारात्। न च तत्कालोत्पन्नरूपविशिष्टप्रत्यक्षे संस्काराभावेन स्मरणाभावात् पक्षधर्मताबलान्निर्विकल्पकसिद्धावन्यत्रापि सामग्रीतौल्यात्तत्सिद्धिः तत्र हि शुक्लत्वादिविशिष्टवैशिष्ट्यज्ञानं वा अविशिष्टतद्विशिष्टज्ञानं वा। आद्ये शुक्लत्वादिजातिस्मरणं प्रथमवस्तुतस्तद्विशिष्टज्ञानं ततः शुक्लत्वादिविशिष्टवैशिष्ट्यज्ञानं द्रव्य इति नानुपपत्तिः। अन्त्ये त्वननुभवः शुक्लत्वादिधीविलक्षणशुद्धरूपादिबोधाऽननुभवात्।

अथ जागराद्यविशिष्टानुभवे संस्कारद्वारा न पूर्वविशिष्टानुभवः, तज्जन्यविशेषणस्मरणं वा कारणं भवति, उद्बोधकं विना संस्कारस्य स्मरणे विशिष्टज्ञाने वा सामर्थ्याभावादित्युद्बोधकं वक्तव्यम्। उद्बोधकं चान्यत्र ज्ञानं दृष्टमिति तदेव वाच्यम्। न च तद्विशिष्टज्ञानमेव तत्रापि विशेषणज्ञानापेक्षायामनवस्थानादित्यालोचनासिद्धिः तत्र जागरकारणानन्तरं संस्कारोद्बोधोस्तीति तस्यैव क्लृप्तत्वेन तत्कारणत्वात्। अत एव न संस्कारोद्बोधे नियतो हेतुरित्यभिसन्धाय सदृशाऽदृष्टचिन्ताद्याः स्मृतिबीजस्य बोधका इत्याहुः।

अत्राऽस्मत्पितृचरणाः—प्राथमिकं गौरिति प्रत्यक्षं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वात् अनुमितिवत् तज्जन्मनि तेन गोत्वस्याऽननुभवान्न तत्र स्मरणसम्भवः। न चाद्यप्रवृत्तिवत् प्राग्भवात्संस्काराद्गोत्वस्मरणं तत्र जीवनादृष्टेन संस्कारस्योद्बोधनादिबोधनादिह तु

न्यायलीलावतीप्रकाशविवृतिः

इति भावः। स्मृत्यैवोपपत्तेरिति। स्मृतिश्च क्वचिदैहिकात् क्वचिज्जन्मान्तरीयात् संस्कारादिति भावः। अतः परमन्यत्रैव व्याख्यातमि-

दानुमानात् व्यक्तिरियं घटशब्दवाच्या घटजातीयत्वात् पूर्वघटवत्, जातिर्घटशब्दवाच्या तेन सह गृहीतसङ्गतित्वादिति वाच्यम्, एकस्य च तरुशिखरिभूरुहादिनानाकारतादात्म्यप्रतीतिविरोधात्। (इति) निर्विकल्पकम्॥

सविकल्पकं योजितनिर्भासि तच्चाध्यक्षं(१) साक्षात्कारित्वे-

---

न्यायलीलावतीकण्ठाभरणम्

'तेन' घटशब्देन। गृहीतसङ्गतित्वादिति। प्रसिद्धसङ्गतित्वादित्यर्थः। एकस्यार्थे शब्दवाच्यवदनेकत्वस्य एकशब्दवाच्यत्वमपि शब्दार्थतादात्म्ये विरुद्धमित्याह—एकस्येति।

'योजितनिर्भासि' वैशिष्ट्यविषयकम्। सविकल्पकप्रत्यक्षविप्रतिपन्नं बौद्धं प्रत्याह—तच्चेति। अध्यक्षमपीत्यर्थः। ननु निर्वि-

न्यायलीलावतीप्रकाशः

तादृशस्य संस्कारोद्बोधकस्याभावात्। अथ निर्विकल्पककारणत्वाभिमतगोत्वेन्द्रियसन्निकर्ष एव तथा, तर्ह्यन्यत्र क्लृप्तकारणभावाद्गोत्वेन्द्रियसन्निकर्षाद्गोत्वानुभव एव स्यात् स्मरणसामग्रीतोऽनुभवसामग्र्या बलवत्त्वात्। न च तत्सविकल्पकं पूर्वं विशेषणज्ञानाभावादित्यर्थान्निर्विकल्पकम्। अत एव तत्र ज्ञानत्वेन न विशिष्टज्ञानत्वानुमानं कारणबाधेन बाधात्। ननु विशिष्टज्ञानत्वादित्यत्र विशिष्टेति विशेषणं व्यर्थं व्यावर्त्यस्याविशिष्टज्ञानस्यासिद्धेः। सिद्धौ वानुमानवैयर्थ्यात् ज्ञानत्वं च स्वतोऽसिद्धव्याप्तिकमिति चेत्, न, येन विशेषणेन विना व्याप्तिर्न गृह्यते तस्यैव सार्थकत्वात् व्यभिचारवारकविशेषणसार्थकत्वेऽपि तस्यैव मूलत्वात्। इहापि ज्ञानत्वविशेषणज्ञानजन्यत्वयोर्विशेषणं विना व्याप्त्यग्रहादनवस्थानात्। अत एव चक्षुस्तैजसं गन्धादिषु रूपस्यैव व्यञ्जकत्वादित्याद्यसिद्धिवारकमपि विशेषणं सार्थकं तेन विना साधनाप्रसिद्धेर्व्याप्त्यग्रहादिति।

योजितनिर्भासीति। 'योजितो' जात्यादिविशिष्टो निर्भासी भासमानो

न्यायलीलावतीप्रकाशविवृतिः

ति। वस्तुतो यो विशिष्टः स एव निर्विकल्पके भासत इत्यत आह—

---

(१) ०भासितत्वाध्य० । ०भासितस्याध्य० ।

नानुभवात् । न चैतदौपाधिकम् । अनुभवस्य तदानीमतीतत्वात् । न चैतत्तद्भेदाग्रहनिबन्धनम् । अनागतोपाधिभेदाग्रहादनुभवेऽपि वैपरीत्यापत्तेः । अत्राभिलापसम्भेदो(१) बाधकमि(इ?)ति चेत्, न, तत्रापि तद्विरहस्य तुल्यत्वात् । तत्सन्दिग्धव्यतिरेकमिति चेत्तुल्यम् । तादृशं यदि नेन्द्रियजं तदेन्द्रियजमेव न स्यात् । तस्य चार्थाधिपत्यानियमात्तज्जन्यम् । तच्च सिद्धमित्यध्यक्षं सवि-

---

न्यायलीलावतीकण्ठाभरणम्

कल्पकमेवार्थसमुत्थमतस्तदेव साक्षात्कारि तस्य साक्षात्कारित्वं यत्तत्समनन्तरप्रत्यये सविकल्पके भासते जवाकुसुमलौहित्यमिव स्फटिक इत्यत आह—न चेति । 'अनुभवस्य' निर्विकल्पकस्य । 'तदानीं' सविकल्पकोत्पत्तिकाले । ननु निर्विकल्पके भेदाग्रहात् सविकल्पके साक्षात्त्वव्यवहारः स्यादित्यत आह—न चेति । तर्हि निर्विकल्पक एव यत् साक्षात्त्वं तत् सविकल्पकौपाधिकमस्तु विनिगमनाविरहादित्याह—अनागतेति । सविकल्पकं यदि साक्षात्कारि स्यादभिलापसंसर्गयोग्यप्रतिभासि न स्यादनुमानादिवदिति शङ्कते—अत्रेति । निर्विकल्पकं यदि प्रत्यक्षं स्यादभिलापसंसर्गरहितं न स्यादिति

न्यायलीलावतीप्रकाशः

यत्र तत्तथा वैशिष्ट्यविषयकं ज्ञानमित्यर्थः । ननु तत्र प्रत्यक्षमनादिवासनादिसमुच्छ्रिततयाऽर्थेन्द्रियाजन्यत्वादित्यत आह—तच्चेति । साक्षात्कारित्वेनानुभवात् वैपरीत्यस्यापि सुवचत्वादित्याह—न चेति । ननु तत्र बाधकात्तथा तत्र शब्दयोजनानिर्भासाच्छब्दस्य च व्यक्तौ सङ्केतग्रहाभावाज्जातौ सङ्केतात्तस्याश्चालीकत्वेन तद्विषयतयौपाधिकत्वादित्याह—अत्रेति । जात्यादेः पारमार्थिकत्वान्नैवमन्यथा निर्विकल्पकं नाध्यक्षं शब्दसंसर्गरहितत्वादित्यपि स्यादित्याह—

न्यायलीलावतीप्रकाशविवृतिः

वैशिष्ट्यविषयकमिति । अत एव तस्येन्द्रियार्थजन्यत्वमिति । साक्षात्कारित्वादेव तदुभयजन्यत्वमत एव च सामान्यादिकं परमार्थसदिति

(१) ०पसंसर्गो बा० ।

कल्पकम् । तत्रापि प्रत्यभिज्ञानमेकं तत्तेदन्तावभासि । न चात्र तत्तेदन्ते पारोक्ष्यापारोक्ष्ये येन विरोधिधर्मसंसर्गाद्भेदः स्यात् । परोक्षार्थत्वेऽपि(१) सोऽग्निमानयमग्निमानिति स्फुरणात् । नापि

न्यायलीलावतीकण्ठाभरणम्

तौल्यमित्याह—तत्रेति । अभिलापसंसर्गरहितमपि प्रत्यक्षं स्यादित्याह—तदिति । सन्दिग्धव्यतिरेकित्वं विपक्षबाधकतर्कशून्यत्वं सन्दिग्धानैकान्तिकत्वं वा । तुल्यमिति । अभिलापसंसर्गप्रतिभानमपि प्रत्यक्षं स्यादित्यत्रापि सन्दिग्धव्यतिरेकित्वमित्यर्थः । तादृशमिति । प्रत्यक्षमित्यर्थः । तदेति । निर्विकल्पकमपि नेन्द्रियजं स्यादित्यर्थः । तस्य चेति । इन्द्रियस्येत्यर्थः । 'अर्थाधिपत्यम्' अर्थसहकारित्वम् । 'तज्जन्यम्' अर्थजन्यम् । 'तच्च' तदपि । यथा निर्विकल्पकमर्थसामर्थ्यसमुत्थं तस्मात् साक्षात्कारि सविकल्पकमपीत्यर्थः ।

'तत्रापि' सविकल्पकमध्येऽपि । 'तत्तेदन्तावभासि' तत्तेदन्ताविशिविषयम् । ननु तत्तांशे पारोक्ष्यमिदन्तांशे चापारोक्ष्यमतो विरुद्धधर्मसंसर्गात् प्रत्यभिज्ञानं नैकमित्यत आह—न चेति । यदि पारोक्ष्यार्थविषयत्वं पारोक्ष्यं सा च तत्ता स्यात् तदा कदाचित् सोऽग्निमान् कदाचिदयमग्निमानित्यनुमितावाकारभेदो न स्यादित्याह—परोक्षार्थत्वेऽपीति ।

न्यायलीलावतीप्रकाशः

तत्रापीति । तादृशमिति । अबाधितं सत् साक्षात्कारित्वेनानुभूयमानमित्यर्थः। तस्य चेति । इन्द्रियजन्यस्य चार्थाधिपत्यनियमादर्थान्वयव्यतिरेकनियमात् । 'तज्जन्यम्' अर्थजन्यं यतोऽतस्तत् सविकल्पकमध्यक्षमिति योजना ।

तत्रापीति । तेष्वपि साक्षात्कारिसविकल्पकेषु मध्य इत्यर्थः । ननु प्रत्यभिज्ञाने तत्तेदन्ताविशिष्टयोरभेदः प्रथते ते च पारोक्ष्यापारोक्ष्यरूपे तत्सम्बन्धात् प्रत्यभिज्ञानमेकं न स्याद्विरुद्धधर्माध्यासादित्यत आह—न चेति । परोक्षत्वेऽपीति । यदीदन्ताविषयत्वमेवाऽपारोक्ष्यं तदाऽय

न्यायलीलावतीप्रकाशविवृतिः

भावः । सन्दिग्धव्यतिरेकित्वमिति मूलम् । अप्रयोजकत्वमित्यर्थः । तत्सम्बन्धाद्विषयत्वलक्षणादित्यर्थः । यदीति । विषयतापारोक्ष्ये दण्डावि-

(१) परोक्षापरोक्षार्थत्वेऽपि । परोक्षत्वेऽपीति प्रकाशधृतः पाठः।

विषयभेदः। एकस्यैवानुमानस्य [परनये] परोक्षापरोक्षविषयकत्वात्। नापि कारणभेदः। तस्यैवानुभवस्य स्मृतिजन्यत्वात्। न च विरुद्धधर्मसंसर्गवतोऽपि भेद इति॥

समासमध्यक्षम्।

---

न्यायलीलावतीकण्ठाभरणम्

परोक्षत्वापरोक्षत्वे तु जाती तत्र प्रत्यभिज्ञानस्यापरोक्षमात्रत्वार्थं विरुद्धधर्माध्यास इति भावः। नापि विषयभेद इति। पारोक्ष्यापारोक्ष्यलक्षणो विषयभेदोऽपि न प्रत्यभिज्ञाभेदप्रयोजक इत्यर्थः। एकस्या एवानुमितेः स्वप्रकाशलये पारोक्ष्यापारोक्ष्यदर्शनादित्याह—एकस्येति। ननु संस्कारेन्द्रियाभ्यां जनितत्वात् प्रत्यभिज्ञा भिद्यत इत्यत आह—नापीति। संस्कारजन्यत्वमत्रासिद्धं स्मृतेरेव तत्र जनकत्वात् न कारणभेदो भेदकः किन्तु सामग्रीभेदः, स चात्र नास्तीति भावः। एवकारो भिन्नक्रमः। स्मृतिजन्यत्वादेवेत्यर्थः। तथा च स्मृत्यनुभवरूपं न ज्ञानद्वयं न वा नरसिंहाकारमेकं किन्त्वनुभवरूपमेकं ज्ञानं प्रत्यभिज्ञानमित्याह—न चेति।

न्यायलीलावतीप्रकाशः

मग्निमानिति परोक्षायामनुमिताविदन्ता न भासेतेति जातिभेदौ ते वाच्ये तयोश्च प्रत्यभिज्ञानेन वृत्तिरित्यर्थः। ननु पारोक्ष्यापारोक्ष्यरूपो विषयभेदः प्रत्यभिज्ञानभेदकः स्यादित्यत आह—नापीति ज्ञानभेदप्रयोजक इति शेषः। एकस्येति। ज्ञानस्वप्रकाशवादिभिरेकस्यैवानुमित्यादेः स्वात्मनि प्रत्यक्षत्वे विषये चाप्रत्यक्षत्वेऽपि भेदाऽनङ्गीकारादित्यर्थः। ननु संस्कारेन्द्रिययोः पृथगेव ज्ञानजनकत्वात् कथं ताभ्यामेकं ज्ञानं जन्यमित्यत आह—नापीति। तस्यैवेति। प्रत्यभिज्ञानं न संस्कारजन्यं स्मृतित्वापत्तेः स्मृतित्वे संस्कारजन्यत्वस्यैव तन्त्रत्वात् किन्तु तत्ता स्मृतिसहकृतसामग्रीजन्यम्। तथा च न कारणभेदमात्रात्कार्यभेदः किन्तु सामग्रीभेदात्स चासिद्ध इत्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

षयत्वमेव यदि ज्ञाने आरोपापेक्षं तदेत्यर्थः। 'पारोक्ष्यापरोक्ष्यरूपः' प्रत्यक्षाप्रत्यक्षरूप इत्यर्थः। ननु तथापि तत्तास्मृतेस्तत्ताज्ञानमात्रजनकत्वात् कारणभेदोऽस्त्येवेत्यत आह—तथा चेति। स्मृतेरिन्द्रिय-

अथाऽनुमानमुच्यते। तदसिद्धमध्यक्षस्यैवानुमानत्वात्। तथा हि तत्प्रतिबन्धसिद्धिसापेक्षम्। स च न सामान्ययोः, यत्र धूमत्वं यद्(१) धूमत्वमिति वा नियमायोगात्। व्यक्त्यन्तर्भावेन नियतत्वे कतिपयान्तर्भावेन सर्वोपसंहारवती व्याप्तिः।

---

न्यायलीलावतीकण्ठाभरणम्

तदसिद्धमिति। अध्यक्षाद् भिन्नत्वेनानुमानासिद्धमित्यर्थः। न च सिद्ध्यसिद्धिव्याघातः, अनुमानस्य सिद्धत्वात् अध्यक्षभेदेन विवादात् अध्यक्षादनुमानस्य भेदे सामग्रीभेदो न तन्त्रं तस्यैवासिद्धेरित्याह—तथा हीति। सामान्ययोरिति। धूमत्ववह्नित्वयोरित्यर्थः। यत्र धूमत्वं तत्र वह्नित्वं यद्धूमत्वं तद्वह्नित्वमिति वैयधिकरण्यभेदाभ्यां न सम्भवतीत्याह—यत्रेति। सामान्यद्वयावच्छिन्नव्यक्तीनां प्रतिबन्धमाक्षिपति—व्यक्तीति। सन्निहितव्यक्तिमात्रगतव्याप्तिग्रहे सर्वोपसंहारेण व्याप्तिग्रह इति सिद्धान्तव्याकोपः पक्षधर्मे व्याप्यग्रहश्चे-

न्यायलीलावतीप्रकाशः

तदसिद्धमिति। इन्द्रियभिन्ने प्रमित्यसाधारणकारणत्वं नास्तीत्यर्थः। अतो न सिद्ध्यसिद्धिव्याघातः। 'सामान्ययोः' धूमत्ववह्नित्वयोरित्यर्थः। यत्रेति। तत्राग्नित्वं तदग्नित्वमिति यथायोग्यं पूरणीयं धूमत्वस्य धूमाधिकरणत्वात् वह्नित्वस्य वह्न्यधिकरणत्वान्नैतादृशो नियम इत्यर्थः। ननु जात्योर्न नियमः किन्तु तदालिङ्गितव्यक्त्योरिति नोक्तदोष इत्यत आह—व्यक्त्यन्तर्भाव इति। तथा च यदि सन्निहितवर्त्तमानव्यक्त्योरेव व्याप्तिग्रहस्तदा पक्षधर्मधूमस्य व्याप्तिर्न गृहीतेति न ततोऽनुमितिरि-

न्यायलीलावतीप्रकाशविवृतिः

सहकारितयैव जनकत्वान्न सामग्रीभेदः इत्यर्थः। तदुक्तं मूले तस्यैवेति। न त्वन्यस्यस्य तेन सामग्रीभेद स्यादिति भावः। प्रमित्यसाधारणेति। न च भूयोऽवयवेन्द्रियसन्निकर्षादौ तत्सत्त्वाद् बाधः, असाधारणकारणपदेन करणत्वस्याभिधानात्। न च शरीरादिसाधारणकारणमादाय विरोधः, इन्द्रियपदेन प्रत्यक्षकरणाभिधानात्। यत्तु इन्द्रियपदं यथाश्रुतमेवासाधारणकरणत्वं च निषेध्यमतो न शरीरादिकमादाय बाध इति तदयुक्तम्। गोलकादिकमादाय बाधतादवस्थ्यात्। तत्राग्नित्वं

---

(१) यद्य धू०।

समग्रान्तर्भावस्य(१) तु देशकालव्यवधेर्भूयोदर्शनानां तत्राभावे

न्यायलीलावतीकण्ठाभरणम्

त्यर्थः। सामग्र्यभावात् सर्वोपसंहारेण व्याप्तिग्रहो न सम्भवती-त्याह—समग्रेति।'अत एव' सामग्र्यभावादेव।'न चोभयोः' न जाति-

न्यायलीलावतीप्रकाशः

त्यनुपपत्त्या सर्वतज्जातीययोर्व्याप्तिग्रह इति सिद्धान्तव्याघात इत्यर्थः। सर्वतज्जातीयव्याप्तिग्रहश्च न सम्भवति तद्धेतोरभावादित्याह—समग्रे-

न्यायलीलावतीप्रकाशविवृतिः

तदग्नित्वमिति पूर्वदले वह्नित्वस्य वह्न्यधिकरणत्वादित्युत्तरदले पाठः क्काचित्कः स सुगम एव। क्कचित्तु तत्राग्नित्वं तत्राग्निरिति वह्नेश्च पर्वताधिकरणत्वादिति पूर्वापरदलयोः पाठस्तत्र च मूलस्थं न सामान्ययोरित्युपलक्षणम्। सामान्यव्यक्त्योरित्यपि द्रष्टव्यम्। एवं यत्र धूमत्वं यद् धूमत्वमित्युपलक्षणं यत्र धूमो यो धूम इत्यपि द्रष्टव्यम्। एवञ्च प्रकाशेऽपि तत्राग्नित्वं तत्राग्नित्वं तत्राग्निरित्युपलक्षणं तदग्नित्वमित्यपि बोध्यम्। एवं यत्र धूमत्वं तत्राग्नित्वं यत्र धूमत्वं तत्राग्निः, यद्धूमत्वं तदग्नित्वं, यत्र धूमस्तत्राग्नित्वं, यो धूमस्तदग्नित्वमिति पञ्च नियमप्रकाराः शङ्काविषयाः। अत एव यथायोग्यमिति युज्यते। पूर्वपाठे यथासंख्यमेवान्वये तदुपादानव्यर्थतापत्तेः। अत्र तु पाठे यथासम्भवं व्याप्यव्यापकदलयोः पूरणीयमित्यर्थः। अत्र च द्वितीयनियमनिरासः साक्षात्, अन्यनिरासश्च उपलक्षितहेतुभिः। तथा हि धूमत्ववह्नित्वयोर्वैयधिकरण्यप्रदर्शनेन प्रथमतृतीययोर्धूमाग्नित्वयोर्वैयधिकरण्यप्रदर्शनेन चतुर्थपञ्चमयोर्निरास इति भावः।

ननु न साक्षात्सामानाधिकरण्यं जात्योर्नियमं ब्रूमः, किन्तु व्यक्त्योरेव सामानाधिकरण्यं परम्परासम्बद्धमित्याशयं मूलस्याह—ननु जात्योर्न नियम इति। जात्योरित्यनन्तरं सामानाधिकरण्यमिति शेषः। एवं व्यक्त्योरित्यनन्तरमपि। एवं व्याख्याने चा 'त एव न व्यक्तीना'मिति मूले पौनरुक्त्यं प्रकाशकृतस्तदपरीहाराकौशलं च न भवति।

केचित्तु समभेदासांख्यन(?)व्यक्तिनियमपक्षस्तत्राशङ्क्य निराकृत इति न पौनरुक्त्यं पूर्वफक्किका तु यथाश्रुतार्थकैवेत्याहुः।

(१) समान्तर्भा०।

अशक्यत्वात् । अत एव न व्यक्तीनां न चोभयोरिति । तस्मादनाकलितव्यभिचारदहनसहचरितधूमादिसंवेदनवशेन कृशानुमात्रमत्र स्मर्यते । तेन च स्मर्यमाणेनासंसर्गाग्रहात् । संसर्गव्यवहारे संवादविसंवादाभ्यामनुमानतदाभासव्यवस्थेत्यस्तु ।

नैवम् । न ह्ययमर्थः प्रत्यक्षगोचरः । तदभावात् । अनुमानप्रामाण्यस्वीकारे तेनैव व्याघाताच्च । नापि सांशयिकः । अनुमानेन साधनदूषणव्यवस्थानुपपत्तेः । एवमेवास्त्विति चेत्, न, अनिश्चि-

---

न्यायलीलावतीकण्ठाभरणम्

व्यक्त्योरित्यर्थः। चार्वाकः स्वमतमुपसंहरति—तस्मादिति । असंसर्गाग्रहस्यापि विशिष्टज्ञानवद्व्यवहारजनकत्वादिति भावः । 'असंसर्गाग्रहः' पर्वतादौ वह्न्यसंसर्गाग्रहः । अयमर्थ इति । तस्मादित्यादिना चार्वाकेण योऽर्थ उपसंहृत इत्यर्थः । तदभावादिति । तत्र प्रत्यक्षाभावादिति भावः।

ननु वह्न्यर्थिप्रवृत्त्यनुमेयः स्यात्तदाह—अनुमानेति । सांशयिक इति । असंसर्गग्रहाधीनोऽयं व्यवहारोऽन्यथा वेति सांशयिक इत्यर्थः। अनुमानं न प्रमाणमिति यत् साधितं यच्चानुमानप्रामाण्यं दूषितं तदप्यनुमानाधीनमित्याह—अनुमानेति । एवमेवेति । साधनदूषणयोरप्यनुमानम-

न्यायलीलावतीप्रकाशः

ति। अत एवेति। व्यक्तीनामानन्त्येन भूयोदर्शनाभावादित्यर्थः । उभयोर्जातिव्यक्त्योरित्यर्थः । नन्वेवं वह्न्यनुमित्यभावे धूमदर्शनात् कथमग्न्यर्थी प्रवर्त्ततेऽत आह -तस्मादिति । असंसर्गाग्रहस्यापि विशिष्टज्ञानसमशीलत्वादित्यर्थः। तथापि कारणाविशेषे कथं कार्ये विचित्रो व्यवहार इत्यत आह—संवादेति । न ह्ययमर्थ इति । तस्मादनाकलितव्यभिचारेत्यादिना प्रतिपादितः । अथाग्न्यर्थिप्रवृत्त्या तत्कारणं तदनुमीयते तत्राह—अनुमानेति । नापीति । ननु किमसंसर्गाग्रहपूर्वकः किं वा अन्यथेत्येवंरूपः एतावताऽप्यनुमानं न प्रमाणं सिद्ध्यत्येवेति भावः । एवमेवेति । अनुमानेन साधनदूषणव्यवस्था नास्तीत्येवास्त्वित्यर्थः । प्र-

न्यायलीलावतीप्रकाशविवृतिः

असंसर्गेति। व्यवहारसंवादावसंवादौ चाविद्यमानविद्यमानासंसर्गा-

तप्रतिबन्धत्वान्नेदमनुमानं तथाभूतं च व्याप्तिनिश्चयहेतोरभा-वादिति स्वयमेवानुमानेन दूषणोपसंहारात्। वादिप्रतिवादिसाध-नयोश्च प्रत्यक्षेण संवादानुपलब्धेः। अनुमानस्य प्रमाणासंवादा-नुपलब्धेः। अनुमानस्य प्रमाणान्तरसंवादं विना प्रमाणव्यवहा-रगोचरत्वानङ्गीकारात्। संसर्गज्ञानस्यैव संसर्गव्यवहारहेतुत्वात्। न च प्रतिबन्धावेदनम्। व्यक्तिमात्रसहितजातिनिर्भासात्। मा-त्रार्थस्यापि पुरस्कृतजातिद्वयातिरिक्तव्यक्तिविशेषतोऽनुपादानरू-

---

न्यायलीलावतीकण्ठाभरणम्

तन्त्रमेवास्त्वित्यर्थः। अत्र व्याघात इत्याह—अनिश्चितेति। तथाभूतञ्चेति। अनिश्चितप्रतिबन्धश्चेत्यर्थः। अनुमानं विना सत् साधनत्वमसत् साधनत्वं च तत्त्वनिर्णयं विजयव्यवस्थापकं चाशक्यग्रहमित्याह—वादीति। किञ्च प्रमाणव्यवहारगोचरत्वमनुमानस्य कस्यचिदभ्युपगतं भज्येतेत्याह—अनुमानस्येति। प्रमाणान्तरसंवादः प्रत्यक्षेण दुर्ग्रह इति भावः। यच्चोक्तमसंसर्गग्रहादेव संसर्गव्यवहार इति तद्विपर्य्ययोपपा-मावसर एव निरस्तमित्याह—संसर्गेति। व्यक्तिमात्रेति। सर्वव्यक्तीत्यर्थः। ननु जात्युपग्रहेण सामर्थ्यं न तु व्यक्तिमात्रस्येति मात्रपदमनर्थकमि-त्याह—मात्रार्थेति। पुरस्कृतजातिद्वयं धूमत्वं वह्नित्वं च तदतिरिक्त-

न्यायलीलावतीप्रकाशः

तिबन्धानिश्चये हेतुमाह—तथाभूतं चेति। अनिश्चितप्रतिबन्धं चेत्यर्थः। वादीति। वादिप्रतिवादिसाधने निर्दोषे अनुमानरूपे प्रमाणव्यवहारः प्रमाणान्तरसंवादेन वाच्यः प्रवृत्तिसंवादादेस्तत्राभावात् प्रत्यक्षं च न तत्र सम्भवतीत्यवश्यमनुमानमभ्युपगमनीयमित्यर्थः। किञ्च यत् त्वया प्रत्यक्षेण प्रतिपन्नं तत्कथं परो बोधयितव्य इति भावः। न चा-संसर्गाग्रहात् संसर्गव्यवहारः प्रागुक्तयुक्तेरित्याह—संसर्गज्ञानस्यैवेति। पुरस्कृतेति। व्याप्यव्यापकभावे पुरस्कृतं यज्जातिद्वयं वह्नित्वधूमत्वरूपं

न्यायलीलावतीप्रकाशविवृतिः

ग्रहनिबन्धनावेति भावः। संवादेन वाच्य इति। त्वया तथैवाभ्युपगमादि-ति भावः। प्रागुक्तयुक्तेरिति। अन्यथाख्यातिप्रस्तावोक्तयुक्तेरित्यर्थः।

पत्वात्। तादृशस्य कतिपयविषयभूयोदर्शनजसंस्कारसचिवबाह्ये-न्द्रियवेद्यत्वात्। तथैव शक्तेरवसायात्। अन्यथोपादानादिव्यव-हारविलयात्। न हि दृष्टमुपादेयमुपात्तत्वात्। नाप्यनागतम्। अन-वगतत्वात्। न च तदेवानुमितम्। अनवगतानियमत्वात्।

---

न्यायलीलावतीकण्ठाभरणम्

पाण्डरत्वादीनामनुमानार्थं तदभिधानमित्यर्थः। व्याप्तिग्रहोपाय-माह—तादृशस्येति। उपस्थितधूमे धूमत्वं वह्नौ च वह्नित्वं संयुक्तसम-वायेन गृह्यमाणं तद्विशेषणतया चातीताऽनागतसकलधूमवह्निव्यक्ति-भासमानेषु संयुक्तसमवेतविशेषणतया व्याप्तिश्चक्षुरादिनैव गृह्यत इत्यर्थः। नन्वियं प्रत्यासत्तिरेव न भवतीत्यत आह—अन्यथेति। उपा-दानं प्रवृत्तिरादिपदान्निवृत्तिः सामान्यलक्षणामन्तरेण अनागत-पाकादिगोचरा प्रवृत्तिरेव न स्यादित्यर्थः। तदेवोपपादयति—न हीति। तदेवेति। अनागतप्रा(पाक?) कालिकमेवेत्यर्थः। ननु पाकः कृतिसाध्यः पाकत्वात् पूर्व्वपाकवदित्यत्र पाकत्वमेवानुमेयं तच्च पूर्वगृहीतमेवे-

न्यायलीलावतीप्रकाशः

तदतिरिक्तं तार्णत्वादिकं धूमाग्निविशेषणत्वेन नोपादीयते, किन्तु तज्जात्याक्रान्तव्यक्तिसामान्ययोर्व्याप्तिर्गृह्यते व्यक्तीनामानन्त्येऽप्यव-च्छेदकैक्यादेकीकारणदिति भावः। तद्ग्रहणोपायमाह—तादृशस्येति। कतिपयधूमाग्निव्यक्तिसन्निकर्षेऽपि भूयोदर्शनजसंस्कारसहकृतेन्द्रिय-संयुक्तव्यक्तिसमवेतजातिविशेषणतया प्रत्यासत्त्या तज्जातीयातीता-नागतव्यक्तीनां व्याप्यव्यापकभावः परिच्छिद्यते, कथमन्यथा पक्षध-र्मधूमाग्रहे तस्मादनुमितिरित्यर्थः। ननु सामान्यलक्षणाऽनभ्युपगमे-ऽपि सन्निकृष्टधूमविषयो धूमत्वेन धूमोऽग्निव्याप्य इति व्याप्त्यनुभवो न तु तत्तद्धूमत्वेन व्याप्त्यनुभवो गौरवात ततस्तथैव व्याप्तिस्मृति-स्ततो धूमवानयमिति व्याप्तिस्मृतिप्रकारेण धूमत्वेन पक्षधर्मधूमस्य ज्ञानादनुमितिर्व्याप्त्यनुभवतत्स्मरणपक्षधर्मताज्ञानानामेकप्रकारत्वेना-नुमितिकारणत्वात् आवश्यकत्वाल्लाघवाच्च। ननु समानविषयत्वेना-पि गौरवादित्यत आह—अन्यथेति। अस्ति पाकादाविष्टसाधनताज्ञाना-च्चिकीर्षा कृतिश्च तयोश्च विषयो नातीतवर्त्तमानः पाकादिः सिद्धत्वेन

न च जातिरनुमेया । तस्या अनुपादेयत्वेनानुमानविरोधात् । न च जातिः कारणसम्बन्धानुपपत्ति(१)र्व्यक्तिमाक्षिपति । हेतौ सत्यन-न्तरभावस्य हेत्वभावेऽभावस्य जातावनुपपलब्धेः । अस्तु जातिम-ती व्यक्ति(२)रिति चेत्, न, उपादेयव्यक्तेरनवगमात् । ततो जा-तिमत्तयाऽशेषव्यक्तिनिर्भासस्तावत् सिद्धः । अन्यथा चेतनमात्र-प्रवृत्तिविलयापत्तेः । अत्र च कतिपयव्यक्तिगोचरसंस्कारसहकृतस्य

---

न्यायलीलावतीकण्ठाभरणम्

त्याह—न च जातिरिति । अनुपादेयत्वेन प्रवृत्त्यर्थमनुमानाविरोधादित्यर्थः । ननु पाकत्वं जातिरेवानुमेया तत्र च कारणस्य कृतेः सम्बन्धोऽनुप-पन्न इति तदाक्षिप्य व्यक्तावेव कृतिसाध्यत्वं पर्यवसतीत्यत आह—न चेति । तर्हि पाकत्वं कृतिसाध्यमित्यनुमानबाधान्न स्यादेव कुतस्त-दनन्तरं व्यक्तेराक्षेप इत्याह—हेतौ सतीति । अस्तु तर्हि जातिमती व्य-क्तिरित्यत्रानुमेयेत्याह—अस्तिति । ननु भवतु सामान्यलक्षणाप्रत्या-सत्तिस्तथा धूमादौ कस्येन्द्रियस्य सामर्थ्यमित्यत आह—अत्र चेति ।

ननु पाकत्वादिप्रकारकेण ज्ञानेनावगत एव भाविनी पाकादाविच्छा-प्रवृत्ती स्यातां तयोरनागतमात्र एव गोचरस्वाभाव्यात्, अतिप्रसङ्ग-स्तु समानप्रकारकत्वानियमाभ्युपगमान्निरस्यः । एवं यद्धूमावच्छेदेन व्याप्तिग्रहस्तत् प्रकारकपक्षीयलिङ्गज्ञानादेवानुमितिरप्यस्तु किं सा-

न्यायलीलावतीप्रकाशः

तत्रेच्छाविरहात्, अनागतस्य च तस्याज्ञानात् । तस्मात्पाकादित्वेन ज्ञा-तासु पाकादिव्यक्तिषु सिद्धं विहायाऽसिद्धे चिकीर्षाकृती भवत इति सामान्यलक्षणाप्रत्यासत्तिरङ्गीकार्येत्यर्थः । यद्यप्यनागता व्यक्तिर्ज्ञातुं न शक्यते, तथापि प्रत्यक्षसिद्धा जातिरनुमेयेत्यत आह—न च जातिरिति । उपादेयत्वेन यदनुमानं तस्य विरोधात् जातेरनुपादेयत्वादित्यर्थः । दोषसहकारित्वेत्यभ्युपगमवादः, इन्द्रियसम्बद्धविशेषणतायाः प्रत्या-

न्यायलीलावतीप्रकाशविवृतिः

इन्द्रियसम्बद्धेति । इन्द्रियसम्बद्धं ज्ञानं संयुक्तसमवायेन तद्विशेषणीभूतं च रजतत्वमित्यर्थः । इदं च विशिष्टप्रत्यक्षमात्रे विशेषणसन्निकर्षो हेतु-

---

(१) पत्तेर्व्य० । (२) ०ती व्यातिरि० ।

चक्षुष एव सामर्थ्यम् । अनन्यथासिद्धाऽन्वयव्यतिरेकबलात् दोषसहकारिवशादसन्निहितपदार्थप्रतिभास इव विपर्ययप्रतिपत्तिषु जातेश्च कार्यत्वेन साहचर्यैर्विरोधात् ।। [इति] अनुमानम् ।।

---

न्यायलीलावतीकण्ठाभरणम्

मान्यलक्षणया प्रत्यासत्त्या अनागतधूमाद्यज्ञाने व्यभिचारसंशयानुपपत्तिः । व्यभिचारसंशयो हि व्याप्यत्वसंशयः सर्वाभावं प्रत्यक्षीक्रियमाण(?) न हि सामानाधिकरण्यमात्रग्रह एव व्याप्तिश्चय इति चेन्नैवम्, इच्छाप्रयत्नयोर्ज्ञानमेव सम्बन्धो न विषयेण । तथा च ज्ञानविषययोर्निर्विषयत्वापत्तिर्न हि ज्ञानधर्मयोरपि विषयेण स्वरूपमेव प्रत्यासत्तिस्तथा सति तयोरपि ज्ञानत्वापत्तिः । व्याप्यतावच्छेदकसमानप्रकारेण पक्षीयधूमज्ञानेऽप्ययं वह्निव्याप्यो नवेति संशयस्य धूमाद्धेरप्यभेदज्ञानमेव लिङ्गपरामर्शस्तत्र च व्याप्तिग्रहो न सामान्यलक्षणामन्तरेणेति दोषवशादित्यत्राभ्युपगमः । विपर्ययोऽपि संयुक्तविशेषणतायाः प्रत्यासत्तेः सत्त्वात् बाधात् कृतिसाध्यत्वेन जातेरनुमानासम्भवः पूर्वसिद्धानां यत् पाकत्वं तत् कृतिसाध्यमिति व्याप्तेरपि नास्तीत्याह—जातेश्चेति । उपलक्षणं चैतत् इष्टसाधनत्वेनापिजा-

न्यायलीलावतीप्रकाशः

सत्तेरुपपादनात् । जातिनिरासया सर्वव्यक्तिव्याप्तिमुपसंहृत्य जातिर्नास्तीत्युपसंहरति—जातेश्चेति ।

नन्वनागतगोचरेच्छाद्यनुरोधान्न सामान्यलक्षणाप्रत्यासत्तिः, असिद्धस्याज्ञानेऽपि सिद्धगोचरज्ञानादेवेच्छाकृतिस्वाभाव्यादासिद्धे तयोरुपपत्तेः । न चान्यज्ञानादन्यत्र प्रवृत्तावतिप्रसङ्गः, समानप्रकारकत्वेन ज्ञानेच्छाकृतीनां कार्यकारणभावात् । ननु समानविषयत्वेनापि गौरवात् समानविषयत्वे सत्यपि समानप्रकारकज्ञानाभावे चिकीर्षाकृत्योरभावेनावश्यकत्वाच्च ।

अथ वह्निमानित्यनुमितिर्विशेषणज्ञानजन्या विशिष्टज्ञानत्वादिति

न्यायलीलावतीप्रकाशविवृतिः

रिति मतमाश्रित्योक्तम् । उपादाना (उपपादनात्?) प्रमाणकैरिति शेषः । अन्यथा भ्रमस्थले प्रागनुपपादनादसङ्गत्यापत्तेः । जातेश्चेतीति । कार्या

का पुनर्व्याप्तिः । साधनस्य साध्यसाहित्यं कार्त्स्न्येन न

न्यायलीलावतीकण्ठाभरणम्

तेः साहचर्य्यमिति द्रष्टव्यम् । तथा च प्रवर्त्तकज्ञानाविषत्वात् जाते-
रुपादानार्थमनुमेयत्वमनुपपन्नमिति भावः ।

साधनस्येति । कृत्स्नस्यापि साधनस्य साध्यसामानाधिकरण्यमि-

न्यायलीलावतीप्रकाशः

पर्वतीयवह्निज्ञानार्थं तत्कल्पने धूमेऽपि तथा कल्पनात् क्वचिद्धूमस्या-
पि व्यापकत्वादिति चेत्, न, विशिष्टवैशिष्ट्यज्ञाने विशेषणतावच्छे-
दकप्रकारकज्ञानस्यावश्यकतया कारणत्वात् तस्य च सत्वात् न तु
विशेषणज्ञानस्यापि गौरवात गौरवमिति । विशिष्टज्ञानेऽपि युगपद्वि-
शेषणविशेष्यसन्निकर्ष एव कारणं न तु निर्विकल्पकं मानाभावात् । न
च विशिष्टज्ञानत्वमेव मानं दृष्टान्ताभावात् दण्डी पुरुष इत्यत्र विशेष-
णज्ञानजन्यत्वाभावात् विशिष्टवैशिष्ट्यज्ञानत्वात् । तस्माद्यदि सामा-
न्यलक्षणा नास्ति तदाऽनुकूलतर्कादिकं विना धूमादौ व्यभिचारसंश-
यो न स्यात्, प्रसिद्धधूमे वह्निसम्बन्धनिश्चयात् देशान्तरकालान्तर-
धूमस्य च मानाभावेनाज्ञानात् सामान्येन तु सकलधूमोपस्थितौ
धूमान्तरे विशेषादर्शनेन संशयस्य युक्तत्वादित्यस्मत्पितृचरणाः ।

साधनस्येति । नन्वेकव्यक्तिकव्याप्तौ न कार्त्स्न्यार्थः अनेकव्य-
क्तिकेऽपि सकलधूमसम्बन्धस्य प्रत्येकं वह्नावभावः । अत एव न

न्यायलीलावतीप्रकाशविवृतिः

र्थेन यत् साहचर्यं तद्विरोधादिति मूलार्थः । सामान्येन त्विति । न
चानुमानादेव तदुपस्थितिस्तदनवतारेऽपि संशयोत्पत्तेः । न च
धर्मिज्ञानं परमते संशयकारणमेव नेति वाच्यम्, तथापि धर्मीन्द्रि-
यसन्निकर्षतया तत्सिद्धेः । न च धूमत्वेन विशेषदर्शनग्रस्तव्यक्तावेव
संशयः । इदं धूमत्वस्य धूमत्वघटितत्वेन धूमत्वेनापि निर्भ(र्ण?)यात् ।
न च यच्चन्दनखण्डप्रभवाश्चत्वार एव धूमास्तेषु तत्तच्चन्दनख-
ण्डप्रभा(भ?)वतद्धूमत्वेन व्याप्तिनिश्चयस्तत्र कथमुत्तरकालं संशय
इति वाच्यम्, एतच्चन्दनखण्डप्रभवधूमत्वं वह्निव्यभिचारिवृत्ति न
वेति संशयेन तत्र संशयाधानात् । न च तत्रापि(१) धूमत्वं वह्निव्य-

(१) तत्र धू० ।

न्यायलीलावतीप्रकाशः

कृत्स्नेन साध्येन साधनस्य सम्बन्धो व्याप्तिः, विषमव्याप्ते तदसम्भवाच्च। न च यावत्साधनाश्रयाश्रितसाध्यसम्बन्धः कार्त्स्न्यार्थः, साधनाश्रये महानसादौ सकले प्रत्येकवह्नेरभावात्। नापि साधनसमानाधिकरणयावद्धर्मसमानाधिकरणसाध्यसामानाधिकरण्यं तदर्थः, यावद्धर्मसामानाधिकरण्यं हि यावद्धर्माधिकरणाधिकरणत्वं तच्चाप्रसिद्धं साधनसमानाधिकरणसकलमहानसत्वाद्याधिकरणप्रतीतेः।

अथ सम्बन्धमात्रं व्याप्तिः, व्यभिचारिसम्बन्धस्यापि केनचित्सम् व्याप्तित्वात्। धूमादिव्याप्तिविशिष्टैव निर्वक्तव्येति तत्र लिङ्गपरामर्शविषयव्याप्तिस्वरूपनिरूपणप्रस्तावेऽस्यार्थान्तरत्वात् सम्बन्धमात्रज्ञानादनुमित्यनुत्पत्तेः।

अथ केवलान्वयिनि केवलान्वयिसम्बन्धो व्यतिरेकिणि च साध्यवदन्यावृत्तित्वं व्याप्तिः। न चाननुगमः, एतयोरनुमितिविशेषजनकत्वात्, अनुमितिमात्रे पक्षधर्मतायाः प्रयोजकत्वात्। न चातिप्रसङ्गः, विशेषसामग्रीसहितया एव सामान्यसामग्र्या जनकत्वात्। मैवम्। साध्यवदन्यावृत्तित्वस्य धूमेऽप्यसत्त्वात् वह्निमत्पर्वतादन्यत्र धूमस्य वृत्तेः। न च सकलसाध्यवदन्यावृत्तित्वं वह्निमतां प्रत्येकमपि सकलसाध्यवदन्यत्वेन धूमस्याप्यतत्त्वात्। नापि

न्यायलीलावतीप्रकाशविवृतिः

भिचारि न वेति संशयेन संशयाधानमुक्तसंशयस्यैव विना सामान्यलक्षणमनुपपत्तेः। प्रसिद्धवह्निव्यभिचारिवृत्तित्वे बाधनिश्चयादप्रसिद्धस्य तस्याज्ञानादिति दिक्।

इदं च मूलदूषणमुभयासिद्धेन प्रकारेण सामान्यलक्षणासिद्धिरस्त्वित्यभिप्रायेण। अस्मन्मतरीत्या तु मूलमेव सम्यक्। तथा हि समानप्रकारत्वेन ज्ञानस्येच्छाकृतिजनकत्वे घटे पटत्वेनेच्छाकृत्यापत्तिः। न च जनकीभूतज्ञानप्रकाराश्रयविषयत्वमिच्छायाः कृतेश्च स्वभावोऽसिद्धाविषयत्ववदिति वाच्यम्, रजतभ्रमाच्छुक्ताविच्छाकृत्यनापत्तेः। न च तत्र रजतज्ञाने स हेतुरेवेति वाच्यम्, इष्टज्ञानस्य सामान्यत एव हेतुत्वावधारणादिति। एवं चानुमितेर्विशेषणज्ञानजन्यत्वेनापि सामान्यलक्षणासिद्धिः।

अन्योन्यात्यन्ताभावभेदेन लक्षणद्वयमाशङ्कते—नापि साध्यासामाना-

पुनरनुपाधित्वं, अनैकान्तिके सोपाधित्वोद्भावनापत्तिः(१) ।

न्यायलीलावतीकण्ठाभरणम्

त्यर्थः । टीकाकृदभिमतं व्याप्तिस्वरूपं निरस्यति—न पुनरिति । अनैकान्तिक

न्यायलीलावतीप्रकाशः

साध्यासामानाधिकरण्यानाधिकरणत्वं साध्यवैयधिकरण्यानधिकरणत्वं वा केवलान्वयिन्यव्याप्तेः । अन्ततो धूमेऽप्यसत्त्वात् । नापि स्वसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं द्रव्यत्वादेः संयोगाद्यव्याप्यवृत्त्यव्याप्यतापत्तेः । उच्यते—यत्सम्बन्धितावच्छेदकरूपवत्त्वं यस्य तस्य सा व्याप्तिः । तथा हि धूमस्य वह्निसम्बन्धित्वे धूमत्वमवच्छेदकं धूममात्रस्य वह्निसम्बन्धित्वात् । वह्नेस्तु धूमसम्बन्धेन वह्नित्वमवच्छेदकं धूमासम्बन्धिनि गतत्वात् । किन्त्वार्द्रेन्धनप्रभववह्नित्वं तादृशं च व्याप्यमेव । यद्वा यत्समानाधिकरणान्योन्याभावप्रतियोगि यद्रूपं भवति तेन समं सामानाधिकरण्यम् । वह्निमन्महानसस्य धूमवत्पर्वतान्योन्याभावप्रतियोगित्वेऽपि न व्यधिकरणवह्निधूमयोर्व्याप्तिः, किन्तु तत्तद्धूमसमानाधिकरणतत्तद्वह्निना । न चैवं धूममात्रस्य न वह्निव्याप्यत्वं, सर्वधूमव्यक्तेस्तथात्वेन धूममात्रस्य व्याप्यत्वात् । धूमसम्बद्धश्च वह्निस्तद्व्याप्य एव । अनौपाधिकः सम्बन्धो व्याप्तिरित्यन्येषां मतमारुरुक्षुदाह—न पुनरिति । अनैकान्तिक इति ।

न्यायलीलावतीप्रकाशविवृतिः

धिकरण्येति । यत्सम्बन्धितेति । अत्र सम्बन्धिता सामानाधिकरण्यम्, अवच्छेदकत्वं स्वरूपसम्बन्धविशेषः । तन्नियामकं च सामानाधिकरण्यात्यन्ताभाववदवृत्तित्वम्, न तु सामानाधिकरण्याभिन्नावृत्तित्वम्, द्रव्यत्वे गोत्वव्याप्यतापत्तेः । न चैवं वृक्षत्वे संयोगव्याप्यता न स्यादिति वाच्यम्, हेत्वधिकरणीभूतव्यक्त्यवच्छिन्नसामानाधिकरण्यात्यन्ताभाववदवृत्तित्वस्य तत्त्वात् । न चायमभिधेयवान् प्रमेयादित्यत्राव्याप्तिः । तत्रापि वृत्तिमत्प्रमेयत्वस्य तादृशत्वात् । हेतुतावच्छेदकं तु तत्रापि प्रमेयत्वमेव, व्यभिचार्यवृत्तित्वे सति लघुशरीरत्वात् । एवं नीलधूमादावपि नीलधूमत्वादिकमपि व्याप्तिप्रविष्टमेवावच्छेदकं हेतुतावच्छेदकं तु धूमवत्त्वमेवेति दिक् ।

यद्वेति । न चैवं पृथिवीत्वे गन्धव्याप्यत्वं न स्यादिति वाच्यम्,

(१) ०नापत्तेः ।

न्यायलीलावतीकण्ठाभरणम्

इति । अनैकान्तिकत्वं हि व्याप्तिविरहोन्नायकतया यदि दूषणं तदा तत्र सोपाधिकत्वं, यदुव्याप्तिविरहः प्रथमं स एवोद्भाव्यते तर्ह्यनुमेयमनुद्भाव्योन्नायकोद्भावनावसरः, अप्राप्तकालत्वापत्तेः । व्याप्तिविरहरूपतया चेद् दूषकत्वं यदा कार्त्स्न्येन सम्बन्धो व्याप्तिरित्यायातं सा-

न्यायलीलावतीप्रकाशः

अयमर्थः—अनैकान्तिकस्य दूषकत्वं व्याप्तिविरहतया तदुन्नायकतया वा सत्प्रतिपक्षवत् व्याप्तिविघटनमकुर्वतः स्वातन्त्र्येण वा । नाद्यः, उपाधिविरहरूपव्याप्तेरभाव उपाधिरेवेत्यनैकान्तिके उपाध्युद्भावनापत्तेः । न द्वितीयः, व्याप्तिविरहस्योपाधिरूपत्वेनानैकान्तिकेन तदुन्नयने उपाध्युद्भावनापत्तेः। यदुन्नयनद्वारा हि यस्य दूषकत्वं तेन तदवश्यं दुष्टचर्थमुन्नयनीयम्। अन्यथा तदुन्नयनं विनैव तस्य दूषकत्वे तदुन्नायकत्वेन यद्दूषकत्वमुक्तं तद् भज्येत । न तृतीयः, एवं तत्स्याद्यदि व्याप्तिपक्षधर्मताज्ञाने सत्यनैकान्तिकत्वान्वयप्रयुक्तोऽनुमितिव्यतिरेकः स्यात्।न त्वेवमनैकान्तिकत्वे व्याप्तिविरहस्यैवानुभाविकत्वात् । तस्मादनैकान्तिके आनुभविको व्याप्तिविरहस्तदैव परमुपपद्यते यदि तस्य व्याप्तिविरहरूपत्वं तदुन्नायकत्वं वा स्यात्तत्र च बाधकमुक्तमेवेति । वयं सम्प्रदायविदस्तु यथा बाधसत्प्रतिपक्षौ पक्षधर्मताज्ञानप्रतिबन्धकत्वेनासिद्धिवदनुमितिप्रतिबन्धकत्वेन वा दोषौ तथाऽनैकान्तिकविरुद्धावव्याप्तिसिद्ध्युन्नायकत्वेन दोषौ । तथा च व्याप्तेरनौपाधिरूपत्वेऽप्यवश्यमनैकान्तिकत्वेनोपाधिरुन्नयनीयः, तर्हि कृत्स्नसम्बन्धत्वेऽपि व्याप्तेरनैकान्तिके तद्व्यतिरेकोद्भावनप्रसङ्ग इति तुल्यम् । मैवम्, अनैकान्ति-

न्यायलीलावतीप्रकाशविवृतिः

उक्तान्योन्याभावप्रतियोगितावच्छेदकं यदवच्छिन्नत्वं न भवति तदवच्छिन्नसामानाधिकरण्यं व्याप्तिरित्यर्थात् । न चैवं सामानाधिकरण्यमेव व्याप्तिरस्त्विति वाच्यम्, द्रव्यत्वे पृथिवीत्वव्याप्यतापत्तेः । यथा बाधेति । व्याप्तिपक्षधर्मता चाविरुद्धता हेत्वाभासत्वायोगादितिमतमाश्रित्येदम् । अत एवानुशयादाह—असिद्धिवदनुमिति प्रतिबन्धकत्वेन वेति । एवञ्चादोषत्वमात्रे दृष्टान्तता । स्वमते सम्प्रदायमते च शङ्कते—तर्हीति । तद्व्यतिरेकेति । कृत्स्नसम्बन्धव्यतिरेकेत्यर्थः । मैवमिति । तथा च मत्पक्षेऽर्थादेव तद्व्यतिरेकलाभात्तदुन्ना-

नापि साध्याभावविरोधः । अन्वयिनि प्रतिबन्धासिद्धिप्राप्तेः ।

न्यायलीलावतीकण्ठाभरणम्

ध्याभाववद्वृत्तित्वस्यानैकान्तिकत्वस्य कार्त्स्न्येन सम्बन्धाभावरू-
पत्वादित्यर्थः । साध्याभावविरोधित्वमपि न व्याप्तिरित्याह—नापीति ।
केवलान्वयिनि साध्याभावाप्रसिद्ध्या य(त?)त्राव्याप्तेरित्यर्थः। प्राप्तेरिति ।

न्यायलीलावतीप्रकाशः

कत्वेन सोपाधित्वं साधयितुं न शक्यते, साधनाभाववद्वृत्तित्वस्यो-
पाधित्वात् । अतोऽत्रानैकान्तिकत्वेऽपि यद्यनौपाधिकत्वं स्यात्तदा को
विरोध इति शङ्कावतरति । अनैकान्तिकत्वेऽपि कृत्स्नसम्बन्धः स्यादि-
ति शङ्का नास्ति व्याघातात् । न हि साध्यकृत्स्नसहचरितं च साध्या
भाववद्वृत्ति चेति सम्भवतीति । नन्वेवमुपाधिरसिद्ध्युपजीव्यत्वेना-
नैकान्तिकवद्धेत्वाभासान्तरं स्यान्न तु व्याप्त्यभावत्वेनासिद्धिः। मैवम्,
तज्ज्ञानस्योपजीव्यत्वेऽपि सिद्धसाधनवत् स्वतो दूषकत्वाभावात् ।
न ह्यन्यस्य साध्यव्याप्यत्वसाधनाव्यापकत्वज्ञानमन्यस्य साध्यव्याप्य
त्वज्ञाने स्वतः प्रतिबन्धकं व्यभिचाराज्ञानस्य तद्धेतुतया तज्ज्ञानस्य
तथात्वात् । नापीति । साध्यात्यन्ताभाववदवृत्तित्वमपि न व्याप्तिः, केव

न्यायलीलावतीप्रकाशविवृतिः

वनम्, त्वत्पक्षे चार्थान्न तल्लाभ इति सोपाधित्वोद्भावनप्रसङ्ग इति
ग्रन्थकार्थः। 'साधयितुं' मन्तुम् । वस्तुतः कारणविरहरूपत्वेनैव व्यभि
चारज्ञानं दूषकमिति मतद्वयमप्ययुक्तम् । अत एवानौपाधिकत्वव्या-
प्तिपक्षे साध्यात्यन्ताभाववद्गामित्वमविरोधीति विरोधिसोपाधित्वो
द्भावनापत्तिः । मत्पक्षे च तस्यैव निरुक्तव्याप्तिविरोधितया न तदा
पत्तिरिति मूलार्थ इति परास्तम् । विषयाविरोधेऽपि कारणाभाव-
तयैव प्रतिबन्धकत्वात् । तस्मादयं मूलार्थः । स्फुटे व्यभिचारे सोपा-
धित्वं नोद्भाव्यत इति सम्प्रदायः । स चानौपाधिकत्वव्याप्तिपक्षे विरु-
ध्येत । व्यभिचारज्ञानस्येव उपाधिज्ञानस्यापि परामर्शाविषयाभावा-
वगाहितया प्रतिबन्धकत्वात् । मत्पक्षे नोपाधिज्ञानं तथा, न वा तद-
भावः कारणमिति नोपाध्युद्भावनमिति न सम्प्रदायविरोध इति
मूलार्थ इति प्रतिभाति । उपाधित्वेन सन्दिग्धत्वादित्यर्थः । अत
एव तदाहितं व्यभिचारसंशयमाह—अतोऽत्रेति । अत एव नायमुपाधिः

किं पुन रस्या लक्षणम्। अनुपाधिकत्वम्। किं पुनरुपाधित्वम्।

---

न्यायलीलावतीकण्ठाभरणम्

प्रसक्तेरित्यर्थः। ननु कार्त्स्न्येन सम्बन्धो व्याप्तिः, कृत्स्ने प्रत्येकं साध्य-सम्बन्धाभावात्। नापि साध्यगतं कार्त्स्न्यं विवक्षितं विषमव्याप्तेरनुपपन्नग्रहात्। नापि स्वाभाविकः सम्बन्धः स्वभावजन्यत्वस्वभावाश्रितत्वयोस्तद्धितार्थत्वेन समवायरूपव्याप्त्यव्याप्तेः। नाप्यनौपाधिकः सम्बन्धः, व्याप्तिनिरूपणमन्तरेण उपाध्यनिरूपणात्। नाप्यविनाभूतः सम्बन्धः, साध्यान्वये साधनान्वयस्य साध्यव्यतिरेके साधनव्यतिरेकस्य वा तदर्थत्वे व्यभिचारिसाधारण्यात्। नाप्यव्यभिचरितः सम्बन्धः, अव्यभिचारस्य साध्याभाववदवृत्तित्वरूपतया केवलान्वयिन्यव्याप्तेः। नापि साधनसमानाधिकरणयावद्धर्म्मनिरूपितवैयधिकरण्यानधिकरणसाध्यसामानाधिकरण्यम्। तद्धि साधनसमानाधिकरणसाध्यकत्वं, तत्र यावद्धर्म्माधिकरणाधिकरणस्य एकस्य प्रसिद्धिदुर्भिक्षम्। मैवम्, साधनसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यस्य साधनवन्निष्ठान्योऽन्याभावाप्रतियोगिसाध्यवत्कत्वस्य साधनसमानाधिकरणधर्म्मनिरूपितवैयधिकरण्यानधिकरणसाध्यसामानाधिकरण्यस्य वा व्याप्तिस्वरूपत्वात्। अत्यन्ताभावस्यान्योऽन्याभावस्य वा सामान्यावच्छिन्नस्य वा विवक्षितत्वेन यत्किञ्चित्साध्यपरिग्रहेणातिव्याप्तिरव्याप्तिर्वा। किं पुनरिति। किं लक्षणं किं ज्ञापकं लक्ष्यतेऽनेनेति व्युत्पत्तेः। अनुपाधित्वमिति यावत्। अव्यभिचारिसाध्यसामानाधिकरण्यं यावत् साध्यव्यापकव्यापकत्वं वा यावत् यत्समानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं वेत्यर्थः। उपाधिज्ञानाधीनमनौपाधिकत्वज्ञानमित्युपाधिं पृच्छति—किं पुनरिति। साध्यकृत्स्नसह-

न्यायलीलावतीप्रकाशः

लान्वयिनि साध्यात्यन्ताभावाप्रसिद्धेरव्याप्तेरित्यर्थः। किं पुनरिति। अस्याः व्याप्तेः किं लक्षणं किं ज्ञापकं लक्ष्यतेऽनेनेतिव्युत्पत्तेः। अनुपाधिकत्वमिति। साध्यसाधनयोरनौपाधिकः सम्बन्ध इत्यर्थः। ननु यत्किञ्चित्साध्यव्यापकसाधनाव्यापकधर्मशून्यत्वं धूमेऽपि नास्ति, प्रकृतसाध्यव्यापकसाधनाव्यापकधर्मश्च सिद्ध्यसिद्धिव्याघातेन न निषेद्धुं श-

साध्यकृत्स्नसहचारिणः साधनैकदेशवृत्तित्वम् । अत एव च न

---

न्यायलीलावतीप्रकाशः

कथः। मैवम्, यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यस्य तदर्थत्वात् । न चैवमावश्यकत्वात्तदेव व्याप्तिः, उक्तदोषात् गौरवाच्च । यथाश्रुतमभिप्रेत्य पृच्छति—किं पुनरिति । उपाधेरज्ञाने तदभावाज्ञाना-दित्यर्थः। उत्तरम्–साध्येति । साध्यव्यापकतयाऽभिमतस्य यो व्यापकः स्यात्तस्य व्याप्यतयाऽभिमतस्याव्यापको यो धर्म इत्यर्थः । न चानौ-पाधिकत्वज्ञानस्य व्याप्तिज्ञानहेतुत्वाद्व्यापकत्वज्ञानेऽन्योन्याश्रयः, तद्व-न्निष्ठात्यन्ताभावाप्रतियोगित्वस्य व्यापकत्वरूपत्वात् । प्रतियोगित्वं न सहानवस्थाननियमलक्षणं गोत्वाश्वत्वयोरतिव्याप्तेः, अन्योन्याभा-वप्रतियोगिनि तदभावाच्च । किन्त्वभावविरहात्मत्वमिति भावः । ननु पक्षधर्मावच्छिन्नसाधनावच्छिन्नसाध्यव्यापकोपाध्योरेतद् व्यापकम् । न च तयोरनुपाधित्वं दूषकताबीजसाम्येन तत्र तयोरुपाधित्वस्वी-कारात् पक्षेतरत्वेऽतिव्याप्तेश्च । यदि पक्षे साध्यं वर्त्तते तदा तस्य (१) पक्षावृत्तित्वेन साध्याव्यापकत्वम् । अथ तत्र तदभावस्तदोपाधित्वमेव तस्य बाधोन्नीतत्वादिति चेत् ,न, पक्षभिन्ने साध्यव्यापकत्वग्रहेणैव त-

न्यायलीलावतीप्रकाशविवृतिः

सोपाधित्वेन निश्चेतुं शक्यते । अनैकान्तिके सोपाधित्वव्या-प्योपाध्यसम्भवादिति परास्तम् । यावत्स्वव्यभिचारीति । स्वं व्य-भिचारि येभ्यः ते स्वव्यभिचारिणः । न च भावत्वोपा-धिके विनाशित्वसाध्यकजन्यत्वहेतावतिव्याप्तिः । तत्रापि भाव-प्रागभावाऽन्यतरत्वमादाय यावदर्थाभावात् । न च तन्मात्रोपा धिकत्वेन ज्ञाते अनौपाधिकत्वव्यवहारापत्तिः । व्यभिचारानुमिति-दशायामिष्टत्वात्तदनुमितौ च साध्यमादायैव यावदर्थाज्ञानादिति दिक् । उक्तदोषादिति । अनैकान्तिके च स्वोपाधित्वोद्भावनापत्तेरिति मूलोक्तदोषादित्यर्थः । अनौपाधिकत्वज्ञानं यद्यपि न व्याप्तिधीमात्रे हेतुः किन्तु लिङ्गविधया क्वचिदेव तथाप्यभ्युपेत्य समाधत्ते । तद्व-न्निष्ठेति । पक्षभिन्न इति । तथा च दूषकताबीजस्यातिव्याप्तिरेवेति

---

(१) पक्षेतरत्वस्येत्यर्थः ।

न्यायलीलावतीप्रकाशः

स्य दूषकत्वात्। अन्यथा पक्षे साध्यसन्देहादनुपाधित्वे तन्मात्रोच्छेदप्रसङ्गात्। विपक्षाव्यावर्त्तकविशेषणशून्यत्वं तत्र विशेषणमतो न पक्षेतरत्वेऽतिव्याप्तिर्न वा बाधोन्नीता व्याप्तिस्तत्र पक्षाभिमतस्यापि विपक्षत्वादिति चेन्न, पक्षेतरत्वस्य साध्यव्यापकतया तद्व्यावृत्त्याऽवश्यं व्याप्येन व्यावर्त्तितव्यमिति हेतोर्व्यभिचारात्। तत्र वाऽवश्यमुपाधिरिति पक्षेतरत्वस्यैव तत्त्वात्। साध्याव्यापकत्वे च तत एव तस्यानुपाधित्वे तद्व्यावर्त्तकविशेषणस्याधिकत्वात्। अत एवानुमानमात्रोच्छेदकतया जातित्वान्न पक्षेतरत्वस्योपाधित्वमित्यपास्तम्, उक्तरीत्या दूषणसमर्थत्वेन जातित्वाभावात्।

अथोपाधिः स्वव्यतिरेकेण साध्याभावं गमयन् सत्प्रतिपक्षतया दूषणं, न व्यभिचारोन्नायकतया व्याप्यत्वासिद्ध्युन्नायकतया वा। तथा हि—अयं धूमवान् अग्निमत्त्वादिति प्रयुक्ते आर्द्रेन्धनवत्त्वोपाधेर्व्यभिचारोन्नायकत्वमित्थं वाच्यं, अग्निमत्त्वं धूमवत्त्वव्यभिचारि तद्व्यापकार्द्रेन्धनव्यभिचारित्वात् प्रमेयत्ववत्। अयं चासिद्धो हेतुः आर्द्रेन्धनवत्त्वस्य धूमवत्त्वव्यापकत्वासिद्धेः। आर्द्रेन्धनवत्त्वं धूमवत्त्वाव्यापकं, तद्व्याप्याग्निमत्त्वाव्यापकत्वात् पटत्ववत्। न च स्वरूपासिद्धो हेतुः, आर्द्रेन्धनवत्त्वस्य साधनव्यापकतयाऽनुपाधित्वापत्तेः। धूमवत्त्वव्याप्यत्वमग्निमत्त्वस्यासिद्धमिति चेत्, तत्किं व्यभिचारदर्शनादुपाधिदर्शनाद्वा। आद्ये उपाध्युपन्यासोऽनर्हः, व्यभिचारे तस्य व्यर्थत्वात्। अन्त्ये उपाधेरसिद्धेः।

न्यायलीलावतीप्रकाशविवृतिः

भावः। विपक्षेति। निर्विशेषणगोत्वादिसङ्ग्रहाय नञ्द्वयगर्भता। एतद्विशेषणान्तर्भावेनापि ज्ञानं दूषणमित्याशयः। एतद्विशेषणान्तर्भावेन ज्ञानं न प्रतिबन्धकं व्यभिचारोन्नयनाद्यप्रयोजकत्वादित्यभिसन्धाय परिहरति—पक्षेतरत्वस्येति। तथा च भवन्मते पक्षेतरेणोपाधिरित्यतिव्याप्तिरुक्ता। मन्मते तु दूषकताबीजसत्त्वेन सोऽपि संग्राह्य एवेति तद्वारकविशेषणप्रक्षेपे अव्याप्तिरित्युभयतः पाशा रज्जुरित्यर्थः। दूषकताबीजाभावान्नाव्याप्तिर्विशेषणदानाच्च नातिव्याप्तिरनन्यगतिकतया च तावद्दूरज्ञानं प्रतिबन्धकमित्यभिप्रायेण शङ्कते—अथेति। असिद्धत्वं विशेष्यासिद्ध्या विशेषणासिद्ध्या वा। आद्ये दूषणमाह—आर्द्रेन्धनवत्त्वस्येति।

न्यायलीलावतीप्रकाशः

अथ सहचारव्यभिचारदर्शनादर्शनाभ्यां यथाग्निमत्त्वं धूमवत्त्वव्याप्यं तथा धूमवत्त्वमपि। तत एव आर्द्रेन्धनवत्त्वस्य व्याप्यं व्यापकं चार्द्रेन्धनवत्त्वं व्यापकनिवृत्त्या व्याप्यनिवृत्तिवत् व्याप्यसद्भावे व्यापकसद्भावोऽपि स्यात्, विशेषाभावात् द्वयमप्यसाधकम्, सिद्धं तर्हि सत्प्रतिपक्षभावेनोपाधेर्दूषकत्वम्। नापि व्याप्यत्वासिद्ध्युन्नायकतया तस्य दूषकत्वम्, सा हि व्याप्यत्वनिश्चयाद् व्याप्तिभङ्गनिर्णयाद्वा। नाद्यः, स हि पक्षे अग्निमत्त्वस्य आर्द्रेन्धनवत्त्वाभावस्य दर्शनात् धूमवत्त्वनिर्धूमत्वप्रसक्तौ वस्तुतो विरुद्धद्वैरूप्यापत्तेरेकत्रावश्यं व्याप्तिभङ्गो वाच्यः। स च विनिगमकाभावादेकत्र निर्धारयितुं न शक्यत इति सत्प्रतिपक्षत्व एव विश्रामः। नान्त्यः, उपाधेस्तन्निश्चायकस्यासिद्धेः। न च सहचारदर्शनव्यभिचारादर्शनाभ्यामेव तन्निश्चयः, तयोर्हेतावपि विद्यमानत्वात्। तत्रोत्पन्नमपि व्याप्तिज्ञानमुपाधिदर्शनाद्बाध्यत इति चेत्, तर्ह्युपाधेरेव किमिति तन्न बाध्यते, तत्राप्युपाधेः सद्भावात्। तथा हि आर्द्रेन्धनवत्त्वं धूमत्वे उपाधिः। तदभावश्चावश्यं धूमवत्त्वाभावव्याप्तो वाच्यः। अन्यथा तदपि न धूमव्यापकं स्यात्। यदभावो हि यदभावं व्यभिचरति न तत्तस्य व्यापकम्। यथा गोत्वं पशुत्वाभावव्यभिचार्यभावप्रतियोगि न तद्व्यापकम्। एवञ्च व्यतिरेके निर्वह्नित्वमुपाधिः।इदं हि निर्धूमत्वस्य व्यापकतयाभिमतस्य व्यापकं निर्धूमस्य वह्निमतोऽदर्शनात्, दर्शने चाऽव्यभिचारस्य स्फुटत्वेनोपाध्युपन्यासानर्हत्वादित्युक्तम्, आर्द्रेन्धनविरहस्याव्यापकम् आर्द्रेन्धनाभाववति पक्षे तदसत्त्वात्। पक्षेतरत्वव्यतिरेकश्च न साध्याभावसाधकोऽसाधारणत्वादिति। मैवम्, प्रतिपक्षानुमाने तथा सति उपाध्युद्भावनानुपपत्तेः सत्प्रतिपक्षोद्भावनवत् बाधोन्नीतपक्षेतरत्वस्यापि व्यतिरेकासाधारण्यवदनु·

न्यायलीलावतीप्रकाशविवृतिः

द्वितीयं शङ्कते—धूमवत्त्वव्याप्यमिति। तयोर्हेतावपीति। तथा च ग्राहकतौल्येनैकत्र व्याप्तिभङ्गानिर्णय इति भावः। एवञ्च व्यतिरेक इति। आर्द्रेन्धनविरहस्य निर्धूमत्वव्याप्यत्वेन निर्वह्नित्वोपाधिनाऽनिश्चितधूमत्वव्यापकत्वमपि नार्द्रेन्धनत्वस्य निश्चीयत इति भावः। व्यापकं व्यापकतया निश्चितम्। एतावता यत्सिद्धं तदाह—पक्षेतरत्वेति।

न्यायलीलावतीकण्ठाभरणम्

चारिणः साध्यव्यापकस्य साधनैकदेशवृत्तित्वं साधनाव्यापकत्व-मित्यर्थः। अत एवेति। शब्दोऽनित्यः कृतकत्वादित्यत्र साधनवत्त्वं

न्यायलीलावतीप्रकाशः

पाधित्वापत्तेः पर्वतेतरद्रव्यत्वादेरुपाधित्वापत्तेश्च व्यतिरेकेऽसाधा-रण्याभावात्। दूषकताबीजं तूपाधेर्व्यभिचारोन्नायकत्वमेव। यदि तूपाधौ तुल्ययोगक्षेमतया साध्यव्यापकत्वनिश्चय एव नास्ति त-दोपाधित्वनिश्चयाभावाद्दूषकतैव नास्तीति तर्कादिना व्यापकतानि-श्चयः। अथ पर्वतेतरान्यत्वादित्यत्र व्यतिरेक इतरान्यत्वस्यासिद्धि-वारणार्थं पर्वतो विशेषणमिति व्यतिरेके व्यर्थविशेषणत्वा-न्न स उपाधिः। नैवम्, बाधोन्नीतपक्षेतरत्वस्याप्यनुपाधित्वापत्तेः। न चेष्टापत्तिः, इतरत्वस्य केवलान्वयितया तदन्यत्वस्याप्रसिद्ध्या व्या-प्त्यग्रहे तस्य सार्थकत्वादित्यन्यत्र विस्तरः।

अथ साध्यसमव्याप्तस्यैव उपाधित्वान्न पक्षेतरत्वमुपाधिः। न च तदसिद्धं व्यभिचारविरोध्यभावप्रतियोगिन एव उपाधित्वात्। विष-मव्यतिरेकोपाध्यभावश्च न व्यभिचारविरोधी, किन्तु समव्याप्तस्यै-वाभावः। न हि साध्यव्यापकव्याप्यभूतस्य यद्व्याप्यं तत्साध्यं व्य-भिचरति, तद्व्यापकव्याप्येन व्याप्यं व्यभिचारि चेति व्याघातात्।

न्यायलीलावतीप्रकाशविवृतिः

व्यभिचारोन्नायकत्वमेवेति। एवञ्च पक्षेतरत्वोपाधेर्व्यतिरेकासाधा-रण्येऽपि व्यभिचारोन्नायकत्वेनैव दोषता स्यादिति भावः। न तु सर्वत्र तथा नियमोऽभिमत इति ध्येयम्। अथ पर्वततरेति। यद्यपि व्य-भिचारोन्नायकत्वेनैवोपाधेर्दूषकत्वमित्यनुपदमेवोक्तमिति व्यतिरेके व्यर्थविशेषणत्वं न दोषावहं तथापि व्यभिचारोन्नयनेऽपि पर्वते-तरत्वव्यभिचारित्वमेव लिङ्गं तत्रापि च पर्वतपदमसिद्धिवाचकमेवे-ति भावः। तदन्यत्वस्येति। तत्सामानाधिकरण्ये लक्षणव्यभिचारित्वस्या-व्यसिद्धेरिति शेषः। 'उपाधित्वा'दुपाधित्वेन सङ्ग्राह्यत्वात्। एवं सिद्धा-न्तेऽपि बोध्यम्। उपाधिरिति। उपाधित्वेन सङ्ग्राह्य इति भावः। तथा च तद्वारकविशेषणप्रक्षेपे नाव्याप्तिदोष इति भावः। यदभावे सत्यनुमि-तिस्तदेव दूषणमिति सामान्यनियमादुपाधिरपि तादृश एव दूषण-मित्याभिप्रायवानाह—व्यभिचारविरोधीति। व्यभिचाराभावापादनप्रस-

न्यायलीलावतीप्रकाशः

यत्र व्यभिचारस्तत्र साध्यसमव्याप्तमन्ततः साध्यमप्युपाधिः सम्भवत्येव, स्वं प्रति स्वस्य व्यापकत्वे सति व्याप्यत्वात् साधनाव्यापकत्वाच्च । विषमव्याप्तिकस्याभावश्च न तथा दृष्टमनित्यत्वव्यापकं प्रमेयत्वं तद्व्याप्यश्च गुणत्वम् । न चानित्यत्वगुणत्वयोर्व्याप्तिः । मैवम्, दूषकतावीजस्य व्यभिचारोन्नयनस्य समतया विषमव्याप्तस्याप्युपाधित्वात् । अव्यभिचारे च साध्यव्यापकव्याप्यत्वस्याऽतन्त्रत्वात् गौरवात् भवत्येव व्यभिचारस्य दर्शितत्वाच्च । किन्तु साध्यव्याप्यव्याप्यत्वमेव तन्त्रं लाघवादावश्यकत्वाच्च । यदि च यद्व्यतिरेकेऽनुमितिर्भवत्येव तद्दूषणं तदा विरुद्धत्वादेस्तत्त्वापत्तिः । किन्तु यत्सत्त्वेऽनुमित्यभावः तदेव तत्र दूषणम् ।

अथ साध्यसाधनसम्बन्धव्यापकत्वे सति साधनाव्यापकः । तेन पक्षधर्मसाधनावच्छिन्नसाध्यव्यापकोऽप्युपाधिर्भवति । मैवम्, शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावणत्वस्योपाधित्वापत्तेः शब्दधर्मगुणत्वाऽभिधेयत्वसम्बन्धव्यापकत्वात् प्रमेयत्वस्य साधनस्याव्यापकत्वाच्च । जलं प्रमेयं रसवत्त्वादित्यत्र रसवत्त्वप्रमेयत्वसम्बन्धव्यापकस्य पृथिवीत्वस्योपाधित्वापत्तेश्च । अपि च साध्यसाधनसम्बन्धव्य-

न्यायलीलावतीप्रकाशविवृतिः

क्तीभूताभावप्रतियोगिसाधनाव्यापकत्वस्येत्यर्थः । अव्यभिचारे चेति । तथा च निरुक्तस्योपाधेरप्रयोजकत्वे साध्याऽव्याप्य उपाधिः स्यादिति भावः । यदपि दूषणसामान्यरूपानुरोधेनोपाधेरपि तथैव दूषणमित्युक्तं तदपि दूषयति—यदि चेति । तथा च नेदं दूषणसामान्यस्वरूपं यदनुरोधादुपाधिस्वरूपमपि तथा स्यादित्यर्थः । विशेषणाप्रवेशे पक्षेतरत्वे त्वन्मतेऽतिव्याप्तिस्तत्प्रवेशे चास्मन्मतेऽव्याप्तिरिति दोषे सत्येवावच्छिन्नसाध्यव्यापकोपाध्यव्याप्तिनिरासमात्राभिप्रायेण लक्षणान्तरमाशङ्कते—अथेति । शब्दोऽभिधेय इति । यद्यपि अभिधेयत्वप्रमेयत्वसम्बन्धाधिकरणे गुणत्वादौ नाश्रवणत्वमिति नोक्तातिव्याप्तिस्तथापि प्रमेयत्वादित्यनेन प्रमेयधर्मतया गुणत्वमेव प्रकृतमित्यभिप्रायेणेदम् । एवञ्च सति शब्दधर्मोत्कीर्त्तनं प्रमेयधर्मत्वलाभाय । अग्रे च गुणत्वाभिधेयत्वसम्बन्धव्यापकत्वादित्येव पाठः । अग्रे च प्रमेयत्वस्येत्यस्य गुणत्वस्येत्यर्थः । यद्वा लक्षणे साक्षात्पदं धर्मपरम् । अत-

न्यायलीलावतीप्रकाशः

भिचारं साधयित्वा पश्चात्केवलसाध्यव्यभिचारः साध्य इत्यर्थान्तरं केवलसाध्ये विवादात्।

अथ साध्यस्य सार्वत्रिकत्वापरया तत्र काचित्कत्वप्रयोजकं किञ्चिदास्थेयं तच्चं च न न्यूनाधिकदेशवृत्तेः। तेन विना भवतस्तस्मिन्नसत्यभवतश्च तदप्रयोज्यत्वादिति समनियतस्यैव तथात्वं स एवोपाधिः। नैवम्, दूषणतौपयिकं हि रूपं प्रयोजकत्वमिह विवक्षितं तच्च साध्यव्यापकत्वसाधनाव्यापकत्वमात्रं न त्वधिकं काचित्कत्वञ्च साध्यस्य जातेरिव स्वाभाविकमेव। कथं तर्हि तद्धर्मभूता हीत्यादिग्रन्थः। इत्थं यद्विशिष्टे साधने साध्यसामानाधिकरण्यं स उपाधिरित्युपाधिस्वरूपम्। साध्यव्यापकत्वे सति साधनाव्यापकत्वं लक्षणम्। यथा पृथिव्याः पृथिवीत्वं स्वरूपं, लक्षणञ्च विशेषणम्। कचिद्व्यापकम्। यथा जलं पृथिवी रसवत्त्वादित्यत्र गन्धवत्त्वं कचिद्व्यापकमात्रम्। आर्द्रेन्धनवत्त्वमुभयत्रापि विशिष्टं व्याप्यं विशिष्टगतां व्याप्तिं विशेष्ये समारोपयतीत्युपाधिपदप्रवृत्तिनिमित्तप्रदर्शनपरः। विषमव्याप्तेरुपाधिपदं गौणं प्रवृत्तिनिमित्ताभावात्। दूषकतारूपसम्परया दूषकत्वं च तस्यास्त्येव। यत्तूपाधिमात्रस्य लक्षणं व्यतिरेकिधर्मत्वं पक्षेतरत्वस्यापि

न्यायलीलावतीप्रकाशविवृतिः

एव पक्षधर्मावच्छिन्नेत्यादिग्रन्थसङ्गतिरपि। एवञ्च शब्दधर्मेत्यादिप्रमेयत्वस्येति च यथाश्रुतमेव। यदि तु गुणत्वावच्छिन्नाभिधेयत्वप्रमेयत्वसम्बन्धेतिपाठस्तदा यथाश्रुतलक्षणम्। वायुः प्रत्यक्षः प्रमेयत्वादित्यत्र रूपवत्त्वोपाधावव्याप्तमिति पक्षधर्मावच्छिन्नतादृशसम्बन्धव्यापकत्वं तदर्थ इति यथाश्रुतेव दूषणफक्किकेत्यवधेयम्। विशेषणदाने पक्षेतरत्वेऽव्याप्तिरिति यदुक्तं तदुद्धाराय तत्रोपाधित्वाभावं सिंहावलोकितन्यायेन शङ्कते—अथेति।

उपाधिस्वरूपमिति। उपाधेरसाधारणं रूपं लक्ष्यतावच्छेदकमिति यावदित्यर्थः। लक्षणमितरभेदानुमापकम्। विशेषणमुपाधिरूपम्। विशिष्टं व्याप्यमिति। न च यत्रोपाधिः साध्यव्याप्यस्तत्र न विशिष्टं व्याप्यं व्यर्थविशेषणत्वादिति वाच्यम्, व्यर्थविशेषणेऽपि व्याप्तिरस्त्येवावच्छेदकता परं नीलधूमादौ नास्तीतिभावात्। प्रवृत्तिनिमित्तेति। अन्यत्र धर्मलक्षणात्मकत्वरूपेत्यर्थः। साधनविशेषे साध्य-

न्यायलीलावतीप्रकाशः

क्वचिदुपाधित्वादिति, तन्न, अनुमितिप्रतिबन्धकज्ञानविषयतावच्छेदकं ह्युपाधित्वमिह निरूप्यं तच्च न व्यतिरेकिधर्मत्वमतिप्रसङ्गात्। तत्रास्मत्पितृचरणाः—यद्व्यभिचारित्वेन साधनस्य साध्यव्यभिचारित्वं स उपाधिः। लक्षणन्तु पर्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वम्, यद्धर्मावच्छेदेन साध्यं प्रसिद्धं तत्पर्यवसितम्, स च धर्मः क्वचित्साधनं क्वचिद्द्रव्यत्वादि क्वचिन्महानसत्वादि साध्यव्यापकव्यभिचारिणः साधनस्य साध्यव्यभिचारावश्यकत्वात्। पक्षेतरत्वस्य च न साध्यव्यापकत्वम्। न हि सहचारदर्शनव्यभिचारादर्शना-

न्यायलीलावतीप्रकाशविवृतिः

विशेषप्रतियोगिकोपाधेः स्वरूपं दर्शयति—यद्व्यभिचारित्वेनेति। विशेषणत्वातिरिक्तविशेषणाविशेषितेन सन्दिग्धभूतेन यस्य यद्व्यभिचारित्वमनुमातुं शक्यते स तत्र साधने तत्साध्यप्रतियोगिक उपाधिरित्यर्थः। विशेषणपदार्थः यदवच्छिन्नसाध्यव्यापक उपाधिः सः। आद्यविशेषणेन लिङ्गे विशेषणान्तराप्रवेशतत्प्रवेशाविवक्षयोरिति प्रसङ्गाव्याप्तीति दूषणमपास्तम्। द्वितीयविशेषणेन चाकाशे साध्ये घटादेरुपाधित्वप्रसङ्गः। साध्यव्यापकादावपि साध्यव्यापकत्वादिभ्रमविषयेऽतिप्रसङ्गश्चेति दूषणद्वयमपास्तम्, व्यर्थविशेषणतया व्याप्याद्भिराहित्येन च तत्र सल्लिङ्गत्वाभावात्। शक्यत इत्यनेन योग्यतोक्ता। तेन दैवाद्व्यभिचारानानुमापके नाव्याप्तिः। योग्यतावच्छेदकं च शुद्धसाध्यव्यापकप्रतियोगित्वम्। विशेषणसामानाधिकरण्यावच्छेदेन विशिष्टसाध्यव्यापकप्रतियोगित्वं चेति दिक्। सङ्ग्राह्यस्योपाधेः स्वरूपं दर्शयित्वा दूषणताप्रयोजकरूपं दर्शयन्नेव लक्षणमाह—लक्षणमिति। अत्र पर्यवसितपदमुभयान्वयि। पर्यवसितत्वञ्च धर्मविशेषणावच्छिन्नत्वम्। तेन यद्धर्मावच्छिन्नसाध्यव्यापकत्वे सति तद्धर्मावच्छिन्नसाधनाव्यापकत्वमित्यर्थः। अवच्छिन्नत्वञ्च सामानाधिकरण्यमात्रम्। एवञ्च तद्धर्माधिकरणयावत्साध्याधिकरणवृत्तित्वे सति तद्धर्माधिकरणसमानाधिकरणकिञ्चिदवृत्तित्वमिति पर्यवस्यति। इयत् पुनरत्रावधेयम्। लक्षणं समस्तमेव। दूषकताबीजं तु क्वचित्साध्याव्यापकत्वादिमात्रं क्वचिन्निरुक्तमिति संक्षेपः। क्वचिन्महानसत्वादीत्यादिपदमनास्थायां यः कश्चिदेव धर्मस्तादृशो विवक्षित

न्यायलीलावतीप्रकाशः

ण्यामेव व्यापकत्वग्रहोऽतिप्रसङ्गात् किन्त्वनुकूलतर्कात्, स च ना-
स्त्येव। अत एव पर्वतेतरद्रव्यत्वादिकमपि नोपाधिः पक्षधर्मावच्छि-
न्नसाधनावच्छिन्नसाधनावच्छिन्नसाध्यव्यापकोपाध्योरपि साधनस्य
साध्यव्यभिचारित्वं विशेषणाव्यभिचारिणि साधने विशिष्टव्यभिचा-
रस्य विशेष्यव्यभिचारित्वानियमात्। अत एव नार्थान्तरं विशेषणा-
वच्छिन्नव्यभिचारित्वेन हि ज्ञाने साधने विशिष्टव्यभिचारः सि-
ध्यन् विशेष्यव्यभिचारमादाय सिद्ध्यति पक्षधर्मताबलात्। अन्यथा
प्रतीतेरपर्यवसानात्। सम्प्रदायविदस्तु यद्व्यावृत्त्या यस्य साधनस्य
साध्यं व्यावर्त्तते स धर्मस्तत्र साधने उपाधिः। यथाऽग्निमत्त्व आर्द्रे-
न्धनप्रभवत्वम्। एवं भावत्वव्यावृत्त्या प्रध्वंसे जन्यत्वानित्यत्वयोः स
म्बन्धो व्यावर्त्तमानः पक्षधर्मताबलादनित्यत्वाभावमादाय सि-
ध्यति। यथा वायावुद्भूतरूपवत्त्वं व्यावर्त्तमानं द्रव्यत्वे सति प्रत्यक्षत्वं
निर्वर्त्तयत् प्रत्यक्षत्वाभावमादाय सिद्ध्यति। अत एव बाधानुन्नीतपक्षे-
तरत्वस्यानुपाधित्वं स्वव्याघातकत्वेन तद्व्यतिरेकस्य साध्याव्यावर्त्त-
कत्वादिति संक्षेपः। अत एवेति। शब्दोऽनित्यः कृतकत्वादित्यत्र सा-

न्यायलीलावतीप्रकाशविवृतिः

इति। एतेन घटरूपं प्रत्यक्षं प्रमेयत्वादित्यत्रापि वहिर्द्रव्यत्वावच्छि-
न्नसाध्यव्यापकत्वमुद्भूतरूपवत्त्वमुपाधिरविकल इति विभावनीयम्।
स च नास्त्येवेति। इदमुपलक्षणम्। अनुमानमात्रोच्छेदकत्वलक्षणतर्क-
पराघातोऽपि द्रष्टव्यः। अन्यथा सन्दिग्धोपाधेरपरिहारात्। विशे-
षणाव्यभिचारिणीति। विशेषणवतीत्यर्थः। पक्षधर्मताबलादिति। यद्यपि सा-
ध्यस्य पक्षसम्बन्धमात्रं तद्बलात् सिद्ध्यति न तु व्यापकतावच्छे-
दकानाश्रयोऽपि प्रकृते च विशेष्यव्यभिचारविशिष्टव्यभिचार-
योर्भेदात्तदनाश्रयत्वमेव विशेष्यव्यभिचारस्य तथापि विशेषणवति
विशिष्टव्यापकव्यभिचारित्वादित्येवं विशेष्यव्यभिचारानुमितौ तात्प-
र्यम्। अत एव विशेषणवत्त्वेत्यादिविशेषणं पूर्वं दत्तमस्माभिरन्यथा
यथाश्रुत एव सामञ्जस्यादिति सत्प्रतिपक्षोत्थापकतापक्षमालम्ब्य
लक्षणमाह—यद्व्यावृत्त्येति। क्वचिदपि साधनवतीति भावः। तेन पक्ष-
वृत्तिरप्युपाधिः। यदि च करका पृथिवी कठिनसंयोगवत्त्वादित्यत्र सा-
धनव्यापकमनुष्णाशीतस्पर्शवत्त्वमुपाधिस्तदा पक्षसाधनवदन्यतर-

कृतकत्वे साधने सावयवत्वम् । वैपरीत्ये वा नोपाधिः । सं

---

न्यायलीलावतीकण्ठाभरणम्

नोपाधिः, कर्म्मादौ साध्याव्यापकत्वात्। वैपरीत्य इति। पटो ऽनित्यः सावयवत्वादित्यत्र कृतकत्वं नोपाधिः साधनव्यापकत्वादित्यर्थः । नन्वेतावता साध्यव्यापकत्वे साधनाव्यापकत्वमित्युपाधिलक्षणमुक्तं स्यात्, तच्च पक्षधर्मावच्छिन्नसाधनधर्म्मावच्छिन्नोपाध्यव्यापकम् । न च तयोरनुपाधित्वमेवं दूषकतावीजसत्त्वात् तदुक्तं वाद्युक्तसाध्यनियमच्युतोऽपि कथकैरुपाधिरुद्भाव्यः । पर्य्यवसितं नियमयनदूषकतावीजसाम्यादिति । किं च पक्षेतरत्वेऽतिव्याप्तिरत्र, किं च सकलपरमाणुनोच्छेदकतया स्वव्याघातकत्वेन व्यर्थविशेषणतया च सत्प्रतिपक्षतया च दूषकत्वे पक्षे साध्यसदसत्त्वसन्देहेन साध्यव्यापकतासन्देहा * * * पोपाधित्वमुचितं तथापि प्रकृतलक्षणं तत्रातिव्यापकमेव । किं च साध्यत्वं सिद्धिकर्म्मत्वं साधनत्वञ्च सिद्धिकरणत्वमुभयमपि सोपाधौ न सम्भवतीत्यसम्भवो लक्षणदोषः । न च साध्यसाधनसम्बन्धव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वम्, शब्दोऽभिधेयः प्रमेयत्वादित्यत्राश्रावणत्वस्योपाधितापत्तेः पक्षधर्म्मागुणत्वावच्छिन्नाभिधेयत्वसम्बन्धव्यापकत्वात् । जलं प्रमेयं रसत्वादित्यत्र रससम्बन्धप्रमेयसम्बन्धव्यापकस्य पृथिवीत्वस्योपाधितापत्तेः । प्रथमं साध्यसाधनसम्बन्धव्यभिचारं साधयित्वा साधनस्य साध्यव्यभिचारसाधनेऽर्थान्तरत्वाच्च । केवलसाध्ये हि विवादो न विशिष्टे । न च साध्यसमव्याप्तत्वे सति साधनाव्यापकत्वं तत्, विषमव्याप्तस्यापि दूषकतावीजसाम्येनोपाधित्वात् । ननु नायमुपाधिपदवाच्यः, यद्धर्मोऽन्यत्र भासते स उपाधिः । जवाकुसुमस्फटिकारुणिमा न च विषमव्याप्ते साध्यव्याप्यत्वं तेन तद्धर्म्मो हेतावारोप्यत इति चेत् सत्यम्, समव्याप्ते मुख्यमुपाधिपदमिह तु व्यभिचारोन्नायकत्वगुणयोगाद् गौणमिति विशेषाद् यदभावो व्यभिचारविरोधी स उपाधिः सम-

न्यायलीलावतीप्रकाशः

वयवत्वं नोपाधिः साध्याव्यापकत्वात् । वैपरीत्य इति । पटोऽनित्यः सावयवादित्यत्र न कृतकत्वमुपाधिः साधनव्यापकत्वादित्यर्थः ।

चायं क्वचिन्निश्चितोभयरूपः । [ यथा प्रमेयत्वे कृतकत्वम् ।
क्वचिन्निश्चितान्यतररूपः । यथा मैत्रतनयत्वे(१) शाकाद्याहारप-

---

न्यायलीलावतीकण्ठाभरणम्

व्याप्त एव विषमव्याप्तस्याभावश्च न व्यभिचारविरोधी । शब्दोऽनि-
त्यो गुणत्वादित्यत्र मेयत्वादेः साधनव्यापकतया अनुपाधित्वेन विष-
मव्याप्तोपाध्यभावेऽपि जलपरमाणुरूपादौ व्यभिचारसत्त्वात्, किन्तु
समव्याप्तं कृतकत्वमत्रोपाधिरिति न, तदभावो व्यभिचारसमाना-
धिकरणः, किन्तु विरोधीति समव्याप्त एवोपाधिरिति चेत्, न, यत्-
सत्त्वेऽनुमितिप्रतिबन्धस्तस्यैव दोषत्वात् । स च समव्याप्तोपाधिस-
त्त्व इव विषमव्याप्तोपाधिसत्त्वेऽपि अविशिष्ट इति सोऽप्युपाधिरिति-
चेत्, अत्राहुः पर्य्यवसितसाध्यव्यापकत्वे सति साधनाव्यापकत्वमु-
पाधित्वम् । यस्य प्रयोजकस्य धर्म्मस्यावच्छेदेन साध्यप्रसिद्धिः, त-
दवच्छिन्नं पर्य्यवसितम्, यद्व्यभिचारित्वज्ञानाधीनं साधनस्य साध्य
व्यभिचारित्वज्ञानं तदुपाधिस्वरूपमिति मयूख विस्तरः । क्वचिदिति ।
उभयरूपं साध्यव्यापकत्वं साधनाव्यापकत्वम् । यथेति । यथा शब्दोऽनि
त्यः कृतकत्वादित्यत्र कृतकत्वस्योपाधेरुभयरूपनिश्चयात अन्यतर-
रूपं साध्यव्यापकत्वं वैद्यकात शाकाद्याहारपरिणामस्यौत्पत्तिक-
रूपं साध्यव्यापकत्वं वैद्यकात शाकाद्याहारपरिणामस्यौत्पत्तिक-
नरश्यामत्वरूपपर्य्यवसितसाध्यव्यापकत्वनिश्चयात चरमं रूपं सा-
धनाव्यापकत्वम् । इदं लौहलेख्यं पार्थिवत्वादित्यत्र हीरके हेतौ स-
त्यपि प्रशिथिलसंयोगाभावात् साधनाव्यापकत्वानिश्चयः, व्यभिचार-
शङ्काधायकत्वे सन्दिग्धोपाधेरपि दूषकत्वात् सन्दिग्धानैकान्तिकवत् ।
तदुद्भावनानर्हत्वेऽपि स्वार्थानुमाने दोषत्वध्रौव्यात् सन्दिग्धोपाध्यु-

न्यायलीलावतीप्रकाशः

निश्चितेति । साध्यव्यापकत्वं साधनाव्यापकत्वं चेत्युभयम् । यथेति । यथा
शब्दोऽनित्यः प्रमेयत्वादित्यत्र कृतकत्वमुपाधिः । निश्चितोभयरूप
इत्यर्थः । निश्चितान्यतरेति । निश्चितसाध्यव्यापकत्वरूप इत्यर्थः । यथेति ।
स श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वं वैद्यकान्मनुष्यश्याम-
त्वेन तस्य कारणत्वावगमेन साध्यव्यापकतानिश्चयात साधनाव्या-

---

(१) नये शा० ।

रिणतिः। क्वचिन्निश्चितचरमरूपः। ] (१)यथा पार्थिवत्वे शशिथिलसंयोगित्वम्। अनिश्चितोभयरूपोऽनिरूपितरूपश्च देशकालसाध्येतरवृत्तित्वमनुमानमात्रव्यवहारविच्छेदकत्वान्नोपाधिः। उ-

---

न्यायलीलावतीकण्ठाभरणम्

पाधिरेव। अनिश्चितेति। यस्य साध्यव्यापकत्वं साधनाव्यापकत्वञ्च सन्दिग्धं तस्यातिप्रसञ्जकत्वात् नोपाधित्वमित्यर्थः। अनिरूपितरूपो भविष्यति कश्चिदत्र उपाधिरित्येवंरूपः। देशकालेति। एतद्देशीयान्यसाधनत्वमेतत्कालीनान्यसाधनत्वं च स्वव्याघातकत्वान्नोपाधिरित्यर्थः। अत्र यथासंख्यमुदाहरति वह्निरनुष्णः कृतकत्वादित्यत्र वह्नीतरत्वं बाधोन्नेयमुपाधिः। अयञ्च हेतुमत्येव पक्षे द्रष्टव्यः। प्रमेयत्वादित्यत्र नित्य* *पि प्रमेयत्वस्य सत्त्वाद्व्यभिचारेण कृतकत्वमुपाधिः, स श्यामो मित्रातनयत्वादित्यत्रानुकूलतर्काभावोन्नेयः शाकपाकजत्वमुपाधिः। वायू रूपवान् उपलभ्यमानस्पर्शाश्रयत्वादित्यत्र चाक्षुषत्वं प्रतिकूलतर्कोन्नेय उपाधिः। प्रतिकूलतर्को यद्ययं रूपवान् स्यात् द्रव्यत्वव्याप्यचाक्षुषजातिमान् स्यादित्येवंरूपः।

न्यायलीलावतीप्रकाशः

पकत्वं तु तस्य सन्दिग्धमित्यर्थः। चरमेति। चरमं रूपं साधनाव्यापकमित्यर्थः। यथेति। इदं लोहलेख्यं पार्थिवत्वादित्यत्र साधनाव्यापकत्वं पक्ष एव निश्चितं साध्यव्यापकत्वे तु सन्देह इत्यर्थः। ननूपाधिसन्देहो नोपाधिः सन्दिग्धत्वात् न वा हेत्वाभासान्तरमपि तदुद्भावने निरनुयोज्यानुयोगः। मैवम्, व्यभिचारशङ्काधायकत्वेन दूषणत्वात् सन्दिग्धाऽनैकान्तिकवत्। यन्निश्चयोऽनुमितिप्रतिबन्धकस्तत्संशयस्यापि तथात्वात्। अनिरूपितेति। भविष्यति कश्चिदत्रोपाधिरित्येवं रूप इत्यर्थः। देशेति। एतद्देशीयान्यसाधनत्वमेतत्कालीनान्य-

न्यायलीलावतीप्रकाशविवृतिः

स्मिन्निति शेषो बोद्धव्यः। सन्दिग्धानैकान्तिकवदिति। दूषणत्वमात्रे दृष्टान्तः। यन्निश्चय इति। साक्षादविरोधी यन्निश्चय इत्यर्थस्तेन बाधसंशय-

---

(१) [ ] एतन्मध्यस्थः पाठस्ताडपत्रपुस्तके त्रुटितः।

क्षीयते च बाधव्यभिचारानुकूलतर्काभावप्रतिकूलतर्कैः, यथा दह-नेतरत्वं कृतकत्वे, प्रमेयत्वे कृतकत्वम्। मैत्रतनयत्वे शाकाद्याहा-रपरिणतिः। उपलभ्यमानस्पर्शत्वे चाक्षुषत्वमिति॥ [ इति ] व्याप्तिः॥

---

न्यायलीलावतीप्रकाशः

साधनत्वञ्च स्वव्याघातकत्वान्नोपाधिरित्यर्थः। बाधेति। बाधो हि पक्षा-भिमत एव व्यभिचारः। तत्र चोपाधिरावश्यक इत्यर्थः। एतच्च हेतु-मति पक्षाभिमते द्रष्टव्यम्, धूमेन ह्रदेऽग्निसाधने तदभावात्। व्यभिचा-रेति। यद्यपि व्यभिचारादेव तत्रागमकत्वेनोपाध्युन्नयनं निष्फलत्वात् तथापि व्यभिचारिण्येकत्र साधने साध्यतदभावयोर्विरोधेनावच्छेदक-भेदं विना तदुभयसम्बन्धाभावादवश्यं साध्यसम्बन्धितावच्छेदकं रूपमुपेयम्, तदेव तत्रोपाधिः। अत एव व्यभिचारे चावश्यमुपाधिरि-त्याचार्याः। अनुकूलेति। 'तदसत्त्वे' व्याप्त्यसत्त्वे व्यभिचारात्तत्र चोपाधे-रावश्यकत्वादित्यर्थः। अत्र क्रमेणोदाहरणान्याह—यथेति। तेजो-ऽनुष्णं कृतकत्वादित्यत्राऽतेजस्त्वं बाधोन्नीत उपाधिः। शब्दो नित्यः प्रमेयत्वादित्यत्र व्यभिचारदर्शनात् कृतकत्वमुपाधिः। स श्यामो मैत्र-तनयत्वादित्यत्र शाकपाकजत्वमुपाधिः। शब्दो नित्यः प्रमेयत्वा-दित्यत्र व्यभिचारदर्शनात् कृतकत्वमुपाधिः। वायूरूपवानुपलभ्य-मानस्पर्शाधिष्ठानत्वादित्यत्र प्रतिकूलतर्कोन्नेयश्चाक्षुषत्वमुपाधिः। प्रतिकूलतर्कश्च यद्ययं रूपवान् स्यात् द्रव्यत्वव्याप्यचाक्षुषजातिमान् स्याऽदित्येवंरूपः।

न्यायलीलावतीप्रकाशविवृतिः

स्याप्रतिबन्धकत्वेऽप्यदोषः। तदेव तत्रोपाधिरिति। तथा चोद्भावितव्यभि-चार एव उपाधिं बिना दुरुपपाद इति तत्र व्यभिचारोन्नयनमिति भावः। अत्रैव वृद्धसम्मातिमाह—अत एवेति। तत्फक्किकया हि व्यभिचारव्याप्यत्वमुपाधेर्दर्शितं तत्प्रदर्शनं च तदैव सफलं यदि व्यभिचारेणोपाध्युन्नयनमिति भावः। अनुकूलतर्कस्य पूर्वप्रक्रान्तत्वा-त् प्रसक्त्या मूले तर्कविचारः। ननु व्याप्यस्येत्यादि मूले नास्ती-

अथ कस्तर्कः। एकधर्माभ्युपगमे द्वितीयस्य नियतप्राप्ति-

---

न्यायलीलावतीकण्ठाभरणम्

अनुमानं निरूप्य तदितिकर्त्तव्यताभूतं तर्कं निरूपयति—अथेति। एकस्य धर्मस्य व्याप्यस्याभ्युपगमे द्वितीयस्य व्यापकस्य प्रसङ्गरूप इत्यर्थः। व्याप्यारोपाधीनो व्यापकारोप इति भावः। आरोपश्चायमाहार्य्योपरि रक्षितः। तेनासदर्थानुमितौ नातिव्याप्तिः। तर्कयामीतिप्रतीतिसाक्षिको जातिविशेष एव वा तर्कत्वम्। स च सर्वत्र मानस एव। यद्वा अव्यवस्थिताभ्युपगम्यमानकोट्युपाधिकानिष्टसत्त्वप्रतिसन्धानं तर्कः। व्याप्यारोपत्वावच्छिन्नकारणताप्रतियोगिकव्यापकतारोपो वा असदर्था-

न्यायलीलावतीप्रकाशः

एकधर्मेति। एकस्य धर्मस्य व्याप्यस्याभ्युपगमे द्वितीयस्य व्यापकस्यारोप इत्यर्थः। नियतेत्यनेन धर्मयोर्व्याप्यव्यापकभावः सूचितः। नन्वेतदसदर्थानुमितावतिव्याप्तम्। न च व्यापकाभाववत्तया ज्ञाते व्याप्यारोपात् व्यापकारोपः सः। या हि द्रव्यं शङ्खतयाऽवगम्य पीतः शङ्खोऽयं न तु शुक्ल इति प्रत्यक्षतोऽवगच्छतः शङ्खत्वाच्छुक्ल इत्यनुमितिः, तत्राऽतिव्याप्तिः। नापि तर्कयामीति प्रतीतिसाक्षिको जातिभेदस्तल्लक्षणं इन्द्रियादिनिरपेक्षमनोजन्यत्वाच्च। न चाक्षुषत्वादिना जातिसङ्करः। तर्कविषयवैलक्षण्यानुभवात्। तत एव व्यवहाराद्युपपत्तौ तत्र मानाभावात्। अन्यथा घटज्ञानत्वादेरपि जातित्वापत्तेः। अत्राहुः, अव्यवस्थिताभ्युपगम्यमानकोट्युपाधिकानिष्ट-

न्यायलीलावतीप्रकाशविवृतिः

त्यत आह—नियतेत्यनेनेति। द्रव्यं शङ्खभिन्नमशुक्लमिति यावत्। तेन शुक्लत्वानुमितेरारोपरूपतयाऽतिव्याप्तिः सङ्गच्छते। इन्द्रियादीति। मानसत्वव्याप्यैवेयं जातिरिति भावः। अव्यवस्थितेति। अत्राऽनिष्टत्वं बाधितत्वम्, अभ्युपगम्यमानत्वं च प्रतीतिविषयत्वम्। तथा च या हि द्रव्यमित्यादिपूर्वोक्तानुमितावतिव्याप्तिवारणाय अव्यवस्थितेति तत्पदेन चाहार्यत्वलाभः। इष्टापादनेऽतिव्याप्तेराह—अनिष्टेति। केचित्तु स्वानभ्युपेतपराभ्युपगतकोट्युपाधिकानिष्टप्रतिसन्धानं तर्क इति उक्तवाक्यार्थं इति वदन्ति, तन्न। स्वार्थानुमित्यनुकूलतर्काव्याप्तेः। इदं च विपर्ययपर्यवसायितर्कसामान्यलक्षणमतोऽव्याप्यैनाव्यापका-

रूपः। ननु किमेतस्य फलम्। विपक्षजिज्ञासानिवृत्तिः शङ्कानिवृ-

---

न्यायलीलावतीकण्ठाभरणम्

नुमाने च न ताद्रूप्येण कारणतेत्यन्ये। विपक्षेति। पक्षे साध्याभावकोटिकजिज्ञासानिवृत्तिरित्यर्थः। शङ्केति। जिज्ञासाजनकसाध्याभावकोटिक-

न्यायलीलावतीप्रकाशः

सत्त्वप्रतिसन्धानं तर्कः। तदुपाधिकत्वञ्च तस्मिन् सत्यावश्यकत्वम्, अव्यवस्थितत्वञ्च तस्य हीनबलत्वार्थम्। अन्यथापादकस्य व्यवस्थितौ तस्यापाद्यविरहेण तुल्यत्वे मिथः प्रतिबन्ध एव स्यान्नत्वापादकस्य भङ्गः। व्याप्यारोपत्वावच्छिन्नकारणताप्रतियोगिककार्यताधिकरणव्यापकारोपस्तर्कः। शाब्दे च तथाविधे ज्ञाने तेन रूपेण कारणताभावान्नातिव्याप्तिरित्यन्ये। विपक्षेति। संशयास्वातन्त्र्योपस्थितौ-

न्यायलीलावतीप्रकाशविवृतिः

सञ्जनेनातिव्याप्तिः। न च जलं यदि सहकारिसम्पन्नं स्यात्तदा मे तृषं शमयिष्यतीत्यादौ सम्भावनात्मकतर्केऽव्याप्तिः। तस्याऽत्रालक्ष्यत्वादिति भावः। तस्मिन्सतीति। तथा च यदि घटवान् स्यान्निर्धूमश्च स्यादित्यादौ नातिव्याप्तिरिति भावः। वस्तुतस्तु ज्ञानानुत्पत्त्या प्रतियोग्यधिकरणसंसर्गप्रतीतिजातशुक्लत्वानुमितिकालीनशुक्लत्वाभावज्ञानेनातिव्याप्तिस्तत्र व्याप्यपुरस्कारादिति भावः। व्याप्येति। प्रत्यक्षव्यापकारोपेऽतिव्याप्तेराह प्रतियोगिकेऽत्यन्तम। तत्र लिङ्गभ्रमजन्यभ्रमानुमितावतिव्याप्तेरवच्छिन्नत्वपर्यन्तग्रहणम्। तत्र च व्याप्यज्ञानत्वमवच्छेदकं नारोपत्वमित्यदोषः। न च यत्सामान्ययोरिति न्यायेन भ्रमानुत्पत्तिं प्रत्यारोपत्वेनैव जनकतेति वाच्यम्, गन्धप्रागभावावच्छिन्नपक्षकगन्धानुमितौ व्यभिचारेण तथा जनकत्वाभावात्। वयन्तु, आरोपत्वमत्र पक्षधर्मतांशे विवक्षितं तच्च न भ्रमानुमिति जनकतावच्छेदकम्, व्याप्तिभ्रमजन्यानुमितावव्याप्तेः। यदि चारोपत्वं बाधितं तदा प्रसङ्ग एव नेति ब्रूमः। अत्रारोपत्वं बाधितविषयत्वमाश्रमन्यथा सत्तर्काव्याप्तेः। सत्तर्कस्यैव चात्र लक्ष्यत्वम्। न च यत्र धूमवह्निविरहवति वह्निवह्निव्याप्यधूमवानयं वह्निमानित्याद्विना शब्देन योग्यताभ्रमे सति वा शाब्दबोधस्तत्रावान्तरव्याप्यांशेऽजनत्वेन व्याप्यारोपस्य जनकत्वमित्यत आह—शाब्दे चेति। यत्पक्षेतस्मात् शब्दो न

त्तिर्वा तन्न्यूनता वा । नाद्यः । अनुमानादेव तत्सिद्धेः । न द्वितीः-

न्यायलीलावतीकण्ठाभरणम्

शङ्कानिवृत्तिरित्यर्थः । तन्न्यूनतेति । साध्याभावकोटिकशङ्कोत्कटकोटि-कत्वनिवर्त्तनं वा तर्कफलमित्यर्थः । अनुमितिकथने तवैतत् सर्वमिति तर्को निष्फल एवेति विकल्पत्रयनिरास इत्याह नाद्य इत्यादिना अनु-

न्यायलीलावतीप्रकाशः

भयकोटौ साध्याभावकोटिगोचरजिज्ञासानिवृत्तिरित्यर्थः । ननु सा-ध्याभावनिश्चयोऽनुमितिं प्रतिबध्नाति । ननु तज्जिज्ञासापि, तत्किं तद्वि-च्छेदेन, मैवम् । साध्याभावविषयत्वस्यैवानुमितिप्रतिबन्धकतयाधिक-स्य व्यर्थत्वात् । तथा च साध्याभावजिज्ञासासत्त्वेऽपि नानुमितिः स्यादतस्तन्निवर्त्तनमेव तर्कफलमिति भावः । शङ्केति । साध्यसाध्याभाव-योस्तुल्यवत्संशयेनैकत्र प्रमाणप्रवृत्तिः सम्भवतीति तन्निवर्त्तनामित्यर्थः । तन्न्यूनतेति । साध्याभावकोटावनिष्टप्रसञ्जनेन तत्कोटेर्हीनत्वमित्यर्थः । अनुमानादेवेति । वस्तुतो विरोधिजिज्ञासा न ज्ञानमात्रप्रतिबन्धिका, घट-जिज्ञासुना चक्षुरुन्मीलनानन्तरं पटस्यापि ज्ञानात् । नाप्यनुमितेः । तृतीयलिङ्गपरामर्षानन्तरं विरोधिजिज्ञासयाऽनुमितौ विलम्बाभावात् ।

अथ साध्यैककोटिका जिज्ञासाऽनुमितिहेतुः । सा तर्केण को-ट्यन्तरेऽनिष्टमुपदर्शयताऽनिष्टजिज्ञासाप्रतिबन्धाज्जन्यते । तन्न । सति तृतीयलिङ्गपरामर्षे तादृशजिज्ञासाया अन्वयव्यतिरेकाभावा-

न्यायलीलावतीप्रकाशविवृतिः

प्रमाणं तथापि न्यायमतानुसारेणेदम् । वस्तुतोऽनुमित्यात्मकेऽपि तस्मिन् परोक्षज्ञानाद्यात्मकतादृशारोपजन्यत्वमस्त्येवेत्युभयसाधारण-मेवेदं कार्यतावच्छेदकप्रतीत्यप्रतीतिविकल्पदोषादन्य इत्युक्तम् । साध्याभावविषयत्वस्येति । यद्यपीदं संशये अतिप्रसक्तं तथापि संशयभि-न्नोक्तविषयत्वमेव विरोधितावच्छेदकं लाघवात्, कामिनीजिज्ञासादि-प्रतिबन्धकत्वानुरोधाच्चेति भावः । नन्वेवमन्योन्याश्रयः विरोधिजिज्ञा-सानिवृत्तावनुमानप्रवृत्तिरनुमानेन च जिज्ञासानिवृत्तिरित्यत आह—वस्तुत इति । कामिनीजिज्ञासादेस्त्वनन्यगत्या तत्त्वेनैव प्रतिबन्धकत्व-मिति भावः । अनुमाने फलीभूतनिश्चयपरत्वे उक्तान्योन्याश्रयभया-

र्थः । अनुमानवैयर्थ्यात् । निश्चयार्थं ( १ ) तदिति चेत् । न । तत एव शङ्कानिवृत्तेरपि सिद्धेः । न तृतीयः । न्यूनाया अन्यूनाया वा अनुमानानिवर्तनीयत्वेन तन्न्यूनत्वापादन(२)वैयर्थ्यात् । ननु अनुमानं(३) करणत्वेन व्यापारतया तर्कमपेक्षत इति चेत् । न । दात्रादौ दृढमुष्टिनिष्पीडनादिव्यापारव्यतिरेके छिदानुपपत्तिवत्तर्कज्ञानं विना लिङ्गादनुमितिव्यतिरेकादर्शनात् । स्वज्ञानं

न्यायलीलावतीकण्ठाभरणम्

मानवैयर्थ्यादिति वैयर्थ्यप्रसङ्गादित्यर्थः । निश्चयार्थमिति । शङ्कानिवृत्तेर्निश्चयार्थत्वादित्यर्थः । अनुमितौ लिङ्गपरामर्शे सति विलम्बाभावान्न तस्य व्यापारतेत्याह—दात्रादाविति । अन्यथासिद्धिमप्याह—स्वज्ञानमिति ।

न्यायलीलावतीप्रकाशः

विति भावः । 'तत एव' अनुमानादेवेत्यर्थः । न्यूनाया इति । न्यूनकोटिकशङ्कानिवर्त्तनार्थमप्यनुमानस्यावश्यकत्वादित्यर्थः । अनुमानमिति । तृतीयलिङ्गपरामर्ष इत्यर्थः । दात्रादाविति । वस्तुतो व्याप्तिग्राहकस्य विषयपरिशोधकस्य वा तर्कस्य परामर्शाजन्यत्वान्नेदं युक्तमिति भावः । स्वज्ञानं वेति । परामृष्यमाणं लिङ्गमनुमितौ करणं तेन लिङ्गस्य सविषयः परामर्शो व्यापार इत्यर्थः । यद्यप्यनुमितौ लिङ्गस्याऽतीताऽनागतसाधारण्येन कारणत्वमेव नास्ति तथाप्यनुमितौ व्याप्यज्ञानमात्रं प्रयोजकं न तु व्याप्यविशेषज्ञानम् । तथा चाऽतीतादिलिङ्गस्थले धूमादिप्रागभावध्वंसयोर्लिङ्गत्वं तयोश्च विद्यमानत्वमिति भावः ।

न्यायलीलावतीप्रकाशविवृतिः

त्याह—अनुमानादेवेति । लिङ्गपरामर्शादेवेत्यर्थः । अनुमानस्येति । लिङ्गपरामर्शस्येत्यर्थः । विषयपरिशोधकस्य वेति । यद्यपि तत्र तर्के ग्राह्याभावज्ञानतया परामर्षस्य जनकत्वादिदमयुक्तं तथापि स्वारसिकजिज्ञासादिविरहस्थले तर्कं विनैवानुमितिरिति व्यभिचारादेव न तर्कस्य व्यापारत्वमिति मूलोक्तमेव रमणीयम् । तयोश्च विद्यमानत्वमिति । यद्यपि धूमध्वंसादेर्विद्यमानत्वेऽपि धूमज्ञानादेव यत्रानुमितिस्तत्र न तद्व्यापारता तथापि व्याप्यमात्रस्यैव व्याप्यज्ञानमात्रं व्यापार इति कारण-

(१) ० निर्णयत्वं ० । (२) ० पादन ० । (३) ० मानकरण ० ।

वा लिङ्गस्यावान्तरव्यापारः स्यात्तदनुपकारकं नेदमनुमानाङ्गम्। अत्रोच्यते। अनुमानानुकूलप्रतिबन्धनिश्चयोत्पत्तौ व्यभिचारशङ्कानिवृत्तिद्वारेणास्योपयोगात्। स चायमाहार्यारोपरूपः। आ-

न्यायलीलावतीकण्ठाभरणम्

लिङ्गमेव कारणं तज्ज्ञानं व्यापार इत्यर्थः। अनुमानेति। व्यभिचारशङ्काविरहसहकृतं सहचारदर्शनं व्याप्तिग्राहकं सा च तर्केणापनीयत इत्यर्थः। व्याप्तिग्रहे तर्कापेक्षया तर्कमूलव्याप्तिग्रहेऽपि तदपेक्षा स्यादित्यनास्था। क्वचित्तदनपेक्षायां व्यभिचारात्तर्कस्य कारणतैव न स्यादित्यदेश्यं शङ्कानिवृत्तावेव तदुपयोगात्। क्वचिद् व्याघातात् शङ्कैव नावतरति। न हि धूमार्थं वह्निमुपाददानो वह्निं विनापि धूमः स्यादिति शङ्कते। यद्यप्यनौपाधिकत्वग्रहो व्याप्तिग्राहक इत्युक्तं तथापि तत्रापि तर्क एव उपाय इति भावः। तर्कस्याविद्यात्वं व्युत्पादयन्नेव पूर्वोक्तधर्मलक्षणेऽसदर्थानुमितावतिव्याप्तिं परिहरति—स चायमिति। व्याप-

न्यायलीलावतीप्रकाशः

अनुमानानुकूलेति। व्यभिचारशङ्काविरहसहकृतं सहचारदर्शनं व्याप्तिग्राहकम्, सा च तर्केणानिष्टमुपदर्शयता निवर्त्यत इति व्याप्तिग्रहे तर्कस्योपयोग इत्यर्थः। ननु तर्कमूलभूतव्याप्तिज्ञानं तर्कं विनैव तर्कान्तराद्वा। आद्ये व्यभिचारान्न तर्कस्तत्र हेतुः, अन्त्येऽनवस्था। मैवम्। न

न्यायलीलावतीप्रकाशविवृतिः

त्वानुपपत्त्यैव कल्पनीयमिति भावः। वस्तुतो व्याप्तिस्मृतिरेव परामर्शव्यापारिकाकरणमिति व्यापारानुरोधेन तर्ककारणतेतिभावः। व्यभिचारशङ्काविरहेति। यद्यप्यव्यभिचाररूपव्याप्तिग्रहे सा शङ्काग्राह्यसंशयपर्यवसन्नत्वेनाप्रतिबन्धिका, अन्यथा विषयपरिशोधकस्यापि शङ्कानिवृत्तिफलमिति किन्नोक्तम्। किञ्च तथा सति शाब्देऽपि योग्यतासंशयः प्रतिबन्धकः स्यात् तथाप्यन्वयव्यतिरेकाभ्यां व्याप्तिज्ञाने व्यभिचारशङ्काग्राह्यसंशयपर्यवसन्ना तदपर्यवसन्ना चान्योन्याभावगर्भव्याप्तिग्रहेऽत्यन्ताभावादिगर्भाप्रतिबन्धिकैवेति सा तर्कापनेया शाब्दे तु न संशयः कथमपि प्रतिबन्धक इत्यपि फलबलादेवावसीयते। प्रत्यक्षे तु संशये सति विना विशेषदर्शनं न ज्ञानमिति तत्र विशेषदर्शनापेक्षेति फलानुरोधादेव निश्चीयते। वस्तुतो विषयपरिशो-

रोपितहेतुसमुत्थत्वात् बाधितविषयत्वाच्च । कोटिद्वयोपनिपाते

---

न्यायलीलावतीकण्ठाभरणम्

कारोपभाग इत्यर्थः । आरोपितेति । आहार्य्यारोपविषयो व्याप्यधी-सत्त्वादित्यर्थः । ननु यद्ययं निर्वह्निः तन्तुना निर्ज्जलः स्यान्नह्युपहितो-ऽर्थः सत्य एव तथा च कथमवयविनेत्यत आह—कोटिद्वयेति । एकको-

न्यायलीलावतीप्रकाशः

हि तर्कं व्याप्तिज्ञानस्य हेतुत्वं ब्रूमः किन्तु व्यभिचारशङ्कानिरासे स च क्वचित् तर्कात् क्वचिद् व्याघातात् शङ्कैव नावतरति । तथाहि—यदि वह्नीतराजन्यो धूमो वह्न्यजन्यः स्यादजन्यः स्यादित्यत्र तर्के कारणं विनैव कार्यं स्यादवह्नेरेव भविष्यतीति शङ्कया भवितव्यम् । उभय-थापि स्वक्रियाघातः । यदि हि कारणं विना कार्य्योत्पत्तिं शङ्केत कथं परप्रतिपत्त्यर्थं वचने प्रवर्त्तेत ? यदि चाऽवह्नेरेव धूमोत्पत्तिं शङ्केत कथं नियमेन धूमार्थं वह्निमुपादत्त इति भावः । यद्यप्यनौपाधिकत्व-ग्रहो व्याप्तिग्राहक इत्युक्तं प्राक् तथाप्ययोग्योपाध्यभावग्रहो न यो-ग्यानुपलम्भादिति तद्ग्रहार्थमपि तर्कोपक्षणीय इत्यविरोधः, तस्या

न्यायलीलावतीप्रकाशविवृतिः

धकस्यापि जिज्ञासानिवृत्तिद्वारा उपयोगः । कामिनीजिज्ञासास्थले-विरोधिविषयकजिज्ञासात्वेन प्रतिबन्धकत्वकल्पनात् । साध्याभाव-जिज्ञासाया अपि प्रतिबन्धकत्वात् । न च परामर्शादेव शङ्कानिवृत्ति-रिति मूलानिवृत्तौ जिज्ञासाया अपि निवृत्तेः किं तर्केणेति वाच्यम् । स्वारसिकशङ्कानिवृत्तावपि विरोधिप्रमाणसद्भावानिबन्धनशङ्कायाः सुलभतया जिज्ञासाया अपि सुलभत्वात् । अतएवाक्रमाचार्येण—

विरोधिप्रमाणसदसद्भावावधारणव्यग्रतया मुहूर्त्तमनुमितौ विलम्बत इति गुणकिरणावल्यां कुसुमाञ्जलावप्युक्तम् । तेन हि प्रवर्त्तमानेन जि-ज्ञासा विच्छिद्यते विच्छिन्नप्रतिपक्षे छिन्न निरालम्बं लिङ्गमधितिष्ठती-त्यादि तस्मात्प्रयोजकत्वं तर्कस्येति । कारणं विनेति । इयमेव शङ्का मूली-भूतव्याप्तिग्रहपरिपन्थिनी । अपरा तु पराभिमतविपर्ययपर्यवसानौप-यिकपक्षविशेषपरिपन्थित्वेनाशङ्किता वह्निमुपाददते । उपादानकार-णीभूताऽन्वयव्यतिरेकानुविधायित्वज्ञानं तत्रेत्यर्थः । यद्यपीति । यद्यप्य-नौपाधिकत्वं लिङ्गतया ग्राहकं प्रागुक्तं प्रत्यक्षे तु व्यभिचारज्ञानविर-हादिरेव जनकस्तथापि तुष्यतु दुर्जन इति न्यायेनेदमुक्तम् । निषत-

चैककोटिपरिग्रहस्य यद्यर्थत्वात् । तथापि किं भूयोदर्शनापेक्षया, व्यभिचारसन्देहस्य तत्रापि सत्त्वात् । विपक्षे(१) बाधकस्यैतदभावेऽपि तुल्यत्वात् । उपाध्यभावस्य चानुकूलतर्कवेद्यत्वादिति चेत् ।

---

न्यायलीलावतीकण्ठाभरणम्

त्यभ्युपगममात्रं "यदि" शब्दो दर्शयतीत्यर्थः । तथापीति । तर्कश्च व्याप्तिग्राहकः, स सकृद्दर्शनविशिष्ट एवेति किं भूयोदर्शनेनेत्यर्थः । यथा सकृद्दर्शनं व्यभिचारिसाधारण्यं तथा पार्थिवत्वलौहलेख्यत्वादौ भूयोदर्शनमपि । किं च भूयांसि दर्शनानि भूयः स्वस्थानेषु दर्शनं वा भूयसां दर्शनं वा तत्सर्व्वं त्रिचतुरादिसाधारण्येन दर्शनानां सहानवस्थानदर्शनेन चानुपपन्नमिति भावः । एतदभाव इति । भूयोदर्शनाभाव इत्यर्थः ।

न्यायलीलावतीप्रकाशः

विद्यायामन्तर्भावमाह—सचायमिति । कोटिद्वयेति । अनियते कोट्युपनिपाते नियतकोटिपरिग्रहो यदि स्यादित्यत्र यदिशब्दार्थ इत्यर्थः । सकृद्दर्शनग्राह्या व्याप्तिरित्याह—तथापीति । ननु तथापि सकृत्सहचारदर्शनस्य व्यभिचारिसाधारणतया व्यभिचारशङ्काधायकत्वात्तन्निरासार्थं भूयोदर्शनापेक्षेत्यत आह—व्यभिचारेति। भूयोदर्शनेऽपि पार्थिवत्वलोहलेख्यत्वयोर्व्यभिचारात्तच्छङ्काधायकत्वादित्यर्थः । ननु विपक्षबाधकाद्भूयोदर्शनाविशेषेऽपि शङ्कानिवृत्तिः स्यादित्यत आह—विपक्षबाधकस्येति । आवश्यकत्वाल्लाघवाच्च तदेव व्याप्तिग्राहकमस्तु किं भूयोदर्शनेनेत्यर्थः । न च भूयोदर्शनं विना विपक्षबाधकस्तर्क एव नावतरति, व्युत्पन्नस्य प्रथमदर्शने तदवतारात् । ननु चानौपाधिकत्वज्ञानं व्याप्तिग्राहकं तद्देशकालतत्रावस्थितघटादीनामुपाधित्वशङ्कानिरासे स्यात् । तच्छङ्कानिरासश्च कस्यचित् साध्याव्यापकत्वज्ञानात्, कस्यचित् साधनव्यापकत्वज्ञानाच्च स्यात् । तच्च न भूयोदर्शनं विनेत्यत आह—उपाध्यभावस्य चेति । अयोग्योपाध्यभावस्य योग्यानुपलब्ध्यग्राह्यत्वेनानुमानाधीनज्ञानत्वेनानवस्थापत्तेरनुकूलतर्कस्यावश्यकतया तत एवानौपाधिकत्वनिश्चय इत्यर्थः । किञ्च भूयोदर्शनानां प्रत्येकं व्याप्तिग्रहाहेतुत्वान्मिलितानां तद्वाच्यम् । न चाशुतरविनाशिनां क्रमिकाणां मेलकं भवति

---

(१) विपक्षबा० ।

मैवम् । प्रथमतो नियतसंवेदनाभावात् । अन्यथोत्तरत्र सन्देहा(१)-नुपपत्तेः । ब्राह्मणत्वरत्नत्वसा(२)दृश्यानां तथा सत्यवभासे उ-त्तरकाले प्रचुर(३)दर्शनस्य विपरीतशङ्कामात्रविच्छेदफलतापत्तेः । भूयः साहित्ये तु नियतसंवेदनव्यवस्थितौ तत्प्रामाण्य एव

न्यायलीलावतीकण्ठाभरणम्

उपाध्यभावग्रहार्थमपि न तदपेक्षेत्याह—उपाधीति । प्रथमत इति । यद्यपि प्रथमदर्शनमात्रेणापि व्याप्तिग्रहोऽनुपलम्भबाधित एव, तथापि तत्-कल्पने तदुत्तरं व्याप्तिसंशयो न स्यादेवेत्यर्थः । ननु व्याप्तिग्रहः प्रथमदर्शनत एव, व्यभिचारशङ्का तु भूयोदर्शनापनेयेत्यत आह—ब्राह्मणत्वेति । तर्हि ब्राह्मणत्वादीनामपि प्रथमदर्शनवेद्यत्वमेव स्यान्न च तथाऽभ्युपगमो वस्तुस्थितिर्वेत्यर्थः । ननु भूयोदर्शनानन्तरमपि संशयतादवस्थ्यमित्युक्तमत आह—भूय इति । भूयस्त्वं त्रिचतुरादिसाधारण्येनाऽननुगतमपि तर्कावतारक्षेमदर्शनत्वेनानुगतं सद् व्याप्तिग्रहहेतुरिति, तदनन्तरमपि व्याप्तिसंशयश्चेत् तदा नूनं तज्ज्ञानप्रामाण्यसंशयाधीन एवेत्यर्थः । सकृद्दर्शनग्राह्यत्वं तु शंकाकदर्थितमेवेति भावः । ननु स्वभावोऽधिकरणस्वरूपम्, अधिकरणं च धूमादिस्तथा च सकृ

न्यायलीलावतीप्रकाशः

भूयस्त्वस्य त्रिचतुरादिभावेनाऽननुगमः । न च व्याप्तेः सकृद्दर्शनग्राह्यत्वे सहचारादर्शनात्तत्र संशयो न स्यादिति वाच्यम्, ज्ञानप्रामाण्यसंशयात्तत्र संशयस्योपपत्तेरिति भावः । कार्त्स्न्येन सम्बन्धो व्याप्तिरित्यभिप्रेत्याह—प्रथमत इति । सामग्रीवैकल्यादित्यर्थः । बाधकमाह—अन्यथेति । विशेषादर्शने सहचारादिसाधारणधर्मदर्शनाद्व्यभिचारसंशये प्रथमदर्शनान्न व्याप्तिनिश्चय इत्यर्थः । ननु भूयोदर्शनमपि संशायकमित्युक्तमित्यत आह—भूय इति । न चैतद्व्याप्तेः सकृद्दर्शनगम्यत्वेऽपि

न्यायलीलावतीप्रकाशविवृतिः

कोट्युपग्रहो निर्वहित्वादिकोट्यभ्युपगमः । न चैतद्व्याप्तेरिति । सकृद्दर्शनेनापि व्याप्तिर्गृहीतैवोत्तरकालन्तु ज्ञानप्रामाण्यसन्देहादेव सन्देह

(१) ० नियतसन्देहानु ० । (२) ० नत्वकठत्वादिसा० (३) ० प्रचुरतरद० ।

सन्देहात्। तर्कस्य तदपनोदकत्वात्।

---

न्यायलीलावतीकण्ठाभरणम्

द्दर्शनेन धूमो परिच्छिद्यमानोपाध्यभावः परिच्छिन्न एव, स एव च व्याप्तिरिति चेन्न। धूमादावुपाध्यभावः सिद्धासिद्धिपराहत एव। अनौपाधिकत्वं च यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यं, तच्च न सकृद्दर्शनगम्यमित्युक्तत्वात्। तर्हि तत्प्रामाण्यशङ्का तत्तर्कानन्तरं न तु भवत्येवाह—तर्कस्येति।

न्यायलीलावतीप्रकाशः

तुल्यमिति वाच्यम्, विपक्षे बाधकाच्छङ्कानिवृत्तिरित्युक्तत्वात्। अत एव न भूयस्त्वेऽननुगमः। यावता दर्शनेन यस्य तर्कावतारस्तावतस्तस्य विवक्षितत्वात्। ननूपाध्यभावो व्याप्तिरभावश्च केवलाधिकरणज्ञानं तच्च स्वप्रकाशत्वात् प्रथमदर्शने ज्ञातमेव। एवं चोपाध्यभावे न किञ्चित् ज्ञातुमवशिष्यते। उपाध्यभावव्यवहारश्चोपाधिज्ञानमपेक्षते दीर्घत्वव्यवहार इवावधिज्ञानम्। मैवम्। प्रकृतसाध्यव्यापकः साधनाव्यापको यो धर्मस्तदभावो न व्याप्तिः। सिद्धासिद्धिभ्यां तन्निषेधानुपपत्तेः। किन्तु यावत्स्वव्यभिचारिव्यभिचारिसाध्यसामानाधिकरण्यमनौपाधिकत्वं तच्च प्रथमतो ज्ञातुमशक्यमेव। किञ्च न वस्तुगत्या व्याप्तेर्ज्ञानमनुमितिहेतुः किन्तु व्याप्तित्वेन तच्चोपाध्यभावत्वम्। नचोपाधेरज्ञाने तदभावत्वेन ज्ञानं सम्भवति, विशेषणज्ञानजन्यत्वाद्विशिष्टज्ञा-

न्यायलीलावतीप्रकाशविवृतिः

इति तुल्यमित्यर्थः। विपक्षे बाधकादीति। तथा च न भूयोदर्शनत्वेन कारणता, किन्तु सहचारदर्शनत्वेनैव। सकृद्दर्शनग्राह्यत्वनियमनिराकरणपरश्च भूयोदर्शनग्राहकत्वप्रवादः। व्यभिचारज्ञानविरहः सहकारी, स च क्वचित्स्वतःसिद्धः, क्वचित्सहचारदर्शनसाध्यः, क्वचित्तर्कसाध्य इति भावः। अत एवाह—अत एवेति। इदं पुनरत्रावधेयम्। यदि धूमान्तरं वह्निं व्यभिचरिष्यतीति शङ्का तदा तद्धूमसहचारग्रहनिवर्त्तनीया। एवं तृतीयचतुर्थधूमादावपि। यदि तु सामान्यत एव क्वचिद् धूमो वह्निं व्यभिचरिष्यतीति शङ्का तदा तर्कापनेया। यदि तु सामग्रीविरहादेव शङ्काविरहस्तदा न भूयोदर्शनस्य न वा तर्कस्योपयोग इति तर्कावतारणमित्युपलक्षणम् व्यभिचारशङ्कानिवृत्तिरपि द्रष्टव्या।

तदेतद्व्याप्तिस्मृतिपक्षधर्मतासंवेदनात्मकमन्यानुभवात् का-र्यस्यास्मादेवोपपत्तेः। न च लिङ्गसंवेदनं वस्तुतस्तद्विषयं विदू-रात्तद्विशेषानवभासेऽजनकम्, लिङ्गत्वोल्लेखितया तु जनकमेकवेद-नमेव पर्यवस्यतीति वाच्यम्। नियमसंवेदनपुरस्कृतजात्युल्ले-

न्यायलीलावतीकण्ठाभरणम्

अत्र तृतीयलिङ्गपरामर्षमसहमानो मीमांसकः प्रत्यवतिष्ठते— तदेतदिति। अनुमानमित्यनुषज्यते। अन्येति। अन्यस्य तृतीयपरामर्ष-स्याऽननुभवादित्यर्थः। कार्य्यस्यानुमितेः, अस्मादेव व्याप्तिस्मृत्यन-न्तरभाविपक्षधर्म्मताज्ञानादेवेत्यर्थः। तथापि विशिष्टपक्षधर्म्मताज्ञा-नमनुमानमिति न प्रमाणमित्यर्थः। ननु यत्र धूमो वस्तुत्वादिना स्फुरति दैवाच्च व्याप्तिस्मृतिस्तत्राप्यनुमितिः स्यादित्याह—न चेति। लिङ्गत्वोल्लेखितया एकवेदनं व्याप्तिविशिष्टपक्षधर्म्मतावेदनमित्यर्थः। नियमेति। यद्धर्म्मोपग्रहेण व्याप्तिर्गृहीता तद्धर्म्मावच्छेदेन लिङ्गग्रहणं

न्यायलीलावतीप्रकाशः

नस्य भूयोदर्शनानां मिथोऽसहभावेऽपि तज्जनितः संस्कार एवे-न्द्रियसहकृतो व्याप्तिग्राहकः। इयञ्च प्रत्यक्षेण व्याप्तिग्रहे साम-ग्री, नतु सर्वत्र आप्तवचनादपि तद्ग्रहादिति संक्षेपः।

पक्षधर्मस्य व्याप्तिविशिष्टत्वेन ज्ञानमनुमितिहेतुरिति मतमाक्षिपति— तदेतदिति। अनुमानमित्यनुषज्यते। व्याप्तिस्मृतिः पक्षधर्मतया लिङ्गस्य ग्रह इत्येवानुमितिहेतुर्लाघवादावश्यकत्वाच्च, तृतीयलिङ्गपरामर्षेऽपि तयोर्हेतुत्वादित्यर्थः। न च प्रमाणवतो गौरवस्यापि न्याय्यत्वमि-त्यत आह—अन्येति। अन्यस्य तृतीयलिङ्गपरामर्षस्याननुभवादित्यर्थः। ननु यत्र दूरात्किंचित्त्वेन धूमो ज्ञायते दैवाच्च वह्निव्याप्यो धूम इति स्मरति तत्रापि व्याप्तिस्मृतिसहकृतपक्षधर्मताज्ञानमस्तीत्यनु-मितिः स्यादित्याशङ्क्य निराकरोति—न चेति। नियमेति। व्याप्यताव-

न्यायलीलावतीप्रकाशविवृतिः

उक्तक्रमेण कदाचित् भूयोदर्शनहेतुतामालक्ष्याह—भूयोदर्शनानां चेति। आप्तवचनादपीति। धूमाधिकरणे धूमसमानाधिकरणात्यन्ताभावाप्रति-योगिवह्न्यधिकरणत्वमित्येवंरूपादित्यर्थः। धूमो वह्निव्याप्य इत्येवं-

त्वादेवोपपत्तेः । अन्यथा परामर्शेऽप्युपप्लवात् । न च पक्षधर्म-तासंवेदनं हेतोरेव जातमित्युपनयस्य पिण्डित(१)विषयतेति वा-च्यम् । तस्य पराङ्गता(२)लिङ्गमात्रविषयत्वादिति केचित् । तन्न ।

न्यायलीलावतीकण्ठाभरणम्

व्याप्तिस्मृतिश्चेति द्वयमेवानुमितिहेतुरित्यर्थः । अन्यथेति । किञ्चित्त्वेन यत्र धूमग्रहस्तत्र परामर्ष एव किं न स्यादित्यर्थः । तथा च या तव परामर्षसामग्री सैव ममानुमितिसामग्रीति भावः । हेतोरेवेति । हेत्ववयवादेवेत्यर्थः । पिण्डितविषयत्वं विशिष्टविषयत्वम् । तस्येति । हेत्ववयवस्य पराङ्गतापन्नत्वं साधनत्वमात्रविषयत्वमित्यर्थः । यद्वा हेत्ववयवत्वेन साधनत्वेन लिङ्गमुपस्थितं लिङ्गतापन्नत्वं पक्षधर्मत्वमात्रं बोध्यते तथा च तस्येत्युपनयस्येत्यर्थः । व्यभिचारशङ्काया एव पक्षीयधूमे व्याप्यशङ्काया अनुमितिप्रतिबन्धकत्वात् वह्निव्याप्योऽय-

न्यायलीलावतीप्रकाशः

च्छेदकप्रकारेण धूमत्वादिना पक्षधर्मस्य ज्ञानं व्याप्तिस्मृतिसहकृत-मनुमितिहेतुः । न च किञ्चित्त्वं तथा । अन्यथा तवाऽपि तत्र तृतीय-लिङ्गपरामर्षः किं न स्यात् सामग्रीसत्त्वादित्यर्थः । ननूपनयं न्याया-वयवमिच्छता तत्प्रयोजनं तृतीयलिङ्गपरामर्षोऽनुमन्तव्यः । न च पक्षधर्मताप्रतिपादनमेव तदर्थः, तस्य हेतुवचनादेव जातत्वादित्यत आह—नचेति । पिण्डितविषयता—व्याप्तस्य पक्षधर्मताविषयतेत्यर्थः । तस्येति । पराङ्गतापन्नं साधनत्वमात्रतात्पर्यकम् । तथा च लिङ्गवचनेन हेतुस्वरूपमात्रं प्रदर्श्यते नतु तस्य पक्षवृत्तित्वमपीति तस्य पक्षधर्म

न्यायलीलावतीप्रकाशविवृतिः

रूपशब्दजन्ये तु पदार्थज्ञानत्वेन सहचारज्ञानस्यापेक्षणीयत्वादिति । तस्य हेतुवचनादेवेति । हेत्ववयवे सम्बन्धवाचकमतुबादिप्रयोगादिति भावः । पराङ्गतापन्नत्वं यदि पक्षे विशेषणत्वं तदा पक्षधर्मताप्रतिपादक-मेवोक्तमिति विरोधः स्यादित्यत आह—साधनत्वमात्रेति । लिङ्गवचनेन हेतु-स्वरूपमात्रमिति । हेतुविशिष्टमात्रं न तु पक्षधर्मताऽपि तदानीमनाकां-क्षितत्वादित्यर्थः । अत एव हेत्ववयवेऽपि न हेतुसम्बन्धवाचकपदप्र-

(१) ० स्य विशिष्टविष० । (२) ० तापन्नलि० ।

यथा व्यभिचाराग्रहेऽपि व्यभिचारशङ्कायां नानुमानम्, तथा व्याप्यपक्षधर्मयो(१)र्वैजात्याग्रहेऽपि वैजात्यशङ्कायां नानुमानम्, हेतोर्व्याप्यत्वासिद्धत्वात्। तस्माद् व्याप्यपक्षधर्मयोरेकजातीय (२)वेदनमनुमितिकारणं वाच्यम्। स एव परामर्श इति।

अनुमानम्॥

---

न्यायलीलावतीकण्ठाभरणम्

मिति ज्ञानं विना तदनिवृत्तेस्तज्ज्ञानमेव द्रष्टव्यमित्याह—व्यभिचारेति। वैजात्यशङ्का वह्निव्याप्यो न वेति सन्देहः। स एवेति। व्याप्यत्वेन पक्षधर्मताग्रह एवेत्यर्थः। असन्निकृष्टस्तु न व्याप्तिस्मृतिसहकृतेन मनसैव परामर्शो जन्यते व्यापाराभावाच्च स्मृतिर्न प्रमाणान्तरम्। यद्यपि धूमे धूमत्वेन गृहीतव्याप्तिस्मरणानन्तरं वह्निव्याप्योऽयं न वेति संशयो न स्यादेव विशेषदर्शनात, सामान्यनिश्चयेऽपि पक्षीयधूमे संशयः स्यादिति चेन्न। धूमो वह्निव्याप्य इति ज्ञानानन्तरमयं धूमो वह्निव्याप्यो न वेति विशेषसंशयस्यानुदयात्। तथापि वह्निव्याप्यवानयमिति शाब्दज्ञानादनुमितिदर्शनादन्यत्रापि तथा कल्पनात्। किंच व्याप्तेर्विशेषणस्य स्मरणे विशेष्यण लिङ्गेन सहेन्द्रियसन्निकर्षे विशिष्टज्ञानस्यैव सम्भवात्। न चानुमितिसामग्र्या बलवत्वात् सैव स्यादिति वाच्यम्। तावन्मात्रस्यानुमितिसामग्रीत्वाभावस्योक्तत्वात्।

न्यायलीलावतीप्रकाशः

तोपनय एव उपनयस्य फलमित्यर्थः। यथेति। यन्निश्चयोऽनुमितिप्रतिबन्धकस्तत्संशयस्यापि तत्त्वादित्यर्थः। वैजात्येति। अत्र वैजात्यमतिव्याप्यत्वम्। तथा च यज्जातिपुरस्कारेण व्याप्तिर्गृहीता पक्षधर्मस्य तदन्यजातीयत्वशङ्कायां वह्निव्याप्योऽयं धूमो न वेति संशयात्पक्षवृत्तिधूमे धूमत्वेन ज्ञातेऽप्यनुमितिर्न स्यादिति पक्षधर्मस्य व्याप्यत्वज्ञानमावश्यकमित्यर्थः। तद्दृष्टान्तेनाऽन्यत्रापि तत्साध्यमित्यभिप्रेत्याह—स एवेति।

ननु धूमो वह्निव्याप्य इति स्मरतो धूमत्वज्ञानस्य विशेषदर्शनत्वात्संशयो न युक्तः। अन्यथा तत्र परामर्शोऽपि न स्यात्।

---

(१) ०था व्याप्तिपक्षधर्म्मतयोर्वै०। (२) ०तीयत्वे०।

शब्दस्तु न मानान्तरम् । पदानि स्मारितार्थसंसर्गविज्ञप्ति

---

न्यायलीलावतीकण्ठाभरणम्

शब्दस्त्विति । तत्साध्यस्य पदार्थसंसर्गस्यानुमानादेव सिद्धेरि·

न्यायलीलावतीप्रकाशः

अथ सामान्यनिश्चयस्य सामान्यसंशयप्रतिबन्धकत्वाद् धूमसामान्ये संशयो मा भूद्विशेषसंशयश्च विशेषनिश्चयनिवर्त्तनीय इति धूमविशेषे व्याप्यत्वसंशयनिरासार्थं पृथग्व्याप्तिनिश्चयो वाच्य इति चेन्न । यत्र हि यद्व्यावर्त्तकधर्मदर्शनं तत्र न तत्संशयः, तच्च सामान्ये विशेषे वेति न विशेषः । अथ व्याप्तेर्विशेषणस्य स्मरणं पक्षधर्मस्य विशेष्यस्येन्द्रियसन्निकर्षात्तयोरसंसर्गाग्रहाच्च विशिष्टज्ञानसामग्री· सत्त्वाद्व्याप्यत्वपरामर्ष आवश्यक इति चेत् । न । प्रत्यक्षसामग्रीतोऽनु· मितिसामग्र्या बलवत्त्वमित्यनुमितेरेव तत्रोत्पत्तेः । अन्यथा तृतीय· लिङ्गपरामर्षानन्तरं पुनः परामर्षान्तरोत्पत्त्यापत्तेः । किञ्च इन्द्रियास· न्निकृष्टे धूमे स्मृते प्रत्यक्षविशिष्टज्ञानसामग्रीविरहादनुमितिर्न स्यात् ।

अत्राहुः । वह्निव्याप्यवानयमिति शाब्दज्ञाने व्याप्यत्वावच्छे· दकधूमत्वादेरग्रहादनुमितिर्न स्यादिति व्याप्यत्वज्ञानस्य तत्र कारण· त्वं क्लृप्तमित्यन्यत्राऽपि तथा ।

अथ वह्निव्याप्यत्वमपि वह्निव्याप्यत्वावच्छेदकम् । तथाहि–वह्नि· निरूपितधूमादिप्रत्येकवृत्तिरेव व्याप्तिर्व्याप्तित्वेन सकलधूमादिव्याप्त्य· वच्छेदिका, आश्रयभेदेन व्याप्तिभेदात् । मैवम्, धूमादिसकलवृत्ति· व्याप्तौ मानाभावात् । यत्र वह्निव्याप्यस्तत्र वह्निरिति व्याप्तौ शाब्द· व्याप्यत्वबुद्धौ प्रत्येकवृत्तिव्याप्त्याश्रयस्यैव विषयत्वात् प्रत्येकवृ· त्तिव्याप्तिज्ञानं विना तज्ज्ञानाभावात् । किञ्च अनुमितिं प्रति व्या· प्यत्वज्ञानं कारणं लाघवादुपजीव्यत्वात् । न चानुमितेः पूर्वं तस्या· सिद्धौ युगपदुपस्थित्यभावान्न लाघवावतार इति वाच्यम् । यत्र व्याप्ति· धूमत्वयोर्वैशिष्ट्यं प्रथममेव युगपत्प्रत्यक्षेण पक्षधर्मे भासते शब्दस्य दूषणत्वाच्च असन्निकृष्टेऽतीन्द्रिये च परामर्षो व्याप्तिज्ञानसहकृतेन मनसा जन्यते । न चैवं व्याप्तिस्मृतेरिन्द्रियादिवन्मानान्तरत्वापत्तिः, व्यापाराभावेनाकारणत्वादिति संक्षेपः ।

पूर्वकाणि, योग्यतासत्तिमत्त्वे सति संसृष्टार्थपरत्वात्, गामभ्या-

न्यायलीलावतीकण्ठाभरणम्

त्यर्थः । तदेवानुमानमाह—पदानीति । वेदपदानि पक्षयित्वैवानुमानं तथा च न वेदोऽपि स्वातन्त्र्येण प्रमाणमिति भावः । तातपर्य्यविषयेति—साध्यविशेष्यमतो नाऽनभिमतसंसर्गसिद्धिः । योग्यतेति । आकांक्षायोग्यतासत्तिमत्त्वादित्यर्थः । अन्यथा संसृष्टार्थपरत्वं संसृष्टत्वप्रकारक-

न्यायलीलावतीप्रकाशः

शब्द इति । पदार्थसंसर्गस्यानुमानादेव सिद्धेरित्यर्थः । तदेवानुमानमाह—पदानीति । वैदिकानि लौकिकानि पदानि तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणीत्यर्थः । तेन संसर्गस्य बहुप्रकारकत्वेऽपि नाऽनभिमतसंसर्गसिद्ध्याऽर्थान्तरम्, तस्य तात्पर्याऽविषयत्वात् । अन्यथा शब्दस्य मानान्तरत्वेऽपि अभिमतान्वयबोधो न स्यात् । यत्तु संसर्गान्तरज्ञानापूर्वकाणीति पक्षविशेषणमिति । तन्न । तस्य पूर्वं ज्ञातुमशक्यत्वात् । संसृष्टार्थेति । ननु संसृष्टो योऽर्थस्तत्परत्वं तत्परसन्नि-

न्यायलीलावतीप्रकाशविवृतिः

योग इतिभावः । तदन्यजातीयत्वशङ्कायामव्याप्यत्वशङ्कायामित्यर्थः ।

अनुमानम् ।

पदार्थसंसर्गस्येति । तथा च विद्याद्वैविध्याज्ञानुपपन्नमिति भावः । मीमांसकाद्यवच्छिनत्ति वैदिकानीति । पक्षता च वाक्यविशेषत्वेन न तु वैदिकत्वादिनेत्यवधेयम् । विपरीतक्रियाकर्मभावेऽर्थान्तरवारणाय सम्भवनियमादिभेदेन चार्थान्तरवारणाय तात्पर्य्यविषयेति संसर्गविशेषणम् । नानार्थे पदार्थान्तरसंसर्गज्ञानपूर्वकत्वेनाऽर्थान्तरवारणाय स्मारितेति । तदर्थस्तु तदुच्चारणतात्पर्यविषयत्वं पदार्थविशेषणम् । वह्नितात्पर्यके धूमोऽस्तीति वाक्ये आहत्य वह्निसंसर्गज्ञानपूर्वकत्वं मासैत्सीदिति पदार्थपदम् । ततश्च पदेन वृत्त्योपस्थाप्यत्वम् । ज्ञानपदञ्च प्रमापरम् । तेन तदवच्छेदतया संसर्गसिद्धौ निःशङ्कप्रवृत्तिः । बहुप्रकारकत्वेऽपि बहुविधत्वेऽपि । ननु तात्पर्यज्ञानदशायामेव नैषा सामग्रीत्यत्र आह—अन्यथेति । तथा च तस्यां दशायामन्वयाबोध उभयसिद्ध इति भावः ॥ तस्येति । संसर्गान्तरत्वं प्रकृतसंसर्गान्यत्वम् तच्च प्रकृतसंसर्गाग्रहे ज्ञातुमशक्यमित्यर्थः । लिङ्गविशेषणं योग्यताऽ

जेति पदकदम्बवदित्यनुमानादेव साध्यसिद्धेः । न च निरा-

न्यायलीलावतीकण्ठाभरणम्

प्रतीतिपरत्वं चेत्तदाऽनाप्तोक्ते निराकांक्षे च व्यभिचारः। संसृष्टो योऽर्थस्तत्परत्वं तत्परसन्निधिमत्त्वं च, पूर्वमप्रतीतप्रतीतौ चानुमानवैयर्थ्यम् । अत्र च कर्तृज्ञानावच्छेदकतया संसर्गसिद्धिः ।ज्ञानज्ञानस्य तद्विषयविषयकत्वात्, संसर्गे च प्रतियोगिन एव विशेषकत्वात् आ-

न्यायलीलावतीप्रकाशः

धिमत्त्वं वाऽसिद्धं संसर्गस्य प्रागप्रतीतेः, प्रतीतौ चानुमानवैयर्थ्यापत्तेः। न च संसृष्टत्वप्रकारकप्रतीतिपरत्वं तत्प्रकारकसन्निधिमत्त्वं वा तदर्थः, अनाप्तोक्ते निराकांक्षे च व्यभिचारात्। मैवम् । आकांक्षायोग्यतासत्तिमत्त्वस्य तदर्थतया विवक्षितत्वात् । ननु बाधकमानाभावो योग्यता, संसर्गज्ञानप्रागभाव आकांक्षा, अव्यवधानेनान्वयप्रतियोगिज्ञानमासत्तिः, ताश्च स्वरूपसत्यो हेतवो नतु ज्ञाता इति न हेतुविशेषणानि। मैवम् । आकांक्षादीनां ज्ञायमानकरणे ज्ञानोपयोगि-

न्यायलीलावतीप्रकाशविवृतिः

न्वयप्रयोजकरूपवत्त्वं बाधकमानाभावो वा । अनाप्तोक्त इति। द्वितीयसाधारण्यार्थम् । निराकाङ्क्ष इति । यथाश्रुतहेतावाकाङ्क्षाविशेषणाभावादिति भावः । आकाङ्क्षेति । प्रमागर्भसाध्ये व्यभिचार इति योग्यतापदम् । विमलं जलं नद्याः कटु इत्यत्र जलनदीसंसर्गतात्पर्यके आकाङ्क्षाविरहेण नदीसंसर्गाबोधके नदीकटुपदयोस्तात्पर्यविषयत्वविशिष्टसाध्यासत्त्वे न व्यभिचार इत्याकाङ्क्षापदम् । एवमेवासत्तिपदमपि नेयम् । तथा च परस्पराकाङ्क्षादिसत्त्वं हेतुः । परस्परसंसर्गपूर्वकत्वं साध्यम् । स्वातन्त्र्येणापि सत्तात्पर्यकत्वं विशेषणं हेतौ प्रवेश्यमन्यथा शुकाद्युदीरिताप्रत्यायकयोग्यवाक्ये व्यभिचारादिति । केचित्तु साकाङ्क्षासन्नपदार्थप्रतियोगिकसंसर्गप्रमापूर्वकत्वं साध्यमत एवान्यसंसर्गमादाय नार्थान्तरमतएव च निराकाङ्क्षानासन्ने व्यभिचारवारणाय पदद्वयमित्याहुः । आकाङ्क्षादीनामिति । ज्ञायमानत्वविशिष्टकारणे ज्ञानोत्पत्तिसहकारित्वे सति प्रमामात्रसहकारित्वादित्यर्थः । विशिष्टविवक्षया यथार्थलिङ्गपरामर्शे व्यभिचारः । भूयोऽवयवेन्द्रियसन्निकर्षे व्यभिचार इति ज्ञायमानपदम् । पक्षतादावातमम-

काङ्क्षेण व्यभिचारः, तत्र संसृष्टार्थपरत्वस्यैवाभावात् ।

---

न्यायलीलावतीकण्ठाभरणम्

कांक्षादीनां च ज्ञातानामेव हेतुत्वम् । अन्यथा तद्भ्रमे प्रमानुदयः स्यात् । ज्ञायमानकरणे ज्ञानोपयोगिव्यभिचारिवैलक्षण्यत्वाच्चाकांक्षादीनां व्याप्तिवज्ज्ञायमानतयैव हेतुत्वात् । प्रतारकवाक्ये च न व्यभि·

न्यायलीलावतीप्रकाशः

व्यभिचारिवैलक्षण्यात् व्याप्तिवत् ज्ञानोपयोगित्वसाधनात् । न चाप्रयोजकत्वम्, आकांक्षाद्यसत्त्वेऽपि तद्भ्रमेण संसर्गप्रत्ययात्, अन्यथा शाब्दाभासोच्छेदापत्तेः। ज्ञानावच्छेदकतया च संसर्गसिद्धिः, ज्ञानज्ञानस्य तद्विषयविषयत्वात् । संसर्गे च सम्बन्धिन एव विशेषत्वात् पक्षधर्मताबलेन व्यापकत्वेनागृहीतस्यापि संसर्गविशेषस्य सिद्धिः । न चैवं भ्रान्तिज्ञानमपि भ्रमः स्यात् । न ह्यसद्विषयत्वेन भ्रमत्वं भ्रमविषयाणां सत्त्वात्, किन्तु व्यधिकरणप्रकारकत्वेन । न च भ्रमस्य ज्ञाने व्यधिकरणप्रकारकत्वं, रजतत्वप्रकारकत्वस्य भ्रमे सत्त्वात् । अन्यथा मानाभावाद्भ्रमोच्छेदापत्तेः । न च प्रतारकवाक्ये व्यभिचारः, तत्र विशेषदर्शनेन संसर्गज्ञानाभावादिति वाच्यम् । तत्र संसर्गे योग्यताविरहात् । अत एव विसंवादिवाक्ये शुकवदुच्चरिते न व्यभिचारः, संसर्गधीस्तत्र योग्यताभ्रमात् । न च भ्रान्तप्रतारकवाक्ये व्यभिचारः, कथं वा तत्र संसर्गप्रमा वक्तृज्ञानानुमानासम्भवादिति वाच्यम्।

न्यायलीलावतीप्रकाशविवृतिः

नायोगे च व्यभिचार इति चरमपदम् । तयोश्च भ्रमेऽपि हेतुत्वम् । व्याप्तेः शब्दशक्तेश्च प्रमामात्रहेतुत्वमेव । न हि तयोर्भ्रमेऽपि हेतुत्वं, तदभावेऽपि भ्रमोत्पत्तेरिति न दृष्टान्तासिद्धिः । आकाङ्क्षादेरपि न भ्रमहेतुत्वं तदभावेऽपि तदुत्पत्तेरिति न स्वरूपासिद्धिरिति भावः । अन्यथेति । आकाङ्क्षादिभ्रमजन्यशाब्दभ्रमानुपपत्तेरित्यर्थः । ज्ञानज्ञानस्येति । विषयग्राहकसामग्रीसहकृतसामग्रीजन्यस्येत्यर्थः । रजतत्वप्रकारत्वस्येति । प्रकारत्वेन सम्बन्धेन रजतत्वस्येत्यर्थः । अन्यथेति । भ्रमविषयत्वेन भ्रम इत्यर्थः । तत्र विशेषेति । आहार्यज्ञानस्य प्रमात्वात् साध्यस्य च प्रमाघटितत्वादित्यर्थः । योग्यताभ्रमादिति । लिङ्गभ्रमाल्लैङ्गिको भ्रम इत्यर्थः । कथं वेति । सवन्मते शब्दस्याप्रमाणत्वादिति भावः । ईश्वरस्यै

तात्पर्यंञ्च ज्ञातं तदर्थप्रतीतिकारणम्, श्वेतो धावतीत्यादौ लक्ष-णायां च तथादर्शनात् । संसृष्टार्थपरत्वं चानन्यथासिद्धसंभूयो-च्चारणादेवावधार्यत इति शब्दभंगः ।

न्यायलीलावतीकण्ठाभरणम्

चारः, योग्यताविरहेण तत्र हेतोरेवागमनात् । भ्रान्तप्रतारकवाक्येऽपि ईश्वरसंसर्गज्ञानपूर्वकत्वान्न व्यभिचारः । ननु संसृष्टार्थपरत्वं संसृष्टार्थतात्पर्य्यकत्वं तात्पर्य्यञ्च ज्ञातमुपयुज्यत इति न हेतुविशेषणमुपपन्नमित्याह—तात्पर्यञ्चेति । नानार्थस्थले लक्षणायां तज्ज्ञानकल्पनात् । ज्ञायमानकरणे ज्ञानोपयोगिव्यभिचारिवैलक्षण्यस्य तत्रापि सम्भवाच्चेत्यर्थः । ननु तथापि हेयमेतदित्याह संसृष्टार्थेति । सम्भूयोच्चारणस्य पचतीत्युक्ते प्रत्यक्षोपस्थितकलायादेरन्वयबोधाभावात्, अध्याहारे चान्वयबोधदर्शनात् हेतुत्वमिति भावः ।

न्यायलीलावतीप्रकाशः

वेदवदीश्वरस्यैव तत्र संसर्गज्ञानानुमानात् । ननु वाक्यार्थज्ञाने तात्पर्यज्ञानस्याहेतुत्वात् संसृष्टार्थपरत्वं न ज्ञातुं शक्यत इति विशेषणासिद्धिरित्यत आह—तात्पर्यं चेति । तात्पर्यज्ञानं शाब्दज्ञानोपयोगि ज्ञायमानकरणे ज्ञानोपयोगिव्यभिचारिवैलक्षण्यत्वात् व्याप्तिवत् । अन्यथाऽन्यपरादन्यान्वयबोधो न स्यात् । न च तात्पर्यग्राहकप्रकरणत्वादेः प्राथमिकत्वादावश्यकत्वाच्च कारणत्वम्, तेषामननुगतत्वेन व्यभिचारात् तात्पर्यव्याप्यत्वस्याननुगमेऽपि सत्त्वात् । श्वेत इति । श्विन्त्री नेनेक्ति, श्वेतगुणयुक्तः पुरुषो द्रुततरं यातीत्यर्थद्वये यत्र श्लेषस्तत्र तात्पर्यग्रहं विना अन्यतरनिश्चयाभावादित्यर्थः । लक्षणायां चेति । यष्टीः प्रवेशयेत्यत्र संसर्गेऽनुपपत्तिज्ञानाभावान्नान्वयानुपपत्तिज्ञानं लक्षणाबीजं किन्तु तात्पर्यानुपपत्तिज्ञानम्, सा च तात्पर्ये ज्ञात एव भवतीत्यर्थः । अनेकार्थे वाच्यत्वनिर्णयोऽपि तात्पर्यज्ञानं विना न स्यादित्यपि द्रष्टव्यम् । संसृष्टार्थेति । न च समभिव्याहारविशेषज्ञानं न हेतुः पचतीत्युक्ते अन्योक्तेन स्वयं वा स्मृतेन कलायपदे-

न्यायलीलावतीप्रकाशविवृतिः

चेति । अनाहार्यज्ञानमेव प्रमारूपमादाय तत्र साध्यसत्त्वमित्यपि मन्तव्यम् । संसृष्टार्थपरत्वमिति । विवक्षितहेतावपि तात्पर्यप्रवेशादिति भावः ।

उपमानं च न मानान्तरम्, अनुमानादेव तदर्थसिद्धेः। यो यत्रासति वृत्त्यन्तरे प्रयुज्यते स तस्य वाचको यथा गोशब्दो गो-

---

न्यायलीलावतीकण्ठाभरणम्

गवयत्वेन प्रवृत्तिनिमित्तेन गवयपदवाच्योयमिति पराभिमतोपमानफलमनुमानादेव भवतीति नोपमानं प्रमाणान्तरमित्याह उपमानमिति । तदेवानुमानमाह यो यत्रेति । गवयपदेऽव्युत्पन्नं नागरिकं प्रत्यारण्यकेन गोसदृशो गवय इति प्रयुक्ते वनं गतस्य गवयपिण्डं प्रत्यक्षयतो नागरस्यातिदेशवाक्यं स्मरतोऽनुमानमुदेति—गवयपदं गवयत्वविशिष्टतत्पिण्डवाचकम् असति वृत्त्यन्तरे तदभियुक्तेनात्र प्रयुज्यमानत्वादिति । व्याप्तिपक्षधर्मतयोरेव प्रयोजकत्वमित्यभिन्धाय तदुपदर्शनाय उदाहरणोपनययोरेव प्राप्तौ प्रतिभासमानजातीय इति प्रत्यक्षक्रियमाणपिण्डविशेष इत्यर्थः। ननु असति वृत्त्यन्तरे इत्यसिद्धमित्य-

न्यायलीलावतीप्रकाशः

नोपस्थिते कलाये कलायं पचतीत्यन्वयबोधाभावात्तज्ज्ञानस्यापि हेतुत्वादिति ।

गोसदृशो गवय इत्याप्तवाक्यं स्मरतो गोसादृश्याश्रयं च पिण्डं प्रत्यक्षयतो गवयत्वविशिष्टोऽयं धर्मी गवयशब्दवाच्य इति भवति मतिस्तत्र वाक्यार्थस्मृतिसहायं सादृश्यज्ञानं करणमित्युपमानं मानान्तरमिति मतमास्कन्दति—उपमानं चेति। ननु वृत्त्यन्तरं विना प्रयोगः शक्तिमज्ञात्वा ज्ञातुमशक्य इति विशेषणासिद्धिः, गोसदृशो

न्यायलीलावतीप्रकाशविवृतिः

तेषामिति । न च तात्पर्यव्याप्यत्वेनानुगमः, तथा सति प्रथमोपस्थित्या तात्पर्यज्ञानस्यैव कारणत्वसम्भवात् । तज्ज्ञानस्येति । सम्भूयैकार्थप्रतिपादकत्वज्ञानस्येत्यर्थः। अत्राकाङ्क्षादिज्ञानं शब्दप्रामाण्यवादिनापि पूर्वं वाच्यम्, व्याप्तिज्ञानन्तु क्लृप्तस्यैव प्रामाण्यसम्भवलाघवेन कल्पनीयम् । न च योग्यतासंशयस्थले न लिङ्गनिश्चय इति नानुमितिसामग्री, शब्दज्ञानसामग्री योग्यतासंशयघटिता तत्राप्यस्तीति वाच्यम् । ग्राह्यसंशयपर्यवसन्नलिङ्गविशेषणसंशयस्यानुमित्यनुकूलतया तादृशसंशयस्यैव प्रतिबन्धकत्वादिति रहस्यम् ॥

अप्रसक्तप्रतिषेधमाशङ्क्याह गोसदृश इति । ननु गवयत्वप्रवृत्ति-

जातीयस्य, प्रयुज्यते चायमसति वृत्त्यन्तरे प्रतिभाससमानजातीय इति । न चायमसिद्धः, मुख्यानुपपत्तिं विनोपचारस्यासम्भवात् । सादृश्यवति प्रयोगस्य कल्पनागौरवापत्तिहतत्वात्(१) । व्यक्तिषु प्रयोगस्यानन्त्यदूषितत्वात् । नूनमयमेतज्जातीयाभिधानाय प्रयुज्यत इति निश्चयोपपत्तेः । न चेदेवमुपमानेऽपि वृत्त्यन्तरनिमि-

---

न्यायलीलावतीकण्ठाभरणम्

त आह मुख्येति । ननु तथापि गवयत्वविशिष्टोऽयं धर्म्मी गवयपदवाच्य इति साध्यं न सिध्येत यावता गोसादृश्यस्यैवातिदेशवाक्यप्रत्यक्षाभ्यां गृह्यमाणस्य प्रवृत्तिनिमित्तत्वादत आह सादृश्यवतीति । गोसादृश्यप्रवृत्तिनिमित्तत्वे गौरवाख्यं तर्कमवतरेदेवेति भावः । ननु किमत्र प्रवृत्तिनिमित्तत्वेनाकाशादिपदवद् व्यक्तिवाचकमेव गवयपदं स्यादत आह व्यक्तिष्विति । साध्य उपसंहरति नूनमिति । उपचारसम्भावनायां सादृश्यस्य प्रवृत्तिनिमित्तत्वसम्भावनायां च उपमानादपि नेदृशफलसिद्धिरित्याह नचेदेवमिति । ननु त-

न्यायलीलावतीप्रकाशः

गवय इत्याप्तवाक्यात् सादृश्यविशिष्टे गवयशब्दवाच्यतोपगमाद् गवयत्वविशिष्टे गवयपदप्रयोगोऽसिद्ध इति विशेष्यासिद्धिरित्याशङ्क्य निराकरोति—न चायमिति । वृत्त्यन्तरस्यानुपपत्तिगम्यत्वात्तदभावे तदभावस्य निश्चयान्न विशेषणासिद्धिः, गवयत्वोपस्थितौ तस्य जातित्वेनाखण्डत्वाद्गोसादृश्यस्योपाधित्वेन गुरुत्वादप्रतीतगुणानां वनेचराणामप्रयोगापत्तेश्च गवयत्वस्य प्रवृत्तिनिमित्तत्वनिश्चयान्न विशेष्यासिद्धिरित्यर्थः । एतच्चानन्यथासिद्धसमभिव्याहारबलेनार्थपरतया प्रयुज्यमानत्वे सामान्यतः सिद्धे सत्युक्तमिति द्रष्टव्यम् । स्वरूपासिद्धिं परिहरति—व्यक्तिष्विति । न चेदेवमिति । गवयत्वे प्रयो-

न्यायलीलावतीप्रकाशविवृतिः

निमित्तत्वनिश्चये सिद्धसाधनमत आह एतच्चेति । तथा च यत्र शक्तिलक्षणौदासिन्येन गवयत्वविशिष्टार्थपरतया प्रयुज्यमानत्वं निश्चितं मानान्तराच्च वृत्त्यन्तरव्यतिरेकनिश्चयस्तत्रानुमानावतार इति भावः । स्वरूपासिद्धिमिति । यद्यपि पूर्वमपि स्वरूपासिद्धिरेव परिहृता तथापि

(१.) वप्रतिहतत्वादिति मु० पु० पाठः ।

त्वान्तरविषयविशिष्टप्रयोगसम्भावनायामपेक्षितासिद्धिप्रसङ्गात् । तथाच तत्त्वकौमुद्यामाचार्य एवमेवोपमानं प्रचिक्षेपे । किरणावलीकारस्तु–कल्पनालाघवात् सादृश्यविशिष्टव्यक्तिवाच्यताप्रतिपादकत्वेऽतिदेशवाक्यस्य प्रतिक्षिप्ते उपलक्षणीयेन गवयशब्दवाच्यता(१)न्वयो गोसदृशो गवयशब्दवाच्य इत्यतो भासते गंगायां घोष इतिवत् । न च वाच्यं लक्षणस्वरूपान्वयेनैव पर्यवसानमत्र,

---

न्यायलीलावतीकण्ठाभरणम्

वैवैतदुपमानप्रतिक्षेपे स्वातन्त्र्यमत आह तथाचेति । वाचस्पतिमिश्रैरपि सांख्यटीकायां तत्त्वकौमुद्यामुपमानप्रक्षेपेऽयं पन्था दर्शित इत्यर्थः । कल्पनालाघवादिति । गवयत्वं जातित्वेनाखण्डं लघु, सादृश्यन्तूपाधित्वेन सखण्डं गुरु, तेन सादृश्यविशिष्टं न वाच्य मित्यववृते च? उपलक्षणीयं यद्गवयत्वं तद्विशिष्टे गवयपदवाच्यतान्वयोऽतिदेशवाक्यादेव प्रतीयतेऽन्यत्रोपमानं न वा अनुमानमित्यर्थः । लक्षणस्वरूपेति । लक्षयतीति लक्षणं गोसादृश्यम् । तत्रेति दृष्टान्तो गंगायां घोष

न्यायलीलावतीप्रकाशः

गस्य वृत्त्यन्तरात् गोसादृश्यस्य प्रवृत्तिनिमित्तत्वान्मानान्तरादप्युपपत्तावुपमानाद्गवयत्वस्य वाच्यत्वप्रवृत्तिनिमित्तत्वासिद्धेरित्यर्थः । तथा च सादृश्यस्य प्रवृत्तिनिमित्तत्वे यावद्गौरवाख्यः प्रतिकूलतर्को नावतरति तावन्नोपमानास्यावतार इति । तर्केणेतराप्रवृत्तिनिमित्तकत्वे निश्चिते गवयपदं गवयत्वप्रवृत्तिनिमित्तकमितराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वाद्यन्नैवं तन्नैवमित्यनुमानाद्गवयत्वस्य प्रवृत्तिनिमित्तत्वपरिच्छेदः स्यात् । कल्पनीयप्रमाणसहकारित्वकल्पनापेक्षया क्लृप्तमानसहकारित्वकल्पनस्य लघुत्वादिति भावः । कल्पनालाघवादिति । अतिदेशवाक्यस्याप्तोक्तत्वेन सादृश्याप्रवृत्तिनिमित्तकत्वे निश्चिते गवयपदस्य च सप्रवृत्तिनिमित्तकत्वव्यवस्थितौ लक्षणया गोसदृशपदेन गवयत्वमुपस्थाप्यत इति शब्दादेव गवयशब्दवाच्यत्वं परिच्छिद्यते, अतो नोपमानं मानान्तरमित्यर्थः । लक्ष-

---

(१) सार्थयोगोगवय इति मु० पु० पाठः ।

तत्र तु (१)श्रुतान्वयानुपपत्तेरुपलक्षणीयव्यवस्थितिरिति । यतो द्विविधं सामानाधिकरण्यम्—शाब्दमार्थञ्च । तत्राद्यस्य न कदाचिदनुपपत्तिः माता वन्ध्येति दर्शनात् । द्वितीये तु न क्रियाकारकान्वयमात्रस्य, गंगायां घोष इत्यत्रापि सप्तमीत (२)आधाराधेयभावस्य भासमानत्वात् । वास्तवन्तु नास्त्येव । न हि गोसदृशो गवयशब्दवाच्य इत्युपपद्यते सादृश्यानिमित्ततायास्त्वयैवोक्तत्वात् । उपलक्षणीयमादाय तूपपत्तिर्गङ्गायामिति वदत्रापि तुल्येति नोपमानं मानान्तरम्—इत्याह । प्रलपितमेतद्विचारासहत्वात् । तथाहि केन गवयपदवाच्यतासामानाधिकरण्यमात्रमनुपपन्नम् । किं गोसादृश्येन, उत तदीयगवयशब्दप्रवृत्तिनिमित्ततया ? तथापि

---

न्यायलीलावतीकण्ठाभरणम्

इत्यत्रान्वयानुपपत्त्या लक्षणास्तु अत्र त्वन्वयानुपपत्तिर्नास्तीत्यर्थः । शाब्दसामानाधिकरण्यमभिन्नव्यक्तिकत्वमात्रम् । नहीति । गोसादृश्यविशिष्टो गवयपदवाच्य इति न वस्तुगतिरिति गौरवस्य तत्र त्वयैव दर्शितत्वादित्याह सादृश्येति । तथा च गोसादृश्योपलक्षितं गवयत्वमादाय गवयपदवाच्यत्वप्रतीतिरिति किम् उ-

न्यायलीलावतीप्रकाशः

णेति । लक्षणं गोसादृश्यं तस्य स्वरूपान्वयो गवयशब्दवाच्यतया सामानाधिकरण्यम्, तथा च यो गोसदृशः स गवयशब्दवाच्य इति सामानाधिकरण्यमात्रेणान्वयोपपत्तौ लक्षणाबीजं,श्रुतान्वयानुपपत्तिरिह नास्तीत्यर्थः । तत्र त्विति । गङ्गायां घोष इत्यादौ त्वित्यर्थः । द्वितीये त्विति । कदाचिदनुपपत्तिरित्यनुषज्यते । अन्वयमात्रस्येति । क्रियया कारकमन्वितं कारकेण च क्रियेत्येवं रूपस्यान्वयस्येत्यर्थः । वास्तवं त्विति । अनया क्रियया इदं कारकं सम्बद्धमनेन च कारकेणेयं क्रिया सम्बद्धेत्येवंरूपान्वयविशेषरूपं सामानाधिकरण्यमित्यर्थः । उपलक्षणीयमिति । लक्षणया सदृशपदेनोपस्थापितं गवयत्वमित्यर्थः ।

---

(१) पान्वये सामानाधिकरण्येनैव पर्यवसानम् अत्र तु इति मु० पु० पाठः ।
(२) सप्तमीप्रथमान्तयोराधाराधेयभावस्य प्रतिभासनात् इति मु० पु० पाठः ।

क्रियतिदेशवाक्यव्यक्तया उत्तरकालीनविमर्शसम्भावितया वा ।
नाद्यः, केसरो वृक्षपदवाच्य इति वदुपपत्तेः। नेतरः, निमित्ततोप-
लक्षणतौदासीन्येऽपि(१)वस्तुतोऽन्यतररूपिणोऽप्यस्य शाब्दत्वात्।
नान्त्यः, उदासीनस्वभावस्य शब्दावोदितत्वेन विरम्यव्यापारयो-
गात्(२)। तत्रापि गङ्गार्थमात्रे घोष इति पर्यवसानं स्यादिति चे-
त्। तेन जलमयस्यैव गङ्गाशब्दवाच्यत्वोपलम्भात्, तत्र चानु-

---

न्यायलीलावतीकण्ठाभरणम्

पमानेनेत्याह किरणावलीकार इत्यर्थः। अत्रापि यथाकथंचित् सा-
मानाधिकरण्यमुपपद्यत एवेति लक्षणेत्याशयेनाह केनेति । केसर इ-
ति। वृक्षपदे केसरत्वस्य प्रवृत्तिनिमित्तत्वेऽपि सामानाधिकरण्यस्य
वास्तवस्य तत्र दर्शनादित्यर्थः। अन्यतररूपिण इति। अस्य गोसादृश्य-
स्य निमित्ततोपलक्षणत्वयोर्मध्येऽन्यतररूपवत्तया शाब्दाऽनुभवविष-
यकत्वेन शब्दस्य पूर्वमेव पर्यवसानादित्यर्थः। उत्तरकालीनविमर्श-
संभावितयेति पक्षं दूषयति नान्त्य इति। निमित्ततोपलक्षणतोदासात्
गोसादृश्यसामानाधिकरण्यबोधनात् पूर्वमेवातिदेशवाक्यस्य पर्य-
वसितत्वात् पुनरन्वयबोधकत्वे विरम्य व्यापारापत्तेरित्यर्थः।
तत्रापीति । शक्यलक्षणसाधारणगंगापदान्वयबोधात् क्रमेण लाक्ष-
णिकान्वयबोधने विरम्य व्यापारतापत्तिरित्यर्थः। तेनेति—प्रथमं श-

न्यायलीलावतीप्रकाशः

केसर इति। यद्यपि केसरत्वं न वृक्षशब्दप्रवृत्तिनिमित्तं तथापि गन्धवती
पृथिवीतिवत् सामानाधिकरण्यं भासत एवेत्यर्थः। अन्यतरेति। अस्य
सादृश्यस्योपलक्षणत्वप्रवृत्तिनिमित्तत्वान्यतररूपवतः शब्दान्वयबो-
धविषयत्वादित्यर्थः। उदासीनेति। अतिदेशवाक्येन गवयत्वस्य प्रवृत्ति-
निमित्तस्यानवगमाद्गोसादृश्यमुपलक्षणप्रवृत्तिनिमित्तसाधारण्येन ग-
वयपदवाच्यत्वसमानाधिकरणतया बोधितं पश्चात् प्रवृत्तिनिमित्त-
तया बोधनीयमिति विरम्य व्यापारतापत्तिरित्यर्थः। गङ्गार्थेति। शक्यो-
पलक्ष्यसाधारणगङ्गापदप्रतिपाद्यमात्र इत्यर्थः। तेनेति। प्रथमं लक्षणा-

(१) सीन्येन इति मु० पु० पाठः। (२) व्यापारापत्तेः।

पपत्तेः । अर्थान्तरशङ्कापि स्यादिति चेत् । न । एवंसति स्थिते ऽप्युपचारमात्रविलयात् ।

नन्वेवं सादृश्ये निमित्तत्वेनानुपलब्धेः कस्यचिद्भ्रान्त्यैवमपि स्यादिति चेत् । न । तं प्रति मानव्यवहाराभावात् ।

---

न्यायलीलावतीकण्ठाभरणम्

क्योपस्थितावन्वयानुपपत्तिभावस्यावश्यकत्वादित्याह, लाक्षणिकार्थोपस्थितिपर्य्यन्तं वाक्यस्यापर्य्यवसन्नत्वात् न विरुध्यव्यापारतेत्यर्थः । अर्थान्तरेति । तथा च तमादाय वाक्यं पर्य्यवस्येदित्यर्थः । स्थितेऽपीति । व्यवस्थितेऽपि मंचाः क्रोशन्तीत्यादौ लक्षणा न स्यादित्यर्थः ।

नन्वेवमिति । यदि सादृश्यं प्रथमत एव निमित्तत्वेन स्फुरेत्तदा तदन्वयानुपपत्त्या लक्षणा स्यान्न त्वेवमित्यर्थः। यद्यपि प्रकृते नान्वयानुपपत्तिस्तथापि तात्पर्य्यानुपपत्त्या लक्षणाऽस्तु व्युत्पित्सुं प्रति प्रवृत्तिनिमित्ततात्पर्य्यकमतिदेशवाक्यं निमित्तलक्षणां विना पर्य्यवसन्नमेव न स्यात् । मैवम् । यत्र न प्रवृत्तिनिमित्ततात्पर्य्यकता किन्तु स्वरूपाख्यानमात्रं तत्र लक्षणाबीजाभावादतिदेशवाक्यं श्रुतान्वयं बोधयित्वा पर्य्यवसन्नमथ च गवयत्वविशिष्टोऽयं धर्म्मी गवयदपदवाच्य इति प्रमा तत्र भवतु नूनमुपमानादेव भवतीति तात्पर्य्यात् । करभानिन्दावाक्यश्रवणानन्तरं करभं मनसा करभपदादुपेत्यानुमानस्यैवानुसरणात्, नहि तत्रापि तात्पर्य्यानुपपत्तिः तस्य निन्दामात्रतात्पर्य्यकत्वात् । ननु

न्यायलीलावतीप्रकाशः

या अनवगमादित्यर्थः । अर्थान्तरेति । तथा च कुतो विशेषात्तीरं लक्ष्यत इत्यर्थः । स्थितेपीति । लोकसिद्धे मञ्चाः क्रोशन्तीत्यादावपीत्यर्थः ।

नन्वेवमिति । गोसादृश्यं गवयपदप्रवृत्तिनिमित्तमित्यस्य शब्देनानुपस्थापनादित्यर्थः । ननु तथापि तात्पर्यानुपपत्त्या यष्टीः प्रवेशयेतिवल्लक्षणाऽस्तु गवयपदव्युत्पित्सुं प्रति हि तद्व्युत्पत्तये वाक्यमाप्तेनोक्तं तच्च न प्रवृत्तिनिमित्तप्रतिपादनं विना, न च गोसादृश्यं प्रवृत्तिनिमित्तमतो गोसदृशपदेन गोसादृश्यसमानाधिकरणं गवयत्वं

न्यायलीलावतीप्रकाशविवृतिः

तत्र सादृश्यविशिष्टप्रयोगात्स्वरूपासिद्धिशङ्का इह तु व्यक्तिषु प्रयो-

शाबरं(१)तूपमानमनुमानमेव, स गौरनेन सदृशः स्वसादृश्येनैतद्-

---

न्यायलीलावतीकण्ठाभरणम्

ननु सा गौरेतत्सदृशीति यत्र परोक्षायां गवि गवयसादृश्यप्रतिपत्ति-स्तत्रोपमानं प्रमाणमस्तु, नहि तत्रासन्निकृष्टे विशेष्ये प्रत्यक्षमस्ति श-ब्दस्तादृशो नास्त्येवेत्याह शाब्दमिति । तदेवानुमानमाह—सेति । असा-दृश्ये गवयावच्छेदकत्वात्, तथा च गौर्गवयप्रतियोगिसादृश्यवती गवयनिष्ठसादृश्यप्रतियोगिकत्वात्, यत् यन्निष्ठसादृश्यप्रतियोगि त-त्तत्सदृशमेवेति भ्रातृभगिन्यादौ सामान्यतो व्याप्त्यवधारणादनुमानं पर्यवस्यतीति भावः । यद्वा किञ्चिद्विशेष्यसन्निकर्षेऽपि भ्रमविपरीत-

न्यायलीलावतीप्रकाशः

लक्षितमिति कल्प्यते । न च यथा धूमोऽस्तीत्यत्राग्नौ तात्पर्यमनुमानेन निर्वहतीति न लक्षणा तथा मानान्तरमस्ति येन तन्निर्वाह्यत उपमान-स्याद्याप्यसिद्धेः । अत्राहुः । यत्र प्रवृत्तिनिमित्तविशेषबोधने न तात्पर्यं किन्तु गोसदृशो गवयपदवाच्य इति स्वरूपाख्यानं तत्र प्रवृत्तिनिमित्त-विशेषे तात्पर्याभावान्न तदनुपपत्तिर्लक्षणबीजम्, अपि च धिक्करभकम-तिदीर्घग्रीवमित्यादिवाक्यस्य करभनिन्दातात्पर्यविषयस्य प्रवृत्तिनि-मित्तपरत्वाभावेऽपि तादृशं पिण्डमनुभवतः स्मरतश्च वाक्यार्थमयं क-रभशब्दवाच्य इति भवति मतिः । न च तत्र लक्षणाबीजम् । वस्तुतस्तु सर्वत्रान्वयानुपपत्तिरेव लक्षणाबीजं न तात्पर्यानुपपत्तिरिति न्यायद्वि-तीयाध्यायप्रकाशे व्युत्पादितमस्माभिः । ननु गोप्रतियोगिकगवयनि-ष्ठसादृश्ये प्रत्यक्षेण गृहीते गवयप्रतियोगिकं गोनिष्ठसादृश्यं गवयस-दृशो गौरिति प्रतीयते । तन्न प्रत्यक्षात्, विशेष्येण गवा सहेन्द्रियासन्नि-कर्षात् । नानुमानात्, तद्धि गोवृत्तिलिङ्गस्य पक्षधर्मताग्रहे स्यात् । स चं न प्रत्यक्षेण नानुमानेन वाऽनवस्थानात् । तस्माद्गोप्रतियोगिकगव-यनिष्ठसादृश्यज्ञानं करणं गवयप्रतियोगिकगोनिष्ठसादृश्यज्ञानं फल-मित्युपमानं मानान्तरमित्यत आह—शाबरन्त्विति । 'स्वसादृश्येन'

न्यायलीलावतीप्रकाशविवृतिः

वादाशङ्कितां तां परिहरतीत्यर्थः । वस्तुतः सर्वत्रान्वयानुपपत्तिरेवेति । यद्य-

---

(१) शाब्दं तु० ।

वच्छेदकत्वात्, यदेवं तदेवं यथा भ्रात्रा भगिनीति । उपमानभङ्गः ।

---

न्यायलीलावतीकण्ठाभरणम्

प्रत्यभिज्ञादेर्दृष्टत्वादसन्निकृष्टसादृश्ययोर्ज्ञानमपि प्रत्यक्षादेव सादृश्यस्योभयत्राप्येकत्वात्, तदुक्तं टीकाकृता–'नहि यावत् प्रत्येतव्येन्द्रियसंनिकर्षः कारणमि'ति ।

न्यायलीलावतीप्रकाशः

स्वप्रतियोगिकसादृश्येनेत्यर्थः । 'एतदवच्छेदकत्वात्' गवयावच्छेदकत्वादित्यर्थः । सदृशद्वयान्तरदर्शने यो यद्गतसादृश्यप्रतियोगी स तत्सदृश इति प्रत्यक्षेण व्याप्तिग्रहे सति गौर्गवयप्रतियोगिकसादृश्यवती गवयनिष्ठसादृश्यप्रतियोगित्वादिति यत्तद्भ्यां सामान्येन व्याप्तिग्रहात् । न च गवयनिष्ठसादृश्यप्रतियोगित्वं गोस्तदसन्निकर्षे कथं ज्ञेयमिति वाच्यम् । गवयगतसादृश्यावित्तिवेद्यत्वात् । तस्य सादृश्ये गोः प्रतियोगित्वेनैवान्वयः. अन्यथा गोसादृश्ये गोरनन्वयापत्तेः । व्याप्तिग्रहं विना च गोसादृश्यबुद्धेरसिद्धेः । यद्वा सादृश्यस्योभयवृत्तिधर्मस्यैकनिष्ठताभानेऽपरनिष्ठस्याप्येकत्वेव ज्ञाने प्रत्यक्षेण भानं,

न्यायलीलावतीप्रकाशविवृतिः

व्यन्वयानुपपत्तिज्ञानं विनाऽपि तात्पर्यानुपपत्तिज्ञानाद्गङ्गायां घोष इत्यादौ लक्षणाकल्पनं तथापि तात्पर्यानुपपत्तिरव्यापिका, अन्वयानुपपत्तिस्तु व्यापिका । यष्टीरित्यादावपि प्रवेशनविशेषानन्वयित्वायष्टेरित्येतावदभिप्रायेणेदमुक्तम् । कल्पकत्वं तु लिङ्गभावेन सर्वस्यानुपपत्तेर्विरुद्धमेवेति दिक् । स्ववृत्तिसादृश्येनेत्यर्थे स्वरूपासिद्धिः स्यादिति व्याचष्टे स्वप्रतियोगिकेति । गवयसादृश्येति । गवयनिष्ठसादृश्येत्यर्थः । गोः प्रतियोगित्वेनेति । यद्यपि प्रतियोगित्वभानेऽपि प्रतियोगित्वत्वं न भातमिति लिङ्गतावच्छेदकप्रकारकलिङ्गज्ञानाभावान्नानुमितिसामग्री, तथापि गवा सदृश इत्युल्लेखात्तृतीयार्थस्य प्रतियोगित्वस्य तदवच्छेदकधर्मप्रकारिकैव धीरिति भावः । शाब्दोपमानस्यानुमानेनान्यथासिद्धिमुक्त्वा प्रत्यक्षेण तामाह यद्वेति । 'उभयनिष्ठधर्मस्य' शृङ्गित्वादिसामान्यस्य, यदुक्तं सामान्यान्येव भूयांसीत्यादि, तथा च गवये गोप्रतियोगिकसादृश्यभाने गवयप्रतियोगिसादृश्यमपि गवि भातमेवोभयप्रतियोगिकसादृश्यस्य संयोगवदेकत्वादिति भावः । न-

नापि चार्थापत्तिः पृथगुपपद्यते(१)। यद्धि यदभावेन नियः

न्यायलीलावतीकण्ठाभरणम्

जीवी देवदत्तो गृहे नास्तीति ज्ञाने सति बहिःसत्त्वं विना जीवतो गृहासत्त्वमनुपपन्नमिति ज्ञानानन्तरं बहिरस्तीति ज्ञानं पीनो ( देवदत्तो ) दिवा न भुंक्ते इति श्रुतार्थानुपपत्त्या रात्रौ भुंक्त इति ज्ञानं प्रत्यक्षाद्यसाध्यं करणान्तरं विना अनुपपन्नमर्थापत्तिमानप्रमाणकमिति मीमांसकमतमास्कन्दति नापि चेति । पृथगनुमानादिति शेषः । यद्धीति । जीवतो गृहासत्त्वं बहिःसत्त्वम

न्यायलीलावतीप्रकाशः

यावद्विशेष्यसन्निकर्षस्य प्रत्यक्षाप्रयोजकत्वात् । अन्यथा भ्रमविपरीतप्रत्यभिज्ञानयोर्विलयापत्तेः। तदनन्तरं मानसं ज्ञानमिति भावः।

जीवी देवदत्तो गृहे नास्तीति ज्ञाने सति बहिःसत्त्वं विना जीविनो न गृहासत्त्वमिति ज्ञानानन्तरं बहिरस्तीति ज्ञानमस्ति, तत्रान्वयव्यतिरेकाभ्यामनुपपत्तिज्ञानं करणमित्यर्थापत्तिर्मानान्तरमिति मतं निरस्यति--नापीति । यद्धीति । यद्व्यतिरेके यस्य नियतानुपपत्तिस्तद्व्य

न्यायलीलावतीप्रकाशविवृतिः

त्येवं संयोगवदेवोभयाश्रयसन्निकर्षे सत्येव ज्ञायतेत्यत आह—यावद्विशेष्येति । यावत्प्रकाराश्रयेत्यर्थः । तथा च संयोगस्य व्यासज्यवृत्तितया तदाश्रयत्वस्य मिलितपर्याप्त्याऽस्तूभयसन्निकर्षापेक्षा तत्प्रत्यक्षे सामान्यसाक्षात्कारे तु नैवमिति भावः । यदि च यावत्प्रकाराश्रयसन्निकर्षः कारणं तदा रजतत्वाश्रयसन्निकर्षाभावे रजतभ्रमो न स्यादित्याह अन्यथेति । विपरीतप्रत्यभिज्ञानमपि भ्रान्तप्रत्याभिज्ञानमेवोक्तम् गोबलीवर्दन्यायाच्च भेदेनोपन्यासः। एतच्चोपलक्षणम् तथासति रजतादिप्रमाविलयोऽपि द्रष्टव्यः। नन्वेवं गोरसन्निकर्षे तद्विशेष्यकप्रत्यक्षं न स्यादित्यत आह तदनन्तरमिति । काव्यमूलमानतज्ज्ञानवदिति भावः। वस्तुतः सामान्यमात्रं न सादृश्यम्, सप्रतियोगिकत्वानुपपत्तेः, स्वस्यापि स्वसदृशत्वापत्तेश्चेति तदसाधारणधर्मवत्त्वाभावघटितं तद्वाच्यम्। न च तद्ग्रहः प्रत्यक्षेण तदसन्निकर्षेण योग्यानुपलब्धेरभावादिति प्रथमकल्प एव समीचीनः। अत एव हि चिन्ता

(१) ०गुपलभ्यते।

तानुपपत्ति तत्तद्व्यतिरेकनियमवदेवेति क्वचिदुपलब्धमुपपादकं कल्पयति न वा । न चेदतिप्रसक्तिः । उपलब्धं चेत्, नियमप-

न्यायलीलावतीकण्ठाभरणम्

न्तरेण नियतानुपपन्नम्, तथा च यत्र बहिःसत्त्वं न तत्र गृहासत्त्वमिति व्यतिरेकव्याप्तिपर्य्यवसन्नम्, नानुपपत्तिस्तथा च सा ज्ञायमानकरणमिति व्यतिरेकव्याप्तिज्ञानतया तन्निमित्तमनुमानमेवार्थापत्तिरित्यर्थः। तथा च देवदत्तो बहिःसन् गृहनिष्ठाभावप्रतियोगित्वात् यन्नैवं तन्नैवमिति व्यतिरेकी, यदाऽहमिह तदा नान्यत्र यदाऽन्यत्र तदा नेहेति स्वशरीर एव व्याप्तिग्रहात्। अर्थापत्तौ स्वरूपसती व्याप्तिर्हेतुर्नानुमान इति चेत्। तथा सति अर्थापत्त्याभासानवकाशात्। स्मृतदेवदत्ते च मनसैव गृहनिष्ठाभावप्रतियोगित्वग्रहात्। ननु गृहासत्त्वं बहिःसत्त्वमन्तरेण विरुद्धमिति विरो-

न्यायलीलावतीप्रकाशः

त्रिरेकयोर्व्याप्तिरिति क्वचित् ज्ञानवत उपपादककल्पनमतादृशस्य चेत्यर्थः। नियमेति। उपपादकाभाववत्युपपाद्याभावनियमोऽनुपपत्तिरिति व्यतिरेकव्याप्तिमत उपपाद्याद्व्यतिरेक्यनुमानमुद्रयैव साध्यसिद्धेः किमर्थापत्त्या। न चान्यस्य व्याप्त्यान्यस्य गमकत्वेऽतिप्रसङ्गः, साध्याभावव्यापकाभावप्रतियोगित्वस्य नियामकत्वात्। न चार्थापत्तौ स्वरूपसती व्यतिरेकव्याप्तिर्गमिका नानुमान इति वाच्यम्। अनुपपत्तेर्ज्ञानं विना कल्पनानुदयात्, अर्थापत्त्याभासानवकाशात्वेत्यर्थः। ननु व्याप्तस्य पक्षधर्मताज्ञानमनुमाने, अत्र च व्यतिरेके व्याप्तिरन्वयस्य पक्षधर्मत्वमिति व्याप्तिपक्षधर्मताज्ञानजन्यज्ञानमपि नानुमितिः। न च साध्याभावव्यापकाभावप्रतियोगितया पक्षधर्म-

न्यायलीलावतीप्रकाशविवृतिः

मणिकृता न प्रत्यक्षेणान्यथासिद्धिरुक्ता। केचित्तु यावद्विशेष्यसन्निकर्षस्येत्यादिफक्किका यथाश्रुतैवेत्यभिप्रायेण तद्विशेष्यकसाक्षात्कारे तदिन्द्रियसन्निकर्षत्वेन हेतुतेति यावद्विशेष्यसन्निकर्ष एव हेतुरायाति, रजतादिभ्रमे च रजतत्वविशेषणमेवं प्रत्यभिज्ञानेऽपि तत्तेत्येकदेशिमतमतेदित्याहुः। तदयुक्तम्। यथाश्रुतग्रन्थयोजने तदनन्तराभिस्यादिग्रन्थानवतारात्, यथोक्तयोजने चोक्तदोषास्पर्शादिति। अत्र

क्षधर्मतावद्व्यतिरेकस्यैव । अनुपपद्यमानस्योपपादकासत्त्वे विरोधो गमक इति नानुमानमिति चेत् । न । अनुपलब्धेरप्यनुपलभ्य-

---

न्यायलीलावतीकण्ठाभरणम् ।

धज्ञानमात्रं करणमिति शङ्कते अनुपपद्यमानस्येति । एवं सति भट्टाभिमतानुपलब्धिरपि न प्रमाणान्तरं स्यात्, भूतले घटवत्ता तदनुपलब्धिविरोधिनीति ज्ञानादेव भूतले घटाभाव इति ज्ञानसम्भवादित्याह नेति । ननु सामान्यतोदृष्टेन जीवी क्वचिदस्तीति गृहस्यापि विषयत्वात् योग्यानुपलब्धेश्च तत्राभावग्रहात् मानयोर्विरोधाद्बहिःसत्त्व-

न्यायलीलावतीप्रकाशः

स्य ज्ञानमनुमितिहेतुः, केवलान्वयिनि तदभावात् । मैवम् । व्यतिरेकसहचाराल्लिङ्ग एव व्याप्तिग्रहात् प्रतियोग्यनुयोगिभावस्य नियामकत्वात् अन्वयव्यतिरेकिवत् । तथापि जीविदेवदत्ताभावो गृहे वर्तमानो न बहिःसत्त्वे लिङ्गं देवदत्तावृत्तित्वात् । न च गृहनिष्ठाभावप्रतियोगित्वं लिङ्गम्, प्रतियोगित्वस्य देवदत्तधर्मतया तदसन्निकर्षे प्रत्यक्षेण ज्ञातुमशक्यत्वात् । अत एव देवदत्तस्य विशेष्यस्यासन्निकर्षात्तृतीयलिङ्गपरामर्शोऽपि नेन्द्रियात् । अत्राहुः । व्यतिरेकव्याप्तिज्ञानसहकृतेन मनसैव स्मृतदेवदत्तविशेष्यकस्तृतीयलिङ्गपरामर्शः । यथा च न सहकारि मानान्तरं तथोपपादितमधस्तात् । अनुपपद्यमानस्येति । उपपादकस्य बहिःसत्त्वस्याभावे उपपाद्यस्य गृहनिष्ठजीविदेवदत्ताभावस्य अभावाद्विरोधेऽर्थापत्तिरनुमाने तु न तथेत्यर्थः । अनुपलब्धेरिति । यत्रापि योग्यानुपलब्धिरभावप्रमाकरणं तत्राप्यनुप-

न्यायलीलावतीप्रकाशविवृतिः

च उपमानपार्थक्ये मुख्यमिदं बाधकम्-गवयत्वविशिष्टो गवयशब्दवाच्यः असतिवृत्त्यन्तरे गवयशब्दप्रयोगविषयत्वादित्यनुमानादेव फलसिद्धिरिति । साध्यप्रसिद्धिश्चातिदेशवाक्यादेव पक्षविशेषणमहिम्ना चाभिमतसिद्धिः ।

अप्रसक्तनिषेधमाशंक्याह अन्वयव्यतिरेकिवदिति । जीवीति स्वमतेन दृष्टान्तः । परामर्शोऽपि नेन्द्रियादिति । पक्षविशेष्यकपरामर्शस्यैवानुमितिजनकत्वादिति भावः । व्यतिरेकव्याप्तीति । व्यतिरेकसहचारग्राह्यव्याप्तीत्यर्थः । तेन न पूर्वापरविरोधः । उपपादकस्येति । अनु-

मानसत्त्वे विरोधोऽर्थापत्तिरस्त्विति अभावविलयापत्तेरिति। प्रसिद्धं चैतदित्यलमनेन। अर्थापत्तिभङ्गः।

प्रचुरसाहचर्यसंवेदनात् बुद्धिरबाधिता संभवः। यथा संभवति मेघे जलमिति। तच्चाध्यक्षवत् क्वचिद्व्यभिचारेऽपि मानान्तर-

---

न्यायलीलावतीकण्ठाभरणम्

कल्पनाऽस्तु। यद्वा शतवर्षजीवी देवदत्तो गृह एवेति व्याप्त्यवधारणात् गृहे नास्तीति तदभावग्रहात् जीवनमरणसंशयमापाद्य बहिःसत्त्वकल्पनात् सांशयिकानुपपत्तिरिति चेन्न। आद्ये प्रमाणयोर्विरोधाभाव एव। अन्त्ये जीवननिश्चये संशयानुपपत्तिरेवेत्यादि कथं नोक्तमत आह—प्रसिद्धञ्चेति।

सम्भवति मेघे जलं सम्भवति खार्य्यां द्रोण इति प्रचुरसाहचर्य्यसम्वेदनाज्ज्ञानं सम्भवाख्यं जनयतीति मतं निरस्यति प्रचुरेति। ननु सम्भवो न मानं व्यभिचारिबुद्धिजनकत्वादित्यत आह—तच्चेति। एवं सति इन्द्रियमपि व्यभिचारिज्ञानजनकत्वान्न

न्यायलीलावतीप्रकाशः

लभ्यमानसत्त्वे योग्यानुपलब्धिर्विरोधिरूपार्थापत्तिरेव करणं स्यादिति सापि मानान्तरं न स्यादित्यर्थः। ननु तथापि कथं विरोधस्यानुमानेऽन्तर्भाव इत्यत आह प्रसिद्धं चेति। एतदर्थापत्तिरनुमानमेवंरूपमित्यर्थः। विरोधोपि न तावद्गृह्यते यावदभावयोर्व्याप्तिर्न गृह्यते सहानवस्थाननियमस्य विरोधत्वादिति भावः।

तच्चेति। यथेन्द्रियं दोषसाहित्यात् क्वचिदप्रमाकरणत्वेऽपि प्र-

न्यायलीलावतीप्रकाशविवृतिः

माने च न विरोधज्ञानं करणमिति भावः। सापीति। तवेति शेषः। यद्यपि न गृहे देवदत्त इति ज्ञानानन्तरं देवदत्तो बहिरस्तीति ज्ञानं गृहनिष्ठाभावप्रतियोगित्वलिंगकानुमितिरूपं वाच्यम् तच्चायुक्तं प्रतियोगित्वस्य संसर्गमर्यादया भानेन लिंगतावच्छेदकप्रकारकज्ञानाभावात्। तथाप्यनुपपत्तिरपि प्रतियोगित्वस्यैवेत्युपपाद्यतावच्छेदकप्रकारकज्ञानाभावेन तादृशि ज्ञाने तादृशफलासिद्धेरुभयत्वमेव। नचावश्यंभावज्ञानमेव गमकम्। एवमनुमानेऽपि तस्यैव गमकत्वेन द्विलक्षणसामग्र्यभावेन भेदाभावादिति भावः।

मेवेति चेत् । न । अस्यान्यूनकोटिशङ्कात्मकत्वात् । व्यभिचा-
रिणोऽव्यभिचारिसंवेदनानुपपत्तेः । संभवभङ्गः ।

संदिग्धाप्तोक्तत्वप्रवादपारम्पर्यमैतिह्यम् । कथमन्यथा वेदः

---

न्यायलीलावतीकण्ठाभरणम्

मानं स्यादित्यर्थः । सम्भवति च मेघे जलमत्राह अस्येति । सम्भवति
खार्य्यां द्रोण इति तु व्याप्तिसत्त्वात् अनुमानमेवेति भावः । व्यभिचा-
रिण इति । व्याप्तिरहितादित्यर्थः ।

अविज्ञातप्रवक्तृकं प्रवादपारम्पर्य्यमैतिह्यं प्रमाणं यथा वटे वटे
मधुरतरौ गौरी, किञ्च वेदेऽपि ऐतिह्यमेव प्रमाणमिति पौराणिकास्त-
त्राह—सन्दिग्धेति । शब्द एव तदन्तर्भावः येन वेदस्यापि हेतुदर्शन-
शून्यैर्मन्वादिभिर्ग्रहणधारणानुष्ठानादिकलक्षणपरिग्रहात् वेदप्रामा-
ण्यव्यवस्थितौ प्रमाणशब्दत्वेनाप्तोक्तत्वानुमानात् सन्दिग्धाप्तोक्त-

न्यायलीलावतीप्रकाशः

माणं तथा सम्भवोपीत्यर्थः । सम्भवो द्विविधो यथा सम्भवति ब्राह्मणे
विद्याचारसम्पत्, सम्भवति सहस्रे शतम् । तत्राद्योऽप्रमाणमेव
व्यभिचारित्वात् । अन्यस्त्वविनाभावपुरस्कारादनुमानमेवेत्याह अ-
स्येति । ननु निश्चयात्मकतयाऽनुभूयमानस्य सम्भवज्ञानस्य संशयत्वे
किं मानमित्यत आह व्यभिचारिण इति । मेघस्य जलवत्त्वनियमाभा-
वात्तस्य जलवत्त्वधीर्नाव्यभिचारिणीत्यर्थः ॥

सन्दिग्धेति । निश्चिताप्तोक्तत्वस्य शब्द एवान्तर्भावादित्यर्थः ।
कथमन्यथेति । वेदस्याप्तोक्तत्वे साधकबाधकमानाभावात्ताद्रूप्येणैव
प्रामाण्यादित्यर्थः । हेतुग्रहणशून्यग्रहणधारणानुष्ठानादिरूपमहाजन-
परिग्रहाद्वेदप्रामाण्यास्थितौ प्रमाणशब्दत्वेनाप्तोक्तत्वात्तस्य शब्द एवा-

न्यायलीलावतीप्रकाशविवृतिः

ननु संभवति सहस्रे शतमित्यादिकं प्रमाणं स्यादव्यभिचारादि-
त्याशंक्याह संभवो द्विविध इति । मेघस्येति । तथा च निश्चयत्वानुभवो
भ्रमः । व्याप्तत्वभ्रमादनुमितिरूपभ्रमे वा तथानुभव इति भावः ॥

शब्द एवान्तर्भावादिति । तथाचानुमानान्तर्भावादिति भावः । ताद्रूप्ये-
णैवेति । ऐतिह्यरूपतयैवेत्यर्थः ।

प्रमाण(१)मिति चेत् । न । तत्प्रवादपारम्पर्यस्यादरपरिग्रहादेवा-प्तोक्तत्वानुमानात् । ऐतिह्यभङ्गः ॥

अभावो मानान्तरम् । न ह्यनुपलम्भानपेक्षं नयनमभावग्रा-

---

न्यायलीलावतीकण्ठाभरणम्

स्त्वाभावादित्याह प्रवादेति । प्रवादमात्रं च न मानमिति भावः ।

अभावो मानान्तरमिति भट्टमतमुपन्यस्यति अभाव इति । अन्वय-व्यतिरेकौ दर्शयति न हीति । यन्मते नयनमभावग्राहि तन्मतेऽप्यनुप-लम्भसापेक्षमेव, तथाच नयनमाश्रयग्रह एव उपक्षीणमवश्यापेक्षणी-योऽनुपलम्भस्तस्यैव मानत्वादिति भावः । ननु करणत्वे सति प्रमा-

न्यायलीलावतीप्रकाशः

न्तर्भाव इत्याह प्रवादेति । प्रवादमात्रं च प्रमाणमेव न भवतीति भावः ।

ननु योग्यानुपलब्धिर्मानान्तरम्, अभावग्राहकतदुपलंभे च त-दभावाग्रहादित्यत आह अभाव इति । नन्वनुपलब्धिर्नाभावग्राहिका किञ्चिदिन्द्रियं स्वरूपसन्नभावश्चेति द्वयमेव तद्ग्राहकमित्यत आह नहीति । तथासति शुक्तौ रजतत्वाभावः सन्निकृष्टं चक्षुश्चेति अभाव-ग्रहापत्तौ तद्भ्रमो न स्यादित्यत आह इदमिति । तथा चावश्यकत्वा-त्तत्र योग्यानुपलब्धिर्मानमित्यर्थः । न च तत्र दोष एवाभावग्रहप्रति-बन्धकः, अभावभ्रमानुत्पत्त्यापत्तेः । न च दोषादेव तदुत्पत्तिः, दोष-

न्यायलीलावतीप्रकाशविवृतिः

आवश्यकत्वादिति। कारणताया इति शेषः। यदि दोषमात्रमभावग्रह-प्रतिबन्धकं तदा दोषसत्त्वे तत एव तदसत्त्वे भ्रमसामग्रीभूतदोषादे-वाभावभ्रमः क्वापि न स्यादित्याह अभावभ्रमेति । ननु कश्चन दोषो-ऽभावप्रमाप्रतिबन्धकः कश्चनाभावभ्रमजनक इति नोक्तदोष इत्याश-येनाह न च दोषादेवेति। दोषस्यापीति । तादृशी च सामग्र्यनुपलब्धिरेवा-न्वयव्यतिरेकात्, चक्षुरादेश्चाधिकरणग्रह एवोपक्षयः, प्राप्त्यभा-वेनाभावप्रत्यक्षहेतुत्वात्, विशेषणतायाश्च प्रत्यासत्तित्वानभ्युपग-मादिति भावः। नन्वनुपलब्धिर्न तथा किन्तु विषयीभूतोऽभाव एव

---

(१) वेदस्य प्रामाण्यमि० ।

द्धि, इदं रजतमिति विभ्रमाभावापत्तेः । न च तदकरणं, तल्ल-
क्षणानां व्यापारवत्करणान्तरचरमभावादीनाम(१)व्यावृत्तेः । न

न्यायलीलावतीकण्ठाभरणम्

णत्वचिन्ता तदेव तु नास्तीत्याह न चेति । यावद्व्यापारवत्करणान्तर-
चरमभावित्वस्य फलाव्यभिचारित्वस्य वा करणलक्षणस्य तत्रापि
सत्त्वादित्यर्थः । व्यापारवदिति न कारकविशेषणं, वैयर्थ्यापातात्, व्या-
पारविशिष्टस्यैव कारकत्वात् । न चानुपलम्भस्य व्यापाराभावाद-
करणत्वम्, उक्तलक्षणस्यैव करणत्वनिर्वाहकत्वात् । नन्वन्वयव्यतिरे-

न्यायलीलावतीप्रकाशः

क्यापि भ्रमाभ्रमसाधारणधीहेतुमादायाभावज्ञानजनकत्वात् । तत्र
यद्यभावः स्वरूपसन्नेवाभावग्राहकः स्यात्तदाऽभावभ्रमो न स्यात् ।
ननु भाववत्यभावभ्रमः करणदोषात्, न च प्रतियोगिस्मृत्याश्रयग्र-
हानुपलब्धयः स्वभावतो दुष्टाः, किन्त्विन्द्रियं पित्तादिना दुष्टमिति
तदेव तद्भ्रमहेतुरतोऽभावप्रमायामपि तदेव मानम् । मैवम् । इन्द्रि-
यस्यापि दुष्टत्वं दोषसाहित्यमात्रम् न त्वन्यत्, तच्चानुपलब्धावपि
तुल्यम् । नन्वेतावताऽनुपलब्धिः कारणमस्तु न तु करणमित्यत
आह न चेति । यत्किञ्चिद्व्यापारवत्कारकान्तरचरमभावित्वं व्यापा-
रान्तरस्यापीति तदपि करणं स्यादित्यत उक्तं व्यापारवदिति । तेन
यावद्व्यापारवत्कारकान्तरचरमभावि करणमित्यर्थः । यद्वा यथा

न्यायलीलावतीप्रकाशविवृतिः

तथेत्यत आह—तत्र यदीति । तथाच भ्रमस्थले तदभावान्न साधारण-
सामग्री स इति भावः । तदेव मानमिति । एवं चानन्यगतिकतया विशे-
षणताप्रत्यासत्तिरपि कल्प्येति भावः । तेनेति । सामान्यपदोपादाने-
त्यर्थः । यावदिति । कारकान्तरयावदित्यर्थः । कारकान्तरयावद्व्यापार-
चरमभावि करणमित्यर्थस्तेन फलायोगव्यवच्छिन्नं करणमिति
लभ्यते, इन्द्रियसन्निकर्षादीनां च व्यापाराणां करणत्वमिष्टमेवेति
भावः । नन्वेतन्मते निर्व्यापारस्यापि कारकतया व्यापारवत्पदं
व्यर्थं यावत्कारकान्तरचरमभावित्वस्यैव सम्बद्धत्वादित्यरुचे-
राह यद्वेति । तथाच व्यापारपदं वतिप्रत्ययान्तं चरमव्यापारतृतीयलि-

(१) ०वत् कारकान्तरमभवत्वादीनाम० ।

च नयनमपि करणम्, एकत्रोभयनिषेधादिति। नयनं भूतल एवा-

---

न्यायलीलावतीकण्ठाभरणम्

कस्तर्ह्याह्यनमपि करणं नयनमेव कारणं तत्र स्यादित्यत आह न चेति। शुक्तौ रजतत्वोपलब्धेस्तदभावानुपलम्भ इति भ्रमानुरोधाद-नुपलम्भस्य कारणत्वं वाच्यम्, रजतत्वाभावानुपलम्भश्च शुक्तित्वा-

न्यायलीलावतीप्रकाशः

व्यापारस्य तृतीयलिङ्गपरामर्शादेः कारकान्तरचरमभावित्वेन कारण-त्वं तथैतस्यापि स्यात्। कारकान्तरचरमभावित्वं च नोत्पद्यमानत्वं किन्तु विद्यमानत्वमात्रम्, तच्चानुपलम्भेऽपि विद्यत एव। न चैवं सर्वेषां करणत्वप्रसङ्गः, निमित्तसमावेशेन संज्ञासमावेशस्येष्टत्वात्। यत्तु व्यापारवदिति कारकस्यैव विशेषणम्। तन्न। व्यापारविशि-ष्टस्यैव कारकतया वैयर्थ्यापत्तेः। न च व्यापाराभावान्नानुपलब्धिः करणम्, उक्तमात्रस्यैव करणतानियामकत्वे व्यापारवत्त्वस्य विशेष-णत्वे गौरवात्। ननु चाभावप्रमायामिन्द्रियमपि करणं तदन्वयाद्य-नुविधानादित्यत आह—न चेति। अभावप्रमाया इन्द्रियजन्यत्वेन

न्यायलीलावतीप्रकाशविवृतिः

ङ्गपरामर्शपरं दृष्टान्तलाभायोपात्तमिति भावः। व्यापारद्वारा कारका-न्तरचरमभावित्वं कर्मादेरपीत्यतिव्याप्तिरित्याशंक्य निराकरो-ति नचैवमिति। विशेषणमिति। यथाश्रुतमेवेति भावः। अन्यथा प्रथमप-क्षभेदानुपपत्तेः। व्यापारविशिष्टस्येति। यद्यपि निर्व्यापारानुपलब्धेरपि कारकत्वाभ्युपगमात्तद्विशेषणं व्यावर्त्तकं भवत्येव, तथापि तथात्वे-ऽपि वैयर्थ्यमेव, व्यावर्तनीयकारकान्तराव्यावर्तकत्वात्। यथोक्तवि-वक्षया तु सिद्धस्य समीहितमिति भावः। उक्तमात्रस्यैवेति। यावत्कार-कान्तरव्यापारचरमभावित्वस्यैवेत्यर्थः। न च पूर्वं व्यापारविशिष्टस्यै-व कारकत्वमुक्तमिदानीं तु निर्व्यापारस्यापि कारकत्वविशेषकरण-त्वस्वीकारे विरोधः। पारिभाषिककरणत्वस्य कारकत्वाव्याप्य-त्वात्। सामान्यविशेषभावस्वीकारस्तु कारकत्वकरणत्वयोर्व्यापा-रविशेषवत्कारणं करणमिति लक्षणाभिप्रायेणेति भावः। अभावप्रमाया इति। यद्यप्यनुपलब्धेरिन्द्रियसहकारितया न परोक्षज्ञानप्रयोजकत्वं का-पि दृष्टं तथा प्राङ्नास्तितास्थले तदपि दृष्टमेवेत्युभयप्रयोज्यत्वे प्रत्य-

न्यथासिद्धमिति(१) चेत् । न । दोषबलात्तद्गतव्यावर्तकधर्मा(२)-नुपलम्भवदभावस्याप्यनुपलम्भेऽनुपलब्धेरकारणत्वात् । अभा-वानुपलम्भेनैव भावग्रहापत्तेश्च । तथासतीन्द्रियमनवकाशमिति

---

न्यायलीलावतीकण्ठाभरणम्

नुपलम्भवद्दोषमहिम्नैवेति नाभावोपलम्भेऽनुपलब्धिः कारणमतो न प्रमाणमित्याह दोषबलादिति । किञ्च नयनं भावग्रहेऽपि करणं न स्यात्

न्यायलीलावतीप्रकाशः

प्रत्यक्षत्वमनुपलब्धिजन्यत्वेन संकरापत्तेः, किन्तु प्रत्यक्षज्ञानभिन्नत्वं(३) तथापि विरुद्धयोरुपाध्योरपि संकरो न भवत्येव । अथाधिकरणधी-रिन्द्रियव्यापार इति न तदन्यथासिद्धम्, अन्यथा संनिकर्षापेक्षी-णमिन्द्रियमपि न हेतुः स्यात् । मैवम् । हेतुत्वे सिद्धे तद्व्यापारत्वात्, तदेव नास्ति प्राप्त्यभावात् । न च विशेषणता प्राप्तिः, विशेषणतायां सत्यामिन्द्रियग्राह्यत्वं तस्मिंश्च सति विशेषणतेत्यन्योन्याश्रयात् । न च ज्ञानाकरणकत्वादभावप्रमाया इन्द्रियसाध्यत्वम्, यथाहि ज्ञान-करणकत्वाविशेषेपि न शाब्दादेरनुमितित्वमेवमज्ञानकरणकत्वेपी-न्द्रियजन्यं साक्षात्कारि तद्विजातीयं चानुपलब्धिजन्यमिति भावः । दोषबलादिति । तद्गतः शुक्तिगतो व्यावर्तको धर्मः शुक्तित्वादिस्तस्या

न्यायलीलावतीप्रकाशविवृतिः

क्षत्वपरोक्षत्वप्रसङ्ग इति भावः । अनुभवत्वेनेति । यद्यप्यवमनुभवत्वमेव जातिर्मास्तु प्रत्युत ज्ञातकरणप्रयोज्यं परोक्षत्वम् अनुभवत्वे तु न कि-ञ्चित्प्रयोजकम्, तथापि प्रत्यक्षाभिन्नज्ञानत्वमज्ञात्वा परोक्षत्वप्रत्यया-भावेन तेनैतदन्यथासिद्धिः । प्रयोजकं च संस्कारान्यज्ञानाकरणकत्व-मेवेति । तथापीति । अत्र च विरुद्धत्वं न परस्परात्यन्ताभावसामानाधि-करण्यं, भूतत्वमूर्तत्वयोर्व्यभिचारात् । नापि परस्पराभावव्याप्यत्वं, तदनवधारणात्, किन्तु परस्पराभावात्मकत्वं परस्परनिरपेक्षकारण-प्रयोज्यत्वं चेति भावः । अनुपलब्धत्वप्रत्यक्षत्वसंकरोऽपि बोध्यः । रूपसाक्षात्कारे प्राङ्नास्तितास्थले परस्परव्यभिचारादिति । यथाहीति

---

(१) नयनभूतल एवान्यथासिद्धिरिति० । (२) ०त्वात्तद्गतधर्मानु० ।

(३) अत्र टीकादर्शनेन प्रकाशे कश्चित्पाठो भ्रष्ट इति ज्ञायते ।

## न्यायलीलावतीप्रकाशः

नुपलम्भाद्दोषाधीनादिदं रजतमित्यत्र नाभावग्रह इति शुक्तौ रजतभ्रमोत्पत्तिरिति भावः। नन्वत्रोक्तमभावभ्रमो न स्यात्। अत्र वदन्ति। न प्रतियोगिनोऽनुपलब्धिरभावप्रमाकरणं तज्ज्ञानस्य तत्र हेतुत्वात्। नापि प्रतियोगिमदधिकरणज्ञानाभावः, आरोप्य निषेध्यत इत्यभ्युपगमात्। नापि प्रतियोगिमदधिकरणप्रमाया अभावः, अत्यन्ताभावग्रहे तादृशप्रमाया अप्रसिद्धेः। नाप्यधिकरण[illegible]यां प्रतियोगिमत्त्वप्रकारकत्वाभावः, विनश्यदवस्थघटवत्[illegible] [illegible]मानन्तरं ध्वंसप्रतीतेः, आरोपस्याहेतुत्वेऽपि तत्राभावधीर्न स्यात्। न चानुपलब्धेरभावग्रहाहेतुत्वे घटवत्यपि तदभावग्रहापत्तिः, तत्र घटाभावाभावादेव तदनुपपत्तिः। न चेन्द्रियस्याधिकरणग्रह एवोपक्षयः, अन्धस्य त्वगिन्द्रियोपनीते नीले स्मृतपीतत्वस्यानुपलब्धेरभावधीप्रसङ्गात्। प्रतियोगिग्राहकेन्द्रियग्राह्यत्वे त्वभावधीः प्रत्यक्षा न त्वनुपलब्धिलिङ्गजन्या, अनुपलब्धेरज्ञानात्, आप्तवाक्यस्येव तज्ज्ञापकस्याभावात्। न चाक्षैव रूपाद्युपलम्भस्यानुपलब्धौ रूपाद्यनुपलब्धिं गृह्णाति भूतले घटाभावमिवेति वाच्यम्। उपलम्भस्य त्वन्मतेऽतीन्द्रियतया योग्यानुपलब्ध्योपलम्भाभावस्य ग्रहीतुमशक्यत्वात्, अनुपलब्धिमात्रस्याभा-

## न्यायलीलावतीप्रकाशविवृतिः

स्वमतेनोक्तं वैशेषिकनये शाब्दानुमित्योरभावादिति। दोषाधीनादिति। यद्यपि दोष एव रजतत्वाभावप्रतिबन्धको न तु शुक्तित्वानुपलम्भः, अन्यथा वैपरीत्यापत्तेः, अत एव मूले तथैवोक्तम्, तथापि दृष्टान्तत्वेनैव हेतुत्वं बोध्यम्। यद्यपि दोषवैचित्र्यात् क्वचन दोषोऽभावग्रहप्रतिबन्धको नाभावभ्रमकारणमित्यनुपलब्धेरकारणत्वेऽप्यभावभ्रम उपपद्यत एव, तथापि वक्ष्यमाणप्रकारेणाप्यनुपलब्धिहेतुत्वनिराकरणं शक्यत एवेति हृदि निधाय प्रकारान्तरमाह—अत्र वदन्तीति। तथा चानुपलब्धेर्निर्वक्तुमशक्यत्वात् शक्यत्वे वा कारणत्व एव मानाभावात्कुतः करणत्वमिति भावः। न चारोपो न हेतुरिति प्रतियोगिमदधिकरणज्ञानाभावानुपलब्धिः स्यादित्याह आरोपस्याहेतुत्वेपीति। एवमप्युक्तप्रतीतिस्थले ध्वंसप्रतीत्यनुपपत्तिरिति भावः। आप्तवाक्यस्येति। मन्दिरोदरे चैत्रो निपुणतरमनुसृतो न चोपलब्ध इत्यादेरिति शेषः। वस्तुतो योग्यानुपलब्धिः कारणं भ-

चेत् । न । भावभेद एव(१) सावकाशत्वात् । तुल्यन्यायेनैव वि- वेको न शक्यत इति चेत् । न । अस्याभावेऽपि तुल्यत्वात् ।

---

न्यायलीलावतीकण्ठाभरणम्

अभावानुपलम्भस्यैव तत्र करणत्वसम्भवादित्याह अभावेति । भावभेद इ- ति । किञ्चिद्भावं गृह्णदेवेन्द्रियं न निरवकाशमित्यर्थः । विनिगमनाभावा- त् योग्यं सर्वमेव भावं ग्रहिष्यतीन्द्रियमित्याह तुल्येति । तर्हि भाव- मेव गृह्णाति न त्वभावमपीत्यत्रापि विनिगमनाभाव एवेत्याह अस्येति ।

न्यायलीलावतीप्रकाशः

वग्राहकत्वात् । नचेन्द्रियेणाभावस्य प्रत्यासत्त्यभावः, इन्द्रियानुवि- धानेन तज्जनकत्वसिद्धाविन्द्रियसम्बद्धविशेषणतायाः प्रत्यासत्ति- त्वकल्पनादिति संक्षेपः । किञ्चैवं भावबुद्धिरप्यभावानुपलब्ध्यैव स्यान्न त्विन्द्रियादित्याह अभावानुपलम्भेनैवेति । तथासतीति । भावाभा- वयोरग्रहादित्यर्थः । भावभेद इति । कश्चिद्भाव इन्द्रियेण ग्रहिष्यत इ- त्यर्थः । तुल्येति । भावत्वाऽविशेषेपि कश्चिद्भावोऽनुपलब्ध्या ग्राह्यः कश्चिदिन्द्रियेणेति विवेको न शक्यग्रह इत्यर्थः । अस्याभावेपीति । यथा

न्यायलीलावतीप्रकाशविवृतिः

वत्येव नतु करणं कल्पनीयप्रमाणभावत्वात् । न च भावग्रहेऽप्यभा- वानुपलब्धिरेव करणमिति वैपरीत्यमेवास्त्विति वाच्यम् । अन्यप्र- कारकान्याधिकरणकविरोध्युपलम्भस्यापि विरोधितया तत्प्रकारकत- दधिकरणकविरोध्युपलम्भस्य प्रतिबन्धकत्वं वाच्यमिति निर्विकल्पक निराकरणकभावग्रहयोस्तदसम्भवेनावश्यमिन्द्रियस्य करणत्वात् । न च कारणत्व एव मानाभावः, जलपरमाणौ पृथिवीत्वाभावग्रहप्रसंगेन योग्यानुपलब्धेः कारणत्वात् । न च योग्यव्यक्तिघटितविशेषणताया एव ग्राहकत्वम्, वायौ चक्षुषा रूपाभावप्रतीत्यनुपपत्तेः । न चैवमभावा- नुपलब्धिरपि भावग्रहे कारणम् साधिकरणकप्रकारकबुद्धेरिष्टापत्तेरि- त्याभिप्रेत्याह संक्षेप इति । केचित्तु अभावस्य योग्यानुपलब्धिर्नाभावग्रहे कारणम् अभावग्राहकसामग्र्यां प्रतियोग्यारोपोऽपि प्रविष्ट इति त- ज्ज्ञानस्यैव तज्ज्ञानकारणतापत्तेरात्माश्रयादित्याहुः । तदयुक्तम् । तद्व्याप्यपदस्यासाधारणोपलम्भकपरतया तत्पदेनैव प्रतियो-

---

(१) भेदमादायैव इति पाठान्तरम् ।

विस्तृतं चैवं शास्त्र एवेत्यलमनेन ।

अभाव एव मूलभूतोऽसम्भवी कुतो मानभेदचिन्ता । ना-

न्यायलीलावतीकण्ठाभरणम्

नन्विन्द्रियस्य भावेन सह संयोगादिः सन्निकर्षोऽस्ति न त्वभावेनापि, सन्निकृष्टमिन्द्रियं ग्राहकमित्येव नियामकमिति चेत् । न विशेषणतायाः प्रत्यासत्तेरिहापि सत्त्वात् । अभावे गृहीते विशेषणता तथा च ग्रह इत्यन्योन्याश्रय इति चेत् । न । तदुपलब्धेस्तु प्रत्ययजननस्वाभाव्यलक्षणाया विशेषणतायाः पूर्वमपि सत्त्वात् । किञ्चेन्द्रियस्यान्वयव्यतिरेकसत्त्वात्तदेव तत्र करणं, न त्वधिकरणग्रहोपक्षीणं तत्, त्वगिन्द्रियोपनीते पीतेऽन्धस्यापि नीलिमव्यतिरेकग्रहापत्तेः । प्रतियोगिग्राहकेणाधिकरणग्रहणं तन्त्रमिति चेन्न । वायौ चक्षुषा रूपाभावानुपलम्भप्रसङ्गात् । तत्र रूपाभावोऽनुमीयते इति चेन्न । लिङ्गाभावात् । अनुपलभ्यमानत्वमेव लिङ्गमिति चेन्न । तस्याप्यनुपलम्भात् । न ह्यनुपलब्धिरपि योग्यानुपलब्ध्या गृह्यते । उपलब्धेरयोग्यतया तत्र योग्यानुपलम्भासम्भवात् । प्रतियोगिग्रहे च इन्द्रियस्य सामर्थ्यादभावग्रहेऽपि सामर्थ्यकल्पनादित्यभिप्रेत्याह विस्तृतमिति ।

प्राभाकरं मतमुत्थाप्य निराकरोति अभाव एवेति । मूलतः—तत्त्वतः,

न्यायलीलावतीप्रकाशः

कश्चिद्भावो ग्राह्यः कश्चिन्नेति विनिगन्तुं न शक्यते तथाऽभावो ग्राह्यो न भाव इत्यपि तथेत्यर्थः । किञ्चाभावग्रह इन्द्रियानुविधानादिन्द्रियं तत्र हेतुरन्यथा निमिलिताक्षस्यापि घटानुपलब्ध्या घटाभावधीप्रसङ्गः, नापीन्द्रियार्थसन्निकर्षे सत्यनुपलब्धिं विनाऽभावधीविलम्ब इत्यभिसन्धायाह विस्तृतं चेति ।

अभाव एवेति । प्रमेयत्वं भावत्वव्याप्यमित्यर्थः । अतो न सिद्धसि-

न्यायलीलावतीप्रकाशविवृतिः

व्यारोपवारणादिति दिक् । अन्यथा निमीलिताक्षस्यापीति । न च चक्षुरुन्मीलनादिसहकारिविरहान्न तत्र योग्यानुपलब्धिरिति वाच्यम्, चक्षुरुन्मीलनादेः संनिकर्षोपक्षीणत्वेन तदपेक्षायामिन्द्रियस्याप्यपेक्षणेन तस्यैव कारणत्वौचित्यादिति भावः ।

स्तीति धीरिति(१) चेत् । न अस्या आश्रयस्वरूपभेदालम्बन-त्वात् । तथाहि—अस्ति तावद्भावाभावोदासीनमाश्रयस्व-रूपम् । कीदृश्यन्यथाभावः समवैति(२) ? न तावत्तद्वति(३), आत्माश्रयत्वात् । नापि तज्जातीयवति, अनवस्थितेः । नापि तद्धीने(४), भावाभावयोरविरोधापत्तेः । भावाभावयोश्च ना-

---

न्यायलीलावतीकण्ठाभरणम्

असम्भवी-अधिकरणभिन्नत्वेन प्रमाणागोचरः । अत्र प्रमेयत्वं भाव-त्वव्याप्यमित्यर्थः । तथाच न सिध्यसिद्धिव्याघात इत्यर्थः । नास्तीति । मानमित्यध्याह्रियते समावसन्नमनुषज्यते वा । इह भूतले घटो नास्तीति प्रतीतिरेवाभावे मानम्, अस्या भूतलमात्रालम्बनत्वे घटवत्यपि प्रसङ्गा-दिति भावः । अत्रान्यथासिद्धिमाह अस्या इति । यादृशे भूतलेऽभावः प्रयु-ज्यते तदेवाभावधीहेतुरित्यर्थः । आत्माश्रयेति । स्वस्मिन् स्वावृत्तिवत् स्वविशिष्टेपि स्ववृत्तेरनुपपत्तेरित्यर्थः । अभावान्तरवत्यभावा-न्तरं प्रयुज्यतामित्याशंक्यानवस्थया दूषयति नापीति । तद्धीन इति ।

न्यायलीलावतीप्रकाशः

द्धिव्याघातः । नास्तीति धीरिति । अस्ति तावदिह भूतले घटो नास्ती-ति धीः, न च भूतलमात्रं तदालम्बनं घटवत्यपि प्रसङ्गात्, नापि केवलं भूतलं अतिरिक्तकैवल्यानङ्गीकारात् । न च भूतलमेव कैवल्यं पौनरुक्त्यापत्तेरित्यभावसिद्धिरित्यर्थः । आश्रयस्वरूपभेदमाह—तथा-हीति । अस्ति भूतलविशेषो यत्राभावः सम्बद्ध्यते, अन्यथा देशादि-नियमेन तद्व्यवहारो न स्यात्, तथाच स एवाभाव इत्यर्थः । आत्मा-श्रयादिति । स्वविशिष्टे स्वावृत्तेरित्यर्थः । अनवस्थितेरिति । अभावान्तरव-त्यभाववृत्तेरेव तस्याभावान्तरवति वृत्तेरपर्यवसानादित्यर्थः । तद्धीन इति । घटवतीत्यर्थः । अविरोधेति । सहावस्थानादित्यर्थः । भावाभावयोश्चेति ।

न्यायलीलावतीप्रकाशविवृतिः

अतिरिक्तेति । त्वयेति शेषः । अङ्गीकारे च पर्यवसितं विवादेनेति भावः । ननु घटभावादिपदस्यात्यन्ताभावपरत्वेऽन्योन्यसंसर्गिता चेत्यनेन

---

(१) धीरस्तीति० । (२) सम्बध्यते । ता० पु ।
(३) तावद्वति—ता० पु० । (४) तद्भिन्ने ।

स्तीति व्यवहारदर्शनात् । घटाभावेऽपि यदि घटोऽस्ति उपलभ्येत । नास्ति चेदभावान्तरम् । न चेत्सिद्धसमीहितम् । घटे च घट(१)तादात्म्याभावो नास्तीति यदि घटविधिः तदानवस्था । अथाश्रयस्वरूपम् । उक्तमुत्तरम् । एवं घटाभावपटाभावयोः प्रागभावध्वंसयोर्नैक्यं नान्योन्यसंसर्गिता वेति विकल्प्य दूषणमभिधानीयमिति चेत् । नैवम् । विचारासहत्वात् । किमिदं परिपन्थितर्कमात्रम् ? यदि भूतलौदासीन्यं न स्यात् तदा अभावो न सम्बन्ध्येतेति, विपर्ययपर्यवसानादाश्रयभेदसाधनं वा । नाद्यः ।

---

न्यायलीलावतीकण्ठाभरणम्

भाववतीत्यर्थः । अधिकरणस्वरूपमेवाभावव्यवहारहेतुरिति प्रकारान्तरेण व्यवस्थापयन्नाह भावाभावयोश्चेत । समीहितमिति(२) । तत्राधिकरणस्वरूपेणैवाभावव्यवहार इत्यर्थः । घटे चेति । अन्योन्याभावाभावस्य घटरूपतया घटे घटान्तरं तत्रापि घटान्तरमित्यनवस्थेत्यर्थः । अथेति । घटाभावाभावव्यवहारस्य घटरूपाश्रयमात्रसाध्यत्वे भूतलेऽपि घटाभावव्यवहारोऽधिकरणस्वरूपेणैव कार्य इत्यर्थः । एवमिति । घटाभावे पटो नास्तीति व्यवहारः प्रागभावे प्रध्वंसान्योन्याभावव्यवहारश्चा-

न्यायलीलवतीप्रकाशः

यथा भूतले घटो नास्तीति व्यवहारः तथा घटाभावे घटो नास्तीति व्यवहारोऽस्तीति तत्राप्यभावान्तरं स्यादित्यर्थः । एतदेव स्फुटयति घटाभाव इति । सिद्धमिति । स्वरूपालम्बनेनैव नास्तीति धीरित्येवंरूपमित्यर्थः । घटविधिरिति । अभावाभावस्य भावात्मकत्वादित्यर्थः । एवमिति । घटाभावपटाभावयोः प्रागभावध्वंसयोरिति यथासंख्य-

न्यायलीलावतीप्रकाशविवृतिः

विरोधः, घटाभावाभावे पटाभावसंसर्गादित्यत आह घटाभावपटाभावयोरिति । तथाच घटाभावपटाभावभावयोर्नैक्यं प्रागभावप्रध्वंसयोर्नान्योन्यसंसर्गितेत्यनुषज्जत इत्यर्थः । यद्वा घटाभावयोरित्यत्रैव यथासंख्यं प्रागभावप्रध्वंसयोरित्यस्याभेदेनान्वय इत्यर्थः । तथाच घ-

---

(१) ०च तद्घट० । (२) शङ्करमतेऽत्र मूले-सिद्धं समीहितम्-इति पाठो बोध्यः ।

आपादनमात्रस्योपलम्भानङ्गत्वात् । नेतरः । सम्बन्ध्यते चाभा-
व इत्यात्मनो विपर्ययस्य स्वतोऽप्यसिद्धेः । परसिद्धेन परस्या-
पादानमिदमाभासं सर्वथानुपलभ्यमानोपाधि(१)शङ्काग्रस्तत्वा-
दितिवदात्मप्रतिक्षेपकम् । अत एव सम्बन्धप्रश्नोऽसंगतः । अ-

---

न्यायलीलावतीकण्ठाभरणम्

धिकरणस्वरूप एवागत्या स्वीकार्य इत्यर्थः । आपादनमात्रस्येति । विपर्य
यपर्यवसितस्येत्यर्थः । अभावाप्रसिद्ध्या व्याप्त्यग्रहान्मूलशैथिल्यम
पि द्रष्टव्यम् । इदमसाधकं सर्वथानुपलभ्यमानोपाधिशंकाग्रस्तत्वा-
दित्यनुमानमात्मप्रतिक्षेपकं यथा तथा अभावो नास्तीति अभ्युपग-
म्य सम्बध्यते चाभावस्तस्मादन्योदासीनं भूतलमिति परसिद्धेन वि-
पर्ययसिद्धौ स्वव्याघातकतैवेत्यर्थः । अथवा विपर्ययरूपाप्रतिक्षेपक-
त्वं न ह्यभावानङ्गीकारे विपर्यय एतादृशः सम्भवतीत्यर्थः । किञ्च
यादृशकपाले घटः समवैति तादृशे न घट इति व्यवहारोऽपि स्यादिति
घटादिविलोपः स्यादिति भावः । अत एवेति । अभावानङ्गीकारादेवे-

न्यायलीलावतीप्रकाशः

मन्वयः । अत्रान्योन्याभावसंसर्गाभावान्तरस्वीकारेऽनवस्था, अन्य
था चाश्रयरूपमभावव्यवहारहेतुरिति सिद्धमित्यर्थः । घटाश्रयस्येव
तदभावाश्रयस्याप्यननुगतत्वादिति भावः । आपादनमात्रस्येति । विपर्य-
यपर्यवसितस्य तर्कस्य परमतप्रतिषेधानङ्गत्वादित्यर्थः । अभावाप्र-
सिद्ध्या व्याप्त्यग्रहाच्छिथिलमूलत्वमपीति भावः । आत्मप्रतिक्षेपकमिति ।

न्यायलीलावतीप्रकाशविवृतिः

टप्रागभावप्रध्वंसयोरित्यर्थः पर्यवस्यतीति भावः । अन्योन्याभावेति ।
नैक्यमित्यत्रान्योन्याभावान्तरस्वीकारे नान्योन्यसंसर्गिता चेत्यत्र सं-
सर्गाभावान्तरस्वीकारे चेत्यर्थः । नन्वाश्रयस्वरूपस्याननुगतत्वात्
नाननुगतव्यवहारे हेतुत्वमत आह घटाश्रयस्येवेति । तथाच यथा तदा-
भावाश्रयत्वमननुगतानां तथा ममाभावव्यवहारहेतुत्वमिति भावः ।
यद्वाऽभावरूपस्याश्रयस्य तदाप्यननुगतत्वादित्यर्थः । तथाच तदृष्टा-

---

(१.) ०पाधिकं० ।

तिरेकिणस्तस्यासिद्धेः । जन्मप्रश्नेऽपि प्रागसत्त्वोपलक्षितं रूपं कीदृशि ? अभाववति, यदैव ताद्रूप्यं तदैव तेन तदभाववत् । अथ

---

न्यायलीलावतीकण्ठाभरणम्

त्यर्थः । अतिरोकिण इति । भूतलभिन्नस्येत्यर्थः । ध्वंसमाश्रित्याह जन्मेति । प्रश्नस्वरूपमाह प्रागिति । पूर्वं यदभावस्वरूपं नास्ति तत्कीदृशे भूतले वर्तते इत्यर्थः । उत्तरमाह अभाववतीति । नन्वेवमनवस्थेत्याह यदैवेति । ताद्रूप्यमभावजन्यम्, न ह्यभावे जाते कपालं नाभाववदिति सम्भवतीति भावः । अथेति । अभावजन्यपूर्वावस्था कीदृशीत्यर्थः । उत्तरं भाववतीति । घटतत्संयोगयोर्मध्ये कपालं कीदृगिति प्रश्ने किमुत्तरमित्याह अथेति । तादृशकालाभावादिति । उत्तरमाह तदेति । इदमिति । आश्रयस्वरूपेण व्यवहारोपपादनमित्यर्थः । लयोत्पत्ती ध्वंसप्रागभावौ तौ चेन्न स्तस्तदा 'नासतो विद्यते भावो नाभावो विद्य-

न्यायलीलावतीप्रकाशः

सम्बद्ध्यते चाभावस्तस्मादस्त्युदासीनं भूतलमिति परसिद्धेन विपर्ययसिद्धौ तेनैव व्यवहारोपपत्तौ नाभावोऽभ्युपगन्तव्य इत्येवंरूपव्याघातग्रस्तमित्यर्थः । परसिद्धेनाप्यभावमुपादायैव प्रसङ्गस्तथा चाभावसिद्धिरित्यात्मप्रक्षेपकतेत्यर्थं इत्यन्ये । किञ्चैवं यादृशि संस्थानविशेषविशिष्टे कपाले घटो वर्त्तते तादृक्कपालमेव घटव्यवहारजनकमस्त्विति किं घटेनेत्यपि स्यादिति भावः । अतिरोकिण इति । सम्बन्धस्य भेदगर्भत्वेनाभेदे संबन्धासिद्धेरित्यर्थः । जन्मप्रश्नमेव विवृणोति प्रागसत्त्वेति । प्राक्यदभावस्वरूपं नासीत्तदिदानीं कीदृशि वर्त्तते इत्यर्थः । उत्तरमाह—अभाववतीति । अनवस्थां परिहरति यदैवेति । ता-

न्यायलीलावतीप्रकाशविवृतिः

न्तेन भूतलादीनामप्यभावव्यवहारकारणत्वं ममेति भावः । सम्बध्यते चाभाव इति । तेनैवेत्याद्यभ्युपगन्तव्य इत्यन्तं व्याघातस्वरूपपरम् । व्याघातग्रन्थत्वं च सम्बध्यते चाभाव इत्यस्य क्वचिदित्येवंरूपमिति पाठः । तत्र च सम्बध्यते चाभाव इत्यनेन व्याघातः । तेनैवेत्याद्यभ्युपगन्तव्यमित्यन्तं व्याघाताश्रयकथनपरम् । परसिद्धेनेति । विपर्ययव्याघातः पूर्वं मुक्तः प्रसङ्गव्याघातस्त्वधुनेति भेदः । सम्बन्धासिद्धेरिति । त्वन्मते

प्राक्कालमाश्रित्य प्रश्नः । तदा भाववति(१) । अथान्तरालं कालमाश्रित्य प्रश्नः । तदा विरोधः । इदं सर्वलयोत्पत्तिप्रतिक्षेपकं सत्कार्यवादमनुपततीति(२) महदिन्द्रजालम् । घटाभाव एव च घटनास्तिता । अतिरेकेऽनवस्थितेः । न त्वेवं प्रकृतेऽपि भूतलस्वरूपस्यातिप्रसङ्गत्वात् । ततः सम्बन्धवदिदमवश्याङ्गीकर्त-

---

न्यायलीलावतीकण्ठाभरणम्

ते सत' इति प्राभाकरस्यापि सांख्यमतानुप्रवेशादपसिद्धान्त इत्यर्थः । घटाभावे घटो नास्तीति यद्विकल्पितं तत्राह घटाभाव एवेति । अभावेऽभावान्तरभावेऽपि स्वरूपानिबन्धन एव व्यवहार इत्यर्थः ।

न्यायलीलावतीप्रकाशः

द्रूप्यं अभावजन्यमित्यर्थः । लयोत्पत्तीति । ध्वंसप्रागभावावित्यर्थः । घटाभावे घटो नास्तीत्यत्राह—घटाभाव एवेति । भावाभावयोरभावप्रतीत्यविशेषेप्यभावेऽभावान्तरस्वीकारेऽनवस्थाऽतोऽनतिप्रसक्ताधिकरणस्वरूपमेवाभावविषयो भावे तु बाधकाभावादतिरिक्ताभावसिद्धिरित्यर्थः । सम्बन्धवदिति । यथा सम्बन्धशून्यः समवायः स्वरूपेणैव स्था(?)(३)किन्तु तृतीयमादाय, अथानवस्थामूलत्वं द्वितीयस्य, तर्हि प्रथमस्यापि तथात्वमिति सोपि परिहार्यः । अत्र प्रतीत्यविशेषात् स एवाभावस्तत्र वर्त्तते, न चात्माश्रयः, प्रमेयत्ववत् प्रमाणसिद्धत्वात् ।

न्यायलीलावतीप्रकाशविवृतिः

इति शेषः । तादूरूप्यं यद्यभावत्वमेवोच्यते तदोद्देश्यविधेयभावानुपपत्तिरत आह अभावजन्यमित्यर्थं इति । संयोगे सम्बन्धान्तरं सद्विशेषयति यथेति । प्रमेयत्ववदिति । संयोगसमवायाभ्यामेव स्वस्य न स्वस्मिन्वृत्तिः स्वरूपसम्बन्धेन तु प्रतीतिसिद्धा सा स्वीक्रियते एवेति भावः । यद्यप्येवं भूतलादावप्याधारत्वप्रतीतेस्तथैवोपपत्तिस्तत्राप्यतिरिक्ताभावो न सिध्येत् । अन्यथाऽभावेप्यभावान्तरस्वीकारापत्तिः । तथाप्याधारत्वप्रतीतेरुत्सर्गतो भिन्ननिष्ठतया तथाऽतिरिक्ता-

---

(१) ०ति विरोधः । (२) ०दमापतीति—ता पु ।

(३) अत्र पाठो भ्रष्टः प्रतिभाति ।

व्यम् । घटाभावे पटो नास्तीत्यत्र का वार्ता । प्रकृतैव । तर्हि सापि पटनास्तितेति सर्वप्रतिपक्षविरहे जगच्छून्यं स्यादित्यस्मत्पन्थानमनुसरेति चेत् । नैवम् । स्वरूपेण तन्निषेधव्यवहारविषयत्वेऽपि कश्चित्तद्विरोधिस्वभावो मध्यस्थश्चेति सम्भवात् । वस्तुवैचित्र्यस्यापर्यनुयोज्यत्वात् इति । सघटजातीयभूतलात्पृथग्भूतलमिति चेत् । न । भूतलत्वेन पृथक्त्वस्यानुपपत्तेः । साधारणधर्मस्या-

---

न्यायलीलावतीकण्ठाभरणम्

प्रकृतैवेति । तत्राप्यनतिप्रसक्ताधिकरणस्वरूपेणैवाभावव्यवहार इत्यर्थः । यद्यपि अभावेष्यभावान्तराङ्गीकारे नानवस्था, किञ्च प्रतीतेस्तौल्येन

न्यायलीलावतीप्रकाशः

यद्वा प्रतीतेस्तौल्येन घटाभावेप्यभावान्तरं वर्त्तत एव, अन्यथा व्यवहारस्य तुल्यत्वादेकत्र यदि स्वरूपेणाभावव्यवहारः स्यात् नून भ्रमः स्यात् । किञ्चाभावो यदि घटं प्रति(?) (१) उत्तरं प्रकृतैवेति । अनतिप्रसक्ताधिकरणस्वरूपमेवाभावव्यवहारेहेतुरित्यर्थः । प्रष्टाऽभिसन्धिमुद्घाटयति तर्हीति । एकध्वंसेनान्यध्वंसव्यवहारे घटध्वंसः सकलध्वंसरूप इति घटध्वंसे सकलध्वंसो जायते इत्येकध्वंसे सत्येव जगच्छून्यमापद्येतेति माध्यमिकमतप्रवेश इत्यर्थः । स्वरूपेणेति । घटध्वंसो घटविरोधी न पटादिविरोधीत्यर्थः । सघटेति । अभावव्यवहारकारणमिति शेषः । एकस्मात् सघटभूतलात् सघटमपि भूत-

न्यायलीलावतीप्रकाशविवृतिः

भावसिद्धावुत्तरकालमवतीर्णोऽपि प्रतिबन्दिरभावं न बाधते उपजीव्यविरोधादिति रहस्यम् । नन्वेकस्यापि ज्ञानादेः सम्बन्धद्वयेन विशिष्टा प्रतीतिः प्रमा भवत्येवेत्यरुचेराह किञ्चेति । नचेति । तर्कमूलमूतव्याप्तौ नायमुपाधिरापादकव्यापकत्वादित्यर्थः । अत्र विपर्ययसाध्यविशिष्टत्वमनवस्था चेत्यरुचिबीजं नवनिबन्धोपन्यासेन सूचितम् । एकध्वंसेनान्यस्यापीति । घटध्वंसे पटो नास्तीति प्रतीत्या घटध्वंसस्यैव पटादिनास्तितास्वरूपत्वादित्यर्थः । घटे च घटतादात्म्याभावो नास्तीति यदि घटविधिरित्यत्र समाधिमाह मूले घटं न घटा

---

(१) अत्रापि पाठो भ्रष्ट इति विवृतिदर्शनात्स्फुटं ज्ञायते ।

भेदकत्वात् । न हि तरुत्वेन तालस्तमालाद्व्यावर्तते । नापि स-घटत्वेन विरोधात् । अघटस्वीकारेऽभावस्वीकारात् । असति बा-धके व्यावृत्तेरसाधनधर्मजत्वात् । सघटभूतलबुद्धेरन्याभूतलबुद्धिर-भावव्यवहृतिहेतुरिति चेत् । न । अभावानङ्गीकारे तस्यां(१)सघ-टभूतलबुद्धिव्यावृत्तव्यवहारस्यैव कर्तुमशक्यत्वात् । स्वरूपभेद-

---

न्यायलीलावतीकण्ठाभरणम्

तत्राभावोऽप्यङ्गीकार्य एव, तथापि तत्स्वरूपादेव तद्व्यवहारोपपत्तौ द्वितीयाभावाङ्गीकारे गौरवं प्रमेयप्रमेयवत् अस्मिन्नपि प्रतीतिबलात् स्वं वर्ततामित्यपि वदन्ति । व्यावृत्तव्यवहारस्यैवेति । व्यावृत्तव्यवहारोऽन्योन्याभावव्यवहारः, स च वैधर्म्यमपेक्षते, वैधर्म्यं च सघटभूतल-बुद्धेर्घटाभावविषयकभूतलबुद्धित्वमेवेति सिद्धोऽभाव इत्यर्थः ।

न्यायलीलावतीप्रकाशः

त्वान्तरमन्यदित्यत उक्तं जातीयेति । भूतलत्वेनेति । अवध्यवधिमतोः पर-स्पराघृत्तिरूपेणैवोपस्थितौ पृथक्त्वनिरूपणादित्यर्थः । नापीति । प्रतियोग्यनुयोगिनोर्मिथो व्यावर्त्तकधर्माभावग्रहादित्यर्थः । असति बाधक इति । अभावे तु व्यावृत्तबुद्धावप्यनवस्थया नाभावान्तरस्वी-कार इत्यर्थः । व्यावृत्तेः व्यावृत्तबुद्धेरित्यर्थः । सघटेति । न च दोषात् घटवत्त्वाज्ञाने भूतलज्ञानमभावः स्यादिति वाच्यम् । घटवतो भूतलस्य ज्ञानाद्भिन्नं भूतलज्ञानमभावः तद्भ्रमाच्चाभावभ्रम इत्यभ्युपगमात् । अभावेति । भेदोऽन्योन्याभावो नाभ्युपेयते एव वैधर्म्यमपि तन्नियतमि-ति तदपि नेति व्यावर्त्तकं विना व्यावृत्तव्यवहार एव न स्यादि-त्यर्थः । ननु बुद्ध्योः स्वरूपमेव भेद इत्युभयाभिमतं तथाच स्वरूपत एव व्यवहारः स्यादित्यत आह स्वरूपभेदेति । न ह्येका या सघटभूत-ला बुद्धिः सैवान्यापीत्यर्थः । ननु सघटभूतलबुद्धित्वं यत्र नास्ति

न्यायलीलावतीप्रकाशविवृतिः

भावेति । घट एवेति मूलं । घटत्वमेवेत्यर्थः । घटात्मकत्वादिति । घटत्वा-त्मकत्वादित्यर्थः । क्वचित्पाठ एव तथा । निराकृतमप्यर्थं विशेषतो

---

(१) ०तस्य सघटबुद्धिभ्या० ।

व्यवहारस्य सघटभूतलबुद्धावपि सत्त्वात् । असति सघटभूतल-बुद्धित्वे स्वरूपभेदव्यवहार इति चेत् । न । अभावस्वीकारात् । असति व्यावर्तकधर्मे व्यावृत्ति(१)व्यवहारानुपपत्तिः । सर्वत्र व्यावृत्तव्यवहारस्य तत्प्रतिबन्धोपलब्धेः । अत इयं किं भूतल-बुद्धित्वेन व्यावर्तते, अथ घटाविषयत्वेन । नाद्यः । तस्यामपि भूतलबुद्धित्वाबाधात् । न द्वितीयः । अभावस्वीकारात् । सघ-टभूतलबुद्धिमात्रापेक्षया रूपभेद इति चेत् । न साधारणधर्मा-वभासे तन्मात्रापेक्षया स्वरूपभेदव्यवहारस्यैवाभावात्(२)। न हि गौर्गोस्वरूपा(३)द्व्यावर्तते गोत्वेन । ततो भवन्नयं वि-भिन्नव्यवहारोऽसाधारणघटा(४)न्यविषयत्वप्रतीतिनिबन्धनः ।

---

न्यायलीलावतीकण्ठाभरणम्

असतीति। यत्र बुद्धौ सघटभूतलबुद्धित्वं नास्ति साऽभावव्यवहारं करो-तीत्यर्थः। अभावेति । नास्तीति कण्ठत एव वाऽभावाभ्युपगमादित्यर्थः। स्वरूपभेदोऽपि व्यावर्तकधर्माधीनः स चाभाव एवेत्याह असतीति । इय-मिति। अभावव्यवहारहेतुभूता बुद्धिरित्यर्थः। अभावेति। घटाभावविषय-त्वमत्र नञर्थस्याभावादित्यर्थः । असाधारणेति । असाधारणं यद्घ-टादिविषयत्वं धर्मो बुद्धौ तन्निबन्धन इत्यर्थः । विलक्षणव्यवहारस्य वैलक्षण्याधीनत्वादवश्यं घटवत्घटाभावव्यवहारयोर्वैलक्षण्यमभ्यु-

न्यायलीलावतीप्रकाशः

तादृशी भूतलबुद्धिरभावव्यवहारहेतुरित्याह असतीति । व्यावृत्त-बुद्धेर्व्यावर्तकधर्माधीनत्वं प्रसाध्य व्यावृत्तव्यवहारस्य तत्साधयति असति व्यावर्तक इति । अभावे व्यावृत्तव्यवहारः स्वरूपनिबन्धन एव, अ-न्यथाऽनवस्थापत्तेः, अत्र तु बाधकाभावात्सोऽसाधारणधर्मजन्यः, स चासाधारणधर्मोऽभाव इत्यर्थः । अत इति । अतः सघटभूतल-बुद्धेरियं निर्घटभूतलबुद्धिरित्यर्थः। तस्यामपीति । सघटबुद्धावपीत्य-

---

(१) ०व्यावृत्तव्य० ।
(२) ०स्यैवापहारात् ।
(३) ०स्वरूपमात्राद्व्या० ।
(४) ०घटाघवि० ।

अपि च भूतलव्यवहारविलक्षणो नास्तीति व्यवहारो भूतलव्यतिरिक्तव्यवहर्तव्यप्रकाशनिबन्धनः, कलशव्यवहारवत्। न च सघटभूतलविलक्षणं (भूतलविलक्षणं ?) वा प्रमेयं नावभासते। अन्यथा एकस्यैव सामान्यस्य व्यञ्जकभेदेन वस्तुस्वरूपस्यैव वाऽभिन्नस्य चित्राकारजगद्व्यवहारगोचरत्वमनिवार्यमिति। घटे च घटाभावसंसर्गनिषेधो घट एव नतु प्रकृते अतिप्रसक्तेः। प्रागभावप्रध्वंसयोरन्योन्यसंसर्गितानिषेधे स्वरूपमेवाभावः सम्बन्धिसम्बन्धयोरिव। संसर्गिताविधौ नैक्यमित्यत्र तु अन्योन्याभावा-

---

न्यायलीलावतीकण्ठाभरणम्

पेयमित्याह अपिचेति। विलक्षणानुभव एवाभावे प्रमाणमित्याह नचेति। ननु भूतलमात्रादेव विलक्षणव्यवहारद्वयमस्तु को दोष इत्यत आह अन्यथेति। वस्तुस्वरूपस्यैव वा घटादेरित्यर्थः। ननु यथा घटे घटाभावाभावव्यवहारो घटस्वरूपाधीनस्तथा भूतलस्वरूपाधीनो घटाभावव्यवहारोऽपि स्यादित्यत आह घटे चेति। नहि घटो घटाभावात्मको घटात्मकश्चेति द्विरूपः सम्भवति भूतलन्तु सघटमघटञ्चेति द्विरूपमतस्तत्स्वरूपेण कथमभावधीरित्यर्थः। प्रकृते--भूतले। अतिप्रसक्तेरिति। सघटेनापि तदभावव्यवहारापत्तेरित्यर्थः। प्रागभावप्रध्वंसयोरिति। तत्राप्यन्योन्यसंसर्गाभावव्यवहारस्यानतिप्रसक्तान्योन्याभावसाध्यत्वादित्यर्थः। सम्बन्धीति। घटे रूपसमवाय इत्यत्र स्वरूपमेव सम्बन्ध-

न्यायलीलावतीप्रकाशः

र्थः। उक्त एवार्थे प्रयोगमाह अपि चेति। भूतलव्यवहारविलक्षणव्यवहारत्वादिति हेतुः स्फुटत्वान्नोक्तः। न चेति। इत भूतले घटो नास्तीत्यत्र भूतलविलक्षणघटाभावानुभवः सर्वसिद्ध इत्यर्थः। अन्यथेति। यथा एकस्यैव भूतलस्य सहकारिभेदमासाद्य विलक्षणव्यवहारहेतुत्वं तथैकस्यैव सत्तादेः सामान्यस्य विलक्षणव्यञ्जकवशाद्विलक्षणव्यवहारः स्यादित्यर्थः। घटे चेति। घटान्योन्याभावाभावस्य घटात्मकत्वादित्यर्थः। नत्विति। भूतलस्वरूपमेव घटनिषेधो न पुनः सघटभूतलस्यापि तत्त्वादित्यर्थः। संबन्धीति। घटरूपयोः समवाय इत्यत्र

ऽवसरे एव वक्ष्यामः । परस्पराभावरूपतापत्तिस्त्वविरोधिस्व-

---

न्यायलीलावतीकण्ठाभरणम्

व्यवहारं करोति तथा प्रकृतेपीत्यर्थः । नैक्यं नान्योन्यसंसर्गिता वेति विकल्प्य दूषणमुक्तं तदग्रे निरसनीयमित्याह नैक्यमिति । परस्परेति । घटाभावे घटो नास्ति पटाभावे च पटो नास्तीत्युभयोः स्वरूपेण चेदन्योन्यनास्तितता व्यवहारेऽपि पटाभावदशायां घटसत्त्वेऽपि तद-

न्यायलीलावतीप्रकाशः

यथा स्वरूपमेव सम्बन्धस्तथात्रापीत्यर्थः । ननु यथा घटाभावे पटो नास्तीत्यत्र घटाभावस्वरूपमेव घटनास्तितता, तथा घटाभावे घटो नास्तीत्यत्रापि घटाभावस्वरूपमेव पटनास्तितता, एवं च घटाभावे विद्यमाने यथा घटनास्तितताव्यवहारो घटे विद्यमाने घटाभावना-स्तितताव्यवहारः तथा घटाभावे विद्यमाने पटनास्तितता घटे च विद्य-माने घटाभावनास्तिततापत्तिरित्यत आह—परस्परेति । ननु घटवद्भू-तलभिन्नं भूतलमभावः यत्र परेषामभावः घटवद्भूतलभिन्नभूतल-बुद्धिर्वा भेदः स्वरूपमेव तादात्म्येनाप्रतीतौ प्रतीतिरिति तवापि स्वरूपभेदलक्षणं इदानीमिदं भूतलं घटवद्भूतलं नेति प्रतीतेः । एतावांस्तुविशेषो—यत्र च समानाधिकरणनिषेधधीरन्योन्याभावं भेद-मालम्बते मम तु स्वरूपभेदम् । नचैवं प्रतियोगिज्ञानापेक्षानुपपत्तिस्त-योर्निःप्रतियोगिकत्वादिति वाच्यम् । अभावस्य निःप्रतियोगिकतया स्वज्ञाने तदनपेक्षत्वात् स्वव्यवहारमात्रे तदपेक्षणात् । न चातिरिक्ता-भावपक्षेऽन्योन्याभावे अत्यन्ताभावे च नित्ये मानमस्ति प्रतियोगिनि बुद्धिस्थेऽधिकरणस्वरूपस्यैवानतिप्रसञ्जकत्वात्, न हि तत्रा-ऽधिकरणस्य प्रतियोगितादात्म्यं प्रतियोगिमत्त्वं वा भवति, अत ए-वाभावे नाभावान्तरं स्वीक्रियते । न च भूतलज्ञानस्वरूपाणामननु-गमादनुगतव्यवहारानुपपत्तिः, अतिरिक्ताभावपक्षेऽप्यनुगतस्याभा-

न्यायलीलावतीप्रकाशविवृतिः

निराकर्तुं पुनराशंकते ननु घटवदिति । तवापीति । तवैवेत्यर्थः । मम तु शुक्तित्वेनाप्रतीतिदशायां शुक्तेः शुक्तिभेदापत्तिरीदृशानंगीका-रादिति भावः । ननु घटवत्त्वप्रकारकज्ञानभिन्नभूतलज्ञानस्याभावत्वे भूटवति घटवत्त्वाज्ञानदशायामभावव्यवहारापत्तिः, घटवतो भू-

भावत्वेन व्युदस्तेति सिद्धस्तावदभावः ॥

किं पुनर्नञोऽभिधेयमिति विचार्यते । न तावत्सामान्य-

---

न्यायलीलावतीकण्ठाभरणम्

धीनस्तन्नास्तितताव्यवहारो नापद्येत अविरोधिस्वभावत्वात् घटपट-नास्तितयोरित्यर्थः ।

किं पुनरिति । नञ्शब्दे किं प्रवृत्तिनिमित्तमित्यर्थः । परसामान्यं

न्यायलीलावतीप्रकाशः

वत्त्वस्य दुर्वचत्वात् । मैवम् । सप्रतियोगिको ह्यभावोऽनुभूयते घटो नेत्यनुभवात् न तु नञ्मात्रमतोऽभावविच्चिवेद्यत्वं प्रतियोगिनः। प्रति-योगिज्ञानाधीनज्ञानत्वं चाभावस्य प्रतियोगिसाक्षिकं गोसादृश्यवत् केवलमधिकरणं तज्ज्ञानं च नाभावः प्रतियोगिज्ञानं विनापि तज्ज्ञाना-त्। न चाभावव्यवहारे सप्रतियोगिकत्वम्, नञर्थस्य सप्रतियोगिकत-याऽनुभवात्, नाभावव्यवहारस्य तस्याभावज्ञानजन्यत्वात्, व्यवहार-स्य च व्यवहर्त्तव्योपलम्भमात्रनिबन्धनत्वात् । नच ह्रस्ववितस्त्या-देर्दीर्घस्य द्रव्यसमकालमनुभूतावपि व्यवहारेऽवधिज्ञानापेक्षत्वाद्व्यभि-चारः, तस्य परिमाणान्तरत्वात् । अपि च न केवलं भूतलमभावः, आ-धाराधेयानुभवात् अभेदे च तदनुपपत्तेः । अथ यस्मिन्समयविशेषे भूत-लेऽभावः परैः स्वीक्रियते तत्समयविशेषयोग एव भूतलस्य घटाभावः, तथा चाधाराधेयभावधीरप्युपपद्यते समयविशेषयोगस्य भूतलवृत्ति-त्वात् । तन्न । समयविशेषयोगस्य निःप्रतियोगिकतया अभाव-व्यवहारासामर्थ्यात् समयविशेषस्याधारत्वेनानुभवाच्च इदानीं भूत-ले घटो नास्तीति प्रतीतेः। न च समयविशेषे समयविशेषयोगोऽ-भेदे सम्बन्धानुपपत्तेः, दुःखवदात्मभिन्नात्मनः दुःखाभावत्वे मोक्ष-स्यापुरुषार्थतापत्तेः आत्मनोऽसाध्यत्वादिति संक्षेपः ।

भूतलज्ञानस्वरूपाणामननुगतत्वान्नानुगताभावव्यवहारहेतुत्वमित्य-तिरिक्ताभावपक्षेऽपि तुल्यमिति यदुक्तं तदभिप्रेत्याह किं पुनरिति । तस्येति।

न्यायलीलावतीप्रकाशविवृतिः

तलस्य ज्ञानाद्भिन्नभूतलज्ञानस्य चाभावत्वेऽभावास्वीकारे च दुरवधारणता चेत्यरुचेराह नचेति । अधिकरणानतिप्रसंगादेवेत्य-र्थः। दुर्वचत्वात् सुवचत्वे वाऽधिकरणादिनिष्ठमेव तन्निरुक्तामि-ति भावः । परिमाणान्तरत्वादिति । परिमाणगतजातिविशेषात्मकत्वा-

म्, तस्य परसामान्यनियतत्वात्। नापि भावविरोधित्वम्, अन्योन्याभावे तदभावात्, तदर्थानिरुक्तेश्च। सहानवस्थानं तदिति चेत्, न। अत्रापि नञर्थाभिधानेऽनवस्था, अन्यथा वैयर्थ्यम्। नापि भावानात्मकत्वं निषेध्यनिरूप्यत्वं वा, तदनिरुक्तेः। नापि भावान्यत्वम्, स्वरूपस्याननुगतेः अनुगतस्यासिद्धेः। नास्तीति बुद्धिवेद्यत्वं तदिति चेत्। न। तदालम्बनस्यैवानुगतस्यासत्त्वात्(१)। भावेन स्वरूपप्रत्या(२)सन्नत्वं त-

---

न्यायलीलावतीकण्ठाभरणम्

सत्ता तन्नियतत्वात तद्व्याप्यत्वादित्यर्थः। अन्योन्याभाव इति। तस्य भावसमानाधिकरणत्वात् सहानवस्थानलक्षणविरोध्यभावादित्यर्थः। तदर्थेति। विरोधिशब्दार्थस्येत्यर्थः। अत्रापीति। अनवस्थानपदेऽपि नञर्थः क इति प्रश्ने पुनरन्यत् किञ्चिद्वाच्यमेव तत्रापीत्यर्थः। अन्यथेति। यद्यनवस्थानपदे नञर्थो न भासते तदा तदभिधानं व्यर्थमेवेत्यर्थः। तदनिरुक्तेरिति। भावानात्मकत्वमत्र नञर्थानिरुक्तेः, निषेध्यं च निषेधप्रतियोगि वाच्यं तत्र च निषेधार्थानिरुक्तेरित्यर्थः। स्वरूपस्येति। भावान्यत्वं यद्यभावानां प्रत्येकं स्वरूपमेव तदाऽननुगमः, सकलाभावानुगतं च तन्नास्त्येवेत्यर्थः। तदालम्बनस्यैवेति। नास्तीति बुद्धेरनुगतं किमालम्बनमित्येव जिज्ञास्यते एतच्च त्वया न निरुक्त-

न्यायलीलावतीप्रकाशः

परसामान्यं सत्ता तन्नियतमपरसामान्यमभावे च तदभावादित्यर्थः। अन्योन्याभाव इति। अन्योन्याभाववत् प्रतियोगिनोरेकत्र स्वकारणे वृत्तेरित्यर्थः। तदनिरुक्तेरिति। नञन्तर्भावेनात्माश्रयादित्यर्थः। तदालंबनस्यैवेति। बुद्धेरर्थनिरूप्यत्वादित्यर्थः। भावेनेति। प्रतियोगिनाधिकरणेन चा-

न्यायलीलावतीप्रकाशविवृतिः

दित्यर्थः। तज्ज्ञाने बाधज्ञानं कारणमेवेति भावः। दुःखवदात्मेति। ज्ञानस्य चाभावत्वे तन्नाशे मुक्तस्यामुक्तत्वापत्तेरित्यपि द्रष्टव्यम्। न ह्यभावत्वमेवेति। यद्यप्यनुगताभावस्य प्रागेव सिद्धौ तस्यैव लक्षणत्वे किं

---

(१) ०गतस्याभावात्। (२) स्वभावप्र०।

दिति चेत् । न । समवायादावभावत्वप्रसंगात् । मैवम् । सत्ता-सम्बन्धबोधविधुरस्य(१) सत्ताविरहस्यैवाभावप्रत्ययहेतुत्वात् । स च नञर्थनिरुक्तिमन्तरेणापि स्वग्राहकमानसामर्थ्यात् स्वेन रूपेणावभासमानस्वभावप्रत्यासत्त्या सर्वभावेष्वसम्बद्ध एवा-

न्यायलीलावतीकण्ठाभरणम्

मित्यर्थः । समवायादावित्यत्रादिपदात् ज्ञानेच्छादिसंग्रहः । सत्ता-विरहस्य सत्तात्यन्ताभावस्य सामान्यादावपि सत्त्वादाह सत्तासम्ब-न्धबोधसामग्रीविधुरस्येति । एतच्चोत्पन्ननष्टे भावेऽप्यस्तीत्यत उक्तं सत्ता-विरहस्येति । तथाच सद्बुद्धिविरोधिसत्तात्यन्ताभाव एवानुगतोऽ-भावत्वमित्यर्थः । सामान्यादौ सत्तात्यन्ताभावस्य सद्बुद्धिविरोधो नास्ति परम्परासम्बन्धेन प्रमारूपस्य तत्रापि भावात् । ननु सत्ता-त्यन्ताभाव इत्यत्रापि नञर्थनिरुक्त्यपेक्षेत्यत आह स चेति । प्रत्यक्षसि-द्ध एक एवायमतो नानुगतधर्मापेक्षेत्यर्थः । ननु सत्तात्यन्ताभावस्या-भावेषु सम्बन्धाभावात् कथमनुगमकत्वमत आह स्वभावेति । अस-

न्यायलीलावतीप्रकाशः

भावस्य सम्बन्धान्तराभावादित्यर्थः । समवायादेरिति(२) आदिपदेन ज्ञानादिसंग्रहः । नापि भावप्रतियोगित्वम्, प्रतियोगित्वस्याभावविर-हरूपत्वात् सादृश्यादावतिव्याप्तेरित्यपि मन्तव्यम् । सत्तेति । सत्तावि-रहः सामान्यादावप्यस्तीत्यत उक्तं सत्तासम्बन्धेति । सामान्यादौ सत्ताशून्यत्वेऽपि सत्तासम्बन्धारोपात्सद्बुद्धिसामग्री विद्यते न त्वभावे तस्य तद्विरोधित्वेनैव प्रतीतेः । तावन्मात्रं च कस्यचिज्जातविनष्टस्या-प्यस्तीत्यत उक्तं सत्ताविरहेति । ननु विरहस्याभावरूपत्वादात्माश्रयः, अभावस्य चाभावावृत्तेः स्वरूपासिद्धिश्चेत्यत आह स चेति । न ह्यभाव-त्वमेवानिरूपितम, अभावानुगतबुद्धेरबाधितायाः सर्वसिद्धत्वादात्मा-श्रयो विशेषणतारूपसम्बन्धसत्त्वाच्च न स्वरूपासिद्धिरित्यर्थः । स्व-भावप्रत्यासत्त्या विशेषणतयेत्यर्थः । असम्बद्ध एवेति । विशेषणतेतरस-

न्यायलीलावतीप्रकाशविवृतिः

तन्निरूपणाधीनेन प्रकृतलक्षणेन, असिद्धौ चेदमपि दुर्ग्रहम् । तथा-

(१) ०बोधसामग्रीविधुरस्य । (२) एतन्मतेनात्र मूले-समवायादेरभावत्वेति पाठो बोध्यः ।

भावप्रत्ययं करोति समवाय इव समवायिव्यवहारम् । न च स्वात्मन्यभावव्यवहारकर्तृत्वविरोधः, प्रमेयत्वविरोधात्(१) ।

---

न्यायलीलावतीकण्ठाभरणम्

म्बन्ध एवाभावसम्बन्धान्यसम्बन्धरहित एव । अभावप्रत्ययमित्विति । अभावाकारानुगतप्रत्ययमित्यर्थः । समवाय इवेति । घटे रूपसम ..ग इत्यत्र यथा समवायः स्वरूपसम्बन्धेनैव विशिष्टव्यवहारं करोतीत्यर्थः । ननु सत्तात्यन्ताभावमादाय कथमयमनुगतव्यवहारः स्यात् नहि स एव तत्रेत्यत आह न चेति । प्रमाणबलादत्रात्माश्रयोऽङ्गीक्रि·

न्यायलीलावतीप्रकाशः

म्बन्धशून्य एवेत्यर्थः । अनुरूपं दृष्टान्तमाह समवाय इवेति । ननु सामग्रीविरहस्यातीन्द्रियतया अभावत्वमप्रत्यक्षं स्यात्, किञ्च बोधो ज्ञानमात्रं वा सम्यक्ज्ञानं वा ? । नाद्यः, तमसोऽपि सत्त्वेन प्रतीतेः । नान्त्यः समवायातिव्याप्तेः । अत्राहुः । द्रव्यादिषट्कान्योन्याभाववत्त्वं द्रव्यत्वादिषट्कात्यन्ताभाववत्त्वं वा अभावत्वमित्यभावव्यक्तिविशेषमादाय निर्वाच्यम् । तत्तदभावव्यक्तिश्चानुगताभावत्वं विनाप्यनुभवसिद्धा । यद्वा पटादि न घट इति समानाधिकरणनिषेधव्यवहारो घटान्योन्या·

न्यायलीलावतीप्रकाशविवृतिः

पि सत्ताविरहव्यक्तिरनुगताभावत्वाप्रतीतावपि प्रतीतैवेति सैवाभावव्यक्तीनामनुगामिकेति भावः । द्रव्यादिषट्केति । अन्यतरत्वावच्छिन्नषट्प्रतियोगिकान्योन्याभाववत्त्वं द्रव्यत्वाद्यवच्छिन्नप्रतियोगिकान्योन्याभावषट्काधारत्वं चेत्यर्थः । एवमत्यन्ताभावगर्भेऽपि । अन्योन्याभावो न द्रव्यादि अत्यन्ताभावे न द्रव्यत्वादीति प्रतीतेश्चात्माश्रयोऽप्ययमदोषाय प्रमेयत्वादाविव । यद्यपि विशेषत्वादेरतीन्द्रियतयाऽभावत्वप्रत्यक्षं न स्यादिति दूषणमत्रापि, तथापि प्रत्यक्षप्रतीतिविषयोऽभावत्वं स्वरूपसंबन्धविशेषात्मकमेव, इदं तु विभाजकोपाधिभूतं निरुक्तमिति मन्तव्यम् । अनुगताभावत्वनिर्वचनं विनाप्यन्योन्याभावादिकमादायानुगतप्रतीतिव्यवहारसमर्थनं मन्मते घटते, तव तु तदपि नास्तीत्याशयेनाह यद्वेति । नन्वेवं पदार्थानां सप्तत्वव्याहतिरत आह

---

(१) प्रमेयत्ववदविरोधात् ।

भावबुद्ध्यविषयत्वं वाऽभावत्वम् ।

भिन्नरूपेष्वभावेषु स्वे च रूपे च(५) कश्चन ।
असम्बद्धोऽप्यभावात्मा तुल्यबोधप्रबोधकः ॥

---

न्यायलीलावतीकण्ठाभरणम्

यत एव, यथा प्रमेयत्वं स्वस्मिन्नपि वर्तते, अन्यथा तस्य केवला-न्वयित्वं भज्येतेत्यर्थः । ननु प्रमेयत्वस्य केवलान्वयित्वात्प्रमाविष-यत्वाच्च तथात्वमस्तु, अत्र तु तथा कथं स्यादित्यनुशयादाह भाव-बुद्धीति । भावत्वप्रकारकबुद्ध्यविषयत्वमित्यर्थः । न ह्यभावो भावत्वेन गृह्यत इत्यर्थः । आद्यं पद्येन संगृह्णाति भिन्नरूपेष्वभावेष्विति । नन्वेवं तमः

न्यायलीलावतीप्रकाशः

भावेनैकेन, घटादौ न गोत्वमित्यनुगतो गोत्वाभावव्यवहार एकेना-त्यन्ताभावेन, कपाले भूतले इदानीं घटो नष्ट इत्यनुगतव्यवहार एकेन ध्वंसेन, घटानुत्पाददशायामेतेषु घटो नास्तीत्यनुगतव्यवहारः प्रा-गभावेणैकेनेति चत्वारो निषेधव्यवहाराश्चतसृभिरेव व्यक्तिभिः क्रिय-न्ते तासां निरुक्तेनैव रूपेणैकपदार्थत्वम् । सम्प्रदायविदस्तु सत्ताभान-विरोधिप्रकारवत्त्वमभावत्वम्, समवायादिकं हि भासमानं सदित्येव भासत इत्याहुः । भावबुद्धीति । भावालम्बनत्वात्यन्ताभाववद्बुद्धिवि-षयत्वमित्यर्थः । न च प्रतियोगिना समानसंवित्संवेद्यत्वादीदृशी बु-द्धिरभावगोचरा न प्रसिद्धेति वाच्यम् । प्राधान्येन विषयत्वस्य वि-वक्षितत्वादिति भावः । उक्तमर्थं संगृह्णाति भिन्नरूपेष्विति । कश्चनास-

न्यायलीलावतीप्रकाशविवृतिः

तासामिति । (१)तमो यद्यपीति । तथाच प्रागभावत्वादिकं न सत्ता-भानविरोधीत्यसिद्धं लक्षणमिति भावः । तथापीति । प्रागभावत्वादिना तज्ज्ञाने तत्र चलनाद्यारोपो न स्यादिति तत्र न भासत एवेत्यर्थः। प्रकार इत्यनन्तरं भासत इति शेषः । वस्तुतस्तथासति प्रतीत्याकारो न स्यादित्यन्यथा फक्किकागतिः । तथाहि प्रागभावत्वादिभाने सत्यपि तत्र सत्ताद्यारोपो विषयरूपदोषमाहात्म्यादिति वस्तुगतिः । तथा

---

(१) ०स्वेन रूपेण० ।
(२) एतत्प्रतीकधृतग्रन्थस्य प्रकाशेऽदर्शनादत्र वर्धमानकृतक्रोडपत्रिकाव्याख्यानमिदमिति प्रतिभाति ।

प्रमेयत्वं यथान्यत्र स्वे च रूपे(१) तथाविधम् ।
व्यवहारं तनोत्येव विरोधं भजते न च ॥
भावत्वबुद्धिरेकैव विषयाभावयन्त्रिता ।
नास्तीत्यनुगताकारव्यवहारप्रवर्त्तिनी ॥

एवं सत्यभावमतिव्यर्थता इति चेत् । न । तस्य सामान्य-

---

न्यायलीलावतीकण्ठाभरणम्

संग्रहो न स्यात्, नहि तत्र सत्ताबोधसामग्रीवैधुर्यमिति चेत् । न, स्वरूपतस्तत्रापि तद्वैधुर्यात्, क्रियागुणारोपाधीना कथञ्चिदेतद्बुद्धिरित्यन्यदेतत् । द्वितीयमनुगमकं संगृह्णाति-भावत्वप्रकारकबुद्धिर्विषया भावत्वेनाविषयत्वेन यन्त्रिता सती, व्यवहारस्य भावत्वप्रकारकबुद्ध्यैव उपपादनादित्यर्थः । परिहरति तस्येति । नास्तीति व्यवहारस्य व्य-

न्यायलीलावतीप्रकाशः

स्वश्चोऽप्यभावात्मा भिन्नरूपेष्वभावेषु स्वे च रूपे स्वात्मनि च तुल्यं यथास्यादेवं बोधजनक इति योजना । भावबुद्ध्यविषयत्वं वेति संगृह्णाति भावत्वबुद्धिरिति । भावत्वबुद्धेरनुगतायाः यो विषयो भावस्तदभावेन यन्त्रिता भावविषयत्वात्यन्ताभाववतीत्यर्थः । एवंसतीति । यदि तावत्सर्वाभावव्यक्तीर्न जानाति कथं पृच्छति-सर्वाभावानुगतः को धर्म-इति । अथ जानाति तदा तन्निश्चयार्थमनुगतधर्मस्वीकारो व्यर्थ इत्यर्थः । तस्य सामान्येति । तस्येत्यार्थो निर्देशः । विशिष्यनिश्चितेष्वपि सामान्यजिज्ञासायां तस्या बुद्धेश्चरितार्थयितुं शक्यत्वादित्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

च तत्र प्रागभावत्वादिः प्रकारो न सत्तामानविरोधीति चलनाद्यारोपाव कल्प्यत इति योजना । न चैवं तत्रैवाव्याप्तिः । अन्यत्र विरोधिनः प्रागभावत्वादेरत्रापि विद्यमानत्वादिति भावः। भावगोचरसमूहालम्बनमादाय सम्भवाद्याचष्टे भावालम्बनत्वेति । भावाविषयकत्वेत्यर्थः । प्राधान्येनेति ।प्रतियोगिदल इति शेषः । प्रबोधक इत्यस्यैव बोधजनक इत्यर्थे बोध इत्यनर्थकमत आह योजनेति । तथाच प्रबोधक इत्यस्य जनक इत्येवार्थ इति भाव । कथं पृच्छतीति । किम्पुनर्नञाभि-

---

(१) ०स्वरूपे च त० ।

विशेषविषयसाकाङ्क्षत्वे सामान्यव्यवस्थाया एवापेक्षणात् ।

स पुनश्चतुर्धा । प्राक्प्रध्वंसात्यन्तान्योन्याभावात्मा । उत्तरैकावधिरभावः प्रागभावः । प्रागेकावधिरभावो ध्वंसः । प्रागभा-

---

न्यायलीलावतीकण्ठाभरणम्

वहर्तव्यगतः सामान्यविशेषो यो विषयस्तत्साकाङ्क्षत्वं,तथाच व्यवहर्तव्येऽङ्गं यावदेकं सामान्यं नोच्यते तावदनुगतव्यवहार एव नोत्पद्यते, स चाभावेऽनुगतो धर्मो भावत्वप्रकारकबुद्ध्यविषयत्वमित्यर्थः । व्याख्यानान्तरं चिन्त्यम् ।

सिद्धमभावं विभजते स पुनरिति । उत्तरैकेति । यद्यप्युत्तरावधिरभाव इत्येवोचितम्, अन्येषामभावानामतद्रूपत्वात् । तथाप्युत्पादविनाश-

न्यायलीलावतीप्रकाशः

उत्तरैकेति। ननूत्तरत्वं स्वसमानकालप्रतियोगिकध्वंससमानकालीनत्वम्, ध्वंसश्च प्रागभावप्रतियोग्यभावइत्यन्योन्याश्रयः। न च प्रतियोगिजनकोऽभावः प्रागभावः, प्रागभावावच्छिन्नकालवृत्तित्वं जनकत्वमित्यन्योन्याश्रयात्। नाप्यदृष्टानधिकरणकालानधिकरणाभावः, स्वर्गयागयोः कार्यकारणभावे गृहीते तत्यपूर्वकल्पनमित्यन्योन्याश्रयात । नापि गन्धानधिकरणकालानधिकरणाभावः लीलावतीकारैः सर्वमुकेरनभ्युपगमात् । प्रतियोग्याधारमात्रवृत्तिरभावो ध्वंसस्तत्प्रतियोग्यभावः प्रागभावः, प्रागभावस्तु न तथा तस्य कारणत्वेन निमित्तकारणादिवृत्तित्वादिति चेत्। न । आश्रयनाशजन्यध्वंसाव्याप्तेः । उत्पत्तिमान-

न्यायलीलावतीप्रकाशविवृतिः

ध्येयमित्यादिनेति । स्वसमानकालेति । प्रतिक्षणं कस्यचिदुत्पत्तिः कस्यचिद्विनाश इति सिद्धान्तेन घटाद्यव्यवहितोत्तरेऽपि नाव्याप्तिः। सर्वमुक्त्यनभ्युपगमदोषे सत्येवाह। स्वर्गयागयोरिति । अपूर्वकल्पनमिति। तत्कल्पने च तद्घटितप्रागभावत्वग्रहे तद्घटितकारणताग्रह इति शेषः। प्रतियोगीति । प्रतियोगिसमवायीत्यर्थः। मात्रपदमन्योन्याभावादिव्यावर्त्तनाय। प्रागभावस्य कारणत्वेनेति। कारणं दण्डसंयोगादिः निमित्तकारणेऽपि वर्त्तत इति तत्प्रागभावस्यापि निमित्तकारणत्वे क्षत्यभावात् प्रतियोग्युत्पत्तिनियमश्च समवायिकारणस्वाभाव्यादित्यर्थः । स्वसमानकालेति ।

वनिवृत्तिनिवृत्तौ तदुन्मज्जनापत्तिरिति चेत् । न । ध्वंसस्यापि तद्विरोधित्वात्(१) । एवंसति भावाभावानिवृत्त्या तदुभयात्मकतापत्तिरिति चेत् । न । विधिमुखवेद्यत्वावेद्यत्वयोस्तल्लक्षणत्वात् । तन्निषेधनिषेधविधावपि प्रागभावाविधानेऽन्योन्याभावात्मकत्वं भावाभावयोर्भज्येत । एकतरनिषेधेऽप्यपरस्याविधाना(२)दिति

न्यायलीलावतीकण्ठाभरणम्

शीलात्यन्ताभावाभ्युपगन्तृमते तद्वारणार्थमेकपदम् । तथाच प्रतियोगिजनकोऽभावः प्रागभावः । न च जनकत्वमपि प्रागभावनिरूप्यमित्यन्योन्याश्रयः, पूर्वकालवर्तित्वं हि जनकत्वम् , पूर्वकालश्च प्रागभावावच्छिन्नः काल इति वाच्यम् । सहकारिविरहप्रयुक्तकार्या-

न्यायलीलावतीप्रकाशः

भावो ध्वंस इति चेत् । न । उत्पत्तेः स्वसमानकालपदार्थप्रतियोगिकध्वंसानाधारसमयसम्बन्धरूपत्वेनान्योन्याश्रयात् । अत्राहुः । प्रतियोग्यन्यूनानतिरिक्तकालीनावधिकसामयिकयावत्परत्वाश्रयसमानकालीनकादाचित्काभावः प्रागभावः, गुणकर्मणोः प्रागभावेऽपितत्समानकालीनावधिकपरत्वाश्रयसमानकालीनत्वाच्च तदव्याप्तिः, किञ्चिदवधिनाशे किञ्चित्परत्वाश्रयस्यापि नाशाद्यावदर्थाभावात् । यत्र परत्वावधिप्रति-

न्यायलीलावतीप्रकाशविवृतिः

प्रतिक्षणं कस्यचिदुत्पत्तिः कस्यचिद्विनाश इति सिद्धान्ते द्वितीयादिक्षणस्य तादृशध्वंसाधारत्वान्नातिव्याप्तिरिति भावः । न च चरमध्वंसोत्पत्तावव्याप्तिः मूलकृता तदनङ्गीकारात्तदनुसारेणैवात्र विचारादिति भावः । प्रतियोगीति । प्रतियोग्यवधिकेति कृते गुणकर्मप्रागभावेऽव्याप्तिस्तदवधिकपरत्वाभावादपरत्वाश्रयस्यैव परत्वावधित्वादत आह अन्यूनेत्यादि । तथा च तादृशं द्रव्यमादाय तत्रापि लक्षणं समानमिति नोक्तदोषः । न च प्रतियोग्यन्यूनकालीनेत्येव सम्यक्, गणनाक्रमेण तादृशप्रतियोग्युत्तरकालीनं यद्द्रव्यं तदवधिकपरत्वाश्रयप्रतियोग्यपीत्यसम्भवापत्तेः । नचानतिरिक्तपददानेप्येष दोषः । पदाभ्यां प्रतियोगिकालव्यापककालत्वस्य विवक्षितत्वात् । अत

(१) ०विरोधात् । (२) ०प्यपरावस्थानाविधानादि० ।

न्यायलीलावतीकण्ठाभरणम्

धारवत्त्वस्य जनकत्वात् । अदृष्टानाधारकालानाधारत्वम् गन्धानाधारकालानाधाराभावत्वं च लीलावतीकारमते सर्वमुक्त्यनभ्युपगमे न दुष्टम् । प्रतियोग्यन्यूनानतिरिक्तकालीनावधिकसामयिकपरत्वाश्रयसमानकालीनकादाचित्काभावत्वं तु न लक्षणं शब्दबुध्यादिप्रागभावाव्याप्तेः, न हि क्षणद्वयमात्रस्थायि मूर्तं संभवति, सम्भवे आद्यशब्दप्रागभावे च तथाप्यव्याप्तिः, प्रलयकालीनचरमक्रियाप्रागभावाव्याप्तिः, ब्रह्माण्डान्तरसत्त्वेपि तन्मूर्तनिरूपितपरत्वोपेते प्रमाणाभावात् । प्रतियोगित्वं च प्रागभावप्रतियोगित्वमेव वाच्यं तथा चात्माश्रयः,

न्यायलीलावतीप्रकाशविवृतिः

एवान्त्यशब्दप्रागभावेऽपि नाप्रसिद्धिनिबन्धनाव्याप्तिः, यथाश्रुते तस्या अपि प्रसङ्गात् । केचित्तु प्रतियोगिकालीनेत्येव विवक्षितम् । न च प्रतियोग्युत्तरोत्पन्नमादायासम्भवः । नहि प्रतियोगिकालीनेत्यत्रापि यावत्त्वं विशेषणम्, किन्तु परत्वे परत्वाश्रये वा । तथाच प्रतियोगिसहोत्पन्नं प्रतियोगिपूर्वोत्पन्नमेव प्रतियोगिसमानकालं वा गृहीत्वा लक्षणस्य सुवचत्वात् । एतेनान्त्यशब्दप्रागभावेऽपि लक्षणसङ्गतिः । न च प्रतियोगिध्वंसाव्यवहितपूर्वोत्पन्नद्रव्यमादाय ध्वंसेतिव्याप्तिः, तदवधिकपरत्वस्य पूर्वकालविनष्टेऽसम्भवात् । पूर्वमेतस्यानुत्पत्तेरिदानीं च तस्यैव नाशात् परत्वापरत्वयोश्चैकदैवोभयत्रोपपत्तेरिति वाच्यम् । परत्वाश्रयपदेन परत्वाश्रयत्वयोग्यस्य विवक्षितत्वात् योग्यतायाश्च पूर्वविनष्टेऽपि सत्त्वादिति वदन्ति । तदयुक्तम् । योग्यतावच्छेदकं हि पूर्वोत्पन्नत्वमेव वाच्यम्, तच्च प्रागभावघटितमित्यात्माश्रयात्, तस्माद्योग्यताऽघटितमेव लक्षणं वाच्यमिति शङ्किताव्याप्तिनिरासाय यावत्त्वमनुगतप्रतियोगिकालीनेऽपि विशेषणमित्यसम्भव एवेति पूर्वव्याख्यैव साधुः । न च पूर्वव्याख्यानेऽपि यत्र तादृशं द्रव्यं नास्त्यनिश्चितं वा तत्प्रागभावेऽतिव्याप्तिरिति दोषः, तादृशद्रव्यस्य द्व्यणुकादेरन्यस्य वा सर्वत्र सम्भवात् । निश्चयस्तु तस्यापाततो मास्तु, उत्तरकालं तु अनुमानादिना स्यादेव । प्रतीतिविषयस्तु स्वरूपसम्बन्धविशेष एव । एवमनभ्युपगमे यावत्परत्वाश्रयाप्रत्य, तया लक्षणाज्ञानापत्तेश्च । परत्वं च कालपिण्डसंयोगासमवायिकारणकं विजातीयमेव लक्षणप्रविष्टमतः प्रतियोगित्वानिष्ठस्यापि दैशिकपरत्वाश्रयत्वादव्याप्तिरपा-

न्यायलीलावतीकण्ठाभरणम्

अन्यथाभिधाने चातिव्याप्तिः। प्रागभावेति। प्रागभावनिवृत्तिर्घटस्तन्निवृत्तौ तद्ध्वंसे सति तदुन्मज्जनं तत्तादवस्थ्यमित्यर्थः। तद्विरोधित्वादि-

न्यायलीलावतीप्रकाशः

योगी विनष्टः परत्वाश्रयश्च विद्यते तत्र न ध्वंसेऽतिव्याप्तिः, प्रलयकाले ब्रह्माण्डान्तरवृत्तिद्रव्यस्य परत्वाश्रयस्य सत्त्वान्न तत्कालीनक्रियायामव्याप्तिः। प्रागभावेति। प्रागभावनिवृत्तिर्घटस्तन्निवृत्तौ तद्ध्वंसे प्रागभावोन्मज्जनापत्तिः प्रागभावाभावानाधारकालस्य प्रागभावाधारत्व-

न्यायलीलावतीप्रकाशविवृतिः

स्ता। क्वचित्तु सामयिकेति पदमेव तदर्थकमस्ति। प्रतियोगिज्येष्ठे प्रतियोगिनाशोत्तरवर्त्तमाने तादृशपरत्वसत्त्वात्तमादाय ध्वंसेऽतिव्याप्तिरिति यावत्पदं परत्वविशेषणम्। प्रतिक्षणं कस्यचिद्द्रव्यस्य नाशनियमान्न विशेषणदानेऽप्युक्तदोषः। न च यावत्परत्वाश्रयाप्रसिद्धिः, यावतामेव प्रसिद्धेः। केचित्तु यावत्त्वमाश्रयविशेषणमेव विशेषणसावधित्वादेव च विशिष्टसावधित्वमिति नान्वयः। आश्रयपर्यन्तधावनं तु प्रतियोगिन्युत्पन्ने तज्ज्येष्ठे यत्परत्वमुत्पद्यते तमादायातिव्याप्तिवारणाय। अत्यन्ताभावादावतिव्याप्तिवारणाय कादाचित्कपदम्। अभावपदं स्वरूपाख्यानपरम्। सर्गाद्यकालीनद्व्यणुकप्रागभावे च ब्रह्माण्डान्तर्वर्त्तिद्रव्यमादाय लक्षणसम्भवः। महाप्रलयानभ्युपगमेनैवेदं लक्षणमतो न चरमक्रियाप्रागभावाव्याप्तिः। न च ध्वंसप्रागभावात्मनि घटादावव्याप्तिः, तस्यालक्ष्यत्वात्। न च वर्गसंसर्गस्थायिनोऽदृष्टादेः प्रागभावेऽव्याप्तिः, तदन्यूनकालीनानित्यद्रव्याभावान्नित्यद्रव्यस्य च परत्वानवधित्वादिति वाच्यम्। प्रतियोगिकालीनस्यैव प्रतियोग्यन्यूनानतिरिक्तकालीनपदार्थत्वात्। न चैवमसम्भवः, प्रतियोग्युत्तरोत्पत्तिकप्रतियोगिसमानकालीनावधिकपरत्वाधिकरणप्रतियोग्यसमानकालत्वात्प्रागभावस्येति वाच्यम्। यावत्वविशेषणत्यागात्। नचैवं ध्वंसातिव्याप्तिरिति वाच्यम्। प्रतियोगिकालावृत्तित्वस्य परत्वाश्रये विशेषणत्वात्। तल्लाभार्थमेव च यावत्पदोपादानात् ग्रन्थाधिक्यादिति न्यायात्। यत्तु प्रतियोगिकालीनयत्किञ्चित्पदार्थावधिकयावत्परत्वाश्रयसमानकालीनत्वमेवार्थ इति प्रतियोगिसहोत्पन्नद्रव्यमादायैव लक्षणमिति नासम्भव इति। तन्न। तथासति प्रतियोगिविनश्यत्क्ष-

चेत् । न । एकप्रतियोगिनोरन्यतरनिषेधस्यान्यतरविधान-

न्यायलीलावतीकण्ठाभरणम्

ति। प्रागभावविरोधित्वात् इत्यर्थः। एवमिति। ध्वंसनिवृत्तिरूपतया भावत्वं घटनिवृत्तिरूपतया चाभावत्वमेकस्य प्रागभावस्य च स्यात्। एवं ध्वंसेपि वक्तव्यम्। अभावात्मा प्रागभावो यद्यभावप्रतियोगिकः स्यात्तदभावः स्यात्, एवं ध्वंसमपि पक्षीकृत्य समर्थनीयम्। भावाभावबृत्त्येति। भावाभावविधिचरितयेत्यर्थः। विधीति। भावविरोधित्वं नाभावत्वे तन्त्रं, नाप्यभावविरोधित्वं भावत्वे, किन्तु विधिमुखप्रत्ययावेद्यत्वं तद्वेद्यत्वं च यथाक्रमम्, तथाच तर्कस्थलव्याप्तौ अप्रयोजकत्वमुक्तम्। तन्निषेधेति। परस्परविरहरूपत्वं भावाभावयोर्भज्येतेत्यर्थः। एकप्रतियोगिनोरिति। यत्र एकमात्रं प्रतियोगि तत्र भावाभावयोः

न्यायलीलावतीप्रकाशः

नियमादित्यर्थः। तद्विरोधित्वात्–प्रागभावविरोधित्वादित्यर्थः। एवमिति। ध्वंसस्याभावप्रतियोगिकत्वे सतीत्यर्थः। न चापाद्याप्रसिद्धिः, अभावात्मा ध्वंसो यद्यभावप्रतिप्रतियोगिकः स्याद्भावः स्यादित्यर्थः। अत्र विधित्वमुपाधिरिति न प्रागभावनिवृत्तिर्घटाद्यात्मकत्वनियम इत्याह विधिमुखेति। अत्रोपाधेः साधनव्यापकत्वादनुकूलतर्काभावादप्रयोजकत्वमभिप्रेतम्। न च ध्वंसप्रागभावयोरन्योन्यप्रतियोगिकत्वेऽन्योन्यनिरूपणाधीननिरूपणत्वापत्तिः, अभावस्य अभावत्वेनैव निरूपणे तदपेक्षणात्, प्रमेयत्वादिना निरूपणे प्रतियोगिज्ञानमपेक्षणात्। तन्निषेधेति। तन्निषेधः प्रागभावप्रतिषेधो घटस्तस्य प्रध्वंसस्तस्य वि-

न्यायलीलावतीप्रकाशविवृतिः

णजातद्रव्यावधिकपरत्वाश्रयस्यापि नाशादिति योजना। प्रलयकालेति। सर्वत्र ब्रह्माण्डे युगपत्प्रलये मानाभावादिति भावः। तत्कालीनक्रियायां तत्कालीनाक्रियाप्रागभाव इत्यर्थः। अभावप्रतियोगिकत्वे सतीति भावत्वे हेतुरभावत्वे च भावप्रतियोगिकत्वं हेतुरुभयासिद्ध एवेति भावः। अत्रोपाधेरिति। अत्राप्रयोजकत्वमभिप्रेतमुक्तोपाधेः साधनव्यापकत्वादित्यर्थः। केचित्तु साधनव्यापकतायामेवाप्रयोजकत्वमित्युपाधिरेव स इत्यर्थ इति वदन्ति। तदयुक्तम्। पञ्चम्यनन्वयापत्तेः। अभावत्वेनेति। तदभावत्वेनेत्यर्थः। यावत्प्रतियोगिनिरूप्यत्वे

नियमात् । उभयविरोधिनि तु घटवत्तदभावात् । तथापि परस्प-
राभावात्मकता कुत इति प्रश्नेऽपि अन्यतरविषयस्यान्यतरवि-
धिनियमाभावेऽपि एकतरविधेरपरनिषेधनियामकत्वादिदमुत्तरम् ।
नहि प्रध्वंसविधौ न प्रागभावनिषेधः । तद्विधौ च न प्रध्वंसनि-
षेधः । एवंसति ध्वंसोऽपि नश्येत्, कृतकत्वात् । प्रागभावोऽपि
जायेत, नाशित्वात् । उन्मज्जनापत्तेश्चिरमिह निहतत्वात् । अ-
न्यथा तु प्रकृतेऽपि न समाधिरिति चेत् । न । असंभवद्विरुद्ध-

---

न्यायलीलावतीकण्ठाभरणम्

परस्परविरहरूपत्वं यथा गोत्वगोत्वात्यन्ताभावयोः प्रकृते तु घट-
तद्ध्वंसतत्प्रागभावानामुभयोभयविरोधित्वान्न तथेत्यर्थः । परस्परा-
भावात्मकता कुत इति । परस्पराभावात्मकताव्यवहारः कुत इति ध्वंसा-
दीनामिति प्रश्नार्थः । परस्परविरहव्याप्यत्वनिबन्धन इत्याह अन्यत'
रेति । एतदेवाह नहीति । तर्हि नीलपीतादावपि तथा स्यादिति चेत् ।
न । अभावत्वे सतीति विवक्षितत्वात् । उन्मज्जनापत्तेरिति । अन्योन्यवि-
रोधिसत्त्वकाले कथमन्योन्योन्मज्जनं स्यादित्युक्तत्वादित्यर्थः । तथा-
च घटध्वंसस्यापि घटविरोधित्वान्न तदा तदुन्मज्जनमिति भावः ।
अन्यथेति । घटध्वंसकालेऽपि तथासति प्रागभावोन्मज्जनं स्यादेवेति
प्रकृतेऽपि न समाधिरित्यर्थः । असंभवदिति । प्रध्वंसप्रागभावयोरेकत्वेन
प्रत्यभिज्ञानान्न नाशोत्पादौ, तयोरनुमाने च भावत्वमुपाधिरित्यर्थः ।

न्यायलीलावतीप्रकाशः

धावित्यर्थः । एकेति । यत्र द्वयोरेव मिथो विरोधस्तत्र तथा, अत्र त्वेक-
स्योभाभ्यां विरोध इत्यर्थः। घटवदिति । यथा घटे सति प्रागभावो ना-
स्ति तथा प्रध्वंसे सतीति तस्यापि विरोधित्वादित्यर्थः । एवंसतीति ।
ध्वंसस्योत्पत्तिमत्त्वे प्रागभावस्य नाशित्वे सतीत्यर्थः । न चैवं घटप्रध्वं-
सनाशकाले घटोन्मज्जनमेवं तत्र प्रागभावोत्पत्तेः पूर्वं घटः स्यादित्याह
उन्मज्जनेति । ध्वंसध्वंसस्यापि घटविरोधित्वादेवं प्रागभावप्रागभाव-
स्यापीत्यर्थः । अन्यथेति । प्रागभावस्य घटध्वंसोभयविरोधित्वेऽपि घट-
ध्वंसे जाते तत्प्रागभावोन्मज्जनापत्तेरित्यर्थः । असम्भवदिति । प्रत्य-

धर्मासंसर्गप्रत्यभिज्ञानप्रतिक्षिप्तत्वादनुमानानां लाघवाच्च । पूर्वोत्तरावधिरहितस्तु संसर्गप्रतियोगिकोऽभावोऽत्यन्ताभावः ।

---

न्यायलीलावतीकण्ठाभरणम्

लाघवाच्चेति । बहूनां ध्वंसानां घटे विरोधित्वाभ्युपगमे गौरवं स्यादित्यर्थः । पूर्वोत्तरेति । प्रागभावव्यावृत्त्यर्थम् उत्तरेति, ध्वंसव्यावृत्त्यर्थम् संसर्गप्रतियोगिक इति, अन्योन्याभावव्यावर्तनाय चान्योन्याभावेति पदं देयम् ।

न्यायलीलावतीप्रकाशः

भिज्ञानात्पूर्वं चिरकालीनयोर्ध्वंसप्रागभावयोरभेदसिद्धौ उभयोर्नाशोत्पत्त्यनुमानं बाधितमित्यर्थः । साधनावच्छिन्नसाध्यव्यापकं भावत्वमुपाधिः सन्नपि स्फुटत्वान्नोक्तः । लाघवात् कल्पनालाघवादपि तयोरैक्यं सिद्धमित्यर्थः । पूर्वोत्तरेति । पूर्वोत्तरेत्यनेन ध्वंसप्रागभावयोर्व्यावृत्तिः, संसर्गेत्यनेनान्योन्याभावस्य । ननु घटसंसर्गः पटो न भवतीत्यत्रान्योन्याभावेऽतिव्याप्तमिदम् । न च संसर्गाभावत्वे सतीति विशेषणीयम्, तदनिरुक्तेः । न च प्रतियोगिवृत्तिरभावोऽत्यन्ताभावः नित्यत्वात्यन्ताभावेऽतिव्याप्तेः प्रमेयत्वव(१)न्नित्यत्वस्य स्वात्मन्यपि वृत्तेः, अन्यथा नित्यत्वाभावकाले व्योमादेरनित्यतापत्तेः । न च नित्यत्वमनेकमननुगमात् । अत्राहुः । सदातनः संसर्गाभावोऽत्यन्ताभावः, संसर्गाभावश्च संसर्गावच्छिन्नप्रतियोगिकोऽभावः, घटसंसर्गः पटो नेत्यत्र तु संसर्गप्रतियोगिकत्वेऽपि तादात्म्यं प्रतियोगितावच्छेदकं न तु संसर्गः । अस्मात्पितृचरणास्तु प्रतियोग्यधिकरणयोः संसर्गमा-

न्यायलीलावतीप्रकाशविवृतिः

गौरवादिति भावः । ध्वंसप्रागभावयोरिति । ध्वंसयोः प्रागभावयोश्चेत्यर्थः । नाशोत्पत्तीति । नाशानुमानमुत्पत्त्यनुमानं च यथासंख्यमन्वयः । मूले च बहुवचनं द्वित्वाभिप्रायमेवेति भावः ।

तस्येति । नित्यत्वस्येत्यर्थः । अननुगमादिति । तथाचानुगतप्रतीत्या तस्यैकत्वसिद्धिरिति भावः । ननु संसर्गस्य न प्रतियोगितावच्छेदकत्वं सर्वत्र तथासति संसर्गी नेति सर्वत्र प्रत्ययापत्तेरित्यरुचे-

---

(१) विवृतिकारमतेनात्र 'वत्तस्य' इति पाठो बोध्यः ।

ननु गवात्मनाऽश्वाभावोऽप्यत्यन्ताभाव एव, निरवधित्वात् । तदपार्थकं संसर्गप्रतियोगित्वम् । यथा एक एव ध्वंसो भावाभावनिषेधात्मा न भिद्यते तथात्रापि न्यायस्य तुल्यत्वात् । तत्कुतोऽभावस्य चातुर्विध्यमिति चेत् । न । अन्योन्याभावस्य निषेध्यसमानदेशकालत्वात् । तस्य तु तदभावात् । अर्धरक्ते समानदेशकालत्वं भावाभावयोरिति तस्यापि पञ्चमाभावत्वम् । अस्य वा वैधर्म्यस्याप्रयोजकत्वेऽभावत्रैविध्यमिति चेत् । न ।

---

न्यायलीलावतीकण्ठाभरणम्

अपार्थकमिति । अव्यावर्तकमित्यर्थः । भावाभावेति । घटतत्प्रागभावनिषेधात्मा नेत्यर्थः । अत्रापीति । तादात्म्यनिषेधात्मा संसर्गनिषेधात्मा च एक एवाभाव इत्यर्थः । अन्योन्याभावस्येति । समानदेशत्वमात्रे वक्तव्ये समानकालत्वाभिधानं सम्पातायातम् । तस्य त्विति । अत्यन्ताभावस्येत्यर्थः । प्रतियोगिवृत्तिरभावोऽत्यन्ताभाव इति तु न लक्षणम् । नित्यत्वात्यन्ताभावाव्याप्तेः, तस्य च तत्रावृत्तेः, नित्यत्वस्यापि नित्यत्वात्, तदनित्यत्वे नित्यानामनित्यत्वापत्तेः । ननु संयोगात्यन्ताभावस्य नान्योन्याभावत्वं संसर्गप्रतियोगिकत्वात्, नात्यन्ताभावत्वं प्रतियोगिसमानदेशत्वात्, तथा चासौ पंचमो वा स्यादप्यन्योन्याभावात्यन्ता-

न्यायलीलावतीप्रकाशः

रोप्य यो निषेधः स संसर्गाभावः, घटसंसर्गः पटो नेत्यत्र तु संसर्गो नारोप्यते, किन्तु तादात्म्यमित्यनयोर्भेदः ।

पूर्वपक्षयेवाह यथैक एवेति । यदा तु अन्ते चेदिति पाठस्तदा सुगम एव । संयोगाव्याप्यवृत्तित्वमाश्रित्याह अर्द्धरक्त इति । प्रतियोगिसमानदेशकालतया तस्यात्यन्ताभावत्वाभावात्, संसर्गप्रति-

न्यायलीलावतीप्रकाशविवृतिः

दाह अस्मत्पितृचरणास्त्विति । प्रतियोग्यधिकरणसंसर्गविषयतया यस्यारोपत्वमित्यर्थः । तेन प्रतियोगिनमधिकरणे समारोप्येत्यर्थो न लभ्यते अत एव चिन्तामणौ तथैवास्ति । तादृशारोपजन्यतावच्छेदकं च स्वाभावाभावत्वमेवेति दिक् । निषेधः निषेधप्रत्ययः, स तद्विष-

तत्रावच्छेदकस्य सत्त्वात्। अवच्छेदकस्य भावैकनियमेन न भेदो, नियमेन पुनः समानदेशत्वम्, अवच्छेदकान्तरोपादाने त्वनवस्थितिरिति चेन्न। युगपद्भावाभावयोरप्रतीतिरेव। एकस्य देशका-

---

न्यायलीलावतीकण्ठाभरणम्

भावयोर्लक्षणं न वाच्यमित्याह अधरस्येति। तत्रेति। अवच्छेदभेदेन प्रतियोगिसमानदेशत्वाभावादसावत्यन्ताभाव इत्यर्थः। अवच्छेदकस्येति। यद्यवच्छेदको व्याप्यवृत्तिस्तदा तद्गतोपि न देशभेदः, अनियमे तस्याव्याप्यवृत्तितायां पुनः समानदेशत्वमेवावच्छेदकभावाभावयोस्तत्राप्यवच्छेदकान्तरकल्पनेऽनवस्थेत्यर्थः। संयोगतदत्यन्ताभावयोर्व्याप्यवृत्तितामभ्युपेत्याह युगपदिति। नहि तत्रैव संयोगः प्रतीयते तत्रैव तदभावोपि, किन्तु संयोगोऽवयविनि तदभावस्त्ववयवे प्रतीयते। न चैवं संयोगोऽप्यवयववृत्तिः स्यादिति वाच्यम्। तथासति तस्य परमाणुपर्यन्तमपसारणेऽतीन्द्रियतापत्तेः। न चैवमभावेपि स्यादिति वाच्यम्। प्रतियोगिपरतया ह्यभावप्रतीतिर्न त्वभाव एव तत्र प्रतियोगिप्रतीतिरिति। संयोगातीन्द्रियतायामुभयोरप्यतीन्द्रियत्वं प्रसज्येत, अ-

न्यायलीलावतीप्रकाशः

योगिकतया चान्योन्याभावस्याभावादित्यर्थः। तत्रेति। यदवच्छेदेन प्रतियोगी तदवच्छेदेनात्यन्ताभावासत्त्वादित्यर्थः। अवच्छेदकस्येति। भावैकनियमेनाधिकरणेऽवच्छेदकस्य भाव एव नाभाव इत्येवंरूपेण न भेदो भावाभावव्यवस्थापकावच्छेदेनात्यन्ताभावासत्त्वादित्यर्थः। अवच्छेदकस्यैकत्राधिकरणे भावाभावसत्त्वेनावच्छेदकभावाभावयोरेव समानदेशत्वमित्यर्थः। संयोगस्याव्याप्यवृत्तित्वमनभ्युपगम्य समाधत्ते युगपदिति। क्रमेणेति। तथा च संयोगाभाव उपाध्याश्रय एव। नचैवं संयोगोऽप्युपाध्याश्रय एव स्यात्, संयोगस्याऽवच्छेदकेनान्यथासिद्धौ परमाणुविश्रान्तेरतीन्द्रियत्वापत्तेरिति भावः। अवयवि-

न्यायलीलावतीप्रकाशविवृतिः

याभाव इत्यर्थः। पूर्वपक्ष्येवेति। प्रतियोगिकत्वमित्यनन्तरमिति चेदिति पाठपक्षे अंते चातुर्विध्यमित्यनन्तरम्। अवयविनीति। घटादौ ह्यवयवच्छेदकेनान्यथासिद्धौ तदवयवस्य स्थूलतया तत्रातीन्द्रियत्वा-

कपुरुषभेदेन उपलम्भानुपलम्भयोरसिद्धेः। क्रमेण प्रतीतिरुपाधिभेदसाहित्येनैव। उपाधिभेदसाहित्यमन्तरेण चैकत्र भावाभावौ विरुद्धाविति सर्वत्र दृष्टम्। अत्र तु तदभावादविरुद्धौ भविष्यतः। तादात्म्यप्रतियोगिकोऽन्योन्याभावः। तदसिद्धम्। तत्र

---

न्यायलीलावतीकण्ठाभरणम्

भावातीन्द्रियत्वे तु न काचित्क्षतिर्विनिगमकसत्त्वात्। संयोगस्तावदवयविन्येव तदत्यन्ताभावस्त्वनुभवबलादवयव इति भावः। सिद्धान्तविरोधभयेन पुनरव्याप्यवृत्तित्वमेव तयोराह उपाधिभेदेति। अवच्छेदभेदमादाय तावेकत्रैव वर्तेते। यत्र तु नावच्छेदभेदस्तत्र विरोधोऽत्र तु तदभावादुपाधिभेदस्य विरहाभावादविरुद्धौ समानाधिकरणौ भविष्यत इत्यर्थः। तादात्म्येति। तादात्म्यावच्छिन्नप्रति-

न्यायलीलावतीप्रकाशः

नि संयोगतदभावौ द्वावप्यवच्छेदकेनान्यथासिद्धाविति द्वावप्यवयविनि न स्यातामित्यव्याप्यवृत्तिरेव संयोग इत्याशयेनाह उपाधिभेदेति। तादात्म्येति। ननु तादात्म्यप्रतियोगिकसंसर्गाभावेऽतिव्यापकमिदं, तादात्म्ये च न द्वयोरभेदस्तस्याप्रसिद्धेः, प्रसिद्धौ वा न भेदः, नापि स्वरूपमेकत्वं वा, अभावान्तरस्यापि तत्प्रतियोगिकत्वात्। नापि प्रतियोगिसमानदेशकालोऽभावोऽन्योन्याभावः, देशकालशून्यान्योन्याभावेऽव्याप्तेः, धर्मात्यन्ताभावेनैवोपपत्तौ भेदे मानाभावश्च, 'सविशेषणे हि' तिन्यायेन घटोयं नेति धर्मस्य निषेधात्, कथमन्यथा कठपु-

न्यायलीलावतीप्रकाशविवृतिः

पत्तेरभावादिति भावः। नापि प्रतियोगीति। प्रतियोगिसमानदेशत्वे प्रागभावादावतिव्याप्तिः प्रतियोगिसमानकालत्वे चात्यन्ताभावत्वे अतिव्याप्तिरित्युभयमुपात्तम्। देशकालशून्येति। दिक्कालान्यान्योभाव इत्यर्थः। न च दिक्कालयोरपि प्रतीतिबलादात्माश्रयमवधूय दिशि काले च वृत्तिरेव तदन्योन्याभावयोरपि प्रतीतिबलादितीयमव्याप्तिरयुक्ता, तथापि देशपदं दिक्कालातिरिक्तदेशपरमेव वाच्यमन्यथात्यन्ताभावातिव्याप्तेस्तथासतीदं दूषणम्, एवञ्च देशकालेत्यत्र कालपदं संपातायातमित्यवधेयम्। धर्मेति। प्रतियोगितावच्छेदकधर्मेत्यर्थः। कथमन्यथेति। कठपुत्रविशेषान्यत्वे परिच्छिन्ने विशेषक-

मानाभावात्। भिन्नबुद्धिरिति चेत्। न। तदभावेऽपि घटतदभाव-योर्भिन्नबुद्धिदर्शनात्। तत्र स्वरूपालम्बनमिति चेत्। न। भावेष्व-पि तुल्यत्वात्। आरोप्यते तत्राप्य(१)भाव इति चेत्। न। अभा-

---

न्यायलीलावतीकण्ठाभरणम्

योगिक इत्यर्थः। इदमिदं न भवति नेदमिहेति प्रतीतिभेदकृत एवा-नयोर्भेद इति भावः। तदभावेपीति। अन्योन्याभावत्वाभावेपीत्यर्थः। नह्यभावेऽभावान्तरं वर्तते तथा सत्यनवस्था स्यादिति भावः। आरोप्यत इति। घटो घटाभावो न भवति इत्यारोपितान्योन्याभावनि-बन्धनेयं प्रतीतिरित्यर्थः। अन्योन्याभावश्चेत्तत्रारोपितस्तदाभावस्य

न्यायलीलावतीप्रकाशः

त्रान्यविशेषत्वेन परिच्छिन्ने कठपुत्रविशेषभ्रमः तदन्योन्याभावपरि-च्छेदात्। कथं वा नायं कठपुत्र इत्यग्रे बाधकम्? प्रागेव तद्भेदपरि-च्छेदात्। सर्वकठपुत्रान्यता न परिच्छिन्नेति चेत्। न। सर्वपदस्यापि तत्तद्व्यक्तिवचनात्, न ह्यन्यः कठपुत्रः। धर्माभावालम्बनत्वेन तु तदग्र-हान्नायं दोषः। मैवम्। तदन्यकठपुत्रनिश्चये सम्भावनायां वा भ्रमात्, अग्रे बाधकमपि तदन्योन्याभावग्रहात्, अन्यथा तु भ्रमाद्यभाव एव, घटोऽयं नेति धर्मिणः प्रतियोगित्वग्रहात्, बाधकं विनैतदनादरेऽति-प्रसङ्गात्, धर्म्यभावग्रहेऽपि धर्मात्यन्ताभावग्रहसम्भवाच्च। लक्षणं

न्यायलीलावतीप्रकाशविवृतिः

ठपुत्रत्वे न भ्रम इत्यर्थः। तदन्यकठपुत्रेति। तद्धर्मावच्छिन्नान्योन्याभा-वग्रहस्य तद्धर्मप्रकारकभ्रमविरोधितया कठपुत्रत्वावच्छिन्नान्योन्या-भावाग्रहाद्भ्रम इत्यर्थः। अन्यस्य कस्यचन कठपुत्रत्वेन भ्रमविष-यस्याभेदस्तत्रारोप्यते तदन्योन्याभावग्रहादित्यर्थ इत्यन्ये। अन्यथेति। प्रागेव सामान्यान्योन्याभावपरिच्छेदेऽन्यस्य कठपुत्रत्वेन भ्रमाभा-वो वेत्यर्थः। धर्मिण इति। तथाच प्रतीतिलैक्षण्यादेवोभयोर्भेद इत्यर्थः। ननु तयोर्भेदे तदन्योन्याभावग्रहकाले तद्धर्मात्यन्ताभावसंशयः स्या-दत आह धर्म्यभावेति। तथाच तुल्यसामग्रीकत्वेन धर्मात्यन्ताभाव-स्यापि तदा ग्रहान्न संशय इति भावः। क्वचिद्धर्माभावेति पाठस्तत्रा-

---

(१) अपीति नास्ति मु० पुस्तके।

वस्यारोपितत्वे तत्प्रतियोगिनो भावस्य सत्त्वापत्तेः। उभयनिषेधे च विरोधापत्तेरिति चेत्। मैवम्(१)। अतिरेकिणोऽनवस्था(२)-

---

न्यायलीलावतीकण्ठाभरणम्

घटतादात्म्यस्य सर्वं स्यादित्यत आह अभावस्येति। ननु घटतदभाव-योरन्योन्याभावो नास्तीति बाधकप्रत्ययेन भवितव्यं, तथाचान्यो-

न्यायलीलावतीप्रकाशः

तु तादात्म्यावच्छिन्नप्रतियोगिकाभावत्वम्, तादात्म्यं चैकवृत्तिधर्मः, संसर्गाभावे त्वनेकवृत्तिना धर्मेण संसर्गेण प्रतियोगितावच्छिद्यते। अ-नेकवृत्तित्वं तु स्वसमानाधिकरणधर्मविरोधिधर्मसामानाधिकरण्यम्। यत्र तु प्रतियोगितावच्छेदकमधिकरणे समारोप्य नियतनिषेधावगमः सोऽन्योन्याभाव इति तत्त्वम्। अभावस्यारोपितत्व इति। घटतदभावयोः परस्परविरहात्मकतयाऽन्योन्याभावस्यारोपितत्वे प्रतियोगिनो भा-वस्य तादात्म्यस्य सत्त्वाद्यत्र घटाभावस्तत्र घटस्य सत्त्वापत्तेरित्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

न्योन्याभावग्रहस्य धर्मात्यन्ताभावग्रहत्वस्वीकारेऽपि तस्य तस्य घटादिरूपस्य धर्मस्यात्यन्ताभावग्रहसम्भवादित्यर्थः। तथा च तथा-पि तेन तेन रूपेण सर्वघटात्यन्ताभावग्रहे भूतले घटभ्रमो न स्यादि-ति तुल्यमित्यर्थः। एकवृत्तिधर्म इति। अव्यासज्यवृत्तिघटत्वादिकमि-त्यर्थः। अनेकवृत्तित्वमिति। यद्यपीदं घटत्वेऽपि गतं तत्समानाधिकरण-नीलाविरुद्धशुक्लादिसमानाधिकरणत्वात् तस्य, तथापि प्रतियोगि-तावच्छेदकधर्मविरुद्धाधिकरणतावच्छेदकधर्मसामानाधिकरण्यमेव पारिभाषिकं घटत्वादिव्यावृत्तमनेकवृत्तित्वमिह विवक्षितम्। प्रति-योगिनमित्यादिकमर्थगत्या प्रागुक्तमेव स्फुटप्रतीत्यर्थमात्रानुदितम्। ननु न तादात्म्यस्य प्रतियोगितावच्छेदकत्वं किन्त्वारोप्यसंसर्गत्वमि-त्यपरितोषादाह यत्र त्विति। प्रतियोगितावच्छेदकस्यारोपः संसर्गतया द्रष्टव्योऽन्यथाऽऽरोप्य निषिध्यते इति सिद्धान्तव्याकोपादित्यवधेयम्। यत्र घटाभाव इति। यद्यपि भावस्य तादात्म्यस्येत्येव मूलार्थस्तथापि

---

(१) न अतिरेकिण इति मा० पु० पाठः। (२) अनवस्थानवस्थानत्वात् म्रु पु० पाठः।

दूषितत्वात् । नास्तीतिबुद्धेरारोपिताभावालम्बनत्वात् आरोपितान्योन्याभावसंसर्गनिषेधव्यवहारस्य घटतदभावाभ्यामेव करणात् सम्बन्धवत् । यथा सम्बन्धस्वरूपमेव सम्बन्धारोपात्सम्बन्धमवभासते सम्बन्धान्तरारोपेऽपि स्वरूपमेव नियामकं तथात्राप्यविरोध इति सिद्धं चातुर्विध्यम् । इति अभावः ॥

---

न्यायलीलावतीकण्ठाभरणम्

न्याभावसंसर्गाभावोऽधिकः सिद्ध इत्यत आह आरोपितेति । घटतदभावयोर्भेदबुद्धिरारोपितान्योन्याभावनिबन्धनेत्यत्र दृष्टान्तमाह यथेति । दृष्टा हि सम्बन्धे सम्बन्धबुद्धिरारोपितसम्बन्धनिबन्धनेत्यर्थः ॥ अभावः ॥

न्यायलीलावतीप्रकाशः

उभयेति । उभयनिषेधे घटात्मकत्वघटान्योन्याभावाधिकरणत्वयोर्निषेधे, विरोधो भावाभावाभ्यां तृतीयकोटेरभावादित्यर्थः । अतिरेकिणोऽधिकरणादभावाद्भिन्नस्य तस्याभावस्येत्यर्थः । न च घटाभावे पटो नास्तीति बुद्धिस्तत्र मानमित्याह नास्तीति । ननु यस्य यत्राभावस्तत्र तस्यारोप इति नियमादन्योन्याभावारोपस्तत्रैव स्याद्यत्र तदभावस्तथा चान्योन्याभावे तदारोपः कथमभावान्तरं विनेत्यत आह आरोपितेति । आरोपितो योऽन्योन्याभावस्तस्य यः संसर्गस्तस्य यो निषेधव्यवहारः स आरोपविषयेणैवाभावेन क्रियते आरोपेऽप्यारोप्याभाव एव प्रयोजकः, स चात्रारोपविषय एव, अभावान्तरं तु नात्र तन्त्रमित्यर्थः । सम्बन्धवदिति । यथा सम्बन्धान्तरेऽनवस्थानात्सम्बन्धान्त-

न्यायलीलावतीप्रकाशविवृतिः

घटाभावयोस्तादात्म्येऽपि को दोष इति यदि ब्रूयात्तत्रेदमुक्तं घटात्मकत्वेति । घटतदभावयोरिति शेषः । नास्तीति । तथा च तत्तुल्यन्यायतया घटाभावेऽपि घटान्योन्याभाव आरोपित इत्यर्थः । अत्र शङ्कते ननु यत्रेति । आरोपविषयेणैवाभावेनेति । घटाभावेनेत्यर्थः । तथाच घटाभावस्याधिकरणत्वव्यावर्त्तकतया घटस्याधिकरणकोटिप्रवेशेन घटतदभावाभ्यामिति मूलमुपपादनीयमिति भावः । स चात्रारोपविषय एवेति । यद्यपि घटाभावे पटो नास्तीति प्रतीतेः फलमपटाभावेनैवोपपत्तौ ना-

तत्र दुःखात्यन्ताभावोऽपवर्गः। ननु चा(१)द्वैततत्त्वसाक्षात्कारात् अविद्योपनीतप्रपञ्चप्रत्ययबाधे जगराद्यप्रत्ययात् स्वप्रत्ययवदद्वैतानन्दसाक्षात्कारा मुक्तिरिति मन्यन्ते। नैवम्। मानाभावात्। श्रुतिरत्र मानमिति चेन्न। बाधितत्वात्। ब्रह्मसंवेदनेऽपि

न्यायलीलावतीकण्ठाभरणम्

तत्रेति। अभावेषु मध्ये इत्यर्थः। दुःखात्यन्ताभाव इति। 'दुःखेनात्यन्तं विमुक्तश्चरति' इति श्रुतिप्रामाण्यात्, स चानात्मादिनिष्ठ एवात्मनि प्रार्थ्यते सम्बद्धः क्रियते। सम्बन्धश्च तस्य समानाधिकरणसमानकालीनदुःखप्रागभावासहवृत्तिदुःखध्वंस एव, तस्मिन्सत्येव 'शुको मुक्तः प्रह्लादो मुक्त' इति व्यवहारदर्शनात्। स चात्यन्ताभावः स्वनिष्ठदुःखप्रतियोगिक एवेति प्रतियोगिविकल्पावसरः। एकदण्डिमतमुत्थाप्य दूषयति ननु चेति। अद्वैतानन्दसाक्षात्कारस्येदानीमपि सत्त्वान्मुक्तिप्रसङ्ग इत्यत उक्तम् प्रपञ्चप्रत्ययबाध इति। तद्बाध्यताप्रयोजकमाह अविद्योपनीतेति। अपरिसमाप्त एव वाक्ये दृष्टान्तमाह जागराद्येति। मानाभावादिति। ब्रह्मण आनन्दरूपतायां प्रपञ्चमिथ्यात्वे च मानाभावादिति। श्रुतिरिति। 'एकमेवाद्वितीयं ब्रह्म' इत्यादि

न्यायलीलावतीप्रकाशः

रानङ्गीकारेऽपि सम्बन्धः सम्बन्ध एव भासते सम्बन्धान्तरारोपादित्यर्थः।

तत्रेऽत्यभावचतुष्टयमध्ये। 'दुःखेनात्यन्तं विमुक्तश्चरती' त्यभावत्वेन मोक्षश्रवणादिति भावः। अद्वैतेति। ब्रह्माद्वैतसाक्षात्कारादविद्यानिवृत्तौ विज्ञानसुखात्मक आत्मा केवलोऽपवर्गे वर्तत इति वेदान्तिन इत्यर्थः। श्रुतिरत्रेति। अत्र ब्रह्माद्वैते, 'एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चने'-

न्यायलीलावतीप्रकाशविवृतिः

धिकरणात्मकत्वं न हि तत्राप्यनवस्थादिकं बाधकम्, तथापि योऽभावाधिकरणमभावमात्रमेव न प्रतिपद्यते तन्मतमवलम्ब्येदं सर्वमुक्तम्।

वृत्तिरूपसाक्षात्कारस्य मुक्तित्वे स्वतः पुरुषार्थत्वविरोधादन्यथा तात्पर्यमाह ब्रह्माद्वैतेति। श्रुतेः प्रक्रान्तत्वाल्लिङ्गासङ्गतिरित्यन्यथा

(१) चकारो नास्ति मु० पु०।

प्रपञ्चप्रत्ययस्य सत्त्वात् । ब्रह्मसंवेदनमिदानीं नास्तीति चेत् । न । नहि ब्रह्म संवेदना(न)न्तरवेद्यम् । न च ब्रह्मस्वरूपमिदानीं नास्तीति । श्रुतिवाक्यजो विशिष्टब्रह्मानुभवो नास्तीति चेत् । न । तस्याप्यनुभवरूपस्य ब्रह्मरूपानतिरेकात् । ब्रह्मणोऽभिन्नत्वेन कल्पिताऽनुभवो नास्तीति चेत् । न । कल्पितस्यासत्त्वेन कल्पनात्वेन वा अबाधकत्वात् । अद्वैतश्रुतेश्च द्वैतावभासिप्रत्यक्षविरोधेन(१) ग्रावप्लवनश्रुतिवदुपचरितार्थत्वात् । अध्यक्षमविद्यात्वेन न तस्या बाधकमिति चेत् । तुल्यं प्लवनेऽपि । किं चास्याऽविद्यात्वम् ।

---

न्यायलीलावतीकण्ठाभरणम्

श्रुतिरित्यर्थः । बाधितत्वादिति । भेदग्राहिप्रत्यक्षबाधितत्वादित्यर्थः । ब्रह्मसंवेदनेपीति । ब्रह्मणः स्वप्रकाशस्येदानीमपि सत्त्वादित्यर्थः । इदानीमिति । संसारदशायामित्यर्थः । प्रकाशत्वात् नित्यत्वात् इदानीमपि तत्सत्त्वमाह नेति । श्रुतिवाक्यज इति । श्रवणानन्तरमुपनिषज्जनितेन ब्रह्मानुभवेन प्रपञ्चबाधः स चेदानीं नास्तीत्यर्थः । तस्येति । स्वातिरेके तु द्वैतापत्तिरिति भावः । अविद्यादशायां श्रुतिजन्यत्वेन कल्पितोयोऽनुभवः स नास्तीत्याह ब्रह्मण इति । असतो न बाधकत्वं न वा कल्पनाया इत्याह असत(२)इति । ननु तथाप्यद्वैतपराणां प्रामाण्याद्द्वैतं सिद्धमेवेत्यत आह अद्वैतेति । उपचरितार्थत्वादिति । मुमुक्षुभिरेकब्रह्मैव ध्येयमित्यत्र तासां तात्पर्यादित्यर्थः । तस्या इति । अद्वैतश्रुतेरित्यर्थः ।

न्यायलीलावतीप्रकाशः

ति श्रुतिर्मानमित्यर्थः । योग्यताज्ञानं शाब्दधीहेतुः, सा च बाधकाभावरूपाऽत्र नास्ति साक्षात्कारं प्रति शरीरादेर्जनकत्वान्मोक्षे तद्बाधस्य बाधकमानस्य सत्त्वादित्याह बाधितत्वादिति । नापि ब्रह्मसंवेदनं प्रपञ्चबाधं प्रति जनकमित्याह ब्रह्मसंवेदनेपीति । नहीति । ब्रह्मणो ज्ञानरूपतया स्वप्रकाशत्वात्तस्य चेदानीमपि नित्यतया सत्त्वाच्च बाधादित्यर्थः । उपचरितेति । मुमुक्षुणान्यद्विहायात्मैवाद्वितीयो भावनीय इत्येवंपर-

---

(१) विरोधादिति प्रा० पु० पाठः ।

(२) शंकरमतेनात्र मूले कल्पितस्यासतः कल्पनात्वेनेति पाठो बोध्यः ।

अद्वैतानुभवविरोधित्वमिति चेत् । न । द्वैतानुभवविरोधित्वेन त-स्यैव किं नाविद्यत्वम् । अयत्नसिद्धत्वमिति चेत् । न । यत्नसि-द्धस्यापि शोकातुरतनयसाक्षात्कारस्याविद्यात्वात् । अयत्नसिद्ध-स्य च तनयाभावसाक्षात्कारस्य विद्यात्वदर्शनात् । विचारासहत्वम-विद्यात्वमिति चेत् । न । अनुभवेन विरोधिना विचारस्यैव कृ-शानोरनुष्णत्वानुमानवदाभासीकृतत्वात् ।

---

न्यायलीलावतीकण्ठाभरणम्

तुल्यमिति । तर्हि ग्रावाणः प्लवन्त इत्यपि श्रुतिरध्यक्षेण न बाध्येतेत्यर्थः। अस्येति । भेदानुभवस्येत्यर्थः । तस्यैवेति । श्रुतिजन्यानुभवस्येत्यर्थः । द्वैतानुभवस्यायत्नसिद्धत्वादविद्यात्वं श्रुतिजन्यानुभवस्य तु तत्तदुप-निषत्परिशीलनपरिश्रमजन्मनो यत्नसिद्धत्वेन विद्यात्वमित्याह अय-त्नेति । यत्नायत्नसिद्धत्वं विद्यात्वाविद्यात्वे प्रति न तन्त्रमित्याह यत्न-सिद्धस्यापीति । घटपटौ भिन्नाविति घटपटभेदमात्रधियः तत्रैवाद्वैतश्रु-तिरपसारणीया क्रमेण तु तदितरसकलपदार्थाद्वैतं बोधयन्त्या श्रु-त्यापि धीर्बाधनीयेति विचारासहत्वमित्यर्थः । घटपटौ भिन्नाविति प्रत्यक्षे जाग्रति सर्वमभिन्नमित्येव धीः श्रुत्या जनयितुं न शक्येत्याह अनुभवेनेति ।

न्यायलीलावतीप्रकाशः

त्वादित्यर्थः । तस्या अद्वैतश्रुतेरित्यर्थः । तस्यैवेति । श्रुतिवाक्यजानुभ-वस्येत्यर्थः । विरोधित्वस्याविशेषादिति भावः । शोकातुरेति । यत्तन-यशोकातुरोऽसौ तत्तनयसाक्षात्कारः स्वप्नादावविद्येत्यर्थः । वस्तुतस्तु स्वप्रकाशसुखात्मकब्रह्मणो नित्यत्वेन मुक्तसंसारिणोरविशेषप्रसङ्गः पुरुषप्रयत्नं विना तस्य सत्त्वादपुरुषार्थत्वं च । न चाविद्यानिवृत्तिः प्रय-त्नसाध्या, तस्याः स्वतोऽपुरुषार्थत्वादिति भावः ।

न्यायलीलावतीप्रकाशविवृतिः

व्याचष्टे श्रुतिवाक्यजानुभवस्येति । तस्या अपुरुषार्थत्वादिति । यद्यप्यविद्यानिवृ-त्तिविशिष्टस्यानन्दस्वरूपात्मनः पुरुषार्थत्वं, तत्र च विशेषणं समा-दाय कृतिसाध्यत्वं विशेष्याङ्गमादाय निरुपाधीच्छाविषयत्वमवि-कलमेव, तथाप्येकावच्छेदेनोभयधर्मसत्त्वं पुरुषार्थताप्रयोजकमन्यथा

जीवानामविद्यादिसमस्तोपाधिनाशे चिदानन्दब्रह्मस्वरूपत्वापत्तिर्मुक्तिरित्यन्ये । न । जीवानां दुःखादिवत् ज्ञानात् सुखाच्च भेदेन प्रतीयमानत्वात्(१) । अन्यथा दुःखरूपत्वस्यापि प्रसङ्गात् । दुःखमहमिति नानुभव इति चेत् । नाहं सुखमिति तुल्यम् । सकलदुःखरहितत्वं सुखत्वमिति चेत् । न । अशेषसुखरहितत्वं दुःखत्वमित्यत्रापि तुल्यत्वात् । वस्तूनां परप्रकाश्यत्वनियमेन ज्ञातुः स्वप्रकाशनाविरोधात् । अन्यथा दुःखादेरपि स्वप्रकाशतापत्तिः । चिद्रूपोऽहमपित्यनुभवोऽस्तीति चेत् । न । ज्ञानाधारस्य चिच्छब्देनाभिधानात् ।

---

न्यायलीलावतीकण्ठाभरणम्

भास्करीयं मतमाह जीवानामिति । परमात्मनि जीवात्मलयो मुक्तिः, लयश्च लिङ्गशरीरापगमः, लिङ्गशरीरं चैकादशेन्द्रियाणि पञ्चमहाभूतानि सूक्ष्ममात्रया संभूयावस्थितानि, स्वस्वदुःखावच्छेदकानि इत्यर्थः । जीवानां ज्ञानसुखात्मकरणमनुपपन्नमित्याह जीवानामिति । सकलदुःखरहितत्वादेव तत्र सुखत्वोपचार इत्याह सकलेति । किञ्च ज्ञानात्मकत्वमपि नात्मन इत्याह वस्तूनामिति । चिच्छब्देनेति । चेतयत इति चिदिति च व्युत्पत्तिबलादित्यर्थः ।

न्यायलीलावतीप्रकाशः

त्रिदण्डिमतमाह जीवानामिति । आनन्दमयपरमात्मनि ज्ञानात्मलयो मोक्षः, लयश्च लिङ्गशरीरापगमः, लिङ्गशरीरं चैकादशेन्द्रियाणि पञ्चमहाभूतानि सूक्ष्ममात्रयाप्यवस्थितानि सुखदुःखावच्छेदकानीत्यर्थः । जीवानामिति । अहं जाने अहं सुखीत्याद्यनुभवादित्यर्थः । वस्तूनामिति । मोक्षदशायां स्वातिरिक्तज्ञानस्य कारणबाधेन बाधात् स्वप्रकाश्यत्वं जीवानां वाच्यं, तच्च न, यद्वस्तु तत्परप्रकाश्यमिति व्याप्तेरित्यर्थः । वस्तुतो विवक्षितविवेकेन शरीरादिनाशः पुरुषसाध्यः, स चापुरुषार्थ एव । न चोपाधिनाशे सत्यौपाधिकजीवनाशो लयः, ब्रह्मणो नित्यतया तदभिन्नस्य नाशानुपपत्तेरिति भावः ।

---

(१) प्रतीतेरिति मा० पु० पाठः ।

नित्यसुखाभिव्यक्तिर्मुक्तिरित्यपरे । तन्न । सुखस्याभिव्यक्तेर्नित्यत्वे असंसारप्रसङ्गात् । तयोः सम्बन्ध उत्पाद्य(१) इति चेत् । न । भावस्योत्पत्तिमतो विनाशित्वेन मुक्तस्यापि सुखासंवेदनप्राप्तेः । संसारिसुखस्यापि तथात्वापत्तेः । सुखतज्ज्ञानयोरुत्पन्नयोर्ध्वंसवदविनाशित्वमिति चेत् । न । भावस्योत्पत्तिमतो विनाशित्वनियमात् । तयोरेव प्रवाहानित्यत्वमिति चेत् । न । तद्वदेव देहादेरपि प्रवाहनियमस्वीकारप्रसंगात् । सुखस्य देहभोग्यत्वनियमात् । अन्यथा स्वर्गेऽपि देहविरहापत्तेः । न चात्र प्रमा-

---

न्यायलीलावतीकण्ठाभरणम्

भट्टमतमाह नित्येति । तयोरिति । सुखतदभिव्यक्त्योरित्यर्थः । यथा जन्यत्वं विनाशित्वे न तन्त्रं ध्वंसस्याविनाशदर्शनात् तथा प्रमाणबलाद्भावोपि जन्यः कश्चिदविनाशी स्यात्, तथाच श्रुतिरानन्दं ब्रह्मणो रूपं तच्च मोक्षे प्रतिष्ठितमित्याह सुखतज्ज्ञानयोरिति । जन्यभावत्वं विनाशित्वं प्रति तन्त्रम्, निरुपाधिसम्बन्धशालिश्रुतिस्त्वन्यथोपपद्यत इत्याह भावस्येति । अन्यथेति । यदि सुखं देहिभोग्यमेवेति न नियम इत्यर्थः । न चात्रेति । नित्यसुखाभिव्यक्तौ प्रमाणं नास्तीत्यर्थः । जीवन्मुक्तिव-

न्यायलीलावतीप्रकाशः

भावस्येति । न ह्यात्ममनोयोगस्तद्धेतुः अदृष्टादिनिरपेक्षस्य तस्याजनकत्वात् । विषयमात्रापेक्षणे तु संसारितादशायामपि तदभिव्यक्तिप्रसक्तिः । न च योगजो धर्मः सहकारी, तस्योत्पन्नभावत्वेन नाशित्वे अपवर्गनिवृत्त्यापत्तेः । न च तस्यानन्तत्वादभिव्यक्तिप्रवाहोऽप्यनन्तः, शरीरं विना तदनुत्पत्तेः, तस्य सुखाभिव्यक्तिहेतुत्वे माना-

न्यायलीलावतीप्रकाशविवृतिः

घटस्य । कृतिसाध्यत्वे पटस्येष्यमाणत्वे घटविशिष्टपटार्थं प्रवर्त्तेतेत्याशयेनेदमुक्तम् । तस्यादृष्टादीति । मुक्तिकालेऽदृष्टशरीराद्यभावादित्यर्थः । अनन्तत्वं न ध्वंसाप्रतियोगित्वमुत्पन्नभावत्वादिति धाराक्रमेणानन्तत्वं वाच्यं, तच्च न सम्भवतीत्याह–शरीरमिति । तस्येति । यद्य-

---

(१) उत्पादित इति पु० पु० पाठः ।

णमस्ति । आनन्दं ब्रह्मणो रूपं, तच्च मोक्षेऽपि(१) व्यज्यते इति चेत् । न । योगजधर्माविर्भूतकल्पकोटिशतानुभवनीयासङ्ख्यसुख- प्रतिपादनपरत्वेनाप्युपपत्तेः ।

ननु दुःखाभावोऽपि मुक्तिर्न युज्यते । स हि न तावद्दुःख- प्रागभावः, अनादित्वेन तस्यासाध्यत्वात् । दुःखस्य चानाग- तस्योत्पत्तिप्राप्तेः । नापि दुःखध्वंसः । तस्य स्वतः सिद्धत्वात् । समस्तदुःखध्वंस इति चेत् । न । उत्पन्नदुःखसाकल्ये स्वतः सि- द्धत्वात् । उत्पन्नानुत्पन्नसाकल्ये विरोधात् । विद्यमानसकलदुःख-

---

न्यायलीलावतीकण्ठाभरणम्

शायां सुखप्रवाहपरा परा श्रुतिरित्याह योगजेति । किञ्च आनन्दमि- त्यानन्दवत्त्वमर्शआद्यचाऽभिधीयते, अन्यथा नपुंसकता न स्यात् ।

विद्यमानेति । हेतूच्छेदे पुरुषव्यापारादित्यर्थः । अनागतानर्थानुत्पत्तिमिति ।

न्यायलीलावतीप्रकाशः

भावाच्च । न च मोक्षार्थप्रवृत्तिरेव मानम्, दुःखहानार्थितयापि तदुप- पत्तेरित्यर्थः । योगजेति । न चानुपपत्तिं विना मुख्यार्थहानानुपपत्तिः उत्पत्तिनाशवतोर्ज्ञानसुखयोरहमानाम्यहं सुखीति स्वभिन्नत्वेनाऽनु- भूयमानयोर्ब्रह्माभिन्नत्वसाधने बाधात् । किञ्चानन्दमिति पदं श्रुति- स्थं मत्वर्थीयाच्प्रत्ययान्तमिति तेनानन्दवत्त्वं बोध्यते ब्रह्मणो, नाभेदः, अन्यथा तस्य नपुंसकलिङ्गत्वानुपपत्तेः । न च 'व्यत्ययो बहुलमि'त्य- नुशासनाल्लिङ्गव्यत्ययः, मानाभावादित्यपि न तु मुख्यार्थहानमपीति द्रष्टव्यम् ।

दुःखस्य चेति । प्रागभावस्यावश्यं दुःखजनकत्वादित्यर्थः । प्राग- भावस्य साध्यत्वे प्रागभावात्पूर्वं प्रागभावध्वंसयोरभावात् दुःखस- त्त्वप्रसङ्ग इत्यपि मन्तव्यम् । स्वत इति । अयत्नसिद्धत्वादित्यर्थः । विद्य-

न्यायलीलावतीप्रकाशविवृतिः

पि योगजधर्मस्य भोगहेतुत्वं, तथापि मुक्तिस्थानाभिषक्तमुख्याभि व्यक्तितत्सम्बन्धहेतुत्वे मानाभावो वेदस्य विशिष्टतद्बोधकत्वादित्य र्थः । ननु मुख्यार्थहानमपीति । आनन्दशब्दस्याश्रयवाचकत्वे या लक्षणा

---

(१) अपि इति नास्ति प्रा० पुस्तके ।

साधन(१)ध्वंसो मुक्तिरिति चेत् । न । दत्तफलानां निवृत्तेरयत्न-सिद्धत्वात् । अदत्तफलानां तु अनागतानर्थानुत्पत्तिमनभिसन्धाय निवृत्तेरसमीहितत्वात् । न हि निदाननिवृत्तिः स्वभावतः साध्या, क्लेशनाशेतरत्वात् । अनागतानुत्पत्तेश्च स्वतः साध्यताविरोधात् । तच्चानर्थजातं मुमुक्षुसमवेतमन्यसमवेतं वा ? नाद्यः । तथासति दुःखस्याऽवश्यं तत्रोत्पत्तावदत्तफलताविरोधात् । नेतरः । परदुःखनिवृत्तेः स्वात्मनि सिद्धत्वात् । दुःखान्नियतपूर्वभावित्वस्य तद्धेतुत्वस्य प्रमाणादवगमे दुःखस्य स्वात्मन्यवश्यमुत्पादात् । अनुत्पत्तौ दुःखहेतुताग्राहकमानस्याभाऽऽसतापत्तेः । नापि दुःखात्यन्ताभावः । तस्येदानीं सत्त्वे सिद्धस्य साध्यता-

---

न्यायलीलावतीकण्ठाभरणम्

अनागतदुःखानुत्पत्तिमित्यर्थः । नन्वनागतानुत्पत्त्यभिसन्धिरस्तु को दोष इत्यत आह अनागतेति । तस्यानादित्वेनानुत्पाद्यत्वादित्यर्थः । तच्चेति । यदि दुःखानुत्पत्तिमभिसन्धाय प्रवृत्तिरित्यर्थः । किं यो दुःखहेतुध्वंसाय मुमुक्षुः प्रवर्तते तस्य दुःखहेतुत्वं तदा दुःखं स्यादेव, न चेद्दुःखं तेन जननीयं तदा न दुःखहेतुरित्याह दुःखादिति । नापीति । मुक्तिरित्यनुषज्यते । परात्मवृत्तीति । आत्मनि स्वतःसि-

न्यायलीलावतीप्रकाशः

मानेति । प्रायश्चित्तादौ दुःखसाधनध्वंसस्य पुरुषार्थत्वदर्शनादित्यर्थः। अदत्तफलानामिति । प्रायश्चित्तस्थले पापं नाश्यतां, तेन दुःखं मे माभूदित्यभिसन्धाय प्रवृत्तेस्तस्य स्वतोऽपुरुषार्थत्वादिति भावः । तर्हि दुःखानुत्पाद एव पुरुषार्थोऽस्त्वित्यत आह अनागतेति । स्वतः—स्वभावतः । तच्चेति । यदनुत्पत्तिमभिसन्धाय निवृत्तौ प्रवर्तेत इत्यर्थः । परदुःखेति । अत्यन्ताभावरूपत्वात्तस्या इत्यर्थः । अदत्तफलान्येव कर्माणि नश्यन्तीत्यत्र दूषणमाह दुःखान्नियतेति । उत्पत्त्यायेति । भावस्योत्पत्तिमतो

न्यायलीलावतीप्रकाशविवृतिः

प्रसक्ता सा नास्ति लुप्तस्याच्प्रत्ययस्यैवाश्रयवाचकत्वादिति भावः ।

---

(१) हेतुध्वंस इति प्रा० पु० पाठः ।

विरोधात् । असत्त्वे दुःखाभावस्य स्वतो निवर्त्यत्वे अत्यन्ताभावत्वव्याकोपात् । अत्यन्ताभावसम्बन्धः साध्य(१) इति चेन्न । उत्पन्नस्याप्रसम्बन्ध(२)निवृत्तौ मुक्तस्यापि संसारित्वापत्तेः । परात्मवृत्तिदुःखात्यन्ताभावस्य स्वतः सिद्धत्वात्, मुमुक्षुसमवेतदुःखात्यन्ताभावस्य च(३) प्राक्प्रध्वंसयोरन्यतरत्रान्तर्भावात् । येषां चात्यन्ताभावो दुःखानां तेषामध्यक्षानुमानागमप्रभवस्मृत्यगोचराणामभावनिरूपकतानुपपत्तिश्च । यावदनागतदुःखप्रागभावानुवृत्तिः क्रियत इति चेन्न । प्रागभावस्वभावो वा दुःखनिवृत्तिः, तस्यानागतकतिपयसमयसम्बन्धो वा, यावदनागतसमयसम्बन्धो वा ? नाद्यः । अनादित्वात् । न द्वितीयः । दुःखस्य पुनरुत्पत्तिप्रसङ्गात् । न तृतीयः । प्रागभावत्वविरोधात् । विनाशिनश्चानन्तकालसम्बन्धित्वविरोधात् । अविनाशिनः स्वतः सिद्धत्वा-

---

न्यायलीलावतीकण्ठाभरणम्

द्धत्वादित्यर्थः । प्राक्प्रध्वंसयोरिति । अत्यन्ताभावस्य प्रतियोगिवैयधिकरण्यनियमादित्यर्थः । अध्यक्षानुमानागमप्रभवा या स्मृतिस्तदगोचराणामित्यर्थः । स्मृतप्रतियोगिकस्यैवाभावस्य निरूपणादिति भावः । प्रागभावस्वभाव इति । प्रागभाव एवेत्यर्थः । अनागतेति । अनागतकतिपयसमयसम्बन्ध इत्यर्थः । अनादित्वादिति । तथाचानुवृत्तिः क्रियत इति विरोध इत्यर्थः । दुःखस्येति । अनागतकतिपयानन्तरदुःखस्य पुनरापत्तेरित्यर्थः । प्रागभावत्वेति । प्रागभावस्य प्रतियोगिजनकत्वनियमादित्यर्थः । ननु प्रागभावः प्रतियोगिनमजनयित्वैव नश्यति ततः कथं दुःखस्य पुनरापत्तिरित्यत आह विनाशिन इति । अविनाशिन इति । तथा

न्यायलीलावतीप्रकाशः

नाशनियमादेति भावः । प्राक्प्रध्वंसयोरिति । अत्यन्ताभावस्य प्रतियोगिसादेश्याभावादित्यर्थः । प्रागभावत्वेति । तस्य प्रतियोगिजनकत्वनिय

---

(१) साध्यते इति मु० पु० पाठः ।

(२) सम्बन्धानि-मु० पु० पाठः । (३) चकारो नास्ति प्रा० पुस्तके ।

दिति । अत्रोच्यते । क्रमेण दुःखोत्पादो हि संसारित्वम् । यदा

न्यायलीलावतीकण्ठाभरणम्

चानादित्वमपि वाच्यमेवेति स्वतःसिद्धत्वादपुरुषार्थत्वमित्यर्थः । युगपदनेकदुःखानुत्पादावस्थाया जीवन्मुक्तित्वदर्शनार्थं संसारितो वैलक्षण्यं प्रतिपादयितुं संसारमाह क्रमेणेति । कायव्यूहादीत्यादिपदात् षण्डानेकमनःसंश्रय उक्तः । कारणाभावात्—सवासनमिथ्याज्ञानाभावात् । रागद्वेषाभिनिवेशाः क्लेशाः, क्लेशहानानन्तरं न धर्माधर्मावुत्पद्येते, दोषतुषावनद्धा हि कर्मतण्डुलाः स्वफलारम्भकाः, न थाच समानाधिकरणयुगपदुत्पन्नानेकदुःखध्वंसो मुक्तिरित्यर्थः । न चायमयत्नसिद्धः, बहूनां दुःखानामेकदोत्पादस्य कायव्यूहसाध्यत्वात्, कायव्यूहस्य च श्रवणमनननिदिध्यासनसाक्षात्कारजनकप्रयत्नसाध्यत्वात् । नन्वेतान्युत्पन्नानि स्वयमेव नश्यन्तीति चेत्, तेषामुत्पादस्यैव पुरुषप्रयत्नाधीनत्वात् । तर्हि तादृशदुःखध्वंसार्थं दुःखमप्यु-

न्यायलीलावतीप्रकाशः

मादित्यर्थः । क्रमेणेति । मोक्षविरोधित्वप्रदर्शनार्थम् । संसारनिर्वचनं यदा त्विति । एतेनैकात्मवृत्त्येककालीनानेकदुःखध्वंसो मोक्ष इत्युक्तम् । दुःखान्तरध्वंसस्यायत्नसाध्यत्वेपि तादृशदुःखध्वंसस्य मिथ्याज्ञानध्वंसद्वारा पुरुषप्रयत्नाधीनतत्त्वज्ञानसाध्यत्वात् । न च समानाधिकरणानेकदुःखानां युगपदुत्पत्तौ तज्ज्ञानादेव तद्ध्वंसस्तदनुत्पत्तौ तत्त्वज्ञानादपि न स्यादिति वाच्यम् । प्रतियोगिवत्तज्ज्ञानस्यापि तद्धेतुत्वात् । अत एव मुक्तात्मनः स ध्वंसो नास्मदादीनाम् । तादृशदुःखाभावादेव न तस्य ध्वंसः तादृशदुःखोत्पत्तावपि तत्त्वज्ञानस्य हेतुत्वात् । नन्वेवं ध्वंसार्थं दुःखमुपादेयं स्यात् तदनुत्पाद्यध्वंसस्योत्पादयितुमशक्यत्वात् । सत्यम् । पुरुषार्थहेतुत्वेन दुःखतत्साधनयोरप्युपादानदर्शनात् दाहच्छेदादौ दुर्नाम(१)चिकित्सावत् । न चानाग-

न्यायलीलावतीप्रकाशविवृतिः

तस्मात्सिद्धिरसंभाविनीत्यन्यथा व्याचष्टे अयत्नेति । एतेनैकात्मवृत्तीति । न च कायव्यूहदशायामनेकदुःखोत्पादे तादृशोध्वंसोऽस्तीत्यतिव्याप्तिरिति वाच्यम् । दुःखप्रागभावासमानकालत्वस्य ध्वंसविशेषण-

(१) 'दुर्नामा दीर्घकोशिकेत्यमरः' 'दीपाण्डकोशाकाररोगो बोध्यः ।

तु युगपदशेषक्लेशभोगो(१)पायकायव्यूहादिनिवर्तकयोगाभ्यास-
प्रसादसमासादितात्मतत्त्वसाक्षात्कारस्य कारणभावाद्धीनक्लेशस्य
युगपदुपभुक्तसमस्तदुःखनिवृत्तिः तदा सैव मुक्तिरशेषदुःखनिवृत्ति-
रूपा पुरुषार्थो भविष्यति । दुःखजातीयात्यन्ताभावस्य वा स्वा-
त्मनि साध्यत्वात् । अशेषक्लेशहेतुनाशस्य चात्यन्ताभावात्मसम्ब

---

न्यायलीलावतीकण्ठाभरणम्

पाद्येयं स्यादिति चेत्, कः सन्देहः, देहदाहच्छेदादिनापि दुर्नामक-
व्याधिनाशदर्शनात् । प्रवृत्तिरपि अनागतदुःखध्वंसार्थं नानुपपन्ना, अ-
नागतघटनाशार्थमपि मुद्गरादौ प्रवृत्तिदर्शनात् । दुःखात्यन्ताभावस्य
मुक्तित्वमाह दुःखेति । दुःखत्वावच्छिन्नात्यन्ताभावो मुक्तिर्न तु यत्कि
ञ्चिद्दुःखात्यन्ताभावस्तस्य स्वतः सिद्धत्वादित्यर्थः । ननु नित्यत्वा-
त्कथमयं पुरुषार्थ इत्यत आह अशेषेति । क्लेशो दुःखम्, तथाच दुःख-
साधनध्वंसविशिष्टदुःखत्वावच्छिन्नात्यन्ताभावो मुक्तिः, विशेषणां-
शस्य साध्यतया विशिष्टस्यापि साध्यत्वमिति भावः । लोष्टादि-

न्यायलीलावतीप्रकाशः

तदुःखध्वंसार्थं प्रवृत्त्यनुपपत्तिः, लोकेऽनागतकुम्भनाशार्थमपि मुद्ग-
रादौ प्रवृत्तिदर्शनात् । अत्यन्ताभावस्य मुक्तित्वं व्युत्पादयति दुःख-
जातीयेति । यत्किञ्चिद्दुःखव्यक्त्यत्यन्ताभावस्य स्वतःसिद्धत्वात्तज्जाती-
येत्युक्तम् । नन्वत्यन्ताभावाऽसाध्य इत्युक्तमत आह अशेषेति । दुःखा-
त्यन्ताभावस्यासाध्यत्वेऽपि दुःखसाधनध्वंसविशिष्टदुःखात्यन्ताभावो

न्यायलीलावतीप्रकाशविवृतिः

त्वात् । न चैवं तादृशदुःखध्वंस एव मुक्तिः किमर्थमनेकपदमिति
वाच्यम् । तावत्येव तात्पर्यात् । मुद्गरादौ प्रवृत्तिदर्शनादिति । यद्यपि प्रा-
गभावस्य प्रतियोगिजनकत्वानियमादवश्यं चरमदुःखेनोत्पत्तव्यमे
वोत्पन्ने च तस्मिंस्तद्भोगादेव तन्नाश इत्यालोचयमानानामेव मुक्त्यर्थं
प्रवृत्तिरनुपपन्ना, तथापि दुःखादुद्विजमानानां त्वरया मोक्षमिच्छतां
प्रागभावो विनाऽपि तत्त्वज्ञानं चरमदुःखं जनयेदित्यालोचयतां प्रवृ-

---

(१) भोगपदं प्राचीनपुस्तके नास्ति ।

न्धस्वभावत्वात्। तदुत्पत्तौ दुःखात्यन्ताभावस्य(१) तदीयत्वेन व्यवहारात्। तदीयव्यवहारार्पकत्वेन विषयविषयिभावादिवदस्यापि सम्बन्धव्यवहारगोचरत्वात्। ध्वंसस्वभावत्वेन कृतकस्याप्यविनाशित्वोपपत्तेः। न चादत्तफलानां प्रमाणतः साधनत्वनिश्चयविरोधः। सतां सहकारिसाहित्ये दुःखजनकत्वस्य तत्साधनतारूपत्वात्। एषां च ध्वस्तत्वेन फलानुत्पादकत्वात् प्रायश्चित्तप्रतिहतदुरिततवत्। न चात्यन्ताभावप्रतिपक्षानिरूपणम्, शङ्कित-

---

न्यायलीलावतीकण्ठाभरणम्

निष्ठदुःखात्यन्ताभावस्य तादृशदुःखध्वंसः सम्बन्ध इति भावः। एतदेवाह तदुत्पत्ताविति। ननु ध्वंसः कथं सम्बन्ध इत्यत आह तदीयेति। ननूक्तसम्बन्धनिवृत्तौ पुनः संसारितापत्तिरित्यत आह ध्वंसस्वभावत्वेनेति। न चादत्तफलानां प्रमाणत इत्यादि दूषयति नचादत्तफलानामिति। परात्मवृत्तित्यादि यथाशक्ति दूषयति न चात्यन्ताभावेति। संसारितद्दुःख-

न्यायलीलावतीप्रकाशः

मोक्षस्तथाच विशेष्यस्यासाध्यत्वेऽपि विशेषणस्य साध्यत्वाद्विशिष्टस्य साध्यत्वमित्यर्थः। ध्वंसस्यान्यत्र सम्बन्धत्वाभावेऽपि प्रकृते तत्त्वमुपपादयति तदीयेति। उत्पन्नस्यानाशित्वे हेतुमाह ध्वंसेति। अत एव नाकाशादेरपि मुक्तत्वापत्तिः। अत्र तादृशदुःखात्यन्ताभावस्याभावात् सम्बन्धाविरहात्। न चैवमावश्यकत्वात्सम्बन्ध एव मुक्तिरस्तु दुःखसाधनशरीरादिध्वंसस्य सम्बन्धत्वात्, तस्य च स्वतो पुरुषार्थत्वात्, निर्दुःखः स्यामिति हि प्रवर्त्तते न दुःखसाधनध्वंसवान् स्यामिति दुखहेतुत्वस्य प्रमाणादवगम इत्यत्राह नचेति। परात्मवृत्तीत्यादि दूषयति नचात्यन्ताभावेति। यथा शंकितदुःखपरिहा-

न्यायलीलावतीप्रकाशविवृतिः

त्तिरिति भावः। तथाच विशेषस्येति। 'सति विशेषणे ही'तिन्यायानभ्युपगमेनेदम्, दुःखहेतुत्वस्य प्रमाणाभावादिति। तादृशध्वंसस्य सम्बन्धत्वपक्षेऽपि प्रागुक्तदोषतौल्यादित्याशयवानिति शेषः। तदीयस्य

---

(१) दुःखाभावस्येति मु० पु० पाठ।

दुःखपरिहारवन्मुमुक्षुसमवेतदुःखमात्रस्य सम्भावनोपनीतत्वात् । असति योगाभ्यासेऽवश्यं दुरितप्रवाहस्यानागतसमयवर्ति-दुःखोत्पादकत्वात् । सर्वत्र चात्यन्ताभावनिरूपणे सामान्यतोऽव-गतस्य विशेषतः समारोपितज्ञानविषयस्य प्रतियोगित्वदर्शनात् । विशेषतस्तु निश्चयापेक्षया अत्यन्ताभावनिरूपणविरोधित्वात् । शशे विषाणं तदीयमन्यदीयं वा नास्तीति दूषणस्य सुवचत्वात् । प्रागभावस्यासाध्यत्वेऽपि विनाशहेतुसन्निधौ विनाशोपलम्भा-

---

न्यायलीलावतीकण्ठाभरणम्

परीहारार्थमपि प्रेक्षावतां प्रवृत्तिदर्शनात् । सम्भावनाहेतुमाह असतीति ।। सामान्यावच्छिन्नप्रतियोगिकात्यन्ताभावनिरूपणमाधिकृत्याह-सर्वत्र चेति । विशेषत इति । अनागतस्वात्मवृत्तिदुःखत्वेनेत्यर्थः । तदीयमिति । तदीयस्य प्रमितत्वान्न निषेधोऽन्यदीयस्य चाप्रसिद्धत्वादित्यर्थः। का-रणविघटनमुखेन प्रागभावस्यापि साध्यत्वमतो दुःखप्रागभाव एव मुक्तिरित्याह प्रागभावस्येति । दुःखसाधननाशे सत्यग्रिमसमये प्राग-

न्यायलीलावतीप्रकाशः

रनिश्चये सम्भावनोपनीतदुःखस्यैव परिहारस्तथात्रापीत्यर्थः । विशे-षतस्त्विति । अनागततदात्मवृत्तिदुःखत्वेनेत्यर्थः । तदीयमिति । तदीयस्य बाधितत्वान्न निषेधः, अन्यदीयस्य चाप्रसक्तत्वादित्यर्थः । प्रागभाव-स्य मुक्तित्वं व्युत्पादयति प्रागभावस्येति। प्रागभावस्यानादित्वेऽपि प्रति-योगिजनकाधर्मविघटनद्वारा प्रागभावोऽपि कृतिसाध्यः दुःखकारण-

न्यायलीलावतीप्रकाशविवृतिः

बाधितत्वादिति । ननु प्रसक्तिरारोपः, स चान्यदीयस्यैव न तृतीयस्य तस्यारोपासम्भवासम्भवाच्च, प्रकृते च स्वपरवृत्तेर्दुःखमात्रस्याप्रामा-णिकत्वान्न सम्भावनोपनीतत्वम्, स्वीयस्य चात्यन्ताभावस्य विरोधः परकीयस्य चात्यन्ताभावः स्वतः सिद्ध इति चेत् । सत्यम् । प्रथम-कल्प एव निर्भरत्वम् । प्रागभावोऽपि कृतिसाध्य इति । यद्यपि प्रागभा-वसत्त्वे दुःखोत्पत्तिरावश्यकी, तदसत्त्वे च कस्य साध्यता, अत्य-न्ताभावरूपतायां च प्रतियोगिकारणविनाशद्वाराप्यसाध्यत्वम्, तथा-प्यत्यन्ताभावप्रागभावयोर्नाज्ञानिको भेदः, किन्तु फलानुपधानोपधा-

त्। अविनाशित्वसमीहया नाशकहेतुनिवृत्तये प्रवर्तन्ते, यथा प्रायश्चित्तविधौ दुःखाभावनाशकदुरितसम्पत्तौ दुरितनिवृत्तये।

---

न्यायलीलावतीकण्ठाभरणम्

भावस्वरूपमस्ति तेन विना नास्तीति घटादिसाध्यवत्तस्यापि साध्यत्वादित्यर्थः। यथा प्रायश्चित्तेति। दुःखहेतुदुरितध्वंसद्वारा दुःखप्रागभावस्यैव साध्यत्वात्, तथाच तत्रापि प्रागभावपरिपालनं पुरुषार्थं मोक्षेऽपि तथैवेति भावः। अत एव प्रायश्चित्तस्थले तन्नाश्यदुरितजन्यदुःखप्रागभावसत्त्वे तेन दुःखमवश्यं जननीयम्, तदसत्त्वे च प्रायश्चित्तेन दुरितनाशस्याप्यानर्थक्यमित्युभयथापि प्रायश्चित्तमफलमित्यपास्तम्। शंकितानिष्टपरिहारार्थं लौकिकपरीक्षकप्रवृत्तिदर्शनात्। किंच महापातके सति कर्मान्तरे अनधिकार इत्यधिकारसम्पादनार्थं महापातकिनः प्रवृत्तिः, सति च पापे यागदानादिना जनितमपि सुकृतं तावन्न फलजनकं यावन्न तत्रापभोग इति तदर्थं पापान्तरनाशाय प्रायश्चित्तमिति न प्रागभावसदसत्त्वविकल्पावस

न्यायलीलावतीप्रकाशः

समवधानदशायां कृतौ सत्यां दुःखसाधननाशे सत्यग्रिमसमये प्रागभावस्वरूपमस्ति तेन विना नास्तीत्यन्वयव्यतिरेकयोः सत्त्वात्, घटेऽपि कृतौ सत्यामग्रिमक्षणे तत्सत्त्वं तेन विना नेत्येव कृतिसाध्यत्वं, नतु प्रागसतोऽग्रिमक्षणे सत्त्वं गौरवादित्यर्थः। यथा प्रायश्चित्तेति। यथा प्रायश्चित्ते दुःखं मे माभूदित्युद्दिश्य प्रवर्त्तने दुःखानुत्पादः पुरुषार्थः प्रतियोगिजनकाधर्मनाशमुखेनेत्यर्थः। ननु प्रायश्चित्तनाश्यपापजन्यदुःखस्य प्रागभावो यद्यस्ति तदा दुःखमावश्यकं तस्य प्रतियोगिजनकत्वनियमात्, नास्ति चेत्तर्हि तदभावादेव दुःखानुत्पाद इत्युभयथापि प्रायश्चित्तमफलम्, तस्माद्दुःखसाधनध्वंसमुखेन प्रागभावस्यापि साध्यतेति तत्रैव कृतिसाध्यत्वपर्यवसानान् दुःखसाधनध्वंस एव पुरुषार्थो न तु दुःखानुत्पादः। न च तथापि प्रागभावस्यासत्त्वे तदभावात् पापं न दुःखसाधनमिति न तन्नाशार्थं प्रवर्तेतेति वाच्यम्। प्रागभावस्यासत्त्वेऽपि दुःखसाधनजातीयनाशस्य पुरुषार्थत्वात्।

न्यायलीलावतीप्रकाशविवृतिः

नाभ्यामिति कारणविनाशेनैवाविनाशित्वं पर्यवस्यतीति न साध्य·

अभावस्य नित्यत्वे स्वत एव नाशकनिवृत्तिराकाशादिवत्। अनित्यत्वे त्वशक्यतेति चेत्। न(१)। गगनस्य स्वरसतो (२)नाशविरोधात्। दुःखाभावस्य तु नाशकोपलब्धौ स्वभावविरोधाभावात् कारणनिवृत्तिमुखलभ्यत्वात्। घटाभावस्य नित्यत्वे घटहेतुतोऽप्यशक्या घटोत्पत्तिः। अनित्यत्वे तु घटहेतुं विनैव भविष्य-

---

न्यायलीलावतीकण्ठाभरणम्

रः। यत्तु पापान्तरमासाद्य जनयतीति पक्षः, समवृष्य एव निरस्तः। प्रागभावे नित्यानित्यविकल्पोक्तं दोषं परिहरति अभावस्येति। स्वरसत इति। यथा प्रागभावे दुराश्यं कश्चित्साध्यः कश्चित्सहकारिविघटनद्वारा पालनीयो नित्यः पर्यवसन्नोऽपि तथा गगन इत्यर्थः। अन्यथा जगत्यन्निरीहतेत्याह घटेति। भविष्यतीति। घट इति शेषः।

न्यायलीलावतीप्रकाशः

मैवम्। तत्र दुःखप्रागभावस्य सत्त्वेऽपि तस्य दुःखानुत्पादतया पुरुषार्थत्वात्। स च पापनाशद्वारा प्रायश्चित्तसाध्य इति प्रागभावसत्त्वेऽपि न निःफलं प्रायश्चित्तं, तेन प्रागभावेन दुःखमवश्यं जननीयमिति शिष्यत एव, किन्तु पापान्तरमासाद्य। न चैवं प्रायश्चित्तमफलं, दुःखानुत्पादेन तस्य फलवत्त्वात्। अभावस्येति। दुःखाभावस्येत्यर्थः। भविष्यतीति। अत्र घटोत्पत्तिरित्यनुषज्यते। सैव प्रागभावनिवृत्तिरित्य-

न्यायलीलावतीप्रकाशविवृतिः

नाविरोधः। न चैवं तयोरभेदे वायौ रूपं भविष्यतीति प्रत्ययापत्तिः, फलोपहितेनैव तथा प्रतीतेरिति दिक्। किन्तु पापान्तरमासाद्येति। न च कृतप्रायश्चित्तस्य तज्जन्मनि वाराणसीमृतस्य कथं पापान्तरोत्पत्तिरिति वाच्यम्। तत्र प्रागभावो नास्त्येव अधर्मध्वंसेनैव फलेन प्रायश्चितस्य सफलत्वात्, प्रागभावसत्त्वेऽधर्मध्वंसद्वारा प्रागभावोऽपि साध्यस्तदसत्त्वे चाधर्मध्वंसमात्रमिति सफलत्वस्योभयत्र सत्वात्। न च मुख्यत उद्देश्यफलेनैव सफलत्वनियमः साङ्गकर्मण इति वाच्यम्। कीर्तनादिना धर्मनाशस्थले व्यभिचारात्। तद्धर्मनाशस्य च प्रतियोगिजनकजातीयनाशत्वेन सोपाधीच्छाविषयत्व-

---

(१) नेति नास्ति प्रा० पुस्तके। (२) गगनवत्स्वरसत इति कण्ठाभरणगृहीतः पाठो बोध्यः।

तीति पूर्वपक्षतुल्यतापत्तेश्च । इयमेव हि प्रागभावानुवृत्तिरिति प्रावादुकप्रवादः। न चास्य समायव्ययफलत्वेनापुरुषार्थत्वं, दुःखस्य प्राचुर्यात्सुखस्याल्पत्वात् । आनन्त्यात्सुखदुःखयोरिदमनुपपन्नमिति चेत् । न । दिनमासवर्षावच्छेदेन दुःखप्राचुर्यनिश्चयेऽन्यत्रापि तदनुमानात् । तदनाकलितसङ्ख्यात्वमेतयोरानन्त्यं, न तु न्यूनातिरेकभावाभावः, अन्यथा सुकृतदुष्कृतयोरानन्त्ये विशेषाभावादपूर्वकर्माननुष्ठानप्रसङ्गे वैदिकविधिनिषेधवैयर्थ्यापत्तेः। जी-

न्यायलीलावतीकण्ठाभरणम्

इयमेवेति । दुःखसाधननिवृत्तिमुखेन दुःखप्रागभावस्यैव साध्यत्वात् मीमांसकानां नैयायिकानां च प्रायश्चित्तस्थले प्रागभावानुवृत्तिरियमेवेत्यर्थः । समायव्ययफलत्वादिति(१) । दुःखसाधनशरीरादिनाशे सुखस्यापि हानादित्यर्थः । दुःखस्येति । दुःखदुर्दिनमध्ये कथं स्वसुखस्येति कामेन वीतरागाणां तत्र प्रवृत्तिर्न स्यादित्यर्थः । इदमिति । दुःखस्य भूयस्त्वं सुखस्य चाल्पत्वमित्यर्थः । दिनमासेति । क्वचिन्मासे दुःखप्रवाहस्य भूयस्त्वं सुखस्य चाल्पत्वमनुभवसिद्धमन्यत्रापि तदनुसारेणानुमेयमित्यर्थः । राजादीनां सुखित्वेऽपि गर्भवासादिदुःखप्राचुर्यात् ब्रह्मादीनान्तु सुखलेशोपि नास्तीति । तर्हि द्वयोरानन्त्यप्रवादः किन्निबन्धन इत्यत आह तदनाकलितेति । अन्यथेति । यद्युभयोस्तुल्यवदानंत्यम, तदा तद्बीजसुकृतदुःकृतयोरप्यानन्त्यमेवेति

न्यायलीलावतप्रिकाशः

र्थः। दिनमासेति । यद्यप्येतन्नैकपुरुषापेक्षया राजादौ स्वर्गिणि च वैपरीत्यदर्शनात् सामान्यतः भूयस्त्वं निरूपयितुमशक्यम्, तथापि धर्माधर्मोभयावरुद्धशरीरे दुःखानि भूयांसि न सुखानीति, राजादावपि गर्भवासादिभूयोदुःखदर्शनात् । एवंसति सुखदुःखयोरानन्त्यव्यवहारं समर्थयति तदनाकलितेति । विधिनिषेधेति। विहिते कर्मणि प्रवृत्तस्य सुकृतवद्दुःकृतस्यावश्यंभावात्, अन्यथाऽन्यूनानतिरिक्तरूपानन्त्यानुपप-

न्यायलीलावतीप्रकाशविवृतिः

सम्भवादिति दिक् । गर्भवासादीति । 'गर्भवासस्थलेऽधिक' इति स्मृते-

(१) एतन्मतेनात्र मूले पंचम्यन्त एव पाठो बोध्यः ।

वनिर्वाणदशायां वा योगजधर्मसाहित्येनैवैहिका(१)णिमकसक-
लसुखोत्कृष्टयावदिच्छोपभोग्यसुखप्रवाहोत्पत्तौ(२) सुखोपभोगस-
मीहानिरासे योगजादृष्टविनाशात् परमनिर्वाणस्य सकलदुःखाभा-
वस्योत्पत्तौ समायव्ययफलत्वाभावात् । एवं च न प्रावादुकप्रवा-
दावकाशः, जीवन्मुक्तिसहितायाः परममुक्तेः पुरुषार्थत्वात् । न
च जीवतः सुखोपभोगोऽनुपपन्नो, ज्ञानेनैव कर्मणां क्षयादिति
वाच्यम् । अकृतप्रायश्चित्तानां कर्मणां देहारम्भककर्मवद्भोगैक-
नाश्यत्वनियमात् । न चानन्त्यात्कर्मणां भोगक्षयानुपपत्तिः, यो-
गर्द्धिसामर्थ्येनानन्ततदुपभोगजनककायनिर्माणोपपत्तेः । न च

---

न्यायलीलावतीकण्ठाभरणम्

धार्मिको विहिते न प्रवर्तेत न वा निषिद्धान्निवर्तेत फलस्य सुखस्य दुःखस्य चाविशेषादित्यर्थः । ननु--

दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते ।
नहि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः ॥

किञ्च—

अशक्यानि दुरन्तानि समवायफलानि च ।
असत्यानि च कर्माणि नारभेत विचक्षणः ॥

किञ्च--

वरं वृदावनं रम्ये शृगालोऽपि भवाम्यहम् ।
न तु वैशिषिकीं मुक्तिं चेतनो गन्तुमर्हति ॥

इति प्रावादुकप्रवादाः सन्ति तत्किं दुःखाभावो मुक्तिरित्यत आह न च जीवत इति । न च विषमेति । विषमविपाकसमयत्वं यदि या-

न्यायलीलावतीप्रकाशः

त्तेरिति विधिवैयर्थ्यम् । एवं निषिद्धेऽपि कर्मणि दुःकृतवत्सुकृतस्या-
वश्यम्भावात्, अन्यथोक्तरूपानन्त्यानुपपत्तेरिति निषेधवैयर्थ्यमित्य-
र्थः । प्रावादुकेति । वरं वृन्दावने रम्ये इत्यर्थः । ननु तत्त्वज्ञानादृष्ट-
फलान्येव कर्माणि प्रायश्चित्तादिवन्नश्यन्ति 'ज्ञानाग्निः सर्वकर्माणि
भस्मसात्कुरुते तथे'त्यनन्यथासिद्धशब्दबलादिति न जीवन्मुक्तिरित्यत

---

(१) योगजादृष्टसामर्थ्येनैहिकेति मा० पु० पाठः । (२) पत्तौ० मा० पु० पाठः ।

विषमविपाकसमयतया कर्मणां युगपदुपभोगविरोधः, तदनुकू-लसहकारिसाकल्यस्यैकदोत्पादनादेव समानविपाकसमयतोप-पत्तेः। भवति चात्र स्मृतिः "नाभुक्तं क्षीयते कर्म" इति, श्रुति-श्च "तावदेवास्य चिरम्" इति। न चात्र "ज्ञानाग्निः सर्वक-र्माणि" इति श्रुतिस्मृतिविरोधः, भस्मसात्करणेन विनश्वरतायाः

न्यायलीलावतीकण्ठाभरणम्

वह्नसन्ताद्यवच्छेदेन भोग्यत्वं काश्मीरकार्नाटावच्छेदेन वा भोग्यत्वं षष्ठिवर्षाद्यवच्छेदेन वा भोग्यत्वं सर्वं योगर्द्धिप्रभावादेवोत्पन्नम्, तदु-क्तं—'नहि योगर्धिप्रभावादृतेऽगस्त्यः समुद्रं पिबति, स इव दण्ड-कारण्यं व्रजतीति'। समयावच्छेदेपि तावतीनां सुखवृत्तीनां फलत्वं ताश्च कायव्यूहादेव संभवन्तीति भावः। तावदेवास्येति। अस्य—

न्यायलीलावतीप्रकाशः

आह—न च जीवत इति। न च विषमेति। विषमविपाकसमयत्वं यदि शरद्वसन्तादिसाहित्यं, यदि वा बाल्ययौवनादिसाहित्यं, तदोभयमपि योगर्द्धिप्रभावादेवोपपन्नम्, अथ षष्ठिवर्षादिभोग्यत्वं, तत्रापि ताव-द्भोग्यत्वमतन्त्रं, किन्तु तावत्यः सुखव्यक्तयस्तदैवोपभोक्ष्यन्ते इत्युक्त-मिति भावः। ननु 'नाभुक्तं क्षीयते कर्मे'त्यत्र प्रायश्चित्तस्मृतेः सङ्कोच-स्याऽऽवश्यकत्वेन शब्दबोधितनाशकानाश्यकर्मपरत्वं लाघवात्, नतु तत्तदन्यकर्मपरत्वं गौरवात्, पापपुण्यक्षयहेतूनां बहुतरत्वात्, किञ्च 'भिद्यते हृदयग्रन्थिश्छिद्यते कर्मबन्धनम्, क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परात्मनी'ति प्रत्यक्षश्रुतिविरोधेन स्मृतिर्न प्रमाणमित्यत आह—न चात्रेति। भस्मसात्करणेनेति। कर्मणां भस्मीभावस्य बाधितत्वात् भस्मसात्पदस्य लाक्षणिकतया यथा वह्नेः परम्परया भस्म तथा ज्ञाना-त्कर्मक्षय इत्यर्थः। ज्ञानस्य नाशकत्वं भोगद्वारापि सम्भवतीत्यबाधे सम्भवति न बाधकल्पनम्, अनन्यथासिद्धप्रायश्चित्तविधिना बाध इति

न्यायलीलावतीप्रकाशविवृतिः

रिति भावः। ज्ञानस्य नाशकत्वं भोगद्वारापीति। 'नाभुक्तं क्षीयते कर्म, 'ज्ञानाग्निः सर्वकर्माणि' इत्युभयोरपि प्रामाण्यार्थं प्रारब्धव्यापारक-र्माप्रारब्धव्यापारकर्मपरमुभयत्र यथासंख्यं कर्मपदमिति वयम्।

उपलक्षितत्वात्(१), तस्य तत्फलसम्पादकदेहव्यूहेनाप्युपपत्तेः। स्वर्गवत् श्रुतिसिद्धे चापवर्गेऽनुमानमप्युच्यते। आत्मा कदाचि-द्ध्वस्ताशेषविशेषगुणो विभुत्वे सति कार्यविशेषगुणवत्त्वात्

न्यायलीलावतीकण्ठाभरणम्

उत्पन्नज्ञानस्य मुमुक्षोस्तावदेव चिरं विलम्बः यावन्न विमोक्षे कर्मनाशैरथ सम्पद्यते कैवल्येनेति। उपलक्षणादिति। तन्मतेऽपि भस्मसात्करणमुपलक्षणमेव, किंच 'भिद्यते हृदयग्रन्थिश्छिद्यते कर्मबन्धनम्। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे॥'. इति श्रुतिविरोधात्, 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति' स्मृतिरपि अवश्यमन्यपरेति भावः। आत्मा कदाचिदिति। चैत्रात्मा स्व-

न्यायलीलावतीप्रकाशः

भावः। आत्मा कदाचिदिति। ननु चाशेषविशेषगुणध्वंसस्य क्रमेण तत्र सत्त्वात्सिद्धसाधनम्, एककालीनेति विशेषणे दृष्टान्तासिद्धिः आ-काशेप्युत्पत्स्यमानविशेषगुणध्वंसस्याभावात्। मैवम्। देवदत्तात्मा स्ववृत्तिविशेषगुणासमानकालोत्पत्तिकस्ववृत्तिविशेषगुणध्वंसवान्

न्यायलीलावतीप्रकाशविवृतिः

एककालीनेति विशेषण इति। ध्वंसस्येति शेषः। आकाशवदिति मूले महाप्रलयपदेन कार्यद्रव्यानाधिकरणकाल एवोक्तोऽन्यस्यानभ्युप-गमादित्यभिसन्धानेनेदम्। देवदत्तात्मेति। आत्ममात्रपक्षत्वे ईश्वरे-ऽसत्तोः(?) बाधासिद्धीति देवदत्तपदम्। सिद्धसाधनवारणाय उत्प-त्तिकेत्यन्तम्। तत्रापि ईश्वरविशेषगुणसमानकालतया बाध इति स्ववृत्तिपदम्। विशेषपदत्यागे आत्मैकत्वादिकमादाय बाध इति तत्पदम्। विशेषपदार्थमादायोक्तबाधादाह गुणेति। तादृशगुणास-मानकालेति कृते दृष्टान्तासिद्धिः, प्रलयकालेऽपि भाविसृष्टिकाली-नशब्दसमानकालध्वंसवत्वादाकाशस्येत्युत्पत्तिगर्भो हेतुः। न च ब्रह्माण्डान्तरीयशब्दमादाय दोषतादवस्थ्यमिति वाच्यम्। एकदैव सर्वब्रह्माण्डप्रलय इति मतेनोक्तत्वात्। चरमस्ववृत्तिपदं मुक्तिस्वरू-पलाभाय। एवं विशेषपदमपि। अभावगर्भतां परित्यज्य ध्वंसपर्यन्त-

(१) उपलक्षणात्-शंकरमिश्रधृतः पाठः।

(२) साध्यहेत्वोरसत्त्वात् इतिपाठोऽत्र सङ्गुचितः।

महाप्रलयावस्थायामाकाशवत् । न च क्रमेण सर्वमुक्तिः । केषाञ्चिदात्मनां संसारैकस्वभावत्वात् । न चैवं सति तत्त्व-शङ्कायां(१) सर्वेषां मोक्षाननुष्ठानप्रसङ्गः, शमदमभोगानभि-ष्वङ्गादिचिह्नेन श्रुतिसिद्धेन संदेहनिवृत्तेः । इति मुक्तिः ॥

न्यायलीलावतीकण्ठाभरणम्

वृत्तिविशेषगुणासमानकालोत्पत्तिकस्ववृत्तिविशेषगुणध्वंसवान् वि-भुत्वे सति कार्यविशेषगुणत्वात् गगनवत् । तेनैककालीनेति विशे-षणे दृष्टान्तासिद्धिः क्रमविवक्षायां च इदानीमपि सिद्धसाधनादि-ति देश्यमपास्तम् । महाप्रलयेति सम्प्रदायमते दृष्टान्तता । तत्त्वशंक-येति । यद्यहमेवोखवात्मा स्यामिति शङ्कयेत्यर्थः ॥ इति मुक्तिः ।

न्यायलीलावतीप्रकाशः

विभुत्वे सति कार्यविशेषगुणवत्त्वात् आकाशादिवदिति विवक्षित-त्वात् । "आत्मा वा अरे श्रोतव्य"इत्याद्युपक्रम्य, "दुःखेनात्यन्तं वि-मुक्तश्चरतीति" श्रुतिरत्र मानम् । ननु यद्यहमेवोखरात्मा स्यामिति शङ्कया न मोक्षार्थी कश्चिद्ब्रह्मचर्यादिदुःखमनुभवेदित्यत आह— न चेवमिति । न च शमदमादिकार्येऽपि प्रत्यात्मत्वेनैव स्वरूपयोग्यतेति वाच्यम् । आत्मत्वं न विमुक्तात्ममात्रवृत्ति जातित्वात् घटत्वादिव-

न्यायलीलावतीप्रकाशविवृतिः

धावनमपि तदर्थमेव । परवृत्तिगुणध्वंसस्य सामान्यगुणध्वंसस्यात्य-न्ताभावस्य चामुक्तित्वात् विभुत्वे सतीति। स्वनाशनाश्यरूपादिमति ईश्व-रे कालादौ व्यभिचार इति विशेषणानि । न चैतन्मते स्वरूपयो-ग्यात्मनि व्यभिचारः, तदन्यत्वेनापि विशेषणात् । न च वर्तमानाप्य-चिरमनुभूयत इति मते बाधः, चरमभोगध्वंसमादायैव साध्यसत्त्वात् । यदि च मुक्तेः स्वरूपलाभाय विशेषपदं तुल्यपरम्, तदा तदन्यत्वेना-प्याद्यविशेषगुणाविशेषणम् । तदनभ्युगन्तृमतेनैवेदमित्यपि वदन्ति । आकाशादीति दृष्टान्ते क्वचित्पाठः । तत्रादिपदं व्यतिरेकदृष्टान्तसंग्रहा-येति ज्ञेयम् । आत्मत्वमिति । नन्वीश्वरात्मवृत्तित्वेनार्थान्तरं तस्य दुः-खध्वंसाभावेनाविमुक्तत्वादिति चेत् । अत्र संसार्यात्मत्वमेव पक्षः, सु-खसमवायिकारणतावच्छेदकतया तज्जातिसिद्धेरिति केचित् । तद-

(१) शंकया—मा० पु० पाठः ।

न्यायः परार्थानुमानम् । स च प्रतिज्ञादिपञ्चावयवात्मा ।

---

न्यायलीलावतीकण्ठाभरणम्

स चेति । मोक्षसाधनार्थमुपन्यस्तो न्यायो बुद्धिस्थतया तच्छब्देन परामृश्यते । प्रतिज्ञादीति । 'प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा'

न्यायलीलावतीप्रकाशः

दिति(१) बाधकात् । न चाप्रयोजकत्वं, स्वरूपयोग्यतावच्छेकजातेः सहकार्ययोगव्यक्तिवृत्तित्वनियमात् , गन्धस्य स्वरूपयोग्यतावच्छेदकपृथिवीत्वे व्यभिचारः नानाजातीयगन्धवदवयवारब्धेऽवयविनि गुणविरोधेन गन्धानुत्पादात् ॥

स चेति । न्यायपरामर्षः, पूर्वं न्यायस्यानभिधानेऽपि मोक्षे न्यायस्य प्रमाणत्वेनाभिधानात् तस्य बुद्धिस्थत्वात् । अनुमितिचरमकार-

न्यायलीलावतीप्रकाशविवृतिः

युक्तम् । नित्यस्यापि स्वरूपयोग्यस्य फलानुपहितत्वमिति स्वयमेवाभिधानेन सुखसमवायिकारणताया ईश्वरसाधारणत्वेनैवावच्छेदात् , तस्मात् यथाश्रुत एव पक्षः । समानकालीनदुःखासमानाधिकरणतावच्छेदकतया दुःखाभावत्वमेवात्र मुक्तत्वं, तच्च ध्वंसमादाय संसार्यात्मनि, अत्यन्ताभावमादायेश्वरे इति न तेनार्थान्तरमिति रहस्यम् । मुक्तात्मत्ववदिति व्यतिरेके दृष्टान्तः । घटत्वादिवदिति क्वचित्पाठः । स तु सुगम एव । स्वरूपयोग्यतेति । न च जन्यगुणस्वरूपयोग्यतावच्छेदकद्रव्यत्वे रूपोपलब्धियोग्यतावच्छेदकचक्षुष्ट्वे च व्यभिचार इति वाच्यम् । द्रव्यत्वसाक्षाद्व्याप्यत्वेन जातेर्विशेषणात् । प्रत्यक्षत्वमपि विशेषणमतो न सुखोपलब्धियोग्यतावच्छेदकमनस्त्वे व्यभिचारः । यद्यपि नियमविरुद्धो नियमः, तथापि तन्नियमानभ्युपगमेनायमुक्तः । न चाप्रयोजकत्वम् , निरुपधिसहचारदर्शनस्य विपक्षबाधकत्वात् । गुणविरोधेनेति । न च चित्ररूपवत् चित्रगन्धस्यापि स्वीकारादिदमयुक्तम् , अवयविनि प्रत्यक्षत्वानुपपत्त्या चित्ररूपकल्पनाच्चित्रगन्धे च मानाभावादिति दिक् ॥

पूर्वमिति । एतच्च स चेति पूर्वं यदि न्यायः परार्थानुमानमिति न पाठस्तदा बोध्यम् । अनुमितीति । उपनयान्तचतुरवयवंऽतिव्या-

---

(१) अत्र विवृतकारमतेन—मुक्तात्मत्ववदित्यपि पाठो बोध्यः ।

न च प्रतिज्ञादीनामसाधनाङ्गत्वम्, अत्यन्तबुभुत्सितसाध्यप्र-

न्यायलीलावतीकण्ठाभरणम्

इति पारमर्शसूत्रात् प्रतिज्ञादीनामित्यादिपदेन यावत्स्ववयवेषु प- रविप्रतिप्रात्तिस्तेषां संग्रहः। अत्यन्तेति। प्रथमं साध्यनिर्देश एवापेक्षि- तः। न च विप्रतिपत्तित एव तदुपस्थितिः, तस्याः समयबन्धेनान्तरि- तत्वात्। तर्हि सैव पुनरावर्तनीयेति चेत्, तर्हि सैव प्रतिज्ञा प्रतिज्ञया साध्यस्वरूपोपस्थितौ साधनस्वरूपाकांक्षायां हेतुस्वरूपोपस्थापकहे- त्ववयवः। स च व्याप्तो गमक इति व्याप्तिजिज्ञासायामुदाहरणम्। ततश्च व्याप्तोऽसौ पक्षधर्मो न वेत्याकांक्षायामुपनयः। ततो व्याप्तः प- क्षधर्मश्चायं बाधितस्तुल्यबलप्रतिरुद्धो वा भवेदित्युभयाशङ्कानिवा- रणार्थं निगमनम्, सिद्धवदुपसंहारस्य विपरीतशंकाविलयनेन प्रयो- जकत्वात्। ततः पंचभिरवयवैः स्वस्वलिङ्गविशिष्टप्रतिपादन- कृतः सम्भूय समस्तरूपोपपन्नतया लिङ्गप्रतिपादनम्। स च न लिङ्गपरामर्शः। अत्राऽतरा पक्षसत्त्वं सपक्षसन् विपक्षासत्त्वबाधि- ताऽसत्प्रतिपक्षितश्चेति अयं मनसा परिच्छिनत्ति वादिवचनेऽना- श्वासादेतदेव विशिष्टवैशिष्ट्यावगाहि मानमुच्यत इत्यर्थः। तत्रानुमितिचरमकारणलिङ्गपरामर्शप्रयोजकशाब्दज्ञानजनकं वाक्यं

न्यायलीलावतीप्रकाशः

णतृतीयलिङ्गपरामर्षप्रयोजकशाब्दज्ञानजनकं वाक्यं न्यायः। प्रति- ज्ञादिपञ्चकैरेकवाक्यतया स्वस्वार्थविशिष्टज्ञानं जन्यते, तेन च वि- शिष्टवैशिष्ट्यावगाहिमानान्तरमुत्पाद्यते, तेन चरमपरामर्षो जन्यत इति स्थितेः। आदिपदेन हेत्वादिचतुष्टयपरिग्रहः। ननु यावती सा- मग्री स्वार्थानुमाने क्लृप्ता तावत्या एव परं प्रतिपादयितुमुचितत्वा-

न्यायलीलावतीप्रकाशविवृतिः

प्तिवारणाय चरमेति। लिङ्गपदं संपातायाम्। जनकेत्युक्ते बाधं इति प्रयोजकेति। योग्यताज्ञानजनककण्टकोद्धारवाक्येऽतिव्याप्तिवारणाय शाब्दपदम्। शाब्दज्ञानत्वेन यस्य लिङ्गपरामर्षस्य प्रयोजकतेत्यर्थः। प्रकृते च योग्यताज्ञानत्वेन जनकत्वात्। वाक्यपदं तु अवयवेऽति- व्याप्तिवारणाय। वाक्यान्तराघटकपदसमुदायश्च तदर्थ इति दिक्। मानान्तरं उत्पाद्यते जन्यते, मध्यस्थनियोगस्य साध्योपलक्षित-

तिपादनोपयोगित्वात् । न चोपनयनिगमनाभ्यामेव तदधिग-(१)तम् । तयोरुचित(२)समयातिक्रमात् अपेक्षितं वाच्यमिति यथा नियमः, एवं यदा यस्येत्यपि नियम एव, अन्यथा पूर्वनियम-

न्यायलीलावतीकण्ठाभरणम्

न्यायः । स च वह्निव्याप्यधूमवानयमिति संक्षेपो तेनापि कण्टकोद्धारात् । संक्षेपविस्तराभ्यां न्यायस्यापि द्वैविध्यम् , आद्यं गुर्वादेः शिष्यादीन्प्रति, द्वितीयन्तु वादिनो वादिनं प्रतीत्यप्याहुः । ननूपनयेन व्याप्तस्य पक्षधर्मता दर्शिता निगमनेन चाबाधितत्वमसत्प्रतिपक्षितत्वं च दर्शितम् तत्किमपरमवशिष्यते यदर्थं प्रतिज्ञादीत्यत आह— न चेति । तदवगतिरिति । पञ्चरूपाधिगतिरित्यर्थः । तयोरिति । साध्यस्वरूपहेतुस्वरूपव्याप्तीनामुपस्थितिसम्भवेनोपनयनिगमनार्थस्यानाकांक्षितत्वादित्यर्थः । ननूपनयनिगमनप्रतिपाद्योऽप्यर्थश्चेदपेक्षितस्तदा कथं न तदुपस्थापकापेक्षेत्यत आह अपेक्षितमिति । अन्यथेति । तत्कालानपेक्षिताभिधानेऽपेक्षितं वाच्यमित्यपि नियमो भिद्येतेत्य-

न्यायलीलावतीप्रकाशः

दुदाहरणोपनयावेव न्यायावयवावित्यत आह नचेति । शब्दानित्यत्वे प्रमाणं वदेति मध्यस्थनियोगात्तस्य प्रमाणमात्रे न जिज्ञासा, किन्तु विशिष्टे, विशिष्टं च न विशेषणं साध्यमनभिधाय शक्यताभिधानं, नवा साध्यनिर्देशं विना हेतोराकांक्षा नवाऽन्वयबोधकत्वमिति प्रतिज्ञा साधनाङ्गमित्यर्थः । तयोरिति । तत्प्रतिपाद्ययोः प्रथममनाकांक्षितत्वे ध्रुयोरनवतारादित्यर्थः । तदेव स्पष्टयति अपेक्षितमिति । आकांक्षितत्वाविशेषेऽपि यद्यदाऽऽकांक्षितं तत्तदा वक्तव्यमित्यपि नियम इत्यर्थः । पूर्वनियमस्येति । अपेक्षितं वाच्यमिति नियमस्येत्यर्थः । अन्यथा अनाकांक्षिताभिधाने इत्यर्थः । ननु साध्याभिधानं विना हेत्वादिवचनान्वया-

न्यायलीलावतीप्रकाशविवृतिः

हेत्वभिधानपरत्वसंशयादतुष्यन्नाह नच साध्यनिर्देशमिति । अनाकांक्षत्वाचेति । इदमुपलक्षणम् , प्रतिज्ञायां ज्ञानलक्षणया विप्रतिपत्त्या तादृशसा-

(१) तदवगतिरिति कण्ठाभरणाभिमतः प्रा० पु० पाठोऽत्र बोध्यः ।

(२) रमिमत—प्रा० पु० पाठः ।

स्यैव भङ्गात् । तथा च प्रतिज्ञार्थ एव पूर्वमपेक्षित इति प्रतिपाद्यः, अन्यथा निग्रहात् । न च गङ्गायां घोषः पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादिवाक्यवत् झटित्यप्रतीतावपि न दोष इति वाच्यम् । वादिनः संदिग्धाप्तत्वात् , अन्यथा विपरीतान्वयदृष्टान्ताभा-

---

न्यायलीलावतीकण्ठाभरणम्

र्थः । तथाचानपेक्षिताभिधानेनानवधेयवचनत्वापत्तेरिति भावः । प्रतिज्ञार्थ एवेति । उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशाब्दज्ञानाजनकन्यायावयवः प्रतिज्ञा तदर्थ एव पूर्वमपेक्षित इत्यर्थः । अन्यथेति । प्रतिज्ञाऽनभिधानेऽप्राप्तकालनिग्रहापत्तेरित्यर्थः । ननु लक्षणया आक्षेपेण वा हेत्वभिधानेनैव प्रतिज्ञार्थोपस्थितौ किं तेनेत्यत आह नचेति । वादिन इति । अनाप्तवाक्ये तदुभयानन्तरभावात् । अन्यथा वादी क्वापि न निगृह्येतेत्यर्थः । अन्यथेति । यो वह्निमान्धूमादित्यादावपि

न्यायलीलावतीप्रकाशः

न्यथानुपपत्त्या साध्यविशेषे तदुपपादके लक्षणा स्यादित्यत आह नचेति । झटितीति । मुख्यवृत्त्या प्रतिज्ञार्थाप्रतीतावित्यर्थः । ननु विप्रतिपत्तित एव पक्षपरिग्रहे हेत्वभिधानमेवोचितम् । मैवम् । तस्याः प्रतिवादिविप्रतिपत्त्या समयबन्धेन चान्तरितत्वात्, परविप्रतिपत्तिं समयबन्धं च विना स्थापनाया अभावात , विप्रतिपत्तिवाक्यस्य पक्षपरिग्रहेण पर्यवसिततया निराकाङ्क्षत्वाच्च । आवृत्तौ तु सैव प्रतिज्ञा, तस्मात्साध्याभिधानं विना न हेतोराकाङ्क्षा, नवान्वयबोधजनकत्वमिति प्रतिज्ञा साधनाङ्गम् । तल्लक्षणं च लिङ्गपरामर्शप्रयोजकवाक्यार्थधीकारणत्वे सति उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकशा

न्यायलीलावतीप्रकाशविवृतिः

ब्द्यानुपस्थापनादित्यपि द्रष्टव्यम् । लिङ्गपरामर्शेति । उदासीनप्रतिज्ञासमानाकारवाक्यातिव्याप्तिवारणाय सत्यन्तं न्यायप्रविष्टवाक्यपरम् । अवयवान्तरवारणाय विशेष्यपदम् । तत्रापि वह्निमानित्युदाहरणावयवेऽतिव्याप्तिरित्यन्यूनपदम् । शब्दत्वेनैव यत्र शब्दे नित्यत्वानुमानं तत्रोपनयेऽतिव्याप्तिरित्यनतिरिक्तपदम् । न च तत्रान्वयव्याप्तिस्वीकारे व्याप्तिग्रहकाले सिद्धसाधनं, व्यतिरेकव्याप्तौ तु न पक्षतावच्छेदकसाध्य-

सानुपपत्तेः । अत एव हेतुपदमपि साध्यस्वरूपमात्रवत् साधन-

न्यायलीलावतीकण्ठाभरणम्

व्यत्यासेनावयवकल्पनापत्तेरित्यर्थः । अत एवेति । साध्यस्वरूपोप-

न्यायलीलावतीप्रकाशः

स्थज्ञानविषयकवाक्यत्वम्, हेत्वभिधानप्रयोजकीभूतजिज्ञासाजन-
कवाक्यत्वं वा । अतएवेति । साध्यनिर्देशान्तरं हेतोराकाङ्क्षा नतु तद्ग-
मकत्वेपीत्याकाङ्क्षाक्रमनियमादेवेत्यर्थः । साध्यरूपमात्रेत्यत्र मात्रप-
देन निगमनप्रयोजकाकाङ्क्षानिवृत्तिः, साध्यस्य विषयत्वेऽपि तदुपर-
क्तसाधनस्यापि विषयत्वात् । साधनस्वरूपमात्रस्येतिमात्रपदेन
हेतुगमकत्वविषयकाकाङ्क्षानिवृत्तिः । अनुमितिहेतुतृतीयलिङ्गपरा-
मर्शप्रयोजकशाब्दज्ञानकारणसाध्याविषयशाब्दधीजनकहेतुविभक्तिम-
च्छब्दत्वं हेतुलक्षणम् । यद्यपि हेतावुक्ते कथमस्य गमकत्वमित्याका-
ङ्क्षायां व्याप्तिपक्षधर्मतयोरुपदर्शनप्राप्तौ कथं विनिगमना यतो नोभ-
यजिज्ञासा, न वा प्रथमं पक्षधर्मताजिज्ञासा, तथापि वह्निव्याप्यधू-
मवानयमिति परामर्शोऽनुमितिजनक इति व्याप्तेर्विशेषणत्वेन प्रथमो-

न्यायलीलावतीप्रकाशविवृतिः

सामानाधिकरण्यविषयत्वमिति न्यूनविषयतेति वाच्यम् । पुरुषश-
क्तिपरीक्षार्थमन्वयव्याप्तिमभ्युपगम्य सिद्धसाधनग्रहपरीहारेणैव स-
म्बन्धकथायां तादृशोपनयेऽतिव्याप्तिसम्भवात । वस्तुतः सत्यन्तं
न्यायावयवपरम्, अन्यूनानतिरिक्तपदयोश्च विकल्पेनान्वये लक्षणद्वय-
मेवेदम् । यदि पूर्वोदाहृतोपनयो न स्वीक्रियते इति सारम् । पदानां
प्रत्येकमेव तादृशज्ञानजनकत्वादतिव्याप्तिरिति वाक्यपदं तादृशफ-
लोपहितसमुदायपरम् । हेत्विति । हेत्ववयवेत्यर्थः । तेन नोदासीनाति-
व्याप्तिः । अनुमितीति । अत्र कारणेत्यन्तं धीविशेषणमुदासीनातिव्या-
प्तिवारणाय, तच्च न्यायजन्यज्ञानप्रयोजकेत्यर्थकम् । निगमनैकदेशेऽ-
तिव्याप्तिवारणाय साध्यविषयकेति । साध्यविषयधीजनकानियता-
न्यत्वं च तदर्थोऽतो न प्रत्यक्षस्पर्शाश्रयत्वादित्यत्राव्याप्तिः । उदाहर-
णैकदेशेऽतिव्याप्तिवारणाय हेतुविभक्तिमदिति । शब्दपदं तु सामा-
न्यवत्त्वे सतीत्यादावव्याप्तिवारकं शब्दपदेन हेतुविभक्त्यर्थान्वितार्थक-
त्वस्य लाभादिति । पुरुषस्य दण्ड इति ज्ञानानन्तरं दण्डी पुरुष इति

स्वरूपमात्रस्य तद्धेतुतामात्रेण तदनन्तरं जिज्ञासितत्वात् । आभ्यां हेतुहेतुमद्भावप्रतीतौ धर्मधर्मिभावबोधनार्थमुपनयोऽपि । तस्मादनित्य एव न त्वस्मान्नित्योऽपीति विपक्षशङ्कानिरासार्थं

न्यायलीलावतीकण्ठाभरणम्

स्थितावाकांक्षाबलादेवेत्यर्थः । साध्याविषयकशाब्दज्ञानजनकहेतु विभक्तिमन्न्यायावयवत्वं हेतुत्वम् । अवयवमेवाह साध्यस्वरूपेति । उदाहरणस्य सर्वविषयत्वात् तदुल्लंघ्य उपनयमाह आभ्यामिति । प्रतिज्ञाहेत्ववयवाभ्यामित्यर्थः । धर्मधर्मिभावेति । व्याप्तस्य पक्षधर्मभावो धर्मत्वमित्यर्थः । सल्लिङ्गपरामर्शसमानविषयकशाब्दज्ञानजनकन्यायावयवत्वमुपनयत्वम् । तस्मादनित्य एवेति । बाधशङ्कानिवृत्तिप्रयोज

न्यायलीलावतीप्रकाशः

पस्थितिर्वाच्या। न च पक्षधर्मनिष्ठो धूमो वह्निव्याप्य इत्येव परामर्षः पक्षधर्मताविशेषणकः पक्षविशेषानुमितिजनकं इति वाच्यम् । असाक्षात्कारिण्यनुभवे विशेष्यतायां स्वातन्त्र्येणोपस्थितेः प्रयोजकत्वादिति व्याप्त्युपदर्शकोदाहरणाकाङ्क्षायामुदाहरणवचनम् । तल्लक्षणं तु अनुमितिहेतुतृतीयलिङ्गपरामर्षपरवाक्यजन्यज्ञानजनकव्याप्यत्वाभिमतवह्निष्ठनियतव्यापकत्वाभिमतसम्बन्धबोधजनकं वाक्यमुदाहरणमिति सर्ववादिसिद्धत्वादत्र नोक्तम्। आभ्यामिति । तृतीयलिङ्गपरामर्षस्य व्याप्तिपक्षधर्मतावगाहिनोऽवयवान्तरादलाभात्, तदनभ्युपगमेऽपि पक्षधर्मताया अलाभात्, हेतुवाक्यस्य च हेतुस्वरूपोपस्थापकस्यात त्परत्वात्, वादिवाक्यस्यासिद्धार्थत्वेन तदनाक्षेपकत्वात् पक्षनिष्ठव्याप्तपक्षधर्मताबोधकं वाक्यम् उपनय इति लक्षणमिति भावः। तस्मादनित्य

न्यायलीलावतीप्रकाशविवृतिः

ज्ञानदर्शनेन व्यभिचार इत्यत उक्तं असाक्षात्कारिणीति । विशेष्यतायामित्यनन्तरं जनकीभूतज्ञान इति शेषः । अनुमितिहेत्विति । उदासीनातिव्याप्तिवारणाय जनकेत्यन्तं बोधविशेषणं न्यायजन्यज्ञानजनकेत्यर्थकम् । उपनयातिव्याप्तिवारणाय विशेष्यपदं, तस्य च व्याप्यत्वाभिमतमुद्दिश्य व्यापकत्वाभिमतसम्बन्धबोधजनकत्वमर्थोऽतो नोपनयातिव्याप्तिः। वाक्यपदं च तादृशबोधोपहितसमुदायपरं प्रत्येकपदातिव्याप्तिवारकम् । पक्षनिष्ठेति । समस्तावयवेन यत्र तादृशबोधजनन-

निगमनमपीत्यास्ताम् इति पञ्चावयवाः।

---

न्यायलीलावतीकण्ठाभरणम्

कशाब्दज्ञानजनकन्यायावयवत्वं (निगमनत्वम्)। केचित्तु प्रमा सा-मग्रीबलसंपादितेति मध्यस्थावगमविषयीभवितव्यमिति वादिनोः समयबन्धः, स च ह्यवयवादिप्रयोगेणामपि सम्पद्यत एव, अन्यथा नियमानिर्वाहे बौद्धाद्योऽनिगृहीताः स्युस्तथाच शास्त्रे यथा सूत्र-कारेण प्रयोगोऽभ्युपगतस्तथा तच्छास्त्रानुवर्तिना कथायां वक्तव्यो, अन्यथा न्यूनाधिकनिग्रहापत्तेरिति वदन्ति।

न्यायलीलावतीप्रकाशः

एवेति। यद्यपि व्याप्तपक्षधर्मलिङ्गप्रतिपादनमवयवचतुष्टयेन जनितं वि-परीतशङ्कानिवृत्तिरपि लिङ्गपरामर्षाज्जाता, अन्यथा निगमनेऽपि श-ङ्कापत्तेः, नहि तद्विशेषदर्शनतामनादृत्यैव तन्निवर्त्तकम्, तथापि बा-धसत्प्रतिपक्षत्वाभावबोधफलं निगमनम्, तच्चावयवान्तरान्न जात म्। अथ बाधसत्प्रतिपक्षत्वाभावः स्वरूपसन्नेवानुमितिहेतुर्न ज्ञातः, त-स्मिन्सति तज्ज्ञानवैधुर्येणानुमित्यनुत्पादादर्शनादिति किमर्थं तदभावो बोधनीयः। तत्र बाधसत्प्रतिपक्षयोर्हेत्वाभासत्वेनानुमितिप्रतिबन्ध-कत्वे सति यदवगमे यन्न भवति तत्तदभावज्ञानसाध्यं यथोपाध्यभा-वज्ञानसाध्यानुमितिरिति व्याप्तेर्बाधाद्यभावस्यापि बोधनीयत्वात्। निगमनलक्षणं तु अनुमितिहेतुलिङ्गपरामर्षप्रयोजकशाब्दज्ञानकार-णव्याप्तपक्षधर्मताज्ञानप्रयुक्तसाध्यज्ञानजनकवाक्यत्वम्॥

न्यायलीलावतीप्रकाशविवृतिः

मित्यर्थोऽतो न निगमनैकदेशातिव्याप्तिः। यदवगम इति। यदि चेयं व्याप्तिप्रयोजकतया नाङ्गीक्रियते स्वरूपसन्नेव बाधाभावः कारणं तदा बाधाभावसम्पादनायैवाबाधितत्वं बोध्यत इति यदवगम इत्या-दिप्रयोक्तुरभिप्रायकथनं, तथाच यदवगमे सति यन्न भवति तत्तद-भावावगमे भवत्येवेत्यभिप्रायो निगमयतीति भावः। अनुमितिहेत्विति। उदासीनातिव्याप्तिवारणाय कारणेऽत्यन्तं ज्ञानविशेषणम्। तस्य न्या-यजन्यज्ञानकारणेत्यर्थः। ज्ञानपदं ज्ञानज्ञानपरम्। निगमनेऽपि प्रति-ज्ञायामिव साध्यपदे ज्ञानलक्षणास्वीकारात्।

तदाभासास्तु चत्वारः। असिद्धविरुद्धसव्यभिचारानध्यवसिताः। बाधप्रतिरोधावपि स्त इति चेत्। न। उभयो(१)र्व्याप्तिग्रहपक्षधर्मतापहारेणैवानुमानदूषकत्वात् सिद्धसाधनवत्, अन्यथा

---

न्यायलीलावतीकण्ठाभरणम्

तदाभासा इति। पञ्चभिरवयवैर्यस्य स्वरूपप्रतिपत्तिर्गम्यते तदाभासा इत्यर्थः। अनुमितिप्रतिबन्धकतावच्छेदकरूपवत्त्वं हेत्वाभासत्वम्। विभागमाक्षिपति बाधेति। सन्देहसिषाधयिषयोः पक्षताघटकयोरभावादाश्रयासिद्धिः, तत्र हेतुसत्त्वे व्यभिचारो, सत्प्रतिपक्षे तु व्याप्तिसन्देहात् व्या

न्यायलीलावतीप्रकाशः

तदाभासा इति योग्यतया तच्छब्देन हेतुपरामर्शः। हेत्वाभासत्वं तु ज्ञायमानत्वे सत्यनुमितिप्रतिबन्धकत्वम्। तयोरिति। बाधे पक्षत्वाभिमते साध्याभावप्रमायां साधनत्वाभिमतस्य वृत्तेर्व्यभिचारः, साध्यसन्देहाभावान्न पक्षत्वं, सत्प्रतिपक्षे त्वन्यतरत्र तत्सत्त्वेऽपि तत्प्रतीतिर्नास्तीत्यसिद्ध एव तयोरन्तर्भाव इत्यर्थः। ननु व्याप्तिपक्षधर्मताप्रमित्यभावोपजीव्यत्वात्तौ पृथक् स्यातामित्यत आह अन्यथेति। सिद्धसाधनस्यापि तदुपजीव्यत्वादित्यर्थः। ननूपजीव्यत्वेऽपि सिद्धसाधनं स्वतोऽदूषकं नहि साध्यज्ञानं साध्यज्ञानपरिपन्थि, साध्या

न्यायलीलावतीप्रकाशविवृतिः

ज्ञायमानत्वे सतीति। यद्यपि साक्षादनुमितिप्रतिबन्धकत्वे विवक्षिते व्यभिचाराद्यव्याप्तिः, परम्परासाधारण्यविवक्षायां उपाधावतिव्याप्तिस्तथाप्यनुमितिपरामर्शान्यतरविरोधिघटितशरीरत्वमेव लक्षणम्। विरोधश्च क्वचित्परस्पराभावात्मकत्वं क्वचिदभावव्याप्यत्वम्। अत एव च न सिद्धसाधनप्रसङ्गः। इदं च लक्षणं ज्ञायमानस्यैव हेत्वाभासत्वमिति मते, ग्रन्थकृन्मते त्वनुमित्यसाधारणदोषत्वमेव लक्षणमसिद्ध्यादेरज्ञायमानस्यैव प्रतिबन्धकत्वाद्बाधस्यासङ्ग्राह्यत्वाच्चेति तदेवानेनोपलक्षितमित्यवधेयम्। मूले साध्याभावपरिच्छित्तिरूपत्वादित्युपलक्षणं, तद्व्याप्यपरिच्छि-

---

(१) तयोरिति प्रकाशाभिमतः पाठः न० पु० बोध्यः।

तस्यापि दूषणान्तरतापत्तेः । ताद्रूप्यपरिच्छेदो न तस्य विरोधी स्वभावादिति तस्य परापेक्षित्वात्, बाधप्रतिरोधयोस्तु साध्याभावपरिच्छित्तिरूपत्वादाभासान्तरत्वमिति चेत् । न । सर्वोपसंहारप्रवृत्तबाह्याभ्यन्तरनियमस्यानुमानसहायत्वात् । तदेकदेश-

न्यायलीलावतीकण्ठाभरणम्

वत्त्वासिद्धिरित्यर्थः । ताद्रूप्यपरिच्छेदः साध्यवत्तया धर्मिपरिच्छेदः सिद्धसाधनमिति यावत् । तस्य न साध्यसिद्धिविरोधित्वं धारावहनादिदर्शनात् । साध्याभावपरिच्छित्तिस्तु साध्यसिद्धिपरिपन्थिनीति तयोः स्वातंत्र्येणैव दोषत्वमित्यर्थः । बाह्यः सपक्षः, आभ्यन्तरं पक्षः,

न्यायलीलावतप्रिकाशः

भावप्रमा तु स्वतो दूषिका तथा, सत्प्रतिपक्षोऽपि व्याप्त्यादिप्रमाप्रतिबन्धकत्वेन तथेत्याह ताद्रूप्येति । साध्यवत्तया धर्मिणः परिच्छेदः सिद्धसाधनमित्यर्थः । सर्वेति । बाह्याभ्यन्तरं सपक्षपक्षसाधारण्येनेत्यर्थः । वह्नौ कृतकत्वदर्शनात् पूर्वं पक्षधर्मताज्ञानाभावादेव नानुमितिस्तद्दर्शने च साध्याभाववति हेतुदर्शनादनैकान्तिकत्वमेव दूषणम् । न च वह्नौ प्रत्यक्षेण साध्याभावग्रहात्पूर्वं हेतुदर्शने सत्यनैकान्तिकत्वज्ञानाभावादनुमितिसामग्री निःप्रत्यूहेवेति वाच्यम् । विशेषादर्शनदशायामुत्पन्नस्यापि व्याप्तिज्ञानस्य वह्नौ साध्याभावप्रमया बाधेनानुमितिसामग्रीवैकल्येनानैकान्तिकस्यैव दूषणत्वादिति भावः । ननु पक्षत्वाभिमतादन्यत्र साध्याभाववति हेतुसत्त्वेनानैकान्तिकमत्र

न्यायलीलावतीप्रकाशविवृतिः

त्तिरूपत्वादित्यपि द्रष्टव्यम् । व्याप्त्यादिप्रमेति । अन्यतरत्वेन व्याप्तिपक्षधर्मान्यतरभङ्गनिर्णयेऽसाधारणरूपेण सन्देहादिति भावः । पौनरुक्त्यभिया सर्वोपसंहारप्रवृत्तत्वमेव परिष्कृत्याह बाह्याभ्यन्तरमिति । यद्यपि बाह्याभ्यन्तरे सपक्षपक्षौ न तदुभयसाधारण्येनेति फक्किका युज्यते, तथापि पर्यवसितार्थोत्कीर्तनमिदम् । नच वह्नाविति । व्याप्तिपक्षधर्मताज्ञानोत्तरं यत्र पक्षे साध्याभावग्रहस्तत्र बाधस्य प्रतिबन्धकत्वमिति शङ्कार्थः । उत्पन्नस्यापि व्याप्तिज्ञानस्याप्रामाण्यस्य शङ्का तत्र बाधात्मकव्यभिचारज्ञानेनाधीयत इति तच्छङ्काशून्यपरामर्शाभावादेव

प्रवृत्तविपरीतपरिच्छेदस्यैव बाधस्य सव्यभिचारत्वात् । स च व्यभिचारो बहिरन्तश्चेति व्यभिचारदेहान्तर्भूतत्वात् । प्रतिरोधे च प्रतिरोध्यनियमग्राहकप्रत्यक्षबोधस्य सत्त्वे तस्यानुद्भावनात् ।

न्यायलीलावतीकण्ठाभरणम्

तथाच बाधे पक्षे एव व्यभिचारान्न हेत्वभासान्तरत्वम् । ननु नहि न पक्षे पक्षसमे वा व्यभिचार इत्यत आह सचेति । दोषे सति नेयं परिभा-

न्यायलीलावतीप्रकाशः

तु न तथेत्याशयेनाह स चेति । पक्षातिरिक्तत्वस्य गौरवकरत्वादित्यर्थः । नच बाधोत्तरमनैकान्तिकत्वापक्षधर्मत्वयोऽदूषकत्वादुपजीव्यत्वाद्बाधः पृथक्, उपजीव्यत्वं हि न तावत्तमवगस्यैवावगमः, बाधमनवगम्यापि शब्दादनुमानाद्वा अनैकान्तिकत्वस्य सुग्रहत्वात् । वस्तुत एकत्र धर्मिणि हेतुसाध्याभावाविति समूहालम्बनैकैव प्रतीतिर्हेतुसाध्याभावयोः सामानाधिकरण्योल्लेखिनी, अन्यथा साध्याभावप्रमायां यदि हेतोर्ज्ञानं तर्ह्यसिद्धिरेव स्यादित्येकवित्तिवेद्यत्वं तयोरिति नोपजीव्यत्वम् । नापि बाधमुद्भाव्यैवोद्भावनम् असिद्धेः, नहीदमनैकान्तिकमित्युक्ते, कथमिति परानुयोग आवश्यको, येनावश्यकोद्भाव्यता स्यात्, तथात्वेऽप्युजीवकमेव दूषणमस्तु क्लृप्तत्वात, अतएवावश्योद्भाव्यत्वं तदिति परास्तम् । अथार्थान्तरोपनायकस्मृ-

न्यायलीलावतीप्रकाशविवृतिः

तत्र नानुमितिरिति परीहारार्थः । शब्दादनुमानाद्वेति । एतच्च प्रत्यक्षरूपमेव ज्ञानं नोपजीव्यमिति प्रतिपादनाय । ज्ञानान्तरसाधारण्येनोपजीव्यत्वनिरासायाह वस्तुत इति। नहीदमनैकान्तिकमिति। यद्यपि बाधोद्भावनानन्तरमेव व्यभिचारोद्भावनमिति शङ्कायां व्यभिचारोद्भावनानन्तरं न बाधोद्भावनमिति परिहारो व्यधिकरणस्तथाप्युद्भावयितुर्विमर्शशरीरमेतत् , तथा च व्यभिचारे उद्भाविते कथमिति यदि परकथं तावश्यं, तदा प्रथमं बाध एवोद्भाव्यतामावश्यकत्वादित्यालोचयतां प्रथमं बाधोद्भावननियमः स्यान्न त्वेतदस्तीति नाशङ्कितो नियम इति भावः। यद्वा बाधोद्भावनपूर्वतानियतं न व्यभिचारोद्भावनमित्येवाशङ्काफक्किकार्थ इति यथाश्रुतैव परिहारफक्किका । अत एवेति । पूर्वोत्तरसाधारण्येनेति शेषः । रत्नकोशकृन्मतमाशङ्कते अथेति । एत-

न्यायलीलावतीकण्ठाभरणम्

षेत्यर्थः। ननु पक्षे साध्याभावप्रमा बाधः तदुत्तरञ्च प्रमितसाध्याभाववद्भासितया हेतोरनैकान्तिकत्वं ग्राह्यमेव न पक्षधर्मतापि तदुपजीव्येति बाधः पृथगेवेति चेत्। न। उपजीव्यत्वेऽपि क्लृप्तत्वादुपजीवकस्यैव हेत्वाभावात्। ननु संस्कारवशतः काञ्चनमयत्वं च यत्र वह्नौ भासते तत्र काञ्चनमयवह्निमानयमित्यनुमितिरवश्यमाभासेति हेत्वाभासान्तरसत्त्वे बाध एव हेत्वाभास इति चेन्न। विप्रतिपत्तिविषयेण साध्येनैव हेत्वाभासनिरूपणात्। सदर्थविशिष्टश्च विप्रतिपत्तिविषयः, अन्यथा सर्वप्रमाऽनाश्वासप्रसङ्गः, असदर्थ एव संस्कारवशादत्र भात इति शङ्कायाः सुलभत्वात्। ननु महानसीयो वह्निः पर्वते बाधादेव न भास्यत इति चेन्न। पर्वतीयधूमेन तस्य व्याप्तेरभावात्। ननु गन्धप्रागभावावच्छिन्नपृथिवी पक्षवती गन्धवती पृथिवीत्वादत्र बाधात्साध्यासिद्धिरिति चेत्। न। गन्धकालावधेस्य विशेषणत्वे स्वरूपासिद्धिः, उपलक्षणत्वे साध्यसिद्धिसम्भावनायां कबाधोऽपीति विशेषात्। तत्रापि वा व्यभिचार एव, पक्ष एव तद्विशेषणविशिष्टसाध्यात्यन्ताभावसामानाधिकरण्यात्। किञ्च बाधस्य सकलप्रमाणदोषत्वेऽनुमित्यसाधारणदोषत्वाभावात् अहेत्वाभासत्वादिति दिक्। प्रतिरोध्यं यत्प्रमानुमानं तद्विषयमग्राहकेण प्रत्यक्षेण साध्यस्य सत्त्वे तस्य सत्प्रतिपक्षस्यानुद्भावनात्। नहि बाधितेन सत्प्रति-

न्यायलीलावतीप्रकाशः

त्यादिसहकारिता सामान्यत एव प्रत्यभिज्ञादौ क्लृप्ता, तदिह सव्याप्तिपक्षधर्मताकलिङ्गपरामर्शस्यासदर्थकाञ्चनमयत्वादिस्मृतिसहकारिवशाद्यत्राभासधीकारणत्वं तत्राभासः पृथक्। मैवम्। व्याप्तिपक्षधर्मतोपनीतादन्यस्य व्याप्तौ भाने मानाभावात्, प्रत्यभिज्ञादौ प्रत्यभिज्ञाप्रमाणबलेन तत्कल्पनात्, अन्यथा पूर्वानुभूतसकलार्थज्ञानेऽनुमितेर्याथार्थ्योच्छेदापत्तेः। अथ प्रत्यक्षादौ प्रमामात्रं प्रति स्वातन्त्र्येण बाधस्य दोषत्वेन क्लृप्तत्वादनुमितावपि स एव दोषः। मैवम्। त-

न्यायलीलावतीप्रकाशविवृतिः

न्मते चानुमित्याभासताप्रयोजकत्वमेव हेत्वाभासत्वमिति ध्येयम्। याथार्थ्योच्छेदापत्तेरिति। इदं चापाततो ज्ञानस्य प्रत्यक्षत्वेऽपि न विषयतानियामकत्वं तत्त्वेन, किन्तु सन्निकर्षत्वेनानुमितौ च सन्निक-

न्यायलीलावतीप्रकाशः

थासति बाधस्य हेत्वाभासत्वव्याघातात्, अनुमित्यसाधारणदोषस्यैव हेत्वाभासत्वात्। अथ पक्षाभिमते साध्याभावग्रहवत् साध्याभावव्याप्यग्रहोऽपि दूषकः विरोधित्वाविशेषात्, एवञ्च साध्याभावसामानाधिकरण्यग्रहेऽनैकान्तिकत्वम्, साध्याभावव्याप्यसामानाधिकरण्यं न बाधः, साध्याभावव्याप्यं च अहितत्वादेव। नैवम्। पक्षत्वाभिमते साध्याभावग्रहस्यैव दूषकत्वासिद्धेः तद्दृष्टान्तत्वानुपपत्तेः, सिद्धौ वा तस्योक्तरूपबाधाऽनन्तर्भावे षष्ठहेत्वाभासत्वापत्तेः। उक्तरूपश्च बाधः पक्षाभिमतविषयकसाध्याभावबुद्धौ सत्यामसत्यां वा? आद्येऽनैकान्तिकमेव, साध्याभावसामानाधिकरण्यग्रहात्। अन्त्ये लिङ्गस्याभिमतसाध्याभावव्याप्ययोरगृह्यमाणविशेषतया सत्प्रतिपक्ष एव दूषणं, न बाधः। न च तुल्यबलत्वं तन्त्रम्, गमकताप्रयोजकरूपसम्पत्तेरेव बलार्थेन तस्य द्वयोरपि समानत्वात्। प्रतिरोध्येति। प्रतिरोध्यं व्यापकानुमानं तस्य व्याप्तिग्राहकं यत्प्रमाणं तस्य प्रत्यक्षेण द्वितीयानुमानमूलव्याप्तिग्राहकेन बाधः, तत्सत्त्वे तस्यानुद्भावनात्—प्रतिरोधानुद्भावनात्, अन्यथा हीनबलतया सत्प्रतिपक्षत्वानुपपत्तेरित्यर्थः। ननु द्वितीयानुमानमूलव्याप्तिग्राहकं यत्प्रत्यक्षं तद्विरोधि प्रथमानुमानमूलव्याप्तिग्राहकं प्रत्यक्षान्तरमस्ति, (१)तथाच

न्यायलीलावतीप्रकाशविवृतिः

र्मस्य विषयतानियामकत्वं किन्तु व्याप्तिपक्षधर्मतयोरिति नोपनीतस्य विषयत्वमिति सारम्। अनुमित्यसाधारणत्वादिति ध्वनितम्। वस्तुतः प्रत्यक्षे ग्राह्याभावप्रत्यक्षत्वेन प्रतिबन्धकता शब्दस्तु मानान्तरं न भवत्येवेति ग्राह्याभावज्ञानत्वेनानुमितावेव प्रतिबन्धकत्वं वाच्यं, तच्च न व्यभिचारसांकर्यादिति रहस्यम्। षष्ठेति। हेत्वाभासपञ्चत्ववादिन इति शेषः। सत्प्रतिपक्ष एवेति। त्वन्मत इति शेषः। ननु परस्परव्याप्तिग्राहकप्रामाण्यासिद्धिर्न स्वतो दूषिका विरोध्यविषयत्वात्, न चान्यतरव्याप्यत्वानिश्चय एव दोषस्तत्रापि ग्राहकप्रमाणस्य सत्प्रतिपक्षतयोपजीव्यत्वादित्यरुचेराह तथात्वेऽपीति। दूषकत्वेऽपीत्यर्थः। विरोधिसामग्रीत्वेन शब्दादिसाधारणेन प्रतिबन्धकत्वादि

---

(१) अत्र तथात्वेऽपीति विवृतिकारसम्मतपाठो युक्तः।

तस्याप्येतन्नियमग्राहकं विपक्षान्तरमस्तीति चेत् । न । तस्यैव प्रतिबन्धासिद्धिरूपत्वात् अलं तदुपजीविनाऽन्येनेति तयोरसत्त्वात् ॥

लिङ्गत्वेनानिश्चितो हेतुरसिद्धः । स एवैकोऽस्तु, अन्येषा-

---

न्यायलीलावतीकण्ठाभरणम्

पक्षःसमुद्भावयितुमुचितमिति भावः । तस्यापीति । प्रथमानुमानस्यापीत्यर्थः । तस्यैवेति । परस्परविरुद्धप्रत्यक्षद्वयप्रतीघातस्यैवेत्यर्थः । प्रतिबन्धासिद्धिरूपत्वादिति । उभयत्र व्याप्तिसन्देहापादकतया ताद्रूप्योपचारः अलमनेन प्रतिबन्धेनेति । तयोरिति । बाधप्रतिरोधयोरित्यर्थः । तथाच हेत्वाभासानां चतुष्ट्वाव्याघात इति भावः ।

लिङ्गत्वेनेति । व्याप्तपक्षधर्मत्वेनेत्यर्थः । तथा च व्याप्तपक्षधर्मत्वा-

न्यायलीलावतप्रिकाशः

विरोधिप्रत्यक्षयोरेव सत्प्रतिपक्षत्वं दूषणमस्तु इत्यत आह तस्यापीति । तस्यापि द्वितीयानुमानस्यापि, एतन्नियमग्राहकं स्थापनानुमानमूलव्याप्तिग्राहकं विपक्षान्तरं, प्रत्यक्षान्तरेण दूषणत्वरूपाभासत्वासिद्धेः तथाभूतस्यैव हेत्वाभासत्वादित्याह तस्यैवेति । वादयुपन्यस्तविरोधिप्रत्यक्षस्यैव, प्रतिबन्धासिद्धिरूपत्वात्-प्रतिबन्धासिद्धिनिरूपकत्वात्, तदुपजीविना-असिध्युपजीविना, तयोर्बाधसत्प्रतिपक्षयोर्बाधादित्यर्थः ।

लिङ्गत्वेनेति । लिङ्गत्वेन व्याप्तिपक्षधर्मतावत्त्वेन, अनिश्चितोऽप्रमित इत्यर्थः । तेनाश्रयासिद्धिव्याप्यत्वासिद्धिस्वरूपासिद्धयः संगृहीताः । ननु प्रत्येकसमुदायाऽभावमव्यापकम् । न च प्रत्येकाभावानुगतो व्याप्तिपक्षधर्मताविशिष्टाभावः, विशिष्टाभावाज्ञानेऽपि व्याप्त्याद्यन्यत-

न्यायलीलावतीप्रकाशविवृतिः

ति भावः । प्रत्यक्षस्य न प्रतिबन्धासिद्धिरूपत्वमित्यत आह निरूपकत्वादिति । निष्पादकत्वादित्यर्थः । असिद्ध्युपजीविनाऽसिद्धिनिष्पादकेन । तेनेति । व्याप्तिपक्षधर्मताप्रमितिविरहात्मकलक्षणेनेत्यर्थः । स्वरूपासिद्धय इत्यन्तमुपलक्षणम्, मितिविरहोऽपि द्रष्टव्यः । अत्र शङ्कते ननु प्रत्येकेति । विशिष्टाभावज्ञानेपीत्युपलक्षणं लक्ष्यतावच्छेदकप्रमितसिद्धि-

मत्रैवान्तर्भावादिति चेत्। व्याप्यत्वासिद्ध्यादेरन्यत्र व्यभिचा-

---

न्यायलीलावतीकण्ठाभरणम्

व्याप्रमितिरसिद्धिः, तेनाश्रयासिद्धिव्याप्यत्वासिद्धिस्वरूपासिद्धीनां सङ्ग्रहः। विशिष्टानुमितिश्च विवक्षिता, तेन प्रत्येकप्रमितावपि विशिष्टप्रमितिरवे नानुमानादेव हेत्वाभासत्वम्, प्रत्येकाप्रमितावपि विशिष्टाप्रमितत्वप्रतिसन्धानमन्तरेण नानुमितिप्रतिबन्धकत्वम्।

वस्तुतः स्वरूपसत्या एवाऽस्या आभासत्वम्, न हि कारणविघटनमपि ज्ञातं सत्कार्यं विघटयति व्यभिचारादावपि व्याप्तिपक्षधर्मअन्यतरानिश्चयस्यावश्यकत्वादित्यर्थः। व्याप्यत्वासिद्ध्यादेरित्यादिपदादाश्रयासिद्धिसङ्ग्रहः। बाधस्थले पक्ष एव व्यभिचारेणाश्रयासि-

न्यायलीलावतीप्रकाशः

राभावज्ञानेनोद्भावनेन च स्वपरानुमितिप्रतिबन्धात्, अन्यथा तेषां हेत्वाभासान्तरतापत्तेः, प्रमितिविरहाज्ञानेऽपि प्रत्येकज्ञानस्यादोषत्वाच्च। किञ्च स्वप्रमितिविरहस्य विवक्षितत्वे सद्धेतुसाधारण्यं, कदाचित्तत्रापि प्रमितिविरहात्। सकलप्रमितिविरहस्य च तत्त्वे तज्ज्ञानमशक्यं, परप्रमितीनामयोग्यत्वेन तदभावस्यायोग्यत्वात्, स्वरूपतश्च तस्य प्रतिबन्धकत्वे ज्ञानगर्भहेत्वाभासत्वानुपपत्तिः। अत्राहुः व्याप्तिपक्षधर्मतयोर्निश्चयः सिद्धिस्तदभावोऽसिद्धिः, सा च स्वरूपसत्येव दूषिका कारणाभावत्वात्। न चैवंसति सव्यभिचारादेरप्यत्रैवान्तर्भावप्रसङ्गः, स्वरूपसत्या एवासिद्धेर्दोषत्वेन स्वज्ञानार्थमसिद्ध्यनुपजीव्यत्वादिति वाच्यम्। स्वज्ञानार्थमसिद्ध्यनुपजीव्यत्वेऽपि व्यभिचारादिसत्वात् सिद्धिर्नोत्पद्यत एवेति सव्यभिचारादेरुपजीव्यत्वात् स एवैक इति व्याप्तिपक्षधर्मतां तत्प्रमितिं चाविरुन्धतां हेतुदूषणत्वाभावादित्यर्थः। व्याप्यत्वासिद्ध्यादेरिति। आदिप-

न्यायलीलावतीप्रकाशविवृतिः

दहाव्यासिद्धेश्चेत्यपि बोद्धव्यम्। ननु प्रमितिविरह एवासिद्धिस्तत्त्वं च तल्लक्षणमित्यत आह प्रमितिविरहाज्ञानेपीति। प्रत्येकेति। व्याप्यत्वपक्षधर्मताविरहेत्यर्थः। ज्ञानगर्भेति। ज्ञायमानस्यैव हेत्वाभासत्वमिति स्वमते पूर्वपक्षिणो निर्भरतयेदं दूषणम्। अतएव तदनभ्युपगमेनैव सिद्धान्तः। व्यभिचारादेरुपजीव्यत्वादिति। यद्यप्यव्यभिचारात्मकव्याप्त्य-

राद्युपजीवकत्वात् । ननु नियमनिश्चयप्रागभावस्यात्यन्ताभावस्य वाऽहेतुकत्वेनोत्पत्तावनपेक्षत्वात् ज्ञप्तेरपि मानसप्रत्यक्षाधीनत्वात् न प्रतिबन्धासिद्धेर्व्यभिचारोपजीवकत्वमिति (चेत् । न) व्यभिचारिषु प्रतिबन्धानुपलम्भस्य प्रतिबन्धाभावहेतुकत्वात् , कारणाभावात्कार्याभावस्य सर्वमतसिद्धत्वादुपजीवकत्वस्थितिरिति

---

न्यायलीलावतीकण्ठाभरणम्

श्यादेरप्युन्नयनात् । अन्यत्रेति । यत्र न सिद्धसाधनात्पक्षताहानिरित्यर्थः । तत्र व्यभिचारादीनामसत्त्वान्नोपजीव्यत्वमिति भावः । ननु चासिद्धिरनिश्चयः, स च नोत्पत्त्यर्थं व्यभिचाराद्युपजीवति, न वा ज्ञप्त्यर्थमतः कथमुपजीव्यत्वमित्याशङ्कते नन्विति । मानसेति । निश्चयाभावस्यापि मनोवेद्यत्वात्तथाच पारमर्षं सूत्रम् "ज्ञानविकल्पानां भावाभावसंवेदनादध्यात्मम्-" इति । तथाचोत्पत्तौ ज्ञप्तौ वा नासिद्धेर्व्यभिचार उपजीव्य इत्यर्थः । परिहरति व्यभिचारिष्विति । प्रतिबन्धाभावो हि व्यभिचारस्तदधीन एव तदनुपलम्भः, यदि हि प्रतिबन्धः स्यादुपलभ्येत, तथाच प्रतिबन्धाभावाधीन एव उपलम्भाभाव इत्यर्थः । आक्षिप्तैवकग्रन्थेनाह कारणाभावादिति । कारणं हि विषयतया

न्यायलीलावतीप्रकाशः

देनापक्षधर्मत्वसंग्रहः , बाधरूपव्यभिचारेण सन्देहाभावादपक्षधर्मतोन्नयनात् । तत्र व्याप्यत्वासिद्धिसम्भवेऽप्युद्भावनप्रकारभेदेनापक्षधर्मत्वस्याप्युद्भावनात् । व्यभिचारिष्विति । तथाच व्यभिचारोपजीवकत्वमेवासिद्धेरित्यर्थः । कारणाभावादिति । कारणाभावस्य प्रतिबन्धाभा-

न्यायलीलावतीप्रकाशविवृतिः

नुपलम्भस्यापि व्यभिचारनिश्चायकत्वे वैपरीत्यमपि, तथापि स्वार्थानुमाने इत्यादिमूलेन वक्ष्यमाणमेवात्र समाधानम् । व्याप्यत्वासिद्धेरन्यत्रेति मूलं व्यभिचारिप्रयुक्तसिद्धिविरहस्थल इत्यर्थः । नन्वित्यादिमूले व्यभिचारोपजीवकत्वमित्यनन्तरमिति चेदिति क्वचित् पाठः । व्यभिचारिष्विति । पूर्वं नपदं च । क्वचित्तच्छून्यः, न शब्दलोपश्च । तत्र प्रथमपक्षे नेत्यादिना हेतुकत्वादित्यन्तेन प्रथमपूर्वपक्षसमाधाने पुनः पूर्वपक्षिणा कारणाभावादित्यादिनाऽभावावगतिरिति चोदित्य-

चेन्न, व्याप्यत्वानुपलम्भस्य तन्निश्चायकत्वेन विपरीतापत्तेः। नन्वत्र योग्यानुपलम्भं विनाऽभावावगतिरिति चेत्। नैवम्। स्वार्थानुमाने यदेव स्फुरति तदेव दूषणमित्युपजीव्योपजीवकभावाविचारात्। परार्थानुमाने तु व्यभिचारिणि न व्याप्त्यसि-

---

न्यायलीलावतीकण्ठाभरणम्

उपलम्भस्य प्रतिबन्धस्तदभावो व्यभिचारधीलक्षणस्तस्मात् कार्यस्योपलम्भस्याभावोऽसिद्धिरिति चेदुपजीव्यं नूत्र, तन्न सम्भवति यतः प्रतिबन्धाभावस्यैव ग्रहः प्रतिबन्धानुपलम्भाधीनः, नहि योग्यानुपलम्भमन्तरेणाभावग्रहे कारणान्तरमस्तीति व्यभिचार एवोपजीवकत्वसिद्धिरिति विपरीतापत्तिरित्यर्थः।

परार्थानुमाने त्विति। पर्वतो धूमवान्वह्निमत्त्वादित्यत्र यद्वह्निमत्तद्धूमवदित्युदाहरणावयवेन वादिना व्याप्तौ दर्शितायां व्याप्यत्वासिद्धिस्तावदाहत्योद्भावयितुं न शक्यते, व्याप्तिनिश्चये चानौपाधिकत्वमप्याततो निश्चितमेवातो यद्यपि व्यभिचारशङ्कापि नोदेतुमर्हति, त-

न्यायलीलावतीप्रकाशः

थस्यैव व्याप्यत्वेनोपजीव्यत्वं कार्याभावस्य च प्रतिबन्धानुपलम्भस्यासिद्धिरूपस्योपजीव्यत्वमित्यर्थः।

व्याप्यत्वानुपलम्भस्येति। व्याप्यत्वानुपलम्भस्य प्रतिबन्धाभावनि-

न्यायलीलावतीप्रकाशविवृतिः

त्तेन पुनः शङ्का, कारणाभावादित्यादिना सिद्धान्तमनूद्य इति चेन्मन्यसे सिद्धान्तिन्, तन्न तत्र हेतुर्व्याप्यत्वानुपलम्भस्येत्यादि इति योजना। द्वितीयपक्षे व्यभिचारिण्वित्यादिस्थितिरिति चेदित्यन्तेनावान्तरशङ्का, नेत्यादि अभावावगतिरिति चेदित्यन्तेन तन्निराकरणे प्रथमशङ्काया उपसंहार इत्येवं योज्यम्। प्रतिबन्धाभावस्यैवेति। यद्यप्येवं प्रतिबन्धाभावोपजीवकत्वेऽपि न व्यभिचारोपजीवकत्वं तथाप्यव्यभिचारस्यैव प्रतिबन्धकत्वमित्यभिप्रेत्येदम्। व्याप्यत्वेनेति। यद्यपि प्रतिबन्धभ्रमस्थले व्यभिचारस्तथाप्युपलम्भपदस्य प्रमाणत्वमभिप्रेत्येदम्। ननु व्यभिचारशङ्काया अप्युत्पाददर्शनेऽसम्भव एवेत्यतो मूले तदुपाध्यभावेनेति। तथासत्यतिपीडाऽतिनिर्बन्धः ॑ ॑ इति तत्र-

द्धिः, दृष्टान्ते सर्वोपसंहारात्तदुपलम्भात्। उपाध्यभावेन व्यभिचाराशङ्काहानावतिपीडया पुनरनुत्तरव्यभिचारस्योद्भावनात्, तस्यैव तदुपजीवकत्वात्, (१)आयासगौरवाच्च। विरुद्धे तु विपरीत-

न्यायलीलावतीकण्ठाभरणम्

थापि स्फुटे व्यभिचारे नोपाधिरनुसर्तुमर्हतीति अतिनिःपीडनेन व्यभिचार एवोद्भाव्यः, स ह्यनुत्तरो यतस्तत्र नाप्युत्तरावकाशो नास्ति व्यभिचारस्य स्फुटत्वात्, तथा चासिद्धेर्व्यभिचार एवेत्यर्थः। ननु व्यभिचारश्चेत् दृष्टस्तदा तन्नान्तरीयकतया असिद्धिरपि ज्ञातैवातः सोद्भाव्यतामत आह आयासेति। कथमत्रासिद्धिरिति वादिप्रश्नान न्तरं व्यभिचारोपदर्शनमावश्यकम्, तथा च स एवोद्भाव्यो नान्त-

न्यायलीलावतीप्रकाशः

ग्राहकत्वेनोपलम्भाभाव एवोपजीव्य इत्यर्थः। सर्वोपसंहारादिति। यत्कृतकं तदनित्यमेवंरूपतया तदुपलम्भाद्व्याप्त्युपलम्भादित्यर्थः। नन्वेवं परार्थानुमानेऽसिद्धिः क्वापि न स्यात् उदाहरणेन सर्वोपसंहारेण व्याप्त्युपलम्भात्, उदाहरणाभावे च न्यूनतापत्तेः। किञ्च यथा सर्वोपसंहाराद्व्याप्तिः तथा व्यभिचारव्यतिरेकोऽपि, यदि च सर्वोपसंहारो न व्यतिरेकानियतस्तर्हि व्याप्तिनियतोऽपि नायमिति कथमसिद्धिव्यतिरेकोऽपि। अत्राहु। स्वयं यदेव स्फुरति तदेव परस्याप्युद्भाव्यते तथाच यत्रासिद्धिर्न स्फुरिता व्यभिचार एव स्फुरितस्तत्र परस्यापि व्यभिचार एवोद्भाव्यः द्वयोरपि व्यभिचारासिद्ध्योर्हेत्वाभासत्वव्यवस्थापनान्नो प्राप्तकालत्वम्। यत्र तु व्यभिचारासिद्धी युगपदेव स्फुरिते तत्रासिद्ध्युद्भावितायां कथमित्यपेक्षायां व्यभिचारस्यावश्यकत्वाद्व्यभिचारोद्भावने तु नासिद्धेरपेक्षेति लाघवाद्व्यभिचार एव वाच्य इत्याह आयासेति। तत्र यद्यपि व्यभिचारित्वं न साध्याभाववद्गामित्वं, संयोगादिसाध्यकद्रव्यत्वे भूर्नित्या गन्धव-

न्यायलीलावतीप्रकाशविवृतिः

दर्शनमसिद्धमेवेति भावः। तथा व्यभिचारव्यतिरेकोपीति। अव्यभिचारस्य व्याप्तिशरीरत्वमभिप्रेत्येदम्। ननु सिद्ध्युद्भावितायां कथमित्यपेक्षा-

(१) प्रयासेति पाठान्तरम्।

प्रतिबन्धे वाक्यार्थे परिस्फुरति अन्येषामनन्तरङ्गत्वमेवोपजीवक-
त्वम्। असिद्धौ त्वनुपलम्भस्यैवासत्त्वनिर्वाहकत्वेनोपजीव्यत्वम्।

---

न्यायलीलावतीकण्ठाभरणम

रीयकतयैवासिद्धेरित्यर्थः। अन्तरङ्गत्वमुद्भटत्वम्, विरोधो ह्युद्भट-
विरोधः, तथा च तमपहाय कथमप्युद्भावयेत्। यद्वा अन्तरङ्गत्वं
वादिवाक्यादेव प्रतीतत्वं व्यभिचारादीनां च स्वयमन्वेषणीयत्वेन
बहिरङ्गत्वं यत्र न स्फुटो व्यभिचार उपाधिः स्फुरति तत्रासिद्धिरेव
व्यभिचारस्योपजीव्येत्याह असिद्धाविति। असत्त्वनिर्वाहकत्वेन प्रति-

न्यायलीलावतीप्रकाशः

त्वादित्यनध्यवसिते चातिव्याप्तिः, नापि निश्चितसाध्यवत्तदन्यवृ-
त्तित्वं,साध्यवदन्यवृत्तित्वस्यैव दूषकत्वे शेषवैयर्थ्यात्। तथापि वि-
पक्षवृत्तित्वं तत्त्वम्, तन्मात्रस्य दूषकत्वात्, विरुद्धस्यापि तत्त्वाज्ञाने
विपक्षवृत्तिताज्ञानदशायां सव्यभिचारत्वमेव, अन्यथा तस्य हेत्वाभा
सान्तरतापत्तेः, उपाधेयसंकरेऽप्युपाध्यसांकर्यस्येष्टत्वात्, अनुपसं-
हार्यस्यापि वस्तुतस्तादृशत्वात्। विरुद्धस्याप्युपजीव्यत्वेनासिद्धभे-
दमाह विरुद्धे त्विति। विपरीतेति। साध्याभावव्याप्यत्व इत्यर्थः। अन्येषामिति।
असिद्धादीनामनन्तरङ्गत्वं विरुद्धप्रतीत्यनन्तरप्रतीयमानत्वं, साध्या-
भावव्याप्यत्वेन निश्चितस्य विरुद्धत्वात्। नन्विदमयुक्तं साध्याभाव-

न्यायलीलावतीप्रकाशविवृतिः

यां व्यभिचारावकाश इति प्रथमं व्यभिचारोद्भावनेऽप्राप्तकालत्वमि-
त्यत आह द्वयोरपीति। तथापि विपक्षवृत्तित्वमिति। साध्यवदन्यवृत्तित्व-
मित्यर्थः। अनुपसंहार्यस्यापीति। सर्वमनित्यं मेयत्वादित्यादेरित्यर्थः।
सद्धेतोश्च तादृशस्यासिद्धत्वेनैव सङ्ग्रहः। यद्यपि साध्यवदन्यत्वांश-
निश्चयीभूतसाध्यवदन्यगामित्वं प्रतिबन्धकतावच्छेदकमनुपसंहार्ये
नास्ति, तथापि प्रतिबन्धकतावच्छेदकमन्यदेव साध्यवत्तदन्यवृत्तित्वं
तु विभाजकम्। विरुद्धस्यापीत्यादिग्रन्थस्थदूषकतावच्छेदकमाभिप्रेत्य
साध्यव्यापकेति। न चेदमाकाशसाध्यकविरुद्धाव्यापकम्, तत्र साध्ये
हेतुसामानाधिकरण्यविरहस्य प्रतिबन्धकतावच्छेदकत्वात्, न चा-
धिक्यम्, सामानाधिकरण्यज्ञानविरोधित्वेनानुगमात्। अव्यभिचार-

एवंसति सोपाधित्वमेव दूषणं स्यादिति चेन्न । तस्य स्वतोऽदूषणत्वात्, ताद्रूप्यपरिच्छेदवत्, तेन व्याप्त्यसिद्ध्युपजीवनात् ।

---

न्यायलीलावतीकण्ठाभरणम्

बन्धाभावरूपव्यभिचारव्यापकत्वेन योग्यानुपलब्धेरभावनिश्चायकत्वादित्यर्थः । ननूपाधिस्फुरणे स एव दोषः स्यादित्याह एवमिति । तस्येति । साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यत्रानवगमितोपाधेः परमुखनिरीक्षकत्वं सिद्धसाधनवदित्यर्थः । निरपेक्षणीयमाह

न्यायलीलावतीप्रकाशः

सम्बन्धस्यैवासाधकतासाधकत्वात् नियमांशस्य व्यर्थत्वात्, अत एव साध्यवदन्यत्वव्याप्यत्वमित्यपास्तम्, व्याप्यत्वविवेचने व्यर्थत्वात् । मैवम् । साध्यव्यापकाभावप्रतियोगिनो विरुद्धत्वात् साध्याभावव्याप्यश्चेद्धेतुरवश्यं हेत्वभावव्याप्यं साध्याभावाभावरूपं च साध्यम्, ययोर्यथा व्याप्तिस्तदभावयोर्वैपरीत्येन व्याप्यव्यापकभावात् । न च साध्यहेत्वभावयोर्व्याप्तिग्रहे हेतोः साध्याभावव्याप्यत्वग्रहः कारणम्, तदग्रहेऽपि तयोः सहचारदर्शनेन व्याप्तिग्रहसम्भवात् । यद्वा वृत्तिमत्त्वे सति साध्यवदवृत्तित्वं विरुद्धत्वम्, नहि वृत्तिमत्त्वे साध्यवदवृत्तित्वज्ञानं विना साध्याभाववद्गामित्वज्ञानं भवतीति तस्योपजीव्यत्वम् । असत्त्वनिर्वाहकत्वेन–प्रतिबन्धासत्त्वनिर्वाहकत्वेनेत्यर्थः । अनुमितिव्यतिरेकानिर्वाहकत्वमित्यन्ये । ननु यद्युपजीव्यत्वादनुपलम्भस्य पृथक् दूषणत्वं तदा यत्रोपाध्युपजीवकं दूषणान्तरं तत्रोपाधिः पृथक् दूषणं स्यादित्याह एवंसतीति । नोपजीव्यमात्रं पृथक् दूषणं किन्तु स्वतो दूषकं सत्, न चोपाधिस्तथा, न ह्यन्यस्य साध्यव्यापकत्वसाधनाव्यापकत्वज्ञानमन्यस्य साध्यव्याप्यत्वे स्वतो दूषकम्, किन्तु व्याप्तिविघटनद्वारा, अतो न पृथगुपाधिर्दूषणमित्याह तस्येति । ताद्रूप्येति । सिद्ध-

न्यायलीलावतीप्रकाशविवृतिः

ज्ञानविरोधितयैव व्यभिचारोपाधीनामेवमेवान्यत्रापि यथासम्भवमनुगमश्चिन्त्यः । उपस्थित्यनियमेन व्यवस्थितविकल्पाभिप्रायेणाह यद्वेति । वृत्तिमत्त्व इत्यसंकीर्णस्थलकथनाय । प्रतिबन्धकतावच्छेदकं तु विशेष्यभागमात्रम् । अनुमितिव्यतिरेकेत्यादि प्रकृत्यर्थमात्रविवरणम् ।

व्याप्त्यनुलम्भस्य तु कारणाभावत्वेन स्वरूपदोषत्वात् । अत एव व्यभिचारसंदेहस्य विपक्षव्यावृत्त्यपरिच्छेदोपजीवित्वेन संदिग्धानैकान्तोऽपि न पृथक् दूषणम् । पक्षैकदेशत्वानिरनध्यवसि-

---

न्यायलीलावतीकण्ठाभरणम्

तेनेति । नन्वासिद्धिरपि कथं दोष इत्यत आह अनुपलम्भस्य त्विति । प्रतिबन्धानुपलम्भस्येत्यर्थः । अतएवेति । कारणविरहोपजीविकत्वादेवेति, विपक्षव्यावृत्तिज्ञानमनुमितिकारणं सन्दिग्धानैकान्तिकं च तद्विघटनद्वाराऽनुमितिप्रतिबन्धकमित्यर्थः । पक्षैकेति । सति सपक्षे सपक्षाद्या-

न्यायलीलावतीप्रकाशः

साधनं यथा पक्षताविघटनद्वारा दूषकं न स्वत इत्यर्थः । तेनोपाधिनेत्यर्थः । अतोऽसिद्धावन्तर्भाव इति भावः । कारणाभावत्वेनेति । अनुमितिकारणव्याप्तिज्ञानाभावत्वेनेत्यर्थः । नन्वेवं सन्दिग्धानैकान्तिकमपि व्यभिचारात् पृथक् दूषणं स्यात्, नहि तत्रानैकान्तिकमेव दूषणं विपक्षवृत्तित्वेनानिश्चितत्वादित्यत आह अतएवेति । अनुमितिकारणविपक्षव्यावृत्तिनिश्चयविरहोपजीवकत्वादसिद्ध एव तस्यान्तर्भाव इत्यर्थः । पक्षैकेति । सर्वसपक्षविपक्षव्यावृत्त इत्यर्थः । अनैकान्तिकस्य संशयफलकहेत्वाभासत्वादसाधारणधर्मस्यानध्यवसायज्ञानजनकत्वादिति भावः । ननु सपक्षत्वं न साध्यवन्मात्रत्वं विपक्षावृत्तेर्वृत्तिमतः साध्यवद्वृत्तित्वनियमात्, नापि पक्षान्यसाध्यवत्त्वं शब्दोऽनित्यः शब्दत्वादित्यत्र व्याप्तिग्रहदशायां सद्धेतावतिव्याप्तेः । मैवम् । सर्वनिश्चितसाध्यवद्विपक्षव्यावृत्तस्यासाधारणतयाऽनध्यवसितत्वात्, शब्दत्वाऽनित्यत्वव्याप्तिग्रहदशायां शब्दे साध्यनिश्चया-

न्यायलीलावतीप्रकाशविवृतिः

व्याप्तिज्ञानकारणाभावत्वभ्रमनिरासायाह अनुमितिकारणेति । तस्यान्तर्भाव इति । इदं च समाधिसौकर्यात् । वस्तुतः साध्यवदन्यत्वांशनिश्चयीभूतसाध्यवदन्यवृत्तित्वज्ञानं तत्राध्यविकलमेवेति ध्येयम् । व्यतिरेके हेतोरतिव्याप्तिभयेन व्याचष्टे सर्वसपक्षेति । व्यभिचारिणोऽभेदमाशङ्क्याह अनैकान्तिकस्येति । एतन्मते संशयानध्यवसाययोर्भेदादिति भावः । शब्दत्वानित्यत्वेति । व्यतिरेकव्याप्तिग्रहदशायां यद्यपि न सा-

तः । न चात्र प्रतिबन्धासिद्धिः, व्यभिचारिव्यतिरेकसाहचर्यप्र-
तीतिनियममादर्शयति तदनुद्भावनात् । न च व्यभिचार एव, सप-
क्षविपक्षयोरप्रमितेरेवानध्यवसायहेतुत्वेन शबलदूषणतया विल-

---

न्यायलीलावतीकण्ठाभरणम्

वृत्तो धर्म इत्यर्थः । ननु तत्रापि व्याप्यत्वासिद्धिरेव दोषो न त्वन-
ध्यवसित इत्यत आह नचेति । तत्रापि वादिनोदाहरणावयवेन व्य-
तिरेकव्याप्तिरुपदर्शितैवेति व्याप्यत्वासिद्ध्युद्भावनानवकाशादित्य-
र्थः । सपक्षविपक्षयोरिति सप्तम्यन्तम् । शबलदूषणत्वं-सपक्षविपक्षो-

न्यायलीलावतीप्रकाशः

व्याप्तिव्याप्तिः । तत्रापि विवक्षितविवेकेन सर्वसपक्षव्यावृत्तिरेव दो-
षो ननु विपक्षव्यावृत्तिरपि, विरुद्धं च तेनोपाधिनाऽनध्यवसितमेव,
अन्यथैतदवगमे विरुद्धत्वाज्ञाने हेत्वाभासान्तरतापत्तेः । ननु व्या-
प्त्यप्रमितेरस्यासिद्धावेवान्तर्भावः स्यादित्यत आह नचेति । व्यभिचारि-
वदिति । यथाऽनैकान्तिके सत्यप्यसिद्धिर्नोद्भावनार्हा, तथाऽनध्यवसि-
तेऽपि व्यतिरेकयोः सपक्षविपक्षव्यावृत्तत्वयोः पक्षे या साहचर्यप्र-
तीतिस्तन्नियममादर्शयति वादिनि तदनुद्भावनात् असिद्धेरनुद्भाव-
नाम, नहि यत्र सपक्षविपक्षव्यावृत्तिरुद्भाव्यते तत्रासिद्धिरुद्भावना-
र्हेत्यर्थः । सपक्षेति । सपक्षविपक्षवृत्तित्वज्ञाने सव्यभिचारत्वज्ञा

न्यायलीलावतीप्रकाशविवृतिः

ध्यवसानिश्चयो हेत्वधिकरणे, तथापि विरोधिव्याप्तिग्राहकप्रमाणा-
प्रतिबद्धव्याप्तिकत्वमेव तल्लक्षणम् । अत एव विरोधिव्याप्तिग्राहक-
शङ्कास्थलेऽप्यसाधारण्यम् । यदि चासाधारणव्यतिरेकव्याप्तिद्वयग्रह-
स्तदा विरोधिव्याप्तिद्वयग्रहविषयत्वं लक्षणम् । नचैवं सत्प्रतिपक्षा-
न्तर्भावादेतन्मतेऽसिद्धान्तर्भावः । तत्र पक्षधर्मताविषयत्वेनापि प्रति-
बन्धकत्वादत्र तु व्याप्तिमात्रविषयतया तथात्वात्, पक्षधर्मताया उ-
भयसाधारणत्वात्, तदुक्तं चिन्तामणौ 'अत्र त्वेक एवेति ततो भेद' इति ।
ननु विपक्षव्यावृत्तिरपीति । तस्या व्यतिरेकव्याप्तिग्राहकतयाऽनुमानत्वादिति
भावः । व्यतिरेकव्याप्तिमादर्शयतीत्यर्थेऽसङ्गतिस्तत्प्रदर्शनेऽपि तदु-
द्भावनाविरोधादत आह व्यतिरेकयोरिति । सपक्षव्यावृत्तत्वयोरिति स-

म्बितप्रतीतिकस्य व्यभिचारस्यानुद्भावनात् ॥ इति हेत्वाभासाः ॥

स्मृतिरपि मानान्तरमेव, अर्थनिश्चयहेतुत्वात् । अनुभवपारतन्त्र्यान्नैवमिति चेत् । न । उत्पत्तिपारतन्त्र्यस्य प्रमाणान्तरसाम्यात्, फलाभावेन ज्ञप्तिपारतन्त्र्याभावात् । इच्छावद्विषये

---

न्यायलीलावतीकण्ठाभरणम्

भयनिरूप्यत्वम् ।

मानान्तरं प्रमित्यन्तरमित्यर्थः । अर्थनिश्चयहेतुत्वात्-अर्थपरिच्छेदात्मकत्वात् । नैवमिति(१) । न मानान्तरमित्यर्थः । उत्पत्तीति । अनुमित्यादीनामपि लिङ्गपरामर्शादितन्त्रत्वात् । ननु स्मृतिः फले जनयितव्ये प्रमाणान्तरमपेक्षत इति नेयं मानान्तरमत आह फलाभावेनेति । ननु विषयलाभ एवास्याः पूर्वानुभवाधीन इत्येव पारतन्त्र्यमत आह इच्छावदिति । स्वभावत एव चेदियं सविषया न स्यात्तदा ज्ञानमेव न

न्यायलीलावतीप्रकाशः

नादित्यर्थः । ननु पक्षस्य साध्यतदभावान्यतरवत्त्वनियमेन तत्रोभयोरपि सम्भावनायां व्यभिचारशङ्कावतार एव तत्र दोषः स्यादित्यत आह अनध्यवसायेति । अनध्यवसायानन्तरं पश्चाद्व्यभिचारो गम्यत इति व्यभिचारस्याप्यनध्यवसितमेवोपजीव्यमिति तदेव स्वतो दूषणं तत्रोद्भाव्यं न तूपजीवको व्यभिचार इत्यर्थः । विलम्बप्रतीतिकत्वे हेतुः शबलेति । शबलदूषणत्वं सपक्षविपक्षोभयनिरूप्यत्वमित्यर्थः ।

मानान्तरमिति । प्रमित्यन्तरमित्यर्थः । ननु मानान्तरसापेक्षज्ञानजनकत्वान्न स्मृतिर्मानान्तरमित्यत आह फलाभावेनेति । ज्ञानजनकत्वाभावेनेत्यर्थः । नन्विच्छाप्रयत्नयोरिव स्मृतेर्विषयं प्रति नियमे स्वज-

न्यायलीलावतीप्रकाशविवृतिः

त्वमी । शबलेति । अनध्यवसायः पक्षमात्रनिरूप्यो व्यभिचारस्तु सपक्षविपक्षोभयनिरूप्य इति विलम्बितप्रतीतिक इत्यर्थः । एवं च मूले विलम्बितप्रतीतिकस्येत्यनन्तरं चकारोऽध्याहार्य इति भावः ।

तज्जन्यप्रमाविरहेण मानान्तरत्वमसम्भवतीति व्याचष्टे प्रमित्यन्तरमिति । यद्यप्येवं स्वार्थनिश्चयहेतुत्वादितिमूलासङ्गतिस्तथापि स्वा-

---

(१) अत्रमूले-नैवम् उत्पत्तीति-पाठो भिन्नाभिमतः पठनीयः ।

परापेक्षायां ज्ञानत्वव्याघातः । अनधिकपरिच्छेदस्य गृहीतानु-
भवसाधारण्यात् । कारणज्ञानप्रामाण्यापेक्षया यथार्थत्वस्यानु-
मितिसाधारण्यात् । स्वविषयज्ञानप्रामाण्यापेक्षत्वस्य शब्दसाधा-
रण्यात् । अधिकपरिच्छेदे च प्रमाणत्वात्, अन्यथा तद्व्यवस्था-
नुपपत्तेः । तत्तावच्छिन्नं हि स्मृतिरर्थमाकलयति, सा च यदि

---

न्यायलीलावतीकण्ठाभरणम्

स्यादित्यर्थः । ननु गृहीतमात्रगोचरत्वान्नेयं प्रतीतिरित्यत आह
अनधिकेति । एवंसति धारावगाहिधियामपि प्रमितित्वं न स्यादित्य-
र्थः । नन्वनुमितिः पूर्वानुभवस्य भिन्नविषयस्य प्रामाण्यमपेक्षते
स्मृतिस्तु स्वसमानविषयकस्यैव स्वजनकानुभवस्येति वैषम्यमत
आह स्वविषयेति । शाब्दज्ञानस्यापि समानविषयकस्यैव वक्तृज्ञान-
स्य प्रामाण्यमपेक्षते इति तदपि प्रमा न स्यादित्यर्थः । स्मृतेः प्रमा-
त्वे युक्त्यन्तरमाह अधिकेति । अधिकं तत्ताभागः, एतदेव स्फुटय-
ति-तत्तेति ।

न्यायलीलावतीप्रकाशः

नकानुभवापेक्षणान्न तथेत्यत आह इच्छादिवदिति । अनधिकेति । पूर्वानु-
भवविषयविषयकत्वेनाप्रमात्वे धारावाहिकज्ञानप्रामाण्यापेक्षणात्तथा-
ऽनुमितौ च भिन्नविषयकताद्दृशज्ञानापेक्षणान्न तथेत्यत आह स्व-
विषयेति । शब्देऽपि स्वप्रयोगहेतुसंसर्गज्ञानप्रामाण्यापेक्षणादित्यर्थः ।
स्मृतेर्मानान्तरत्वे युक्त्यन्तरमाह अधिकेति । अन्यथेति । यदि स्मृतिः
प्रमा न स्यात्तदा तत्तावच्छेदस्तत्र न भासेतेत्यर्थः । तदेव व्युत्पादये-
ति तत्तावच्छिन्नमिति । स्मृतेः पूर्वानुभवमात्रविषयविषयकत्वेऽनुभवा-

न्यायलीलावतीप्रकाशविवृतिः

र्थनिश्चयात्मकत्वादित्येव तदर्थ इति भावः । ज्ञानजनकत्वेति । यदि चानु-
व्यवसायजनकत्वेन तथात्वं तदा प्रामाणान्तरसाधारण्यमिति भावः ।
स्मृतेर्मानान्तरत्व इति । जनकीभूतमानविषयकसमानाधिकरणज्ञानप्रामा-
ण्याधीनसामान्यकत्वमप्रमितित्वव्यवहारप्रयोजकमिति पूर्वत्रारुच्ये-
ति शेषः । तत्तावच्छेदस्तत्रेति । यद्यप्यप्रमात्वेऽपि भानमविरुद्धमेव, तथा-
पि तत्तावच्छेदोऽनुभवे न भासत एव स्मृतिश्च त्वन्मतेऽप्रमैवेति स

पूर्वानुभवस्यापि गोचरः, तदा तत्रापि तदित्युल्लेखः स्यात् , न च क्वचिदिदमिति स्यात् । न चेत्, स्मृतिरेव तत्रानपेक्षेति मानम् ।

तत्ता च न ज्ञातता । ज्ञातोऽयं सोऽयमित्यनयोरविशिष्ट विषयतापत्तेः। नाप्यतिवृत्तानुभवविशिष्टता, तस्याः पूर्वानुभ(१)-वेनानुल्लेखात् । स्मृतिबलादेव तत्कल्पनेति चेत् । न । अननुभूत एव स्मृतिस्तत्तांश इति कल्पनापत्तेः । नापि पूर्वकालत्रि

न्यायलीलावतीकण्ठाभरणम्

ननु ज्ञाततैव तत्ता, सा च ज्ञातोऽयमित्यनुभवव्यवस्थितैवेत्यत आह तत्ता चेति । स्मृतिबलादिति । स्मृतौ तत्ताभानान्यथानुपपत्त्यैव पूर्वानुभवविशिष्टता तत्ता कल्पनीयेत्यर्थः । यद्वा पूर्वानुभवस्यापि स्वगोचरत्वं कल्पनीयमित्यर्थः । कल्पना चेत्तदेवमेव कल्पना स्यादित्याह अननुभूत इति । इत्यत्रापीति । स्मृतेरप्येवंप्रकारापत्तेरित्यर्थः । अ··

न्यायलीलावतीप्रकाशः

विषयतावविषयकत्वानुपपत्तिरित्यर्थः । तत्रापि पूर्वानुभवेपीत्यर्थः । नचेदिति । तत्ता पूर्वानुभवगोचर इत्यनुषङ्गः । तत्रेति । तत्तायां स्मृतिः पूर्वाऽनुभवानपेक्षेति तत्र प्रमैव स्यादित्यर्थः ।

ननु ज्ञाततैव तत्ता सा च पूर्वानुभवगोचर इति तत्र सापेक्षैव स्मृतिरित्यत आह तत्तेति ! तस्या इति । अतीतानुभववैशिष्ट्यानुभवाविषयत्वेन स्मृत्या तदुल्लेखानुपपत्तेरिति भावः । परेणानुभूयत इति ज्ञानेऽपि स इति प्रयोगाभावाच्च । नाप्येतज्जन्मातीतत्वानुभववैशिष्ट्यं, तदवगमेऽपि तत्तासंशयविपर्ययदर्शनात् । अत एवातीतानुभवविषयत्वमेव तत्, तच्चानुभवाविषयेऽपि यदा ज्ञानान्तरेणोल्लिख्यते तदा स घट इति स्मृतिर्नो चेत् प्रमृष्टतत्ता सा इत्यपास्तम् । सहप्रयोगानुपपत्तेश्चेति भावः । स्मृतिबलादेवेति । अनुभूतमात्रविषयत्वात् स्मृतेरनुभवस्य तत्ता विषय इत्यर्थः । अननुभूत एवेति । तत्तांशेऽननुभूतविषयैव स्मृतिरित्येव किन्न कल्प्यते इत्यर्थः । ननु पूर्वकाल-

न्यायलीलावतीप्रकाशविवृतिः

पारमार्थिक एव न स्यादिति भावः । ननु ज्ञाततैवेति । यद्यप्ययं घट

(१) पूर्वमनुल्लेखात्- इति भा० पु० पाठः ।

शिष्टता, पूर्वमासीदयमित्यत्रापि प्राप्तेः। घटमात्रावसायिनी स्मृतिरनुमिततत्तांश इत्यभिलाप इति चेत्। न। तं घटमहं स्मरामीत्यनुव्यवसायानुपपत्तेः। प्रमाव्यवहाराभावादप्रमात्वमिति चेत्। न। लौकिकानां प्रामाणिकानां च सत्यज्ञान एव प्रमाव्यवहारदर्शनात्। स्मृतिर्हि पूर्ववर्त्तमानकालावच्छिन्नमर्थमाकलयति, न च तदिदानीं तादृशमिति श्यामे रक्तप्रतीतिवदयथार्थेति चेत्। न। तस्य तत्कालावच्छिन्नकालतावभास-

---

न्यायलीलावतीकण्ठाभरणम्

नुमानोपनीतस्तत्ताभागो भासते स्मृताविति पूर्वानुभवविषयतैवास्या कांचित्ता स्यादित्याह घटमात्रेति। तं घटमिति। घटविशेषणत्वेन तत्तानुव्यवसीयते पूर्वानुभवस्तु अविद्यमानतया न घटे विशेषणमित्यर्थः। ननु स्मृतिर्यदि प्रमा स्यात्तदा ताद्रूप्येण व्यवह्रियेतेत्याह प्रमेति। सत्यज्ञान एवेति। सत्यज्ञानत्वमेव प्रमाव्यवहारे तन्त्रं तादृशी च स्मृतिरपीत्यर्थः। सत्यत्वमेव स्मृतौ नास्तीत्याह स्मृतिर्हीति। स घट इति तत्कालीनो घट इति स्मृतौ भासते, घटस्यैतत्कालीनतैव इदानीं तत्कालविशिष्टो घट इति स्मृतेर्न विषय इदानींकालस्य

न्यायलीलावतीप्रकाशः

वैशिष्ट्यं तत्ता, तच्च पूर्वानुभवगोचर एवेत्यत आह नापि पूर्वकालेति। प्राप्तेस्तत्तोल्लेखस्येति शेषः। अनागतगोचरस्मृतिप्रत्यभिज्ञयोस्तत्तोल्लेखात् अतीतसमयसम्बन्धावगमेऽपि सोयं नवेति संशयाच्च। एतेनातीतधर्मान्तरवैशिष्ट्यं तत्तेत्यपास्तम्। तं घटमिति। तत्ताविशिष्टघटगोचरस्मृतेरनुभवादित्यर्थः। सत्यज्ञान एवेति। स्मृतिरपि तथेति तत्रापि प्रमाव्यवहारोऽस्त्येवेत्यर्थः। स्मृतिर्हीति। वर्त्तमानकाले तत्तावच्छिन्नोऽर्थः स्मृतौ भासते, न च स्मृतिकाले सोऽर्थस्तथेति बाधितविषयतया स्मृतिरयथार्थेत्यर्थः। श्याम इति। आमश्यामतादशायां भाविपाकजरागे घटे यथा रक्तोऽयमिति धीरयथार्थेत्यर्थः। तस्येति।

न्यायलीलावतीप्रकाशविवृतिः

इति ज्ञाने ज्ञाततापि न विषयस्तथाप्येतदनन्तरं ज्ञाततागोचरज्ञाने स-

नात् । न च तच्च तत्कालावच्छिन्नम् , तदानभिसत्त्वापत्तेः । नापी-
दानीं तदवच्छेदमाकलयति, अनवभासात्तस्येदानींकालस्य पू-
र्वानुभवेन स्मरणायोगात् । मुनीनामव्यवहारादिति चेत् । न ।
वादिनं प्रति मुनित्वस्यैवासिद्धेरिति । तत्कथं द्वे एव प्रमाणे इति
चेत् । अत्रोच्यते । न ह्यत्र सत्यज्ञानत्वं सत्यानुभवत्वं वा प्रा-
माण्यं साध्यम् , यथाक्रमं सिद्धसाधनबाधयोः सत्त्वात् । नापि
प्रमाणशब्दवाच्यत्वम् , अनीश्वरेच्छाप्रयुक्तप्रमाणशब्दाभिधेय-
त्वे सिद्धसाधनात् । ईश्वरेच्छापरतन्त्रप्रमाणशब्दवाच्यत्वस्य तद-
भियुक्तपुरुषव्यवहारगम्यत्वात् । प्रमाणाभियुक्तानां चाक्षचरण-
कणभक्षादीनां स्मृतौ प्रमाणव्यवहाराभावात्, इन्द्रपाणिनिप्रभृति-

---

न्यायलीलावतीकण्ठाभरणम्

पूर्वानुभवागोचरत्वादित्याह तस्येति । स्मृतिविषयस्येत्यर्थः । कथमिति ।
स्मृतिकरणीभूतस्य तृतीयप्रमाणस्यावश्यं वाच्यत्वादित्यर्थः । निग-

न्यायलीलावतीप्रकाशः

तत्तावच्छेदस्तत्र भासते स च वस्तुगत्या घटे कदाचिदस्त्येवेति
तद्विषया स्मृतिर्यथार्थैव, इदानीमयं रक्त इति प्रतीतेराकार एव नेति
भावः । नापीति । इदानींकालं तत्कालत्वेन नाकलयति स्मृतिरिति
शेषः । अनवभासात्तस्येति । इदानींकालविशिष्टत्वेनाननुभूतस्येदानीं स्मृ-
त्ययोगादित्यर्थः । प्रमाणशब्दवाच्यत्वमाधुनिकसङ्केतविषयतया
ईश्वरसङ्केतविषयतया वा ? आद्ये अनीश्वरेति । अन्त्ये ईश्वरेच्छेति । त-

न्यायलीलावतीप्रकाशविवृतिः

स्त्येव तत्ता भासतेऽन्यथा तु प्रमुष्टतत्ताकैव स्मृतिरिति भावः । अ-
नुभवस्य तत्ता विषय इति तत्कल्पनमिति मूलस्य चानुभवे तत्तावि-
षयकत्वकल्पनमित्यर्थ इति भावः । आकार एव नेति । रक्तो घट इति प्र-
त्ययस्य न तथाकार इत्यर्थः । इदानींकालं तत्कालत्वेनेति । इदमुपलक्षणम् ,
तत्कालमिदानींकालत्वेन तत्कालस्येदानींकालावच्छिन्नत्वं चेत्यपि
मूलार्थो द्रष्टव्यः । इदानींकालेति । इदानींकालस्याननुभूतस्य स्मृत्ययो-

व्यवहारात् वाचकतानियमवत् पूर्वानुभवापेक्षतयैव वा विषय-प्रतिनियमात्, इच्छादिवत्। न चैवमज्ञानत्वापत्तिः, अर्थस्व-भावप्रत्यासत्तेरविरोधात्। न हि ज्ञानस्यार्थे(न) प्रत्यासत्त्यन्तरम-स्ति।। न चेच्छाया अपि ज्ञानत्वम्, इच्छात्वस्यानुभवसिद्ध-

---

न्यायलीलावतीकण्ठाभरणम्

दृष्टव्यमितरत्। स्मृतेरप्रमात्वे युक्त्यन्तरमाह पूर्वेति।। स्मृतिर्न प्रमितिर्विषयसम्बन्धे परतन्त्रत्वादिच्छावदित्यर्थः। तर्हीच्छावदेवा-स्यार्थज्ञानत्वमपि साध्यमित्यत आह अर्थेति। अर्थस्वभावप्रत्यासत्ति-शून्यत्वमत्रोपाधिरित्याह अर्थेति। नचेति। स्वभावप्रत्यासत्तेस्तत्रापि सत्त्वादित्यर्थः। यद्यपि तत्र ज्ञानं प्रत्यासत्तिः स्मृतौ चानुभवस्य चिरातीतत्वेन न प्रत्यासत्तित्वं तथापि विलक्षणमनुभवविशेषमाह इच्छात्वस्येति। इच्छात्वेनैव ज्ञानवैधर्म्यविषयप्रवणत्वं ज्ञानत्वं व्यभि-चार्यैवेत्यर्थः। यद्यन्याधीना विषयप्रवणता स्मृतेरिति स्मृतिर्ज्ञानं

न्यायलीलावतीप्रकाशः

दभियुक्ताः—अक्षचरणादयः। स्मृतेरप्रमात्वे युक्त्यन्तरमाह पूर्वानुभवे-ति। स्मृतेः पूर्वानुभवेन सहैकविषयत्वनियमादित्यर्थः। तथा च स्मृतित्वं न प्रमावृत्ति कारणीभूतज्ञानविषयविषयकमात्रवृत्तिजाति-त्वात् इच्छात्ववदिति भावः। नचैवमिति। पूर्वानुभवापेक्षविषयप्रति-नियमे सतीत्यर्थः। नन्विच्छाया अप्यर्थेन प्रत्यासत्त्यन्तराभावात् स्वभावप्रत्यासत्तिरस्तीति सापि ज्ञानं स्यादित्यत आह न चेच्छाया इति। इच्छायाः इच्छामीत्यबाधितानुभवान्न जानामीत्यतोऽर्थप्रत्यास-त्तिसत्त्वेऽपि न ज्ञानत्वमत इच्छायतान्यत्वे सत्यर्थप्रवणत्वस्य ज्ञान लक्षणत्वात् तच्च स्मृतावप्यस्तीत्यर्थः। ननु प्रमाणान्तराधीनविषय-

न्यायलीलावतीप्रकाशविवृतिः

गादित्यपि द्रष्टव्यम्। तदभियुक्ता इन्द्रपाणिन्यादय इति क्वचित्पाठः। स चातद्गुणसंविज्ञानबहुव्रीहिणा अक्षचरणादिपरस्तेनोत्तरमूलाविरोधः। वाचकतानियमवदिति मूले पदान्तरस्येति शेषः। नन्वेवमिच्छात्व-स्वीकारेऽपि न ज्ञानत्वव्यतिरेक इत्यत आह न जानामीति। एवं स-त्यर्थप्रवणत्वं ज्ञानलक्षणमतिप्रसक्तमेवेत्यत आह अत इच्छेति। एवं

त्वेन विषयप्रवणताया ज्ञानत्वव्यभिचारात् । न चैवमध्यक्षादौ, अध्यक्षस्येन्द्रियसन्निधानाद्विषयनियमात् । लिङ्गस्य स्वविषय-प्रतिबन्धेन वाक्यस्याकाङ्क्षायोग्यतादिना आभासस्यापि दोष-हेतुत्वादिति । तत्ता चातीतज्ञानवैशिष्ट्यमतीतसमयावच्छेदो वा, स चानुभवोत्तरकालमवभासत एव । नच तादित्युल्लेखः ।

---

न्यायलीलावतीकण्ठाभरणम्

न स्यात्, तदा विशिष्टज्ञानमात्रे ज्ञानत्वन्निवृत्तिः विशिष्टज्ञानानां सर्वेषामपि परापेक्षयैव सविषयत्वादित्याह नचैवमिति । परापेक्षामेवा-ह अध्यक्षस्येति । पूर्वं दोषं परिहरन्नाह—स चेति । स चेत्युभयस्यापि परामर्षः, तथाच यत्रानुभवोऽनुव्यवसीयते यत्र वा अतीतसमया वच्छेदो ज्ञानान्तरेण गृह्यते तत्रैव स्मृतौ तत्तोल्लेखः, यत्र तु तथा न, न तत्र अदुष्टतत्तांशा स्मृतिरित्यर्थः । नन्वेवं पूर्वानुभवविशिष्टो घटोऽ-नुभूतो ज्ञातो वा घट इत्यत्रापि तत्तोल्लेखः स्यादित्यत आह नच तदि-

न्यायलीलावतीप्रकाशः

प्रतिनियमे विशिष्टज्ञानान्तरेऽपि प्रमात्वं न स्यादित्यत आह नचैव-मिति । तत्तल्लक्षणे पूर्वानुपपत्तिं परिहरति स चेति । अनुभवानन्तरं ज्ञा-नान्तरेणातीतज्ञानाद्वैशिष्ट्यं यत्र भासते तत्रैव स्मृतौ तत्तोल्लेखो नान्यथा, तथाचानुभूततत्तागोचरैव स्मृतिरित्यर्थः । नन्वेवं द्वितीया-नुभवे तदित्युल्लेखः स्यादित्यत्र आह न च तदितीति । नन्वेवमतीतध-र्मवैशिष्ट्यानुमितौ तत्तोल्लेखापत्तिः, अतीतज्ञानवैशिष्ट्यं यदि तत्ता, तदा चाक्षुषि न स्यात् । अथ तत्तेदन्ते स्मृत्यनुभवभासिन्यौ अखण्ड-एवोपाधी कलसधर्मातिरेकिणौ, एवंचेदन्तासंस्कारेणेदन्तैव तत्तया स्मर्यते । न च तत्तायाः क्वचिदप्यनारोपे कथमारोप इति वाच्यम् । प्र-

न्यायलीलावतीप्रकाशविवृतिः

धर्मेऽज्ञानसमयवैशिष्ट्यरूपजात्यादिवृत्तितया जातित्वं न सम्भवती-त्यत आह उपाधीति । एवंचेदन्तेति । तत्तात्वस्य प्रत्यभिज्ञाने अनुभूतत्वात् पूर्वानुभूता इदन्तैव तत्तात्वेन स्मरणविषय इति कल्प्यते, तत्तात्वं च यद्यपि न जनकीभूतानुभवविषयस्तथापि दोषवशादेव भासते, दोष-श्च संस्कार एव उपनायकश्चापूर्वानुभवजन्यसंस्कार एवेति भावः ।

सर्वपर्यायावच्छेदस्य नियमेनानाकलनात्। अनुभूतदिवसादि-

---

न्यायलीलावतीप्रकाशः

त्यभिज्ञायां तत्तांशे यथार्थत्वात्, इदन्तानुल्लेख्यनुभवप्रभवस्मृतावपि धर्मान्तरमेव तत्तया भासते, अत एवायं घट इति न स्मरणमतः सर्वा स्मृतिरयथार्थेति। तन्न। स्मृतेः पूर्वमिदन्तोपस्थितिं विना तत्तारोपासंभवात्। उच्यते। अनुभवे कालो धर्मान्तरं वा प्रमाणत्वेन यो विषयः स एव स्मृतेः, स्मृत्यनुभवयोरेकविषयत्वेऽपि तत्र स्मृतौ तच्छब्दप्रयोगः संस्कारजज्ञानस्यैव तच्छब्दप्रयोगहेतुत्वात्। अत एव प्रत्यभिज्ञायां तच्छब्दप्रयोगः, प्रत्यक्षानुभवे च तत्रैवेदंशब्दप्रयोगः, न तु विषयकृतः स्मृत्यनुभवयोर्विशेषः, अत एवायं घट इत्यनुभवादयं घट इति न स्मृतिः, स घट इति स्मृतिकारणं, स घट इति नानुभवः। अन्ये तु अतीतधर्मवैशिष्ट्यं तत्तासजातीयो धर्मः कश्चित् ज्ञानं कश्चिदतीतः समय एव अतीतधर्मविशिष्टः, स इति सहप्रयोगश्च धर्मविशेषमादाय द्रष्टव्य इत्याहुः। सर्वपर्यायेति। न च प्रत्यभिज्ञानभिन्ना-

न्यायलीलावतीप्रकाशविवृतिः

नन्वेवं यत्र घट इत्येव स्मरणं तत्र कथं तत्ताविशिष्टस्मरणमित्यत आह इदन्तानुल्लेखीति। सर्वा स्मृतिरिति। प्रमुष्टतत्तांशा च स्मृतिरसिद्धैवेति भावः। स्मृतेरिति। आरोपविषयज्ञानस्यारोपहेतुत्वादिति भावः। संस्कारजज्ञानस्यैवेति। न च यन्मते प्रत्यभिज्ञा स्मृतिजन्यैव तन्मते प्रत्यभिज्ञायामव्यापकमिदम्, प्रयोजकत्वविवक्षायां तु रजतस्मृतिजन्यरजतभ्रमातिव्यापकमिति वाच्यम्। तत्रैतस्य सत्त्वेऽपि प्रमुष्टतत्ताकस्मरण इव दोषादेव तत्तानुल्लेखात्। केचित्तु यज्जातीयं संस्कारप्रयोज्यं तत्र तत्तोल्लेखः, भ्रमजातीयं तु न तथा अनुभूयमानारोपे व्यभिचारादिति वदन्ति। अयं घट इति इदंशब्दोल्लेखिनी न स्मृतिरित्यर्थः। स घट इति न तच्छब्दोल्लेख्यनुभव इत्यर्थः। क्वचिज्ज्ञानमिति। नच चाक्षुषत्वानुपपत्तिरुपनीतस्य तथात्वाविरोधात्, अनुमितौ च संस्काराजन्यत्वादेव न तदुल्लेखः पूर्वकल्पवदिति भावः। धर्मविशेषमादायेति। कश्चनातीतधर्मपदेन कश्चन तत्पदेन तत्रोच्यते इति भावः। इदन्तातत्तयोरभेदे प्रतिकूलतर्कमाह न च प्रत्यभिज्ञानभिन्नेति। प्रत्यभिज्ञानस्मृतिवृत्तितयेष्टापत्तिनिरासाय भिन्नान्तात्यनुभवत्वगर्भा।

रूपकालभेदो वा स्मृतिगोचरः । तस्य च वृत्ततामिदानीमन्यतोऽनुसंधाय तदिति तद्वाचकोल्लेखी व्यवहार इति । इति स्मृतिः ॥

आर्षं च ज्ञानं ऋषीणाम्, कन्यायाश्च यथा श्वो मे भ्राता आगन्तेति । न चैतदध्यक्षम्, कारणाभावात् । न च मनस्तथा । तस्य बहिरप्रवृत्तेः, अनुमानविलयाच्च । न चैतन्नयनस्पन्दादिलिङ्गकम्, तेषां व्यभिचारात् । न च धूमादिवदवान्तरजा-

न्यायलीलावतीकण्ठाभरणम्

ति । केचित्तु नन्वेवं द्वितीयानुभवे तत्तोल्लेखः स्यादित्यतोषमाहुः ।

चतुर्थीं विद्यामाह आर्षमिति । कारणाभावादिति । इन्द्रियसन्निकर्षाभावादित्यर्थः । अनुमानेति । अनुमितिरप्येवं मानसी स्यादित्यर्थः । ननु नयनस्पन्दमात्रस्य व्यभिचारेऽपि तद्विशेषो लिङ्गं भवेदित्यत आह नचेति । ननु यस्यां कोटौ भूयः सहचारस्तन्मात्रकोटिकः संशय एवायं

न्यायलीलावतीप्रकाशः

नुभवत्वं यदि तत्ताविषयकवृत्ति स्यात्तत्ताप्रयोगजनकवृत्ति स्यादिति वाच्यम् । संस्कारजन्यवृत्तित्व(१)स्योपाधित्वात् । तस्य चेति । अतीतदिवसाद्यवच्छेदस्येत्यर्थः । अन्यत इति । तत्तानुमितौ हि सत्यां या स्मृतिर्जायते तस्य तत्तानुव्यवसायो न सर्वत्रेत्यर्थः ।

कारणेति । इन्द्रियसन्निकर्षाद्यभावादित्यर्थः । तथा कारणमित्यर्थः । बहिरिति । निरपेक्षस्य बहिर्विषयकज्ञानाजनकत्वादित्यर्थः । अनुमानेति । अनुमितेरपि मानसाध्यक्षरूपतया तद्भिन्नत्वानुपपत्तेरित्यर्थः । अवान्तरेति । व्यभिचारिव्यावृत्तं नेत्रप्रस्पन्दादिवृत्तीत्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

नच प्रयोगजनकत्वं फलोपधानमेव वाच्यमन्यथेष्टापत्तिरिति शब्दप्रयोगाजनकस्मृतिविशेषमात्रधर्मे व्यभिचार इति वाच्यम् । शब्दप्रयोगजनकत्वेनापादकविशेषणात् । संस्कारजत्वस्येति । तथाच विषयसाम्यमप्रयोजकं कारणविशेषजन्यत्वस्य प्रयोजकत्वादिति भावः । अनुमिताविति । तत्र च संस्काराजन्यत्वादेव न तत्तोल्लेख इति भावः । तत्तानुव्यवसायः—तत्तोल्लेखः ।

(१) अत्र विवृतिकारमतेन संस्कारजत्वस्येति पाठो बोध्यः ।

तिभेदावलम्बनम्, तदप्रतिसन्धानेऽपि जायमानत्वात्। न चैत-रसंभावनात्मकम्, कोटिद्वयानुल्लेखात्। न च भूयःसहचरित-धर्मदर्शनजन्मैष न्यूनैककोटिः संशयः, आगमिष्यत्येवेति नि-श्चयाकारेण जायमानत्वात् अनुमानवत्, अन्यथा तस्याप्येवं-विधसंशयतापत्तेः। यथा वा स्वेच्छास्मृतपदार्थसार्थे भवति शालिवाहनो नृपतिरिदानीं शृङ्गारसरसीतीरे देव्या लीलावत्या सह ललितमधुरं सङ्गीतकमनुतिष्ठतीति ज्ञानम्। न चैष विपर्ययः, संवादात्। नन्विदमपरोक्षत्वेऽप्यक्षमन्यथानुमानमिति चेन्न। परोक्षत्वेऽपि लिङ्गानपेक्षत्वात्(१)। लिङ्गानपेक्षमपि अनुमानमि-न्द्रियानपेक्षपारमेश्वरप्रत्यक्षवदिति चेन्न। अपरोक्षत्वस्य प्रत्य

---

न्यायलीलावतीकण्ठाभरणम्

स्यादित्यत आह नच भूय इति। कालविप्रकर्षेणार्षमुदाहृत्य देशविप्र-कर्षेण उदाहरति यथावेति। नन्विदमिति। परोक्षत्वापरोक्षत्वाभ्यां प्रका-रासम्भवादित्यर्थः। अपरोक्षत्वस्येति। साक्षात्त्वमपरोक्षत्वं तदस्मदादीना-मिन्द्रियजन्यत्वव्यङ्ग्यमीश्वरज्ञाने च धर्मिग्राहकमानसिद्धमित्यर्थः।

न्यायलीलावतीप्रकाशः

न च भूय इति। भूयसा एककोटिरूपेण स्थाणुत्वादिना सहचरितो धर्मः ऊर्ध्वत्वादिस्तज्ज्ञानजन्यत्वेन न्यूनैककोटिक एवायं संशय इति ने-त्यर्थः। आर्षज्ञानोदाहरणान्तरमाह यथावेति। अन्यथा परोक्षत्व इत्य-र्थः। लिङ्गानपेक्षणादिति। अनुमितेश्च लिङ्गज्ञानजन्यत्वादित्यर्थः। अप-रोक्षत्वस्येति। अपरोक्षत्वं नेन्द्रियजन्यत्वं, येनेश्वरप्रत्यक्षाव्याप्तिरपि तु जातिविशेषः, स चेश्वरज्ञाने धर्मिग्राहकमानसिद्ध इत्यर्थः। ननु प-

न्यायलीलावतीप्रकाशविवृतिः

भूयसेति। स्थाणुत्वादिना भूयःसहचरितो यो धर्म ऊर्ध्वत्वादिस्त-ज्ज्ञानाद्यथोत्कटकोटिकः संशयस्तद्वदयमपि न्यूनैककोटिक इत्यर्थः।

---

(१) नपेक्षणादिति प्रकाशाभिमतः पाठः।

क्षत्वात् । नच(१) परोक्षत्वमनुमानत्वम्, शब्दादेरुच्छेदापत्तेः । अपरोक्षमेव चार्षज्ञानम्, न तु तत् प्रत्यक्षम्, अनिन्द्रियकरणकत्वात् । न चेश्वरज्ञानस्य प्रत्यक्षप्रमात्वविरोधः, प्रत्यक्षप्रमातुल्यतयाऽपरोक्षत्वेन तत्र-प्रत्यक्षव्यवहारात् । आर्षेऽपि तत एव

---

न्यायलीलावतीकण्ठाभरणम्

शब्दादेरिति । त्वन्मत इति शेषः । अपरोक्षत्वेऽपि न तत्प्रत्यक्षत्वमित्याह अपरोक्षमेवेति । प्रत्यक्षप्रमातुल्यता लिङ्गाद्यजन्यत्वं, तर्हि लिङ्गाद्यजन्यत्वेनार्षमपि प्रत्यक्षत्वेन व्यवह्रियतामित्यत आह आर्षेऽपीति ।

न्यायलीलावतीप्रकाशः

रोक्षत्वेनानुमानान्तर्भावोऽपि भवत्वित्यत आह नच परोक्षत्वमिति । शब्दादेरिति । त्वन्मते इति शेषः । अतद्गुणसंविज्ञानबहुव्रीहिणा स्मृत्यादिर्विवक्षित इत्यन्ये । परोक्षत्वापरोक्षत्वे विहाय तृतीयकोटेरभावादार्षं ज्ञानं क्वान्तर्भवतीत्यपेक्षायामाह अपरोक्षमेवेति । अपरोक्षत्वं जातिः, सा चार्षप्रत्यक्षे वर्त्तत इत्यर्थः । तर्हि प्रत्यक्षमेव तदस्त्वित्यत आह नत्विति । प्रत्यक्षत्वव्यञ्जकेन्द्रियकरणकत्वाभावादित्यर्थः । प्रत्यक्षप्रमातुल्यतयेत्यभ्युपगमवादः । वस्तुतस्तु तदपि प्रत्यक्षम् । प्रत्यक्षत्वं हि जातिः काचिच्चक्षुःकरणकत्वादिव्यंग्या, क्वचिद्धर्मिग्राहकमानासिद्धा अननुगतस्य साक्षादेरिव व्यञ्जकत्वाविरोधात्, प्रत्युताऽनुगतस्य व्यञ्जकत्वे जातिरेव न सिध्येत् तत एव तदर्थसिद्धेः । आर्षस्योदाहरणं यथा पाणौ पञ्चवराटकान् पिधाय कश्चित्कंचित्पृच्छति कति वराटका इति । पृष्टश्चाजाकृपाणीयन्यायेन ब्रवीति पञ्चेति । तस्य यथार्थत्वेऽपि प्रत्यक्षादावनन्तर्भावात् । एवं सति द्वे एव माने इति वैशेषि-

न्यायलीलावतीप्रकाशविवृतिः

अतद्गुणेत्यादौ स्मृत्यादीत्यादिपदेनानुमानाभाससङ्ग्रहः, प्रमाणापरत्वात्सुमानपदस्येति ध्येयम् । क्वान्तर्भवतीति । यद्यपि परोक्षेऽपीत्यादिना परोक्षाभावदर्शनात्सेयमाशङ्का, तथापि मतान्तरमाहेत्यत्र तात्पर्यमत एव वाशब्दोऽपि सङ्गच्छते । वस्तुतस्तदपीति । नचैवमीश्वरज्ञानवदार्षेऽपि प्रत्यक्षत्वं जातिरस्त्विति वाच्यम् । इन्द्रियकरणकत्वस्य धर्मि-

---

(१) ननु इति प्रा० पु० पाठः ।

प्रत्यक्षव्यवहारोपपत्ति(१)रिति चेत्। न,सतो ह्युपचारस्य निमित्त-कल्पनम्, नतूपचारनिमित्ते सति सर्वत्रोपचारप्रवृत्तिः। आर्षस्य प्रमाणान्तरत्वे प्रत्यक्षानुमाने एव प्रमाणमिति त्ववधारणं लौकिकप्रमाणापेक्षयेति सर्वं(२) सुस्थम्। इत्यार्षम्॥ इति बुद्धिः॥

ननु गुरुत्वं न (३)तावत्प्रत्यक्षम्, ऊर्ध्वदेशकरस्पर्शना-

---

न्यायलीलावतीकण्ठाभरणम्

ईश्वरज्ञाने प्रत्यक्षत्वेनोपचारोऽस्ति तत्र च लिङ्गाद्यजन्यत्वं निमित्तं कल्पयितुमुचितम्, आर्षे तूपचार एव नास्तीत्यर्थः। एवंसति वि-भागं समर्थयति आर्षस्येति। लौकिकप्रमाणापेक्षयेत्यर्थ इति। इदमुत्प्रेक्षा-सहकृतमनोजन्ययोगजधर्मानुगृहीतमनोजन्ययोगिज्ञानवदलौकिकज्ञानमित्यर्थः। एवं मुद्रिते पाणौ काकतालीयसंवादिपञ्चवराटिकादिज्ञानमार्षं वेदितव्यम्।

प्रमाणाभावाद् गुरुत्वमेव नास्तीत्याह न भवेदिति। प्रत्यक्षं स्पार्शनं

न्यायलीलावतीप्रकाशः

कस्मृतिमुपपादयति आर्षस्येति। लौकिकेति। यत्प्रमाणं विषयसम्बन्धं सत् प्रमाजनकं तल्लौकिकम्, सम्बन्धश्च क्वचिच्छोढेन्द्रियप्रत्यासत्तिः, क्वचिच्च व्याप्त्यादिः, आर्षन्तु विषयाप्रत्यासन्नमनोजन्यमित्यलौकिकमित्यर्थः।

न प्रत्यक्षमिति। न स्पार्शनप्रत्यक्षमित्यर्थः। इतरेषामसम्भावितत्वा-

न्यायलीलावतीप्रकाशविवृतिः

ग्राहकस्य वा तद्ग्राहकस्याभावात्। बोढेति। इदमुपलक्षणं, सामान्य-प्रत्यासत्तिरपि द्रष्टव्या। न च सामान्यप्रत्यासत्त्या लौकिकत्वस्वीकारेऽपसिद्धान्तः, उक्तपरिभाषया तथात्वाविरोधात्। अत एवानुमानस्यापि तथात्वमविरुद्धम्, ज्ञानं तु प्रत्यासत्तिरेतन्मते नास्त्येव, यथावा स्वेच्छास्मृतेत्यादिना तत्स्थाने आर्षप्रमाणाभ्युपगमादिति मन्तव्यम्। इदं च सर्वं योगजधर्मज्ञानयोः प्रत्यासत्तित्वानभ्युपगमे. वस्तुतस्ते अपि प्रत्यासत्ती एव। पाणौ पञ्च वराटकानित्यादिस्थलेऽपि तथैवेति मन्तव्यम्। इति बुद्धिः॥

---

(१) रापत्तिरिति मु० पु० पाठः। (२) पेक्षयेत्यर्थ इति कंठाभिमतः पाठः।

(३) न भवेद् प्रत्यक्षमिति शंकरमिश्रधृतः पाठोऽत्र बोध्यः।

ग्रहात् । अधोदेश(१)स्पर्शात्तद्ग्रहणमिति चेन्न । अवनति प्रत्ययहेतूनां तृणादीनां अधःस्पर्शेऽपि गुरुत्वाग्रहात्, स्पर्शव्यतिरिक्तस्य च स्पर्शनेन्द्रियप्रत्यक्षगुणस्य चाक्षुषतानियमोपलब्धेः, स्पर्शनेन्द्रियग्राह्यस्य चोर्ध्वानूर्ध्वस्पर्शप्रत्यक्षतानियमोपलब्धेः । अस्तु तर्हि पतनानुमेयमिति चेन्न । अदृष्टत(२)त्क्षेत्रज्ञसंयोगादेव पतनोपपत्तेः । अदृष्टहेतुकत्वे पतननियमो न स्यादिति चेत् । न । दहनोर्ध्वज्वलनवदुपपत्तेः । अन्यथा तत्राप्युद्गमनहेतोर्लघुत्वस्य कल्पनापत्तेः । अदृष्टहेतुकत्वे ऊर्ध्वज्वलनवद्यावदाश्रयं पतनमनुवर्तेतेति चेन्न । अदृष्टहेतुपरमाणुकर्मणां यावदा

---

न्यायलीलावतीकण्ठाभरणम्

वाच्यं तच्चोर्ध्वावच्छेदेन नास्ति नास्त्येवेत्यर्थः । अधोदेशादिति । तथैवानुभवादिति भावः । अवनति प्रत्ययहेतूनामिति तृणादिगुरुत्वेऽनुमानमपि नास्तीति द्योतनाय । किञ्च यदि गुरुत्वं स्पर्शान्यत्वे सति स्पार्शनप्रत्यक्षं स्यात् गुणजातीयं स्यात् चाक्षुषप्रत्यक्षं स्यादित्याह—स्पर्शव्यतिरिक्तेति । तथाच त्वङ्मात्रगृहीतनष्टे परिमाणादौ व्यभिचारः । पतन नियम इति । अधःसंयोगजननियम इत्यर्थः । अदृष्टहेतुकत्व इति । अदृष्टहेतुक्रियात्व इत्यर्थः । अत्र व्यभिचारमाह अदृष्टेति ।

न्यायलीलावतीप्रकाशः

त् । स्पर्शनेन्द्रियप्रत्यक्षगुणस्येति । स्पर्शनेन्द्रियप्रत्यक्षगुणजातीयस्येत्यर्थः । तेन स्पर्शनेन्द्रियमात्रगृहीते पटपरिमाणे न व्यभिचारः । स्पर्शनेन्द्रियेति । संख्यादौ तथा सहचारादित्यर्थः । ननु पतनासमवायिकारणत्वेन गुरुत्वमनुमेयम् अन्यस्य तथात्वासम्भवादित्याह अस्त्विति । अदृष्टतदिति । दहनादिक्रियायां तत्कल्पनादित्यर्थः । पतननियम इति । भूम्यादाविवान्यत्रापि पतनं स्यात् असमवायिकारणसमवधानाविशेषादित्यर्थः । अन्यथेति । यद्यदृष्टवदात्मसंयोगस्य साधारण्येनान्यद-

न्यायलीलावतीप्रकाशविवृतिः

गुणजातीयस्येति । यद्यप्येवमपि घटपरिमाणे व्यभिचार एव, तथापि

---

(१) अधोदेशाद्ग्रहणमिति शंकर० पाठः । (२) अदृष्टवदिति मु० पु० पाठः ।

प्रत्यक्षत्वात् ।

नन्वदृष्टवदात्मसंयोगस्य पतनहेतुत्वे गुरुत्वतारतम्याभावात् पतने चिरक्षिप्रतारतम्यविरोधात् । न चातिरिक्तक्षित्यादिप्रवेशात्तदिति वाच्यम् । तेजःप्रवेशेऽपि प्रसङ्गात् । तेजो न गुर्विति चेत् । तुल्यम् , क्षित्यादौ गुरुत्वास्वीकारात् । पतनानुकूलवेगतारतम्येनैव पतनतारतम्यसन्तानस्य चिरक्षिप्रतोपपत्तेः । तथाभूतवेगजनकपतनोत्पत्तौ तर्हि किं कारणम् ? अदृष्टवदात्मसंयोगो विशिष्टवेगोत्पादकपवनचलनकर्मवत् । (१)भूगतकर्मविशेषोत्पत्तिरदृष्टेतरकारणविशेषजन्या शरीरादिषु दृष्टेति चेन्न ।

न्यायलीलावतीकण्ठाभरणम्

ननु गुरुत्वतारतम्याधीनं मृत्पाषाणादौ पतनतारतम्यं तदभावे न स्यादित्याह नन्विति । नन्वदृष्टवदात्मसंयोगाविशेषेऽपि यत्र द्रव्यान्तरानुप्रवेशस्तत्राधिकं पतनमित्याह न चेति । तुल्यतामेव दर्शयन्ति क्षित्यादाविति । तेजोवत् क्षितावपि न गुरुत्वमित्यर्थः। आद्यमेव पतनं कथं स्यादित्याह तथाभूतेति । अदृष्टवदिति । अदृष्टवदात्मसंयोगादाद्यं पतनं तज्जनितवेगाच्च उत्तरोत्तरमित्यर्थः । विशिष्टवेगेति । पतनतारतम्यप्रयोजकत्वमेव वेगे वैशिष्ट्यम । नन्वधःसंयोगफलिका तालफलादिक्रिया अदृष्टवदात्मसंयोगभिन्नासमवायिकारणजन्या पार्थिवावयविक्रियात्वात् शरीरक्रियावदिति गुरुत्वसिद्धिं शंकते भूगतेति । विशेषपदं दृष्टान्तीकृतशरीरक्रियाभेदकं परमाणुक्रियाभेदकं वा । द्वितीयविशेषपदं समवा-

न्यायलीलावतीप्रकाशः

समवायिकारणं कल्प्यमित्यर्थः ।

वेगतारतम्येनैवेति । तस्य कारणविशेषप्रयोज्यत्वादित्यर्थः । भूगतेति । भूगतवेगजनकपतनोत्पत्तिरित्यर्थः । कारणेति । स एव गुरुत्व-

न्यायलीलावतीप्रकाशविवृतिः

स्पर्शव्यतिरिक्तस्पार्शनप्रत्यक्षवृत्तिजातेश्चाक्षुषप्रत्यक्षवृत्तित्वमिति नियम इति तात्पर्यम् । मूलस्थविशेषपदार्थव्याख्यानं वेगजनकपतनेति ।

(१) अथ भूगतेति मु० पु० पाठः ।

पवनगतवेगार्पककर्मविशेषोत्पत्तावप्यदृष्टेतरकारणापेक्षैव दृष्टा पुरुषप्रेरितप्राणादिकर्मवत् । ततः पुरुषप्रयत्नानपेक्षपवनादिकर्मोत्पत्तावपि गुरुत्ववल्लघुत्वमतीन्द्रियं कल्पनीयम् । रस एव गुरुत्वमस्त्विति चेत् । न । एवंसति रसनया माधुर्यानुभववद्गुरुत्वानुभवप्रसगात् । रसस्यावनतिहेतुत्वात्(१) गुरुत्वस्वभावत्वमिति चेत् । न । रसो न पतनासमवायिकारणं बहिरिन्द्रियव्यवस्थाहेतुत्वात् रूपवत् , अन्यथा वेगप्रकर्षोद्गतितारतम्यवन्माधुर्यातिरेक-

---

न्यायलीलावतीकण्ठाभरणम्

यिकारणमेवकम् , अन्यथा तेनैवान्यथासिद्धेः । तर्हि प्राणक्रियादृष्टान्तेन बहिःपतनक्रियां प्रत्यसमवायिकारणान्तरकल्पनापत्तिरित्याह पवनेति । नन्वनुपलम्भबाधितमेध पतनक्रियायां कारणान्तरमत आह तत इति । ननु भूजलयोरेव पतनमनुभूयते तत्र चरम एव तदसमवायिकारणं स्यादित्याह रस एवेति । गुरुत्वमिति । गुरुत्वव्यपदेश्य इत्यर्थः । रसगुरुत्वयोरभेदे दोषमाह एवंसतीति । नन्वभेदश्चेत्तदा नेदमनिष्टमिति चेत्, गुरुरियं शर्करेत्यनुभवो रसनायां स्यादित्यर्थात् । ननु रसमेव गुरुत्वं न ब्रूमः, किन्तर्हि ? गुरुत्वकार्ये रस एवाभिषिच्यतामिति ब्रूम, इत्यत आह रसस्येति । न चेदमप्रयोजकमित्याह अन्यथेति । अदृष्टहेतुत्वात् न जले पतनं पङ्कादौ पतनमिति कथं वैषम्यमित्यत्र

न्यायलीलावतीप्रकाशः

मिति भावः । पवनगतवेगेति । व्याप्तिग्राहकमानाभावश्च तुल्य एवेति भावः । रस एवेति । गुरुत्वस्यापि रसवन्मात्रवृत्तित्वादित्यर्थः । एवंसतीति । रसभिन्नगुरुत्वाभावादित्यर्थः। ननु रसस्य पतनहेतुत्वं गुरुत्वस्वभावत्वम् ,तच्च पतने गृह्यमाण एव सुग्रहम् , पतनं च न रसनेन्द्रियग्राह्यमिति रसस्य रसनेन्द्रियग्राह्यत्वेऽपि तस्य पतनहेतुत्वं न गृह्यत इति गुरुत्वं न रसनग्राह्यमित्याह रसस्येति । अन्यथेति । कारणप्रकर्षा-

न्यायलीलावतीप्रकाशविवृतिः

वेगजन्यकर्मणि नोदनादिजन्यकर्मणि चांशतः सिद्धसाधनवारणाय

---

(१) हेतुत्वमिति - मु० पु० पाठः ।

र्पादूद्राक्षादिचूर्णेषु पतनप्रकर्षप्रसङ्गात् । गुरुत्वाविशेषेऽपि पाषाणालाबुप्रभृतिषु मज्जनोन्मज्जननियमवददृष्टहेतुकतासाम्येऽपि पतनोत्पतननियमो भविष्यतीति चेत् । न । जलाधोगमनं हिमज्जनम् । जलेन च धारणं पतनप्रतिबन्धा(१)दुन्मज्जनम् । एतस्य जलसंयोगस्य कस्यचिदेव पतनप्रतिबन्धे हेतुत्वात्(२) दृष्टहेतुकमेव मज्जनमुन्मज्जनं चेति चेत् । अत्रोच्यते । विवादाध्यासितं पतनं स्वसमवायिकारणमात्रसमवेतासमवायिकारणजन्यं पतनत्वात् ,

---

न्यायलीलावतीकण्ठाभरणम्

केषांचित् समाधानमाशंक्य निराकरोति गुरुत्वेति । मज्जनोन्मज्जनेऽपि प्रति न गुरुत्वं प्रयोजकं किन्तु जलेन द्रव्यविशेषस्य संयोग एव प्रयोजक इत्याह—जलाधोगमनमिति । विवादाध्यासितमिति । आद्यं पतनमित्यर्थः । द्वितीयादीनां वेगादपि सम्भवादिति भावः । अदृष्टवदात्मसंयोगव्युदासाय मात्रपदम् । पतनमधःसंयोगफलिका क्रि-

न्यायलीलावतीप्रकाशः

धीनत्वात्कार्यप्रकर्षस्येत्यर्थः। पुनरदृष्टविशेषेणान्यथोपपत्तिमाह गुरुत्वाविशेषेपीति । दृष्टान्तमात्रं परेण साधकत्वेनोपन्यस्तमिति तदेव दूषयति जलाधोगमनमिति । दृष्टहेतुकमेवेति । तथाच तद्दृष्टान्तेन न पतनोत्पतनव्यवस्थेत्यर्थः । विवादाध्यासितमिति । आद्यं पतनमित्यर्थः । तेन द्वितीयपतनस्यापि पक्षत्वे संस्कारेण नांशतः सिद्धसाधनम् । स्वसमवायीति । स्वसमानाधिकरणैकवृत्तिगुणासमवायिकारणकमित्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

विशेषणद्वयम् । पुनरदृष्टविशेषेणेत्यत्र पुनश्शब्दः पूर्वव्यवच्छेदवचनः, एकदेशीति शेषः । तदेव दूषयतीति । महापूर्वपक्षीति शेषः । न तु दार्ष्टान्तिकमित्येवकारार्थः । अयं चार्थः मूले नियमो भविष्यतीत्यनन्तरं केचिदितिपाठपक्षे सुव्यक्तः, एवं चेदितिपाठपक्षे तूह्यः । कारणपदमाशङ्क्य व्याचष्टे स्वसमानाधिकरणेति । एकवृत्तिपदोपयोगमाह

(१) बन्धे उन्मज्जनमिति प्रा० पु० पाठः । (२) बन्धसामर्थ्याद प्रा० पु० पाठः ।

वेगार्जितशरपतनवत् । न च तेजोऽधोगमनेन व्यभिचारः, तस्य कारणगतवेगपूर्वकतेजोगतवेगजन्यत्वात्(१)। न च तेजःपरमाणोरधोगमनेन व्यभिचारः, तस्यापि बीजाङ्कुरवदनादिकर्मजवेगजनितत्वात् । रसवद्द्रव्याधोगमनं(२) वा पतनम् । यदि वा गुरुत्वस्य क्वचिददृष्टापेक्षत्वगिन्द्रियव्यञ्जनीयत्वेनान्यत्रानुमानप्र-

न्यायलीलावतीकण्ठाभरणम्

या इति विवक्षया व्यभिचारं शंकते नचेति । तत्रापि सत्त्वान्न व्यभिचार इत्याह तस्येति । नचेति । कारणवेगाभावादिति भावः । परमाणोरपि कर्म्मणा वेगो वेगात् पुनः कर्म्मेति साध्यसत्त्वान्न व्यभिचार इत्याह तस्यापीति । रसवद्द्रव्यस्येति । तथाच तेजसि हेत्वभावादेव न व्यभिचार इति भावः । क्वचिदिति । स्थूलावयविनीत्यर्थः । अन्यत्र पर-

न्यायलीलावतीप्रकाशः

तेन नादृष्टवदात्मसंयोगेन सिद्धसाधनम् । वेगार्जितेति । ननु पतनं यद्यधःसंयोगफलकं कर्म, तदा दृष्टान्तोऽपि गुरुत्वजन्य एवेति तदसिद्धिः, कर्ममात्रं चेत्तदा हस्तक्षिप्तलोष्ठादि(३)कर्मणा व्यभिचारः तद्वेगस्य तिर्यग्गमनप्रयोजकतया तज्जनकत्वादिति न वाच्यम् । अभिघातरूपसहकारिवशात्तद्वेगस्याप्यधःक्रियाजनकत्वात् । रसवद्द्रव्येति । तथाच तेजसि पतनमेव नास्तीति न व्यभिचार इत्यर्थः । अत्र मूर्त्तमात्रसंयोगाजन्यस्य पतनस्य विवक्षितत्वान्न पतत्पृथिव्यादिसंयोगजन्याधोगमनवत्करादिना व्यभिचारः । अनुमेयं गुरुत्वं प्रतिपाद्य प्रत्यक्षं तदिति व्युत्पादयति यदि वेति । क्वचिदिति । पृष्ठारोपि-

न्यायलीलावतीप्रकाशविवृतिः

तेनेति । न तु विवक्षितार्थेनेत्यर्थो यथाश्रुतेप्येतद्दोषाभावादिति ।

ननु पतनमिति । पतनत्वादित्यत्रेति शेषः। तदा दृष्टान्तोपीति । तादृशकर्मण एव दृष्टान्तीकरणादन्यथा साधनवैकल्यापत्तेरिति भावः। लोष्टादिना लोष्ठादिकर्मणा, तत्र प्रयत्नवद्धस्तुसंयोगस्यासमवायिकारणतया पक्षसमत्वाभावादिति भावः॥ दृष्टान्तस्येति(१)। उभयथापि साध्यतावच्छे-

(१) वेगपूर्वकत्वात् इति प्रा० पु० पाठः । (२) द्रव्यसमवेताधोगमनमिति मु० पु० पाठः ।
(३) अत्र विवृतिग्रन्थे-लोष्ठादिना-इत्येव पाठो बोध्यः ।

वृत्तेः। न चैवं गुरुत्वस्यातीन्द्रियत्वव्याघातः, अतीन्द्रियेष्वपि परमाण्वादिवदात्मविशेषगुणापेक्षित्वेन इन्द्रियप्रवृत्तिदर्शनात्। न चेदेवं, पृष्ठाद्यारोपितपदार्थस्य गुरुत्वानुपलम्भप्रसङ्गः, पतनाभावेनानुमानाभावात्। न चेन्द्रियसंनिकर्षव्यङ्ग्यं गुरुत्वम्, ऊर्ध्वस्पर्शेनानुपलम्भात्। न चाधःस्पर्शेन वेद्यत्वं, तृणादिस्पर्शे गुरुत्वस्यानुपलब्धेः। न चोद्भूतत्वे सति इन्द्रियसंनिकर्षवेद्यम्, गुरुत्वस्य बहिरिन्द्रियव्यवस्थां प्रत्यहेतुत्वेन संख्यादिवदुद्भूतत्वा-

---

न्यायलीलावतीकण्ठाभरणम्

माणुद्व्यणुकादौ तर्हि कथं गुरुत्वस्यातीन्द्रियत्वं सूत्रकृदाहेत्यत आह नचेति। अदृष्टसापेक्षत्वागिन्द्रियवेद्यत्वान्न व्याघात इत्यर्थः। अन्यथाऽनुभवविरोध इत्याह नचेदेवमिति। ननु तत्राप्यानुमानिकी तत्प्रतीतिः स्यादित्यत आह पतनेति। नन्वदृष्टनिरपेक्षेणैव त्वगिन्द्रियेण तर्हि गृह्यतामत आह नचेति। तर्हि अर्द्धावच्छेदनाप्युपलभ्येतेत्यत

न्यायलीलावतीप्रकाशः

तपाषाणादावित्यर्थः। शास्त्रविरोधं परिहरति नचैवमिति। अतीन्द्रियेष्विति। यथा ज्ञानलक्षणप्रत्यासत्त्या परमाणुः प्रत्यक्षः तद्वददृष्टसहकृतेन्द्रियप्रत्यक्षं गुरुत्वमपीत्यर्थः। नन्वदृष्टानपेक्षेन्द्रियं संयुक्तसमवायमात्रप्रत्यासत्त्या गुरुत्वग्राहकमस्त्वित्यत आह न चेन्द्रियेति। तृणादिस्पर्श इति। तृणादीनामधःस्पर्शे सत्यपि गुरुत्वानुपलब्धेरित्यर्थः। नचेति। तृणादिगुरुत्वं चानुद्भूतमिति शेषः। गुरुत्वस्येति। अन्यथा महत्त्व एवोद्भूतत्वकल्पनायामाकाशादिमहत्त्वे तदभावात्तदप्रत्यक्षोपपत्तौ

न्यायलीलावतीप्रकाशविवृतिः

दकावच्छिन्नसाध्यवत्त्वादित्यर्थः। तथापीत्यस्याधःसंयोगजनककर्मत्वस्य हेतुत्वेपीत्यर्थो, न वाच्यमित्यग्रेतनेन च सम्बन्धः। करादिना-कादिनिष्ठाधोगमनेन। अन्यथा महत्त्व एवेति। यद्यप्यप्रत्यक्षे द्रव्ये महत्त्वानुद्भवेऽपि स्पर्शादेः प्रत्यक्षतया तत्रोद्भूतत्वमावश्यकम्, तथापि रूपाद्युद्भवादेव प्रत्यक्षोपपत्तौ न गुरुत्वे महत्त्वे वा तत्कल्पनमिति भावः। न च प्रत्यक्षत्वानुरोधादेव गुरुत्वेऽपि तत्कल्पनं, प्रत्यक्षतायाः

भावात् । ततो योगीन्द्रियवदिन्द्रियमदृष्टसहायं अतीन्द्रियेऽपि गुरुत्वे प्रवर्तत इति । न च लघुत्वं, गुरुत्वापकर्षस्यैव लघुत्वप्रत्ययगोचरत्वात् । दहने च उद्गमननियमस्य कारणवेगपूर्वकत्वेगादेवोपपत्तेः । एतच्च कारणगुणपूर्वकमवयविनि ।

नन्वेवं द्विपलिकरुचकाभ्यामारब्धस्य स्वस्तिकस्य कारणगुरुत्वापेक्षया न्यूनसमाधिकभावेन त्रिचतुःपञ्चपालिकत्वापत्ति-

---

न्यायलीलावतीकण्ठाभरणम्

आह तत इति । वस्तुगत्या अभ्युपगमवादोऽयमिति मन्तव्यम् । ननूक्तं तेजस ऊर्ध्वगमनहेतुर्लघुत्वं गुणान्तरं स्यादित्याह नचेति । एतदिति । गुरुत्वमित्यर्थः ।

द्विपलिकरुचकारब्धे स्वस्तिके यदि समं गुरुत्वं स्यात्तदा चतुःपलिकस्वस्तिकं तावद् यदि न्यूनं तदा त्रिपलिकं यद्यधिकं तदा·

न्यायलीलावतीप्रकाशः

रूपादावपि तद्कल्पनापत्तेरित्यर्थः । गुरुत्वापकर्षस्यैवेति । ननु लघुत्वापकर्ष एव गुरुत्वं स्यात । न च गुरुत्वं प्रमाणसिद्धमिति तदभावो लघुत्वं न तु वैपरीत्यं लघुत्वे मानाभावादिति वाच्यम् । तैजसाद्यां क्रियां पक्षीकृत्य गुरुत्वल्लघुत्वस्यापि साधयितुं शक्यत्वात् , पतनोत्कर्षापकर्षश्च लघुत्वविशेषाभावेनैवोपपन्नः । अत्राहुः । तैजसाद्यक्रियायाः वेगेनैवोपपत्तेः । न च चिरोत्पन्ननिश्चले तेजसि तदभावः, अत एवेन्द्रनीलप्रभायाः कदाचित्सक्रियत्वं कदाचिन्निःक्रियत्वमिति इन्द्रनीलप्रभाक्रियायाः पिण्डाद्यपकर्षणहेतुकत्वेन प्रत्यक्षसिद्धत्वात , पृथिव्यादौ त्वाद्यक्रियाया अनन्यथासिद्धत्वात । ननु दहनोद्गमनार्थं लघुत्वस्वीकारः स्यादत आह दहने चेति । एतच्च गुरुत्वमित्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

एव स्वाभाविकया असिद्धेरिति भावः । अनन्यथासिद्धत्वादिति । वेगेनेति शेषः । तस्य कारणवेगपूर्वकेत्यादिमूलेन तत्र सद्भावप्रदर्शनात वेगनाशानन्तरं निश्चलतेजसि नोदनादिकं विना क्रिया सिद्धैव पृथिव्यादौ तद्विनापि तत्फलादावाद्यपतनानुभवाद्गुरुत्वसिद्धिरिति भावः ।

प्रत्येकं रुचकयोः द्विपलिकत्वे त्रिचतुरित्यादिविरुद्धेत्यत आह

रिति चेत् । न खण्डावयविनां स्वस्तिकारम्भकत्वात्, नतु तद-वयवपरम्परायाः परमाण्ववसानायाः, अतः पलरूपं गुरुत्वं कार-णाकारणसमाहारस्य, तत्र कारणगुरुत्वस्यापरिचयात् समहीना-धिकभावेऽप्यविरोधात् । तथाप्यवनतिभेदः स्यादिति चेन्न । भूयसि गुरुत्वेऽल्पगुरुत्वोत्कर्षेऽप्यवनतिभेदभावात् ॥ इति गुरुत्वम् ॥

---

न्यायलीलावतीकण्ठाभरणम्

पंचपलिकं त्र्यमव्यसम्भवीत्यत आह नन्वेवमिति । खण्डावयविनामि-ति । व्यवकादीनामेव तु तेष्वेव सत्सु तदवयवानामपीत्यर्थः । आ-रब्ध्यारम्भकवादस्य निरासात् अत इति । यदि रुचकयोरपि व्यव-स्थितं गुरुत्वं स्यात्तदा तन्निरूपितं समन्यूनादित्वं निरूप्येत तदेव तु नास्तीत्यर्थः । ननु तथापि कियानिति शेषः स्यादेवेत्यत आह तथा-पीति । पाषाणादावुन्नीयमाने तदुपरि स्थितानां तृणादीनां लघीय-सां यथा अवनतिविशेषो नोपलभ्यते तथा प्रकृतेऽपीत्याह भूयसीति ।

न्यायलीलावतीप्रकाशः

नन्वेवमिति । एकमेकपलिकमपरं चैकपलिकं रुचकं ताभ्यामार-ब्धस्य स्वस्तिकस्येत्यर्थः । कारणगुरुत्वेति । समवायिकारणगुरुत्वं ता-वत् पलद्वयमितं तदारब्धावयविनि गुरुत्वस्यावयवगुरुत्वापेक्षया न्यू-नसमाधिकभावेन त्रिचतुःपञ्चपलिकतापत्तिरित्यर्थः। परमाण्ववसा-नाया आरम्भकत्वमित्यनुषज्यते, पलरूपं गुरुत्वं प्रत्येकं रुचकयोरिति शेषः । कारणाकारणेति । कारणं स्वस्तिकसमवायिकारणं, अकारणं अवयवपरम्परा तत्समाहारस्येत्यर्थः । अविरोधादिति । न त्रिचतुःपञ्च-पलिकतापत्तिरित्यर्थः । तथापीति । स्वस्तिकसमवायिकारणतदवयव-परम्परागुरुत्वस्य कारणस्य भावादित्यर्थः । भूयसीति । समतुलाधृत-पाषाणखण्डोपरि निपतिततृणादावित्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

एकमेकपलिकमिति । आरम्भकत्वमिति पञ्चम्यन्तस्य पूर्वमुपात्तस्य विभक्ति-विपरिणामेनानुषङ्गो द्रष्टव्यः । न त्रिचतुःपञ्चेति । स्वस्तिकसमवायि-कारणस्य न फलरूपं गुरुत्वं समाहारश्च पलरूपगुरुत्वाश्रयो न स्व-

द्रवत्वं स्वाभाविकमन्यथा च। पूर्वमप्सु, अन्यत्क्षितितेजसोः। करकाद्रवत्वं न स्वाभाविकमिति चेत्। न। घृतादिवत्तस्य नैमित्तिकविलयनाभावात्। उत्तरं च कनके। पार्थिवमेव तत्किं न स्यादिति चेन्न। तेजो द्रवत्ववद्रूपित्वात् क्षितिवत्। ततः पक्ष-

---

न्यायलीलावतीकण्ठाभरणम्

स्वाभाविकमिति। तेजःसंयोगाजन्यमित्यर्थः। घृतादिवदिति। तेजःसंयोगमन्तरेणापि तद्विलयनदर्शनाददृष्टाधीनं तत्र काठिन्यमित्यर्थः। क्षितितेजसोरित्युक्तं तत्र कुत्र तेजसीत्यत आह उत्तरमिति। तेज इति। तेजस्त्वं द्रवत्ववद्वृत्ति रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् पृथिवीत्ववदित्यर्थः। नच रसवद्वृत्तित्वमुपाधिः, साध्य-

न्यायलीलावतीप्रकाशः

स्वाभाविकमिति। यद्यपि स्वभावजन्यत्वं जलपरमाणुद्रवत्वाव्यापकं, स्वभावाश्रितत्वं नैमित्तिकस्यापि, तथापि तेजःसंयोगासमवायिकारणकवृत्तिद्रवत्वव्याप्यजातिशून्यत्वं स्वाभाविकत्वम्। अन्यथेति। तादृशजातिमदित्यर्थः। नैमित्तिकेति। तादृशतेजःसंयोगजन्यद्रवत्वानाधारत्वादित्यर्थः। उत्तरं नैमित्तिकम्। कनकइति तेजसि। पार्थिवे घृतादौ सम्प्रतिपन्नत्वान्नोक्तम्। तेजो द्रवत्ववदिति। नन्वालोकादिपक्षत्वे

न्यायलीलावतीप्रकाशविवृतिः

स्तिकसमवायिकारणगुरुत्वापेक्षया न्यूनसमाधिकभावे सर्वत्राविरोधस्तस्यालपत्वादिति सिद्धान्तसंक्षेपः।

तेजःसंयोगेति। अवयवित्वस्य पृथिव्यादावपि कारणगुणत्वादुत्पत्तेरतिव्याप्तिरतो जातिगर्भता। ननु तेजःपदं व्यर्थम्। अखण्डाभावे न व्यर्थतेत्येके। वस्तुतस्तेजःपदसंयोगासमवायिपदयोर्विकल्पेनान्वयो न्न क्षणद्वये तात्पर्यम्। अदृष्टवदात्मसंयोगमादायासम्भववारणाय समवायिपदम्। ननु नैमित्तिकत्वं निमित्तजन्यत्वं, तच्च करकाविलयनेप्यस्तीत्यसिद्धिरतो व्याचष्टे तादृशेति। अत्यन्तेत्यर्थः। एतच्च भौमोष्मजन्यत्वेनासिद्धिवारणार्थमित्येके। स्वरूपनिर्वचनं तदत एव लक्षणे नोपात्तमित्यन्ये। अन्यव्यवच्छेदतात्पर्यभ्रमं निरस्यति घृतादाविति। तेज इति। द्रव्यत्वादिनार्थान्तरवारणाय द्रव्यत्वव्याप्येति। सा-

धर्मतया कनक एव सिद्ध्यतीति नियमात्(१)। कनकतैजसत्वेपि का प्रमेति चेत्(२)। न। क्षित्युदकान्यत्वे सति रूपित्वाद्दीपवत्। कनकं न भौमं अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरण·

---

न्यायलीलावतीकण्ठाभरणम्

व्यापकताग्राहकमानाभावात्। पक्षधर्मतयेति। दीपादौ बाधादित्यर्थः। क्षित्यन्यत्वं साधयति कनकमिति। एवमिति। अत्यन्तानलसंयोगेऽप्यनु·

न्यायलीलावतीप्रकाशः

बाधः, अतिरिक्तपक्षत्वे चाश्रयासिद्धिः, घटादिना व्यभिचारश्च, तेजो द्रुतवृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातिमदित्यत्र च रसवत्त्वमुपाधिः। मैवम्। तेजस्त्वं नाद्रुतरूपवन्मात्रवृत्ति द्रव्यत्वसाक्षाद्व्याप्यजातित्वात् आत्मत्ववदिति विवक्षितत्वात्। ननु पक्षधर्मतया तेजसो द्रवत्वाधारत्वसिद्धावपि कनकतैजसत्वसिद्धिः कुत इत्याह कनकेति। उदकान्यत्वस्य सिद्धत्वात् क्षित्यन्यत्वमसिद्धं साधयति कनकमिति। न·अत्यन्तानलसंयोगानुच्छिद्यमानं यद्द्रवत्वं तदधिकरणत्वादित्यर्थे आश्रयनाशनाश्यद्रवत्वाधिकरणघृतादौ व्यभिचारः, अत्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वाधारत्वादिति कृते चासिद्धिः द्रवत्वस्यापि विनाशित्वात्, अत्यन्तानलसंयोगोच्छेद्यद्रवत्वानधिकरणत्वादित्यर्थे च मृदाऽनैकान्तिकम्, अथाग्निसंयोगानुच्छेद्यद्रवत्वाधिकरणत्वादिति

न्यायलीलावतीप्रकाशविवृतिः

क्षात्पदं भेदगर्भव्याप्यत्वलाभाय। रसवत्त्वमिति। रसवद्वृत्तिद्रव्यत्वव्याप्यजातिमत्त्वमित्यर्थोऽतो गुणविरोधेन नीरसे न साध्वव्यापकत्वम्। तेजस्त्वमिति। मनस्त्वादौ व्यभिचारो माभूदिति साध्ये रूपवदिति विशेषणम्। बाधवारणाय मात्रपदम्। हेतौ घटत्वादिव्यभिचारवारणाय द्रव्यत्वसाक्षाद्व्याप्यपदम्। घटालोकान्यतरत्वादौ तद्वारणाय जातिपदम्। विनाशित्वादिति। द्रुततरत्वादिप्रतीत्यनुरोधादिति भावः। अत्यन्तेति। अत्र च नासिद्धिरत्यन्तानलसंयोगनाशदशायामप्याश्रयनाशेनैव सुवर्णद्रवत्वनाशादिति भावः। अथाग्नीति। अनुच्छेद्यत्वमुच्छेदायोग्यत्वमतो न घृतादौ पूर्वो·

---

(१) न्यायादिति प्रा० पु० पाठः। (२) नेतिपदं प्रा० पु० नास्ति।

त्वात् जलपरमाणुवत्। गुरुत्वमप्येवमभौमं स्यात् अत्यन्तानल-संयोगेऽप्यनुच्छिद्यमानत्वादिति चेत्। न। गुरुत्वस्याभौमस्य स्वाश्रयसजातीयव्यापकत्वनियमात् तेजोमात्रे गुरुत्वप्रसङ्गात्।

---

न्यायलीलावतीकण्ठाभरणम्

च्छिद्यमानं चेत् पार्थिवं तदेवमित्यर्थः। अभौमस्येति धूमादौ व्यभिचार-वारणार्थम्। न च तत्राप्यलंधूमदशायां गुरुत्वमिति वाच्यम्। तस्य धू-

न्यायलीलावतीप्रकाशः

तदर्थः, तथापि घृतावयविनि व्यभिचार एव। नैवम्। एतस्य तेज-स्येव निरासात्। गुरुत्वस्येति। अभौमस्येति विशेषणे न सर्वत्र भूमौ गुरुत्वमभिप्रेतं धूमे तदभावात्, अन्यथाऽवनमनापत्तेः, अलंधूमस्य चावनतिमतो धूमादन्यत्वात्। स्वाश्रयेति। अभौमं गुरुत्वं अगुर्ववृत्ति-द्रव्यत्वसाक्षाद्व्याप्यजातिसमानाधिकरणमेवेत्यर्थः। अनैकान्तिकत्व-

न्यायलीलावतीप्रकाशविवृतिः

कव्यभिचारः। अत एव च न पूर्वाभेद इति ध्येयम्। तथा-पीति। वैशेषिकमते अवयविनि पाकानभ्युपगमेन स्वरूपयोग्यताया अप्यभावादिति भावः। तेजस्येवेति। समानाधिकरणद्रवत्वसामग्र्यस-मवहिताग्निसंयोगजन्यध्वंसप्रतियोग्यवृत्तिजातिमद्द्रवत्वाधिकरणत्वा-दित्यत्र तत्रोक्तेऽस्यापि तात्पर्यादिति भावः। विशेषण इति सप्त-म्यन्तम्। अभिप्रेतमिति। ग्रन्थकृत इति शेषः। तथाचैतन्मते नेदमिति भावः। अत एवालंधूमदशायामित्यादिकिरणावलीविरोधोप्यपास्तः। वस्तुतो धूमत्वव्यञ्जकस्य स्पर्शविशेषस्य चक्षुःकोणग्राह्यस्य तत्रापि सत्त्वादलंधूमो धूम एव, अस्तु वा तदन्यस्तथापि तद्ध्वंसजन्यद्रव्यत्वेन तदुपादानोपादेयत्वनियमेन तस्य गुरुत्वे धूमोपादानेऽपि तदारब्ध-धूमेऽपि गुरुत्वमावश्यकमेव। मूले तु तेजस्यपि सर्वत्राल्पं गुरुत्वम-स्त्विती्यापत्तिशङ्कानिरासार्थमवनतिविशेषहेतुगुरुत्वस्यैव व्यापकत्व-मापाद्यमित्यभिप्रायेण घटादिगुरुत्वव्यभिचारवारणाय भौमस्येति विशेषणमिति प्रतिभाति। प्रत्येकगुरुत्वस्य तज्जातीयव्यापकत्वम-सिद्धमित्यत आह अभौममिति। सुवर्णत्वादिजातिमादाय सिद्धसाधन-

भौमस्यापि गुरुत्वस्य श्यामादेरत्यन्तानलसंयोगेऽप्यनुच्छेदात् । सुवर्णं चाद्भुततैजसं अत्यन्तानलसंयोगेऽप्यनुच्छिद्यमानानित्यद्रवत्वाधिकरणत्वात्, न यदेवं न तदेवम्, यथा क्षित्यादिकम् । भौममपि द्रवत्वं स्नेहवदौपाधिकं स्यादिति चेत् । न । काचादिषु द्रवत्वेऽपि संग्रहाभावात् । आप्यत्वे तु संग्रहप्राप्तेः(१) । द्रवत्वं विहाय स्नेह एव स्यन्दननिदानमस्त्विति चेन्न । तदुत्कर्षेऽप्यनुत्कर्षात् । नहि घनीभूतघृतादिकमपेक्ष्य चिरस्यन्दि जलं, जलापेक्षया चाशीघ्रस्यन्दि घृतम् ॥ इति द्रवत्वम् ।

---

न्यायलीलावतीकण्ठाभरणम्

मादन्यत्वात् । गुरुत्वस्याभौमत्वसाधके हेतौ व्यभिचारमाह भौमस्यापीति । श्याम इष्टकाविशेषो श्याम इति प्रसिद्धः । द्रवत्वेति । द्रवत्वाधिकरणत्वे सति तैजसत्वमित्यर्थः । नैमित्तिकद्रवत्वं क्षितितेजसोरित्याक्षिपति भौममपीति । काचादिष्विति । काचादौ पार्थिवे यद्यद् द्रवत्वं तत्तदाप्यं स्यात् संग्रहकारि स्यादित्यर्थः । द्रवत्वात् स्यन्दनमिति मूलमाक्षिपति द्रवत्वं विहायेति । स्नेहमात्रं यदि स्यन्दनकारि स्यात्तदा न घृतादधिकं स्यन्दनं स्यात्, तथाच न स्यन्दनं स्नेहासमवायिकारणकं तदुत्कर्षाननुविधायित्वात् रूपवदित्याह तदुत्कर्षेऽपीति । तदेवाह नहीति । ननु शैथिल्यवत्द्रवत्वमपि संयोगभेदः स्यादिति चेन्न । जले जलान्तरमिश्रणे संयोगबुद्ध्यभावेऽपि द्रवत्वधीसत्त्वात् ।

न्यायलीलावतीप्रकाशः

माह भौमस्यापीति । श्याम इष्टिकाविकारविशेषः । औपाधिकं आप्यमित्यर्थः । आप्यत्वे त्विति । स्नेहसमानाधिकरणद्रवत्वस्य सङ्ग्रहजनकत्वादित्यर्थः । तदुत्कर्षेऽपीति । न हि यदुत्कर्षेऽपि यन्नोत्कृष्यते तत्तदसमवायिकारणमित्यर्थः । ननु संयोगविशेष एव शिथिलादिवद्द्रवत्व-

न्यायलीलावतीप्रकाशविवृतिः

मत उक्तं साक्षादिति । तदुत्कर्षेऽपीति मूलम् । इदमुपलक्षणं तथासति द्रुतकाचादेः स्यन्दनं न स्यादित्यपि द्रष्टव्यम् । न हीति । स्वसमवायीति

---

(१) तत्संग्रहप्रसक्तेरिति प्रा० पु० पाठः ।

स्नेहो माहिषगव्यादिषु दधित्ववत् घृतादिषु जातिभेद एवास्तामिति चेत् । न । तस्यैकसम्बन्ध्यपेक्षया सम्बन्ध्यन्तरे सोत्कर्षत्वात् । उत्कर्षस्य च सामान्यात्मकतया सामान्येऽभावात् ।

---

न्यायलीलावतीकण्ठाभरणम्

इदं स्निग्धमिदं स्निग्धमित्यनुगतमतिदर्शनादाह स्नेह इति । स्नेहे तावदुत्कर्षो गृह्यते, स च जातिरूपः, स्नेहश्च यदि सामान्यं स्यात्तदा तत्रोत्कर्षो न स्यादित्याह तस्येति । स्नेहात् संग्रह इति मूल-

न्यायलीलावतीप्रकाशः

मस्तु, अन्यथा काठिन्यादीनामपि गुणान्तरतापत्तेः । अत्राहुः । संयोगस्य जलमात्रवृत्तित्वादवयविनि समुद्रे जलान्तरसंयोगाग्रहाद्द्रवत्वं न गृह्येत संयोगिनोरग्रहे संयोगाग्रहात् ।

तस्यैकेति । सावधित्वं च सामान्यान्तरे यद्यपि न दृष्टं तथाप्युत्कर्षादेः प्रतीतिबलादास्थीयते । यद्यपि जलात्स्निग्धतरं घृतमिति प्र-

न्यायलीलावतीप्रकाशविवृतिः

प्रकृताभिप्रायेण स्वरूपनिर्वचनम् । यत्तु दण्डाद्युत्कर्षेऽपि घटाद्युत्कर्षाभावाद्व्यभिचारवारकमेव तदिति । तच्चिन्त्यम् । द्रव्ये उत्कर्षाभावात् । न चासमवायिसंयोगोत्कर्षेण घटोत्कर्षाभावाद्व्यभिचारः । तरलादिशब्दवाच्यस्योत्कर्षस्य प्रकृतेऽभिधानात्तस्य च तत्रावृत्तेरिति भावः । संयोगस्येति । द्रव्यत्वस्थानीयस्येति शेषः । एतदपि जलद्रवत्वमभिप्रेत्य । अवयवानां परस्परं संयोगो गृह्यत एवेत्यत आह अवयविनीति । जलान्तरसंयोगाग्रहादिति । अनुद्भूतरूपस्पर्शजलसंयोगस्यावयविन्यपि सम्भव एव । द्रव्यान्तरानुत्पत्तिरित्यभिप्रायेणाग्रहपर्यन्तधावनम् । योग्यजलसंयोगे अवयवान्तरोत्पत्तेस्तत्र च जलसंयोगाभावाद्द्रवत्वप्रतीतिर्न स्यादयोग्यजलसंयोगस्य चाग्रहादेव सामान्यावयवसंयोगस्य चावयविन्यभावादवयवानामेव परस्परसंयोगस्य चावयविनिष्ठतया भाने भ्रमत्वापत्तेः, परम्परासम्बन्धाश्रयणे च गौरवान्न संयोगात्मकं द्रवत्वमिति प्रघट्टकार्थः ।

ननूत्कर्षस्य सामान्यात्मकत्वे सावधित्वं न स्यादित्यत आह सावधित्वमिति । इदमपि मतान्तरम् । वस्तुत उत्कर्षशब्दात्मकव्यवहार

संग्रहस्तर्हि कतकजलविमलीकरणवज्जातिभेदादास्तामिति चेत् । न । तोयत्वघृतत्वद्रवत्वादीनां व्यभिचारात् एतदुत्कर्षापकर्षाभ्यां सोत्कर्षापकर्षत्वात् । तथापि कथमम्भस्येव, द्रुमादावप्युपलब्धेरिति चेन्न । संयुक्तसमवायादेवोपपत्तेः । द्रवत्ववदग्रहान्नैवमिति । चेत् । न तोयव्याख्यानावसर एव परास्तत्वात् ॥ इति स्नेहः ॥

---

न्यायलीलावतीकण्ठाभरणम्

माक्षिपति संग्रह इति । यथा जलवैमल्ये कतकजातीयत्वं तन्त्रं तथा संग्रहेऽपि किंचित् स्यादित्यर्थः । कतकत्ववत् सा जातिरनुपलम्भबाधितेत्याह तोयत्वेति । तथापि संग्रहलक्षणकार्यानुरोधादेव कल्पयिष्यत इत्यत आह एतदिति । स्नेहोत्कर्षापकर्षाधीनोत्कर्षापकर्षतया स्नेहकार्यत्वमेव संग्रहस्येत्यर्थः । स्नेहोऽम्भस्येवेति मूलमाक्षिपति तथापीति । द्रवत्वेति । स्नेहवद् द्रवत्वमपि पृथिव्यामौपाधिकमेव स्यादिति प्रतिबन्दिरित्यर्थः ।

न्यायलीलावतीप्रकाशः

तीतेः स्नेहाधारस्योत्कर्षो न तु स्नेहस्य, तथापि क्रियागुणौ प्रकृष्येते न द्रव्यमिति तत्रापि "सविशेषणे ही"ति न्यायेन स्नेहोत्कर्ष इति भावः । ननु कतकत्वादिजातिमहिम्ना जलविमलीकरणवत् जलत्वादिजातिमहिम्ना संग्रह इति न स्नेहः सङ्ग्रहासमवायिकारणमित्याह सङ्ग्रह इति । तोयत्वेति । ननु तोयत्वव्यापिका अन्यैव जातिरस्ति सङ्ग्रहोत्कर्षादेरपि घृतत्वादिकमेव प्रयोजकम् । मैवम् । पूर्वोक्तयुक्तेरेव स्नेहस्य जातित्वनिरासात् । एतदुत्कर्षेति । स्नेहोत्कर्षापकर्षाभ्यामित्यर्थः । सोत्कर्षेति । सङ्ग्रहस्येति शेषः ।

न्यायलीलावतीप्रकाशविवृतिः

एतावधिज्ञानापेक्षा तत्प्रवृत्तिनिमित्तस्यावधिघटितमूर्त्तत्वादिति सारम् । सङ्ग्रहोत्कर्षेऽपीति । तदुत्कर्षेऽपीतीत्यादिवक्ष्यमाणयुक्तिरप्यपास्तेति भावः । जलघृतसाधारण्या अन्यस्या जातेरनुपलम्भबाधितत्वात् स्नेहात्मिकैव सा जातिर्वाच्या, सा च निराकृतैवेत्यत आह पूर्वोक्तेति । उत्कर्षो जातिरूपो जातावसम्भव्येवेत्यादेरित्यर्थः ।

नतु प्रोक्षणादिजन्यसंस्कारसंभवे संस्कारस्त्रिविध इति न सिद्ध्यति। तथा हि "व्रीहीन्प्रोक्षती"ति द्वितीया प्रोक्षणजन्यफलाश्रयत्वं प्रतिपादयति (१)गृहं गच्छतीतिवत्, तच्च दृश्यं नास्तीत्यतीन्द्रियः संस्कारः। एवमभिमन्त्रिता मृदादयो विषयन्ते। तत्राभिमन्त्रणजन्यः संस्कारः। तत्र देवतानां संनिधिः क्रियते इति चेन्न। देवतादिकल्पनापेक्षया संस्कारकल्पनाया लघुत्वात्। आगमप्रसिद्धसत्त्वानां देवतानामवश्यकल्पनेति चेत्। न। लोकान्तरवर्तित्वेन देवतानां देहसंनिधानस्याशक्यत्वात्। सार्वज्ञ्ये चेत-

---

न्यायलीलावतीकण्ठाभरणम्

संस्कारस्त्रिविध इति मूलमाक्षिपति नन्विति। वेगस्थितिस्थापकभावनासु तदनन्तर्भावादिति भावः। प्रोक्षणादिजन्यः संस्कारस्तावदुभयानुमतः साम्राज्यादिसमवेतो नवेति विप्रतिपत्तौ विचारे प्रवर्त्तनीये पूर्वपक्षमाह तथाहीति। प्रोक्षणं हि प्रत्यक्षक्रिया तया यदि व्रीहिनिष्ठं फलं न जननीयं, तदा व्रीहीनिति कर्मणि द्वितीया न स्यात्, परसमवेतक्रियाफलशालित्वविरहे कर्मत्वानुपपत्तेरित्यर्थः। स च संस्कार आधेयशक्तिरिति गीयते, तस्यामेव उदाहरणान्तरमाह एवमिति। देवतानामिति। तत्तन्मन्त्रलिङ्गदेवतानामित्यर्थः। देवतेति। देवतापि न प्रत्यक्षा, तथाच कल्पनीयेत्यात्मशरीरेन्द्रियादिवत्तत्कल्पनादित्यर्थः। आगम एव देवतायां प्रमाणं, तथाच सन्निधिमात्रं मन्त्रादिना कल्पनीयमिति लाघवमेवेत्यत आह—आगमेति। देवतासान्निध्यं विकल्प्य निराचष्टे लोकान्तरेति। ननु स्थानादिगोचरज्ञान-

न्यायलीलावतीप्रकाशः

नतु प्रोक्षणेति। "व्रीहीन् प्रोक्षती"त्यत्र कालान्तरकार्यानुकूलोऽतीन्द्रियो विशेषः प्रोक्षणजन्योऽस्तीत्युभयासिद्धम्। स व्रीहिसमवेतो न वेति संशये व्रीहिनिष्ठ एव वाच्यः, द्वितीयान्तश्रुत्या व्रीहेः क्रियाजन्येष्टफलभागित्वावगमात्, परसमवेतक्रियाफलाश्रयस्य कर्मत्वादित्यर्थः। देवतानां तत्तन्मन्त्रप्रकाश्यानामित्यर्थः। देवतादीति। देवताक-

---

(१) ग्राममिति पा० पु० पाठः।

नासंनिधेः सर्वत्र (१)सुलभत्वात्। असार्वज्ञ्ये तु व्यवहितगोचर-चेतनार्जनस्याशक्यत्वात्। विचित्रशक्तीनां विधीनां सामर्थ्येन व्यवहितमपि साक्षात्कुर्वन्तीति चेन्न। यागादावपि(२) देवताप्रीतिरेवामुष्मिकफलमुपकल्पयतीत्यदृष्टकल्पनानुपपत्तिप्रसक्तेः। तथा च महाव्रतः—

मृदमपि विषं कश्चिन्मन्त्रः करोति नियोजितः।
सृजति तदसौ काञ्चिच्छक्तिं मृदोऽतिविमोहिनीम्॥

लाक्षारसावसिक्तबीजपूरकुसुमारुणिमा च लाक्षारसावसेकाहितसंस्कारप्रभवः। लाक्षारसावसेकादेवारुणत्वं महारजनसम्पर्काद्वसन इव भविष्यतीति चेत्। न। चिरान्तरितत्वात्। तथाच महाव्रतः—

कुसुमे बीजपूरादेर्यल्लाक्षाद्यवसिच्यते(३)।
शक्तिराधीयते तेन काचित्तां किं न पश्यसि॥

यदि न पश्यसि,

---

न्यायलीलावतीकण्ठाभरणम्

मेव देवतानां मन्त्रादिनोत्पद्यत इत्यत आह सार्वज्ञ्य इति। विधिबलादेव स्यादित्याह विचित्रेति। देवताकल्पने दोषमाह—यागादेरपीति। अहंकारममकारादिरूपमपि देवतासान्निध्यं देवताविरहादेवानुपपन्नमित्यर्थः। नियोजित इति। प्रयुक्त इत्यर्थः। शक्तेर्विषयान्तरमाह लाक्षारसेति। ननु लाक्षारसलौहित्यमेव कुसुमेषु गृह्यतां किं शक्त्या इत्याह लाक्षेति।

न्यायलीलावतीप्रकाशः

ल्पनं तत्सन्निधिकल्पनं चेति गौरवादित्यर्थः। सार्वज्ञ्य इति। ननु ज्ञानमात्रं न सन्निधिः, किन्तु अहङ्कारममकाररूपं तस्य प्रागसत्त्वात्तथा प्रेक्षणादिजन्यत्वात् ज्ञानस्य चाशुतरविनाशित्वेऽपि तदुत्तरकालं तज्जन्यसंस्कारसत्त्वात्। मैवम्। तथासति यागस्यापि तस्यैव व्यापा-

---

(१) सत्त्वादिति प्रा० पु० पाठः। (२) अत्र मिश्रमतेन यागादेरपीति पाठो बोध्यः।
(३) देर्लाक्षारसाद्युपसिच्यते प्रा० पु० पा०।

किं वा सिञ्चसि बीजपूरकुसुमे लाक्षारसं तत्क्षणा-
देवासौ लसितो मिलिष्यति कथं पुष्पेषु दूरान्तरः ।
किञ्चान्यत्कियतोऽपि चास्य किमसौ संभाव्यते विस्तरः
प्रत्यब्दं भवति द्रुमोऽयमरुणच्छत्रं वसन्तश्रियः ॥

उत्तरकाले तपनकरसम्पर्कमहिम्ना पाकजोऽयमरुणिमा कुसुमेष्विति चेन्न । लाक्षारसानपेक्षपाकप्रभवत्वे लाक्षारसावसेकवैयर्थ्यात् । तदपेक्षपाकजतायां(१) लाक्षारसस्यातीतत्वेनाऽनुपपत्तेः । परम्परया लाक्षारसप्रसूतपाकजो विशेष इति चेन्न । विचारासहत्वात् । लाक्षारसस्य बीजपूरतरुमात्रे वा जनकत्वं तद्विशेषे वा ? न तावदाद्यः । तस्य तद्व्यतिरेकेऽप्युत्पादात् । न द्वितीयः(२)। दृश्यस्य तद्विशेषस्या(३)नुपलम्भनिरस्तत्वात् । न हि बीजपूरावयवेषु

---

न्यायलीलावतीकण्ठाभरणम्

किं न पश्यसि किंवार्थादाक्षिपसीत्यर्थः । एवमग्रेऽपीति । लाक्षारसावसेकस्य दूरान्तरितत्वं लाक्षारसावसेकस्याल्पतां च अनुपपत्तिबीजत्वमुपदर्शयति किंवेति । कुसुमेषु पाकरक्ततोत्पत्तौ लाक्षारसावसेको निमित्तमात्रमित्याशंकते तत्कालमिति(४) । चिरातीतोऽपि परम्परयोपकरिष्यतीत्याह परम्परयेति । परम्पराकारणत्वमपि तरुकाण्डादिजननद्वारा वाच्यं, तत्र विकल्पयति लाक्षारसस्येति । ननु लाक्षारसा

न्यायलीलावतीप्रकाशः

रत्वापत्तौ अदृष्टासिद्धिप्रसङ्गात् । चिरकालगलितस्यापि मेलनमित्यभ्युपेत्याह किञ्चेति । लाक्षारसावसेकस्यातिस्वल्पत्ववात् न ततः प्रत्यब्दभाविकुसुमेषु लौहित्यसम्भव इत्यर्थः । परम्परयेति । बीजतदवयवानां नाशेऽपि लाक्षारसाहितात्तन्मूलपरमाणुषु पाकजपरम्पराविशे

न्यायलीलावतीप्रकाशविवृतिः

पाकजपरम्परेति । यद्यपि परमाणुषु साक्षादेव पाक इति परम्परा

---

(१) पाकजत्वस्येति प्रा० पु० पाठः । (२) नेतरः इति प्रा० पु० पाठः ।
(३) दृश्यविशेषस्येति प्रा० पु० पाठः ।
(४) एतन्मतेनात्र मूले तत्कालमिति पाठो बोध्यः ।

कश्चिज्जातिविशेषो बीजपूरतरौ वाऽवभासते । अदृश्यत्वे चाती-न्द्रियशक्तिस्वीकारात् । लाक्षारसावसिक्तावयवेष्विति चेत् । न । तदवयवानां शोषात्, परमाणूनां च पार्थिवानां सर्वत्राविशेषात् । क्षीरविमिश्रत्रिफलाजलावसिक्तसितापराजिता-शाखाभेदे सितासितकुसुमानुपपत्तेः । साक्षात्स्वसंसर्गिणि बीजा-वयवभेदेऽरुणिमानमनर्जयतो संसर्गिणि कुसुमे रक्तताधानमनु-पपन्नम् । यदाह--

न भिनत्ति कयापि मात्रया फलकाण्डाङ्कुरपल्लवानपि ।
यदयं निहितो रसस्तया तदनुत्पन्न(१)मिवावभासते ॥

---

न्यायलीलावतीकण्ठाभरणम्

रब्धतरुत्वमेव तदारम्भे प्रयोजकं, तच्च नातीन्द्रियं येन शक्तिकल्प-ना स्यादित्याशंकते लाक्षारसेति । भवेदेवं यदि तरोरारम्भपर्यन्तं ला-क्षारसानुवृत्तिः स्यान्न त्वेवमित्याह तदवयवानामिति । सेकानन्तरं ला-क्षारसावसिक्ततदवयवानां शुष्कत्वादित्यर्थः, लाक्षावयवानां वा । ननु य एव तदारम्भकावयवाः परमाणवः सिक्तास्त एव तरुमारभन्ते इत्यत आह परमाणूनामिति । सेकस्य चिरातीतत्वे परमाणुमात्रं त-त्रं वाच्यं, तच्चाविशिष्टमित्यर्थः । शक्तेर्विषयान्तरमाह क्षीरेति । पर-श्लोकमुपवेशयितुं पाठमारचयति साक्षात्स्वेति । यदि च लाक्षारससा-कल्यमेव बीजपूरकुसुमपर्यन्तमुपकुर्य्यात् तदाऽग्रकाण्डाद्यारुण्यम-पि भवेदित्यर्थः । तयेति शक्त्या, विनेत्यध्याहार्य्यम् । पुरुषानिष्ट एव सं-

न्यायलीलावतीप्रकाशः

षादेव तदारब्धकुसुमेष्वरुणिमेत्यर्थः । क्षीरविमिश्रेति । यदि सेकादेव विशेषस्तदा एकैकशोऽपि क्षीरत्रिफलाभ्यामवसेके कुसुमेषु विशे-षः स्यात्, नचैवं, किन्त्वाभ्यामेव विमिश्राभ्याम इत्याधेयशक्तिरि-त्यर्थः । ननु सेकेन स्वसंसर्गिणि बीजावयव अरुणिमानमुत्पाद्य तदा-रब्धवृक्षेषु तदुत्पादात्तज्जनितकुसुमेष्वरुणिमा स्यादित्याह साक्षात्स्वे-ति । न भिनत्ति-न विलक्षणान् करोतीत्यर्थः । तदनुपपन्नमिति । अङ्कुरा-

---

(१) तदनुपपन्नमिति प्रकाशाभिमतः पाठः ।

अत्रोच्यते। संस्कारस्य हि द्वयी आधारता—समवायः स्वभावप्रत्यासत्तिश्च। तत्र व्रीह्याधारता स्वभावप्रत्यसात्तिरेव स्यात्, भावनावत्। यथा तद्विषयज्ञानप्रसूतत्वमेव तदीयत्वं भावनायाः, तथा तद्विषयप्रोक्षणादिप्रसूतत्वमेव तदीयत्वम्। प्रत्यासत्तिश्च तदुपरक्तप्रतीतिगम्या। सा च ज्ञात इव(१) संस्कृत इति सम्भवति। मुख्यसम्बन्धकल्पनायां(२) किं बाधकमिति चेत्। कल्पनायां(३)

---

न्यायलीलावतीकण्ठाभरणम्

स्कारः स्वरूपसम्बन्धेन व्रीहिषु वर्त्तमानः कर्मत्वादिप्रयोजक इत्याह संस्कारस्य हीति। मुख्यसम्बन्ध इति। समवाय इत्यर्थः। कल्पनाया-

न्यायलीलावतीप्रकाशः

दिषु विशेषानाधाने कुसुमारुण्यमनुपपन्नमित्यर्थः। अत्र तयेत्यनन्तरं विनेत्यध्याहरन्ति। प्रोक्षणजन्यपुरुषनिष्ठसंस्कारसम्बन्धादेव कर्मत्वोपपत्तिरित्याह संस्कारस्य हीति। यथेति। यथा घटं जानामि घटं भावयतीत्यत्र ज्ञानभावनयोस्तद्विषयत्वेन स्वरूपसम्बन्धेन द्वितीयोपपत्तिस्तथा प्रकृतेपीत्यर्थः। तद्विषयेति। अतीततद्विषयज्ञानप्रसूतत्वमित्यर्थः। तथा च प्रोक्षणजन्यसंस्काराधारत्वाद्व्रीहीणां कर्मत्वमुपपन्नमिति नाधेयशक्तिकल्पनमिति भावः। स्वरूपस्य प्रत्यासत्तित्वे मान-

न्यायलीलावतीप्रकाशविवृतिः

भिधानमयुक्तं, तथापि परम्परया प्रयोजकाद्विशेषणादित्यर्थः। अध्याहरन्तीति, वैमत्यसूचनाय। तद्बीजन्तु तयेत्यस्य मात्रयेत्यर्थकत्वे काण्डाङ्कुरादौ मात्रानाधाने मात्रया कुसुमेषु रक्तताधानमनुपपन्नमित्यन्वयसम्भव एवेति ध्येयम्। घटं जानामीति। यद्यपि क्रियाजन्यफलस्य कर्मणः स्वरूपसम्बन्धे प्रकृतोदाहरणं युक्तं, तथापि स्वरूपसम्बन्धेन कर्मतोपपत्तिरित्यतावन्मात्रे दृष्टान्तः। (वस्तुतो ज्ञानभावनयोरिति फलपरमेव, ज्ञानपदञ्च स्मृतिपरम्। यथायोग्यं वाऽन्वयः भावनया ज्ञानजनकत्वेन तत्प्रसूतत्वमसम्भवतीत्यत आह)(४) अतीततद्विषयेति। स्वरूप-

---

(१)—ज्ञात इति वद् इति मु० पु० पाठः। (२) सम्बन्धे किं—इति मिश्राभिमतः पाठः।
(३) कल्पनागौरवमिति प्रकाशाभिमतः पाठः।
(४) ( ) चिह्नित पाठः (१) आदर्शपुस्तके नास्ति।

गौरवमेव। विजातीयकल्पनायामात्मविशेष(१)गुणस्य तु भूतसमवेतत्वमसम्भावितमेव। संयोगफलाश्रयत्वेन वा द्वितीयाश्रुतेरुपपत्तेः। व्रीहीनितीप्सितकर्मणि द्वितीया व्रीहीणां विध्यपेक्षितफलाधिकरणत्वं प्रतिपादयति। संयोगस्य विध्यनपेक्षितत्वमिति चेन्न। तस्यापि विध्यपेक्षितादृष्टजननद्वारेणापेक्षितत्वात्(२)। एतेनाभिमन्त्रणं व्याख्यातम्। कुसुमारुणिमा-

---

न्यायलीलावतीकण्ठाभरणम्

मिति। बाधकमित्यनुषज्यते। नन्वदृष्टमेव तत्समवेतं स्यादित्याह आत्मगुणस्येति। एतेनेति। पुरुषनिष्ठसंस्काराधारत्वेनैवेत्यर्थः। कुसुमारुणिमा चेति। उपादानं तस्य कुसुममेव असमवायिकारणं तद्द्रवयवारु-

न्यायलीलावतीप्रकाशः

माह प्रत्यासत्तिश्चेति। मुख्यसम्बन्ध इति। अतिरिक्तसम्बन्ध इत्यर्थः। कल्पनेति। यथोक्तेनैवोपपत्तेरित्यर्थः। न वा साक्षात्सम्बन्धः पुरुषनिष्ठादृष्टेन व्रीहीणां सम्भवतीत्याह आत्मगुणस्य त्विति। संयोगेति। धात्वर्थावच्छेदकप्रोक्षणजन्यसंयोगाश्रयत्वेन कर्मोपपत्तेरित्यर्थः। न च संयोगावच्छिन्न एव व्यापारविशेषः प्रोक्षणार्थः, तथाच प्रोक्षणैकदेशस्य कथं प्रोक्षणसाध्यत्वेनान्वय इति वाच्यम्। संयोगस्योपलक्षणत्वेनापदार्थत्वात्, अन्यथा ग्रामं गच्छतीत्यादौ ग्रामादेरपि कर्मत्वानुपपत्तिः। विध्यपेक्षितत्वं विधितात्पर्यविषयत्वं, तच्चादृष्टसंयोगयोरस्त्येव, विधिप्रतिपाद्यत्वं चाधेयशक्त्यापि नास्तीत्याह तस्यापीति। एतेनेति। अभिमन्त्रितपयःपल्लवादावपि अभिमन्त्रणेन पुरुषनिष्ठ एव

न्यायलीलावतीप्रकाशविवृतिः

सम्बन्धोऽपि साक्षादेवेत्यत आह अतिरिक्तेति। साक्षात्सम्बन्धः संयोगसमवायान्यतरः। यद्यप्यदृष्टेन समवायं व्रीहेः कोऽपि न स्वीकरोति, तथापि साक्षात्सम्बन्धस्यौत्सर्गिकत्वाद्यदि यः कश्चिदेवं वदेत्तदा तम्प्रति बाधकबलादेवोत्सर्गत्याग इत्युत्तरमिति भावः। संयोगस्येति।

---

(१) विशेषपदं भा० पु० नास्ति मिश्रेण च नोपात्तम्।

(२) द्वारापेक्षितत्वाद्-इति भा० पु० पाठः।

च (१) नोपादानत्वेन वाऽसमवायिकारणत्वेन(२) वा शक्ति-माक्षिपति, किन्नामातीतलाक्षारसावसेकापेक्षा नियमान्यथा-नुपपत्तेरतीन्द्रियं द्वारमस्यापेक्षानिर्वाहकमुपपादयति, स च तज्जनितरूपद्वारेणैवोपपद्यमानो(३) नान्यत्कल्पयिष्यतीति। एते-नापराजितालताकुसुमवैचित्र्यं व्याख्यातम्।

वेगासिद्धेस्तथापि त्रैविध्यमनुपपन्नम्। स हि नानुभवादेव

---

न्यायलीलावतीकण्ठाभरणम्

णिमैव, चिरातीतस्य लौहित्यजनकता तु तेजःसंयोगसहकारितामा-पद्य परमाणुषु पाकजोत्पादकत्वेनैवेति न किञ्चिदनुपपन्नमित्यर्थः। एवं प्रति...विधिना(?) तदभावादौ घटादौ चाधिवासविधिना श-क्त्याधानमपास्तम्।

न्यायलीलावतीप्रकाशः

संस्कारो जन्यत इत्यर्थः। यद्यप्यधर्मजनने प्रेक्षावतां प्रवृत्तिर्न स्यात् धर्मजनने तु· तदङ्गाचमनादिव्यतिरेके ततः फलानुत्पत्तिः, तथापि धर्मजनकमात्रे नाचमनाद्यन्वयः, किन्तु यत्र तदुपदेशस्तत्रैव, अत एव यत्राभिमन्त्रणादावपि तदुपदेशस्तत्र तदनुष्ठीयत एव। स चेति। अरु णिमेत्यर्थः। तज्जनितेति। लाक्षारसावसेकजनितपाकजद्वारेणेत्यर्थः। वृक्षकाण्डादौ पाकजरूपादेर्योग्यानुपलम्भात् विशेषानाधानेऽपि बी-जावष्टब्धेषु परमाणुष्वेव पाकजो विशेष आधीयते तदारब्धाश्चाव-यवा अन्तर्वर्त्तमाना इति न तदुपलम्भ इति भावः। एतेनेति। तत्रापि क्षीरत्रिफलाजलमिश्रीभाव एव पाकजप्रयोजक इत्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

न च त्यजगत्योः पर्यायतापत्तिः, ज्ञाने विशेषणीभूतस्यापि संयोगस्य फलजनकतायामुपलक्षणत्वादिति दिक्। नियमानुकर्षणे तस्य द्वारा निर्वाह्यत्वमत आह अरुणिमेति। स्वतन्त्रस्य लाक्षारसावसेकस्य न रू-पजनकत्वमतः पाकमन्तर्भाव्य व्याचष्टे लाक्षारसेति। पाकपदं पाकज-रूपपरम्। क्वचित्पाठोऽपि तथा। पाकजो विशेष इति। अरुणिमलक्षणः,

(१)-मा तु-इति मु० पु० पाठः। (२) असमवायित्वेन-इति प्रा० पु० पाठः।
(३) द्वारेणोपपद्यमानो इति प्रा० पु० पाठः।

न्यत्रस्थाप्यते, चिरेण गच्छतीतिवत् शीघ्रकर्मक्षणोत्पादभेदाल-म्बनत्वात्(१)। न च रयेण भ्रमत्यलातचक्रमित्यत्रैकप्रत्ययवि-षयभ्रमेण भेदाग्रहा(२)दाशूत्पादानाकलनाद्वेगसिद्धिरिति वाच्य-

---

न्यायलीलावतीकण्ठाभरणम्

ननु वेगेन गच्छतीति प्रतीतिरेव तत्र मानमित्याह चिरेणेति। अन्यथा चिरत्वमपि गुणान्तरं स्यादिति भावः। ननु रयेण भ्रम-त्यलातचक्रमित्यत्र भ्रमणस्य एकत्वं गृह्यते, तच्च न सम्भवति भ्रम-णाख्यकर्मणां वस्तुगत्या नानात्वात्तथाच यस्यैकत्वं गृह्यते स एव वेग इत्याह नचेति। ननु भ्रमणाद् भेदाग्रह एव कथमित्यत आह आ-शूत्पादानाकलनादिति। स्यादप्येवं यदि भ्रमणाभेदो गृह्येत तदेव तु ना-

न्यायलीलावतीप्रकाशः

ननु शीघ्रेण गच्छतीत्यनुभवो वेगविषय इत्यत आह चिरेणेति। यथा चिरत्वं न गुणस्तथा शीघ्रत्वमपीति तत्प्रतीत्योः कर्मक्षणभेद एव विषयः, अन्यथा चिरत्वमपि गुणान्तरं स्यादिति। एकप्रत्ययेति। एक-ताप्रत्यय विषये यो भ्रमस्तेनाभेदस्य ग्रहादित्यर्थः। तथाच एकताप्र-त्ययसमानविषयेण भ्रमेण कर्मणामभेदग्रहादाशूत्पादस्तेषां गनह्यत्वम-

न्यायलीलावतीप्रकाशविवृतिः

तेरेव चारुणकुसुमोत्पत्तिरिति भावः। नन्वेवं तादृशपरमाण्वारब्धाः स्थूलावयवा गृह्येरन्नत आह तदारब्धाश्चेति। वस्तुतोऽन्तर्वृत्तिभिस्तैः पर-माणुभिः कुसुमारम्भाव्यवधानेनैव स्थूलावयवारम्भ इति बोध्यम्। यद्यपि बीजारम्भकपरमाणोरलत्वात् कथं कुसुमसमूहस्य तादृश-स्योत्पत्तिः, तथापि सिक्तपरमाणुसम्बन्धादेव सिक्तपरमाणुष्वपि तादृशं पाकजं रूपमिति कल्प्यते, अन्यथा शक्तिकल्पनेऽप्यसिक्तपर-माणोरारम्भकत्वविरोधादिति भावः। चिरत्वमपीति। चिरेण शीघ्रेणे-ति प्रतीत्योरविशेषे चिरत्वमपि गुणान्तरं स्यात्, यदि च चिरत्व-प्रतीतेः कर्मविलम्बोत्पादविषयत्वं तदा शीघ्रत्वप्रतीतेरपि तदाशू-त्पादविषयत्वमिति। प्रत्ययविषयकभ्रमं निरूपयति एकतेति। यत्रैव नानाकर्मणि एकताभ्रमस्तत्रैवाभेदप्रत्ययोपपत्तिरर्थः। एकत्वं संख्या-

---

(१) स्यादालम्बनत्वात्-ना० पु० पाठ। (२) भ्रमाभेदग्रहादिति पाठान्तरम्।

मू। संयोगविभागप्रबन्धोत्पादानुभवस्य प्रतीतेः। नच न कर्म

---

न्यायलीलावतीकण्ठाभरणम्

स्तीत्याह संयोगेति। अत्र पाठान्तरं व्याख्यानान्तरं च चिन्त्यम्। ननु

न्यायलीलावतीप्रकाशः

न्यत्र(?) इति रयेण गच्छतीतिबलाद्वेगसिद्धिरित्यर्थः। ननु कर्मणामभे दग्रहः कथं भ्रमः कर्मणामैक्यात्, अन्यथा कर्मणां तौल्ये एकत्र शीघ्रत्वमन्यत्र च विलम्बो न स्यात्। न च चरमसंयोगवदाद्यसंयोगस्यापि कर्मनाशकत्वं, चरमसंयोगवदाद्यसंयोगस्यापि वेगनाशकत्वे वेगैक्यासिद्धिप्रसङ्गात्। अत्राहुः। वेगस्य क्षणिकतायामुत्तरकर्मानुत्पत्तिप्रसङ्गः असमवायिकारणानां कार्यसमानकालत्वनियात्, कर्मणां च

न्यायलीलावतीप्रकाशविवृतिः

ऽभेदस्तादात्म्यमिति विशेषः। इदं च भ्रमणेति मूले पाठमभ्युपेत्य प्रकाशकृतो व्याख्यानम्। यदि च भ्रमेणेति पाठस्तदा सुगम एव। कर्मणामिति। बहुवचनमुभयत्र पराभ्युपगमानुसारेण। अन्यथेति। कर्मणां नानात्व इत्यर्थः। उभयत्रापि कर्मविभागपूर्वसंयोगनाशोत्तरसंयोगकर्मनाशानन्तरमेवापरकर्मण उत्पत्तिरिति भावः। न च पूर्वकर्मनाशानन्तरं विलम्बेन कर्मोत्पत्तावेव चिरत्वमिति वाच्यम्। वेगस्य त्वन्मते स्थायितया तादृशकर्मोत्पत्तेरशक्यत्वात्, अस्मन्मते तु जातिविशेष एव चिरत्वं शीघ्रत्वं चेत्यापाततोऽभिप्रायः। क्षणिकतायामिति। आद्यसंयोगस्यापि तन्नाशकत्वेनाशुविनाशितायामित्यर्थः। तथाचोक्तबाधकबलेन गौरवस्य प्रामाणिकतायां चरमसंयोगत्वेनैव तन्नाशकत्वमिति भावः। यद्यपि कार्यसमानकालतानियमः कर्मनाशकनाशप्रतियोगिन एव समवायिकारणस्य तत्रैव कार्यक्षणिकतापत्तिलक्षणविपक्षबाधकावतारात्। न च वेगस्य संयोगनाश्यत्वपक्षे पूर्वकालताप्यशक्येति वाच्यम्। कर्मनाशक्षण एव कर्मान्तरोत्पत्तेः प्रतिबन्धकत्वं चाविनश्यदवस्थकर्मण एव, कर्मनाशनाश्यत्वे च वेगस्य शङ्कावकाश एव नास्तीति नेदं बाधकम्, तथापि सामान्यत एवासमवायिकारणस्य कार्यसमानकालनियमानभ्युपगमेनेदमुक्तम्। ननु वेगस्य क्षणिकतायामुत्तरकर्मानुत्पत्तिवत् कर्मणामपि क्षणिकतायां चिरत्वादिप्रतीत्यनुपपत्तिरेव बाधिकेति चरमसंयोगत्वेनैव नाशक-

कर्म(१)साध्यमिति तत्प्रतीतिः, अत्र नियमाभावात् , अन्यथा

---

न्यायलीलावतीकण्ठाभरणम्

तत्र कर्मसन्तानजनकतयैव वेगोऽनुमास्यत इत्यत आह न चेति। तत्प्रतीतिर्वेगप्रतीतिः। कर्म न कर्मजनकमित्यत्र नियामकाभावात्, तत्

न्यायलीलावतीप्रकाशः

क्षणिकत्वेऽपि भूयोविच्छेदेन क्वचिदुत्तरसंयोगाच्छीघ्रत्वम्। संयोगेति। तथाच तेनैव रयेण गच्छतीति प्रतीतेरन्यथासिद्धेर्न ततो वेगसिद्धिरित्यर्थः। ननु कर्मणः कर्मासाध्यत्वात् कर्मान्तरेण च विना देशान्त-

न्यायलीलावतीप्रकाशविवृतिः

तत्त्येकमेव कर्मेत्यत आह कर्मणां चेति। अन्यथैकत्वेऽपि कुतः शीघ्रत्वं कर्मवैजात्यवादश्च तुल्य एवेति भावः। तथाच लाघवादुत्तरसंयोगत्वेनैव नाशकत्वमिति न कर्मैक्यमिति भावः। ननु वेगक्षणिकतायामुत्तरकर्मोत्पत्तिवत् कर्मक्षणिकतायामुत्तरकर्मोत्पत्तिप्रसङ्गः। पूर्वकर्मणो नष्टत्वादुत्तरकर्मणश्चासमवायिकारणाभावेनानुत्पत्त्याऽसमवायिकारणाभावात्। न चात एव वेगैक्यस्वीकार इति वाच्यम्। विनिगमकाभावेन कर्मैक्यस्वीकारापत्तेः, तथाच कुतस्त्वदुक्तप्रसङ्गः। उत्तरसंयोगत्वेनैव कर्मनाशकत्वमिति यदि, तदा तत्त्वेनैव वेगनाशकत्वमित्यपि तुल्यम्। एतेन द्वयोरपि विनिगमकाभावेन क्षणिकत्वमिति परास्तम्। पूर्वयोरुत्तरसंयोगेन नाशे उत्तरयोरनुत्पत्तिप्रसङ्गात् असमवायिकारणस्य कार्यसमानकालत्वनियमात्, तन्नियमानभ्युपगमे च कर्मण एवासमवायिकारणत्वसम्भवेन वेगासिद्धिप्रसङ्गात्। तस्माद्विनिगमकाभावेन द्वयोरपि स्थायित्वमित्येव ज्ञायत इति। मैवम्। कर्मैक्ये वेगासिद्धिप्रसङ्गात् उत्तरकर्मकारणत्वेनैव तत्सिद्धेः। न च प्रत्ययादेव तत्सिद्धिः। तस्यागृहीतविच्छेदनानाकालस्थायिकर्मालम्बनत्वात्, तस्मात्स्वजन्यसंयोगत्वेनैव कर्मनाशकतायां लाघवसिद्धायामुत्तरकर्मकारणतया वेगसिद्धिरिति तत्क्षणिकतायां धर्मिग्राहकमानाविरोधेन चरमसंयोगत्वेनैव वेगनाशकत्वकल्पनात् गौरवस्य प्रामाणिकत्वात्। न च कर्मैक्यमेवास्त्विति वैपरीत्यम्, कर्मनानात्वमुपजीव्य तत्कल्पने उपजीव्यविरोधादिति। कर्मान्तरेणेति।

---

(१) कर्मकल्पनासाध्यमिति प्रा० पु० पाठः।

न शब्दः शब्दसाध्य इति ध्वनिसंयोगविभागकल्पनापत्तेः। वेगशब्दस्य शिष्टैराशुपर्यायत्वेन स्वीकारात्, तस्य च समयभेदवाचित्वात्। न चोभयवाचित्वं कल्पनागौरवात्। ततोऽभिलापभेदावभासिनी प्रतिपत्तिः समयभेदमेवाश्रयते इति प्राप्तम्। मैवम्। सन्तानाशूत्पादस्यानाकलनेऽप्यन्तरा सम्भविनां वेगबुद्धिविषयत्वात्, सन्तानिनां क्रियासंयोगक्षणानामाशुभावस्य

---

न्यायलीलावतीकण्ठाभरणम्

कर्मैव कर्मजनकमिति न वेगसिद्धिरित्यर्थः। ध्वनिर्वाय्वः। यत्रापि ध्वन्यादिकं नास्ति द्वितीयादिशब्दोत्पादनार्थं तत्कल्पना स्यादित्यर्थः। ननु वेगशब्दवाच्येन केनचित् अवश्यं भाव्यं स एव वेग इत्यत आह वेगेति। उभयेति। समयभेदो गुणान्तरं वेगश्चेत्युभयम्। अभिलापभेदो वेग इति शब्दभेदः। रयेण भ्रमत्यलातचक्रमित्यत्र भ्रमणैक्यप्रत्ययानुरोधादेकस्य वेगस्य सिद्धेरिति समर्थयति सन्तानाशूत्पादस्येति। अन्तरा सम्भविनामिति। भ्रमणान्तरा सम्भाविनामित्यर्थः। ननूक्तं संयोगविभागप्रबन्धोत्पादादाशूत्पादप्रतीतिरित्याह सन्तानिनामिति। न च

न्यायलीलावतीप्रकाशः

रप्राप्तेरभावादुत्तरकर्मजनकतया वेगः सिद्ध्येदित्यत आह नचेति। तत्प्रतीतिः—वेगप्रतीतिः। दूषयति अत्रेति। अनुकूलतर्काभावादित्यर्थः। प्रतिकूलतर्कमप्याह अन्यथेति। ध्वनिर्वायुधर्मविशेषः। नापि वेगशब्दप्रयोगविषयतया वेगसिद्धिरित्याह वेगशब्दस्येति। अभिलापो वेगेनेत्येवंरूपः। सन्तानाशूत्पादस्येति। क्रियासंयोगविभागसन्तानाशूत्पादस्येत्यर्थः। ननु सन्तानाशूत्पादानाकलनेऽपि सन्तानिनामाकलनं स्यात् कर्मणः क्षणचतुष्टयावस्थायित्वेन तदाधारकालस्य प्रत्यक्षत्वादित्यत आह सन्तानिनामिति। वेगप्रतीतेरतिरिक्तगुणालम्बनत्वमिति शेषः। ननु

न्यायलीलावतीप्रकाशविवृतिः

उत्तरकर्मविनेत्यर्थः। ननु ध्वनिकारणत्वकल्पनयापि शब्द एव शब्दजनक आयात इत्यतो व्याचष्टे ध्वनिर्वायुधर्मविशेष इति। तथाच ध्वनेः संयोगविभागयोरसमवायिकारणत्वकल्पनापत्तेरिति मूलार्थ इति भावः। सन्तानिनामिति। आशूत्पादस्येति शेषः। क्षणचतुष्टयावस्थायित्वने

कालकलात्मनोऽप्यक्षविषयत्वात् । वेगेन भ्रमतीत्यादौ गुणारोपात् । संयोगविभागातिरिक्तकर्माणि चलतीति गतिविषयतावत्

---

न्यायलीलावतीकण्ठाभरणम्

भ्रमणमेव वस्तुतस्तत्र एकमित्येकत्वप्रत्ययो न वेगैकत्वालम्बन इति वाच्यम् । कर्म्मणामुत्तरसंयोगनाश्यत्वेन नानात्वव्यवस्थितेः । किञ्च वेगस्य भ्रमणकारणत्वमपि गृह्यत एवेत्याह वेगेनेति । गुणारोपणात् गुण एव तत्प्रतीतेरित्यर्थः । यद्वा वेगेन भ्रमतीत्यादौ वेगः कर्म्मगतः कथं प्रतीयते इत्यत आह वेगेनेति । कर्म्मण्येव तत्र गुणारोप इत्यर्थः । किञ्च यथानुभवबलात् कर्म्म संयोगविभागाभ्यामन्यत्सिध्यति तथा वेगोऽपीत्याह संयोगेति । ननु कर्म्मैव कर्मजनकमस्तु कथमन्यथा शरी-

न्यायलीलावतीप्रकाशः

मानान्तरोपनीतकालकलाविषयत्वे प्रतीतेर्न विरोधः, अन्यथा इदानीं घटो जात इत्यादेर्व्यवहारस्य विलयापत्तेः । अत्राहुः । कर्मणां ताव-दाशुत्पादो न गृह्यते तेषामेकत्वपरिच्छेदात्, नापि संयोगादीनां, तमसि चलत्यलातचक्रे तदसम्भवात्, ऐन्द्रियकाणां संयोगिनाम-प्यध्यक्षाविषयत्वात् व्योमादेश्चातीन्द्रियत्वात् । ननु यदि वेगो गुणा न्तरं तदा कर्मनिष्ठतया कथं तत्प्रतीतिरत आह वेगेनेति । यथा चिरे-ण गच्छतीत्यत्र चिरत्वं कर्मगतं प्रतीयते तथा वेगेन गच्छतीत्यत्र वेगः कर्मगतः प्रतीयते. सा च प्रतीतिर्वेगाख्यगुणारोपरूपेत्यर्थः । संयोगविभागेति । संयोगविभागातिरिक्तं कर्म यथा चलतीतिप्रतीतेर्वि-षयः, तथा क्रियातिरिक्तवेगोऽपि वेगप्रतीतेर्विषय इत्येतावन्मात्रेण दृष्टान्तः । नन्वेवं चिरत्वमपि गुणान्तरं स्यात् चिरेण गच्छतीत्यनु-भवात् । न च कर्मसंयोगाद्युत्पादविलम्बस्तद्विषयः, तदाशूत्पादवत् प्रतिक्षेपात् । अत्राहुः । उत्तरकर्म असमवायिकारणजन्यम्, न च कर्मैव

न्यायलीलावतीप्रकाशविवृतिः

क्षणचतुष्टयावस्थायित्वव्यवहारेणेत्यर्थः । एतावन्मात्रेणेति । आतिरेक्य-मात्रे दृष्टान्त इति भावः । प्रतिक्षेपादिति । अप्रतिक्षेपे वा वेगप्रमितेरप्यक्ष-श्योत्पादविषयतया न ततो वेगसिद्धिरिति भावः । उत्तरकर्मेति । कर्मत्वादाद्यकर्मवदिति शेषः । यद्यपि विलम्बितमुत्तरकर्मासमवा-

वेगस्य शरादिधर्मत्वेनावभासनात् । अन्यत्र शरीरादौ तूत्तरो-त्तरकर्मजननं प्रयत्नादेव भविष्यतीति ॥ इति संस्कारः ॥

---

न्यायलीलावतीकण्ठाभरणम्

दे वेगमन्तरेणापि कर्मसन्तान इत्यत आह—अन्यत्रेति । तत्र प्रयत्न-वदात्मसंयोग एवासमवायिकारणमित्यर्थः ।

विहितनिषिद्धक्रिययोराशुविनाशितया चिरभाविस्वर्गनरकप्रति-साधकात् साधनानुपपत्त्या तावदपूर्वं कल्पनीयं, तच्चान्यथासिद्धं दे-वप्रीतिद्वेषयोरेव तदुपपत्तेः, तयोरप्याशुविनाशित्वमिति यदि तदा

न्यायलीलावतीप्रकाशः

तत्रासमवायिकारणं तस्य कर्मान्तरासमानकालत्वात्, असमवायि-कारणानां च कार्यसमानकालत्वनियमात् । नचैकमेव कर्म, पूर्वनिर-स्तत्वात् । ननु यदि कर्म न च कर्मजनकं तदा वेगरहिते शरीरादौ कथमुत्तरोत्तरकर्मजन्मेत्यत आह अन्यत्रेति । न शब्दः शब्दजनक इत्यत्र च श्रोत्रमात्रवेद्यासमवाय्यन्यत्वमुपाधिः स्फुट इति न पृथक् दूषितम् ॥

न्यायलीलावतीप्रकाशविवृतिः

यिकारणजन्यमित्यनुमानाच्चिरत्वमपि गुणान्तरं स्यादिति पूर्वपक्ष-स्तदवस्थस्तथापि अल्पावयवावच्छिन्नसंयोगजनककर्मण एव तद्वि-षयत्वं, तच्च वेगादेवोपपन्नमिति न तत्कल्पनमिति भावः । तस्येति । न चैतदसिद्धम्, नानापुरुषसाधारणमूर्त्तवृत्त्येकवृत्तिजन्यधर्मस्य सजा-तीयसमानाधिकरणप्रतिबन्धकत्वनियमेन तत्सिद्धेरिति भावः । श्रोत्रेति । श्रोत्रमात्रवेद्यस्य यदसमवायि तदन्यत्वमित्यर्थः । भेर्याकाशसंयोगा-देरपि व्यावर्त्तनान्न पक्षेतरत्वम् । यत्किञ्चित्ताद्दशान्यत्वमुपाधिरिति मतेऽपि पक्ष इति साधनव्यापकतापरीहाराय । मात्रपदं कार्त्स्न्यार्थे वेद्यपदोत्तरान्वितं सामान्याभावलाभाय । असमवायित्वं च यद्यपि कारणत्वगर्भमिति कारणान्यत्वमेव सम्यक्, तथाप्यखण्डाभावे न वैयर्थ्यमित्येके । वस्तुतः शब्दाजनके शब्दध्वंसकारणेऽन्त्यशब्दे सा-ध्याव्यापकत्वमित्यसमवायिपदम् । न च श्रोत्रवेद्यान्यत्वमेव सम्यक्, कृत्यादौ साध्याव्यापकत्वात् । अन्ये त्वन्यथा व्याचक्षते श्रोत्रमात्रवे-द्यत्वे सति यदसमवायि तदन्यत्वमिति । अत्र सत्यन्तं कत्वादौ उत्तर-

कथं पुनः पुरुषविशेषगुणो धर्मः सिद्ध्यति ? यागाद्यारा-धितदेवताप्रीतिरेव फलं फलिष्यतीति । तथा हि विवादाध्यासितं(१) सुखमाराध्यचेतनपूर्वकम् आराधनाप्रसूतत्वात् भूपालाराधनाप्रसूतसुखवत् । तन्न । देवदत्ताद्यदेहादिकं भोक्तृविशेषगुणप्रेरितभूतपूर्वकं देवदत्तप्रतिनियतभोगसाधनत्वात् स्रगा-

न्यायलीलावतीकण्ठाभरणम्

अनुभवजनितसंस्कार एव द्वारमिति नापूर्वसिद्धिरित्याह––कथमिति । धर्म इत्युपलक्षणम्, अधर्मोऽपि कथमित्यर्थः । धर्मपदमदृष्टरूपधर्मपरं वा, अत एव वक्ष्यति "तदेव स्वर्गनरककारणमि"ति । विवादाध्यासितमिति । स्वर्गरूपमित्यर्थः । आराधना गौरवितप्रीतिहेतुः क्रिया यागदानरूपा । आराध्यचेतनपूर्वकमिति । तत्प्रीतिपूर्वकमित्यर्थः । देवदत्ताद्येति । देवदत्ताद्यशरीरं देवदत्तविशेषगुणजन्यं जन्यत्वे सति तद्भोगज-

न्यायलीलावतीप्रकाशः

स्वर्गकामो यजेतेतिविधेर्यागस्य साक्षादसाधनस्य साधनता प्रतीता व्यापारं विनाऽनुपपद्यमाना स्वनिर्वाहकमपूर्वं कल्पयतीत्याक्षिपति कथमिति । देवताप्रीतिरेव यागस्य व्यापारः, न च तस्य तज्जनकत्वे मानाभावः, "यज देवपूजायामि"ति शाब्दिकस्मृतेः, पूजायाश्च गौरवितप्रीतिहेतुक्रियात्वात्, प्रीतेश्चाशुतरविनाशित्वेऽपि तदनुभवजन्यसंस्कारद्वारा हेतुत्वसम्भवात् किमपूर्वकल्पनयेत्यर्थः । देवदत्तेति ।

न्यायलीलावतीप्रकाशविवृतिः

दलं तन्तुसंयोगादावप्यस्तीति साध्याव्यापकत्वपरीहाराय विशिष्टं प्रतियोगित्वेनोपात्तम् । मात्रपदं च उपनीतभानमादाय तन्तुसंयोग एव साध्याव्यापकत्वनिरासाय । विशेष्यता श्रोत्रग्राह्यत्वलाभायेति तथासति पक्षेतरतापत्तेः । विशेष्यतालाभेऽपि सामान्यप्रत्यासत्तिमादाय साध्याव्यापकत्वाच्च । साधनाव्यापकत्वं तु सन्दिग्धमेव शाकपाकजत्वादाविवेति दिक् ॥

आक्षेपाधिकरणं पूरयति स्वर्गकाम इति । मनसीति । एतच्च यदि मूले प्रेरितमिति पाठस्तदा, यदि प्रेरितभूतपूर्वकमिति तत्र पाठस्तदा प्रका-

(१) दास्पदं इति मु० पु० पाठः ।

दिवदिति (१)पक्षधर्मतया तत्सिद्धिः। तथा हि वर्तमानकार्यनि-ष्पादकानां भूतसूक्ष्माणां क्षेत्रज्ञस्य न प्राग्भवीयमिच्छादिकं प्रेरकम्, तस्यानागतदेहोपादानवेदनाभावात्, अतोऽन्यद्विशेषगु-

---

न्यायलीलावतीकण्ठाभरणम्

नकत्वात् तन्निर्मितस्रग्वदित्यर्थः। तेन प्रेरितत्वं यदि जन्यत्वं तदा मनसा अनैकान्तिकम्, तज्जन्यक्रियाश्रयत्वं चात्मन्यनैकान्तिकमित्यादिदोषानवकाशः। न च संस्कारेण अन्यथासिद्धिः, तस्य स्मृतिमात्रजनकत्वेन शरीराजनकत्वात्। आद्यशरीरं च सर्गाद्यकालीनं शरीरमभिप्रेतम्, तेनेदानीन्तनशरीराणां पूर्वशरीराव्यवहितोत्तरभावित्वेऽपि न तज्ज्ञानादिना अन्यथासिद्धिः। पक्षधर्म्मताबलमेव स्पष्टयति तथा हीति। अनागतदेहेति। तदुपादानाभिज्ञस्यैव तत्कर्तृत्वात्। न चेश्वरज्ञानादिकमेव तथा स्यादिति वाच्यम्। तथा सति जन्मवैचित्र्यानुपपत्तेः। न च चिरध्वस्तस्य यागादेरेव कारणत्वमस्तु किं व्यापारेणेति चेन्न। चिरध्वस्तं व्यापारवदेव कारणमिति पूर्वानुभवे स्मृतिजनके कल्पनात्। न च क्रियैव यागादिरनुवर्त्ततां, तस्य

न्यायलीलावतीप्रकाशः

ननु भोक्तृविशेषगुणप्रेरितत्वं यदि तज्जन्यत्वं तदा मनस्यनैकान्तिकम्। प्रतिनियतभोगसाधनत्वमपि यदि भोगावच्छेदकत्वमात्रं, यदि वा देवदत्तभोगासाधारणकारणत्वमुभयथापि दृष्टान्तासिद्धिः, नहि देवदत्तनिर्मितस्रजो देवदत्तभोगावच्छेदकत्वं देवदत्तमात्रभोगजनकत्वं वा। अत्राहुः। संस्काराजन्यं देवदत्ताद्यशरीरं देवदत्तविशेषगुणप्रेरितं जन्यत्वे सति देवदत्तभोगसाधनत्वात् देवदत्तनिर्मितस्रग्वत्। पक्षविशेषणमहिम्ना न संस्कारेणान्यथासिद्धिः। न च प्राक्कालीनशरीरमाधुनि-

न्यायलीलावतीप्रकाशविवृतिः

कोऽपि प्रेरितत्वमिति समस्तसाध्योपलक्षकं द्रष्टव्यमन्यथा विकल्पासङ्गतेः। भोगावच्छेदकत्वं-देवदत्तभोगावच्छेदकत्वम्। देवदत्तमात्रेति। कदाचित्सम्भवेऽपि नियमाभावादिति भावः। देवदत्तनिर्मितेति। तद्भोगसाधनेत्यपि बोध्यम्। नचेति। पूर्वशरीरे सद्योत्पन्नशरीरे मरणो

---

(१) नियतपक्षेति मु० पु० पाठः।

णान्तरं वाच्यम् । तच्च कार्यं भोक्तृविशेषगुणत्वात् सुखवत् । तस्य च कारणं यागादिकमेव, स्वर्गसम्पादक(१)कारणान्तरकल्पनायां कल्पनागौरवप्रसङ्गात् । कल्पनागौरवं च तस्यापि विशेषगुणस्य यागादिव्यतिरिक्तनिष्पाद्यत्वस्वीकारे तज्जनकस्य च

---

न्यायलीलावतीकण्ठाभरणम्

इच्छारूपत्वेन विरोधिगुणनाश्यत्वकल्पनात् तदुत्तरमननुभवाच्च । न च यागध्वंस एव व्यापारः स्यादिति वाच्यम् । प्रतियोगिध्वंसयोरेकत्राजनकत्वात् । अन्यदिति । प्राग्भवीयज्ञानेच्छादेः विशेषगुणान्तरं विशेषगुणविशेषः । ननु तदकार्यमेव स्यात्तथाच न यागादेर्व्यापारइत्यत आह-तच्चेति । भोगनिष्पादकमिति । भोगसाधकत्वेन श्रुतं यत इत्यर्थः। उक्तमेव कल्पनागौरवं स्पष्टयति कल्पनेति । अदृष्टनिष्पादकस्यापि भोग-

न्यायलीलावतीप्रकाशः

कशरीरोत्पत्तिपर्यन्तं तिष्ठतीति ज्ञानमेव तज्जनकं स्यात् सर्गाद्यशरीरे तदभावात् वेदनाभावात् तदभावे चेच्छाद्यभावादिति भावः । न चानागते प्रत्यक्षाभावेऽप्यनुमानं स्यात्, तद्ध्यनुमानं नाद्यदेहाव्यवहितप्राक्काले तत्काले देहाद्यभावात् व्यवहितस्यान्तरितत्वेन कथं तद्देहजनकत्वम् । नचाप्रयोजकमेतत्, यागादेरेवातीतस्य जनकत्वसंभवात् अनन्यथासिद्धनियपूर्ववर्त्तित्वस्याक्षतेः । न चातीतस्य कालान्तरभाविकार्यजनकव्यापारनिर्वाहेन तत्करणत्वम्, उत्तरवर्त्तित्वेन व्यापारस्य तत्रासामर्थ्यात् । नापि ज्ञापनम्, लिङ्गैव ज्ञापनात् । न च चिरध्वस्तं कारणं व्यापारव्याप्तम्, विपक्षे बाधकाभावेनाप्रयोजकत्वात्, "धर्मः

न्यायलीलावतीप्रकाशविवृतिः

चरमात्मोपग्रहात् । न च तथापि प्राणादिसंयोगं पक्षयित्वाऽदृष्टानुमानमिति वाच्यम् । तत्रापि मरणाव्यवहितप्राक्कालिकज्ञानेनार्थान्तरत्वादिति भावः । तदभावादिति । अव्यवहितपूर्वं शरीराभावेन ज्ञानाभावादित्यर्थः । ननु तथापीच्छादिनार्थान्तरमत आह तदभावे चेति । तत्काले देहेति । अनागतदेहाव्यवहितस्यान्तरितत्वेनाभावेनेत्यर्थः । शरीराभावादिति भावः । केचित्तु देहस्य यदाद्यं कारणं तेन व्यवहित-

---

(१) मेव भोगानिष्पादकं कारणान्तरेति पाठो मिश्रसम्मतो मु० पु० बोध्यः ।

न्यायलीलावतीप्रकाशः

क्षरति कीर्त्तनादि'''त्यस्य च कीर्तनाद्विहितक्रिया क्षरति फलं न जनयतीत्यर्थः। न च मुख्ये बाधकाभावान्न लक्षणा, उपस्थितविहितक्रियायामेव धर्मपदशक्तिग्रहस्य बाधकत्वात्, विहितकर्तृत्वज्ञाने सति धार्मिकपदप्रयोगाच्च। एवं चानुमाने जन्मान्तरीयज्ञानादिभिरेवापूर्वजनकत्वाभिमतैः सिद्धसाधनमपि। मैवम्। चिरध्वस्तस्य व्यापारसत्त्वे कारणत्वमिति निरुपाध्यन्वयव्यतिरेकाभ्यां व्याप्त्यवधारणात्, यागस्य चिरध्वस्तस्य कारणत्वेन व्यापारकल्पनात्। न च कार्ये व्यापारस्य पृथगन्वयव्यतिरेकग्रहः तद्व्यापारकतायामुपाधिः, संस्कारे तदभावेऽपि अनुभवस्य तद्व्यापारकत्वात्। न चाप्रयोजकत्वम्, यागो यदि चिरध्वस्तत्वे सव्यापारो न स्यात् स्वर्गकारणं न स्यात् घटवदिति विपक्षे बाधकात्। न चात्र कारणताग्राहकाभाव उपाधिः, तेनापि समं व्याप्त्यवधारणेन तस्याव्यापादनात्। ननु ध्वंस एव तद्व्यापारोऽस्तु तस्यानन्तत्वेऽपि स्वभावात् सावधिफलजनकत्वमित्युभयमपि जनकमिति वाच्यम्। प्रमाणान्तरविरोधेन यागजन्ये स्वर्गे

न्यायलीलावतीप्रकाशविवृतिः

स्यान्तरितत्वेन निर्व्यापारत्वेनेत्यर्थः। व्यापारस्वीकारे चादृष्टसिद्धिरिति भावः। इति व्याचक्षते उपस्थितेति। क्षरणस्य ध्वंसपर्यायत्वमाभिप्रेत्येदमुक्तं समाधानमन्यथा स्पन्दनशक्तस्य तस्य त्वन्मतेऽपि लाक्षणिकत्वादिति भावः। एवं चानुमानेति। निर्व्यापारस्यापत्यतीतस्य हेतुत्वाभ्युपगमादिति भावः। सिद्धसाधनमपीत्यपिः पूर्वोक्ताप्रयोजकत्वसमुच्चये। चिरध्वस्तस्येति। यद्यप्यप्रयोजकमिदं व्यापाराभावेऽपि कारणताशरीरप्रविष्टानन्यथासिद्धत्वनियतपूर्ववर्त्तित्वाक्षतेः, शङ्कितोपाधेरपि न साध्याव्यापकत्वं तुल्यन्यायेन संस्कारस्याप्यनङ्गीकारात्तथापि कारणताऽव्यवधानगर्भैव वाच्या, अन्यथा रासभस्यापि वह्निकारणतापत्तेरनादौ संसारेऽवश्यं तद्देशे तत्समवधानात् व्यवधानं च स्वजन्येतराव्यवधानमेवेति स्वयं व्यवहितस्य यागादेरव्यवधाननिर्वाहकत्वेनापूर्वसिद्धिः। इदमेव चोक्तव्याप्तौ विपक्षबाधकमपि, अत एव च ध्वंसोऽपि न व्यापारस्तथापि सत्यपि रासभातिप्रसङ्गसम्भवेन तदतिरिक्तव्यापारस्यैव व्यवधानेन निर्वाहकत्वादिति दिक्। यत्तु संतानिर्वाहाय कल्प्यमानो व्यापारो ध्वंसान्य

भोगजनकत्वं यागादेश्च । एवं यदि देवताप्रीतेरपि तन्निदानं को विरोधः । तदेतत्स्वर्गनरककारणम् । कुतः पुनस्तयोः सिद्धिः ? आगमादिति चेत् । न, यत्सुखं तदभिलाषोपनीतत्वादि-

---

न्यायलीलावतीकण्ठाभरणम्

जनकत्वं यागादेश्च श्रुतिबलादेवेत्यर्थः । अभ्युपगमवादेनाह—एवमिति । एतदिति । अदृष्टमित्यर्थः । तयोरिति । स्वर्नरकयोरित्यर्थः। अहं सुखदुःखोभयजनकशरीरान्यशरीरवान्नवेति विप्रतिपत्तिः । आगमादिति ।"यन्न दुःखेन सम्भिन्नमि"त्यादेः । यत् सुखं न तदभिलाषोपनीतं यत् सुखं तन्न दुःखासम्भिन्नं न वा विच्छिन्नमित्यादितर्कप्रतिघातादयोग्यतया तस्यागमस्य ज्ञानाजनकत्वादित्याह यदिति । वाक्यस्यागमस्य । ननु तादृशं सुखविशेषमन्तरेण बहुवित्तव्ययायासाध्ये प्रवृत्तिरेव न

न्यायलीलावतीप्रकाशः

तद्ध्वंसस्य जनकत्वाकल्पनात् । एवं यदीति । अयं चाभ्युपगमवादः । वस्तुतो योगस्य देवताप्रीतिजनकत्वे मानाभावः । "यज देवपूजाया-मि"ति हि शाब्दस्मृतिः स्मृतित्वादेव न स्वतः प्रमाणम् । न च याग-स्य देवताप्रीतिजनकत्वे मानान्तरमस्ति, न वा तस्याः व्यापार-त्वं सम्भवति, कृतिभोगसमानाधिकरणस्य फलावसानिकस्य व्या-पारस्य कल्पनात् , लाघवात् संस्कारस्य स्वजनकानुभवविषयमात्रे-फलजनकत्वस्वभावत्वाच्च । तुल्यन्यायेन धर्मवदधर्मस्यापि सिद्धिरि-त्यभिप्रेत्य सिद्धवदाह तदेतदिति । अदृष्टमित्यर्थः । अहं सुखदुःखोभ-यजनकमच्छरीरातिरिक्तशरीरवान्नवेति संशयः । यत्सुखमिति । निरु-

न्यायलीलावतीप्रकाशविवृतिः

पद ध्वंसस्य सत्ताविरोधित्वादिति । तत्तुच्छम् । पारिभाषिक्यां सत्तायां ध्वंसस्याविरोधित्वादिति । ननु शाब्दिकस्मृतिमूलीभूतमेव प्रमाणं प्रमापकं भविष्यतीत्यरुचेराह नवा तस्या इति । लाघवादिति । फलाव्यधिकरणव्यापारस्य परम्परासम्बन्धेन तदुपपादकतायां गौरवादित्यर्थः । देवताप्रीतेराशुविनाशितया व्यापारत्वं न सम्भवत्येवेति तज्जन्यसंस्कारस्य तथात्वं वाच्यं, तथासत्याह संस्कारस्येति । स्वर्गनरकान्यतरस्मिन् संशयमाह अहमिति । प्रसिद्ध्यर्थं सत्पदम् । ऐहिकशरीरस्य ध-

शून्यमेवेति तर्कसम्भवेन योग्यताविरहाद्वाक्यस्याप्रतिपादकत्वात् । न च प्रवृत्त्यनुपपत्तिः(१), सर्वस्वदक्षिणादावपि सप्तद्वीपाधिपत्यस्यैव नानाजन्मानुगन्तृत्वकालभूयस्त्वादीनां सम्भवात्, ततो मर्त्यलोकभोग्यमेव सुखं न च परलोकसिद्धिरिति चेत्। मैवम् । एषां तर्काणां विपर्ययापर्यवसानादाभासत्वात् स्वर्ग(२)सिद्ध्यासिद्धिभ्यां व्याघातात् । एवंभूतस्य चैतद्भुवनासम्भावितत्त्वेन लोकान्तरसिद्धिः । एतद्बन्नरकसिद्धिरपि । तथा चैतदुपभोक्तृदेवशरीरादिवत् प्रेतादिशरीरसिद्धिरपि ॥ इति धर्माधर्मौ ।

---

न्यायलीलावतीकण्ठाभरणम्

स्यादित्यत आह नचेति । उपपत्तिरिति । विशिष्टसुखोपपत्तिरित्यर्थः। विपर्ययेति। अभिलाषोपनीतं चेत्तस्मान्न सुखमिति विपर्ययोऽभिलाषोपनीतसुखमन्तरेणापर्यवसन्न एवेत्यर्थः । तदेवाह स्वर्गेति । यद्वा स्वर्गो न सुखमभिलाषोपनीतत्वादिति विवक्षितव्याघात इत्यर्थः । ननु ननु तादृशमपि सुखमेतद्भुवनभोग्यमेव स्यात्तथाच न परलोकसिद्धिरित्यत आह । एवंभूतस्येति । ननु द्वीपान्तरे तादृशं सुखं स्यादिति

न्यायलीलावतीप्रकाशः

पाधिसहचारेण व्याप्तिग्रहमूलतर्करूपबाधकसत्त्वात्तदभावात्मकयोग्यताज्ञानविरहादित्यर्थः । ननु "विफला विश्ववृत्तिर्नो न दुःखैकफलापि वे"त्यादियुक्तेः परलोकः सिद्ध्यतीत्याशङ्क्य निराकरोति नचेति । यदि स्वर्गः सुखं स्यात् अभिलाषोपनीतत्वादिशून्यः स्यात्, अभिलाषोपनीतश्चायं, तस्मान्न सुखमित्यत्र स्वर्गसिद्धौ बाधोऽसिद्धौ चाश्रयासिद्धिरित्याह एषामिति । तदेव स्फुटयति स्वर्गसिद्धीति । एवंभूतस्येति । यद्यपि भौमभुवनासम्भवित्वं न परिच्छेत्तुं शक्यते, तथापि कर्मभूमि

न्यायलीलावतीप्रकाशविवृतिः

मात्रधर्माभयारब्धत्वादन्यदीयशरीरस्य च बाधादन्यतरमात्रावच्छेदकशरीरसिद्धिरिति भावः । ननु कर्मभूमित्वमत्रोपाधिरत आह स्वर्गेति ।

---

(१) प्रवृत्त्यनुपपत्तेरुपपत्तिरिति मा० पु० पाठः मिश्रसंमतोऽत्र ज्ञेयः ।

(२) सुखगेति मु० पाठः ।

शब्दो द्रव्यं साक्षादिन्द्रियसम्बन्धवेद्यत्वात्, घटवत्। श्रोत्रं च द्रव्यग्राहकं निरवयवेन्द्रियत्वान्मनोवत्। नित्यश्चाद्रव्यद्रव्यत्वात् प-

---

न्यायलीलावतीकण्ठाभरणम्

चेन्न। कर्म्मभुवनभिन्ना भौमभुवनभूमिः स्वर्गशून्या भौमभुवनभूमित्वात् कर्म्मभुवनभूमिवदिति मानस्य सत्त्वात्।

शब्दोऽम्बरगुणमित्याक्षिपति शब्द इति। साक्षादिति। इन्द्रियसंयोगसमवायान्यतरवेद्यत्वादित्यर्थः। न चान्यतरासिद्धिः, शब्दानित्यत्वे कृतकत्ववदस्यापि साध्यत्वात्। प्रमाणान्तरमाह श्रोत्रमिति। तथा च पक्षधर्मताबलाध शब्दद्रव्यत्वासिद्धिः, तदन्यद्रव्याग्राहकत्वस्योभयासिद्धत्वात्। अद्रव्यद्रव्यत्वादिति। असमवेतद्रव्यत्वादित्यर्थः। नित्यत्वे हे-

न्यायलीलावतीप्रकाशः

भिन्ना भौमभुवनभूमिः स्वर्गशून्या भौमभुवनभूमित्वात् कर्मभूमिवत्, स्वर्गाभावस्य भौमभुवनभूमित्वप्रयुक्तत्वात्॥

शब्दस्याकाशगुणत्वमाक्षिपति शब्दो द्रव्यमिति। साक्षादिति। इन्द्रियसंयोगसमवायान्यतरवेद्यत्वादित्यर्थः। सम्बन्धत्वस्यैकस्याभावात् मानान्तरमाह श्रोत्रमिति। अत्र शब्दान्यद्रव्याग्राहकमिति पक्षविशेषणान्नार्थान्तरम्। न च साधनावच्छिन्नसाध्यव्यापको मनस्त्वमुपाधिः, शब्दस्य द्रव्यत्वसन्देहेन सन्दिग्धसाध्यव्यापकत्वात्। प्रसङ्गादाह

न्यायलीलावतीप्रकाशविवृतिः

लाघवेन भौमभूमित्वमेव तत्प्रयोजकमिति तस्याप्रयोजकत्वमिति भावः।

शब्दद्रव्यत्वसाधनमप्रस्तुतं द्रव्याधिक्यस्य पूर्वमेव निरासादत आह शब्दस्येति। तथाच गुणन्यूनत्वशङ्कैवेयमिति भावः। सम्बन्धत्वस्येति। यद्यप्यविशिष्टव्यावृत्तविशिष्टधीनियामकत्वं सम्बन्धत्वं सुवचमेव, तथापि साक्षात्तन्निर्वचने गौरवम्, तद्घटितं च संयोगसमवायमात्रवृत्तिर्नास्त्येवेत्याशयेनेदमुक्तम्। शब्दान्येति। यद्यपि बाधादेव नार्थान्तरं, तथापि तत्स्फोरकमेव विशेषणमिति मन्तव्यम्। त्वक्चक्षुषोः साध्याव्यापकत्वमाशङ्क्याह साधनेति। शब्दस्य द्रव्यत्वेति। तथासति श्रोत्रस्याद्रव्यग्राहकत्वसन्देहे तत्रैव साध्याव्यापकत्वमिति भावः। यद्यप्येवमुपाधिमात्रोच्छेदापत्तिः पक्षे साध्यकव्यापतासन्देहात्,

त्यभिज्ञानाच्च। गुणवत्त्वाच्च द्रव्यम्। संख्याशब्द(१)वेगादयोऽपि हि शब्दधर्मा अनुभूयन्ते। न चारोपोऽयम्, अशब्दधर्माणां श्रोत्रावेद्यत्वेनाग्रहणात्। न चेद्रियान्तरोपनीतं तिक्तो गुड इतिवत्स्यात्। तेन तदानीम(२)प्रतीतावपि संख्यादेः श्रोत्रेण प्रतीतेः। न च

न्यायलीलावतीकण्ठाभरणम्

त्वन्तरमाह प्रत्यभिज्ञानाच्चेति। तावत्कालस्थैर्य्यसिद्धौ नाशकान्तराभावान्नित्यत्वसिद्धिरिति भावः। द्रव्यत्वे हेत्वन्तरमाह–द्रव्यमिति। गुणवत्त्वे हेतौ प्रमाणमाह संख्येति। वेगेन शब्दो दूरं गत इत्यनुभवो वेगेऽपि मानमित्यर्थः। अशब्देति। आरोपात्तदनुपपत्तेरित्यर्थः। तेनेति। इन्द्रियान्तरेणेत्यर्थः। तथाच नानुभूयमानारोप इति भावः। ननु स्मर्य्यमाणा-

न्यायलीलावतीप्रकाशः

नित्यश्चेति। यद्यपि प्रत्यभिज्ञानमात्रान्न नित्यत्वसिद्धिः, तथापि नाशकत्वाभिमतसद्भावेऽपि तत्सत्त्वे "तावत्कालं स्थिरं चैनमि"ति न्यायान्नित्यत्वसिद्धिरित्याह प्रत्यभिज्ञानाच्चेति। निरवयवेन्द्रियजन्यप्रत्यभिज्ञानविषयत्वमत्र विवक्षितमतो घटादौ नानैकान्तिकमित्यन्ये। वेगादय इत्यादिपदेन महत्त्वादिसंग्रहः। नच विशेषगुणवत्त्वाभावेन तस्याप्रत्यक्षत्वं तद्वत एव द्रव्यस्याध्यक्षत्वादिति वाच्यम्। नादस्य विशेषगुणस्य शब्दनिष्ठतया प्रतीयमानत्वात्। अशब्दधर्माणामिति। इन्द्रियान्तरवेद्यानामित्यर्थः, अन्यथा शब्दे व्यभिचारात्। तेन–इन्द्रि-

न्यायलीलावतीप्रकाशविवृतिः

तथापि सङ्ख्यागुणवत्त्वादिलक्षणविप्रयुक्तोऽयं सन्देहः श्रोत्रस्य शब्दग्राहकत्वनिश्चयादिति नोपाधिमात्रोच्छेदः स्वाभाविकसंशयस्थल एव तस्य दोषत्वमिति वदन्ति। प्रसङ्गीदीति। उपेक्षानर्हत्वं चास्य निरवयवेन्द्रियद्रव्यत्वे नित्यतापत्तिः पूर्वानुमाने प्रतिकूलतर्कपराघाते इष्टापत्तिप्रतिपादतकयेति भावः। यद्यपीति। घटादौ व्यभिचारादिति शेषः। तथापीति। तथाच किञ्चित्कालीननाशाभावे प्रत्यभिज्ञया विषयीकृते कालान्तरीयनाशाभावेन च नाशकाभावादवृत्ते(?)नित्यतासिद्धिरिति भावः। निरवयवेति। न चानागमानुभवानन्तरं यस्य सुखस्य

(१) अरूपावेगादयो हीति मा० पु० पाठः। (२) तेनेन्द्रियान्तरेणाप्रतीतावितिं मु० पु० पाठः।

स्मृत्युपनीतसंख्यादिसंभेदग्रहः । इन्द्रियस्य तदग्राहकत्वेनायो-ग्यत्वात्(१) । अन्यथा जम्बीरबीजपूरादौ रसाद्रूपानुमानभङ्ग-प्रसङ्गात् । तत्कथमम्बरगुणः शब्द इति चेन्न ।

साक्षादिन्द्रियसम्बन्धवेद्यत्वं हि यावत्प्रसक्तपारिशेष्याद्वा नि-

न्यायलीलावतीकण्ठाभरणम्

रोपः स्यादित्यत आह नचेति । सम्भेदः-स्मृतसंख्यादिवैशिष्ट्यम् । इन्द्रियस्येति । आरोपोऽपि श्रोत्रेण न सम्भवति आरोप्यसंख्यादि-ग्रहे तस्यासामर्थ्यात् । नन्वयोग्येनाप्युपनीतं गृह्यत एवेत्यत आह-अन्यथेति । रसनेन्द्रियेणैव चक्षुरुपनीतं रूपं तत्र गृह्येतेति क्वानुमाना-वकाश इत्यर्थः ।

यावदिति । द्रव्यं भवतु स्पर्शवन्निस्पर्शं वा स्यात्? आद्ये त्वगिन्द्रियवे-

न्यायलीलावतीप्रकाशः

यान्तरेण । अप्रतीताविति । अननुभूतावित्यर्थः । इन्द्रियस्येति । तदग्राहक-त्वेन-उपनीताग्राहकत्वेनेत्यर्थः । इन्द्रियस्य इन्द्रियान्तराग्राह्यगुणग्राह-कत्वानियमादिति भावः । अन्यथेति । स्मृत्युपनीतस्य रूपस्य रसनेन ग्रहणादित्यर्थः ।

यद्यपि संयोगसमवायान्यतरवेद्यत्वं न व्याप्यतावच्छेदकं गौरवात्, अश्रावणत्वं चोपाधिः, तथापि स्फुटत्वादेतदुपेक्ष्या-न्यदाह साक्षादिन्द्रियेति । शब्दो न गुणाकर्मादिरूप इति प्रतिषेधे द्रव्य-

न्यायलीलावतीप्रकाशविवृतिः

प्रत्यभिज्ञानं तत्र व्यभिचार इति वाच्यम् । निरवयवेन्द्रियजन्यस्व-जन्यसाक्षात्कारोत्तरभाविस्वजन्यप्रत्यभिज्ञानविषयत्वस्य हेतुत्वात् य-थाश्रुतेनैवोपपत्तौ पदान्तरप्रक्षेपगौरवेन शब्दक्षणिकत्ववादिनां हेतो-रसिद्ध्या चानुशयमाविष्करोत्वन्य इति । स्मृतेरग्रे शङ्कनीयत्वादाह अननुभूताविति । ननु तदग्राहकेनेत्येवासिद्धं स्मृत्युपनीतस्य ग्रहसम्भ-वादत आह इन्द्रियान्तरेति । इन्द्रियान्तरमात्रयोग्यग्राहकत्वनियमादि-त्यर्थस्तेन सत्तामादाय न नियमभङ्गः । मूले चात्र इन्द्रियस्येति पाठे चक्षुस्त्वगन्यबहिरिन्द्रियस्येति बोध्यम् । श्रोत्रस्येति पाठः सुगम एव । साक्षात्सम्बन्धवेद्यत्वमेव हेतुरस्त्वित्यरुचेराह अश्रावणत्वं चेति । तुल्ये-

(१) श्रोत्रस्य तदग्राहकत्वेनायोग्यत्वात्-इति पाठान्तरम् ।

श्रीयते एकदेशपारिशेष्याद्वा ? नाद्यः। तत एवाद्रव्यत्वनिरूपणे(न) लिङ्गग्राहकमानबाधात्। नेतरः। कर्मत्वादेरप्रतिषेधे संयुक्तसमवायादिवेद्यत्वशङ्कायां हेतोरसिद्धतापत्तिः। श्रोत्रं च न नित्यद्रव्यग्राहकम् अयोगिवाहिरिन्द्रियत्वात् चक्षुर्वदिति सत्प्रतिपक्षं द्वितीयानुमानम्(१)। यदि तु नित्यद्रव्यग्राहकं स्यान्न व्यापकद्रव्यग्राहकम्, अजसंयोगाभावात्। नाणुग्राहकम्, अणूनामतीन्द्रियत्वात्। नाणुविभुद्रव्यातिरिक्तद्रव्यग्राहकम्, निरवयवग्राहक-

---

न्यायलीलावतीकण्ठाभरणम्

द्यत्वापत्तिरन्त्येऽतीन्द्रियत्वापत्तेरिति पारिशेषादद्रव्यत्वासिद्धौ बाध इत्यर्थः। लिङ्गग्राहकेति। साक्षात्सम्बन्धः संयोगस्तावन्न भवति पारिशेष्येण शब्दस्याद्रव्यत्वासिद्धेस्तथाच समवायो वक्तव्यो विभुनि च द्रव्ये द्रव्यं न समवैतीति लिङ्गग्राहकमानबाध इत्यर्थः। नित्यपदं चक्षुरादौ व्यभिचारवारणार्थम्। द्रव्यग्राहकत्वे बाधकान्तरमाह यदि त्विति। व्यापकद्रव्यग्राहकं वा स्यात् अणुद्रव्यग्राहकं वा अवयविग्राहकं वा ? आद्य आह—व्यापकेति। श्रोत्रशब्दयोरुभयोरपि व्यापकत्वादन्यतरकर्मादिजन्यसंयोगबाधेऽजः स्वीकार्य्यः, स च न सम्भवतीत्युक्तमेवेत्यर्थः। द्वितीय आह नाण्विति। तृतीय आह नाणुविभुद्रव्येति। निरवयवेन्द्रियस्य निरवयवद्रव्यग्राहकता दृष्टा तदनुपपत्तिः स्यात्, निरवयेन्द्रियस्यापि नि-

न्यायलीलावतीप्रकाशः

त्वस्यापि प्रतिषेधस्तुल्यन्यायतयेत्याह तत एवेति। द्रव्यग्राहकत्वप्रतिषेधे व्यभिचारः स्यादित्यत उक्तं नित्यद्रव्येति। सत्प्रतिपक्षमित्युपलक्षणम्, त्वक्चक्षुरन्यबहिरिन्द्रियान्यत्वं चोपाधिः। ननु नित्यद्रव्यग्राहकत्वनिषेधेऽपि न द्रव्यग्राहकत्वनिषेध इत्यत आह यदि त्विति। प्रत्यभि

न्यायलीलावतीप्रकाशविवृतिः

ति। गुणत्वादिबाधकवद्द्रव्यत्वादिबाधकस्यापि वक्ष्यमाणत्वादित्यर्थः। त्वगिति। त्वक्चक्षुषोः साध्याव्यापकत्वादन्यान्तम्। मनसि

---

(१) द्वितीयमनुमानं सत्प्रतिपक्षम्—इति मा० पु० पाठः।

तानुपपत्तिप्रसङ्गात् । अबाधितानुभवसिद्धविरुद्धधर्मसंसर्गविषयत्वात् प्रत्यभिज्ञाया बाधितत्वम् । अनुमानस्य च व्यतिरेकाप्रतीतौ व्यतिरेकासिद्धेः, तत्प्रतीतौ तु तुल्ययोगक्षेमतयैव शब्दस्यानित्यता(१)सिद्धेर्व्यतिरेकग्राहकमानबाधात् । अतः शब्दोऽनित्य एव । आरोपोऽपि च गौरोऽहमितिवदुपपत्स्यते । रसानुमानव-

---

न्यायलीलावतीकण्ठाभरणम्

दवयवद्रव्यग्राहकतायास्त्वयाऽनभ्युपगमादित्यर्थः । अबाधितेति । तारत्वमन्दत्वविरुद्धधर्माध्यासेन गकारादिभेदसिद्धौ व्यक्त्यभेदविषयता बाधितेति तज्जातीयत्वमादाय प्रत्यभिज्ञापत्तेरित्यर्थः । नित्यः शब्दोऽद्रव्यद्रव्यत्वादित्यनुमानं दूषयति अनुमानस्येति । व्यतिरेकाप्रतीताविति । अनित्यत्वाप्रतीतावित्यर्थः । केवलान्वयी च त्वन्मते नास्तीत्यर्थः । तुल्ययोगेति । नष्टो घट इति प्रतीत्या यथाऽनित्यत्वं तथा श्रुतपूर्वो गकारो नास्तीति प्रतीत्या शब्दानित्यत्वमपि सिद्धमेवेत्यर्थः । आरोपोऽपीति । शब्दे गुणान्तरारोपो यथा चक्षुषा स्वायोग्यस्याप्यहमास्पददस्यारोपः शरीरे तथा स्यादित्यर्थः । ननूक्तं रसेन रूपानुमानं न

न्यायलीलावतीप्रकाशः

ज्ञानाच्च नित्य इति दूषयति अबाधितेति । तारत्वमन्दत्वादेरुपाध्यंप्रतीतावपि शब्दधर्मत्वेन भासनात् स्वाभाविकत्वस्थितौ विरुद्धधर्माध्यस्तविषयत्वेन प्रत्यभिज्ञानस्य तज्जातीयविषयत्वनियमादित्यर्थः । ननु बाधितत्व एव तात्पर्यं तारान्मन्दोऽन्य इत्यनुभवानन्तरमपि स एव गकारोयमिति प्रत्यभिज्ञानात्, विशेषदर्शने च सति भ्रमानुदयादित्यन्यत्र विस्तरः । नित्यश्चाद्रव्यद्रव्यत्वादिति दूषयति अनुमानस्येति । परेषामन्वयव्यतिरेकिण एव गमकत्वादित्यर्थः । तुल्ययोगेति । घटादिवद्विनष्टो गकार इति प्रतीत्या शब्दध्वंससिद्धेरित्यर्थः । न चारोपोऽयमिति दूषयति आरोपोऽपि चेति । यथा मानान्तरोपनीतं चक्षु-

न्यायलीलावतीप्रकाशविवृतिः

तत्सम्भवाद्बहिरिति । परेषामित्याद्युपलक्षणम् । अद्रव्यत्वं यदा-

---

(१) शब्देऽप्यनित्यतेति प्रा० पु० पाठः ।

न्दीग्रहस्त्वन्द्रियसम्बन्धविच्छेदेनापि तत्प्रतिसन्धानादूधूमानुमानसिद्धिन्यायेन निरसनीयः ॥

स्फोटात्मा शब्दो नाम्बरगुण इति चेन्न । तदसिद्धेः । (१)एकं पदमिति धीरनेकवर्णव्यावृत्तात्मानमेकपटबुद्धिवदेकार्थक्रियाप्र-

---

न्यायलीलावतीकण्ठाभरणम्

स्यादित्यत आह रसानुमानेति । अम्लं जम्बीरमिति यत्र श्रूयते तत्र तेन रसेन रूपानुमानं स्यादित्यर्थः । यत्र वा मानान्तरं नोपनायकमित्यपव्याख्यानं क्षणिकताया अतदर्थत्वात् ।

अर्थं स्फुटयतीति स्फोटः, स च द्विविधः पदस्फोटो वाक्यस्फोटश्चेति वर्णगत एवासाविति शब्दमात्रस्य नाम्बरगुणत्वमित्याशंकते स्फोटात्मेति । शब्दवृत्तिः शब्दो नास्त्येवेति परिहरति नेति । नन्वर्थप्रतीत्यन्यथानुपपत्त्यैवासावङ्गीकार्य्यः वर्णानां प्रत्येकं मिलितानाम्वा

न्यायलीलावतीप्रकाशः

षाहमास्पदत्वेन गृह्यते तथात्रापीत्यर्थः । यत्र मानान्तरोपनीतं न स्फुरति तत्रानुमानमित्याह रसानुमानेति ।

"सर्वेषां शब्दानामाकाशगुणत्वमिति" शास्त्रे व्युत्पादितमाक्षिपति स्फोटात्मेति । शब्दत्वं शब्दोपादानवृत्ति नवेति स्फोटसंशयः । एकमिति । एकं पदमिति धीः सर्वानुभवसिद्धा न तावद्वर्णानामनेकत्वात् । न च वर्णेष्वेकार्थज्ञानजनकत्वौपाधिकी सा उपाध्यननुसन्धानेऽपि जायमानत्वात्, अतो यस्तस्या विषयः स एव स्फोट इत्यर्थः । एकपटबुद्धिवदिति । यथैकः पट इति बुद्धिरेकं पटमित्यर्थः । ननु

न्यायलीलावतीप्रकाशविवृतिः

ऽजन्यत्वं तदाऽसिद्धिरथानेकद्रव्यासमवेतत्वं तदा द्रव्यत्वविशेष्यासिद्धिरित्यपि द्रष्टव्यम् ।

स्फोटाप्रसिद्ध्या संशयाभावेन कथं विचार इत्यत आह— शब्दत्वमिति । एवञ्च वर्णोपादानकः पदोपादानकः वाक्योपादानकः स्फोटो मन्तव्यः । न च वर्णे किमर्थं तत्स्वीका-

---

(१) एकमित्यादिः 'अप्रतीतेरि'त्यन्त. पाठो कण्ठाभरणमते 'गुणोऽनित्यश्चेति' ग्रन्थस्यानन्तरं पठनीयस्तत्रैव तद्व्याख्यानात् । सं० ।

तिसंधानाद्युपाधिवैधुर्याद्रत्नतत्त्वबुद्धिवन्नानाव्यक्तिदर्शनजसंस्का-रगम्यं प्रसाधयतीति चेन्न। एकसुप्तिङन्तावच्छेदेन तदुपपत्तेः, अन्यथा किंनिमित्तकः स्फोटेऽपि पदादिव्यवहार इति स्वयमेव परिभावय(१)। किं तर्हि प्रतिपादकम्? क्रमवद्वर्णसंहतिरिति ब्रूमः।

---

न्यायलीलावतीकण्ठाभरणम्

तत्रासामर्थ्यात् प्रत्येकं संकेताभावात् आशुविनाशिनां क्रमभाविनां

न्यायलीलावतीप्रकाशः

वर्णग्रहनिरपेक्षा तत्प्रतीतिः कुतो न भवतीत्यत आह रत्नतत्त्वबुद्धिवदिति। अत एव नापाततस्तदनुपलम्भात्तदभावः, नानावर्णज्ञानजन्यसंस्कारव्यङ्ग्यत्वात्, यथा रत्नतत्त्वं नानातज्जातीयज्ञानजन्यसंस्कारव्यङ्ग्यमित्यर्थः। यद्येकार्थज्ञानजनकत्वोपाध्यननुसन्धानेऽपि एकं पदमिति धीस्तदैकसुप्तिङन्तावच्छेदेनैवेत्याह एकेति। अन्यथेति। अन्यथा स्फोटत्वाविशेषेऽपि कश्चित्पदात्मा स्फोटः कश्चिद्वाक्यात्मेति विचित्रव्यवहारः कथमित्यर्थः। ननु वर्णाः प्रत्येकमर्थधियमादधीरन् मिलिता वा? नाद्यः, प्रत्येकं तत्र सङ्केताज्ञानात्, नान्त्यः, आशुनाशिनां क्रमभाविनां मेलकाभावात्, ततोऽर्थप्रत्ययान्यथोपपत्तेर्वर्णव्यङ्ग्यस्फोटाख्यमर्थप्रत्यायकमन्यदङ्गीकर्त्तव्यमित्याभिसन्धानात्पृच्छति किं तर्हीति। उत्तरं क्रमवदिति। क्रमश्चानुपूर्वीतद्विशिष्टा वर्णसंहतिः। वर्ण-

न्यायलीलावतीप्रकाशविवृतिः

रः? तस्यैवान्यत्र, प्रत्यायकत्वेन एकवर्णस्यैव यत्र प्रत्यायकत्वं तत्रावश्यं तत्कल्पनादिति भावः। अन्यथेति। एकसुप्तिङन्तावच्छेदेन पदस्फोटत्वे नानातदवच्छेदो वाक्यस्फोटत्वे प्रयोजकतया त्वयापि वाच्य इति भावः। अनवयवाऽखण्डस्फोटाभिव्यक्त्यर्थं नानावर्णगोचरसमूहालम्बनस्य त्वयापि स्वीकारादिति भावः। यद्यपि स्फोटाभिव्यंजको वायुरेव तदभिव्यक्त्यर्थमेव च प्रेरितेन वायुना वर्णनिष्पत्तिस्तदभिव्यक्तिर्वा, आमिक्षार्थं प्रक्षिप्तदध्यादिना वाजिननिष्पत्तिवत् कृपाणदर्पणादिमुखदैर्घ्यपारिमाण्डल्यबुद्धिवद्वा इति तत्सिद्धान्ताभेदं बाधकम्। न च चरमोत्पत्तिकाले प्रथमस्यासत्त्वात् कथं स्फोटोत्पत्ति-

---

(१) इति भावयेति मा० पु० पाठः।

ननु क्रमो न गुणात्मकः, तत्रापि वृत्तेः । नापि जातिभेदः, तद्भेदानां गवादीनां परापरभावानुपपत्तेः । नापि कालभेदः, स्वतस्तस्यासिद्धेः, उपाधीनां चाशब्दात्मनां श्रोत्रेणाप्रतीतेः । शब्दस्य च तस्यैव तद्वृत्तौ प्रत्यनङ्गत्वात्। तत्कथं प्रतिपादकत्वमिति चेन्न। पूर्वपूर्ववर्णध्वंससाहचर्यस्यैव प्रकृते क्रमार्थत्वात्। तत एव

---

न्यायलीलावतीकण्ठाभरणम्

च मेलकाभावादित्यनुशयेन पृच्छति शब्दस्य चेति। शब्दात्मा चेत् क्रमस्तदा कथं शब्द एव वर्त्ततेत्यर्थः। पूर्ववर्णध्वंससमानकाल इतरवर्णस्य क्रम इत्याह पूर्वेति। प्रकृत इति। अन्यत्र कालोपाधिविशेषस्यैव क्रमपदार्थत्वादित्यर्थः। तत एवेति । अन्यथा क्रमो न प्रतीयेतेत्यर्थः।

न्यायलीलावतीप्रकाशः

मात्रस्य तुल्यत्वेप्यानुपूर्वीविशेषाज्जराराजेत्यादावर्थविशेषधीदर्शनादित्यर्थः। अयमभिसन्धिः। प्रत्येकवर्णानुभवजन्यसंस्कारकूटैस्तावद्वर्णसमूहगोचरा एकैव स्मृतिर्जन्यते तावतां संस्काराणां युगपदुद्बोधात् युगपदनेकार्थे इन्द्रियसन्निकर्षात्समूहालम्बनमिव, अन्यथा पदार्थप्रतीतेरुपपादयितुमशक्यत्वात्। यदाहुः—

यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः।
सोऽपि पर्यनुयोगेन नैवानेन विमुच्यते ॥

तत्रापि प्रत्येकमेलकविकल्पग्रासापत्तेः । तत्र पीतवर्णात्मकगुणे पीत्यर्थः। स्वत इति। कालस्य नित्यविभोरेकत्वादित्यर्थः। उपाधीनां चेति। आनुपूर्व्याः श्रोत्रग्राह्यत्वात्पदं शृणोमीत्यबाधितानुव्यवसायादित्यर्थः। तस्यैवेति। अभेदे वैशिष्ट्याख्यसम्बन्धाभावादित्यर्थः। पूर्वपूर्वेति। पूर्वपूर्ववर्णध्वंसविशिष्टत्वमुत्तरवर्णस्येत्यर्थः। उत्तरवर्णसमानकालध्वंसप्रतियोगित्वं पूर्ववर्णस्येति यावत्। तत एवेति। यत एव पूर्ववर्णध्वंस-

न्यायलीलावतीप्रकाशविवृतिः

रिति दूषणम्। तन्मते वर्णानां नित्यत्वादनित्यत्वे चरमवर्णावृत्तिताङ्गीकारात्। तथाप्युक्तक्रमेणैकत्वप्रतीत्यर्थप्रतीत्योरुपपत्तौ गौरवं तत्कल्पनायां बाधकमिति रहस्यम्। उपादाने सम्बन्धोऽभेद एवेत्यत आह वैशिष्ट्याख्येति। ननु ध्वंसस्तदवृत्तिः कथं विशेषणमत आह उत्तरवर्णेति।

शब्दाभावः श्रोत्रगम्यः(१) । प्रमाणान्तरवेद्यं पौर्वापर्यं वा क्रम इति स्थितं शब्दो गुणोऽनित्यश्चेति ॥ इति शब्दः ॥

तथापि कथं चतुर्विंशतित्वम् ? रुचिंवद्विरुचेरपि सम्भवात्, यस्मिन्सत्युपात्तमेव नियमेन हीयते । न चेयमिच्छाभावमात्रम्, विपरीतस्यापि सम्भवात् परत्वापरत्ववद्भेदसिद्धेरिति । दुःखमेव तीव्रं द्वेषोऽस्तु, यथेच्छैवोल्बणा काम इति हानिस-

न्यायलीलावतीकण्ठाभरणम्

नन्वधिकरणायोग्यतया कथमेवं स्यादित्यत आह प्रमाणान्तरेति । गुणश्चेति । कर्मत्वमसम्भवि द्रव्यत्वं च प्रतिषिद्धमेवेति भावः ।

नन्वेकं पदमेकं वाक्यमिति बहुषु वर्णेषु प्रतीत्यन्यथानुपपत्तिरेव स्फोटसाधिकेति शंकते एकं पदमिति । यथा रजतत्वमनेकानुभवजनितसंस्कारसहकृतेन्द्रियवेद्यं तथा स्फोटोऽपीत्यर्थः ।

गुणविभागं न्यूनाधिकत्वाभ्यामाक्षिपति तथापीति । चतुर्विंशतेर्गुणानां व्यवस्थितावपीत्यर्थः । विरुचेरिति । । मह्यं न रोचते सौवीरमिति यतः प्रत्यय इत्यर्थः । यथा अपरत्वं न परत्वाभावस्तथेयमपि न रुचेरभाव इत्यर्थः । इच्छैवेति । स्त्रीविषयोऽभिलाष इत्यर्थः । द्वेषे ज्वाल-

न्यायलीलावतीप्रकाशः

साहचर्यलक्षणः क्रमः श्रोत्रेण प्रतीयत इत्यर्थः । विशेषणज्ञानं विना विशिष्टज्ञानाभावात् । प्रमाणान्तरेति । पौर्वापर्यं पूर्वापरकालसम्बन्धः, स यद्यपि न श्रोत्रवेद्यस्तथापि मानान्तरोपनीतः श्रोत्रप्रत्यक्षे भासत इत्यर्थः । गुणश्चेति । यद्यपि शब्दस्य द्रव्यत्वमात्रं निषिद्धं न तु गुणत्वमपि साधितम्, तथाप्यनित्यस्य विभुसमवेतस्य गुणत्वनियमादर्थादुक्तम् ।

यस्मिन्निति । यस्मिन् कारणे सत्युपात्तमपि वस्तु नियमेन हीयते तद्विरुचिरित्यर्थः । परत्वापरत्ववदिति । अन्यथा परत्वाभावमात्रमपरत्वं स्यादित्यर्थः । हानीति । चतुर्विंशतिर्गुणा इति विभागहानिप्रसङ्गादित्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

लिङ्गसङ्गत्यर्थमाह कारणेति । तथाच मूलेऽर्थानिर्देश इति

(१) श्रोत्रग्राह्यः-इति मा० पु० पठः ।

म्भवात् । ज्वलितबुद्धेर्भेदासिद्धिरिति चेन्न । शीतालितबुद्धेरपि सम्भवात् । तृप्तता सेति चेत् । तुल्यम् दुःखितायामपि । यत्न-वदालस्यसम्भवाच्च । न च यत्नाभाव एवाऽयम् । विधित्वेन भासमानत्वात् । गुरुत्ववल्लघुत्वसम्भवाच्च । न चैतदपकृष्टं गुरुत्वमेव लघुत्वम् , तेजस्यपि सत्त्वात् । अन्यथा ज्वलनोद्गम-नानुपपत्तेः । न चेदमदृष्टहेतुकं, सर्वत्र गुरुत्वोच्छेदप्रसङ्गात् ।

द्रवत्ववत्काठिन्यं च गुणान्तरम्(१)। न चैतत्स्पर्शभेदः(२)। चाक्षुषत्वेन स्पर्शविशेषत्वानुपपत्तेः । संयोगविशेषः काठिन्यमिति चेन्न। द्रवत्वस्यापि तादृशत्वापत्तेः(३)। स्नेहवद्रौक्ष्यस्य सम्भवाच्च। परापरभाववत् क्रमयौगपद्यचिरक्षिप्रवामदक्षिणाग्रपृष्ठादिसम्भवा-च्च। असंख्यातोऽयमपरिमितोऽयमिति विरुद्धव्यवहारादसंख्याऽ-परिमाणसम्भवाच्च।इदमस्मादभिन्नमिति पृथक्त्ववदपृथक्त्वसम्भ-वाच्च । न चायं पृथक्त्वाभावः, तदवधिनिरपेक्षनिरूप्यत्वात् ।

---

न्यायलीलावतीकण्ठाभरणम्

तत्त्वधीरस्ति न तु दुःखेऽपीति तयोर्भेद इत्याह ज्वलितेति । शीतलितेति। तर्हि शीतलितत्वबुद्ध्या गुणान्तरं सिध्येदित्यर्थः। तृप्ततेति । सुख एव सा बुद्धिरित्यर्थः । दुःखितायामिति । ज्वलितत्वबुद्धिरित्यनुषज्यते। तुल्यमिति। पृथगेव वाच्यम्।

न्यायलीलावतीप्रकाशः

तदवधीति । पृथक्त्वाधिकरणान्यः पृथक्त्वप्रतियोगी भवति, यदि चापृथक्त्वं पृथक्त्वाभावस्तदा पृथक्त्वावधिनिरूप्यपृथक्त्वप्र-तियोगिकतया न स्वाधिकरणमात्रं स्यादित्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

भावः। यदि चेति । अत एव भेदाभाव एव पृथक्त्वमित्यपास्तम् । पृथ-क्त्वस्यैव भेदत्वात् , अन्योन्याभावात्मकत्वेपि दूषणतौल्याच्च ।

---

(१) तस्यादृष्टहेतुकत्वे पतनादपि गुरुत्वानुमानभङ्गप्रसङ्गः । द्रवत्वत्काठिन्यसम्भवाच्च—इति प्रा० पु० पाठः । (२) नचैष स्पर्शभेद इति प्रा० पु० पाठः ।

(३) चक्षुषा प्रतीतेः। नच संयोगभेदो, द्रवत्वेपि तुल्यत्वात्—इति प्रा० पु० पाठः ।

न च स्वरूपमात्रं, पृथक्त्वाविलयात् । निद्रासंभवात् मध्यत्व-संभवाच्च । दयादयश्च, यतो मृदुतरान्तरता भवति(१)। न चैतद-दृष्टमात्रहेतुकम् , गुरुत्वसंस्कारविलयादित्यास्तां कृतं विस्तरेण इति चेत्।

अत्रोच्यते । नेच्छामीत्यरुचिनिरूपणात् । आतुरस्य उष्णे द्वेषवर्तमानतानुभवेऽपीच्छायां सुखीतिवदहं दुःखीत्यनुभवात् । नाप्यालस्यम्, 'अलसो निःप्रयत्नो निरुत्साह'इति परमकोषकार-वचनाद्यत्नाभाव एव तच्छब्दव्यवहारात्। तमोवद्विधित्वेनाभास-मानत्वस्यान्यथासिद्धत्वात्। नापि लघुत्वम् , गुरुत्वापकर्ष एव तद्व्यवहारात्। ज्वलनोद्गमनस्यादृष्टहेतुकत्वात्। गुरुत्वप्रतिबन्दी-ग्रहस्तु पूर्वमेव निरस्तः । नापि काठिन्यम्, अकठिनैरपि तन्तु-

---

न्यायलीलावतीकण्ठाभरणम्

गुरुत्वसंस्कारेति । पतनामिष्वादिगतिश्चादृष्टादेव स्यात् किन्तु गुरु-त्वेन वेगेनेत्यर्थः। आस्तामिति । मदमानदृष्टान्तलोभस्पृहासूयेर्ष्याद्रो-हक्रोधादिसम्भवादिति भावः। नेच्छामीति इच्छासमभिव्याहार-वशादिच्छाया एवाभावोऽरुचिः प्रतीयत इत्यर्थः।

द्वेषस्य दुःखाङ्गदमाह—आतुरस्येति । तमोवदिति । नहि नञो-ऽप्रयोग इत्येव विधित्वमित्यर्थः। अकठिनैरपीति। कारणगुणमन्तरेण तु

न्यायलीलावतीप्रकाशः

द्वेषस्य दुःखाङ्गदमाह आतुरस्येति । तमोवदिति । यथा तमसि नञ्शब्दप्रयोगाभावमात्रेण विधित्वाभिमानस्तथा प्रकृतेपीत्यर्थः । गुरुत्वापकर्ष इति। गुरुत्वापकर्षोऽत्र गुरुत्वाभावस्तेन तेजसि न विरोधः। कारणगतकाठिन्येन कार्यगतकाठिन्यमारब्धव्यमिति कारणे तद-भावात् कार्ये तदभावः स्यादित्याशयेनाह अकठिनैरपीति । क्वचित्सं-

न्यायलीलावतीप्रकाशविवृतिः

अपृथक्त्वं चेति मूलम्। कल्पतनैवोपपत्तेरिति भावः । अत एवास्वाधि-करणनिरूढ्यर्थम् , आश्रयनिरपेक्षस्यैव स्मर्यमाणपृथक्त्वस्य ग्रहणा-

---

(१) यतो मृदुतरा भवन्ति—इति मु० पु० पाठः।

भिरारब्धपटे काठिन्योपलम्भात् । संयोगभेद एवायं स्पर्शभेदो वा । नापि रौक्ष्यम्, अस्निग्धसामानाधिकरण्येनानुभवात्, आर्द्रताहीने शुष्कतावत् । नापि क्रमादिकम्, उपाधिद्वारेणैवा-न्यथासिद्धेः । परत्वापरत्वादौ तु विशेषदर्शनात् ।

वामत्वं च पूर्वदिगभिमुखावस्थितस्योदीचीदिक्संबन्धित्वम् । दक्षिणदिक्संबन्धित्वं च दक्षिणत्वम् । एवं दिगन्तराभिमुखेऽपि वाच्यम् । देहदेशविशेष एव वामत्वम् । मुखापेक्षया ऋजुदेश-व्यवस्थितालोकादिसंयोगित्वमग्रत्वम् । पृष्ठव्यवहितालोकमण्ड-लावच्छेदश्च पश्चात्त्वम् । असंख्यात्वं चाऽशक्यज्ञानसंख्याव-च्छिन्नत्वम् । अशक्यज्ञानहस्तवितस्त्याद्यवच्छेदपरिमाणयोगित्वं.

---

न्यायलीलावतीकण्ठाभरणम्

कथं तदुत्पद्यतामिति भावः । क्वचित्संयोगभेद एव काठिन्यमतो चा-क्षुषत्वमपि नानुपपन्नमित्याह संयोगेति । सुखासकादौ जठरे स्पर्शभेद-इत्याह स्पर्शेति । विशेषदर्शनादिति । संयुक्तसंयोगाल्पीयस्त्वविषयापेक्षाबु-द्धेरेवापरत्वस्योत्पत्तिदर्शनान्न परत्वाभाव इत्यर्थः ।

ननु दिगन्तराभिमुखस्यापि दिगन्तरावच्छिन्नेऽपि हस्तादौ वा-मत्वव्यवहारः किन्निबन्धन इत्यत आह देहेति । एवं दक्षिणत्वमपि वाच्यमिति । अशक्येति । निपुणे निरूपणे तत्रापि संख्यातत्वबुद्धेः

न्यायलीलावतीप्रकाशः

योगभेदः क्वचित्स्पर्शभेदः काठिन्यमिति न चाक्षुषत्वविरोध इत्या-ह संयोगभेद इति । अस्निग्धेति । स्नेहाभाव एव रौक्ष्यं लोके रूक्षपदस्या-स्निग्धपदपर्यायत्वदर्शनादित्यर्थः । उपाधिद्वारेति । उपाधित्वं च क्रमा-दीनामुपपादितमिति भावः । विशेषदर्शनादिति । परत्ववदपरत्वस्यापि मानसिकत्वादित्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

दिति । ननु यत्र स्वपूर्वस्यां दक्षिणोत्तरक्रमेण नानावस्तूनि तत्र पर-त्वाद्यभावात्कथं मध्यव्यवहारोऽत आह एतन्नेति । तत्र दक्षिणेन निक-

चापरिमितत्वम् । अपृथक्त्वं चैत(१) दवधिनिरूप्यपृथक्त्वाभाव-सम्बन्धित्वम् । दयादयस्त्विच्छाभेदा एव । निरिन्द्रियदेशसम्बन्ध एव हि मनसो निद्रेति । परत्वापरत्वसङ्कर एव च मध्यता । गुरुत्वादिबन्दीग्रहस्तु तत्र तत्रोन्मूलित इत्यलम् । इति गुणनियमः॥

इति श्रीन्यायलीलावत्यां गुणविचारः(२) ।

---

न्यायलीलावतीकण्ठाभरणम्

सत्त्वादिति भावः । एवमग्रेऽपि । परत्वापरत्वसंकर इति । परत्वाधिकरणत्वमेव मध्यत्वमित्यर्थः । गुणनियम इति । गुणानां न्यूनाधिकसंख्याव्यवच्छेदनियम इत्यर्थः ॥

इति श्रीमहामहोपाध्यायसन्मिश्रश्रीभवनाथात्मज महामहोपाध्यायसन्मिश्र-श्रीशंकरकृते लीलावतीकण्ठाभरण गुणपदार्थः समाप्तः ।

---

न्यायलीलावतीप्रकाशः

परत्वापरत्वसंकर इति । एतच्चोपलक्षणम् । तुल्यसंयुक्तसंयोगाधिकरणेऽपि मध्यव्यवहारदर्शनात् । गुणनियमः शङ्कितगुणानामाधिक्यनिराकरणमित्यर्थः ॥

इति श्रीवर्धमानोपाध्यायविरचित न्यायलीलावतीप्रकाशे गुणपदार्थः ॥

---

न्यायलीलावतीप्रकाशविवृतिः

प्यमाणमुत्तरापेक्षया उत्तरेण च निरूप्यमाणं दक्षिणापेक्षया मध्यम परमित्यपरद्वयसंकर एव मध्यतेति भावः । इदमप्युपलक्षणम्, भिन्नदिगवस्थितयोर्यत्रैकस्मिन्परत्वद्वयमुत्पद्यते तत्रापि मध्यत्वव्यवहारात्, तदुक्तं गुणप्रकाशे–'परत्वमेव मध्यत्वमिति' ।

गुणपदार्थः ॥

---

(१) चैतावदवधीति मु० पु० पाठः ।

(२) गुणपदार्थोपवर्णनम्—इति मा० पु० पाठः ।

कथं पुनः कर्माणि पञ्चैव ? भ्रमणरेचनादेरपि सत्त्वात्(१)। तत्रान्यथासिद्धावुत्क्षेपणादेरपि तथात्वप्रसङ्गात् । गमनं च न चलनातिरेकि। ततो न्यूनातिरेकाभ्यां(२) विभागोऽनुपपन्न एवेति

---

न्यायलीलावतीकण्ठाभरणम्

उत्क्षेपणापक्षेपणाकुञ्चनप्रसारणगमनानि पंचैव कर्माणीत्याक्षिपति कथमिति । रेचनादावित्यादिपदान्निष्क्रमणप्रवेशनोदूर्ध्वज्वलनतमनोन्नमनसंग्रहः । अन्यथासिद्धाविति । गमन एव तेषामन्तर्भाव इति यदीत्यर्थः । गमनं चेति । कर्ममात्रमेव गमनं न च तद्विशेष इत्यर्थः । न्यूनाधिकत्वाभ्यामिति । गमनादेः पृथगनभिधानाद्विभागस्य न्यूनत्वं गमनस्य

न्यायलीलावतीप्रकाशः

उत्क्षेपणादीनि पञ्च कर्माणीति पञ्चत्वविभागमाक्षिपति कथमिति । रेचनादेरित्यादिपदेन निष्क्रमणप्रवेशनस्पन्दनोर्ध्वज्वलननमनोन्नमनसङ्ग्रहः । भ्रमणत्वादिबुद्धेरनन्यथासिद्धत्वादित्यर्थः । ननु संयोगविशेषजनकत्वेनोपाधिना तदुपपत्तिरित्यत आह तत्रान्यथेति । उत्क्षेपणादिबुद्धेरपि तत एवान्यथासिद्धेरित्यर्थः। किञ्च चलनमात्र एव गच्छतीति प्रतीतेर्गमनत्वस्य कर्मत्वान्तरजातित्वाभावात् कर्मणः पञ्चत्वाभावेन न्यूनत्वाद्विभागो न युक्त इत्याह गमनं चेति । विशेषादिति । उत्क्षेपणत्वादिबुद्धिभ्रमणत्वादिबुद्ध्योर्जातितदभावव्यवस्थापकत्वलक्षणादित्यर्थः । तमेव स्फुटयति तथाहीति । ननु भ्रमणादीनां जातिरूपत्वेऽपि न विभागव्याघातः, भ्रमणत्वादीनां गमनविशेषत्वस्याग्रे व्युत्पादनीयत्वात्, गमनभिन्नत्वे चोपाधिरूपत्वेऽपि उत्क्षेपणादिपञ्चकानन्तर्भावात् विभागव्याघातस्तुल्यः, तस्माद्भ्रमणत्वादेः स्वरूपाख्यानपरोऽयं

न्यायलीलावतीप्रकाशविवृतिः

अनुक्तोपालम्भमाशंक्याह उत्क्षेपणादीनीति । जातितदभावेति ।जातिव्यवस्थापकत्वतदभावलक्षणादित्यर्थः । संप्रदायविद इत्यस्वरसाविभावनम् । तद्बीजन्तु उत्क्षेपणादिचतुष्टयं तावत् परस्परविरुद्धधर्मवत्त्वमनुभवसिद्धं तदन्यकर्मत्वलक्षणगमनत्वमपि तद्विरुद्धमेवेति परस्परविरुद्धान् पंचोपाधीनादाय मूलकृता कर्माणि गणितानि । एवञ्च भ्रमणत्वादीना-

---

(१) सम्भवात्- इति प्रा० पु० पाठः। (२) अत्र न्यूनाधिकत्वाभ्यामिति मिश्रसम्मतः पाठः।

चेत् । न । विशेषात् । तथाहि नालिकायां पतति पत्रादौ कस्यचित्पततीति मतिः, कस्यचित्प्रविशतीति, कस्यचिद्भ्रमतीति । स च जातिपक्षे प्रत्ययप्रबन्धो नोपपद्यते । जातिसङ्करप्रस-

---

न्यायलीलावतीकण्ठाभरणम्

पृथगभिधानाद्ाधिक्यमित्यर्थः । न्यूनत्वमपाकरोति तथाहीति । ऊर्ध्वं गच्छत्यधोगच्छत्याकुञ्चति प्रसरति गच्छतीति पञ्चानुगतप्रत्ययाः पञ्चजातीरुत्क्षेपणत्वादिका व्यवस्थापयति तेन कर्मत्वसाक्षाद्व्याप्याः पञ्चैव जातयः । भ्रमणत्वादयस्तु साङ्कर्यात् जातय एव न भवन्ति, जातित्वे वा गमनत्वावान्तरजातय एव ता न तु कर्मत्वसाक्षाद्व्याप्या इत्यर्थः । प्रत्ययप्रबन्ध इति । अननुगतप्रत्ययप्रबन्ध इत्यर्थः, निष्क्रमण-

न्यायलीलावतीप्रकाशः

ग्रन्थ इति सम्प्रदायविदः । ननु जातिसङ्करापत्त्या यदि पतनत्वं न जातिः तदा पतनत्वाकारानुगतप्रतीतिः कथम् ? न चाधःसंयोगजनकत्वेनोपाधिना तदुपपत्तिः, अनुगतधर्मं विना तज्जनकत्वस्यैव ग्रहीतुमशक्यत्वात् । मैवम् । अधःसंयोगत्वस्य जातित्वाभावेनोपाधित्वात्, तस्य च कार्यतानवच्छेदकत्वात्, अन्यथा नीलघटत्वादेरपि तथात्वापत्तेः । एवमन्तःसंयोगजनककर्मत्वं प्रवेशनत्वम्, नानादिक्-

न्यायलीलावतीप्रकाशविवृतिः

मपि परस्परात्यन्ताभावसमानाधिकरणजातित्वे विरोधोप्यावश्यकइति तान्यपि विभाजकानि स्युरित्याशङ्कायामनुभवसिद्धसामानाधिकरण्यानुरोधेन जातित्वमेव नास्तीत्युक्तमिति प्रकृतोपयोग एवेति । अधःसंयोगत्वस्येति । यद्यप्युपाधेरपि कार्यतावच्छेदकत्वं भवत्येव, तथाप्यत्र मानाभाव एव तात्पर्यम् ।जातिकार्यवृत्तिजातित्वमेव मानं(न)स्यादिति मानाभावसिद्ध्यर्थमुपाधित्वेनेत्युक्तमिति भावः। यद्यपि पतनमवक्षेपणमेवेत्यग्रे मूलकृदेव वक्ष्यति, अवक्षेपणत्वं चाधःसंयोगजनकतावच्छेदकत्वेनैव साधनीयमिति तत्त्वं कार्यतावच्छेदकमेव, तथापि पतनमत्रावक्षेपणविशेषः, तत्र च न कार्यगतं किञ्चिदवच्छेदकमस्तियेनावक्षेपणत्वायाद्व्यवस्थाप्येत पतनत्वमिति भावः । नानेति ।

ङ्कात्(१)। अपवरकादपवरकान्तरं व्रजति च निष्क्रामति प्रविशति इति प्रत्ययान्न निष्क्रमणत्वाद्यपि । अत एव च न रेचनत्वम्, तस्य निष्क्रमणात्मकत्वात् । न च स्पन्दनम्, न चोर्ध्वज्वलनम्, उत्क्षेपणस्यैव तेजःसम्बन्धिनस्तादृशत्वात् । अत एव च नोन्नमनम्, तस्य निष्क्रमणात्मकत्वात् । पतनं च न, तस्यावक्षेपणात्मकत्वात् । अत एव न नमनम् । अनृजुसंयोगजनकत्वात् तिर्यग्गमनमप्याकुञ्चनमित्याद्यूह्यम् ।

---

न्यायलीलावतीकण्ठाभरणम्

त्वप्रवेशनत्वयोर्जातिरूपतामपाकरोति । अयमभिसन्धिः । अधःसंयोगजनककर्मत्वं भ्रमणत्वम्, बहिःसंयोगजनककर्मत्वं रेचनत्वं तदेव निष्क्रमणत्वम्, अधःसंयोगजनकद्रव्यद्रव्यनिष्ठकर्मत्वं स्पन्दनत्वम्, एतच्च सर्वं गमनद्वारान्तरसामान्यम्। तथोन्नमनत्वमपि । पतनत्वनमनत्वे चावक्षेपणावान्तरसामान्ये । तिर्यग्गमनत्वं चाकुञ्चनत्वं न त्ववान्तरसामान्यमिति । जातित्वेऽपि न कर्मत्वसाक्षाद्व्याप्यजातित्वमिति । ननु

न्यायलीलावतीप्रकाशः

संयोगजनकनानाजातीयनानाकर्मत्वं भ्रमणत्वम् । नहि भ्रमणमेककर्मात्मकमेव, एकस्मिन् क्षणे भ्रमत्यलातचक्रमिति प्रतीत्यापत्तेः । भ्रमणत्वस्य जातित्वं निराकृत्य निष्क्रमणत्वादेस्तन्निराकरोति अपवरकादिति । निष्क्रमणत्वादीत्यादिपदेन प्रवेशनत्वपतनत्वसङ्ग्रहः । तस्येति । निष्क्रमणस्य गमनविशेषत्वेन व्युत्पादनीयत्वादित्यर्थः । न च स्पन्दनमिति तस्य निष्क्रमणात्मकत्वादिति हेतुरनुषञ्जनीयः । अतएवोत्क्षेपणात्मकत्वादित्यर्थः । तिर्यग्गमनस्याकुञ्चनत्वे हेतुमाह अनृजुसंयोगेति । ननु तिर्यग्गमनं नाकुञ्चनं स्वावयवाभिमुखक्रियायाः आकुञ्चनात्मकत्वात् । अत्राहुः । यत्र तिर्यक्पतनं निःक्रियाभिमुखं तत्र तस्याकुञ्चनत्वम्,

न्यायलीलावतीप्रकाशविवृतिः

तृतीयं नानापदं भ्रमणत्वसमुदायपर्याप्तत्वलाभार्थमित्येके । नानाजातीयनानापदयोरन्यतरान्तर्भावेन लक्षणद्वयमित्यन्ये । पूर्वत्र हेतुत्वभ्रमनिरासायाह तिर्यग्गमनस्येति । अन्यत्र वाय्वादाविति । यद्यपि

---

(१) सङ्क्रमयाव—इति प्रा० पु० पाठः ।

उत्क्षेपणत्वादिकं चानुगतप्रत्ययनियतजातीयसंयोगजनकत्वा-

---

न्यायलीलावतीकण्ठाभरणम्

त्क्षेपणादिजातित्वे किं प्रमाणमत आह उत्क्षेपणत्वादिकं चेति। अयमभि-

न्यायलीलावतीप्रकाशः

अन्यत्र वाय्वादौ तिर्यक्पतनमपक्षेपणमेव।

उत्क्षेपणत्वादीनां जातित्वव्यवस्थापकमाह उत्क्षेपणत्वादिकं चेति। ऊ-र्ध्वदिक्संयोगाद्यवच्छिन्नानुगतकार्यस्य कारणानुगतरूपं विनाऽनुप-पत्तेरसति बाधके तेषां जातिरूपत्वमित्यर्थः। ऊर्ध्वदिक्संयोगत्वं चोपाधिरूपमपि बाधकाभावात्कार्यतावच्छेदकम्, नीलघटत्वादेश्च तत्त्वे बाधकमस्ति। न चोत्क्षेपणेष्वूर्ध्वं गच्छतीति प्रतीतिबलाद्गमनत्व-साङ्कर्यं बाधकमेव, तत्र गमनत्वाभावात् तद्व्यवस्थापकस्य तिर्यक्संयो-गजनकत्वस्याभावात्, गच्छतीति प्रतीतिप्रयोगयोश्चलनमात्रविषय-त्वात्। तथापि यत्र किञ्चिदूर्ध्वं किञ्चिच्च तिर्यक् चलति तत्रोत्क्षेपण-त्वगमनत्वयोः सङ्करो दुर्वार इति न वाच्यम्। तत्रैकस्याः कर्मव्य-क्तेरूर्ध्वतिर्यक्संयोगजनकत्वाभावात्, कर्मव्यक्तीनां नानात्वेनोत्क्षेप-णात्मिकायास्तस्या ऊर्ध्वसंयोगजनकत्वात् गमनात्मिकायाश्च ति-र्यक्संयोगजनकत्वात्। एवमधःसंयोगजनकत्वमवक्षेपणत्वव्यवस्था-पकम्। निष्क्रियावयवाभिमुखसंयोगजनकत्वमाकुञ्चनत्वव्यवस्थाप-

न्यायलीलावतीप्रकाशविवृतिः

तिर्यक्पतनं तिर्यक्संयोगत्वाद्गमनमेव वक्तुमर्हम्, तथापि यत्राधस्सं-योगजनकमेव वाय्वादिकर्म तत्रैवमन्यत्र तु गमनमिति भावः। ऊर्ध्वदिक्संयोगित्वं चेति। ऊर्ध्वं क्षिपत्यधः क्षिपतीतिप्रतीत्योः पर-स्परविरुद्धविषयत्वादनुगतत्वाच्च जातिविशेषविषयत्वे तज्जातिनि-यामकत्वेन ऊर्ध्वसंयोगित्वादिकमुपाधिरूपमव्यवच्छेदकं कल्प्यते बाधकाभावादिति भावः। पततीत्यादिप्रतीतीनां तु न जातिव्यवस्था-पकत्वं जातिसङ्करापत्तेरिति ध्येयम्। निःक्रियावयवेति। विरुद्धदिगभि-मुखक्रियाशून्यावयवेत्यर्थोऽन्यथावयविसंकोचेऽवयवकर्मावश्यकत्वात् परस्पराभिमुखक्रियावदवयवाश्रितावयविनि संकुचतीति प्रतीतेश्चा-सङ्गत्यापत्तेरिति भावः। तदुपादानप्रयोजनं च यत्राधःपत्राभिमुख-मेव मध्यपत्रावच्छिन्नावयविसंयोगो विकाशे तत्रातिव्याप्तिवारणम्।

त्सिद्धम् , कारणजातिनियमं विना कार्ये तदनुपपत्तेः । न च रेचनेऽप्ययं दोषः। तत्र बाधकबलेन जातेरपास्तत्वात् । अवि-

---

न्यायलीलावतीकण्ठाभरणम्

सन्धिर्दृश्यते हस्तादिषु तत्सम्बद्धेषु च मुषलादिषु ऊर्द्ध्वदेशावच्छेदेन नियतसंयोगजनकत्वमधोदेशावच्छेदेन च नियतविभागजनकत्वं प्रतीत्य हस्तमुत्क्षिपति मुषलमुत्क्षिपतीति प्रत्ययः । एवं हस्तेनाधो नीयमानेऽवक्षिपतीति प्रत्ययः। एवं वस्त्रं संकुचति चर्म्म संकुचतीति धीः। एवं चर्म्म प्रसरति वस्त्रं प्रसरतीति धीः। एवं पशुमनुजविहंगमसरीसृपादिषु नियतदेशसंयोगविभागयोरनुपलम्भादनियतदेशसंयोगविभागलक्षणकार्य्यकारित्वात् गच्छतीति धीस्तथा च कार्य्यानुगमप्रत्ययानुगमौ जातिमन्तरेणानुत्पद्यमानावुत्क्षेपणत्वादि-

न्यायलीलावतीप्रकाशः

कम्। न चावयवाकुञ्चनेनावयविनि संयोगोत्पादस्तत्राकुञ्चनत्वं नास्त्येवेति वाच्यम्। अवयवावयविनोः संकुचतीतिप्रतीतावविशेषात्। एवं निष्क्रियावयवानभिमुखविरुद्धनानादिक्संयोगजनककर्मत्वं प्रसारणत्वव्यवस्थापकम्। अत्राप्यवयवावयविनोः प्रसरतीत्यबाधितप्रतीतिबलान्नावयवकर्मणान्यथासिद्धिः । तिर्यक्संयोगजनककर्मत्वं च गमनत्वव्यवस्थापकम् । न चैवं पूर्वादिदिक्संयोगजनकत्वादिनापि जातिः सिद्ध्येत, पूर्वादीनां तिर्यक्प्रभेदत्वात्। नन्वेवं रेचनत्वप्रवेशनत्वादिकमपि जातिः स्यात् बहिःसंयोगजनकत्वान्तःसंयोगजनकत्वयोर्व्यवस्थापकयोः सत्त्वादित्यत आह न चेति। गमनत्वं कर्मत्वव्याप्यं

न्यायलीलावतीप्रकाशविवृतिः

नचेति। अवयवसंयोगद्वारेति शेषः। अवयवावयविनोरिति। न च भ्रमरूपा परम्परासम्बन्धावगाहिनी वा प्रतीतिरिति वाच्यम्। बाधकाभावात्, परम्परासम्बन्धकल्पने च गौरवात्। यत्तु—अवयविनि तदा कर्मोत्पादे निःक्रियावयवेति विरुद्धं यावदवयवकर्मोत्पादे व्याप्तत्वादवयविकर्मोत्पादस्यान्यथा कर्मणोऽव्याप्यवृत्तितापत्तिः। नहि भवति निष्कम्पोऽवयवोऽवयवी च तदवच्छेदेनापि सकम्प—इति मतम्। तदयुक्तं निःक्रियेत्यादेरेवान्यथा व्याख्यानात्। एवमिति। अत्रापि निःक्रियत्वं विरुद्धदिगभिमुखक्रियाशून्यत्वमेव। आकुञ्चनव्यावर्त्तनायानभिमुखे-

लक्षणसंयोगभेदमात्रजनकं गमनम्। भ्रमणनिष्क्रमणादीनां च परसामान्यवत्त्वमवश्यमपरसामान्यवत्त्वादुत्क्षेपणावक्षेपणवत्। तदेव च गमनशब्दवाच्यम्। यद्वा उत्क्षेपणत्वादिरूपचतुष्कं तावत्कर्मणि चतुर्विधानुगतप्रत्ययसिद्धम्। तच्चोपाधिसामान्यं वाऽस्तु मुख्यसामान्यं वा न नः कापि(१) क्षतिः, चातुर्विध्यमात्रस्य विवक्षितत्वात्। एतद्रूपचतुष्कविवर्जितकर्मजातीयश्च गमनम्। तच्च

---

न्यायलीलावतीकण्ठाभरणम्

का जातीर्व्यवस्थापयत इति। गमनत्वजातौ प्रमाणान्तरमाह भ्रमणेति। भ्रमणत्वादीनां कर्मत्वसाक्षाद्व्याप्यजातित्वं तावन्नास्ति, नचोत्क्षेपणत्वाद्यवान्तरत्वम्, तद्भेदेन प्रतीतेः, तथा च कर्मव्याप्यव्याप्यत्वं वाच्यमतो गमनत्वमेव कर्मत्वव्याप्यम् तद्व्याप्यं च भ्रमणत्वादीत्यर्थः। उत्क्षेपणत्वादीनामुपाधिसामान्यत्वे नापि काचित्क्षतिरित्याह यद्वेति। नन्वेतच्चतुष्टयान्तर्गतमेव गमनत्वं स्यात्तथा च विभा-

न्यायलीलावतीप्रकाशः

सामान्यं तच्चोर्ध्वादिसंयोगचतुष्टयान्यसंयोगजनककर्मव्यक्तौ वर्त्तत इत्याशयेनाह अविलक्षणेति। तदेव चेति। गमनत्वसामान्याक्रान्तं भ्रमणनिष्क्रमणादीत्यर्थः। ननु सौधादावूर्ध्वद्वारेण कक्षान्तरगमने उत्क्षेपणत्वप्रवेशनत्वनिष्क्रमणत्वसाङ्कर्यं स्यादेवेत्यतः पूर्वापरितोषेणाह यद्वेति। विभागमात्रस्य सिद्धौ तात्पर्यं नतूत्क्षेपणत्वादेर्जातित्वे निर्ब-

न्यायलीलावतीप्रकाशविवृतिः

स्यन्तम्। न च नानापदेन तन्निरासः, तस्यापि नानादिक्संयोगजनकत्वात्। तत्रापि निःक्रियपदं पूर्वनिरुक्तविकाशस्थले मध्यपत्रावच्छेदेनापि विकाशव्यवहारात्तत्रातिव्याप्तिवारणाय। विरुद्धदिगभिमुखक्रियत्वं च तत्राप्यपरदिग्वर्त्तिपत्रापेक्षया नानापदं च उत्क्षेपणातिव्याप्तिवारणाय। न च भ्रमेऽप्यतिव्याप्तिः, तत्रैकस्य कर्मणो नानादिक्संयोगजनकत्वाभावादत एव तल्लक्षणे नानापदमुपात्तम्। विलक्षणपदं च स्वरूपनिर्वचनपरम्, अनभिमुखेत्यन्तत्यागेन तत्पदगर्भल-

(१) काचित्-इति मा० पु० पाठः।

भ्रमणादिकम् । न चैतद्रूपचतुष्कशालितातद्विरहाभ्या(१)मन्यः प्रकारः सम्भवतीति पञ्चैव कर्माणीति ॥

इति लीलावत्यां कर्मविचारः ।

---

न्यायलीलावतीकण्ठाभरणम्

गत्याघात इत्यत आह—एतदिति ।

न्यायलीलावतीप्रकाशः

न्धः उपाधिपञ्चकेनापि विभागनिर्वाहादित्यर्थः । भ्रमणेति । नचैवं नानाजातिसिद्धावपि गमनत्वमेकं न सिद्ध्येदिति वाच्यम् । जातिग्राहकमानेन लाघवसाचिव्यादेकस्या एव सिद्धेः ।

न्यायलीलावतीप्रकाशविवृतिः

क्षणसूचनार्थं वा । क्वचित्तु अभिमुखेति पाठस्तत्र विरुद्धपदं भिन्नपरमिति पूर्वोक्त एव पर्यवसानमिति दिक् । उपाधिपञ्चकेनापीति । उपाधिघटितेन पञ्चकेनेत्यर्थः । अन्यथा गमनत्वस्याग्रे जातित्वव्युत्पादनाद्विरोधापत्तेः । नानेति । भ्रमणत्वादिजातिसिद्धावपीत्यर्थः । जातीति । अनुगतमत्या गमनपदशक्यतावच्छेदकत्वेन वा तत्सिद्धेरित्यर्थः । अत्र जातिपञ्चकेनैव विभागः प्रतीतिबलसिद्धासु तासु संयोगत्वादौ कार्यतावच्छेदकत्वस्यापि कल्पनादित्येकः कल्पः । अथ वा गमनत्वं जातिरन्यच्चतुष्टयमुपाधिरिति द्वितीयः । वस्तुतो गमनत्वजातिसाधिका प्रतीतिरेव वाच्या, सा चोत्क्षेपणादिसाधारणी । कर्मचतुष्टयाजन्यसंयोगत्वस्य कार्यतावच्छेदकत्वे मानमेव नास्ति, येन तदनुरोधात्सा जातिः स्यादित्युपाधिपञ्चकेनैव विभागः स्वतन्त्रेच्छाया नियमनाभावात् । उपाधिचतुष्टयं च पूर्वनिरुक्तमेव, तद्भिन्नकर्मत्वमेव च गमनत्वम् । न च तत्राप्यूर्ध्वाधःक्रमेण विकाशे उत्क्षेपणावक्षेपणत्वप्रसारणत्वानां सामानाधिकरण्येन कथं तेषां विभाजकत्वमिति दोष इति वाच्यम् । परस्परव्यभिचारिभिरेवोपाधिभिर्हेत्वाभासविभागवद्विभागसम्भवादिति भाति ।

---

(१) चतुष्टयतद्विरहाभ्यामिति मा० पु० पाठः ।

किं पुनः सामान्यसिद्धौ मानम् ? गौरित्यभिन्नाकारोऽनुभव इति चेत् । न । विकल्पानुपपत्तेः । तथा हि कोऽयमभेदावसायः ? किमेकव्यक्तिवद्व्यक्त्यन्तरे गौरित्यवभासः,(१) उत व्यक्तीनामेकगोस्वभावतावभासः, एकधर्मवत्तयावभासो वा । नाद्यः ? (२)एकव्यक्तेर्गोस्वभावतावद्व्यक्त्यन्तरस्यापि गोस्वभावत्वादेवोप-

---

न्यायलीलावतीकण्ठाभरणम्

अभिन्नेति । विलक्षणेषु व्यक्तिभेदेषु गवाकारानुगतप्रत्ययविषय एव गोत्वमित्यनुभव एव प्रमाणम्, तदन्यथानुपपत्तिरेवेत्यर्थः । एकव्यक्तेरिति । शबलादीनां सर्वासामेव गो-

न्यायलीलावतीप्रकाशः

गौरितीति । व्यक्तीनामानन्त्यान्न ततस्तदुपपत्तिरित्यर्थः । एकव्यक्तिवदिति । वतिप्रत्ययेन व्यक्तिज्ञानयोः सादृश्यमभिधीयते तच्च विषयनिरूप्यमतोऽनुगतस्य विषयस्य गोत्वस्य सिद्धिरित्यर्थः । एकव्यक्तेरिति । गोत्ववृत्तिकारणत्वं गोत्वजात्यङ्गीकारेप्युपाधिनावच्छेत्तव्यं गोत्वस्य स्वावृत्तित्वात्, तथा च गोस्वभावोऽसाधारणो गोत्वव्यञ्ज-

न्यायलीलावतीप्रकाशविवृतिः

व्यक्तिज्ञानयोरिति । शबलधवलागोचरयोर्ज्ञानयोः सादृश्यमेकं विषयत्वमेव, तत्र व्यक्तेरेकत्वमसम्भावितमेवेत्येकत्वसिद्धिरित्यर्थः । अत इत्यनन्तरमनुगतप्रत्ययकारणत्वेन चेति शेषः । तेनोत्तरव्याख्यासङ्गतिः । गोत्ववृत्तीति । गोत्वनिष्ठज्ञानकारणत्वमुपाधिनैवावच्छेद्यं गोत्वस्य जात्यन्तरस्य वा तदवृत्तित्वात्, तथाच सास्नादिमत्त्वमेव व्यक्तिनिष्ठमनुगतप्रतीतिकारणतां किन्नावच्छिन्द्यादित्यर्थः । क्वचिज्ज्ञानावृत्तित्वादिति पाठः । स तु ज्ञानवृत्तिकारणत्वमिति पूर्वफक्किकापाठपक्षे बोध्यः । तस्य च ज्ञानस्य व्यवहारकारणत्वं यथा गोज्ञानत्वेनोपाधिना ऽवच्छेद्यं तद्वदनुगतप्रतीतिकारणतामपि सास्नादिमत्त्वमुपाधिरवच्छिन्द्यादित्यर्थः । क्वचित्तु गोत्ववृत्तिकारणत्वमित्येव पूर्वफक्किकापाठः, गोत्वस्य तत्रावृत्तेस्तज्ज्ञानावृत्तित्वादिति तूत्तरफक्किकायां पाठः । स चैवं योजनीयः गोत्ववृत्तिकारणत्वमनुगतमतिका-

---

(१) अवसाय इति मु० पु० पाठः । (२) एकगोस्वभाववदिति पाठन्तरम् ।

पत्तेः । व्यक्तिमात्रस्य वा गौरिति मतिगोचरत्वं गोत्ववद्व्यक्तेर्वा ? आद्ये अतिप्रसक्तेः, अन्यत्र जातिस्वीकार इति चेन्न । व्यक्तिविशेषस्य तत्त्वात् । अन्यथा व्यक्तिमात्रस्य गोव्यक्तिमात्रस्य गोत्वव्यञ्जकत्वं गोव्यक्तेर्वेति प्रत्यवस्थानस्य सम्भवात् । न द्वितीयतृतीयौ(१) । न ह्येका गोव्यक्तिरेकधर्मवती वेति प्रतीतिः, किन्तु यथैकस्यां गवि गौरित्यवभासस्तथा व्यक्त्यन्तरेऽपीत्येकानेकविमतिगोचर एवाकारो-

---

न्यायलीलावतीकण्ठाभरणम्

स्वाभाव्यमित्यनुभवस्तदधीन एवेत्यर्थः । गोस्वाभाव्यं व्यक्तिमात्रस्य गोव्यक्तेर्वेति विकल्प्य दूषयति व्यक्तिमात्रस्येति । व्यक्तिविशेषस्येति । काश्चिदेव व्यक्तयस्तथा न तु सर्वा येनातिप्रसक्तिः स्यादित्यर्थः । अन्यथा गोत्वव्यञ्जकत्वेऽप्ययं विकल्पः समान इत्याह अन्यथेति । एकानेकेति । गवाकारानुगतप्रत्ययस्यैकोऽनेको वा विषय इत्यत्र विमतिरेवातोऽनुगतप्रत्ययान्न जातिरित्यर्थः । नन्वनन्तासु व्यक्तिषु कथमेकधर्माग्र-

न्यायलीलावतीप्रकाशः

को धर्मः सास्नादिमत्त्वमेव किं नावच्छिन्द्यादिति भावः । एकगोस्वभाववदिति पाठ एकस्याः गोव्यक्तेः स्वोऽसाधारणो धर्मः सास्नादिस्तद्वदित्यर्थः । भावमविद्वान् शङ्कते व्यक्तिमात्रस्येति । उक्ताभिप्रायेण परिहरति व्यक्तिविशेषस्येति । न चानन्त्यव्यभिचाराभ्यां व्यक्तिषु सङ्केत-

न्यायलीलावतीप्रकाशविवृतिः

रणत्वम् । एतच्चोपलक्षणं ज्ञानवृत्तिव्यवहारकारणत्वमित्यपि द्रष्टव्यम् । तत्र प्रथमे गोत्वस्य तत्र गोत्वेऽवृत्तेरिति हेतुः, अन्यत्र तज्ज्ञानावृत्तित्वादिति, गोत्वस्येत्यनुषञ्जनीयमिति । यद्यपि पूर्वत्र ज्ञानयोः सादृश्यघटकत्वे गोत्वसिद्धिरित्याशङ्का न समाहिता, तथापि सादृश्यमपि सास्नादिमद्विषयकमेवेत्युक्तकल्पमेवेति भावः । स्वोऽसाधारणो धर्म इति । इदं च एकव्यक्त्यासौ स्वभाववदिति मूलपाठपक्षे योजनम् । सास्नादिमत्त्वपरत्वव्याख्यायां नातिप्रसङ्गोऽत आह भावमिति । तच्चैके-

---

(१) नापरौ इति मा० पु० पाठः ।

ऽवभासते । असत्यभेदप्रतिभासे शब्दव्यवहारानुपपत्तिरिति चेन्न । अतद्व्यावृत्त्या वा आकारसाधारण्येन वा तदुपपत्तेः । यदर्थक्रियायां नोपयुज्यते न तत्सद्व्यवहारयोग्यम् , यथा गगनकमलम् । नोपयुज्यते च सामान्यमर्थक्रियायामतो न सामान्यं वस्तुभूतम् इति ।

अत्रोच्यते । अतद्व्यावृत्तौ कस्तदर्थः ? एकं स्वलक्षणं एकजातीयं वा ? आद्येऽसाधारण्यम् । अन्यत्र जातिस्वी-

---

न्यायलीलावतीकण्ठाभरणम्

द्धमन्तरेण शक्तिग्रह इत्यत आह असतीति । अभेदप्रतिभास इति । स्वधर्म्मवत्तत्प्रतिभास इत्यर्थः । अतद्व्यावृत्त्येति । अगोव्यावृत्तिरूपैकधर्म्मवत्त्येत्यर्थः । आकारसाधारण्येन—गवाकारानुभवजनकेन सर्वगोलक्षणसाधारण्येन । जातीनामसत्त्वं साधयति यदर्थेकति । यन्न जनकं न तत् सद्व्यवहारविषय इत्यर्थः । न च सामान्यजन्यं किञ्चिदस्तीति भावः ।

आद्य इति । आकाराकारिणोरभेदादेकमेव गवाकारानुगतं

न्यायलीलावतीप्रकाशः

स्य गृहीतुमशक्यत्वात शक्यतावच्छेदको धर्मः स्वीकर्त्तव्य इत्याह असत्यभेदेति । अतद्व्यावृत्त्या अगोव्यावृत्त्येत्यर्थः । आकारसाधारण्येनेति । साधारण्यं सादृश्यं तच्चैकशब्दप्रयोजनकत्वमित्यर्थः । यदर्थक्रियायामिति । हानादावित्यर्थः। यद्यपि सद्व्यवहारयोग्यत्वमेवार्थक्रियोपयोग इति साध्याविशिष्ट्यं, तथापि यदर्थक्रियायां नोपयुज्यते इत्यस्य यदर्थक्रियोपयोगित्वेन न प्रतीयत इत्यर्थः ।

ननु साधारणाकारज्ञानविषयत्वमेव तदर्थो भविष्यतीत्यत आह आकारस्येति । आद्य इति । साधारणाकारस्य ज्ञानाभिन्नतया ज्ञान-

न्यायलीलावतीप्रकाशविवृतिः

ति । यद्यप्येकं प्रवृत्तिनिमित्तं विनैकशब्दप्रयोगजनकत्वमप्यसम्भवि, तथापि सास्नादिमत्त्वमेवादाय ज्ञानाकारस्य तथात्वमिति भावः ।

ननु साधारणेति । यद्यप्याकारसाधारण्येन वेति द्वितयविकल्पदूषणपरमिदं मूलमिति प्रथमपक्षखण्डनमसङ्गतत्वेनैव तदवतारणमयुक्तम्,

कारः। आकारस्य च किं साधारण्यं(१) साधारणस्वभावत्वं साधारणसंसर्गित्वं वा ? आद्ये ज्ञानस्थैर्यप्रसङ्गः। नेतरः। जातिस्वीकारापत्तेः। अविपर्यस्तप्रतीतिविषयत्वेन(२) वस्तुसत्त्वप्रतीतावर्थक्रियाविरहस्याहेतुत्वात् । स्वप्रतीतिलक्षणायां वा अर्थक्रियायां व्यक्त्यन्तरेऽसंसर्गमाश्रित्य व्यतिरेकस्थितौ हेतोरसिद्धेः।

---

न्यायलीलावतीकण्ठाभरणम्

ज्ञानं सर्वव्यक्तिसाधारणमिति वाच्यं, तथा चातीतानागतगोव्यक्तिष्वप्येकमेव ज्ञानं स्यादित्यर्थः। क्रियाविषयत्वेन वस्तुत्वं न त्वर्थक्रियाजनकत्वेनेत्यनुमानमपि सोपाधीत्यर्थः। विषयतया—स्वगोचरसाक्षात्कारजनकत्वेन। हेतोरसिद्धिमाह स्वप्रतीतीति। नन्वन्वयव्यतिरेकगम्यं कारणत्वं, व्यतिरेकश्च जातेर्व्यापकत्वान्नित्यत्वाच्च नास्तीत्यत आह व्यक्त्यन्तर इति। माहिषादौ गोत्वव्यतिरेकात्तत्प्रतीतिव्यतिरेक इत्यर्थः। ननु व्यापकत्वात् महिषादावपि तदसंसर्गोऽनुपपन्न

न्यायलीलावतीप्रकाशः

स्यापि स्थैर्यप्रसङ्गादविनाशित्वप्रसङ्गादित्यर्थः। वस्तुतो ज्ञाननिष्ठसादृश्यमप्येकधर्मनिर्वाह्यं, स च विषयवृत्तिरेव धर्म इत्यर्थः। यदर्थक्रियायामित्यनुमानं दूषयति अविपर्यस्तेति। प्रत्यक्षबाधितो हेतुरित्यर्थः। ननु हानाद्यभावेऽपि ज्ञानादिलक्षणक्रियास्तीत्याह स्वप्रतीतीति। ननु स्वप्रतीतावपि जातेर्न कारणत्वमन्वयव्यतिरेकाभावादित्यत आह व्यक्त्यन्तर इति। यद्यपि जातेर्व्यतिरेको नास्ति तथापि यस्यां व्यक्तौ जातिरस्ति तस्यां प्रतीतिं जनयति यस्यां च

न्यायलीलावतीप्रकाशविवृतिः

तथापि इत्यत आहेत्यस्य इत्यतोऽप्याहेत्यर्थः। तथा चोभयखण्डनपरमेव मूलमिति भावः। अक्षणिकतायामिष्टापत्तेराह—अविनाशित्वेति। ननु ज्ञानत्वेन ज्ञानस्य विनाशित्वेऽप्याकारतयाऽविनाशित्वं स्यादतोऽपरितोषादाह वस्तुत इति। स चेति। गोत्वविषयत्वमेव सादृश्यमिति भावः। व्यतिरेको नास्ति स्वरूपसम्बन्धावच्छिन्नः कालोपाधौ दि-

---

(१) साधारण्यं च किं–प्रा० पु० पाठः। (२) विषयतयेति अत्र भिन्नसम्मतो पाठो बोध्यः।

व्यापकस्य कोऽसंसर्गार्थः, असंसर्गिणो वा को व्यापकार्थ इति चेन्न । वैशेषिकनये तस्य पिण्डमात्रगतत्वात् । प्रलये सर्वपिण्डानां समुच्छेदे सामान्यमप्युच्छिद्येतेति चेन्न । (सर्व)(१)सम्बन्धिविगमे(ऽपि) स्वसत्ताव्यवस्थितेः । इयमेव हि तर्हि सर्वगततेति चेत् । न । तस्याः स्वसम्बन्धिसत्तामाश्रित्य प्रवृत्तेः, अन्यथा नित्यतैव सर्वगततेति महत्पाण्डित्यम् । सर्वगतत्वं च सर्वत्र समवायो वा, सम्बन्धान्तरं वा ? तदितरोपलम्भकहानिप्रयुक्तोपलक्षितव्यतिरेकित्वं वा ? नाद्यः, सर्वत्राप्रतीतेः । तद्व्यञ्जकसहकारिविरहाद-

न्यायलीलावतीकण्ठाभरणम्

इत्याह व्यापकस्येति । वैशेषिकनय इति । गोत्वस्य समवायः सास्नादिमतीष्वेव व्यक्तिषु न त्वन्यत्रेत्यर्थः । अन्यमते तु सर्वत्र गोत्वसमवायसत्वेऽपि गोत्वात्यन्ताभावनिबन्धनो महिषादौ तद्व्यवहारः, न त्वत्यन्ताभावाप्रतियोगित्वमेव व्यापकत्वमिति भावः । ननु यदि पिण्डेष्वेव वर्त्तते तदाऽऽश्रयाभावात् प्रत्ययो न स्यादित्यनित्यत्वं पर्य्यवस्येदित्याह प्रलय इति । इयमेवेति । सार्वदिकी स्वरूपसत्तैवेत्यर्थः । तस्या इति । यदि सर्वत्रास्याः सम्बन्धः स्यात्तदा सर्वगतता स्यादित्यर्थः । सार्वदिकीति हि सत्ता नित्यता सा तु सर्वत्र गतेत्याह अन्यथेति । तदितरेति । व्यतिरेकप्रयुक्तोपलब्धिव्यतिरेकराहितत्वमित्यर्थः । अन्यथा

न्यायलीलावतीप्रकाशः

नाहि(?) तस्यां न जनयति इत्येवंरूपान्वयव्यतिरेकाभ्यां जातेः का[illegible]मित्यर्थः । पिण्डमात्रेति । पिण्डमात्रं सास्नादिमद्रूपं तद्गतत्वाद्वा[illegible]त्यर्थः । सर्वसम्बन्धीति । आश्रयाशेषव्यक्तिनाशेऽपि स्वरूपसत्तायाः सद्भावादित्यर्थः । इयमेवेति । स्वरूपसत्तैवेत्यर्थः । तस्याः सर्वगततायाः इत्यर्थः । तदितरेति । सामान्यस्याप्रतीतिस्तदितरसहकार्यभावव्याप्त्तेत्यर्थः । सर्वत्रेति । सामान्यस्येति शेषः । तद्व्यञ्जकेति । सामान्यव्यञ्ज-

न्यायलीलावतीप्रकाशविवृतिः

गुपाधौ वेति शेषः । सर्वव्यक्तिपरत्वे विरोधोऽत आह सास्नादिमदिति ।

(१)( ) एतच्चिह्नान्तर्गतः पाठो मा० पु० नास्ति किन्तु प्रकाशकर्तुरभिमतः ।

प्रतीतिरिति चेत् । न । सम्बन्धिद्वययोग्यताया एव तत्प्रयोजकत्वात्, अन्यथा पवनादावपि रूपसम्भेदापत्तेः, नाश्वे गो-

न्यायलीलावतीकण्ठाभरणम्

घटादावपि इयं सर्वगतता स्यात् । सम्बन्धिद्वयेति । समवायः सम्बन्धिद्वये गृह्यमाणे गृह्यत एवेत्यर्थः । अन्यथेति । यदि समवाये सत्यपि तद्विशिष्टप्रतीतिः तत्रेत्युपेयमित्यर्थः । नाश्वे गोत्वमिति । तदत्यन्ताभाव एव तत्र गृह्यत इति कथं तदपि स्यादित्यर्थः । ननु समवायस्यैक्ये कथमेवं स्यात्, नहि स्पर्शसमवायादन्यो रूपसमवायो, न वा अश्वत्वसमवायादन्यो गोत्वसमवाय इति चेन्न । एकोऽपि समवायो निरूपकभेदाद् भिन्नः कालवत्, नहि य एव रूपनिरूपितः समवायः स एव स्पर्शनिरूपितः, अन्यथा वायौ रूपसमवायो नास्तीति प्रतीतिर्न स्यात्। रूपं नास्तीति तत्प्रतीतेर्विषय इति चेत् । न। समवाये नञ्सम्बन्धात्, अन्यथा रूपं नष्टमित्यस्य रूपसमवायो नष्ट इति कल्पना स्यात्, तथाच जितं मीमांसकैः । तथाच विशेष्याभेदेऽपि विशिष्ट-

न्यायलीलावतीप्रकाशः

केत्यर्थः । सम्बन्धिद्वयेति । जातिव्यक्तियोग्यता यथा गोत्वगोव्यक्त्योस्तथा गोत्वाश्वव्यक्त्योरपीति तत्रापि गौरितिप्रतीत्यापत्तेरित्यर्थः । तत्प्रयोजकत्वात्–सामान्यप्रतीतिप्रयोजकत्वादित्यर्थः। यदि च यत्राश्रयाश्रितस्वरूपमेव योग्यता तत्रापि तदाश्रितानुपलम्भः कथञ्चिद्वाच्यस्तत्राह अन्यथेति । ननु समवायस्यैकत्वे कथं रूपवन्नीरूपव्यवस्था? न च घटेन सह रूपसम्बन्धरूपत्वं समवायस्य न वाय्वादिनेति वाच्यम्, रूपसम्बन्धरूपत्वं हि समवायस्य यदि स्वरूपमेव तदा रससम्बन्धरूपत्वं न स्यात्, तयोर्विरोधात् अन्यच्च दुर्वचम । उच्यते । वायौ रूपसमवायेऽपि रूपस्यात्यन्ताभावोऽस्ति न घटे। कथमेवम्? अधिकरणस्वभावात् अबाधितरूपवन्नीरूपप्रतीतेश्च । वायौ रूपविशिष्टस्य समवायस्याभावो भवत्येव, विशेषणाभावे विशिष्टाभावस्यावश्यक-

न्यायलीलावतीप्रकाशविवृतिः

ननु समवायस्येति । तथाच नाश्वे गोत्वमित्यपि प्रतीतिरयुक्तैवेति भावः । वायौ रूपेति । तथाच न समवायमात्रं विशिष्टप्रतीतिनियामकमपि तु विशेषणतापि, सा च प्रतीतिबलकल्पनीयेति भावः । 'सविशेषणे

त्वमिति प्रतीतेश्च । न द्वितीयः, षट्पदार्थातिरिक्तपदार्थास्वीकारात् । असत्येव सम्बन्धे आनुमानिकसम्बन्धबुद्धिजनकं (१)रूपमेवेत्यमिति चेत् । न । तथा सति सर्वत्रानुमानेऽनाश्वासापत्तेः । न तृतीयः, तद्व्यतिरेकेणैव घटादावपि तद्बुद्ध्यभावात् । स्वव्यतिरेकेणापि घटस्यानुपलम्भो न तु सामान्यस्य कस्यचिदिति चेत् । न । नित्यतैषा न सर्वगतता । ततो गोव्यक्तिभिन्नपिण्डेऽप्यसत्त्वेन न सर्वगतत्वमिति सर्वमनाकुलमिति ।

सामान्यं द्विविधं परमपरं च । तत्र परं सत्ता । नन्विद-

---

न्यायलीलावतीकण्ठाभरणम्

भेदात्, यथा कालस्याभेदेऽपि वर्त्तमानादीनां भेद इति । षट्पदार्थेति । सम्बन्धान्तरस्य परिगणितपदार्थेऽन्तर्भावादित्यर्थः । नन्वनुत्पन्नायां गवि तत्रास्य सामान्यं कथं समवेयादिति तद्देशादौ तत्सम्बन्धोऽनुमीयते, न तु तत्र परमार्थतः सम्बन्धो देशस्यापि गोत्वापत्तेरित्याह–असत्येवेति । तथासतीति । अनाभासमनुमानमसदपि यदि विषयीकुर्य्यादित्यर्थः । तद्व्यतिरेकेणैवेति । तदितरोपलम्भकस्यालोकादेर्व्यतिरेकेणेत्यर्थः । नित्यतैषेति । यद्यपि महिषादौ न गोत्वव्यतिरेकप्रयुक्तस्तदनुपलम्भः किन्तु साक्षाद्व्यतिरेकप्रयुक्त इति व्यापकतैव पर्य्यवस्येत, तथापि नाश्वे गोत्वमित्यबाधितप्रत्ययादसर्वगतत्वमित्यर्थ इति भावः ।

न्यायलीलावतीप्रकाशः

त्वादित्यन्ये । घटेतरसहकारिविरहेऽनुपलम्भस्य घटादावपि तुल्यत्वादित्याह तद्व्यतिरेकेणैवेति ।

यदि प्रमाणग्राह्यत्वमेव सत्त्वं स्यात्तदा प्रमित्यविषयत्वदशायां

न्यायलीलावतीप्रकाशविवृतिः

ही'ति न्यायेन विशेष्यवति विशिष्टाभावोऽपि विशेषणविरहपर्यवसन्न एवेति पूर्वकल्प एव पर्यवसानमित्यरुचेराह–अन्य इति । प्रमाणग्राह्यत्वमिति । प्रमाणजन्यज्ञानोपहितत्वमित्यर्थः । तेन तेऽभ्वरज्ञानमादाय

---

(१) अनकमरूप-इति मु० पु० पाठः ।

मसम्बद्धं, प्रमाणग्रहणयोग्यतैव सत्ता, प्रमाणग्रहणयोग्यता वस्तूनां स्वरूपं, तद् व्यावृत्तं चेदनुगतव्यवहारासिद्धिः, अनुवृत्तं चेत्सैव सत्तेति चेन्न। व्यावृत्तमेव हि स्वरूपं सत्ता, अनुवृत्तव्यवहारस्तु प्रमितत्वोपाध्यालम्बनः, सच्छब्दप्रवृत्तिरपि तत्रैव। यद्वा सामान्यविशेषसमवाय(१)व्यावृत्तेष्वेव रूपेषु सदित्यनुगतव्यवहारोऽस्तु।

अत्रोच्यते। प्रमितत्वेन तुल्येषु पदार्थेषु भावाभावव्यवहार-

---

न्यायलीलावतीकण्ठाभरणम्

परं व्यापकमपरं व्याप्यम्। व्याप्यसत्तामाक्षिपति प्रमाणेति। अतएव शशविषाणादावसत्त्वव्यवहार इति भावः। सच्छब्दप्रवृत्तिरपीति। सत्पदसंकेतोऽपि प्रमितत्वोपाधिनिबन्धनो न तु सत्तानिबन्धन इत्यर्थः। यद्वा यत्रैव वैशेषिकानामर्थपदं पारिभाषिकं तासु व्यक्तिषु सदित्यनुगतव्यवहार इत्याह यद्वेति।

प्रमितत्वेनेति। भावाभावव्यवहारवैचित्र्येणान्यथानुपपत्त्या भावमात्रवृत्तिः कश्चिद्धर्मोऽभ्युपगम्यत एवेत्यर्थः। ननु तथापि सत्ता

न्यायलीलावतीप्रकाशः

सतोऽप्यसत्त्वं स्यादित्यत उक्तं योग्यतेति। प्रमितत्वेति। परम्परासम्बद्धप्रमत्वजातिनिबन्धन इत्यर्थः। तत्रैवेति। प्रमितत्वोपाधिविशिष्ट इत्यर्थः। यत्रापि न सत्तासमवायस्तत्रापि तन्निबन्धः सद्व्यवहार इत्यावश्यकत्वात् तदेव निमित्तमित्याह यद्वेति।

सत्तास्वीकारे तु न भावाभावव्यवहारवैचित्र्यानुपपत्तिरित्याह भावव्यवहारेति। भावस्यैवेति। अभावव्यावृत्तधर्मविशेषस्यैवेत्यर्थः। सत्ता हि द्रव्यगुणकर्मसु समवायेन वर्त्तते सामान्यविशेषयोश्चैकार्थसमवायेन,

न्यायलीलावतीप्रकाशविवृतिः

व्यक्त्यसम्भवः। प्रमत्वजातीति। अनुभवत्वजातीत्यर्थः। तन्निबन्धन इति। व्यावृत्तस्वरूपमात्रनिबन्धन इत्यर्थः। ननु सत्ताया भावत्वव्यवहारोपपादकत्वे सामान्यादौ तद्व्यवहारो न स्यादित्यत आह सत्ता हीति।

---

(१) समवायाद्व्यावृत्तेषु—मु० पु० पाठः।

वैचित्र्यानुपपत्तेः। भावव्यवहारगोचरस्य भावस्यैव सत्तास्व-
भावत्वात्। प्रमितत्वम् भावव्यवहारगोचरो भावविरोधित्वं चा-
भावव्यवहारगोचर इति चेत्। न। अभावव्यवहारगोचरस्य(१)
प्रमितत्वेन विरुद्धभावाभावव्यवहारप्रसङ्गात्। भवत्येवेति चेत्।
न। घटाघटादिव्यवहारमर्यादया निषेध्यनिषेधव्यवहारयोः परस्प-

---

न्यायलीलावतीकण्ठाभरणम्

याः किमायातमित्यत आह भावव्यवहारेति। अभावव्यवहारेति। यदि प्रमि-
तत्वमभावाद्यावृत्तं स्यात्तदाऽसाधारण्येन भावव्यवहारं जनयेन्न त्वे-
वमित्यर्थः। प्रमितत्वोपाधिनिबन्धनमेव विरुद्धभावाभावव्यवहार-
प्रसङ्गमापादयति विरुद्धेति। आशयमविद्वानाह भवत्येवेति। आशयमु-
द्घाटयति घटाघटेति। यथा घटाघटव्यवहारो नैकसामान्यनिबन्धन-

न्यायलीलावतीप्रकाशः

समवाये चानवस्थाभिया समवायानङ्गीकारेऽपि स एव समवाय-
स्तत्र वर्त्तते। न चैवमननुगमः, वृत्तीनां भेदेऽपि समवायस्यैकत्वात्। उ
न चाभावेनापि समं तस्य यथाकथंचित्सम्बन्धोऽस्तीति वाच्यम्। उ
क्तत्रयेण नियमादिति सम्प्रदायविदः। भावविरोधित्वं द्रव्यत्वादिषट्का
त्यन्ताभाववत्त्वमित्यर्थः। अभावत्वमनुगतमज्ञात्वापि अत्यन्ताभाव-
व्यक्तिविशेषस्य प्रमितत्वात्। यदि च भावव्यवहारगोचरः प्रमि-
तत्वं, तर्हि तत्रापि, तथाच तत्त्वमभावव्यवहारगोचर इति वदतो
व्याघातापत्तिरभावस्यापि प्रमितत्वादित्याह अभावव्यवहारविषयस्येति।

न्यायलीलावतीप्रकाशविवृतिः

उक्तेति। तथाच यत्र सत्तायाः सम्बन्धे समवायाः पतति स भाव इति
भावः। ननु विरोधः सहानवस्थानं भावसामान्येन सहासम्भवि,
प्रतियोगिपरत्वेऽपि भावपदस्यान्योन्याभावाव्याप्तेः, वध्यघातकत्वं
च विरोधोऽत्र न सम्भवत्येवेत्यत आह द्रव्यत्वादीति। ननु भावत्वा-
ज्ञानेऽत्यन्ताभाववत्त्वमपि दुर्ज्ञेयमत आह अभावत्वमिति। तर्हि तत्रापि
अभावेऽपि, एतदनन्तरं तथाचेति शेषः। तत्त्वं भावविरोधित्वम्।
क्वचिद्विरोधित्वमिति पाठः, स सुगम एव। अत्राभावानुमाने विपक्ष

---

(१) विषयस्य-प्रा० पु० पाठः प्र० अ०।

रविरुद्धप्रतिबन्धासिद्धौ(१) भावाभावव्यवहारयोरपि परस्परविरुद्धनिमित्तकत्वव्यवस्थितेः । तस्माद्विमतिविषयाणि द्रव्यगुणकर्माण्येकसामान्यवन्ति अनित्यत्वात् गोवत् । न चेदेवं गोत्वमपि न स्यात् , सास्नादिमत्त्वेनैव गोव्यवहारोपपत्तेः । न च भिन्नानां

---

न्यायलीलावतीकण्ठाभरणम्

तथा भावाभावव्यवहारोऽपि प्रमितत्वमात्रनिबन्धनो न भवितुमर्हतीत्यर्थः । विमतिविषयाणीति प्रत्यक्षाणामेव द्रव्यगुणकर्मणां पक्षता, तेन न हेतोर्भागासिद्धिः । तदुत्तरमुपादेयवृत्तिपरसामान्यस्य उपादेयवृत्तित्वं साध्यमीयम् । एकसामान्यवन्ति परस्परवृत्तिसामान्यवन्तीत्यर्थः । न चाप्रसिद्धिः, श्रवणधारणादौ तथा सिद्धेः, इह तु पक्षधर्मताबलात् परस्परत्वमेषामेव स्यात् तथाच सत्तासिद्धिः । यद्वा रूपादयो द्रव्यवृत्तिजातिमन्तः जातिमत्त्वात् घटवत् । न च कर्मणि व्यभिचारः, पक्षसमत्वात् । न च द्रव्यत्वमुपाधिः, सदाकारानुगतप्रतीत्यन्यथानुपपत्त्या गुणेऽपि तत्सत्त्वेन साध्याव्यापकत्वात् । द्र-

न्यायलीलावतीप्रकाशः

निमित्तकत्वस्थितेरिति । तथाच नैकस्यां व्यक्तौ भावव्यवहार इत्यर्थः । अपि च भिन्नेषु सदित्यनुगतव्यवहारस्य अननुगताप्रयोज्यत्वस्थितेरनुगतधर्मस्य साक्षात्सम्बन्धे बाधकादेव परम्परासम्बन्धासिद्धिः प्रमाणप्रवृत्तेः प्राक् सदितिबुद्ध्यनापत्तेः, अतीतानागतयोरपि प्रामाणिकतया सदितिबुद्ध्यापत्तेश्च । तस्मादिति । नन्वेकसामान्यवत्त्वसाधने सिद्धसाधनम्, द्रव्यादित्रयवृत्त्येकसामान्यसाधने च सा-

न्यायलीलावतीप्रकाशविवृतिः

बाधकं यदेव प्रमितत्वात्तस्माया भेदकान्तरमाह अपि चेति । प्रमाणेति । तदप्रतिसन्धानेऽपि सद्व्यवहारादिति भावः । अतीतेति । यद्यपि वर्तमानत्वप्रत्ययाभावेऽपि तयोः सद्बुद्धिरिष्टैवान्यथा सत्तास्वीकारेऽप्यगतेः, तथापि पूर्वोक्तयुक्त्योरेव तात्पर्यम् । विमतिविषयाणीति मूलं भावासिद्धिवारकम् । यद्यपि विषयशब्दस्याजहल्लक्षणत्वादयुक्तं, तथापि भिन्नशब्दस्य विषयविलक्षणपरान्यपदार्थमाश्रित्य समाधेयम् । सिद्धसाधन-

---

(१) स्थितौ—मु० पु० पाठः ।

सामान्यविशेषसमवायवदाभिलव्यवहारगोचरत्वम्, सर्वत्र सामा-
न्योच्छेदप्रसङ्गात् । सामान्यादौ चारोपितसत्तापक्षेणैव तदु-
पपत्तेः । अपरं द्रव्यत्वादि(१) ।

---

न्यायलीलावतीकण्ठाभरणम्

द्रव्यत्वगुणत्वकर्मत्वानि जातिव्याप्यानि जातिमन्निष्ठात्यन्ताभावप्रति-
योगित्वात् घटत्ववत् । न चाप्रयोजकत्वम्, सदाकारबुद्धीन्द्रियसाधार-
ण्यात्, अन्यथा अनुपपत्तेरिति भावः । ननु यथा सामान्यानां विशे-
षाणां चानुगमः सामान्यमन्तरेण तथा प्रकृतेऽपि स्यादित्यत आह
नचेति । समवायग्रहणं सम्पातायातम् । तर्हि गोत्वादिकमपि त्वदभ्युप-
गतं न स्यादित्यर्थः । ननु भावबुद्धिवैचित्र्यानुरोधात्तदा सत्ता अभ्यु-
पेयेत यदि सा तत्र वर्त्तेतेत्यत आह सामान्यादाविति । तदुपपत्तेः—भाव-

न्यायलीलावतीप्रकाशः

व्याप्रसिद्धिः । मैवम् । रूपादयो द्रव्यवृत्तिजातिमन्तः जातिमत्त्वात्
घटवत् । न च द्रव्यत्वमुपाधिः, उक्तविपक्षबाधकाद्धेतोः साध्यव्याप्य-
त्वेन तदव्यापकतया साध्याव्यापकत्वात् । यद्वा द्रव्यत्वादीनि जाति
व्याप्यानि जातिमन्निष्ठात्यन्ताभावप्रतियोगिजातित्वात् घटत्ववदिति
विवक्षितत्वात् ।

न्यायलीलावतीप्रकाशविवृतिः

मिति । द्रव्यत्वादिकमादायेति भावः । न च लाघवसाहित्यादेकसा-
मान्यसिद्धिरिति वाच्यम् । तस्य कल्पनीयत्वेनैकत्वलाघवानादरा-
दिति भावः । रूपादय इति । आदिपदग्राह्यं कर्म, तथाच लाघवान्नित-
यवृत्तिरेकैव जातिः सिद्ध्यतीति न द्रव्यवृत्तिजात्याऽर्थान्तरं कल्प-
नीयतायास्तुल्यत्वात् । न च गुणकर्मद्रव्यैकदेशवृत्तिजात्याऽर्थान्तरं
द्रव्यत्वेन सङ्करापत्त्या बाधात् । यद्वेति । व्याप्यत्वं भेदगर्भमतो नार्थ-
न्तरम् । जातित्वादौ व्यभिचारादन्तिमजातिपदम् । अनवस्थावाच-
कत्वेन सामान्यसिद्धव्यभिचारवारकत्वेन वा प्रथमविशेषणसार्थकता,
निर्विकल्पकानुमाने विशिष्टपदवत् । रजतत्वकलशत्वयोरपि द्रव्यत्वादा-

---

(१) तेः—ननु इति प्रा० पु० पाठः ।

ननु परापरव्यतिरिक्तमपि सामान्यमस्तु रजतत्वकलशत्ववत् । न । परस्परपरिहारवतोः सामान्ययोः समावेशे तदतज्जातीयविरोधोच्छेदापत्तेः । कलशजातीयं च रजतसामग्र्यपेक्षकार-

---

न्यायलीलावतीकण्ठाभरणम्

बुद्ध्युपपत्तेः ।

परापरव्यतिरिक्तमपीति । परस्परात्यन्ताभावसमानाधिकरणयोरपि जात्योः सामानाधिकरण्यमस्त्वित्यर्थः । तदतज्जातीयेति । गोत्वागोत्वयोः समावेशे गवाश्वाकार एक एव पिण्डः स्यान्न च तथास्ति, तथा च न समावेश इत्यर्थः । यदि रजतत्वकलशत्वयोः समावेशस्तदा गोत्वाश्वत्वयोरपि कदाचित् स्यात् । यत्तु करस्थितपिण्डानुपलम्भान्न तथा तदा इदानीं तथा दर्शनाभावेऽपि कदाचित् प्रेक्ष्यत इत्यत आह कलशजातीयं चेति । तथापि न समावेशः, किन्तु रजतत्वादिव्याप्यं भिन्नमेव कलशत्वं संस्थानविशेषवृत्ति च न कलशत्वं महान्नीलो घटश्चलतीति प्रतीत्या द्रव्यत्वसिद्धेः । किंच संस्थानवृत्तित्वेऽपि अन्यतर-

न्यायलीलावतीप्रकाशः

परापरव्यतिरिक्तमपीति । परापरभावं विनापि सामान्यमस्त्वित्यर्थः । रजतेति । ननु संस्थानवृत्त्येव घटत्वं न द्रव्यवृत्तीति न तयोः समावेशः । संस्थानं ह्यवयववृत्तिः संयोग एव, युक्तं चैतत्, कथमन्यथा तस्मिन्नेव रजते तत्संस्थानसत्त्वासत्त्वाभ्यां घटतदभावव्यवहारः । मैवम् । तत्रापि अन्यतरकर्मजत्वादिना सङ्करप्रसङ्गात्, कथमन्यथा तस्मिन्गुणगतजातौ सङ्करो न दोष इति तु निर्बीजमेव वैजात्यमेवेति । अन्यथा तन्तुपटयोरिव घटरजतयोरभेदानुभवः कदापि न स्यात् । अन्ये तु । रजतत्वादिव्याप्यं नानैव घटत्वम् । न चैवं रजतादिघटेष्वनुगतव्यवहारो न स्यात् घटत्वस्य रजतादिप्रत्येकविश्रान्ततया व्यक्तिस्थानीयत्वादिति वाच्यम् । तादृक्संस्थानवत्त्वेनोपाधिना तथा व्यवहारात् ।

न्यायलीलावतीप्रकाशविवृतिः

इह परापरेति । परस्परपरापरेत्यर्थः । ननु करान्वित्ताकारवस्तूपलम्भापत्तिस्तादृशजातिद्वयबाधिका, सा च गुणगतजातौ नास्त्येव, गुणस्य निराकारत्वादत आह गुणगतजाताविति । एतज्जातीयताविरोधिभङ्गप्रस-

णजन्यं तन्निरपेक्षकारणजन्यं वा ? आद्ये रजतसामग्रीविराहिणि कनककलशे नास्त्येव रजतकलशत्वमिति परापरभाव एव। द्वितीये तु स्वतन्त्रसामग्रीप्रसूतयोः रजतकलशयोर्वैजात्यमेव तन्तुपटवत्। उभयथापि न नियमविरोधः। अस्तु वा परापरव्यतिरिक्तमपि तृतीयम्, तथापि न काचित्क्षतिः। तथा च समुच्चये चकारः

---

न्यायलीलावतीकण्ठाभरणम्

कर्मजत्वादिना परापरभावानुपपत्तिस्तदवस्थैव, अन्यतरकर्मजत्वादिव्याप्यनानाकर्मसत्त्वाङ्गीकारेऽपि तु रजतत्वादिव्याप्यतैव स्वीक्रियतां तेन रूपमहत्त्वादिसामानाधिकरण्यधीरप्युपपादिता स्यात्। यद्वा संस्थानविशेषैकार्थसमवायि द्रव्यत्वमेव घटत्वम्। न नियमविरोध इति। परापरभावापन्ने एव जाती समाविशत इति यो नियमस्तद्विरोधो नास्तीत्यर्थः। तृतीयमिति। सामान्यमिति शेषः। तथा भूतत्वमूर्तत्वे अपि जाती एवेति भावः। नन्वनभ्युपगमवादोपि युक्त्याभासमपेक्षत इत्यत आह तथाचेति। समुच्चयार्थ इत्यतो समुच्चयार्थ इत्यर्थः।

न्यायलीलावतीप्रकाशः

तर्हि संस्थानवृत्त्येवान्यतरकर्मजत्वादिव्याप्यं नानैव घटत्वमस्तु तज्ज्ञानात्तस्यावश्यकत्वात्, एवं संस्थानविशेषान्वयव्यतिरेकानुविधानमपि घटत्वव्यवहारस्य संगच्छत इति चेन्न। महान्नीलो घटश्चलतीति परिमाणरूपविशेषकर्मसामानाधिकरण्येन घटत्वानुभवात्। न च गुणात्मकसंस्थाने तत्सम्भवः। यद्वा संस्थानविशेषैकार्थसमवायिद्र-

न्यायलीलावतीप्रकाशविवृतिः

कुविपक्षबाधकस्य समानत्वादिति भावः। तथाच महान्नीलो घटश्चलतीतिप्रतीतेर्द्रव्यवृत्ती एव ते जाती इति रहस्यम्। ननु घटत्वस्वीकारे मानाभावः अनुगतमतेरन्यथैवोपपादनीयत्वादत आह यद्वेति। संस्थानस्यावयववृत्तित्वादाह एकार्थसमवायीति। कपालरूपादावतिप्रसङ्गवारणाय द्रव्यपदम्। संस्थाने च विशेषो वैजात्यमेवानुभवसिद्धम्। न चान्यतरकर्मजत्वादिना तत्रापि सङ्करः। अन्यतरकर्मजत्वादेरेव नानाभूतस्य स्वीकारात्, अनुगतव्यवहारस्तु तेष्वन्यतरकर्मजत्वोपाधिनैव। नत्वेवं तदेव वैजात्यं घटत्वमस्त्विति वाच्यम्। महत्त्वादि-

परमपरं चेति ॥

इति न्यायलीलावत्यां सामान्यविचारः ।

---

## समानजातिगुणकर्मकार्याः परमाणवोऽन्योन्यव्यावर्तकधर्माः

---

न्यायलीलावतीकण्ठाभरणम्

समानजातिगुणकर्मकार्य्या इति बहुव्रीहिस्तत्र कार्य्यपदं गोबृषन्यायेन द्रव्यपरम् । एकदोत्पन्नपाकजाः पार्थिवपरमाणवः पक्षः । तत्र रूपादिभिरर्थासम्भवात् न व्यावृत्तेषु पच्यमानेषु परमाणुषु समानगुणकर्मसामान्यवत्सु विशेषानन्तरेण योगी व्यावर्तकं पश्यति । न चान्या-

न्यायलीलावतीप्रकाशः

व्यत्वमुपाधिर्घटत्वम् । समुच्चय इति । अनुक्तसमुचय इत्यर्थः ।

समानजातीति । गोबृषन्यायेन कार्यपदं कार्यद्रव्यपरम् । ननु विजातीयानां जातिभिरेव व्यावृत्तत्वात् सिद्धसाधनवारणार्थं समानजातिग्रहणमस्तु, गुणकर्मकार्याणां व्यर्थमुपादानम् एकस्य परमाणोः पार्थिवस्य विजातीयैः पाकजैः विजातीयेन कर्मणाप्यभेदेन सिद्धसाध-

न्यायलीलावतीप्रकाशविवृतिः

सामानाधिकरण्यप्रतीतिविरोधादिति दिक् । अनुक्तेति । नचैवं गोत्वाश्वत्वयोरपि सामानाधिकरण्यं स्यादिति वाच्यम् । प्रतीतिबलेन क्वचित्सामानाधिकरण्यस्य क्वचिदसामानाधिकरण्यस्य च कल्पनात्, अन्यथोपाध्योरपि तथाभूतयोः क्वचिदविरोधो न स्यादिति भावः । यत्तूपाध्योः परम्परासम्बन्धः, तेन च सम्बन्धेन परस्परात्यन्ताभावसमानाधिकरणयोर्जात्योरपि सामानाधिकरण्यमेव, साक्षात्सम्बन्धेन तु तथाभूतयोः सामानाधिकरण्यं विरुद्धमिति विनिगमकमिति । तन्न । एवं संयोगयोः सामानाधिकरण्याभावापत्तेः । यदि च घटत्वपृथिवीत्वादेः सामानाधिकरण्ये घटत्वपटत्वादेः सामानाधिकरण्यं प्रतीयते, तत्र च 'सति सम्भव' इतिन्यायेन परस्परात्यन्ताभावसामानाधिकरण्यमेव जात्यसामानाधिकरण्यनियामकं कल्प्यत इति न तादृग्जातिस्वीकार इति मतम्, तदाभ्युपगमवादपर एव ग्रन्थः ।

सिद्धसाधनासम्भवादिति । गुणादिकमादायेति शेषः । पृथिवीत्व-

सम्बन्धिनः व्यावृत्तज्ञानविषयत्वात्(१) द्रव्यत्वाद्वा गवादिवत्(२)। व्यावृत्तज्ञानविषयाश्च द्रव्यत्वाद्घटादिवत्। अणवश्च संशयविष-

---

न्यायलीलावतीकण्ठाभरणम्

वृत्तानामारम्भकसंयोगाधारतामन्तरेण घटशरावोदञ्चनादिनिष्पत्तिर्न च तामन्तरेण विलक्षणरूपरसगन्धस्पर्शानुभव इति भावः। अन्योन्येत्यभिधानान्न घटादिव्यावर्त्तककिञ्चिद्धर्मवत्तया सिद्धसाधनम्। सम्बन्धिन इति। समवायिन इत्यर्थः। तेन न परम्परासम्बन्धेन केनचिद्व्यभिचारः। समवेतविशेषसिद्धिः—व्यावृत्तज्ञानविषयार्थत्वादिति हेत्वर्थः, तेन न सामान्यादौ व्यभिचारः। अत एव हेत्वन्तरमाह द्रव्यत्वादिति। हेतुं साधयति व्यावृत्तेति। प्रकारान्तरेण विशेषा-

न्यायलीलावतीप्रकाशः

नासम्भवात्, एकस्य पार्थिवपरमाणोर्भिन्नजातीयद्रव्यारम्भकत्वेऽप्यभेदाच्च। अत्राहुः-समानजातीयत्वेन समानगुणत्वेन समानकर्मत्वेन वा पृथगेव पक्षत्वं, साध्यं च परस्परव्यावर्तकधर्मवत्त्वमतो न घटादिभ्यो व्यावर्त्तकधर्मेण सिद्धसाधनम्, हेतुरपि परस्परव्यावृत्तत्वज्ञानविषयत्वम्। अग्रे साध्यमपि तदेव। यश्च व्यावर्त्तको धर्मः स एव विशेषः। विशेषसाधकं मानान्तरमाह अणवश्चेति। परस्पराभेदसंशयविषयत्वं साध्यमतो न सिद्धसाधनम्। ननु तावतापि

न्यायलीलावतीप्रकाशविवृतिः

जलत्वादिकमादाय सिद्धसाधनमिति समानजातीयत्वेनेति। गन्धस्नेहादिकमादाय सिद्धसाधनमिति समानगुणत्वेनेति। तिर्यग्गमनोर्ध्वज्वलनादिना तद्वारणाय समानकर्मत्वेनेति। इदमुपलक्षणम्, समानद्रव्यत्वेनापि पक्षतासम्भवादिति न सिद्धसाधनमिति। यद्यपि साधनदशायां यथाश्रुते न सिद्धसाधनमन्यथा तु विवक्षितेऽपि, तथापि संशयमात्रस्य विशेषदर्शननिवर्त्यत्वेन विशेषसिद्धिरभेदसंशयस्यैव व्यावर्त्तकधर्मदर्शननिवर्त्यतया सिद्धेरिति प्रकृतोपयुक्तत्वे तात्पर्यम्। परस्परव्यावर्त्तकेत्यादिविवक्षितसाध्ये व्यभिचार-

---

(१) ज्ञानविषयार्थत्वादिति मिश्रसंमतोऽत्र पाठो बोध्यः।

(२) त्वात घटादिवद्-अणव इति प्रा० पु० पाठः।

याः द्रव्यत्वात् । स च सन्देहो विशेषदर्शनान्निवर्तते सन्देहत्वा-त्, स्थाणुपुरुषसन्देहवत्(१) । ते च निश्चयविषयाः द्रव्यत्वात् । स च निश्चयो विशेषदर्शनाधीनो निश्चयत्वात् ।

न पृथक्त्वेन सिद्धसाधनात् । व्यावृत्तबुद्धिश्च किमन्योन्याभा-वविशिष्टबुद्धिः व्यावर्तकधर्मविशिष्टबुद्धिर्वा ? नाद्यः । अन्योन्याभा-वेनैवोपपत्तेः । न द्वितीयः । स्वगतसंख्यापरिमाणादिभिरेवोपप-त्तेः । संशयविषयाश्च योगिनोऽयोगिनो वा ? नाद्यः । सर्वज्ञत्वेन त-

---

न्यायलीलावतीकण्ठाभरणम्

नेव साधयितुं पीठमारचयति अणवश्चेति । स च सन्देह इति । भिन्न-त्वाभिन्नत्वकोटिकसन्देह इत्यर्थः । सन्देहत्वादिति । विषयान्तरसञ्चारा-नाश्यसन्देहत्वादित्यर्थः । विशेषसाधकं मानान्तरमाह—ते चेति । च-न्द्रमःपरभागेऽपि योगिनिश्चयविषयत्वान्न व्यभिचारः । स च निश्चय इ-ति । सन्देहविपर्ययोत्तरकालीनो निश्चय इत्यर्थः । निश्चयत्वादित्यत्रा-पि तत्त्वेवविवक्षिता(?) अनुगतेति तेषामपि कथञ्चिद् व्यावृत्तबुद्धिज-नकत्वादित्यर्थः

न्यायलीलावतीप्रकाशः

न विशेषसिद्धिरित्यत आह स चेति । विशेषदर्शनादिति । परस्परव्याव-र्त्तकधर्मदर्शनादित्यर्थः । सन्देहत्वात् परस्पराभेदसन्देहत्वादि-त्यर्थः । यद्यपि विषयान्तरसंचारेणापि सन्देहो निवर्त्तत इत्यनैका-न्तिकम्, तथापि पार्थिवपरमाणूनामन्योन्याभेदसन्देहविषयत्वेना-न्योन्यव्यावर्त्तकधर्मदर्शननिवर्त्यसंशयविषयत्वं विशिष्यैव साधनी-यम् । मतान्तरमाह ते चेति । स च निश्चय इति । अत्र विशेषदर्शनाधीन-

न्यायलीलावतीप्रकाशविवृतिः

माशङ्क्याह परस्पराभेदेति । यद्यपीति । एवंसत्यपीति शेषः । तथापीति । यद्यप्येवमप्युत्पन्नविनष्टे क्वाचिद्व्यभिचार एव, तथापि नित्यत्वमपि हेतौ विशेषणमिति भावः । यथाश्रुतहेतोः संशयविपर्ययानुत्तरभावि-प्रत्यक्षे व्यभिचारादन्यथा व्याचष्टे अत्रेति । ननु तथापि प्रत्यक्षविष-

---

(१) स्थाणुसंशयवत्-प्रा० पु० पाठः ।

स्य सन्देहाभावात् । न द्वितीयः । अयोगिनां परमाणुदर्शनस्यैवाभावात् । प्रमेयत्वेन समवायस्यापि संशयविषयत्वेन विशेषवत्त्वप्रसङ्गात् । निश्चयत्वं च विशेषनिश्चयेनैव व्यभिचारीति न विशेषसिद्धिः ।

नैवम् । समानजातिगुणकर्मकार्याणामणूनां द्रव्यत्वेनान्योन्यव्यावर्तकसमवायिधर्मविशिष्टबुद्धिविषयत्वस्य साधनात् । न च पृथक्त्वादिकमेव(१) परमाण्वन्तरात्परमाणोर्व्यावृत्ति(२)बुद्धिजनकमस्तु । तस्य परमाण्वन्तरवृत्ति(३)पृथक्त्वादिना

न्यायलीलावतीकण्ठाभरणम्

अप्रयोजकत्वमाह प्रमेयत्वेनेति । विशेषनिश्चयेनैवेति । अन्यथा अनवस्थानादित्यर्थः ।

समवायिधर्मेति वर्त्तमानायाऽन्योन्याभावव्यावर्त्तनाय । या हीच परस्परव्यावर्त्तकनिश्चयाधीननिश्चयविषयत्वं साध्य( परस्परव्यावृ-

न्यायलीलावतीप्रकाशः

निश्चयविषयत्वादिति हेतुरतो गुणवदिन्द्रियजन्यज्ञानविषयत्वज्ञानस्यापि निश्चयहेतुत्वान्न व्यभिचारः ।

अप्रयोजकत्वमाह प्रमेयत्वेनेति । निश्चयत्वं चेति । विशेषेऽपि विशेषाभ्युपगमे अनवस्थानादित्यर्थः । या

समवायिधर्मेति । तथाच नान्योन्याभावेन सिद्धसाधनमिति भावः ।

न्यायलीलावतीप्रकाशविवृतिः

यद्घटादौ व्यभिचारः, नहि तन्निश्चयस्य विशेषदर्शनजन्यत्वनियमः । न चानुमितिमादायैव तत्र साध्यम् , अनुमितेरप्यनावश्यकत्वादित्यत आह गुणवदिति । गुणवदिन्द्रियजन्यज्ञानविषयत्वमेव विशेष इति तज्ज्ञानमपि विशेषदर्शनमिति तदधीननिश्चयविषयस्य तत्रासत्त्वाल्लोकदोष इति भावः । केचित्तु गुणवदिति दृष्टान्तः । इन्द्रियजन्यत्वं भूयोऽवयवेन्द्रियसन्निकर्षजन्यत्वं विशेषोऽन्यच्च पूर्ववदेवेति वदन्ति । उभयमतेऽपि योग्यतागर्भं साध्यमतो न व्यभिचारशङ्का । अत्र

(१) दिकमपि–प्रा० पु० पाठः । (२) व्यावृत्त–प्रा० पु० पाठः ।

(३) वर्ति–प्रा० पु० पाठः ।

सदृशत्वात् । या हि यतो व्यावृत्तबुद्धिः सा च न तत्सदृशधर्मकार्या यथाऽश्वात्कुञ्जरस्य । तदणोरपि नाण्वन्तराद्व्यावृत्तबुद्धिस्तत्सदृशधर्मकार्या । सत्ता वा सामान्यसमवायव्यतिरिक्तभावा-

न्यायलीलावतीकण्ठाभरणम्

ति । यद्यपि गोत्वाश्वत्वयोरपि जातित्वेन सादृश्याद् व्यावर्त्तकत्वमेवंसति न स्यात्, विशेषा अपि परस्परं विशेषत्वेन सदृशा एव, न च सादृश्यं जात्या विवक्षितम्, नीलपीतादीनामपि गुणत्वरूपत्वादिजात्या समानानामपि व्यावर्त्तकत्वदर्शनात्, अन्यथा पक्षविशेषणे गुणकर्मेति व्यर्थं स्यात्, तथाप्ययमनारब्धद्रव्यपरमाणुः एतत्परमाणुनिष्ठजातिगुणकर्मभिन्नधर्मसमवायी परमाणुत्वादन्यपरमाणुवदिति विवक्षितत्वात् । न च विशेषेष्वपि विशेषान्तरापेक्षा, स्वत एव व्यावर्त्तकत्वात् प्रदीपवत्, नहि प्रदीपः स्वप्रकाशे प्रदीपान्तरमपेक्षते । विपक्षबाधकस्योक्तत्वमभिप्रेत्यानुमानान्तरमाह सत्ता वेति ।

न्यायलीलावतीप्रकाशः

हीति । ननु कुञ्जरत्वाश्वत्वयोरपि जातित्वेन सादृश्याद्व्याप्त्यसिद्धेः विशेषाणामपि विशेषत्वेन समानत्वाच्च । न च जात्याऽसमानत्वं विवक्षितं, गुणादिनापि तादृशेन व्यावृत्तधीदर्शनाद्व्यभिचारात् । मैवम् । गुणानामपि स्वाश्रयव्यावृत्त्यसिद्धौ व्यावृत्त्यसिद्धेः, अन्यथाऽन्योन्याश्रयापत्तेः । न च विशेषेष्वेव व्यभिचारः, सिद्ध्यसिद्धिव्याघातात् । व्यावृत्तबुद्धिश्च तेषु स्वाश्रयवत् स्वस्मिन्नपि व्यावृत्तधीजनकस्वभाव

न्यायलीलावतीप्रकाशविवृतिः

तत्त्वनिश्चयविषयत्वं साध्यं )मतो न द्रव्यत्वादिकमादाय सिद्धसाधनमिति ।

गुणानामिति । पृथक्त्वादीनामित्यर्थः । अन्यथेति । गुणव्यावृत्त्यैवाश्रयव्यावृत्तिस्तद्व्यावृत्तिश्च गुणव्यावृत्त्यैव तत्राभेदेन व्यावर्तकतया वास्तवव्यभिचाराभावादिति भावः । अत अन्योन्याश्रय इत्यर्थः । नन्वेति । तेषु परस्परं व्यावृत्तबुद्धिर्न परस्परव्यावृत्तधर्मकार्येति व्यभिचारो नेत्यर्थः । सिद्ध्यसिद्धीति । न च तथापि याऽनुमितिः स्वहेतुपरामर्शविरोधिनमर्थं साधयति सा न प्रमाणमिति न्यायेनानुमितेरप्रामाण्यं दुःपरिहरमिति वाच्यम् । विशेषे विशेषान्तराभावेऽपि तस्यैव तत्राभेदेन व्यापकतया वास्तवव्यभिचाराभावादिति भावः । अत एवाह

संसर्गिणी जातित्वात् गोत्ववत् ॥

इति लीलावत्यां विशेषविचारः ।

---

न्यायलीलावतीकण्ठाभरणम्

सत्ताव्याप्यजातिमत्त्वं च नोपाधिर्गुणादौ साध्याव्यापकत्वात् । जातिमन्निष्ठात्यन्ताभावप्रतियोगित्वमपि नोपाधिः, उक्तविपक्षबाधकेन हेतोरेव साध्यव्याप्यत्वग्रहादुपाधेः साध्याव्यापकत्वसिद्धेः । जाति-

न्यायलीलावतीप्रकाशः

त्वात् । सत्ता वेति । न च जातिमन्निष्ठात्यन्ताभावप्रतियोगित्वमत्रोपाधिः, उक्तविपक्षबाधकाद्धेतोः साध्यव्याप्यतयोपाधेः साध्याव्यापकत्वात् । यद्वा अयमनारब्धद्रव्यः परमाणुः एतत्परमाणुनिष्ठजातिगुणकर्मभिन्नधर्मसमवायी परमाणुत्वात् अन्यपरमाणुवत् । विपक्षबाधकं चोक्तमेव । यद्यतो व्यावृत्तत्वेन प्रतीयते तत्ततो व्यावर्त्तकनिःसामान्यधर्मवत् यथाऽश्वात् गौः निःसामान्यगोत्ववती । कार्यद्रव्यगुणकर्मादौ च परम्परासम्बन्धिना विशेषेणैव व्यावृत्तधीसिद्धेर्न तत्कल्पनम् । न चैकपरमाणुवृत्तिनीलरूपयोरेव कथं व्यावृत्तिरिति वाच्यम् । असमवायिकारणाग्निसंयोगेनैव तदुपपत्तेः, तत्रापि तेजः-

न्यायलीलावतीप्रकाशविवृतिः

व्यावृत्तबुद्धिश्चेति । अयमनारब्धद्रव्य इति । न चात्रैतत्परमाणुनिष्ठेतिव्यर्थं तद्विनाप्यारब्धद्रव्यपरमाणौ व्याप्तिग्रहसम्भवादिति वाच्यम् । अनारब्धद्रव्यत्वस्य साध्यविशेषणात, तथा चानारब्धद्रव्यत्वे सति जातिगुणकर्मभिन्नधर्मसमवायित्वमप्रसिद्धमेवेति परमाण्वन्तरे व्याप्तिग्रहार्थं तद्विशेषणमिति भावः । परमाणुत्वादिति । परम्परासम्बन्धेनाश्रयत्वमेव हेतुरतो न व्यर्थविशेषणतेति ध्येयम् । ननु विशेषभिन्नताद्धीश्चेति विशेषणादेवमनन्तसिद्ध्यापत्तिरत आह विपक्ष इति । व्यावृत्तबुद्ध्यभावलक्षणमित्यर्थः । मतान्तरमाह यद्यत इति । व्यावर्त्तकपदेन सामान्यसमवाययोः निस्सामान्यपदेन द्रव्यादित्रिकस्य भावपरेण धर्मपदेनाभावस्य व्युदासः । ननु घटादिना व्यभिचारस्तत्र विशेषाभावादपरम्परासाधारणसम्बन्धेनैतादृशधर्मवत्त्वं साध्यमिति भावः । असमघटप्रतियोगिकव्यावर्त्तकधर्माभावाच्चात आह कार्यद्रव्येति । साक्षात्परवायिकारणेति । एकेनाग्निसंयोगेन नानारूपजननं न भवत्येवेति भावः ।

किं पुनः समवायसिद्धौ मानम्, प्रत्यक्षमनुमानं वा? नाद्यः। तदभावात्। इह तन्तुषु पट इत्यत्र प्रत्यक्षमस्ति इति चेन्न। विचारासहत्वात्। समवायो ह्याधारबुद्धिं वा कुर्यात्, आधेयबुद्धिं वा, उभयबुद्धिं वा? नाद्यः। उभयत्रापि (१)इहेतिप्रतीतिप्रसङ्गात्। न द्वितीयः। उभयत्राप्याधेयबुद्धिप्राप्तेः। न तृतीयः। उभयत्राप्युभयबुद्धिप्रसक्तेः। जातिजातिमन्तौ सम्बद्धौ इत्यनुभवोऽस्तीति चेत्। न, अत्रानुभवे हि समवायस्तदीयत्वेन वाऽनुभूयते, अन्यदीयत्वेन वा, सम्बन्धस्वरूपमात्रेण वा(२)? नाद्यः। तदीयत्वस्य सम्बन्धान्तरत्वेनानवस्थापातात्। नेतरः(३)।

---

न्यायलीलावतीकण्ठाभरणम्

गुणकर्मादौ व्यावृत्तधीः क्वचिदाश्रयवैलक्षण्यात् क्वचित् परंपरासम्बद्धधर्मान्तरादिति।

समवायसिद्धाविति। द्रव्यादिपञ्चकव्यतिरिक्तभावसिद्धावित्यर्थः। उभयत्रापीति। समवायस्योभयनिरूप्यत्वादित्यर्थः। तदीयत्वस्येति। तदी-

न्यायलीलावतीप्रकाशः

परमाणुवृत्तिविशेषेण परम्परासम्बन्धिना व्यावृत्तव्यवहारादित्यन्ये।

किम्पुनरिति। जात्यादिविशिष्टधीर्विशेषणविशेष्यसम्बन्धनिमित्तिकेत्यत्र किं मानमित्यर्थः। इह तन्तुष्विति। असम्बद्धस्वरूपयोस्तथाबुद्ध्यभावादित्यर्थः। जातिजातिमन्ताविति। न ह्यसम्बद्धस्य रूपद्वये विशिष्टधीर्व्यपदेशावित्यर्थः। अत्रेति। सम्बद्धानुभवे हि सम्बन्धो न

न्यायलीलावतीप्रकाशविवृतिः

विशेषणस्य परम्परासम्बन्धघटकेनेति शेषः। तदेवोत्तरत्र विभावयति तत्रापीति। अन्य इत्यरुचौ, तद्बीजं तु पक्षधर्मताबलादेवोक्तरीत्या विशेषसिद्धौ किं गुरुसाध्योपादानेनेति। यत्तु अनित्येषु परम्परासम्बन्धविशेषसिद्धौ व्यभिचार इत्यरुचिबीजम्। तत्तुच्छमसिद्धावपि पक्षसमत्वेन व्यभिचाराभावादिति।

सिद्ध्यसिद्धिव्याघातादाह जात्यादीति। समवायिनाविमाविति

---

(१) इहेतिबुद्धिप्रसङ्गात्–प्रा० पु० पाठः। (२) सम्बन्धरूपत्वमात्रेण–प्रा० पु० पाठः। (३) द्वितीयः–प्रा० पु० पाठः।

अन्यत्रैव सम्बन्धबोधप्रसङ्गात् । न तृतीयः(१) । क्वचिदपि स- म्बन्धप्रत्ययानुपपत्तेः । असत्येव सम्बन्धे तदीयत्वमनुभूयत इति चेत् । न । जात्यादेरप्यसत्येव सम्बन्धे तदीयत्वानुभवप्रसङ्गात्, असत्ख्यातिप्रसङ्गाच्च । सम्बन्ध(स्व)रूपमात्रमेव प्रथते(२) तस्य च जातिव्यक्तिभ्यां निरूपणात्तदीयत्वव्यपदेश इति चेन्न । जातेरपि व्यक्तिनिरूपणीयत्वात्तदीयत्वेन व्यपदेशोपपत्तेः(३),

---

न्यायलीलावतीकण्ठाभरणम्

यसम्बन्धमन्तरेण तदीयबुद्धेरभावात् । अन्यत्रैवेति । यदीयत्वेन सम्ब- न्धो भासते तत्रैवेत्यर्थः । क्वचिदपीति । यदि सम्बन्धः स्वरूपेण भासते तदा कुत्रापि विशिष्टप्रतीतिं न कुर्य्यादित्यर्थः । असत्येवेति । समवा- यसम्बन्धेऽसत्येवेत्यर्थः । जात्यादेरिति । तर्हि असत्यपि जात्यादौ तदीयत्वव्यवहारसम्भवादित्यर्थः । असदिति । सम्बन्धमन्तरेणापि तत्प्रत्ययस्य भ्रमत्वापत्तेरित्यर्थः । असम्बद्धोऽपि समवायो येन निरूप्यते तत्रैव स्वोपरक्तप्रत्ययं करोतीत्ययमस्य स्वभाव इत्यत आह- सम्बन्धरूपेति । जातेरपीति । सम्बन्धमन्तरेणैव निरूपकस्वोपरक्तप्रत्ययाधाने-

न्यायलीलावतीप्रकाशः

विशेषणत्वेन भासते तस्य प्रथमतःज्ञानात्, संयुक्ताविमाविति- समवायिनाविमावित्यननुभवाच्च । नापि विशेष्यत्वेन, अनयोः सम- वाय इत्यननुभवात् । नापि स्वरूपेण, समवायं जानासीति विषयतं- याऽननुभवादिति । तदीयत्वमिति । समवायस्येति शेषः । जातेरपीति ।

न्यायलीलावतीप्रकाशविवृतिः

एतादृशी प्रतीतिरुभयसिद्धा नास्त्येव, या चाहित रूपवानित्याकारा तस्यां विशेषणत्वेन समवायस्य विषयत्वे समवायिनाविमावित्युल्लि- खापत्तिरिति भावः । एवमग्रेऽपि न स्वरूपेणास्य न विशेषणत्वेन नापि विशेष्यत्वेनेति शङ्कितुरभिप्रायस्तथा भानञ्चासम्भवि उभयथैव भा- नानभ्युपगमादिति । स्वरूपेणेत्यस्यान्यानुपधानेनेत्यर्थः कल्पान्तरं दूषयति समवायमिति । ननु समवायरूपसम्बन्धान्तरमभ्युपेयत एवं

---

(१) नेतरः—प्रा० पु० पाठः । (२) प्रतीयते० प्रा०पु०पाठः । (३) व्यपदेशापत्तेरिति पु०पु०पाठः ।

सम्बन्धे च दृश्यसम्बन्धानुपलम्भे नायमेतदीयः सम्बन्ध इति प्रतीतिप्रसङ्गाच्च । सत्ता(नीलत्व)नीलगुणद्रव्याणां च समवायैनैकसंवेदनगोचराणां कस्य केन समवाय इति व्यवस्थानुपपत्तेः । नानुमानम्, लिङ्गाभावात् । इहेतिबुद्धिर्लिङ्गमिति चेत् । न । समवायाप्रत्यक्षत्वे इहेतिबुद्धेर्निर्विषयाया अनुपपत्तेः(१) । आधाराधेयभावाख्यं सम्बन्धान्तरमेव तद्गोचर इति चेत् । न । दूषितत्वात्, पदार्थान्तरस्वीकारप्रसङ्गाच्च । अत एवेहेति प्रत्ययोपपत्तौ समवायाननुमानप्रसङ्गाच्च । जात्यादिवि-

---

न्यायलीलावतीकण्ठाभरणम्

स्वाभाव्यं यदि समवायस्य कल्प्यते, तदा जात्यादावप्येवमस्तु किं समवायेनापीत्यर्थः । किञ्च समवाये सम्बन्धश्चेन्नास्ति तदा नायमेतदीय इत्येवं कथं न स्यादित्याह—सम्बन्ध इति । स नीलो घट इत्यत्र समवायश्चेदेक एव तदा सत्ताया नीलगुणस्य घटस्य च घटनिष्ठतयैव भानमिति नियमो न स्यादन्यथा भानं स्यादित्याह सत्तेति । इहेतिबुद्धिरिति । इह तन्तुषु पट इति बुद्धिः सम्बन्धनिमित्ता इहेतिबुद्धित्वादिह कुण्डे बदरमिति बुद्धिवदित्यर्थः । समवायेति । वैशेषिकमते इहेतिबुद्धेर्विषय एव दुर्वच इत्यर्थः । दूषितत्वादिति । आधारे वा इहबुद्धिराधेये उभय एव वेत्यादिना दूषितत्वादित्यर्थः । पदार्थान्तरेति । इहबुद्धेर्विषयस्य समवायभिन्नस्य पदार्थान्तरस्य स्वीकारप्रसंगादित्यर्थः । जात्यादीति । विशिष्टप्रत्ययस्य विशेषणविशेष्यसम्बन्धमन्तरेणानुपपत्तेरित्यर्थः । यथा अभावभूतलयोर्ज्ञानज्ञेययोर्वा विशेषणविशेष्यभावः सम्बन्धस्तथा जात्यादावप्यवश्यमभ्युप-

न्यायलीलावतीप्रकाशः

तथा च न तद्विशिष्टज्ञाननिमित्तया समवायः सिद्ध्येदित्यर्थः । इहेतिबुद्धिः समवायविषयत्वेन तत्र लिङ्गम्, अन्यविषयत्वेन वा? आद्यं निराकरोति समवायेति । अन्त्यमाशङ्क्य निराकरोति आधाराधेयेति ।

---

(१) अनुपपत्तेरिति मा० पु० पाठः ।

शिष्टप्रत्ययो लिङ्गमिति चेन्न । विशेषणविशेष्यभावस्य सम्ब-न्धान्तरस्य स्वीकारप्रसङ्गात् । तत एव विशिष्टबोधोत्पत्तौ(१) समवायाननुमानप्रसङ्गाच्च । उभयाश्रयस्य च सम्बन्धस्याभिन्न-रूपस्यैकत्र विशेषणमन्यत्र विशेष्यमिति विलक्षणप्रत्ययजनक-त्वानुपपत्तेः । प्राधान्यं विशेष्यत्वं गुणत्वं विशेषणत्वमिति चेन्न । तयोरनिर्वचनात्(२)। असत्येव सम्बन्धे विशेषणविशे-ष्यप्रत्ययगोचरत्वं तत्त्वमिति चेत् । न । असत्ख्यातिप्रसङ्गात् । विशिष्टव्यवहारजननयोग्यं ज्ञानमेव विशेषणविशेष्यभाव इति चेत् । कः पुनर्विशिष्टव्यवहारः प्रतीतिर्वा व्यपदेशो वा ? नाद्यः । तस्या असद्विषयत्वे(न)(३) असत्ख्यातिप्रसङ्गात् । सद्वि-षयत्वे तु सम्बन्धान्तरस्वीकारप्रसङ्गात् । न द्वितीयः । स हि

---

न्यायलीलावतीकण्ठाभरणम्

गन्तव्य इत्याह—विशेषणेति । अन्यथासिद्धिमाह ततएवेति । सम्बन्ध-स्योभयाश्रितत्वेऽपि गुणप्रधानभावकृतो विशेषणविशेष्यभाव इत्याह प्राधान्यमिति । तयोरिति । गुणप्रधानभावयोरित्यर्थः । ज्ञानमेवेति । ज्ञानवि-शेषणं विशेष्यं च तत्सम्बन्धफलार्पकमित्यादिनोक्त इत्यर्थः । असद्विषयत्व इति । असत्सम्बन्धविषयत्व इत्यर्थः । स हीति । व्यपदेश इ-

न्यायलीलावतीप्रकाशः

विशेषणेति । दण्डी पुरुष इत्यादौ समवायानङ्गीकारे विशेषणविशेष्य-सम्बन्धपूर्वकत्वदर्शनादित्यर्थः । तथाच सति तेनैवार्थान्तरमिति समवायो न सिद्ध्येदित्याह तत एवेति । सम्बन्धान्तरेति । वैशिष्ट्याख्येत्य-र्थः । अथ शब्दजातिरूपादिरिन्द्रियसम्बद्धः प्रत्यक्षत्वादित्यनुमानाद्

न्यायलीलावतीप्रकाशविवृतिः

स्यत आह वैशिष्ट्याख्येति । समवायस्यानियामकत्वादिति भावः ।

---

(१) प्रत्ययोत्पत्तौ—प्रा० पु० पाठः । (२) उभयोरनिर्वचनात्—प्रा० पु० पाठः ।

(३) सप्तम्यन्त एव पाठो मिश्रेण व्याख्यातः । किन्तु पु० प्रा० पुस्तकद्वये तृतीयान्त एव दृश्यते ।

विशिष्टाकारप्रत्ययजनको न वा ? न चेत्, नानर्थकव्यपदेशेन सह विषयविषयिभावः विशेषणविशेष्ययोः । जनकश्चेत्, प्रत्ययस्य सदसत्प्रकाशनशीलत्वेन पूर्वदोषानतिवृत्तेः । कुतश्चैकैव (१)प्रतीतिर्निमित्तभेदमन्तरेणैकत्र विशेषणव्यवहारमन्यत्र विशेष्यव्यवहारमर्पयति ।

अत्रोच्यते । जात्यादिगोचरो विशिष्टव्यवहारः (२)सम्ब-

न्यायलीलावतीकण्ठाभरणम्

त्यर्थः । व्यपदेशो हि शब्दप्रयोगः, स विशिष्टप्रत्ययजनको न चेत्यर्थः । विशिष्टप्रतीत्यजनकत्वे व्यपदेशानर्थक्यमित्याह न चेदिति । प्रत्ययस्येति । व्यपदेशेन यः प्रत्ययो जननीयः तस्यासत्सम्बन्धविषयत्वेऽसत्ख्यातिः, सत्सम्बन्धविषयत्वे सम्बन्धान्तरस्वीकारापत्तिरित्याह—जनकश्चेदिति । एकैव बुद्धिरिति । जात्यादिविशिष्टबुद्धिरित्यर्थः ।

जात्यादिविशिष्टव्यवहार इति । इह गवि गोत्वमिह तन्तुषु पट इत्यादि

न्यायलीलावतीप्रकाशः

संयोगबाधे इन्द्रियसम्बन्धघटकतया समवायसिद्धिः इन्द्रियस्य सम्बद्धग्राहकत्वात्, अत एव समवायो नाध्यक्षः इन्द्रियेणासम्बद्धत्वात् । न च सम्बन्धत्वेन तत्सिद्धिः, अनवस्थानात् स्वभावादेव सम्बन्धव्यवहारकारित्वाच्चेति । तन्न । समवायस्वीकारेऽपि स्वरूपसम्बन्धस्यावश्यकतया ज्ञानघटयोरिव गुणजात्यादिभिरपीति तेनार्थान्तरत्वात्, तथाच शब्दस्येन्द्रियविशेषणतया रूपजात्यादेरिन्द्रियसम्बद्धविशेषणतया रूपत्वादेरिन्द्रियसम्बद्धविशेषणविशेषणतया स्वभावसम्बन्धरूपया ग्रहणसम्भवात् किं समवायेन । पूर्वदोषानतिवृत्तेरिति । आद्ये सम्बन्धान्तरस्वीकारप्रसङ्गः, द्वितीये त्वसत्ख्यात्यापत्तिरित्यर्थः ।

जात्यादिगोचर इति । यद्यपि विशिष्टं तत्तद्विशेष्यतत्तद्विशेषणानतिरेका-

न्यायलीलावतीप्रकाशविवृतिः

इन्द्रियप्रत्यासत्तिघटकतया समवायसिद्धिर्नाशङ्कितेति न्यूनत्व-

(१) बुद्धि—प्रा० पु० पाठः, मिश्रसम्मतो ज्ञेयः ।
(२) जात्यादिविशिष्टव्यवहार—इति मिश्रसम्मतोऽत्र पाठः ।

न्धनियतः भावमात्रविषयाबाधितविशिष्टव्यवहारत्वात् सघटं

---

न्यायलीलावतीकण्ठाभरणम्

व्यवहार इत्यर्थः । सम्बन्धनियत इति । अत्र संयोगासिद्धौ बाधस्तेन समवायसिद्धिरेव पर्यवसन्ना । सम्बन्धत्वं च द्रव्यगुणकर्मसामान्यविशेषान्यत्वे सति संयोगान्यगुणान्यत्वमेव संयोगसमवायसाधारणम् । भावमात्रेति । इतरानिरूपणानिरूप्यविशेषणकविशिष्टबुद्धित्वात

न्यायलीलावतीप्रकाशः

क्तं,तथापि पक्षस्यानुगमेऽपि न दोष इत्यन्यत्र विस्तरः । सम्बन्धनियत इति । यद्यपि सम्बन्धत्वं न संयोगसमवायसाधारणमेकमिति संयोगसाधने बाधः, समवायसाधने चाप्रसिद्धिः, तथापि द्रव्यगुणकर्मसामान्यविशेषान्यत्वे सति संयोगान्यगुणान्यत्वमेव सम्बन्धत्वम् । अबाधितेति । निर्विषयकभावविशेषणकविशिष्टबुद्धित्वादितरनिरूपणा-

न्यायलीलावतीप्रकाशविवृतिः

भिया पूरयति पक्षस्येति । तथाच घटत्वविशिष्टघटज्ञानत्वादिनैव पक्षतेति भावः । न चान्यत्र सन्दिग्धानैकान्तिकता साध्याभावसन्देहस्यादोषत्वादित्यभिप्रेत्याह अन्यत्र विस्तर इति । यद्यपीति । विशिष्टप्रत्ययजनकत्वं सम्बन्धत्वं यद्यप्यनुगतमेव तथापि तादृशसाध्ये स्वरूपसम्बन्धेनैवार्थान्तरमिति तद्व्यावृत्तमेव साध्यं तादृशं चानुगतं नास्तीति भावः । तथापीति । संयोगसङ्ग्रहाय संयोगान्येति गुणविशेषणम् । न चाभावात्मकस्वरूपसम्बन्धेऽतिव्याप्तिरन्योन्याभाववत्त्वस्य निरुक्तस्याभावोऽभावाभावत्वेन विशेषणं वा । यद्यपि प्रकृते तत्साधारण्येपि न दोषः,जात्यादिविशिष्टबुद्धौ तेनार्थान्तरशङ्काया अभावात्,तथापि हेतौ भावपदोपादानात्तत्रात्राभिप्रेतम् । मूलोक्तहेतोर्जातः कृत इत्यादौ व्यभिचारमाशङ्क्याह निर्विषयेति । अबाधितपदविमुक्तं हेतोरेवार्थकथनमित्यबाधितपदं मूलस्थमेव योज्यमतो न भ्रमे व्यभिचारः । भावविशेषणत्वेत्यस्य च भावमात्रविषयकेत्यर्थोऽतो नाभावादिविशेष्यकप्रतीतौ व्यभिचारः । इतरेति । अत्रापि तद्विशेषणकत्वं तन्मात्रविषयकत्वम्, इदं च ज्ञानादिविशिष्टबुद्धिव्यावृत्त्यर्थमुक्तम् । न चात्र समवायाविषयतया ऽसिद्धिः, तद्विषयताभ्युपगमात् । न चोभयत्र हेतौ वने सिंहनाद इति प्रतीतौ व्यभिचारः, बुद्धिपदस्य लौकिकसाक्षात्कारपरत्वात्, लौ-

भूतलमिति व्यवहारवत् । असति सम्बन्धावभासे विशिष्टव्यवहारः कुत इति चेत् । गुणद्रव्यविषयात् बुद्धिविशेषादिति ब्रूमः ।

---

न्यायलीलावतीकण्ठाभरणम्

निर्विषयकभावबुद्धित्वादिति वा हेत्वर्थः । न च ज्ञानवानात्मेत्यादौ हेत्वसत्त्वाद् भागासिद्धिः, तादृशबुद्धीनामपक्षीकरणात् । न च तत्र समवायासिद्धिप्रसङ्गः, ईदृशबुद्धिं पक्षीकृत्य सम्बन्धोपादानाविशेषणकविशिष्टबुद्धित्वादिना तत्साधनात् । गुणद्रव्येति । सम्बन्धिद्वयो-

न्यायलीलावतीप्रकाशः

निरूप्यविशेषणकविशिष्टबुद्धित्वादित्यर्थः । अतो नाभावज्ञानादिविशिष्टबुद्धौ व्यभिचारः । न च स्वरूपसम्बन्धेनार्थान्तरम्, लाघवादेकस्यैव सम्बन्धस्य सिद्धेः, स्वरूपसम्बन्धस्याननुगतत्वादनन्तत्वाच्च । न चाप्रयोजकत्वं, विशिष्टप्रत्यक्षस्य सम्बन्धानियम्यत्वे गवाश्वादावव्याप्तेः, गोत्वसमवायवानित्यत्र त्वारोपितः समवायः प्रतीयते । विशेषणविशेष्ययोः सम्बन्धज्ञानं विशिष्टव्यवहारजनकमिति मन्यमान आह असतीति । बुद्धिविशेषादिति । बुद्धौ च विशेषोऽप्रकाशमान-

न्यायलीलावतीप्रकाशविवृतिः

किकत्वं चानागतसाक्षात्कारजनकप्रत्यासत्त्यजन्यत्वम् । उदाहृतप्रतीतिश्च यदि शाब्दी तदा साक्षात्कारपदेन, यदि प्रत्यक्षादिः लौकिकपदेन व्यावृत्ता । न च शाखायां संयोग इति प्रतीतौ व्यभिचारः, प्रत्यक्षयोः पक्षसमत्वादन्यादृश्यां च हेत्वभावादिति भावः । यद्यपि विशिष्टव्यवहारस्तद्विशिष्टव्यपदेश इति मूलकृद्वक्ष्यति, तथाच बुद्धित्वं तत्रासिद्धं, तथापि तन्मूलं प्रत्यक्षबलादेव समवायसिद्धाविल्याशङ्कानिराकरणमात्रपरमिति प्रकाश एव व्यक्तम् । न तु पक्षनिर्वचनपरमिति ध्येयम् । अतो नाभावेति । अभावविशिष्टबुद्धौ मूलोक्तहेतोरपि यद्यपि न व्यभिचारः, तत्पदकृत्यमपि प्रसङ्गादुक्तं, यथाश्रुतमेव साध्यं, हेतुरपि विशिष्टबुद्धित्वादित्येवं मनसि मतान्तरं निधाय तत्रार्थान्तरं निराकरोति नचेति । विशिष्टप्रत्यक्षस्येत्युपलक्षणं, विशिष्टव्यपदेशस्येत्यपि द्रष्टव्यम् । ननु यदि विशिष्टव्यपदेशः सम्बन्धनियतस्तदा कथं गोत्वसमवायवानिति व्यपदेश इत्यत आह गोत्वसमवायेति ।

अघटं भूतलमित्यत्र घटाभावभूतलविषयाद्बुद्धिविशेषादिव । कुतस्तर्हि सम्बन्धानुमानम्, बुद्धिविशेषादेव विशिष्टव्यवहारोपपत्तेः। न हि तथासति(१) विशिष्टव्यवहारजनकत्वेन सम्बन्धानुमानम्, अपि तु तद्व्यापकत्वेन। व्यापकत्वं च तस्य दृष्टान्तप्रतीतमेव(२) तदभावेऽपि तद्बलेन सम्बन्धानुमानम् । तथासति ध्वंसस्य

---

न्यायलीलावतीकण्ठाभरणम्

पलक्षणम् । कुत इति । बुद्धिविशेषणे वा अन्यथासिद्धेरिति । व्यापकत्वेन तत्सिद्धिर्न तु विशिष्टप्रत्ययविषयत्वेन तज्जनकत्वेन वेत्याह नहि तथासतीति । एतादृशानिष्टप्रसंगभयेन तदन्यविशिष्टबुद्धित्वेन हेतुविशेष्यस्तेन न व्यभिचार इति भावः । पूर्वविकल्पपक्षं परिगृह्णाति

न्यायलीलावतीप्रकाशः

संसर्गप्रकाशत्वमेव। न चैवं घटव्यवहारोऽपि तत एव स्यादिति घटोऽपि न सिद्ध्येदिति वाच्यम्। घटस्य प्रत्यक्षत्वेन प्रत्याख्यातुमशक्यत्वात्, समवायस्य चातीन्द्रियत्वात्। दृष्टान्तेति। सघटं भूतलमित्यादौ तथादर्शनादित्यर्थः। तद्बलेन-विशिष्टव्यवहारबलेन, भूतलाभावयोरपि समवायः सम्बन्धोऽनुमीयत इत्यर्थः। ध्वंसस्येति। अन्येषामभावानामजन्यत्वादित्यर्थः। समवायिकारणवत्त्व इत्यत्र पाठे समवायिकारणं यस्य तत्त्व इत्यर्थः। ननु विशिष्टव्यवहारो विशिष्टविषयकं

न्यायलीलावतीप्रकाशविवृतिः

यद्यप्यारोपितत्वेऽपि समवायस्य तन्नियतत्वं साध्यं नास्ति, तथापि सम्बन्धात्मक एव तत्र सम्बन्धस्तत्र नियामक इत्यत्र तात्पर्यम्। केचित्तु गोत्वसमवायवानिति प्रतीतौ निर्विषयकेत्यादिहेतौ व्यभिचार इत्यत आह गोत्वसमवायेति । तथाच हेतौ बुद्धिपदेन लौकिकसाक्षात्कारत्वं विवक्षितमारोपस्य चातथात्वान्न तत्र व्यभिचार इति भाव इत्याहुः। तदयुक्तम्, समवायस्य तन्मते विशिष्टबुद्ध्यविषयत्वेनारोपासम्भवात् । विशेषोपादानतात्पर्यमाह अन्येषामिति । यद्यपि

---

(१) तथासतीति पुस्तकद्वये यद्यपि नास्ति किन्तु मिश्रसम्मतत्वान्मुद्रितम् ।

(२) दृष्टान्तैदृष्टमेव-प्रा० पु० पाठः ।

समवायिकारणत्वे(न) भावत्वापत्तेः । विशिष्टव्यवहारस्तु वि- शिष्टव्यपदेशः । कस्तस्य विषयः ? विशेषणविशेष्यस्वरूपम् । कुतस्तर्हि तयोः सम्बन्धावभासः ? विशेषणविशेष्यपदवाचकपदस- न्निधानादारोपितसम्बन्धगोचरः। कुतः पुनरनारोपितसम्बन्धगो- चरो न स्यात्? समवायस्याप्रतीतेः तदितरस्या(१)भावात् । वि-

न्यायलीलावतीकण्ठाभरणम्

विशिष्टेति । कुत इति । विशेषणविशेष्यभानमेवंसति स्यान्न तु सम्ब- न्धभानमित्यर्थः। बुद्धिविशेषणविशेष्ययोर्ग्रह वैशिष्ट्यमारोप्यत इत्यर्थः। कुतः पुनरिति । वास्तव एव सम्बन्धः कथं न तद्विषय इत्यर्थः । समवाय स्येति । अतीन्द्रियत्वात्तस्येत्यर्थः। ननु वैशिष्ट्यमेव प्रतीयमानं तत्र सं- म्बन्धः स्यादित्यत आह अन्यस्येति । वैशिष्ट्यस्य भावाभावसाधारण्यं चेत्तदा तदेकमनेकं वा ? यद्येकं तदा स्वस्मिन् स्ववैशिष्ट्यप्रत्ययं न कुर्य्यादनेकत्वे त्वानन्त्यमित्यर्थः । समवायबन्दीग्रहस्तु सिद्ध्यसि द्धिपराहतः, प्रामाण्यप्राधान्यं चाननुगतमित्याह—विशेषणत्वमिति ।

न्यायलीलावतीप्रकाशः

ज्ञानं, तथाचानुभवबलादेव सम्बन्धः सिद्ध्येदित्यत आह विशिष्टेति। तथापि तत्कारणत्वेन विशिष्टविषयकं ज्ञानं सिद्ध्येदित्यत आह कस्त- स्येति । नन्विमौ विशिष्टावित्युक्तेऽस्येदं विशेषणमिदं चास्य विशेष्य- मिति भासते, तथाचानुभवबलादेव सम्बन्धसिद्धेः क्वानुमेयतेत्यत आह कुतस्तर्हीति । आरोपितेति । यथार्थानुभवाद्वस्तुसिद्धिरिति भावः।

न्यायलीलावतीप्रकाशविवृतिः

समवेतत्वेन सकलाभावसाधारणं भावत्वापादनं, तथापि समवायि- त्वेन जन्यभावत्वेन कारणकार्यभावात्मकप्रतीत्यर्थं कारणत्वग्रहणम् । अस्येदमिति । अत्र षष्ठ्यर्थोऽनुभवविषयः स एव सम्बन्ध इति भावः। यथार्थानुभवादिति । यद्यप्यारोपितत्वेऽपि समवायस्य तत्सिद्धिरप्रत्यूहा, तथाप्यलीक एव सम्बन्धः प्रतीतिविषयः, संयोगादिकमेव वारोप्य- मिति मूलार्थ इति भावः । ननु भासमानसम्बन्धानुयोगित्वं प्राधान्य तत्प्रतियोगित्वं चाप्राधान्यमिति तदनुभवबलादेव सम्बन्धासिद्धि-

(१) अन्यस्येति–मिश्राभिमतोऽत्र पाठः ।

शेषणत्वं चाप्रधानत्वं, प्राधान्यं च विशेष्यत्वम्। तच्च दण्डी पुरुष इत्यत्र पुरुषस्य दण्डाधारत्वम् दण्डपतनप्रतिबन्धकत्वम् (च)। आधेयत्वं च दण्डस्य प्रतिबद्धगुरुत्वाधिकरणत्वमप्राधान्यम्। समवायिकारणत्वं च तन्त्वादेर्विशेष्यत्वं समवायिकार्यत्वं च पटादेर्विशेषणत्वम्। समवायित्वे सति व्यञ्जकत्वं च व्यक्तीनां विशे-

---

न्यायलीलावतीकण्ठाभरणम्

तच्चेति। प्राधान्यमित्यर्थः। दण्डाधारत्वमेव किमित्यत आह दण्डेति। प्रतिबध्यपतनानाश्रयत्वे सति पतनप्रतिबन्धकसंयोगवन्मूर्त्तत्वमित्यर्थः। आधेयत्वं चेति। दण्डस्याप्रधानत्वमिति सम्बन्धः। तदेकमित्याह प्रतिबद्धेति। गुरुत्वप्रतिबन्धः कार्य्याजनकत्वम्। पटवन्तस्तन्तव इति प्रतीतौ विशेष्यत्वविशेषणत्वे विवेचयति समवायिकारणत्वमिति। एवंसति विशेषणत्वमतीन्द्रियं स्यादिति चेत्। सत्यं, नहि तदपि तत्प्रतीतौ भासते, तन्तुषु पट इत्यत्र वैपरीत्येन विशेषणविशेष्यभावो द्रष्टव्यः। व्यंजकत्वं चक्षुरादीनामत उक्तं समवायित्वे सतीति।

न्यायलीलावतीप्रकाशः

प्राधान्यमप्राधान्यं च नैकमिति दर्शयन्नाह दण्डीति। समवायिकारणत्वमिति। यद्यपि समवायातीन्द्रियत्वे समवायिकारणत्वं प्रत्येतुमशक्यं, तथाप्यप्रतीयमानासंसर्गित्वमनेन विवक्षितम्। व्यञ्जकत्वमिति। यद्यपि व्यक्तिज्ञानजन्यज्ञानविषयत्वं न जातेः तयोः समानसंवित्संवेद्यत्वात्, नापि व्यक्तीनां जातिज्ञानजनकत्वम्, अतीन्द्रिये तदभावात्, तथापि व्यञ्जकत्वमत्र जातिज्ञाने व्यक्तिप्रवेशावश्यम्भावमात्रं विवक्षितम्। एतावन्मात्रं विशुद्धमातापितृयोनिजत्वेप्यस्तीत्यत उक्तम् समवायि-

न्यायलीलावतीप्रकाशविवृतिः

रित्याशङ्कानिराकरणायान्यत्प्राधान्यादिकं दर्शयतीत्याह प्राधान्यमिति। ताथाप्यप्रतीयमानेति। यद्यप्येतदपि न प्रत्ययविषयः उपनीतस्य च विषयत्वं तुल्यं समवायिकारणत्वेऽपि, तथापि यत्रेदमेवोपनीतं तत्रेदमेव विशेष्यत्वादिप्रतीतिविषय इत्यभिप्रायेणेदमुक्तम्। न च पूर्वापरोदाहरणेपीदं वर्त्तत इति तत्रान्यनिर्वचनव्यर्थता, एतदप्रतीतितत्प्रती

ष्यत्वं, व्यङ्ग्यत्वं च विशेषणत्वम् । नित्येषु च द्रव्यत्वं विशेष्यत्वं, गुणत्वं (च) विशेषणत्वम् । अभावेऽपि(१) तत्प्रतियोग्यधिकरणत्वं विशेष्यत्वम्, अभावत्वं च विशेषणत्वम् ।

---

न्यायलीलावतीकण्ठाभरणम्

विशेषणत्वमिति । जातेरिति शेषः । यद्यपि व्यक्तिज्ञानजन्यज्ञानविषयत्वं जातीनां न व्यङ्ग्यत्वं, समानसंवित्संवेद्यत्वात्, न वा व्यक्तिजन्यज्ञानविषयत्वम्, अतीन्द्रिये तदसत्त्वात्, तथापि विशिष्टज्ञानजनकज्ञानविषयत्वं जातीनां विशेषणत्वम्, प्रत्ययव्यावृत्त्यधिकरणत्वं च विशेष्यत्वं व्यक्तीनाम् । यद्वा समवायित्वे सतीति श्रोत्रियत्वव्यंजकविशिष्टमातापितृयोनिजत्वादिव्यावर्त्तनाय । यद्यपि समवायित्वमतीन्द्रियं तथापि जात्या सममगृहीतासंसर्गत्वमयुतसिद्धत्वं वा द्रष्टव्यम् । द्रव्यत्वमिति । समवायित्वमित्यर्थः । गुणत्वमिति । समवेतत्वमित्यर्थः । तेन न सप्रतियोगिकविशेषणविशेष्यभावत्वविरोधः । तत्प्रतियोग्यधिकरणत्वं तत्प्रतियोग्यधिकरणत्वेन प्रतीयमानत्वम्, अन्योन्याभावे च तदभिन्नत्वेन प्रतीयमानत्वं आरोप्य निषिध्यत इति सिद्धान्तात् । अभावत्वमिति । एतच्च घटाभाववद् भूतलमित्यत्र द्रष्टव्यम् ।

न्यायलीलावतीप्रकाशः

त्वे सतीति । तच्चायुतसिद्धत्वं, जात्या सममगृहीतासंसर्गत्वं वा । द्रव्यत्वमिति । यद्यपि द्रव्यत्वगुणत्वयोर्निःप्रतियोगिकयोः सप्रतियोगिकविशेषणविशेष्यात्मकत्वविरोधस्तथापि तयोः समवायिकारणत्वावच्छेदकं (च) यद्रूपं तस्य सप्रतियोगिकत्वात्तथात्वम् । अभावे चेति । प्रतियोग्याधारत्वेन प्रतीयमानत्वम्, अन्योन्याभावे च प्रतियोग्यभिन्नत्वेन प्रतीयमानत्वं विवक्षितम्, सर्वत्रारोप्य निषिध्यत इति सिद्धान्तात् । अभावत्वमिति । यद्यपि घटाभावद्भूतलमित्यत्राभावत्वं घटप्रति-

न्यायलीलावतीप्रकाशविवृतिः

तिस्थल एतदुपन्यासादिति भावः । यद्रूपमिति । यद्यपि तदपि द्रव्यत्वादिकमेवेत्युक्तदोषतादवस्थ्यम्, तथापि समवायिकारणतावच्छेदकीविशिष्टं तत् सप्रतियोगिकमिति भावः । यथाश्रुतस्य रूपात्यन्ताभाव-

---

(१) अभावे चेति मा० पु० पाठः प्रकाशकृत्संमतः ।

(१)तन्तुमान्पटः समवायिनाविमावित्यादौ तु विशेषणविशेष्यसादृश्यनिबन्धनोऽयमुपचरितो विशेषणविशेष्यव्यपदेशोऽग्निर्माणवक इतिवत्। प्रतीते च समवायेऽयं विशेषणविशेष्यव्यवहारः।

---

न्यायलीलावतीकण्ठाभरणम्

भूतले घटाभाव इत्यत्र तु वैपरीत्येन योजनीयम्। ननु यत्र समवाय एव विशेषणत्वेन विशेष्यत्वेन वा भासते तत्र किन्निबन्धनो विशेषणविशेष्यभाव इत्यत आह—तन्तूनामिति। तन्तुमानित्यर्थः। अत्र विशेषणविशेष्यभाव एव पारमार्थिको नास्ति येन विशिष्टबुद्धित्वादिति हेतुः सम्बन्धसाधकान् व्यभिचरेदित्यर्थः। इतोऽपि समवायिनाविमाविति विशेषणविशेष्यभावव्यवहारो न वास्तव इत्याह—प्रतीते चेति। अयमिति। तन्तुमान् पटः, समवायायिनाविमाविति विशेषणविशेष्यभावव्यवहार इत्यर्थः। समवायातीन्द्रियत्वेऽन्यथा तदनुपपत्तेरिति भावः। ननु यत्र समवायाप्रतीतिस्तत्र कथमित्यत

न्यायलीलावतीप्रकाशः

योगिकं भूतलप्रतियोगिकं च विशेषणत्वं, तथापि भूतलवर्त्तिप्रतियोगिनिरूप्यत्वमभावस्य भूतलविशेषणत्वम्। ननु यत्र समवायो विशेषणं तत्र विशिष्टव्यवहारोऽस्ति, न च तत्र सम्बन्ध इत्यनैकान्तिकमित्यत आह तन्तुमानिति। तन्तुमत्त्वं तन्तुसमवायः, पूर्वमत्राबाधितत्वेन हेतुर्विशेषितः समवाये च समवायाङ्गीकारे बाधकमेवास्तीति तु परमार्थः। प्रतीते चायमिति। चकारो हेतौ, यस्मात्प्रतीते समवायेऽयं व्यवहारस्तस्मादुपचरितोऽयं, वास्तवत्वे समवायप्रतीतिरेव न स्या-

न्यायलीलावतीप्रकाशविवृतिः

विशेष्येऽसत्त्वादन्यथा व्याचष्टे प्रतियोग्याधारत्वेनेति। भूतलवर्त्तीति। भूतलारोपणीयेत्यर्थः। इत्यनैकान्तिकमिति। यद्यपि स्वरूपसम्बन्धस्यापि तत्र समवायात्मकत्वेन निरुक्तसाध्यमस्त्येव, तथापि सम्बन्धिभिन्नसम्बन्धसाध्यताभिप्रायेण शङ्क्यम्। हेतुर्विशेषित इति। मूलकृतेति शेषः। वा-

---

(१) अत्र 'तन्तूनां पट' इति मिश्रसम्मतः पाठो बोध्यः

तत्प्रतीतेश्च पूर्वमयुतसिद्धिरादृश्यादसम्बन्धानुपलम्भनिबन्धनः। विशेषणविशेष्यशब्दौ च गवादिशब्दवदनेकार्थौ, ननु सर्वसा-

---

न्यायलीलावतीकण्ठाभरणम्

आह तत्प्रतीतेश्चेति। ननु विशेषणविशेष्यानुगमे सङ्केतोऽपि कथं ग्राह्य इत्यत आह--विशेषणेति। तथाच गवादिपद इव सङ्केतोऽपि त द्धर्मावच्छेदेनैवेत्यर्थः। वस्तुतस्तु प्रत्याय्यव्यावृत्त्यधिकरणतावच्छे दकं यदन्विततया ज्ञाते तात्पर्यविषयान्वयधीस्तद्धदकं व्यवच्छे दकं वाऽनुगतमेव विशेषणत्वमेवं प्रत्याय्यव्यावृत्त्यधिकरणत्वं वि शेष्यत्वमप्यनुगतमेव। प्राभाकरमते तु समवायोऽतीन्द्रियो ना

न्यायलीलावतीप्रकाशः

स्तु हेतोरनैकान्तिकत्वात्। अयं-पूर्वोक्तः समवेतत्वादिरूपः। ननु स मवायसिद्धेः पूर्वं यस्तन्तुमत्त्वव्यवहारस्तेनानैकान्तिकं स्यादित्यत आह तत्प्रतीतेश्चेति। समवायस्य चातीन्द्रियत्वमतीन्द्रियसम्बन्ध

न्यायलीलावतीप्रकाशविवृतिः

त्तवत्त्व इति। अबाधितत्व इत्यर्थः। हेतोरिति। अबाधितत्वगर्भहेतु सत्त्वे साध्यस्य चानवस्थाया असत्त्वाङ्गीकारे इत्यर्थः। इदं च स म्बन्धिभिन्नसम्बन्धसाध्यतापक्षे इति प्रागुक्तमेव स्मर्तव्यम्, तदपि मूलोक्तहेत्वभिप्रायेण। वस्तुतः समवायस्यातीन्द्रियत्वेन तत्प्रतीतौ लौकिकत्वगर्भहेत्वभाव एवेति भावः। ननु समवायसिद्धेरिति। यद्यपि समवायप्रतीतिपूर्वकमपि सम्बन्धनियतत्वसाध्यसत्त्वान्न व्य भिचारः, न वाऽसम्बन्धानुपलम्भनिबन्धनत्वेन तत्परिहार इत्यसं गतमेतत्तथापि पटे यस्तन्तुव्यवहारस्तन्तुविशेषणत्वव्यवहारः समवायिकार्यत्वनिबन्धन इति प्रागुक्तं मूले तत्र च समवायिकार्यत्व निबन्धनत्वं न सम्भवति समवायसिद्धिप्राक्कालिकपटविशेषणत्वप्रती त्या व्यभिचार इति शङ्कार्थः। तत्रासम्बन्धानुपलम्भनिबन्धन एव विशेषणत्वव्यवहारः अननुगमस्याग्रे समाधेयत्वादिति परिहाराभि प्रायः। इममेव मूलार्थं पूर्वं प्रकाशकृदुक्तवानिति ध्येयम्। विशेष्याका ङ्क्षायामाह(१) अयं पूर्वोक्त इति। स एव कीदृश इत्याकाङ्क्षायामाह समवे

---

(१) इदं प्रकाशव्यतिक्रमेण व्याख्यानं बोध्यम्।

णारणं विशेषणत्वं विशेष्यत्वं वाऽस्तीति ।

---

न्यायलीलावतीकण्ठाभरणम्

ना चोत्पादविनाशशीलः, कथमन्यथा श्यामादिरूपानां नित्यत्वे श्यामं नष्टं रक्तमुत्पन्नमिति प्रतीतिव्यवहारौ, तथाच तयोः समवायोत्पादविनाशावेव विषयः । तदेतदनुपपन्नम्—ताभ्यां समवायानुल्लेखात्, अन्यथा गन्धाद्योऽपि नित्याः समवायस्त्वनित्य इत्यपि वक्तुं सुकरं स्यात् । भट्टमते तु वैशिष्ट्यं भावाभावसाधारणं सम्बन्धः, समवायस्तु नास्त्येवेति । तदपि घटवति पटाभाववति घटाभावव्यवहारापत्तेः वैशिष्ट्यस्य एकत्वात् । समवायप्रतिबन्दिग्रहस्तु प्रत्यक्षमानमयूखे द्रष्टव्यः ।

न्यायलीलावतीप्रकाशः

त्वेनैव वायुमनः संयोगवत् साधनीयम्, लाघवाच्चैक एव समवायः विशेषणविशेष्यशब्दौ चेति अयमभ्युपगमवादः । वस्तुतो (१)यदन्विततया ज्ञात एव विशेष्ये तात्पर्यविषयीभूतेतरान्वयधीस्तद्व्यवच्छेदकं विशेषणम् उपलक्षणन्तु नैवम्, उपलक्षणानवच्छिन्नेऽप्युपलक्ष्ये तात्पर्यविषयीभूतान्वयबोधात् । इदमेव कार्यान्वयि विशेषणम् अतदन्वय्युपलक्षणम्, एतस्यार्थः यद्व्यावर्त्तकं विशेष्यान्वयिनाऽन्वीयते तद्विशेषणम्, यन्नान्वीयते तदुपलक्षणम् ।

प्राभाकरास्तु एकत्र घटादावामपाकदशायां श्यामरक्तरूपोपलम्भोऽस्ति स न तद्द्वयनिबन्धनः रूपस्य नित्यत्वेनैकत्वेन चैकदोपलम्भापत्तेः, तस्मात्तयोः सम्बन्धस्यैवोत्पत्तिविनाशौ, स एव सम-

न्यायलीलावतीप्रकाशविवृतिः

तत्वादीति । समवेतत्वासमवेतत्वादिनिबन्धन इत्यर्थः । आदिपदेन च समवायिकारणत्वनिबन्धनविशेष्यत्वव्यवहारसङ्ग्रहः । वस्तुतः प्रतीतेत्यादिफक्किका अत एवारभ्य कदाचित् समवायनिबन्धनः कदाचिदभिसम्बन्धानुपलम्भनिबन्धनो विशेषणविशेष्यत्वव्यवहार इत्येवमर्थकत्वेन मूलव्याख्या सम्यगिति । ननु पटरूपयोः समवायो नातीन्द्रिय इत्यत आह लाघवाच्चेति । लाघवसहकृतानुमानादित्यर्थः । शाब्द एव ज्ञाने विशेषणत्वादिविचारस्य प्रायिकत्वात्तदभिप्रेत्याह प-

---

(१) अत्र पदार्थतया इति पाठो विवृत्तिकर्तुरभिमतः ।

न्यायनये तु प्रत्यक्ष एव समवायः जातिव्यक्तिभ्यां सह स्वरूपेणानुभूयते । अननुभवे गौरयमिति गोत्वपुरोवर्तित्वयोः सामानाधिकरण्यबोधो न स्यात् । द्वयोः समानेनाधिकरणेन सम्बन्धः सामानाधिकरण्यम् । अयमयं गोत्वं च गोत्वमिति व्यधिकरणोऽनुभवः स्यात् । गोत्वसमवायीति सामाना-धिकरण्यप्रत्ययवद्भिनैव सम्बन्धावभासं गोत्वसम्बन्धीति प्रत्ययो

---

न्यायलीलावतीकण्ठाभरणम्

समानतन्त्रसिद्धान्तं दर्शयति न्यायेति । जात्यादिविशिष्टधीः सम्ब-न्धविषया विशिष्टधीत्वात् दण्डीतिधीवत् । अभावादिविशिष्टबुद्धेरपि स्वरूपसम्बन्धविषयत्वेन न व्यभिचारः । न च तत्रापि स एवास्त्विति वाच्यम् । लाघवादेकस्यैव सिद्धेः स्वरूपाणान्त्वनन्तत्वादिति भावः । स्वरूपेणेति । न विशेषणत्वेन नवा विशेष्यत्वेनेत्यर्थः । समवायप्रत्यक्षे प्रमाणमाह अननुभव इति । गोत्वसम्बन्धीति । अयं गौरिति प्रत्ययोऽपी-

न्यायलीलावतीप्रकाशः

त्याय इत्याहुः ।

तन्न । श्यामं रूपं नष्टं रक्तमुत्पन्नमित्यबाधितानुभवात् समवायस्यो-त्पत्तिविशेषानुल्लेखाच्च, तन्मतेऽपि तस्यातीन्द्रियत्वात्, अन्यथाऽ-वयविज्ञानगन्धादयो नित्याः समवायस्योत्पत्तिविनाशाविति स्यात् ।

न्यायनये त्विति । गुणक्रियाजातिविशिष्टबुद्धयो विशेषणविशेष्य-सम्बन्धविषयाः विशिष्टबुद्धित्वात् दण्डीतिविशिष्टबुद्धिवत् । न च व्यभिचारः, अभावादिविशिष्टबुद्धेरपि स्वरूपसम्बन्धविषयत्वात् । न चात्रापि तेनैवार्थान्तरं, यतो गुणक्रियाजातिबुद्धीनां पक्षधर्मताबला-त्सम्बन्धः सिद्ध्यल्लाघवादेक एव सिद्ध्यति, स एव समवायः, न तु स्वरूपसम्बन्धः तत्स्वरूपाणामननुगतत्वादित्युक्तमिति भावः ।

न्यायलीलावतीप्रकाशविवृतिः

दार्थतया ज्ञात एवेति । तन्मतेपीति । तथाच साक्षात्काररूपायामुत्पाद-विनाशप्रतीतौ समवायविषयकत्वकल्पनमयुक्तमिति भावः ।

केन रूपेण भासत इत्याद्यनन्तरं क्वचिदनुभव इति मूलप्रतीक-

भविष्यतीति चेत् । न, तत्रापि सम्बन्धप्रतिभानात् । तर्हि अनवस्था ? न, तत्र सम्बन्धप्रतीतेरारोपितत्वात् । जाताव- प्यारोपिताऽस्त्विति चेन्न । बाधकाभावात् । तत्र किं बाधकम् ? अनवस्था । इष्यत एव सम्बन्धानन्त्यमिति चेत् । इष्यतामस्त्वा- नन्त्यम् । सर्वत्र चारोपे आरोपानुपपत्तेः, आरोप्यस्य सम्बन्धस्या भावात्(१) । संयोग एवारोप्यतामिति चेन्न । तद्व्यावर्तकस्याद्र- व्यत्वस्यायुतसिद्धत्वस्य वोपलम्भात् । संयुक्तावुभाविति(२) प्रत्य- यापत्तेश्च । असम्बद्धरूपत्वे समवायस्य नियतसम्बन्धि-

न्यायलीलावतीकण्ठाभरणम्

त्यर्थः । तत्रापीति । गोत्वसमवायीत्यत्रापीत्यर्थः । आरोपितत्वादिति । आरो- परूपत्वादित्यर्थः । स्वरूपसम्बन्धाभिप्रायेणाह—अस्त्वानन्त्यमिति । बाधकाभावादित्यत्र हेत्वन्तरं समुच्चिनोति सर्वत्र चेति । समवाय- वज्जात्यादावपीत्यर्थः । आरोप्यस्यैवेति । प्रमितस्यैवान्यत्रारोप्यत्वादि- त्यर्थः । जातिगुणकर्मादिविशिष्टप्रत्ययेनाह अद्रव्यत्वस्येति । इह तन्तुषु पट इत्यत्राह अयुतसिद्धत्वस्येति । द्वयोरसम्बद्धयोरविद्यमानत्वस्येत्यर्थः । उभयसाधारणमाह संयुक्ताविति । नन्वारोपश्चेत्तदा घट एव गोत्वस- मवायः कथं नारोप्यत इत्याह—असम्बद्धेति । ननु गौरयमिति प्रतीते- रपि गोत्वसमवायवानयमित्याकारः स्यात्, समवायारोपस्य समवाय-

न्यायलीलावतीप्रकाशः

केन रूपेण भासत इत्यपेक्षायामाह स्वरूपेणेति । सर्वत्रेति । समवायवज्जा- त्यादावपीत्यर्थः । अयुतसिद्धत्वस्येति । असम्बद्धयोरविद्यमानत्वस्येत्य-

न्यायलीलावतीप्रकाशविवृतिः

लिखनम् । तत्र भासत इति । केन रूपेण केन प्रमाणेन नाङ्गीकार्यमिति शेष इति योजना । यदा तु स्वरूपेणेति प्रतीकलिखनं तदा सुगम तथाच । एव गोत्वेति । गौरितिप्रत्ययस्य एवमाकारकत्वापत्तिरित्यर्थः । पूर्वत्रोपनीतस्येति । यद्यपि मानसे उपनीतस्यापि विशेष्यत्वं तथाप्युभ- योरुपनीतत्वे तथा, अत्र तज्ज्ञानस्योपनीतत्वादिति भावः । मानसज्ञा-

(१) आरोप्यस्यैवाभावादिति मिश्रसमतोऽत्र पाठो बोध्यः ।

(२) संयुक्ताविमाविति प्रा० पु० पाठः ।

(१)समवायारोपनियमः कथम् । आरोपजनकशक्तिवैचित्र्यात्स्वशरीरे आत्मारोपवत्, अभिन्न एव चन्द्रमसि द्वैतारोपवत् । संसृष्टासंसृष्टत्वजिज्ञासायां सत्यां भेदारोप एव सम्बद्धत्वारोपः(२)। ज्ञातोऽयं घट इत्यत्रापि सामानाधिकरण्यबोधबलेन [ सम्बन्धवशेन ] सम्बन्धप्रसक्तिरिति चेत् । न । अतीतानागतयोरसत्त्वेन सम्बन्धविरोधात् । तन्मर्यादया वर्तमान-

न्यायलीलावतीकण्ठाभरणम्

तन्त्रत्वादित्यत आह संसृष्टेति । ननु यत्र समवायो भासते स एव स्वस्मिन् कथमारोप्यत इत्यत आह भेदेति । प्रथमं समवायः समवायाभिन्न इत्यारोपस्तदनन्तरं तत्र समवायारोप इत्यर्थः । तथा च भेदारोप एवेति सप्तमी । यद्वा प्रथमान्त एवायं, य एव भेदारोपः स एव सम्बन्धारोप इत्यर्थः । नन्वेवं सामानाधिकरण्यानुभवबलात् ज्ञानार्थयोरपि सम्बन्धान्तरं स्यादित्याह ज्ञातोयमिति । यद्यपि समवायवन्नायं सम्बन्धः प्रत्यक्षो भवितुमर्हति ज्ञानार्थयोरेकेन्द्रियावेद्यत्वात्, तथाच प्रतिबन्दिरियमुन्मोचनीयैवेति भावः । ननु आत्मा ज्ञात इत्यादौ मानसप्रत्यक्षात् सम्बन्धः सिध्येदित्यर्थः । ननु वर्त्तमाने विषये प्रतीतिबलादयं सम्बन्धः स्वीक्रियतामित्यत आह तन्मर्यादयेति । यथा अती-

न्यायलीलावतीप्रकाशः

र्थः । नियतसम्बन्धिनीति । सम्बन्धशून्यत्वाविशेषाद्गोव्यक्तौ गोत्वसमवायारोपो न घटव्यक्तावपीत्यर्थः । ननु यदि समवायस्वरूपाधीनः समवायारोपस्तदा गौरयमित्यत्रापि समवाये समवायारोपः स्यादत आह (३)संसृष्टेति । ननु बाधकाभावात् वर्तमानेऽर्थे ज्ञातता सिध्येदित्यत

न्यायलीलावतीप्रकाशविवृतिः

नरूपं विशेषणमादाय घटविशेष्यकचाक्षुषज्ञानसम्भवेऽपि सिद्धान्त

( १ ) नियतसम्बन्धिनीति सप्तम्यन्तपाठः प्रकाशकर्तुरभिमतः ।

( २ ) सम्बन्धारोपे इति मु० पु० पाठः ।

( ३ ) अत्र 'तथाच' 'पूर्वत्रोपनीतस्ये'त्यादिविवृतौ प्रतीकदर्शनात् कश्चित्पाठो भ्रष्ट इति ज्ञायते । 'रोपः स्यायं ग्रन्थः ननु' इति आदर्शपुस्तके वर्तते तत्रास्माभिः 'दत आह संसृष्टेति' प्रतीकान्तं संगतं बुध्या योजितम् ।

स्यापि ज्ञानस्य सम्बन्धानुपपत्तेः । सामानाधिकरण्यप्रत्ययबाभावेन व्यपदेशस्योपचरितत्वात् । अबाधितसामानाधिकरण्यबोधस्य चानुपप्लुतसम्बन्धानुभवपूर्वकत्वनियमात् दण्डकुण्डलौ यज्ञदत्तसंसृष्टाविति वत् । यद्वा जात्यादिकं स्वाश्रयेण सम्बद्धमन्येनासम्बद्धमनुभूयमानं स्वातिरिक्तं सम्बन्धं सहायमपेक्षते, अन्यथा

---

न्यायलीलावतीकण्ठाभरणम्

तानागतयोर्ज्ञानस्वरूपाधीना तत्प्रतीतिस्तथा वर्तमानेऽप्यर्थे स्यादित्यर्थः । ननु घटस्येदं ज्ञानमिति सम्बन्धमन्तरेण कथं षष्ठीत्यत आह व्यपदेशस्येति । ननु प्रतीतेस्तौल्ये कथमेकत्र सम्बन्धाभ्युपगमो नान्यत्रेत्यत आह अबाधितेति । सामानाधिकरण्यबोधः सामानाधिकरण्य-

न्यायलीलावतीप्रकाशः

आह तन्मर्यादयेति । अतीतानागतयोर्ज्ञाततया अभावे ज्ञातव्यवहारदर्शनाद्वर्त्तमानेऽप्यर्थे स व्यवहारो ज्ञानविषयस्वरूपाभ्यामेव जन्यते अतीतवर्त्तमानयोर्ज्ञातताव्यवहारे विषयवैलक्षण्याननुभवात्, अन्यथाऽतीतादौ ज्ञाततया अभावे व्यवहाराभावापत्तेः तस्य ज्ञातताසाध्यत्वात्, न च ज्ञातताज्ञानमेव व्यवहारहेतुर्गौरवादित्यर्थः । व्यपदेशस्येति । घटस्येदं ज्ञानमित्येवंरूपस्येत्यर्थः । ननु सामानाधिकरण्यानुभवान्न समवायसिद्धिः, एकाधिकरणाधेयत्वस्य सामानाधिकरण्यत्वात् तस्य च समवायादन्यत्वादित्यत आह अबाधितेति । एतच्च पौर्वापर्यमेकाधिकरणाधेयात्मकसामानाधिकरण्यपक्षे द्रष्टव्यम् । यदा त्वेकाधिकरणवृत्तित्वं सामानाधिकरण्यं तदा न पौर्वापर्यं समवायस्यैव वृत्तित्वात् । एवं समवाये सम्बन्धानुभवपक्षे समवायं प्रसाध्य तत्र सम्बन्ध एव नानुभूयत इति समवायसिद्धिर्निरपवादेत्याह यद्वेति । अन्यथेति । गोत्वादेराश्रयासम्बन्धाविशेषादयं गौरयमगौरिति प्रती-

न्यायलीलावतीप्रकाशविवृतिः

सौलभ्यादाह घटविशेष्यकमिति । गौरवादिति । स्वरूपसत एव ज्ञानाद् ज्ञातत्वव्यवहारोपपत्तौ ज्ञाततातज्ज्ञानकल्पने गौरवप्रसङ्गादित्यर्थः । वस्तुतस्तवातीतादौ ज्ञातताव्यतिरेकनिर्णये तज्ज्ञानमप्यसंभावितमेवेति भावः । सामानाधिकरण्यबोध एव सम्बन्धबोधो न तु तज्ज-न्य इत्यत आह एतच्चेति । दण्डकुण्डलाविति पुल्लिङ्गप्रयोगः चिन्त्यः-

विचित्रप्रत्ययानुपपत्तेः(१) । समवाये तु विशेषणविशेष्यभावः सम्बन्धोऽवभासते न तु तत्र सम्बन्धान्तरम् । न हि गोत्वसम्बन्धवानयमितिवद्गोत्वसम्बन्धसम्बन्धवानयं तत्सम्बन्धवान्वेति प्रथास्ति । यदि त्वसकृत्सम्बन्धः(२) प्रथते न काचित्क्षतिः । सम्बन्धानन्त्येऽपि नैयायिकानामनियतपदार्थवादित्वेन विरोधाभावात् । तथा च न्यायवार्तिकम् 'समवाये अभावे च विशे-

---

न्यायलीलावतीकण्ठाभरणम्

व्यपदेशः बोध्यतेऽनेनेति व्युत्पत्तेः, तस्य चाबाधितत्वं यथार्थधीजनकत्वमेव । एवं प्रत्यक्षानुभवबलात् समवायं प्रसाध्य प्रकारान्तरं स्यादित्यत आह समवाये त्विति । तथा चानवस्थालक्षणप्रतिकूलतर्कात् स्वरूपसम्बन्धेनैव प्रतीत्युपपत्तिरित्यर्थः । ननु कथं न सम्बन्धान्तरमित्यत आह नहीति । अभ्युपगमवादेनाह यदि त्विति । सम्बन्ध इति । गोत्वसम्बधसम्बन्धवानयमित्याकार इत्यर्थः । अनियतेति । नहि वैशेषिकानामिव षडेव पदार्था इति तत्रावधारणं श्रूयत इत्यर्थः । उपजीव्यसम्मतिमाह तथाचेति । वैशेषिकैस्तु विशेषणविशेष्यविषयकं ज्ञानमेव सम्बन्धत्वेनाभिमतमिति न सम्बन्धानन्त्यमित्यर्थः । अत्र दर्शने समवाय-

न्यायलीलावतीप्रकाशः

त्यनुपपत्तिरित्यर्थः । समवाये त्विति । स च स्वरूपसम्बन्धात्मकोऽन्य एव समवायादित्यर्थः । अत्र वृद्धसंमतिमाह तथा चेति । न चैवं समवायवत् गोत्वमपि स्वभावसम्बन्धेनैव सम्बद्धमवभासतामिति वाच्यम् । लाघवादेकस्यैव सम्बन्धस्य सिद्धेरित्युक्तत्वात, स्वभावसम्बन्धस्य तत्तत्स्वरूपात्मकतयाऽनन्तत्वात् । ननु नीलो घट इत्यनुभवो न विशेषणविशेष्यसम्बन्धगोचरः, अन्यथा दण्डी पुरुष इतिवन्नीली घट

न्यायलीलावतीप्रकाशविवृतिः

योगत्वादेव समाधेयः । स चेति । यद्यपि स्वरूपमपि समवाय एव तत्र

---

(१) नुपपत्तिरिति मा० पुं० पाठः ।

(२) सव कृतमबद्धसम्बन्धे इति मा० पु० पाठः 'सकृत्संबध' इति मु० पु० पाठश्चायुक्त इति मयं स्थापितः ।

षणविशेष्यभावात्' इति । न चैतद्भेदाभेदबलादनुपपन्नम् । विरोधेन तयोरनुपपत्तेः । अनुभवसिद्धत्वादविरोध इति चेत् । न, तदभावात् । न हि जातिर्जातिमतोऽभिन्नेति कश्चिदनुभवति । गौरयमिति सामानाधिकरण्यानुभवेऽभेदानुभव इति

---

न्यायलीलावतीकण्ठाभरणम्

स्यातीन्द्रियत्वात्, अभावे तु समानतन्त्रसिद्धो विशेषणविशेष्यभावसम्बन्ध एव इति भावः। नहि तत्र संयोगः सम्भवति इन्द्रियस्य च प्राप्यकारित्वमुपपादितमेवेति भावः। ननु गौरयमिति गोत्वाभिन्नोऽयं पिण्ड इत्येव भासते ननु गोत्वेदन्तयोः सामानाधिकरण्यं येन तदनुरोधात् समवायप्रत्यक्षता स्यात् पिण्डानामननुगमात्, तदभ्युपगमार्थं भिन्नमपि गोत्वं भवेत्, तथाच धर्मधर्मिणोर्भेदाभेद इति शङ्कते नचैतदिति। एतदिति सामानाधिकरण्यभानानुरोधात् समवायप्रत्यक्षत्वमनुपपन्नमित्यर्थः । तयोरिति । भेदाभेदयोरित्यर्थः । अनुभवेति । गोत्वाभिन्नोऽयं पिण्ड इत्यनुभवसिद्धत्वादित्यर्थः। एतादृशानुभव एव नास्तीत्याह तदभावादिति । सामानाधिकरण्यानुभवस्यैवाभेदो विषय इति शङ्कते अयमिति । धर्मिणा सम-

न्यायलीलावतीप्रकाशः

इति प्रतीत्यापत्तेः, तस्मात्तत्र विशेषणसम्बन्धो विषयोऽत्र तु तद्भेदः विषयेणैव धियां विशेषात्, अत्यन्ताभेदे च सहप्रयोगानुपपत्तेर्भेदोऽप्यस्तीति तयोर्भेदाभेदः, अत एव सामानाधिकरण्यप्रथाप्युपपद्यते अत्यन्तभिन्नादभिन्नाच्च तस्याव्यावृत्तेः, अन्योन्याभावत्वमव्याप्यवृत्तिवृत्ति नित्याभाववृत्त्यभावत्वसाक्षाद्व्याप्यधर्मत्वात् अत्यन्ताभावत्ववदिति अनुमानमपीति मतं तन्निरस्यति नचैतदिति। विरोधेनेति। भेदाभेदयोर्मिथोविरहरूपतया विरुद्धयोरेकत्र समावेशानुपपत्तेरित्यर्थः। ननु पाकानन्तरं रक्तोऽयं न श्याम इत्यबाधितानुभवबलात् तत्रैव तदन्योन्याभावसिद्धस्त्वयापि भेदाभेदस्वीकारो दुर्वारः। यद्वा संयोगतदभावयोरिवाविरोधः ।अत्राहुः। तद्वति तदभावोऽवच्छेदभेदेन

न्यायलीलावतीप्रकाशविवृतिः

उभयनिरूपितसमवायत्वं न सम्बन्धताप्रयोजकमिति भावः। नित्येति।

चेत् । किं पुनरिदं सामानाधिकरण्यम् ? किं भिन्नयोर्धर्मयोरभि-
न्नाधिकरणसम्बन्धित्वमुत धर्मधर्मिणोरभेदः ? नाद्यः । तथासति

---

न्यायलीलावतीकण्ठाभरणम्

अत्यन्ताभेदेऽपि धर्मयोरैकाधिकरण्यं न तु भेदेनेति भावार्थः ।
एवं नीलो घट इत्यादावपि सामानाधिकरण्यबलान्न भेदो भेदाभेदो
वा, भेद एव सामानाधिकरण्योपपत्तेः । एवंसति दण्डीतिवत्
नीली घट इति स्यादिति चेन्न । मतुब्लोपादभेदोपचाराद्वा त-
दुपपत्तेः । नन्वन्योन्याभावत्वमव्याप्यवृत्तिवृत्ति अभावत्वसाक्षाद्व्या-
प्यधर्मत्वात् अत्यन्ताभावत्ववदित्यनुमानात् भेदाभेदसिद्धिरिति चे-
न्न । नीलोऽयमनीलश्च गौरयमगौश्चेति प्रतीतिप्रसङ्गपराघातात् बाधो-
न्नीतः संसर्गावच्छिन्नप्रतियोगित्वमत्रोपाधिः । संयोगध्वंसप्रागभाव-
योरव्याप्यवृत्ति वा । हेतौ नित्याभाववृत्तीति विशेषणं कैश्चि(१)द्दत्तं व्य-

न्यायलीलावतीप्रकाशः

वर्धते ज्ञायते च, यथा संयोगाद्यभावः, श्यामावच्छिन्नस्य तस्यैवा-
न्योन्याभावस्तत्रैव रक्तावच्छिन्ने तदन्योन्याभावश्च श्यामावच्छेदे-
नैव विरोधात्, एकावच्छेदेन भावाभावयोरेकत्रावृत्तेरज्ञानाच्च, नाप्यव-
च्छेदकान्तरेण, घटत्वावच्छिन्ने घटे तदभावात् तदज्ञानेऽपि नीलो
घट इति ज्ञानाच्च । न चान्योन्याभावरूपो भेदोऽस्तु, अभेदस्तु न तद-
भावः किन्त्वन्य एवेति वाच्यम् । अभेदव्यवहारे तस्याहेतुत्वात् तस्मा-
न्नीलो घट इत्यत्र नीलसम्बन्ध एव भासते । तथा सति नीली
घट इति धीः स्यादिति चेत् । नीलो घट इत्यत्र बुद्धौ यदि सम्ब-
न्धविषयत्वमापाद्यते तदिष्यत एव । अथ नीलो घट इति प्रयोगे
सम्बन्धवाचकपदवत्त्वं तदपीष्यत एव मतुब्लोपादुपचाराद्वा नी-
लपदस्य नीलवत्परत्वात् । तथासतीति । ननु धर्मधर्मिणोरभेदोपी-

न्यायलीलावतीप्रकाशविवृतिः

त्रैकालिकत्वस्याभावसाक्षाद्विभाजकधर्मत्वादित्यर्थः । श्यामावच्छिन्नस्ये-
त्याद्यभ्युपगमवादेन । वस्तुतः 'सविशेषणे ही'ति न्यायेन श्यामाभा-
व एव तत्र विषयः, तदुक्तं 'देशकालौ कामं भिद्येतां न तु तदुपरक्तः
पद्मरागमणिरपी'ति । मतुब्लोपादिति । प्रथमपक्षे लुप्तः स्मृतो मतुबेवार्थप्र-

---

(१) कैश्चित्प्रकाशकारैरित्यर्थः ।

र्थयोरभेदरूपस्याभेदमात्रसिद्धेः। न द्वितीयः। तत्राभेदानुभवाभा-
वात्। अथ गौरित्यनुभवस्य किमालम्बनम्? गोत्वं व्यक्तिस्त-
त्समवायश्चेति(१)। एवंसति गोत्वं गोत्वं, व्यक्तिः व्यक्तिः,
सम्बन्धः सम्बन्धः, इति प्रतीतिः स्यान्न गौरिति। यदि
च गोत्वं व्यक्तिस्तत्सम्बन्धश्चेति गौरिति(२)प्रतीतिविषयः,
गोत्वसम्बन्धो भूतलमित्यत्र किं न गौरिति प्रत्ययः?
भूतलस्य गोत्वसम्बन्धित्वेनानिरूपणादिति चेत्। न
तर्हि गोव्यक्तावपि तत्प्रत्ययः, तस्या अपि समवायसंसृष्टत्वे-
नानिरूपणात्। गोत्वसम्बन्धवैशिष्ट्यं तस्या गोत्वमिति चेत्।
किं वैशिष्ट्यं तदीयत्वम्? तच्चेत् सम्बन्धान्तरमनवस्था। तथा
गोत्वेन च समवायस्य निरूपणं[वैशिष्ट्यमिति(३)] चेत्, तद्रूपे-

---

न्यायलीलावतीकण्ठाभरणम्

र्थमेव। घटादौ पाकानन्तरं रक्तोऽयं न श्याम इति प्रतीतेरन्योऽ-
न्याभावाव्याप्यवृत्तित्वशंका वैशेषिकमतेऽनुपपन्नैवेति भावः। समवा-
यस्य प्रत्यक्षतामाक्षेप्तुं पृच्छति अथेति। उत्तरं गोत्वमिति। समवायस्या-
सम्बद्धत्वात्तदुपरक्तप्रतीतिर्न स्यात्। एवंसतीति दोषान्तरमाह।
यदि चेति। सम्बन्धाविशेषात् भूतलादावपि तदुपरक्तप्रतीतिः स्यादि-
त्यर्थः। तत्प्रत्ययं इति। गोत्वं समवायोपरक्त इत्यर्थः। तस्या इति। गो-
व्यक्तेरित्यर्थः। तद्रूपेणापीति। गोव्यक्तिनिष्ठरूपेणापीत्यर्थः। समवायस्यै-

न्यायलीलावतीप्रकाशः

ति मात्रार्थः। गौरिति प्रतीतिबलान्न समवायसिद्धिरित्याशय-
वानाक्षिपति अथेति। तच्चेदिति। तदीयत्वं चेदित्यर्थः। तद्रूपेणापीति।

न्यायलीलावतीप्रकाशविवृतिः

त्यायकः। यदि च मतुब्लोपमजानतामपि तदर्थप्रत्ययस्तदा लक्षणयेति

---

(१) इतिपदं मा० पु० नास्ति।
(२) गौरिति प्रतीतिविषय इति मा० पु० पाठः।
(३) [ ] चिह्नान्तर्गतः पाठो मा० पु० नास्ति।

चेत् । किं पुनरिदं सामानाधिकरण्यम् ? किं भिन्नयोर्धर्मयोरभि-
न्नाधिकरणसम्बन्धित्वमुत धर्मधर्मिणोरभेदः ? नाद्यः । तथासति

---

न्यायलीलावतीकण्ठाभरणम्

त्यन्ताभेदेऽपि धर्मयोरैकाधिकरण्यं न तु भेदेनेति भावार्थः ।
एवं नीलो घट इत्यादावपि सामानाधिकरण्यधीर्न भेदो भेदाभेदो
वा, भेद एव सामानाधिकरण्योपपत्तेः । एवंसति दण्डीतिवत्
नीली घट इति स्यादिति चेन्न । मतुब्लोपादभेदोपचाराद्वा त-
दुपपत्तेः । नन्वन्योन्याभावत्वमव्याप्यवृत्तिवृत्ति अभावत्वसाक्षाद्व्या-
प्यधर्मत्वात् अत्यन्ताभावत्ववदित्यनुमानात् भेदाभेदसिद्धेरिति चे-
न्न । नीलोऽयमनीलश्च गौरयमगौश्चेति प्रतीतिप्रसङ्गपराघातात् बाधो-
न्नीतः संसर्गावच्छिन्नप्रतियोगित्वमत्रोपाधिः । संयोगध्वंसप्रागभाव-
योरव्यवृत्ति वा । हेतौ नित्याभाववृत्तीति विशेषणं कैश्चि(१)द्दत्तं व्य-

न्यायलीलावतीप्रकाशः

र्थ्यते ध्यायते च, यथा संयोगाद्यभावः, श्यामावच्छिन्नस्य तस्यैवा-
न्योन्याभावस्तत्रैव रक्तावच्छिन्ने तदन्योन्याभावश्च श्यामावच्छेदे-
नैव विरोधात्, एकावच्छेदेन भावाभावयोरेकत्रावृत्तेरज्ञानाच्च, नाप्यव-
च्छेदकान्तरेण, घटत्वावच्छिन्ने घटे तदभावात् तदज्ञानेऽपि नीलो
घट इति ज्ञानाच्च । न चान्योन्याभावरूपो भेदोऽस्तु, अभेदस्तु न तद-
भावः किन्त्वन्य एवेति वाच्यम् । अभेदव्यवहारे तस्याहेतुत्वात् तस्मा-
न्नीलो घट इत्यत्र नीलसम्बन्ध एव भासते । तथा सति नीली
घट इति धीः स्यादिति चेत् । नीलो घट इत्यत्र बुद्धौ यदि सम्ब-
न्धविषयत्वमापाद्यते तदिष्यत एव । अथ नीलो घट इति प्रयोगे
सम्बन्धवाचकपदवत्त्वं तदपीष्यत एव मतुब्लोपादुपचाराद्वा नी-
लपदस्य नीलवत्परत्वात् । तथासतीति । ननु धर्मधर्मिणोरभेदोपी-

न्यायलीलावतीप्रकाशविवृतिः

त्रैकालिकवृत्त्यभावसाक्षाद्विभाजकधर्मत्वादित्यर्थः । श्यामावच्छिन्नस्ये-
त्याद्यभ्युपगमवादेन । वस्तुतः 'सविशेषणे ही'ति न्यायेन श्यामाभा-
व एव तत्र विषयः, तदुक्तं 'देशकालौ कामं भिद्येतां न तु तदुपरक्तः
पद्मरागमणिरपी'ति । मतुब्लोपादिति । प्रथमपक्षे लुप्तः स्मृतो मतुबेवार्थप्र-

(१) कैश्चित्प्रकाशकारैरित्यर्थः ।

धर्मयोराशिरूपत्वाभेदमात्रसिद्धेः। न द्वितीयः। तत्राभेदानुभवाभा-
वात्। अथ गौरित्यनुभवस्य किमालम्बनम्? गोत्वं व्यक्तिस्त-
त्समवायश्चेति(१)। एवंसति गोत्वं गोत्वं, व्यक्तिः व्यक्तिः,
सम्बन्धः सम्बन्धः, इति प्रतीतिः स्यान्न गौरिति। यदि
च गोत्वं व्यक्तिस्तत्सम्बन्धश्चेति गौरिति(२)प्रतीतिविषयः,
गोत्वसम्बन्धो भूतलमित्यत्र किं न गौरिति प्रत्ययः?
भूतलस्य गोत्वसम्बन्धित्वेनानिरूपणादिति चेत्। न
तर्हि गोव्यक्तावपि तत्प्रत्ययः, तस्या अपि समवायसंसृष्टत्वे-
नानिरूपणात्। गोत्वसम्बन्धवैशिष्ट्यं तस्या गोत्वमिति चेत्।
किं वैशिष्ट्यं तदीयत्वम्? तच्चेत् सम्बन्धान्तरमनवस्था। तथा
गोत्वेन च समवायस्य निरूपणं [वैशिष्ट्यमिति(३)] चेत्, तद्रूपे-

---

न्यायलीलावतीकण्ठाभरणम्

र्थमेव। घटादौ पाकानन्तरं रक्तोऽयं न श्याम इति प्रतीतेरन्योऽ-
न्याभावाव्याप्यवृत्तित्वशंका वैशेषिकमतेऽनुपपन्नैवेति भावः। समवा-
यस्य प्रत्यक्षतामाक्षेप्तुं पृच्छति अथेति। उत्तरं गोत्वमिति। समवायस्या-
सम्बद्धत्वात्तदुपरक्तप्रतीतिर्न स्यात्। एवंसतीति दोषान्तरमाह।
यदि चेति। सम्बन्धाविशेषात् भूतलादावपि तदुपरक्तप्रतीतिः स्यादि-
त्यर्थः। तत्प्रत्यय इति। गोत्वसमवायोपरक्त इत्यर्थः। तस्या इति। गो-
व्यक्तेरित्यर्थः। तद्रूपेणापीति। गोव्यक्तिनिष्ठरूपेणापीत्यर्थः। समवायस्यै-

न्यायलीलावतीप्रकाशः

ति मात्रार्थः। गौरिति प्रतीतिबलान्न समवायसिद्धिरित्याशय-
वानाक्षिपति अथेति। तच्चेदिति। तदीयत्वं चेदित्यर्थः। तद्रूपेणापीति।

न्यायलीलावतीप्रकाशविवृतिः

स्यायकः। यदि च मतुब्लोपमजानतामपि तदर्थप्रत्ययस्तदा लक्षणयेति

---

(१) इतिपदं मा० पु० नास्ति।

(२) श्चेति प्रतीतिविषय इति मा० पु० पाठः।

(३) [ ] चिह्नान्तर्गतः पाठो भा० पु० नास्ति।

त्यापि समवायस्य निरूपणात् तस्यापि तदीयत्वप्रसङ्गः। तेन सह समवायस्य निरूपणनियमो नास्तीति चेत्। न तर्हि गोव्यक्त्यापि(१) निरूपणात्। तस्मादनासादितगोत्वसमवायव्यक्तिभेदमखण्डमसाधारणं गौरिति प्रत्ययगोचरः(२)। तदेव च देशकालादिभेदेनानुगते गौरितिप्रत्यये भासमानं भिन्नमभिन्नं चाऽवभासत इति प्रत्यक्षसिद्धम्।

---

न्यायलीलावतीकण्ठाभरणम्

कत्वादिति भावः। तदीयत्वप्रसंगो–गोवैशिष्ट्यत्वप्रसंगः। तेनेति। गोव्यक्तिनिष्ठेनेत्यर्थः। प्रष्टा स्वाभिमतमुपसंहारव्याजेनाह तस्मादिति। अनासादितो गोत्वसमवायव्यक्तीनां भेदो येन तत्तथा, अखण्डमनेकाघटितम्, असाधारणमनेकासम्बन्धि। तर्हि एक एव पिण्डस्तथानुभूयेतेत्यत आह तदेव चेति। स्वलक्षणमेवेत्यर्थः। भिन्नमेव सदभिन्नमवभासते इति। एकोऽपि समवायो निरूपकभेदाद् भिन्न इव याभ्यां निरूप्यते तयोरेवान्योन्यमुपरक्तप्रत्ययं जनयन् प्रत्यक्षेण विषयीक्रियत इत्यर्थः।

न्यायलीलावतीप्रकाशः

तस्याः गोव्यक्तेः रूपेण शुक्लादिनेत्यर्थः। तस्यापीति। शुक्लादे रूपस्यापि तदीयत्वप्रसङ्गो गोत्ववैशिष्ट्यप्रसङ्गः, तथा च गोव्यक्ताविव तद्रूपेऽपि गौरितिप्रत्ययापत्तिरित्यर्थः। तेनेति। गोव्यक्तिरूपेणेत्यर्थः। अनासादितेति। न आसादितो गोत्वव्यक्तिसमवायानां भेदो येन तत्तथा, अखण्डमनेकाघटितम्, असाधारणमनेकासम्बन्धि। नन्वेवं गौरितिप्रतीतिविषयस्य भेदो न भासेत एकस्यैव धर्मिस्वरूपस्य सर्वत्र गौरितिप्रतीतिविषयत्वादित्यत आह तदेव चेति। देशकालात्मकोपाधिनिबन्धनो भेदाभेदानुभव इत्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

विभागः। तथा च गोव्यक्ताविवेति। सास्नादिमद्रूपविशेषस्य तदभिव्यञ्जकत्वादिति भावः। अनेकाघटितमिति। तथाच नोपाधिरूपमनेकासम्ब-

---

(१) पि अवयवेनापि निरूपणादिति भा० पु० पाठः। (२) विषयः—भा० पु० पाठः।

अत्रोच्यते । गोत्ववैशिष्ट्यमेव गोरूपत्वम् । वैशिष्ट्यं च समवायस्य स्वरूपशक्तिनियमेन [तत्र](१) गोत्वसम्बन्धावभासजनकत्वम् । तस्य च गोत्वव्यञ्जकरूपस्य श्वत्यन्तरेषु भेदेन भासमानस्यैकाकारत्वमेकधर्माधिष्ठानत्वमनुभूयते ।

ननु तत्सामान्यं(२) प्रथमपिण्डोपलम्भकालेऽनुवृत्तत्वेनानुभूयते व्यावृत्तत्वेन वा ? नाद्यः । प्रथममनुवृत्ततानवभासनात् । द्वितीये

---

न्यायलीलावतीकण्ठाभरणम्

तस्य चेति । गोरूपस्य पिण्डस्येत्यर्थः । एकाकारस्य विवरणमेकधर्म्माधिष्ठानत्वमिति ।

अखण्डमसाधारणं गौरितिप्रत्ययगोचर इति पूर्वपक्षिणा यदुक्तं तदेवोपपादयितुं शंकते नन्विति । अनुवृत्तत्वेन नानावृत्तिनिष्ठत्वेन ए·

न्यायलीलावतीप्रकाशः

यद्बाधकबलेन गौरितिप्रत्ययस्य समवायो न विषयस्तन्निराकरणायाह गोत्ववैशिष्ट्यमिति । वैशिष्ट्यं चेति । यद्यप्येकः समवायस्तथाप्यधिकरणस्वभावाद्यत्र गोत्वमस्ति तत्र गौरिति प्रत्ययो, यत्र तु तदत्यन्ताभावस्तत्र नेति समवायस्वभाव इति नोक्तदोष इत्यर्थः । अत एव गोरिव गोत्वसमवाययोरपि गोत्वसम्बन्धावभासजनकत्वादतिव्याप्तिरित्यपास्तम् । तस्य चेति । गोत्वव्यञ्जकंपिण्डमात्रस्य एकाकारत्वस्य, विवरणमेकधर्माधिष्ठानत्वमिति । एकधर्माश्रितत्वमित्यर्थः । अतोऽनासादितेत्यादि यदुक्तं तन्नेति भावः ।

प्रथममिति । अनुवृत्तत्वमेकव्यक्तिवृत्तित्वे सत्यपरव्यक्तिवृत्तित्वमपरव्यक्तिवृत्तिताज्ञानं विना ज्ञातुमशक्यमित्यर्थः । द्वितीये त्विति ।

न्यायलीलावतीप्रकाशविवृतिः

न्वितया च न जातिरूपमित्यतिरिक्तमेवेति भावः । यत्र गोत्वमस्तीति । यत्र विशेषणतायां विशिष्टबुद्धिजनकत्वं नियामकम् , जनकतायां च स्वभाव एव शरणमिति भावः । अतिव्याप्तिरिति । गौरितिप्रत्ययप्रसङ्ग इत्यर्थः । एकत्वभ्रमं निवारयति पिण्डमात्रस्येति । पौनरुक्त्यमपाकरोति वि·

---

(१) [ ] चिह्नस्थः पाठो मा० पु० नास्ति । (२) ननु च सामान्यं-मा० पु० पाठः ।

तु व्यक्तेरभिन्नमेवानुभूतमिति । अथ न भेदेन नाप्यभेदेन किन्तु स्वरूपेणानुभूयत इति मतम् । न । सामान्यस्या(१)नुवृत्त-तावभासप्रसङ्गात् । मैवम् । अनेकव्यक्तिसमवायित्वं हि सामा-न्यस्यानुवृत्तत्वम् । तेन तदप्रतीतावपि जातिस्वरूपावभासोपप-त्तेः। यदि भिन्ना जातिः स्यात् व्यक्त्यसम्बद्धापि प्रतीयेतेति चेत् । न । नित्यसम्बन्धबलेनैव तन्निरासात्(२) । अथ समवायरहि-तत्वमभिन्नत्वम् । तन्न । समवायस्य साधितत्वात् । स्वरूपभेदे-ऽपि अन्योन्याभावरहितत्वमभिन्नत्वमिति चेन्न। इदमिदं न भव-

---

न्यायलीलावतीकण्ठाभरणम्

कपिण्डासाधारणरूपेण । स्वरूपेणेति । स्वरूपं यदस्या जातित्वं तेने-त्यर्थः । जातिस्वरूपं भासते न तु तद्धर्मोऽनुवृत्तित्वादिरूपेणेत्याह अनेकेति। नित्यसम्बन्धेति । अयुतसिद्ध्या न पृथग्भानमित्यर्थः । इदमिदमिति । गोत्वं न व्यक्तिरिति प्रतीतेरन्योन्याभावविषयत्वादित्यर्थः । व्यक्त्य-

न्यायलीलावतीप्रकाशः

यदि जातिर्व्यक्तेर्भिन्ना स्यात् तदा व्यावृत्तत्वेन भानं न स्यात् अनु-गतधर्मताभावत्वात्तस्या इति व्यावृत्तत्वेन भानार्थं जातिव्यक्त्योर-भेदो मन्तव्य इत्यर्थः । तथा चाखण्डमेव गौरितिप्रत्ययस्य विषय इति भावः । यदि जातिः स्वरूपेणानुभूयते तर्हि स्वरूपस्यानुवृत्तत्वा-ज्जातिरपि तथैव भासेत, तच्च न प्रथमतः सम्भवतीत्याह सामान्येति। सामान्यं जातेः स्वरूपं प्रथममवभासत एव सामान्यरूपत्वं च स-मानासु व्यक्तिषु भासमानासु भासत इत्याह अनेकव्यक्तीति । जाति-व्यक्त्योरभेदे सति अखण्डमेव भासत इति मनसिकृत्य समवायनि-रूपणप्रस्ताव एवाह यदि भिन्नेति । अथेति । घटपटयोश्च समवायराहित्ये-ऽपि नाभेदः तयोर्विशेषणविशेष्यभावाभावात् जातिव्यक्त्योश्च तत्स-द्भावादिति भावः । समवायस्येति । पूर्वोक्तप्रमाणादित्यर्थः । ननु जाति-व्यक्त्योः स्वरूपभेदेऽप्यन्योन्याभावविरहादभेदः स्यादित्याह स्वरूपभेदे-पीति । इदमिदमिति । इदमिदं न भवतीतिप्रतीतिबलादन्योन्याभावस्य

---

(१) अनुवृत्तत्वेनानुवृत्ततेति मु० पु० पाठः । (२) तन्नियमादिति मु० पु० पाठः ।

तीति प्रत्ययगोचरस्य भावस्य अन्योन्याभावविरहे सर्वत्रान्यो-न्याभावविरहप्रसङ्गात् । अथ (मतम्)(१) गौरिति जातेरज्ञानेऽपि व्यक्तिज्ञानाज्जातिज्ञानेन च गौर्गौरिति व्यक्तेरवश्यमुपलम्भा-ज्जातिर्व्यक्तेरभिन्ना व्यक्तिस्तु जातेर्भिन्नेति भिन्नाभिन्नत्वमनुभ-वसिद्धमिति चेत् । न । जातिव्यञ्जकत्वेन व्यक्तेरवश्यमुपलम्भो जातिप्रतीतौ न तु जात्यभेदेन । एका हि जातिरनुभूयते भिन्ना तु व्यक्तिरिति नानुमानम् । तद्धि भिन्नमभिन्नं वा भिन्नाभिन्नं सा-धयेत् । नाद्यः । सत्प्रतिपक्ष[भेद]तापत्तेः । न द्वितीयः । तदन्वयि व्यतिरेकि वा ? नाद्यः । भिन्नाभिन्नत्वस्य क्वचिदपि दर्शनाभा-

न्यायलीलावतीकण्ठाभरणम्

विषयकप्रतीत्यविषयत्वात् जातिर्व्यक्त्यभिन्ना, जात्यविषयकप्रतीति-विषयत्वात् व्यक्तिर्जातेर्भिन्नेति शंकते अथेति । व्यक्त्यविषयकप्रतीत्य विषयत्वमन्यथासिद्धमिति नाभेदे लिङ्गमित्याह जातीति । नानुमान-मिति । धर्म्मधर्म्मिणोर्भेदाभेदसाधकमिति शेषः । तद्धीति । भिन्नमनु-मानमनेकं भेदसाधकं न परभेदसाधकमित्यर्थः । अभिन्नमिति । एकमे-वानुमानं भिन्नाभिन्नत्वन्तु साधयेदित्यर्थः । सत्प्रतिपक्षभेदेति । भेदाभे-

न्यायलीलावतीप्रकाशः

प्रामाणिकत्वादित्यर्थः । जातिर्व्यक्तेरिति । यद्धि यतो भिन्नं तत्तदज्ञानेऽपि भासत इत्यर्थः । तदविषयकज्ञानाविषयत्वमन्यथोपपन्नमित्याह जाति-व्यञ्जकत्वेनेति । जातिव्यक्त्योर्विरुद्धधर्माध्यासं भेदकमाह एका हीति । नानु-मानमिति । भेदाभेदसाधकमिति शेषः । तद्धीति । तद्धि प्रमाणं भिन्नं व्य-क्तिजात्योर्भेदग्राहकमेकमपरं चाभेदग्राहकमित्यर्थः। सत्प्रतिपक्षतेति । स-मानबलतया ज्ञायमानेन बाधितसाध्यविपर्ययत्वाद्भेदाभेदसाधकयो-रित्यर्थः । सामानाधिकरण्यं शाब्दमार्थं वोभयमप्यन्यथोपपन्नमित्याह

न्यायलीलावतीप्रकाशविवृतिः

वरणमिति । एकमेवानुमानमिति । एवञ्चानुमानाभ्यां वा भेदाभेदसिद्धिरे-कैनैव वाऽनुमानेन तत्सिद्धिरिति विकल्पार्थं इति भावः । मूले च

(१) ( ) चिह्नस्थः पाठो मु० पु० नास्ति ।

वात् । न द्वितीयः । तस्य स्वतोऽनुमानत्वेनानभ्युपगमात् । सामानाधिकरण्यानुपपत्तिरनुमानमिति चेत् । न, शाब्दसामानाधिकरण्यस्य तत्प्रवृत्तिनिमित्तसामानाधिकरण्यादेवोपपत्तेः, अर्थसामानाधिकरण्यानुभवस्य च धर्मधर्मिणोरभेदाभावेऽपि एकाधिकरणत्वेनैवोपपत्तेः । स्वतन्त्रयोर्गोत्वशुक्लगुणयोर्द्रव्याद्भेदे सामानाधिकरण्यमनुपपन्नमिति चेन्न । समवायबलेन तदुपपत्तेः । स्वतन्त्रः समवायो न तदुपपादयितुं क्षम इति चेत् । किं तस्य स्वातन्त्र्यं ? स्वमहिम्ना पराश्रितबुद्ध्यनर्जकत्वं(१) वा ताभ्यामसम्बद्धत्वं वा ? नाद्यः । धर्माणां धर्मिण्याश्रितबुद्धिजनकत्वेनैव

---

न्यायलीलावतीकण्ठाभरणम्

दसाधकयोस्तुल्यबलयोरित्यर्थः । सामानाधिकरण्येति । आत्यन्तिको यत्र भेदो गवाश्वादौ यत्र चात्यन्तमभेदस्तदुभयव्यावृत्तं सामानाधिकरण्यमेव भेदाभेदसाधकं नहि भवति गौरश्वो घटोऽघट इत्यर्थः । प्रवृत्तिनिमित्तेति । नीलपदप्रवृत्तिनिमित्तं नीलगुणत्वं घटपदप्रवृत्तिनिमित्तं च घटत्वं तदुभयसामानाधिकरण्यादेव शाब्दसामानाधिक-

न्यायलीलावतीप्रकाशः

शाब्देति । गौः शुक्ल इत्यत्र गोशुक्लपदयोर्भिन्नप्रवृत्तिनिमित्तकयोरेकाधिकरणप्रतिपादकत्वं शाब्दसामानाधिकरण्यं, तच्च प्रवृत्तिनिमित्तसामानाधिकरण्यमात्रादेवोपपन्नम्, प्रवृत्तिनिमित्तसामानाधिकरण्यं प्रवृत्तिनिमित्तयोरेकाधिकरणसम्बन्धमात्रम्, आर्थं च सामानाधिकरण्यं भिन्नयोः शब्दप्रतिपाद्ययोरेकाधिकरणवृत्तित्वं धर्मधर्मिणोर्भेदेऽप्युपपन्नमित्यर्थः । स्वतन्त्रयोरिति । मिथो भिन्नेषु घटपटादिषु तद्दर्शनादित्यर्थः । समवायेति । घटपटयोस्तु न समवायसम्बन्ध इत्यर्थः । धर्माणामिति । इह तन्तुषु पट इत्यादिबुद्धिजनकत्वेन समवायसिद्धेरित्यर्थः । ननु यद्यन्याश्रयाद्भेदाभेदयोर्मिलितयोः साध्यत्वे साध्याप्रसिद्धिः, भेदाभेदयोः प्रत्येकं साध्यत्वे चांशतःसिद्धसाधनं भेदस्योभयसिद्धत्वात्, तथाप्यन्याश्रयाद्भेदं पक्षविशेषणीकृत्य तदभिन्नत्वं साधनीयमतो नोक-

---

(१) जनकत्वमिति मु० पु० पाठः ।

तस्य स्वग्राहकमानसिद्धत्वात् । नेतरः । अधिष्ठानाभावात् असम्बद्धत्वेऽपि आश्रितबुद्धिजनकस्वभावनियमेनैव सामानाधिकरण्यबुद्धिनिर्वाहकत्वात् । भेदाभेदाभ्यां व्यावृत्तस्य चाऽस्य गन्धवत्त्वस्येव सन्देहापादकत्वात् । अन्यथा भुवोऽपि नित्यानित्यरूपतापत्तेः(१) । इति समवायः ॥

इति श्रीन्यायलीलावत्यां विभागपरिच्छेदः समाप्तः ॥

---

न्यायलीलावतीकण्ठाभरणम्

रण्योपपत्तेरित्यर्थः । अतिरोहितार्थमितरत् । गन्धवत्त्वस्येवेति । भूर्नित्या गन्धवत्त्वादित्ययं हेतुरुभयव्यावृत्तेर्यथा सन्देहापादकस्तथा सामानाधिकरण्यमपीत्यर्थः ।

इति महामहोपाध्यायश्रीशङ्करकृते लीलावतीकण्ठाभरणे
विभागपरिच्छेदः समाप्तः ॥

न्यायलीलावतीप्रकाशः

दोष इत्यत आह भेदाभेदाभ्यामिति । यथा भूर्नित्या गन्धवत्त्वादित्यत्र गन्धवत्त्वमसाधारणं सकलसपक्षविपक्षव्यावृत्तत्वात्तथा सामानाधिकरण्यमपीत्यर्थः । असाधारणानैकान्तिकस्य दूषकताबीजमाह अन्यथेति । यथा गन्धवत्त्वं व्योमादेर्व्यावर्त्तमानमनित्यतां साधयेत्तथा जलादेर्व्यावृत्ततया नित्यत्वमपीत्येकस्य धर्मिणो विरुद्धद्वैरूप्यापत्तिरि-

न्यायलीलावतीप्रकाशविवृतिः

भिन्नं वेत्यनुमानविशेषणम् । भिन्नाभिन्नमिति कर्मपदमिति ध्येयम् । यथा गन्धवत्त्वमिति। यद्यप्यसाधारणे विरुद्धद्वैरूप्यापत्तिर्न दूषकताबीजमपि तु संशायकत्वमेव,तथापि विरुद्धद्वैरूप्यापत्तौ न निश्चायकत्वमतः संशायकत्वमिति परम्परया तस्या अपि दूषकतायामुपयोग इति भावः । वस्तुतो विरुद्धद्वैरूप्यापत्त्याऽनिश्चायकत्वे परम्परानुमितिप्रतिबन्ध एव दूषकताबीजम्, परस्परविरुद्धव्याप्तिज्ञानत्वेनैव चास्य प्रतिबन्धकता, नतु पक्षधर्मताज्ञानसाहित्येनेति न सत्प्रतिपक्षाभेद इति विपश्चितं प्रागिति । जलादेरीति । अतद्गुणसंविज्ञानबहुव्रीहिणा जलज्ञानादेरित्यर्थः ।

---

(१) नित्यत्वानित्यत्वापत्तेरिति प्रा० पु० पाठः ।

व्यावृत्तत्वेन पदार्थज्ञानं तत्त्वज्ञानम्, तच्च वैधर्म्याधीनम्। तदपि व्यतिरेकिप्रमाण(१)मिति तत्परिच्छेदोऽयमारभ्यते। ननु व्यतिरेकी नानुमानम्, जीवच्छरीरं सात्मकं इच्छावत्त्वात्, यन्निरात्मकं न तदिच्छावत् यथा घटः। इच्छादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रिताः अष्टद्रव्याश्रितत्वेनानुपपत्तौ(२) गुणत्वात्, न यदेवं न तदेवम्, यथा भुवो रूपमित्यादिकं हि तत्। अत्र च पक्ष[स्य]विशेषणं

---

न्यायलीलावतीकण्ठाभरणम्

व्यावृत्तत्वेन-इतरभिन्नत्वेन। वैधर्म्याधीनं-तन्मात्रवृत्तिधर्म्माधीनम्। तत्परिच्छेद इति। तादृशपूर्वपक्षनिरासपरिच्छेद इत्यर्थः। व्यतिरेकानुमानपरिच्छेदो वा। व्यतिरेकी नानुमानमिति। असत्प्रतिपक्षो धर्म्मो नानुमानमित्यर्थः। भागासिद्धिवारणाय जीवदिति। सात्मकत्वं भोगजनकमनःसंयोगाधिकरणकत्वम्, भोगाधारसंयोगाधारसंयोगाधिकरणत्वं वा। इच्छावत्त्वादिति। इच्छाजन्यविशेषगुणजन्यक्रिया-

न्यायलीलावतीप्रकाशः

त्यर्थः। तस्मादसाधारणतया सामानाधिकरण्यं संशायकं नतु निश्चायकम्। यद्यपि वैशेषिकाणामसाधारणो धर्मो न संशयहेतुस्तथापि न्यायदर्शनमाश्रित्योक्तमिदम्, न्यायनये तु प्रत्यक्ष एव समवाय इत्युपक्रमात्॥

उत्तरग्रन्थप्रबन्धोपयोगार्थमाह व्यावृत्तत्वेनेति। तदपीति। अपिशब्दः साधर्म्यापेक्षया। पक्षस्येति। सिषाधयिषितसाध्यधर्मणो धर्मिणः पक्ष-

न्यायलीलावतीप्रकाशविवृतिः

यद्वा घटादावेव नित्यतामित्यन्वयः। व्यावृत्ततयेत्यत्र ज्ञानादेरिति शेषः। क्वचिज्जन्यजलादेरिति पाठः, स तु सुगम एव।

वैधर्म्यातिरिक्तस्य व्यतिरेक्यनुमानत्वेन समुच्चेयस्याभावादाह अपिशब्द इति। तथाच व्यतिरेकि तदप्यनुमानमिति योजनयाऽनुमानत्वेन साधर्म्यमेव समुच्चेयं मूल इति भावः। पक्षपदार्थं दर्शयन्नेव साध्यस्य विशेषणत्वमुपपादयति सिषाधयिषितेति। ज्ञानसमानाधिक-

---

(१) व्यनुमानमिति प्रा० पु० पाठः। (२) त्वेऽनुपपन्नामिति प्रा० पु० पाठः।

प्रतीतं न वा ? न चेद[प्र]सिद्धविशेषणः पक्षः । प्रतीतं चेत्, यत्र तत्प्रतीतं तत्र हेतोर्वृत्तिर्व्यावृत्तिर्वा ? वृत्तिश्चेदन्वयव्यतिरेकित्वम्, व्यावृत्तिश्चेदसाधारणानैकान्तिकता [अनध्यवसितो वा](१)। अप्रसिद्धसाध्यसंसर्गमिव साध्यविशेषणमप्यप्रसिद्धमेव स्वशक्तिवैचि-

न्यायलीलावतीकण्ठाभरणम्

त्र्यादित्यर्थः । एवं व्यतिरेकेऽप्यूह्यम् । पक्षविशेषणस्य–साध्यस्य । नचेदिति । तथाच पक्षसाध्यविशिष्टप्रतीतिरनुमितिर्न स्यादित्यर्थः । विशेषणज्ञानाद्यपेक्षत्वात् विशिष्टप्रतीतेरिति भावः । तत्र–प्रसिद्धसाध्यवति । असाधारणत्वमिति । सति सपक्षे सपक्षाद्व्यावृत्तो हेतुरसाधारण इत्यर्थः । व्यतिरेकानुमानमहिम्नैवाप्रसिद्धं साध्यं सेत्स्यतीत्याह अप्रसिद्धमिति । ननु बाधात् विषाणं शरीरे न सिद्ध्यति

न्यायलीलावतीप्रकाशः

स्य विशेषणं साध्यमित्यर्थः । अप्रसिद्धेति । तथाच पक्षविशेष्यिका साध्यविशेषणिकाऽनुमितिर्न स्याद्विशेषणज्ञानं विना विशिष्टज्ञानाभावादिति भावः । यदीच्छा समवायिकारणजन्या कार्यत्वात्, तच्च समवायिकारणं पृथिव्याद्यष्टभिन्नं पृथिव्यादित्वे बाधकत्वादिति पृथिव्यादिभिन्नात्मसिद्धौ तद्वत्त्वं जीवच्छरीरे साध्यते, तदा घटादौ तदस्तीति ततो हेतुव्यावृत्तावसाधारण्यं स्यादिति ज्ञानसमानाधिकरणज्ञानकारणीभूतसंयोगाश्रयकार्यत्वं सात्मकत्वम्, शरीरात्मसंयोगस्य ज्ञानकारणत्वात्, आत्ममनसोस्तथात्वेऽप्यकार्यत्वात्, तच्च शरीरादन्यत्राप्रसिद्धं शरीरे च सिद्धौ सिद्धसाधनम् । एतेनेच्छाऽसमवायिकाकारणसंयोगावच्छेदकत्वस्याभावो घटादौ दृष्टः तद्व्यतिरेकः शरीरे साध्यत इत्यपास्तम् । इच्छाऽसमवायिकारणसंयोगावच्छेदकत्वस्य शरीरादन्यत्राप्रसिद्धेः । अप्रसिद्धसाध्येति । यथा सिषाधयिषितस्य पक्षसंसर्गमप्रसिद्धमेव साधयति तथा सिषाधयिषितमप्यप्रसिद्धमेव साधयतीत्यर्थः । स्वशक्तीति । व्यतिरेकव्याप्तिपक्षधर्मताबलादित्यर्थः ।

न्यायलीलावतीप्रकाशविवृतिः

रणेति चक्षुर्घटसंयोगमादाय घटे प्रसक्तिवारणाय समानाधिकरणान्तम् । घटात्मसंयोगमादाय तत्रैव प्रसक्तिवारणाय ज्ञानकारणीभूतेति ।

(१) [ ] चिह्नान्तर्गतः पाठो प्रा० पुस्तके नास्ति । असाधारणत्वम् इति तु मिश्रसंमतः ।

त्याद्व्यतिरेकी साधयतीति चेन्न। शशविषाणादिमत्त्वसाधनापत्तेः। दृश्यानुपलब्धिबाधितत्वेन शरीरस्य शशविषाणादिमत्त्वासाधनं न त्वप्रसिद्धविशेषणत्वेनेति चेत् । न । अतीन्द्रिय[शृङ्ग]संसर्गाद्यनुमानापत्तेः(१)। साध्यविशेषणासिद्धौ तद्व्यतिरेकनिरूपणायोगात्साध्यसाधनयोर्व्यतिरेकव्याप्तेरसिद्धेः । न ह्यात्माप्रतीतौ निरात्मको घट इति शक्यं वक्तुम्(२)। नैरात्म्यं न च घटस्य प्रत्यक्षवेद्यं, तस्य तत्रासामर्थ्यात् । नानुमानगम्यं, क्वचिदपि नैरात्म्या-

न्यायलीलावतीकण्ठाभरणम्

नत्वप्रसिद्धया विषाणस्य प्रसिद्धत्वादित्याह दृश्येति । योग्यं विषाणविषाणं बाधात् मा सिध्येत् अयोग्यं तु सिध्येदेवेत्याह नेति। दोषान्तरमाह साध्येति । साध्योऽत्र पक्षः, साध्यं च तद्विशेषणं चेति। बाधशक्यत्वमेवोपपादयेति नैरात्म्यं चेति । तत्रेति । चक्षुरादीनां तत्रा-

न्यायलीलावतीप्रकाशः

शशविषाणेति । यद्यप्रतीतं सात्मकत्वं साध्यते तदा शशशृङ्गमप्रतीतमनुमीयेतेत्यर्थः। ननु शरीरे विषाणं साध्यते तच्च नाप्रसिद्धं येन प्रतिबन्धि स्यात् , किन्तु योग्यानुपलम्भबाधान्न साध्यत इत्याह दृश्यानुपलब्धीति । तथाप्यप्रसिद्धं शशविषाणवत्प्रमतीन्द्रियं साध्येतैव तस्यायोग्यतया बाधाभावादित्याह अतीन्द्रियेति। इन्द्रियजन्यं दर्शनं ज्ञानमिन्द्रियदर्शनं तदतिक्रान्तमतीन्द्रियतया दर्शनमतीन्द्रियमित्यर्थः। साध्याप्रसिद्धौ दूषणान्तरमाह साध्यविशेषणेति । अशक्यत्वमेवोपपादयति नैरात्म्यं चेति। तस्य तत्रेति । प्रतियोग्यप्रसिद्ध्या तदभावस्या-

न्यायलीलावतीप्रकाशविवृतिः

शरीरेऽसम्भववारणायाह शरीरात्मसंयोगस्येति । कार्यपदव्यावर्त्यमाह आत्ममनसोरिति । पक्षसंसर्गमप्रसिद्धमेव साधयतीत्यनन्तरं व्यतिरेकीति शेषः । यद्यप्रतीतमिति । अनुमितिश्च तन्मते साध्यविशेषिकैवेति भावः । प्रतियोग्यप्रसिद्ध्येति । यद्यपि सात्मकत्वप्रतीतेरपि प्रतियोग्यधिकरणयोरेकेन्द्रियग्राह्यत्वात् प्रत्यक्षस्य तत्रासामर्थ्यादिति

(१) अतीन्द्रियसंसर्गाद्यनुमानापत्तेरिति मा० पु० पाठः।

(२) घटः शक्यः प्रतिपत्तुमिति मा० पु० पाठः।

प्रतीतावन्वयिनो लिङ्गस्याभावात् । व्यतिरेकिणस्तु सात्मकत्व-प्रतीतिं विनाऽनुपपत्तेः । एकपदार्थवृत्तिना चेच्छादिमत्त्वादिनाऽसाधारणधर्मेण प्रतीतपदार्थानुमाने घटादावप्यसाधारणकम्बुग्रीवादिधर्मोपलम्भेन स्वेच्छाकल्पिततत्तदसाधारणधर्मवत्त्वानुमानप्रसङ्गात् । सामान्यतोदृष्टानुमितमिच्छादिसमवायिकारणं तद्व्यतिरेकश्चेच्छादिकार्यनिवृत्त्या घटादौ प्रतीतः, तत्संसर्गस्तु देहे साध्यत इति चेत् । न । तस्य कार्यात्कारणमात्रानुमानादेव-

---

न्यायलीलावतीकण्ठाभरणम्

सामर्थ्यात् मनसः बहिरप्रवृत्तेरित्यर्थः । अनभिमतप्रसङ्गादपि न व्यतिरेक्यनुमानमित्याह एकेति । नन्विच्छा क्वाचिदाश्रिता कार्यत्वादिति यदिच्छासमवायिकारणमनुमितं तद्व्यतिरेको घटादौ सुग्रह एवेति न कथं व्यतिरेकनिरूपणमित्याह सामान्यत इति । शरीरमिच्छाकारणवत् इच्छावत्त्वात् यद्यत् कार्यवत् तत्तत्कारणवदित्यन्वयिन एव तत्सिद्धेर्व्यतिरेकवैयर्थ्यमित्याह नेति । विशिष्य इच्छासमवायिकारणापरिचयेऽपि साध्याप्रसिद्धेरेवेति भावः । विशिष्टे तु

न्यायलीलावतीप्रकाशः

प्रतीतेरित्यर्थः । व्याप्त्यप्रतीतावप्यप्रतीतसाधने दोषमाह एकपदार्थवृत्तिना चेति । तद्व्यतिरेक-इच्छासमवायिकारणव्यतिरेकः, इच्छादेः कार्यं चेष्टारूपं तद्व्यावृत्त्या घटादौ प्रतीत इत्यर्थः । तस्येति । तस्य-इच्छासमवायिकारणमात्रस्य, शरीरमिच्छासमवायिकारणवत् इच्छारूपकार्यवत्त्वात् यद्यत्कार्यवत् तत्तत्कारणवदित्येवंरूपानुमानादेव सिद्धेर्व्यतिरेकवैयर्थ्यमित्यर्थः । वस्तुतोऽत्रापि साध्याप्रसिद्धिरिति भावः ।

न्यायलीलावतीकण्ठाभरणम्

मूलार्थः प्रतिभाति, तथाप्युपनीतेऽप्यधिकरणेऽभावः प्रत्यक्षेण गृह्यतां एवेति मनसैव तद्ग्रहः स्यादिति तन्मतं परित्यज्य प्रतियोग्यप्रसिद्धिपरतयैव व्याख्यातवान् । इच्छादिनिवृत्तिरप्यतीन्द्रियैवेति कर्मधारयं परित्यज्य षष्ठीसमासमालम्बते इच्छादेरिति । वस्तुत इति । यत्त्वतत्त्वयोरनुगतयोरभावादिति भावः । साध्यापेक्षया-साध्यप्रत्ययापेक्षया ।

सिद्धेः । व्यतिरेकिणाष्टद्रव्यव्यतिरिक्त(१)द्रव्यसमवायिकारणत्वानुमाने चोक्तदोषानिवृत्तेः । द्वितीयानुमाने च यदि द्रव्याश्रितत्वमात्रं साध्यते तदा गुणत्वादेव सिद्ध्यतीत्यष्टद्रव्याश्रितत्वानुपपत्तिविंशेषणं व्यर्थम् , अन्वयिनैव गुणत्वात् तत्सिद्धौ व्यतिरेकिणो वक्रस्य प्रयोगानुपपत्तेः । अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वसाधने च व्यतिरेकव्याप्तेर सिद्धेः । साध्याप्रसिद्धौ(२)तु तत्संदेहानुपपत्तौ पक्षस्याप्रतीतेर्हेतोः पक्षधर्मत्वानुपपत्तेः ।

अत्रोच्यते । अनिश्चितत्वेऽपि विशेषणस्य संभावितत्वात् । इ-

---

न्यायलीलावतीकण्ठाभरणम्

साध्याप्रसिद्धिरेवेत्याह अष्टेति । द्वितीयानुमान इति । इच्छादयोऽष्टद्रव्यातिरिक्तद्रव्याश्रिता इत्यनुमान इत्यर्थः । यद्यपि साध्यं विशिष्योल्लिख्य विकल्पोऽयं न सम्भवति तथाप्यभिप्रायतो विकल्पः । न च वक्रत्वेऽवक्रत्वं न दोष इति वाच्यम् । साध्याप्रसिद्ध्यादिना तदुपायत्वस्यैव खण्डनात् । साध्याप्रसिद्धौ दोषान्तरमाह साध्येति । सन्देहानुपपत्तावित्युपलक्षणम् सिषाधयिषानुपपत्तिरित्यपि द्रष्टव्यम् ।

अत्रोच्यत इति । व्यतिरेक्यनुमानमिति शेषः अन्यथा पञ्चम्यनुपपत्ते साध्याप्रसिद्धिदोषं परिहरति विशेषणस्येति । साध्यस्येत्यर्थः । सम्भावित-

न्यायलीलावतीप्रकाशः

उक्तदोषेति । साध्याप्रसिद्धिरूपेत्यर्थः । अन्वयिनैवेति । न च व्यतिरेकिणोऽपि तत्र सामर्थ्यादुपायान्तरमदोषं इति वाच्यम् । केवलव्यतिरेकिणोऽसिद्धेर्व्यतिरेकव्याप्तेर्गमकत्वानवधारणात् । प्रयोगानुपपत्तेरित्यादि हेतुत्रये पञ्चमीनिर्देशः । व्यतिरेकी नानुमानमिति साध्यापेक्षया व्यतिरेकिण्यपक्षधर्मत्वं व्युत्पादयति साध्याप्रतीतावित्रिति । सन्देहानुपपत्तिरित्युपलक्षणम् साध्याप्रसिद्धौ सिषाधयिषाघटितमपि पक्षत्वं नास्तीति मन्तव्यम् ।

न्यायलीलावतीप्रकाशविवृतिः

पक्षत्वं नास्तीति । एवञ्च पक्षस्याप्रतीतेरिति मूलं प्रतीत्यभावेन विषया-

---

(१) अष्टद्रव्यातिरिक्तेत्यादि प्रा० पु० पाठः ।

(२) साध्याप्रतीताविति वर्धमानसंमतोऽत्र पाठो द्रष्टव्यः ।

इच्छादीनां द्रव्याश्रितत्वेऽनुमितेऽष्टद्रव्यातिरिक्ताश्रितत्वं अष्टद्रव्याश्रितत्वं वेति विप्रतिपत्तेरेव संशयोपपत्तौ(१) द्रव्याश्रितत्वविशिष्टेच्छादिषु अष्टद्रव्यातिरिक्ताश्रितत्वमाशङ्क्यमानं शङ्काविषयपर्यालो-

---

न्यायलीलावतीकण्ठाभरणम् ।

त्वादिति । संशयविषयत्वात्तदधीनस्मृतिविषयत्वाद्वेत्यर्थः । तदुभयमुपपादयति इच्छादीनामिति । इच्छा द्रव्याश्रितेति सामान्यतोदृष्टेनानु-

न्यायलीलावतीप्रकाशः

यद्यप्यत्रोच्यत इत्यत्र न हेतोरपेक्षा तथाप्यभिधाने विषयेणि विषयस्य हेतुत्वं विवक्षितत्वा सम्भावितत्वादिति पञ्चमीनिर्देशः । ननु साध्यस्य सम्भावना ज्ञानविशेषः, स च प्रकृते नास्तीत्युक्तमित्यत आह इच्छादीनामिति । इच्छायाः द्रव्याश्रितत्वे पृथिव्यादौ बाधकानवतारदशायां विप्रतिपत्तिवाक्यात् द्रव्याश्रिता इच्छा अष्टद्रव्यातिरिक्तवृत्तिर्नवेति संशयात् अष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं प्रसिद्धमिच्छायां साध्यत इत्यर्थः । यद्यपि विप्रतिपत्तिर्न वैशेषिकाणां संशयहेतुस्तथापि विप्रतिपत्तिशब्देनात्राश्रितत्वं साधारणधर्म एवोक्तः, संशयप्रसिद्धमपि साध्यं व्यतिरेकादिनिरूपकं साध्यज्ञानमात्रस्य तद्धेतुत्वात् । न चैवं संशयादेव पक्षे साध्यासिद्धेः किं व्यतिरेकिणेति वाच्यम् । साध्यनिश्चयार्थं तत्प्रवृत्तेरिति भावः । नन्वेवं द्रव्याश्रितत्वविशिष्टायामिच्छायामष्टद्रव्यातिरिक्तवृत्तित्वज्ञानेऽष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वं कुतो ज्ञातमित्यत आह शङ्काविषयेति । यद्यपि शङ्काविषयालोचना न संशयहेतुस्तथापि द्रव्याश्रितेच्छा अष्टद्रव्यातिरिक्ताश्रिता नवेति संशयात् इच्छाया अष्टद्रव्यातिरिक्ताश्रयोपस्थितौ पक्षा-

न्यायलीलावतीप्रकाशविवृतिः

भावसाधनपरमिति मन्तव्यम् । विवक्षितत्वेति । यद्यपि तद्विवक्षायामन्यप्रयोजकतया नान्वयबोधस्तथापि च ज्ञानकारणीभूतज्ञानविषयतावच्छेदकत्वलक्षणप्रयोजकत्वमेवात्र पञ्चम्यर्थस्तत्कल्पने चानादिशिष्टविवक्षैव नियामकेति भावः । यद्यपीति । तन्मते साधारणधर्मदर्शनस्यैव सर्वत्र संशयकारणत्वादिति भावः । तथापीति । विरुद्धविष-

---

(१) संशयोत्पत्ताविति मा० पु० पाठः ।

चनायामष्टद्रव्यातिरिक्तद्रव्यवृत्तित्वशङ्कामुत्पादयति । तस्याश्चा-
ष्टद्रव्येतरद्रव्याश्रितत्वविपर्ययकोटावनुमानप्रतिनिर्धीभूतप्रसङ्गव-
दत्रमेवाभिमतकोटिगोचरे संभावनात्वं, तत्सामर्थ्येन तदेककोटि-

---

न्यायलीलावतीकण्ठाभरणम्

मितेर्द्रव्याश्रिता तदतिरिक्ताश्रिता वेति विप्रतिपत्त्या संशय इत्यर्थः ।

न्यायलीलावतीप्रकाशः

दिच्छाश्रयोऽष्टद्रव्यातिरिक्तो द्रव्यं नवेति संशयादष्टद्रव्यातिरिक्तद्र-
व्योपस्थितिः, ततस्तद्द्रव्यवतीच्छेति साध्यत इति संशयपरम्परैव
पर्यालोचना, एतादृशश्च संशयो येनेच्छाया अष्टद्रव्याश्रयत्वे बाधकं
द्रव्यत्वस्याष्टद्रव्यनैयत्यं च न गृहीतं तस्यैवेत्यर्थः । नन्वेवमपि व्याप-
कसन्देहे कथं व्याप्तिनिश्चयः तस्य व्यापकनिश्चयसाध्यत्वादित्यत
आह तस्याश्चेति । यदीच्छाष्टद्रव्यातिरिक्तद्रव्याश्रिता न स्यात् अष्ट-
द्रव्यानाश्रिता सती द्रव्याश्रिता न स्यादिति साध्यविपर्ययकोटौ
प्रतिकूलतर्कसहितः संशय एव निश्चयकार्यं करोति । अत एव
तादृशसंशयोपस्थितस्वेच्छाकल्पितपदार्थसाधनमप्यपास्तम् । तद्वि-
पर्यये प्रतिकूलतर्काभावादित्यर्थः । तत्सामर्थ्येनेति । तर्कसहकृततादृश-
संशयजन्यस्मृतेर्निश्चयत्वात्तत एव साध्यनिश्चय इत्यर्थः । एवं च

न्यायलीलावतीप्रकाशविवृतिः

यिणी प्रतिपत्तिर्यस्मादिति व्युत्पत्त्येति । एतादृश इति । अष्टद्रव्यवृत्ति-
त्वबाधग्रहे आश्रितत्वेन गृहीतायामिच्छायां प्रथमसंशयकोटिबाधा-
त्, द्रव्यत्वस्याष्टद्रव्यत्वनैयत्यग्रहे चाष्टद्रव्यातिरिक्तत्वस्य धर्मिता-
वच्छेदकस्य द्रव्यत्वकोटिविरोधाद्द्वितीयसंशयविरोधादिति भावः ।
तर्कसहित इति । यद्यपि तर्कस्यापि व्याप्तिमूलकत्वेन प्रतियोग्यनिर्णये
आपादकानिर्णयाद्व्याप्त्यनिश्चये कथं तदवतारस्तथापि द्रव्याश्रिता इ-
च्छेति पक्षयित्वा द्रव्यपदविनिर्मुक्तमेवापादकमापाद्यं च प्रकृते कर्त-
व्यमिति भावः । यद्वा तर्कोऽप्ययं सन्देहोपस्थितप्रतियोगिकापादका-
दिकमादायैव प्रवर्तत इत्यभिमतम् । अत एवानुपदमेव प्रकाशकृदेवात्र
दूषणं व्यक्तीकरिष्यति । तत एव साध्यनिश्चय इति । साध्यनिश्चयकार्य-
मित्यर्थः ।

गोचरस्मृतिजनकत्वं वा । संभावितस्य च विशेषणस्य पक्षाप्रसिद्धविशेषणत्वनिरासहेतुत्वात्, प्रतिबन्धबोधगोचरव्यतिरेकानिरूपकत्वाच्च ।

यदि वा सामान्यतो निश्चितत्वेनोक्तचोद्य(१)निरासात् । यद्विपर्यये समीहितप्रसक्तिः प्रसरति तन्मानप्रवृत्तियोग्यमवधारितं विप्रतिपत्तिवाक्याच्छङ्कातोऽपि वा प्रतीयमानम् इदं च तथेति सामान्यतोऽनुमानप्रवृत्तिगोचरत्वे विशेष(२)प्रमाणापेक्षायां व्यतिरेकिण उपन्यासात् ।

---

न्यायलीलावतीकण्ठाभरणम्

वैशेषिकमते विप्रतिपत्तिर्न संशयिकेति भावः । असाधारणधर्मस्यैव तन्मतेऽनध्यवसायजनकत्वेन संशयाहेतुत्वात् ।

नन्वेवमपि अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं यत् साध्यं तत्र

न्यायलीलावतीप्रकाशः

साध्यप्रसिद्धौ नापक्षधर्मत्वं न वा व्यतिरेकव्याप्त्यसिद्धिरित्युपसंहरन्नाह सम्भावितस्य चेति ।

प्रकारान्तरमाह यदि वेति । अष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं सन्देहादुपस्थितं तत्र च प्रतिकूलतर्कसाचिव्यात्सामान्यतः प्रमाणाप्रवृत्तियोग्यत्वे ऽवधृते विशेषजिज्ञासायां व्यतिरेकिण उपन्यास इत्यर्थः । तदेव स्फुटयति यद्विपर्यय इति ।

यद्वा इच्छा द्रव्याश्रिता गुणत्वादिति सामान्यतोदृष्टेन द्रव्याश्रितत्वे निश्चिते पृथिव्यादिवृत्तित्वे च बाधकावतारे द्रव्याश्रितेच्छा अष्टद्रव्यातिरिक्तद्रव्याश्रिता तद्वृत्तौ बाधकवत्त्वे गुणत्वात्, यन्नैवं तत्तद्वृत्तौ न बाधकवद्यथा रूपमिति व्या-

न्यायलीलावतीप्रकाशविवृतिः

यद्वा इच्छा द्रव्याश्रितेत्यादि । एवञ्च मूले द्रव्याश्रितत्वादिनेति तृतीया पक्षतावच्छेदकत्वेन तस्योपयोगितया व्यतिरेकव्याप्तिनिश्चय इत्यत्राष्टद्रव्यातिरिक्ताश्रितत्वसाध्येनेति शेष इति विभावनीयम् ।

---

(१) देश्यनिरासादिति मा० पु० पाठः ।

(२) विशेषे इति मा० पु० पाठः ।

यद्वा सामान्यतोदृष्टानुमितद्रव्याश्रितत्वादिना(१) व्यतिरेकव्याप्तिनिश्चयेंऽष्टद्रव्यातिरिक्तद्रव्याश्रितत्वविशेषनिरूपणमष्टद्रव्याश्रितत्वे बाधकसाचिव्याद् गुणत्वस्य । एवंभूतरूपाभावे(२) त्वप्रसिद्धविशेषणत्वम् । एवंसति सामान्यतोऽन्वयव्याप्तेरेव विशेषनिरूपणमस्त्विति चेत् । अस्तु(३) उपायस्यानुपायतोपालंभाय, न तु नानात्वम् ।

---

न्यायलीलावतीकण्ठाभरणम्

संशयादप्युपस्थितमत आह—यद्वेति । द्रव्यत्वादिनेत्यादिपदात् क्वचिदाश्रितत्वसङ्ग्रहः । व्यतिरेकव्याप्तिनिश्चय इति । व्यतिरेकव्याप्तिनिश्चयार्थमित्यर्थः । 'चर्म्मणि द्वीपिनं हन्ति' इतिवत् । ननु गुणत्वादेव कथमयमर्थः सिध्येदित्यत आह—अष्टद्रव्याश्रितत्व इति । नन्वत्रापि अप्रसिद्धविशेषणत्वप्रवादः किन्निबन्धन इत्यत आह—एवंरूपेति । बाधानवतारदशायामप्रसिद्धविशेषणत्वमित्यर्थः । एवं सतीति । सामान्यतोदृष्टादितरबाधकसहकृतो व्यतिरेकसाध्योऽर्थश्चेत् सिद्धः किं व्यतिरेकिणेत्यर्थः । एवमिति । उपायान्तरे उपायान्तरं नोपालम्भो न दूषणमित्यर्थः । यन्मतेऽष्टद्रव्यातिरिक्तद्रव्याश्रितत्वं न प्रकारः सामान्यतोदृष्टे तन्मते प्रकारार्थं व्यतिरेकीति भावः । यद्वा अष्टद्रव्याश्रितत्वं यत्र पक्षविशेषणतया सामान्यतोदृष्टे यदि नोपादीयते तदा व्यतिरेकी सावकाश इति भावः ।

न्यायलीलावतीप्रकाशः

सिग्रहः सुकर इत्याह यद्वा सामान्यत इति । द्रव्याश्रितत्वादिनेत्यादिशब्दात्केवलव्यतिरेकयन्तरोपजीव्यसामान्यतोदृष्टपरिग्रहः । न चैवं किं केवलव्यतिरेकिणा बाधकसहकृतात्सामान्यतोदृष्टादेव तत्साध्यसिद्धेरित्याह एवं सतीति । व्यतिरेकिणोऽप्यन्यत्र सामर्थ्यावधारणेनोपायस्यानुपायतोपालम्भाय न तूपायान्तरमिति केवलव्यतिरेक्युपन्यासो न पर्यनुयोज्य इत्याह अस्त्विति । यथा च केवलव्यतिरेकिस्थलेऽप्यनुमितिसामग्री तथोपरिष्टाद्वक्ष्यते ।

---

(१) द्रव्यत्वादिनेति मिश्रसम्मतोऽत्र पाठो द्रष्टव्यः।
(२) एवंरूपाभावेति मिश्रसम्मतः पाठः। (३) एवमुपायस्येति मिश्रसम्मतः पाठः।

यदि वेच्छादिसमवायिकारणमात्रस्याष्टद्रव्यानात्मकत्वे तै-स्तैरनुमानैर्निश्चिते तत्संबन्धित्वं जीवद्देहस्य साध्यते । न चैवमप्रसिद्धविशेषणत्वम् । अनुमानेन विशेषणस्य निश्चितत्वात् । न च(१) व्यतिरेकिवैयर्थ्यम् । तेन सह जीवच्छरीरसंबन्धस्य

न्यायलीलावतीकण्ठाभरणम्

सात्मकत्वानुमानमाधिकृत्याह यदि वेति । पूर्वोक्तविप्रतिपत्त्युपस्थि-तसाध्यमपेक्ष्य विकल्पः । तैस्तैरिति । गुणत्वध्वंसान्यकार्यत्वादिभिरि-त्यर्थः । जीवच्छरीरमिच्छासमवायिकारणद्रव्यवत् प्राणादिमत्त्वात् यन्नैवं तन्नैवं यथा घटादिरिति व्यतिरेकीति भावः । अनुमानेन-सा-मान्यतोदृष्टेन विशेषणप्रसिद्धिरित्याह अनुमानेनेति । ननु सामा-न्यतोदृष्टेनैव इच्छासमवायिकारणं चेत् सिद्धं किं व्यतिरेकिणेत्य-त आह-नचैवमिति । तेनेति । इच्छासमवायिकारणेनेत्यर्थः । पृथिवी

न्यायलीलावतीप्रकाशः

सात्मकत्वानुमाने साध्यप्रसिद्ध्यर्थमाह यदि वेच्छेति । बाधक-बलादिच्छासमवायिकारणस्य पृथिव्याद्यष्टद्रव्याद्यनात्मकत्वे प्रमिते जीवच्छरीरं पृथिव्याद्यष्टद्रव्यभिन्नेच्छासमवायिकारणवदिच्छा-वत्त्वादिति साध्याप्रसिद्धिर्नेत्यर्थः । ननु सात्मकत्वं शरीरवृत्ति तत्र बाधकाभावाच्छरीरत्ववदित्यन्वयिनैव साध्यसिद्धेः किं व्य-तिरेकिणेत्याशङ्क्य निराकरोति न चेति । शरीरं सात्मकमिति शरीरविशेष्यबुद्धेर्व्यतिरेकिणं विनाऽनुपपत्तेरित्यर्थः ।

ननु संशयेन साध्यप्रसिद्धावपि न तद्व्यतिरेकादिनिश्चयः संभवति साध्यतद्व्यतिरेकव्याप्तिनिश्चययोः साध्यनिश्चयसाध्यत्वात् सा-ध्यसंशये तद्व्यतिरेकसंशयस्यावश्यकत्वाच्च । न च तर्कसाचिव्यात्सं-

न्यायलीलावतीप्रकाशविवृतिः

जीवच्छरीरमिति । भिन्नान्तं विशेषणं ताद्रूप्यसिद्धये । ननु सात्मकत्वमिति । यद्यप्यस्त्वित्यादिनैवेयं शङ्का निराकृता तथापि सर्वत्रान्वयसम्भवादु-पायत्वमेव व्यतिरेकिणो नेत्यभिमानः । परस्य तूक्तानुमानेनैव जीव-देहसम्बन्धस्यावगतेः समाधानं तुच्छमिति पूरयति शरीरमिति । साध्यसंशये तद्व्यतिरेकेति । यद्यपि यत्राधिकरणसंशयस्तत्र व्य-

(१) नचैवमिति मिश्रसंमतोऽत्र पाठो बोध्यः ।

व्यतिरेकिवेद्यत्वात् । किन्त्वेतन्न सर्वव्यतिरेकिसमाधानम् ।

---

न्यायलीलावतीकण्ठाभरणम्

इतरभिन्नेत्यादौ नायं प्रकार इत्याह किन्त्विति ।

ननु साध्यप्रसिद्धिमात्रं समाहितं न तु वैयर्थ्यादिकमपि, तथाहि

न्यायलीलावतीप्रकाशः

शयस्य निश्चयकार्यकरत्वं, साध्यनिश्चयं विना तद्व्यतिरेकानिश्चयमू- लतर्कस्याप्यनवतारात्, अन्यथाऽष्टद्रव्यातिरिक्तद्रव्यवृत्तित्व- निरूपणे तर्कोदयः तर्कोदये च तत्सहकृतसाध्यसंशयस्य साध्य- व्यतिरेकनिश्चायकत्वमित्यन्योन्याश्रयात् । न च संशयजन्यस्मृते- र्निश्चयत्वं, संशयस्य संस्काराजनकतया स्मृत्यजनकत्वात्, जनकत्वे स्मृतेरपि कोटिद्वयालम्बनत्वेन संशयरूपत्वात् स्वार्थानुमाने वि- प्रतिपत्तिवाक्याभावादुक्तसामग्र्यप्रसिद्धेः । अतएव विप्रतिपत्ति- रूपाद्वादिवाक्यादाकांक्षादिमतोऽपूर्वार्थप्रतिपादकात्साध्यप्रसिद्धिरि- त्यपास्तम् । वादिवाक्यस्य संशायकत्वेनानिश्चयकत्वाच्च ।

न्यायलीलावतीप्रकाशविवृतिः

तिरेकानिश्चयाभावेऽपि अन्यत्र व्यतिरेकानिश्चये बाधकाभावस्तथापि क्वचिदपि निश्चयाप्रसिद्धौ योग्यानुपलब्धिरभावग्राहिका न सम्भ वति इत्यत्र तात्पर्यम् । वस्तुतस्तु संशयोपस्थितमपि तदेव- मिति निषिध्यते यत्संशये कोटित्वेन विषयो न तु यद्विषये संशयतत्पर्याप्तिस्तदपि, तस्यात्यन्तासत्तुल्यत्वादन्यथा शशो वि- षाणं नवेति संशयोपस्थितशशविषाणनिषेधापत्तेः । प्रकृते च न साध्यकोटिकः संशयस्तदप्रसिद्धेः, किन्तु पर्यालोचनया साध्योपस्थितिरिति भावः । संशयस्य संस्काराजनकतयेति । यद्य- पि विशिष्टज्ञानत्वमेव लाघवात्संस्कारजनकतावच्छेदकं, तथा- पि विरोधिज्ञानस्यापि विरोधिसंस्कारत्वप्रतिबन्धकत्वमन्यथा भावज्ञानाव्यवहितप्रतियोग्यारोपस्यापि संस्कारजनकत्वे तथास्म- रणापत्तेरित्यभिप्रायेणेदम् । यथाश्रुतमभिप्रेत्याह स्वार्थानुमान इति । वादि- वाक्यस्येति । यद्यपि वाक्यस्य न संशायकत्वं तथाप्यनाप्तोक्तत्वश- ङ्कया निर्णयाजनकत्वे पदार्थोपस्थापकतया संशयप्रयोजनकत्वं त- स्येति मन्तव्यम् ।

न्यायलीलावतीकण्ठाभरणम्

अन्यस्य व्याप्तिरन्यस्य पक्षधर्मता, उपनयवैयर्थ्यं च नहि व्याप्तिः पक्षे उपसंह्रियते येन तत्सार्थकता स्यात्, किञ्चान्वयव्यतिरेकव्यात्योरुभयोरपि गमकत्वेऽननुगमः, न वा साध्यप्रसिद्धिरप्युक्तप्रकाराणां संशयादीनां साध्यानिश्चायकत्वात्, निश्चायकत्वे वा व्यतिरे

न्यायलीलावतीप्रकाशः

उच्यते। इच्छाश्रयो द्रव्यं पृथिव्याद्यष्टद्रव्यभिन्नमष्टद्रव्यावृत्तिधर्मवत्त्वादित्यष्टद्रव्यातिरिक्तद्रव्यसिद्धाविच्छायामष्टद्रव्यभिन्नद्रव्यवृत्तित्वं साध्यम्, साध्यप्रसिद्धिश्च द्रव्यत्वे, इच्छाविशेष्यकाष्टद्रव्यभिन्नद्रव्यवृद्धिश्च केवलव्यतिरेकिसाध्या। न च द्रव्यत्वादेः सपक्षाद्यावृत्तत्वसाधारणत्वम्, तद्धि सत्प्रतिपक्षोत्थापकतया दोषावहं, प्रकृते च न हेतोः साध्याभावसाधकत्वं विपक्षे बाधकाभावात्, साध्यसाधके च तत्सत्त्वात्। एतेन केवलव्यतिरेकि नानुमानं सर्वत्र प्रमेयत्वादिना सत्प्रतिपक्षग्रस्तत्वादित्यपास्तम्। विपक्षबाधकेन व्यतिरेकिणो बलवत्त्वात्। सात्मकत्वानुमानं चेत्थम्—इच्छाऽसमवायिकारणसिद्धाविच्छात्वं संयोगासमवायिकारणकवृत्ति नित्येन्द्रियग्राह्यविशेषगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातित्वात् शब्दत्ववत्। अत्र स्नेहत्वव्यावर्त्तनार्थं नित्येन्द्रियग्राह्यत्वम्। आत्मैकत्वव्यावर्त्तनार्थं विशेषगुणेति। शब्दजन्ये शब्दे शब्दप्रयोज्यजातिव्यावृत्त्यर्थं साक्षाद्व्याप्येति विशेषणम्। स चासमवायिकरणं संयोगः किञ्चिदवच्छिन्नः संयोगत्वात्। आत्मसंयोगमात्रस्येच्छाजनकत्वेऽतिप्रसङ्गादितीच्छासमवायिकरणसंयोगावच्छेदकत्वं जीवच्छरीरस्य साध्यते।

न्यायलीलावतीप्रकाशविवृतिः

साध्यप्रसिद्धिरिति। इदं च द्रव्यत्वाश्रयाश्रितेति सामान्यतो दृष्टावतारे। यदि तु द्रव्याश्रितेत्येव तदवतारस्तदेच्छायामेव प्रसिद्धिः, द्रव्यत्वे साध्यतावच्छेदकावच्छिन्नप्रसिद्धेरभावादित्यवधेयम्। अत एवाग्रे इच्छाविशेष्यकेत्युक्तम्। आत्मैकत्वेति। आत्मैकत्ववृत्तिसंख्याव्यावर्त्तनार्थमित्यर्थः। स चेति। स च संयोगः किञ्चिदवच्छिन्नः सन्नसमवायिकरणमित्यन्वयः, तेनाग्रेतनविपक्षबाधकं घटते सात्मकत्वं जीवच्छरीर इति समानसंवित्संवेद्यतयाऽधिकरणविशेषनैरपेक्ष्येण सामान्यतस्तत्प्रसिद्धेरिति भावः।

न्यायलीलावतीकण्ठाभरणम्

किवैयर्थ्यात्, न च साध्यानिश्चयमन्तरेण तद्व्यतिरेकनिश्चयो येन तदधीनो व्याप्तिनिश्चयः स्यात्, तद्विशेषानुमितिर्वा स्यात्, अत एव न व्यतिरेके उपायान्तरं येनान्वयिनोऽन्यथासिद्धिः स्यात्, तदुक्तं- 'ऋजुमार्गेण सिद्धान्तमर्थं को नु वक्रेण साधयेदि'ति चेत् ।

न्यायलीलावतीप्रकाशः

सम्प्रदायविदस्तु जीवच्छरीरं तदवयवो वा आत्मभिन्नत्वे सत्यात्मविशेषगुणकारणभोगानधिकरणावृत्तिसंयोगवत्प्राणान्यत्वे सति ज्ञानकारणप्राणसंयोगवत्त्वात्, यन्नैवं तन्नैवम् । आत्मप्राण-संयोगः प्राणमनःसंयोगो वा प्राणशरीरसंयोगेनैवान्यथासिद्धो न हेतुरित्याहुः ।

ननु केवलव्यतिरेकि नानुमानं व्याप्तस्यापक्षधर्मत्वात् व्यतिरेके व्याप्तिरन्वयस्य पक्षधर्मत्वात् । न च साध्याभावव्यापकीभूताभाव-प्रतियोगित्वज्ञानमेवानुमितिहेतु', केवलान्वयिन्यभावात् । न च तृ-णारणिमणिन्यायेनानुमानविशेषे तद्धेतुः, उभयसिद्धानुमितिहेतुत्वभा-वेन व्यतिरेकिसाध्येऽनुमितित्वासिद्धेः । अथ साध्याभावव्यापका-भावप्रतियोगित्वेन साध्यव्याप्यत्वमनुमेयम्, एवं च व्यतिरेकव्या-प्त्या अन्वयव्याप्त्यनुमाने यत्रानुमितिस्तदेव केवलव्यतिरेकीति । तन्न, अन्वयव्याप्तिर्गमकत्वे व्यतिरेकव्याप्त्युपन्यासस्यार्थान्तरतापत्तेः। अन्वयव्याप्त्यनुकूलतया च तदुपन्यासे अन्वयव्याप्तिमनुपन्यस्य तदुपन्यासस्याप्राप्तकालत्वम् ।

न्यायलीलावतीप्रकाशविवृतिः

जीवच्छरीरमिति । अत्र साध्ये मृतशरीरद्वयसंयोगमादाय मृतश-रीरे प्रसक्तिवारणाय कारणान्तं विशेषणम् । तत्रापि विशेषपदानुपा-दाने मृतशरीरावयवात्मसंयोगं मृतशरीरात्मसंयोगजनकमादाय मृतशरीरावयवे प्रसक्तिरिति तत्पदम् । यद्यप्येवं विषयतया ज्ञानज-नकं मृतशरीरद्वयसंयोगमादायातिप्रसङ्गतादवस्थ्यम्, तथाप्यात्मवि-शेषगुणपदेन स्मृतिरुक्तेति नोक्तदोषः । आत्मन्यतिप्रसक्तिवारणाय सत्यन्तम् । हेतौ चात्मनि व्यभिचारो माभूदिति ज्ञानकारणपदम् । घटे व्यभिचारो माभूदिति प्राणपदम् । प्राण एव व्यभिचारो मा भूदिति सत्यन्तम् । आत्मेति । द्रव्यप्रकाशादौ च तयोः कारणत्वाभिधानं मता-

न्यायलीलावतीकण्ठाभरणम्

उच्यते। अन्यस्य व्याप्तिरन्यस्य पक्षधर्मतेत्यतिप्रसङ्गे प्रतियो-ग्यनुयोगिभाव एव नियामकः। अत एव नोपनयवैयर्थ्यम्, साध्या-भावव्यापकाभावप्रतियोगिमत्ताया एव पक्षे उपनयेन दर्शनीयत्वात्। अत एवान्वयव्यतिरेकव्याप्त्याऽन्वयव्याप्तेरनुमानाद्वा तत्त्वात्, अनुमि-तिवैचित्र्यं वा कारणवैचित्र्याधीनम्, अनुमितिसामान्ये पक्षधर्मता-ज्ञानमेव तन्त्रम्। न चातिप्रसङ्गः, विशेषसामग्रीमादायैव सामान्यसा-

न्यायलीलावतीप्रकाशः

उच्यते। व्यतिरेकव्याप्तेरेवान्वये गम्यगमकभावः साध्याभावव्या-पकसाधनाभावस्याभावेन साधनेन पक्षे साध्याभावाभावस्य साध्यस्य साधनात् व्यापकाभावेन व्याप्याभावस्यावश्यंभावात्। न चैवं कॢप्ता-नुमानहेतुलिङ्गपरामर्शाभावात्तज्ज्ञानं नानुमितिः, अनुमितिसामान्ये व्याप्तिज्ञानस्य हेतुत्वात्। न चातिप्रसङ्गः, अनुमितिसामान्यसामग्र्यां सत्यामपि अनुमितिविशेषसामग्रीविरहादनुमित्यनुत्पत्तेः तदपेक्षा-या एव सामान्यसामग्र्या जनकत्वात्, निर्विशेषस्य सामान्यस्या-भावात् अन्वयिव्यतिरेकिसामग्र्योस्तत्राभावात्। यद्वा अन्वयव्यतिरे-किवत् प्रतियोग्यनुयोगिभावस्य नियामकत्वात् निरुपाधिव्यतिरे-कसहचारेणान्वयव्याप्तिरेव गृह्यते इति व्याप्तस्यैव पक्षधर्मत्वमिति संक्षेपः॥

न्यायलीलावतीप्रकाशविवृतिः

न्तरमाश्रित्येति भावः।

अनुमितिसामान्य इति। यद्यप्यन्यनिष्ठव्याप्तिज्ञानस्यान्यत्राजनक-तया व्याप्तिज्ञानत्वमतिप्रसक्तम्, तथापि व्यभिचारज्ञानविरोधि-व्याप्तिज्ञानमेव सामान्यकारणमित्यभिप्रायः। न चेति। अन्वयानु-मितेर्व्यतिरेकयाकारत्वं व्यतिरेकयनुमितेश्चान्वयाकारत्वं प्रसज्येते-त्यर्थः। एकत्र व्यापकसानवच्छेदकरूपेण।परत्र व्याप्याभावत्वेन सा-ध्यप्रतीतेस्तयोराकारभेदादिति भावः। अनुमितीति। एकैकविशेषेऽपरा-परविशेषसामग्र्यभावान्नोक्तप्रसङ्ग इति भावः। अन्वयीति। व्यति-रेकयन्वयिनोरन्वयिव्यतिरेकिविशेषसामग्र्यभावादित्यर्थः। अन्वय-व्यतिरेकवदिति स्वमते दृष्टान्तः। अत्र विकल्पो व्यवस्थया। व्यवस्था च तत्तद्व्याप्तिघटकीभूतपदार्थोपस्थित्येति ध्येयम्।

ननु च लक्षणं सकललक्ष्यवृत्तित्वेन समस्तविपक्षव्यावृत्तत्वेन च निश्चितमभ्युपगन्तव्यम्, अन्यथाऽव्याप्तेरतिव्याप्तेर्वाऽलक्षणत्वप्रसङ्गात्। तस्य च प्रयोजनं भेदानुमानं व्यवहारानुमानं वा? नाद्यः। भेदानुमानवैयर्थ्यात्। तथा ह्येकजातीयस्यातज्जातीयान्योन्याभावविशिष्टत्वानुमानं तेन धर्मेण धर्मिणोऽसाधा-

---

न्यायलीलावतीकण्ठाभरणम्

मग्न्था जनकत्वात्। न च साध्याप्रसिद्धिः, प्रसिद्धिप्रकाराणां दर्शितत्वात्। न च वक्रोऽयं पन्थाः, वक्ररुचिं प्रति तस्यादोषत्वादिति।

इदानीं व्यतिरेकविशेषमाक्षिपति नन्विति। अन्यथेति। किञ्चिल्लक्ष्यत्यागेऽव्याप्तिः, अलक्ष्यसत्त्वेऽतिव्याप्तिः। वैयर्थ्यादिति। गन्धवती पृथिवीति विशेषणमहिम्नैवागन्धवज्जलाद्यन्योन्याभाववत्त्वस्य विशेष्ये पृथिव्यां सिद्धेः विशेषणस्य इतरव्यवच्छेदकत्वस्य सर्वसिद्धत्वादित्यर्थः। वैधर्म्यमन्योन्याभावव्याप्यत्वेन गृहीतं तमर्थमनुमापयेदेवेति चेन्न। स्वार्थानुमाने तथात्वेऽपि परं प्रति प्रयासानुपपत्तेरिति भावः। एतदेव स्फुटयति तथाहीति। असाधारणव्यवहार इति। गन्ध-

न्यायलीलावतीप्रकाशः

इदानीं लक्षणरूपव्यतिरेकिणमाक्षिपति नन्विति। तस्य चेति। पृथिवीत्वादिलक्षणेन किमितरभेदोऽनुमीयते पृथिवीव्यवहारो वेत्यर्थः। भेदानुमानेति। भेदो हि न स्वरूपं वैधर्म्यं वा साध्यं तयोः सिद्धत्वादिति लक्षणात्मकवैधर्म्येणान्योन्याभावात्मकभेदोऽनुमातव्यः, तत्प्रयोजनं च धर्मिणो व्यावृत्तधीः, सा चान्यत्रेव प्रकृतेऽपि विशेषणज्ञानाद्विशेष्ये सम्भवतीति व्यर्थं तदनुमानमित्यर्थः। न चानुमितिसामग्र्यां सत्यामवश्यमनुमितिरिति वाच्यम। स्वार्थानुमाने तत्सम्भवेऽपि

न्यायलीलावतीप्रकाशविवृतिः

तत्प्रयोजनमिति। तद्रूपं प्रयोजनमित्यर्थः। यद्वा व्यावृत्तधीरित्यस्यैव व्यावृत्तव्यवहार इत्यर्थः। तत्पदेनानुमानपरामर्शाद्यथाश्रुतेऽसङ्गतेः। विशेषणज्ञानादिति। दण्डज्ञानाद्यथा पुरुषेऽदण्डव्यावृत्तत्वधीस्तद्व्यवहारो वा तथा लक्षणरूपविशेषणज्ञानादपि व्यावृत्तत्वधीस्तद्व्यवहारो वा स्यादित्यर्थः। नान्त्य इत्यनभिधानात् पूर्वकल्पान्वयभ्रमो

रणव्यवहारफलम्(१)। स च तल्लक्षणविशिष्टतया बोधेनैव(२) सिद्ध्यतीति व्यर्थं तदनुमानम्। व्यवहारस्तु शब्दप्रयोगात्मा गन्धवती पृथिवीत्युपदेशबलादेव गोजातीयो गौरितिवद्भविष्यति। असाधारण(संवेदनरूपो) हि व्यवहारो व्यावर्तकधर्मात्मकलक्षणाधिष्ठितत्वगोचरो भविष्यति। हानोपादानलक्षणोऽपि च व्यवहारस्तज्जातीयस्येष्टानिष्टसाधनत्वानिबन्धनो(३) भविष्यति जलानल-

न्यायलीलावतीकण्ठाभरणम्

वत्वेन प्रवृत्तिनिमित्तेन पृथिवीपदवाच्योऽयमित्यनुमितिलक्षणव्यवहारप्रवृत्तिरित्यर्थः। अतो न व्यवहार इत्यनेन पौनरुक्त्यं तत्र गन्धवत्वस्य उपलक्षणत्वाभिप्रायात्। स चेति। व्यवहार इत्यर्थः। पृथि-

न्यायलीलावतीप्रकाशः

परार्थशब्दप्रयोगवैयर्थ्यात्। नापि विप्रतिपन्नबोधार्थं तत्, यो हि लक्षणस्येतरभेदे विप्रतिपद्यते स लक्षणस्य विपक्षावृत्तितायामपीति लक्षणस्य विपक्षव्यावृत्त्वनिश्चये कथं विप्रतिपन्नमपि प्रति लक्षणाभिधानम्। किञ्च जलाद्येकैकभेदे साध्येऽसाधारण्यम्, मिलितजलादिप्रतियोगिकभेदे च साध्ये साध्याप्रसिद्धिः। न च घटादावेव तत्प्रसिद्धिः, तथासत्यन्वयिन एव तत्सिद्धेरिति भावः। व्यवहारानुमानपक्षं दूषयति व्यवहारस्त्विति। असाधारणेति। व्यावृत्तज्ञानस्वरूपो व्यवहारो लक्षणरूपव्यावर्त्तकधर्मज्ञानादन्यत्रैवात्रापि स्यादित्यर्थः। इष्टानिष्टेति। तज्ज्ञानमपि तज्जातीयत्वज्ञाननिबन्धनमिति व्यवहारोऽपि न व्यतिरेकिसाध्य इत्यर्थः।

यद्यपि जलादीनां त्रयोदशान्योन्याभावास्त्रयोदशसु प्रसिद्धाः पृथिव्यां साध्यन्ते, अत एवाकाशेऽपि व्यतिरेकिणा जलादिमिलितप्रतियोगिकान्योन्याभावाप्रतीतावपि त्रयोदशान्योन्याभावास्त्रयो-

न्यायलीलावतीप्रकाशविवृतिः

मा भूदित्यत आह व्यवहारानुमानपक्षमिति।

(१) रणव्यवहारप्रवृत्तिः फलमिति मु० पु० पाठः, व्यवहारः फलमिति च मिश्रसम्मतः पाठः।
(२) विशिष्टताबोधेनेति ङ० पु० पाठः।
(३) इष्टत्वानिष्टत्वनिबन्धन इति प्रा० पु० पाठः।

योरिव शीतार्तस्य । ततोऽव्यापकातिव्यापकविलक्षणधर्ममात्रोपदेशो लक्षणं न त्वनुमानमिति ।

मैवम् । यथाऽभिजातरत्नजातीयमेतद्व्यवहर्तव्यमिति विशुद्धरत्नजातिमत्त्वेन तल्लक्षणेन वा तज्जातीयस्य क्रयादिव्यवहारयोग्यत्वमनुमीयेत तथेहापि कर्तव्यपृथिवीत्युपदेशाव्यवहारयोग्यतानुमानसमये व्यतिरेक्यनुमानं लक्षणम् । अथवा व्यतिरे-

---

न्यायलीलावतीकण्ठाभरणम्

क्येव गन्धवतीत्यनुभव इत्यर्थः । तत इति । लक्ष्यलक्षणसम्बन्धबाधेनमात्रेन क्रियत इत्येव लक्षणोपयोग इत्यर्थः ।

यथेति । प्रभाविशेषाश्रयः पद्मराग इत्युपदेशात् यत्र प्रभाविशेषाश्रयत्वं पश्यति तत्र पद्मरागपदवाच्यत्वं यथाऽनुमिनोति तथा गन्धवती पृथिवीत्युक्ते घृतादावपि गन्धसत्त्वात् पृथिवीपदवाच्यत्वसम्बन्धमनुमिनोतीत्यर्थः । कर्तव्येति । कर्त्तव्ये पृथिवी गन्धवतीत्युपदेशे यत् व्यवहारयोग्यतानुमानं तत्समये इयं पृथिवीव्यवहर्त्तव्या गन्धवत्त्वात्, यन्नैवं तन्नैवमित्यनुमानमित्यर्थः । ननु गन्धवत्त्वावच्छेदेन पृथिवीव्यवहार उपदेशबलादेव सिद्धः किमनुमानेनेत्यत आह अथवेति ।

न्यायलीलावतीप्रकाशः

दशसु प्रसिद्धाः साध्या इति नान्वयित्वासाधारण्ये, साधनस्यापि विपक्षव्यावृत्तिः साधनीयेति न साधनानुपपत्तिः, नापि प्रयोजनाभावः, सामान्यतोऽन्यताज्ञानेऽपि विशिष्यान्यताज्ञानस्यैव तत्त्वात्, तस्यापि च तत्प्रवृत्तिनिवृत्त्योरेव च प्रयोजनत्वात् । तथाप्यन्योन्याभावस्य साध्यतायामभावाच्छेदो न सिद्ध्येत् अभावस्याभावान्तराभावात् । यदि तेन समं स्वरूपभेद एव साध्यस्तदाऽननुगतस्य व्यापकत्वानुपपत्तेरनुमानाप्रवृत्तिरिति व्यवहारो लक्षणात्मकव्यतिरेकिसाध्य इति समाधत्ते यथेति । यथा कस्यांचिद्व्यक्तावभिजातरत्नजाती-

न्यायलीलावतीप्रकाशविवृतिः

यद्यपीति । तथाच मूलाक्षेपोऽयुक्त इति भावः । सामान्यत इति । योग्याधिकरणभेदज्ञानेऽपि व्यक्तिविशेषे परमाण्वादौ तज्ज्ञानमनुमानसाध्यमेवेति भावः । तथाच मूलस्थदूषणनिरासेऽप्येत

क्यनुमानं लक्षणमिति(१) योग्यतया तस्याव्याप्त्यतिव्याप्तिविरहिणोऽविद्यमानसपक्षस्य विपक्षमात्रव्यावृत्तस्य पक्षधर्मस्य व्यतिरेकिस्वभावत्वात् न तु साध्यस्य कस्यचिदनुमानार्थं तदुपन्यासः। तस्य च प्रत्यक्षेण पृथिवीत्वाद्यवान्तरजातिनिरूपणे तत्सहकारित्वेनोपन्यासः। न ह्यन्यथा प्रत्यक्षेण पृथिवीत्वं शक्यनिरूपणम्,

---

न्यायलीलावतीकण्ठाभरणम्

तस्य चेति। घृतादावपि गन्धवत्त्वं पृथिवीत्वपरिचायकतामात्रेण उपयुक्तं न त्वितरभेदानुमानकत्वेन वेत्यर्थः। न ह्यन्य-

न्यायलीलावतीप्रकाशः

यमेतत्कथादिव्यवहारयोग्यत्वेन व्यवहर्त्तव्यमित्याप्तेनोपदिष्टे व्यक्त्यन्तरेऽपि तज्जातीयत्वेन तल्लक्षणेन वा तत्तज्जातीयत्वव्यवस्थापकेन कथादिव्यवहारयोग्यत्वमनुमीयते तथा प्रकृतेऽपि क्वचिद्व्यक्तावियं गन्धवती पृथिवीत्वेन व्यवहर्त्तव्येत्याप्तेनोपदिष्टे गन्धवद्व्यक्त्यन्तरे पृथिवीव्यवहारः साध्य इत्यर्थः। न च तत्रान्वय्यनुमानं प्रकृते च वैधर्म्यमिति वैषम्यम्, अनुमानमात्र एव तात्पर्यात्, जलादौ चेश्वरस्याधुनिकस्य वा सङ्केतस्य सन्देहेऽपि निर्गन्धावृत्तिपृथिवीशब्दप्रवृत्तिनिमित्तवत्त्वमनुमेयम्। ननु प्रत्यक्षेणैव पृथिवीत्वादिग्रहसम्भवे किमर्थं गन्धवत्त्वादिलक्षणमित्यत आह तस्य चेति। गन्ध

न्यायलीलावतीप्रकाशविवृतिः

दूषणादेव नान्योन्याभावस्य साध्यतेति भावः। अनुमानमात्र एवेति। तथाच तावन्मात्रे दृष्टान्तो व्यतिरेकिप्रवृत्तिश्चान्वयास्फुरणदशायामेवेति भावः। ननु जलादौ पृथिवीशब्दत्ववाच्यत्वसन्देह गन्धवत्त्वेन पृथिवीत्वेन वा तदनुमानं तद्विरहिण्यपि तद्व्यवहारे सन्देहेन तस्याप्रयोजकत्वादत आह जलादाविति। जलादौ पृथिवीशब्दवाच्यत्वसन्देहे निर्गन्धावृत्तित्वं तत्प्रवृत्तिनिमित्तस्यानिश्चितमिति साध्यनिश्चयाभावान्नानुमानम्। न च नानार्थत्वमादाय तन्निश्चयस्तदर्थकतामादायापि सन्देहात्तथापि तादृशसंशयानवतारदशायामुक्तसंशयावतारदशायामिदमनुमानमविकलमिति भावः।

---

(१) लक्षणं व्यतिरेक्यनुमानमिति प्रा० पु० पाठः।

लौकिकप्रत्यक्षातिक्रमेऽपि(१) द्रुमादौ पृथिवीत्वस्वीकारात् । रूपादिमत्त्वे च पृथिवीतिप्रत्ययेऽतिप्रसङ्गात् । आत्मादौ च ज्ञानाधारवत्त्वेनात्मजातीयत्वस्य व्यतिरेकेणैवानुमानात् ।

---

न्यायलीलावतीकण्ठाभरणम्

येत । इतरव्यावर्त्तकधर्म्मोपदर्शनमन्तरेणेत्यर्थः । ननु पृथिवीत्वं प्रत्यक्षमेव किमत्र व्यावर्त्तकापेक्षयेत्यत आह लौकिकेति । द्रुमादौ तदन्तरेण सन्देहनिरासाभावादित्यर्थः ।

ननु तथापि किं लक्षणेन रूपवत्त्वादिकमेव पृथिवीत्वपरिचायकं स्यादित्यत आह रूपादिमत्त्व इति । जलादावपि पृथिवीत्वं पृथिवीपदवाच्यत्वं वा गृह्येतेत्यर्थः । प्रत्यय इत्युपलक्षणं पृथिवीपदप्रयोगे वेत्यपि द्रष्टव्यम् । ज्ञानाधार आत्मा ज्ञानवत्त्वात् यन्नात्मा तन्न ज्ञानाधार इत्यत्र स्वात्मपरात्मसाधारण्येन व्यवहारानुमानमेव शरणमित्याह आत्मादाविति । आत्मनः प्रत्यक्षत्वेऽपि परात्मनस्तज्ज्ञानस्य चाप्रत्यक्षत्वादिति भावः । यद्यपि पृथिव्यप्तेजोवायूनामपि सामस्त्येन तत्तत्पदवाच्यत्वेन तत्तदितरभेदे वाऽनुमानमेव शरणम्, साध्यस्य तद्व्यवहारस्य तदितरभेदस्य वा प्रत्यक्षे घटादौ प्रत्यक्षत एव सिद्धेर्न साध्याप्रसिद्धिः, न चान्वयित्वं, घटादेरपि पक्षत्वात् पृथिवीत्वावच्छेदेन तत्रापीतरभेदस्य साध्यत्वात् प्रकारभेदेन एकस्यैव पक्षत्वसपक्षत्वसम्भवात्, अती-

न्यायलीलावतीप्रकाशः

वत्त्वादेर्लक्षणस्येत्यर्थः । आत्मादौ चेति । आत्मनि ज्ञानाधारत्वस्य प्रत्यक्षेण ग्रहेऽपि परमात्मनोऽप्रत्यक्षत्वात्तत्रोपदेशादपि ज्ञानाधारत्वस्य प्रत्येतुमशक्यत्वात् विप्रतिपन्नं प्रत्यात्मत्वं ज्ञानाधारत्वेन व्यतिरेकिणा साध्यमित्यर्थः ।

न्यायलीलावतीप्रकाशविवृत्तिः

ज्ञानाधारत्वस्येति । आत्मत्वस्य चेत्यर्थः । ननूपदेशके कथं न तत्प्रत्यय इत्यत आह विप्रतिपन्नमिति । ज्ञानाधारत्वेनेति । चेष्टाद्यनुमितेनेति शेषः । न च तत एवात्मत्वमनुमीयतामिति वाच्यम् । तद्व्याप्यत्वेन तदपरामर्षदशायामेव तत्प्रकारसम्भवादिति भावः ।

---

(१) क्रमेणेति मा० पु० पाठः ।

प्रमेयमात्रस्य तर्हि किं सामान्यलक्षणम् । लक्षणं हि तन्मात्रस्य विपक्षव्यावृत्तिज्ञापकमिष्टम्, प्रमेयमित्यसाधारणव्यवहारप्रवृत्तिनिमित्तं वा ? नाद्यः । विपक्षव्यावृत्तेरसंभवेन तत्प्रख्यापकप्रश्नाद्यनुपपत्तेः । न द्वितीयः । प्रमाविषयस्यैव तत्त्वात् । सा-

न्यायलीलावतीकण्ठाभरणम्

न्द्रियाकाशाऽन्योन्याभावस्यापि घटे प्रत्यक्षत्वात् अधिकरणयोग्यताया एवाऽन्योन्याभावग्रहे तन्त्रत्वात्, आकाशादौ प्रत्येकप्रसिद्धानामितरभेदानां समूहस्य साध्यत्वात्, अभावप्रतियोगिकस्तु स्वरूपत एव साध्यः, न च साध्याननुगमः, अनुमानान्तरेण तत्साध्यसिद्धेः । तथाप्यभ्युपगमवादोऽयम् ।

ननु यदि समानासमानजातीयव्यवच्छेदकं लक्षणं न तु परिचायकमात्रं तदा भावाभावसाधारणप्रमेयमात्रस्य किं लक्षणमत आह प्रमेयमात्रस्येति । प्रश्न एवायमनुपपन्न इत्याह लक्षणं हीति । विपक्षव्यावर्त्तकं लक्षणमिति जानानः प्रमेयत्वस्य विपक्षव्यावर्त्तकत्वमपश्यन् कथमेवं पृच्छेदित्यर्थः । प्रश्नादित्यादिपदादुत्तरपरिग्रहः । प्रमेयमात्रस्य किं विपक्षव्यावर्त्तकमत्र सहृदयानां न प्रश्नः न वोत्तरमुचितमिति भावः । प्रमाविषयस्यैवेति । भावप्रधानो निर्देशः, तेन प्रमा

न्यायलीलावतीप्रकाशः

प्रमेयमात्रस्येति । भावाभावसाधारणस्येत्यर्थः । लक्षणात्मकव्यतिरेकिणो द्वयं साध्यमुक्तमतस्तद्विकल्पयति तन्मात्रस्येति । तत्प्रख्यापकेति । प्रश्नवाक्यं हि किंशब्दसमभिव्याहृतपदान्तरवाच्यधर्मवत्तया तदेव वस्तु निश्चाययति तद्विशेषं चानध्यवसितमुपपादयति इह तु विपक्षव्यावृत्तेरसम्भवात्क निश्चयानध्यवसायौ दर्शनीयावित्यर्थः । प्रमेति । प्रमाविषयत्वस्येत्यर्थः । तच्च यद्यप्युपधायकप्रमाव्यक्तीनमननुगमादननुगतं तथापि परम्परासम्बद्धप्रमात्वजातिरेवानुगमिका । न च प्रमाविषयत्वस्यापि प्रमविषयत्वादात्माश्रयः, अवच्छेदक-

न्यायलीलावतीप्रकाशविवृतिः

किंशब्दसमभिव्याहृतेति । प्रकृते च प्रमेयमात्रं लक्षणवत्त्वेन निश्चाययेत्तद्विशेषे चानध्यवसायं कारयेत्तच्चोभयमप्यसम्भवीति भावः । प्रमात्वजातिरिति । अनुभवत्वजातिरित्यर्थः । अवच्छेदकेति । इदमुपलक्षणं

मान्यलक्षणं विना कथं विशेषलक्षणमिति चेत् । न । नियमान-भ्युपगमात् । लक्षणोपयुक्तसामान्यसंभवे हि सामान्यलक्षणाव-सरो न तु विशेषलक्षणप्रवर्तकत्वेन ।

तत्र भावः सदिति प्रत्ययविषयो गुणाश्रयो द्रव्यम् । तत्र

---

न्यायलीलावतीकण्ठाभरणम्

विषयत्वं प्रमेयपदप्रवृत्तिनिमित्तं, प्रमाव्यक्तीनां नानात्वेऽपि परस्प-रासम्बद्धं ज्ञानत्वमेव विषयावच्छेदकम् ईश्वरप्रमाया एकत्वात्, सैव वा विषयावच्छेदिका प्रमेयत्वेऽपि तदेव प्रमेयत्वं वर्त्तते, न चात्मा-श्रयः, प्रामाणिकत्वादित्यर्थः । ननु प्रमेयसामान्यलक्षणं विना तद्वि-शेषाणां द्रव्यगुणकर्मादीनां लक्षणमनुपपन्नमित्याह—सामान्येति । यत्र विपक्षसम्भावना तत्र सामान्यं लक्षयितुमुचितं न तु सर्वत्रेत्याह नियमेति । तदेवाह लक्षणोपयुक्तेति । लक्षणार्हसामान्यसम्भव इत्यर्थः ।

लक्षणप्रयोजनमुक्त्वा पदार्थानां लक्षणमवतारयति तत्रेति । स-

न्यायलीलावतीप्रकाशः

प्रमाव्यक्तीनां भेदात् । सामान्यलक्षणं विनेति । प्रमेयसामान्यलक्षणं वि-ना कथं तद्विशेषात्मादीनां लक्षणमित्यर्थः । लक्षणोपयुक्तेति । यत्र सा-मान्यलक्षणं विना विशेषलक्षणमशक्यं तत्र सामान्यलक्षणं विसरेत् नतु सामान्यलक्षणं विना विशेषलक्षणमेव न भवतीत्यर्थः ।

तत्रेति । लक्षणात्मकवैधर्म्येषु मध्ये इत्यर्थः । सदितीति । ननु सद्य-दि सत्ताजातिमत् तदा सामान्यादावव्याप्तिः, अथ स्वरूपसत्त्वावत् तर्ह्यभावेऽतिव्याप्तिः ।

न्यायलीलावतीप्रकाशविवृतिः

प्रामाणिकत्वादयमात्माश्रयो न दोषायेत्यपि द्रष्टव्यम्, अतएव कदा चित्तत्प्रमायामपि तत्प्रमा विषयत्वम् । इदं चानुगमाभिधानमुपाध्य-न्तरसाधारण्याय, प्रकृते त्वीश्वरप्रमामेकामादायापि समाधिसम्भ वादिति रहस्यम् । सामान्यलक्षणं–सामान्यावच्छिन्नेतरभेदज्ञापकम् । एवमग्रेऽपि । सामान्याद्यव्याप्तिरिति । मूले प्रत्ययपदेन प्रमाया उक्तत्वाद-न्यथाऽतिप्रसङ्गादिति भावः ।

नन्वभावत्वमपि भावत्वात्यन्ताभाववत्त्वमित्यन्योन्याश्रय इत्यरु-

यद्यपि सम्बन्धो न सदातनः, तत्र योग्यतास्वरूपमननुगतं, द्रव्यत्वं तु क्लृप्तम् (१), तथापीहात्यन्तायोगव्यवच्छेदो लक्षणार्थः। सामान्य·

न्यायलीलावतीकण्ठाभरणम्

त्ताप्रकारकज्ञानविषयत्वं भावत्वं, स च प्रकारप्रत्ययः सामान्यादि· ष्वपि भ्रमरूपः, परम्परासम्बन्धसत्तामहिम्ना प्रमारूप एव वा, अ· भावस्य तु सत्ताभानविरोधितैवेति न तत्रातिव्याप्तिः। अभावत्वात्य· न्ताभाववत्त्वमन्योन्याश्रयादिग्रस्तम्। गुणाश्रय इति। गुणसमवायी· त्यर्थः। क्षणमगुणं द्रव्यमित्यभ्युपगमादव्याप्तिमाशङ्क्याह तत्रेति। अननुगतमिति। अनुगतरूपापरिचयात् दुर्ग्रहमित्यर्थः। क्लृप्तमिति। आकाशादिषु द्रव्यसाक्षात्कारानुगतप्रत्ययाभावादसिद्धमित्यर्थः। अत्यन्तेति। गुणात्यन्ताभावविरोधिमत्त्वं द्रव्यलक्षणमित्यर्थः। तच्च गुणप्रागभावध्वंसयोरपीति भावः। समवायिकारणत्वं वा द्रव्यत्वम्, कर्मान्यत्वे सति नित्यवृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वम् वा। गुणलक्षणमाह सामान्यवानिति। नित्यवृत्तिसत्तासाक्षाद्व्याप्यजाति

न्यायलीलावतीप्रकाशः

अत्राहुः। अभावत्वात्यन्ताभावत्वं सत्त्वम्। यद्वा सत्ताभानवि· रोधिप्रकारशून्यत्वम्। सामान्यत्वादिकं न सत्ताभानविरोधीति सामान्यादावारोपिता सत्ता भासते। प्रागभावत्वादिकं च सत्ताभान विरोधि, यन्निष्ठतया यस्मिन् धर्मे भासमाने सत्ताप्रकारिका विषयता न भवति तस्यैव प्रकारस्य सत्ताभानविरोधित्वात्। गुणाश्रय इति। गुणसमवायीत्यर्थः। न सदातन इति। क्षणमगुणं द्रव्यमिति सिद्धान्ता· दित्यर्थः। योग्यतेति। गुणस्वरूपयोग्यतायास्तदवच्छेदकमनुगतं धर्म· मज्ञात्वा ज्ञातुमशक्यत्वादित्यर्थः। द्रव्यत्वमिति। तस्यापि गुणाश्रयत्वव्यव· स्थाप्यत्वादित्यर्थः। तथापीति। यद्यपि गुणाऽत्यन्तायोगोऽत्यन्ताभा· वस्तद्यवच्छेदश्च प्रतियोगी गुणः, स चाद्यक्षणे द्रव्ये नास्ति, तथापि

न्यायलीलावतीप्रकाशविवृतिः

चेराह यद्वेति। प्रागभावत्वादिकं च सत्तेति। सत्ताविरहव्याप्यत्वप्रतिसन्धा नानपेक्ष्यमेव यत्प्रतिसन्धानं सत्ताभानविरोधि तादृशप्रकारशून्यत्वम्। अन्वयव्यतिरेकाभ्यां च प्रागभावत्वादिज्ञानं तथेत्याशयेनेदमुक्तम्।

(१) श्लिष्टमिति मु० पु० पाठः।

वानचलनात्मकः समवायिकारणताहीनो गुणः। संयोगविभाग-योरसमवायिकारणं(१) कर्म, द्वित्वे तात्पर्यम्, तेन संयोगविभागव्यु

---

न्यायलीलावतीकण्ठाभरणम्

मत्त्वम, असमवायिकारणवृत्तिकर्म्मावृत्तिजातिमत्त्वं वा गुणलक्षण-मिति भावः। संयोगविभागयोरिति द्विवचनलभ्यमर्थं स्फुटयति द्वित्व इति। प्रयोजनमाह तेनेति। तयोः प्रत्येकमात्रक रणत्वात्। अनित्यमात्रवृत्ति सत्तासाक्षाद्व्याप्यजातिमत्त्वं कर्मलक्षणमिति भावः। ननु यत्र सं-योगनाशपूर्वकाल एवाश्रयनाशात् कर्म्मनाशस्तत्राव्याप्तिरुभयाज-

न्यायलीलावतीप्रकाशः

प्रागभावप्रध्वंसावपि तद्व्यवच्छेद्यौ, न चैवमननुगमः, प्रतियोगितत्प्राग-भावप्रध्वंसानामत्यन्ताभावासमानाश्रयत्वेनैवानुगमः। समवायिका-रणत्वं द्रव्यत्वं तदवच्छेदकं चोक्तमेवेत्यप्याहुः। सामान्यवानिति। कर्मा-वृत्त्यसमवायिकारणवृत्तिजातिमत्त्वं, सामान्यमात्राश्रयकर्मान्यत्वं वा गुणलक्षणम्। द्वित्वे तात्पर्यमिति। संयोगविभागयोश्च प्रत्येकं तदसम

न्यायलीलावतीप्रकाशविवृतिः

वस्तुतः समवायसम्बन्धनिरूपकत्वमेव भावत्वम्, निरूपकता प्रतियो गित्वानुयोगित्वाभेदान्यतमसम्बन्धेनेति तत्त्वम्। भावत्वाभावत्वादिक मखण्डमेव सामान्यपदार्थान्तर्गतं समवायविरहाज्जातिभिन्नम् इति रत्नकोषकृतः। प्रतियोगितत्प्रागभावेति। इदं चैकमिदं सकलप्रतियोगिवृ-त्यस्तीत्येतावन्मात्रख्यापनायोक्तमन्यथा गुणाभावाभावत्वस्यैवानुग-मकस्य सम्भवादेतदुपन्यासासङ्गतेः। न च प्रतियोगितावच्छेद-कत्वेनैतदुपन्यासः, तस्यातिप्रसक्तेरभावज्ञानजनकीभूतज्ञानागोच रत्वाच्चेति ध्येयम्। समवायिकारणत्वमिति। अत्र द्रव्यत्वं द्रव्यलक्षणमित्य-र्थः। उक्तमेवेति। गुणात्यन्ताभावाभाववत्त्वमेवेत्यर्थः। द्रव्यत्वमेव तदव-च्छेदकं लाघवादित्यरुचिविभावनमित्यप्याहुरिति। सामान्यवानित्यत्र सामान्यमुपाधिरपीति सामान्यादावतिव्याप्तिरतो व्याचष्टे कर्मेति। अत्र कर्मणि द्रव्ये सामान्ये चातिव्याप्तिवारणाय विशेषणत्रयम्। अस-मवायिकारणत्वं च पारिभाषिकं, समवायिकारणभिन्नत्वं वा, आद्ये

---

(१) गासमवायिकारणं—मु० पु० पाठः।

दासः। न चाकृत(१)फलेऽसिद्धिः, तस्यापि(२) हेतुस्वभावग्राहक-
मानविषयीकृतत्वात्, तदभावस्य तु सहकारिविरहाधीनत्वात्

न्यायलीलावतीकण्ठाभरणम्

नकृत्वादित्याह नचेति। अदत्तफले-अदत्तसंयोगलक्षणफले। तत्रापीति।
कर्मत्वावच्छेदेनैव संयोगं प्रति स्वरूपयोग्यतायास्तत्रापि सत्वा-

न्यायलीलावतीप्रकाशः

वायिकारणत्वमित्यर्थः। ननु संयोगः संयोग इव विभागोऽप्यसमवा-
यिकारणमस्तु तत्र तत्कारणत्वस्य त्वयाप्यभ्युपगमात्। मैवम्। स्वज-
न्यविभागध्वंसकसमवायिकारणत्वस्य विवक्षितत्वात्। ननु विनश्यद-
वस्थसमवायिकर्मणि न तदसमवायिकारणत्वमिति तदव्याप्तिरि-
त्यत आह न चाकृतेति। हेतुस्वभावेति। तत्रापि स्वरूपयोग्यतास्त्येवे-
त्यर्थः। तदवच्छेदकं च संयोगविभागोभयासमवायिकारणमात्रवृत्ति-

न्यायलीलावतीप्रकाशविवृतिः

अन्यतरत्वमादायाऽन्ये सामान्यत्वादिकमादाय प्रसक्तायाः सामा-
न्यादावतिव्याप्तेर्जातिपदेन वारणादिति। सामान्येति। जातिमात्रस-
मवायीत्यर्थः। अत्र मात्रपदं द्रव्यवारणाय, जातिसमवायिपदं सामा-
न्यादिवारणाय। ननु संयोग इति। विभागस्य संयोगपूर्वकत्वनियमात्
संयोगस्य तज्जनकत्वे समवायिकारणप्रत्यासन्नतयाऽसमवायिकारण
त्वमपि दुःपरिहरमिति द्वित्वविवक्षयापि न निस्तार इति भावः।
स्वजन्यविभागेति। कर्मणः प्रथमं विभागस्ततः पूर्वसंयोगनाशस्ततः
कर्मण एवोत्तरसंयोग इति क्रमेण भवति कर्मणि लक्षणगमनम्, संयो-
गस्य त्वव्यवहितोत्तरलक्षण एव संयोगजनकत्वमिति नोक्तलक्षण-
सम्भव इति भावः। अत्र शरीरप्रतियोगिकपूर्वदेशविभागनाशक-
शरीरान्तरसंयोगजनकहस्ततरुसंयोगेऽतिव्याप्तिरिति स्वजन्यपदम्।
शरीरतरुसंयोगस्यापि प्रतियोगितया स्वध्वंसजनकत्वात्पूर्वातिव्या-
प्तितादवस्थ्यमिति विभागपदम्। विभागस्यापि प्रतियोगितया स्वना-
शकत्वात्कारणाकारणविभागे कार्याकार्यविभाजकेऽतिव्याप्तिरिति सं-
योगपदम्। कालाद्यतिव्याप्तिवारणाय समवायिपदम्। तदवच्छेदकं चेति।
यद्यपि कर्मत्वस्य विनश्यतदवस्थकर्मण्यपि वृत्तेरसम्भवीदं लक्षणम्,

(१) अदत्तेति मिश्रसंमतः पाठः। (२) तत्रापीति पा० पु० पाठः मिश्रसंमतश्च।

दीपोत्पत्त्यनावच्छिन्नबीजवत्, अन्यथा तद्भ्रान्तत्वापत्तेः। नित्य-

न्यायलीलावतीकण्ठाभरणम्

दित्यर्थः। अन्यथेति। बीजत्वावच्छेदेनाङ्कुरं प्रति कर्म्मत्वावच्छेदेन संयोगं प्रति कारणताग्राहकप्रमाणस्य भ्रान्तत्वापत्तेरित्यर्थः। नित्यमिति। एकं सदनेकवृत्तीत्यर्थः। तेनाकाशादिपरिमाणेषु नातिव्याप्तिः, तेषा-

न्यायलीलावतीप्रकाशः

जातिमत्त्वमिति भावः। (१)वस्तुतो विनश्यद्द्रव्यं समवायिकारणमेव न भवति (२)कार्योत्तरकाले सत एव तत्त्वात्। अन्यथेति। कर्महेतुताग्राहकमानस्य भ्रान्ततापत्तेः। नित्यावृत्तिसत्तेतरजात्यधिकरणं कर्मेति वा लक्षणम्। नित्यमिति। नन्वेकमिति व्यर्थं व्यावर्त्याभावात् आकाशपरिमाणादेरनेकासमवेतत्वात्। अत्राहुः। एकमिति स्वरूपाभिधानमात्रं न तु लक्षणार्थम्। यद्वा एकं लक्षणमिति योज्यम्, लक्षणान्तरं

न्यायलीलावतीप्रकाशविवृतिः

तथापि सत्तामादायातिप्रसङ्गस्य वारकेण मात्रपदेनात्र सत्ताव्याप्यत्वमात्रमभिप्रेतम्। नचैवं संयोगस्याप्युभयासमवायिकारणत्वमिति प्रागेवोक्तमतः संयोगेऽतिव्याप्तिरिति वाच्यम्। स्वजन्यविभागध्वंसकसंयोगासमवायिकारणवृत्तिसत्ताव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। केचित्तु संयोगस्य विभागासमवायिकारणत्वमेव नास्ति इति मतेनैवेदमित्याहुः। तन्न उपक्रमविरोधात्। वस्तुतस्तु विनश्यद्द्रव्यमिति। इदं च स्वरूपप्रत्यायनमात्रं न तु प्रकृतोपयोगि कर्मोत्पत्त्यवधिकतृतीयक्षणेऽपि द्रव्यनाशे यथाश्रुतलक्षणाव्याप्तेः। कर्मोत्तरेति। न चात्र मानाभावः, अवयवकर्मसामग्रीसहिताया एवावयविकर्मसामग्र्याः कर्मजनकत्वमिति मतेनैतत्सिद्धान्तसम्भवादित्यन्यत्र विस्तरः। एवन्तु कार्योत्तरेत्यादि कर्मरूपकार्यापेक्षया बोध्यम्। नित्यावृत्तीति। अत्र सत्तेतरत्वं सत्तासाक्षाद्व्याप्यत्वमतो न घटादावतिव्याप्तिः। अन्यतरत्वमादायातिप्रसक्तेरिति जातिपदम्। गुणद्रव्ययोरतिव्याप्तिरिति नित्यावृत्तिपदम्, वस्तुतो नञ्व्यत्यासेनानित्यवृत्तिसत्तेतरजात्यनधिकरणत्वमर्थः। विशेषनिषेधस्य शेषप्रापकतया सत्तावत्त्वमपि लभ्यत इति न सामा-

(१) वस्तुतस्तु इति विवृतिकाराभिमतः पाठो बोध्यः।
(२) कर्मोत्तरेति वि० सम्मतः पाठः।

मेकमनेकवृत्ति सामान्यम् । एकद्रव्याः स्वभावसन्तो विशेषाः । नित्यः सम्बन्धः समवायः ।

गन्धवती पृथिवी । स्नेहवत्य आपः । भास्वररूपं तेजः ।

---

न्यायलीलावतीकण्ठाभरणम्

मनेकेषामनेकवृत्तित्वात् । इत्येकं लक्षणमित्यपव्याख्यानम्, वैयर्थ्यतादवस्थ्यात् । असमवायित्वे सत्यनेकसमवेतत्वं तु तल्लक्षणम् । स्वभावसन्त इति । सत्ताशून्या इति । निःसामान्यत्वे सत्येकैकद्रव्यमात्रवृत्तित्वं विशेषत्वमिति भावः । नित्य इति । निःसामान्यसम्बन्धत्वं नित्यसम्बन्धत्वं वा समवायत्वम् । स्वरूपसम्बन्धेनौपचारिकः सम्बन्धपदप्रयोगः ।

गन्धवतीति । गन्धात्यन्ताभावानधिकरणेत्यर्थः । आकाशपर्यन्तमेवं व्याख्येयम् । परत्वापरत्वे तपनपरिस्पन्दाविषयापेक्षाबुद्धिजन्ये

न्यायलीलावतीप्रकाशः

त्वासमवायित्वे सत्यनेकसमवेतत्वम् । अनेकवृत्तित्वं च स्वाश्रयान्योन्याभावसामानाधिकरण्यम् । एकद्रव्या इति । निःसामान्यत्वे सत्येकद्रव्यमात्रवृत्तय इत्यर्थः । नित्य इति । सामान्यत्वविशेषत्वशून्यत्वे सति जातिशून्यस्समवाय इत्यर्थः ।

गन्धवतीति । अत्रापि पूर्ववदत्यन्तायोगव्यवच्छेदे तात्पर्यम् ।

न्यायलीलावतीप्रकाशविवृतिः

न्याद्यतिव्याप्तिरिति सारम् । असमवायित्व इति । समवायवृत्त्या अनाधारत्वे सतीत्यर्थः । नन्वनेकत्वं यद्येकत्वानधिकरणत्वं तदा गुणवृत्तिद्रव्यवृत्तिजातावतिव्याप्तिः, अथ द्वित्वाद्यधिकरणत्वं तदा गुणवृत्तिजातावतिव्याप्तिरित्यन्यथार्थमाह अनेकेति । अत्र स्वाश्रयपदं किञ्चित्स्वाश्रयपरम् । वस्तुतो द्वित्वावच्छिन्ने परमाणुपरिमाणेऽतिप्रसक्तिवारणाय एकपदमिति मूलमेव सम्यगिति मन्तव्यम् । सामान्यातिप्रसक्तिभयेन व्याचष्टे निःसामान्यत्व इति । अत्र सत्यन्तेन द्रव्यगुणकर्मणाम् । उत्तरदलेन सामान्यस्य वारणम्, वृत्तिपदं समवायपरमतो न समवायाभावयोरतिप्रसक्तिः । नित्यस्यापीश्वरज्ञानादेः स्वरूपसम्बन्धतयातिव्याप्तेराह सामान्यत्वेति ।

आद्यक्षणाव्याप्तेराह अत्रापीति । ननु भास्वरत्वं परप्रकाशकत्वमिति

अरूपः स्पर्शवान्पवनः(१)। शब्दाश्रय आकाशः(२)। असाधारण-परत्वापरत्वाद्यसमवायिनिदानसंयोगाश्रयो विभुः कालः। न च परत्वानुमेयः, तदन्यकारणानामपि कार्योन्नेयत्वात्। उक्तसंयोगानाधारो विभुर्विशेषगुणरहिता दिक्। ज्ञानाधार आत्मा। अस्पर्शपरमाणुर्मनः।

---

न्यायलीलावतीकण्ठाभरणम्

विवक्षिते तेन न दिश्यतिव्याप्तिः। पिण्डातिव्याप्तिवारणायाह विभुरिति। तदन्यकारणानां—कालपिण्डसंयोगानां, तथाच तत्रातिव्याप्तिः स्यादिति भावः। उक्तसंयोगानाधार इति। सूर्यक्रियाविषयकापेक्षाबुद्धिजन्य-परत्वापरत्वजनकसंयोगानाधार इत्यर्थः। तथाच संयुक्तसंयोगविषय-कापेक्षाबुद्धिजन्यपरत्वापरत्वासमवायिकारणसंयोगाधारविभुत्वं सिद्धमित्यर्थः। ज्ञानाधारत्वं ज्ञानात्यन्ताभावानाधिकरणत्वं विवक्षितम्, अत्यन्ताभावश्च ज्ञानत्वावच्छिन्नप्रतियोगिको ग्राह्यः। अस्पर्शत्वं स्पर्शात्यन्ताभाववत्त्वं, तेन पार्थिवपरमाणौ क्षणमस्पर्शे नातिव्याप्तिः।

न्यायलीलावतीप्रकाशः

एवमग्रेऽपि। भास्वरत्वं जातिविशेषः। परत्वापरत्वासमवायिकारणसंयोगाश्रयत्वं दिशोऽप्यस्तीत्यत उक्तमसाधारणेति। ज्यैष्ठ्यकानिष्ठ्यरूपेत्यर्थः। दिशस्तत्र कारणत्वेऽपि न तत्संयोगः पिण्डवर्त्ती कारणमिति न तत्रातिव्याप्तिः। विभुरिति पिण्डव्यवच्छेदः। तदन्यकारणानामिति। कालातिरिक्तानामित्यर्थः। उक्तसंयोगेति। परत्वापरत्वविशेषासमवायिकारणसंयोगानाधार इत्यर्थः, तेन काले नातिव्याप्तिः। ज्ञानाधार इति ज्ञानसमवायित्वमात्रं, न तु ज्ञानसमवायिकारणत्वमपि विवक्षितमीश्वरात्मन्यव्याप्तेः।

न्यायलीलावतीप्रकाशविवृतिः

परमाण्वादावव्याप्तिरित्यत आह भास्वरत्वमिति। नन्वाधारत्वं प्रकारत्वविशेष इति ईश्वरात्मन्यव्याप्तिरत आह ज्ञानसमवायित्वेति।

ननु ज्ञानवृत्ति यत्कारणतावच्छेदकं तद्वत्त्वं कथं सङ्ख्याया-

---

(१) वायुः—प्रा० पु० पाठः।

(२) आकाशम्—प्रा० पु० पाठः।

रूपादीनां चतुर्णां स्वस्वसामान्यम्, न तु नयनादिग्राह्यता, अतीन्द्रिये तदभावात्, योग्यताया अनुगताया उक्तानतिरेकात्। गणनव्यवहारप्रयोजिका संख्या। परिमाणं मानव्यवहारयोगि(१)। पृथगिति बुद्धेरसाधारणो विषयः पृथक्त्वम्। कार्यः

न्यायलीलावतीकण्ठाभरणम्

स्वस्वसामान्यं रूपत्वरसत्वादि। उक्तानतिरेकादिति। चक्षुर्ग्रहणयोग्यतावच्छेदकं रूपत्वमेव वक्तव्यमित्यर्थः। एवमन्यत्रापि। गणनव्यवहारहेतुश्च संख्यात्वव्यवहारहेतुस्तेन संख्यात्वमेव विवक्षितम्, अन्यथा प्रत्येकसमुदायविवक्षायामव्याप्त्यसिद्धी स्याताम्। अवध्यनिरूप्यत्वे सत्येकमात्रवृत्तित्वरथनेकव्यावृत्तगुणत्वव्याप्यजातिमत्त्वं लक्षणमिह विवक्षितम्। परिमाणत्वमिति। परिमाणत्वजातियोगित्वमित्यर्थः। पृथगिति। अवध्यनिरूप्यत्वेनाविशेषितं संख्यालक्षणभाग एव पृथक्त्वलक्षणम्। कार्य्य इति। द्रव्यासमवायिकारणवृत्ति

न्यायलीलावतीप्रकाशः

स्वस्वसामान्यमिति। रूपस्य रूपत्वं रसस्य रसत्वादीत्यर्थः। ननु तत्र मानाभावः नयनग्राह्यत्वादिभिरुपाधिभिरेव रूपत्वादिव्यवहारोपपत्तेरित्यत आह नीत्वेति। योग्यताया इति। चक्षुर्ग्रहणस्वरूपयोग्यतावच्छेदरूपस्य जात्यनतिरेकादित्यर्थः। गणनेति। यद्यपि द्वित्वादिव्यवहारजनकं भागासिद्धं, समुच्चिततज्जनकत्वं च स्वरूपासिद्धम्, तथापि संख्याव्यक्तिविषयव्यवहारजनकज्ञानवृत्तिकारणतावच्छेदकरूपवत्त्वं, ज्ञाने च कारणत्वं विषयवृत्तिधर्मावच्छेद्यमिति जातिर्लक्षणम्। असाधारण इति। यद्विशिष्टे द्रव्ये पृथगिति धीरित्यर्थः। अनेन जातिविशेषोऽभिप्रेतः। कार्य इति। विभागाजन्याद्यशब्दासमवायिकारणवृ-

न्यायलीलावतीप्रकाशविवृतिः

मत आह ज्ञाने चेति। तथाच ज्ञाने परस्परासम्बद्धं सङ्ख्यात्वं कारणतावच्छेदकं विषये च साक्षात्सम्बन्धेन लक्षणमिति भावः। धियोऽपि विषयपृथक्त्ववृत्तिजातावतिव्याप्तेराह यद्विशिष्ट इति। घटध्वंसवत् कपालमित्यत्र विशेष एव व्यावर्त्तकोऽत आह अनेनेति। एतच्च विशेषणं विभागास्वरूपसम्बन्धेऽतिव्याप्तेराह विभागाजन्येति।

(१) मानत्वयोगीति भा० पु० पाठः। परिमाणत्वयोगीति च मिश्रसंमतः पाठः।

सम्बन्धः संयोगः । यद्विशिष्टे विभक्तप्रत्ययः स विभागः । एवं परत्वापरत्वे ।

अर्थप्रकाशो बुद्धिः । अर्थः स्वाभाविको विषयः, तेन सहैव प्रकाश्यत इति । सा चाविद्या विद्या च । मिथ्याज्ञानमवि-

---

न्यायलीलावतीकण्ठाभरणम्

गुणत्वव्याप्यजातियोगित्वं संयोगत्वम् । यद्विशिष्ट इति । संयोगनाशकगुणत्वं, संयोगान्याद्यशब्दासमवायिकारणवृत्तिगुणत्वव्याप्यमत्त्वं वा विभागत्वम् । एवं परत्वापरत्व इति । यद्विशिष्टे परापरबुद्धिरित्यर्थः । इहापि जातिविशेष एव लक्षणमिति भावः ।

प्रकाश इति । इहापि बुद्धित्वं जातिर्लक्षणमित्यर्थः । तेनेति । अर्थनिरूपणाधीननिरूपणत्वमर्थसहनिरूपणत्वमित्यर्थः । मिथ्याज्ञानमिति ।

न्यायलीलावतीप्रकाशः

त्तिगुणत्वसाक्षाद्व्याप्यजातिमानित्यर्थः । यद्विशिष्ट इति । उत्पन्नमात्रकर्मजन्यगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमानित्यर्थः । एवमिति । अत्रापि जातिविशेषो लक्षणमित्यर्थः ।

अर्थप्रकाश इति । यद्यपि यथाश्रुतं पर्यायत्वान्न लक्षणं, तथापि बुद्धित्वं जातिरनेनोपलक्षितम् । एतेन प्रकाशो यदि ज्ञानमात्रं तदा ज्ञानादिशब्दैरर्थनिरपेक्षैरपि बुद्धेः प्रतिपादनादसिद्धिः, अथ साक्षात्कारस्तदा निर्विकल्पकाव्याप्तिस्तस्यातीन्द्रियत्वादित्यपास्तम् । मिथ्या-

न्यायलीलावतीप्रकाशविवृत्तिः

तिव्याप्तिवारणाय । शब्दातिव्याप्तिवारणायाद्येति । अदृष्टेऽतिव्याप्तेः समवायिपदम् । सत्तामादायातिव्याप्तेराह गुणत्वव्याप्येति । साक्षात्पदं भेदलाभाय । गन्धसंयोगान्यतरत्वमादाय गन्धातिव्याप्तेराह जातीति । बुद्धेरपि विषय एव व्यावर्त्तक इत्यभिप्रायेणाह उत्पन्नमात्रेति । संयोगातिव्याप्तेराह मात्रेति । सुखसाक्षात्कारातिव्याप्तेराह कर्मेति । गुणवृत्तिपदं गुणवृत्त्या समवायेन व्याप्यत्वलाभाय । सत्तादावतिव्याप्तेराह गुणत्वव्याप्येति । भेदलाभाय साक्षादिति । विभागजविभागसङ्ग्रहाय जातिगर्भता । यद्यप्येवमपि वेगेऽतिव्याप्तिस्तथापि सकलकर्मजन्यो, विभागस्तु तथा, लक्षणं च तथा विवक्षितमिति भावः ।

एतेनेति । अर्थेन सहैव प्रकाश्यत इत्यत्रेति शेषः । वस्तुतो

द्या । सा च संशयाद्यात्मिका । कोटिद्वयानवधारणज्ञानं संशयः, स च बाह्यान्तरप्रकारवान्, न तु त्रिविधः पञ्चविधो वा लक्षणाभावात् । तत्र हि संशयमात्रं वा धर्मिविशेषो वा ?

---

न्यायलीलावतीकण्ठाभरणम्

विशेष्यावृत्तिप्रकारकं ज्ञानम्, व्यधिकरणप्रकारावच्छिन्नविषयताप्रतियोगिज्ञानं वा । विभागमाह सा चेति । संशयविपर्य्ययस्वप्नानध्यवसायलक्षणेत्यर्थः । केचित्तु द्वयेत्युपलक्षणम्, एकस्मिन् धर्म्मिणि विरोधिनानाप्रकारकं ज्ञानमित्यर्थः । बाह्यान्तरेति । बाह्यो यथा स्थाणुर्वा पुरुषो वेति, आन्तरः सम्यग्ज्ञानास्यसम्यग् वा इत्याद्यात्मधर्मिकः । वार्त्तिकादिमतमाक्षिपति न त्रिविध इति । भाष्यमतमाक्षिपति न पंचविध इति । समानानेकधर्म्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्षो विमर्षः संशय इति गोतमीयस्य संशयलक्षणसूत्रस्य भाष्यकृता समानधर्म्मजत्वमसमानधर्म्मजत्वं विप्रतिपत्तिजत्वमुपलब्ध्यव्यवस्थाजत्वमनुपलब्ध्यव्यवस्थाजत्वं चेति पंचधा संशय इति व्याख्या कृता । वार्त्तिककारादिभिश्च उपलब्ध्यनुपलब्ध्यव्यवस्थयोः पूर्वपदविशेषणत्वेनाभिधानात् त्रिविधत्वमुक्तं तदुभयमप्यनुपपन्नमित्यर्थः।अ-

न्यायलीलावतीप्रकाशः

ज्ञानमिति । विशेष्यावृत्तिप्रकारकं ज्ञानमित्यर्थः । कोटिद्वयेत्युपलक्षणम्, लक्षणं च प्रतिपादितमधस्तात् । स चेति । मानसमात्रप्रत्यक्षविषयो धर्मी अन्तस्तदन्यद्बाह्यम् । त्रिविध इति । समानधर्मदर्शनजासमानधर्मदर्शनजविप्रतिपत्तिज इत्यर्थः । पंचविध इति । न्यायभाष्यकारोक्तोपलब्धिजानुपलब्धिजाभ्यां सह पूर्वोक्तास्त्रिविध इत्यर्थः । विशिष्योपस्थित एव धर्मिणि विशेषलक्षणप्रवृत्तेरित्यर्थः । संशयमात्रमित्यत्र यदि मात्र-

न्यायलीलावतीप्रकाशविवृतिः

बुद्धिप्रकाशपदद्वयवाच्यत्वमेव लक्षणम्, पिता नाम कुर्यादित्यत्र एकत्वस्य विवक्षितत्वेन शरीरविशेषे तथात्वाभावात् । यदि च प्रथमचरमाश्रमभेदेनापि नामभेदे ईश्वरसङ्केतस्तदा पदत्रयवाच्यत्वं लक्षणमिति रहस्यम् । मिथ्याज्ञानमित्यस्यालीकविषयकमित्यर्थः । कोटिद्वयेति । चतुष्कोटिकव्याप्तिभयादाह कोटित्वभ्रमं निरासयति विशेष्येति । साधारणधर्मदर्शनजत्वादौ लक्षण इत्यर्थः । द्वयेति । मिथ इति ।

नाद्यः । भागासिद्धेः[१] अभेदकत्वाच्च। नेतरः । तदानिरुक्तेः। उल्बणविधिकोटित्वं तथा निषेधकोटित्वं समकोटित्वं च विशेष इति परमन्यायाचार्या इति चेत् । न, वह्निमत्त्वभावाभावसन्दे-

न्यायलीलावतीकण्ठाभरणम्

नुपपत्तिमेवाह तत्र हीति । भागासिद्धेरिति । समानधर्म्मजत्वस्यासाधारणधर्म्मजसंशयभागेऽसिद्धेरित्यर्थः । अभेदकत्वाच्चेति । लक्षणं हि लक्ष्यस्य भेदकमितरव्यावृत्तत्वेन ज्ञापकं भवति, समानधर्म्मजत्वादिकं च संशयमात्रमितरेभ्यो न व्यावर्त्तयति किन्तु तद्विशेषमित्यर्थः। ननु विशेषलक्षणान्येव तानि सन्त्वित्यत आह नेतर इति । लक्ष्यतावच्छेदकानां विशेषाणामनिरुक्तेरित्यर्थः । उल्बणत्वं—प्रधानत्वं, तथाच विधिसाहचर्य्यात् समानो धर्म्मो विधिप्राधान्येनासाधारणश्च निषेध प्राधान्येन विप्रतिपत्तिस्तु विधिनिषेधोभयप्राधान्येन संशयविशेषं जनयतीत्यर्थः । परमन्यायाचार्य्याः—वाचस्पतिमिश्राः, टीकाकृतः ।

न्यायलीलावतीप्रकाशः

पदेन व्यक्तिविशेषो विवक्षितस्तत्राह भागासिद्धेरिति । अथ संशयत्वसामान्यं तदर्थस्तत्राह अभेदकत्वाच्चेति । संशयत्वस्य साधारण्येन त्रिविधः पंचविधो वेति विभागाबोधकत्वादित्यर्थः । उल्बणेति । साधारण धर्मस्योर्ध्वत्वादेः स्थाणुतदभावसाहचर्याविशेषेऽपि स्थाणुत्वाभावविशिष्टः पुरुषस्तदभावविशिष्टश्च स्थाणुः स्मर्यत इत्यभावस्य विधितैरश्चीन्येन विधेस्तत्प्राधान्येन संस्कारेणोपस्थापनम्, असाधारणधर्मजन्ये च संशये सजातीयविजातीयनिष्ठाभावप्रतियोगित्वमसाधारण्यमित्यभावस्य प्राधान्येन विधेरुपसर्जनतयोपस्थितिः, विप्रतिपत्तिजे तु शब्दो नित्यो नाऽनित्योऽनित्यो न नित्य इति विप्रतिपत्ते-

न्यायलीलावतीप्रकाशविवृतिः

भागासिद्धेरितीति । यदि व्यक्तिविशेष एव धर्मी लक्ष्यस्तदा तदन्यभागस्य लक्ष्यतयाऽसिद्धेस्तत्रातिव्याप्तेरित्यर्थः । संशयत्वस्येति । साधारणधर्मजत्वादौ लक्षणे संशयमात्रस्य लक्ष्यत्वे संशयत्वस्य सार्वत्रिकतया तस्यापि सार्वत्रिकत्वमन्यथा भागासिद्धेरिति कुतस्त्रैविध्यादिरित्यर्थः । साधारणेति । तथा च परव्यावृत्त-

(१) सिद्धत्वादि मु. पु. पाठः।

हेऽतिरिक्तकोटेरसत्त्वात्[१]। तत्रैवोल्बणत्वानुल्बणत्वे इति चेत् । न । प्रमेयत्वादौ कस्यचिद्वह्निविरहसाहचर्यस्यैव भूयस उपलम्भात् हस्तसमाचरितत्वात् । विलक्षणकारणोपलक्षितेऽवान्तरजातिभेदोऽस्तीति चेत् । न, तस्य साक्षात्कारित्वादिना परापरभावाभावप्रतिक्षिप्तत्वात् । अवच्छेदकाभावादेव न घटाभावादिवदु-

---

न्यायलीलावतीकण्ठाभरणम्

इदं वह्निमन्नवेत्यत्र कोटिचतुष्टयाभावान्नोभयविधिप्राधान्यमित्यर्थः । तत्रैवेति । कोटिद्वय एवेत्यर्थः । वह्निभावाभावकोटिकसंशये प्रमेयत्वादिः साधारणो धर्मो वाच्यस्तत्र च साहचर्य्यबाहुल्यं पुरुषभेदेनानियतमिति संशयव्यवस्थापत्तिरित्याह प्रमेयत्वादाविति । ननु कारणव्यंग्यः संशये जातिभेदोऽस्तु प्रत्येकं लक्ष्यतावच्छेदक इत्याह विलक्षणेति । तस्येति । चाक्षुषत्वादिना परापरभावानुपपत्त्या नैवमित्यर्थः । साक्षात्त्वादित्यतद्गुणसम्विज्ञानो बहुव्रीहिः, सत्प्रतिपक्षस्थले द्वाभ्यां हेतुभ्यां मिलित्वा संशयरूपानुमितिर्जन्यत इति मतमाश्रित्य वा । ननु घटाभावत्वं यथोपाधिसामान्यं तथा प्रकृतेऽपि सामान्यत्रयमस्तु लक्ष्यत्रयभेदकमित्यत आह अवच्छेदकेति । अवच्छेदकविशेषाभावे सा-

न्यायलीलावतीप्रकाशः

रूपस्थितयोर्विधिनिषेधयोः प्राधान्यमिति रूपान्तरेणोपस्थिते धर्मिविशेषे विशेषलक्षणविधानमित्यर्थः । तत्रैवेति । वह्निमत्त्वभावाभाव एवेत्यर्थः । विलक्षणेति । यद्विशिष्टे संशये समानधर्मदर्शनादेः कारणत्वं स जातिविशेषः कारणविशेषव्यङ्ग्योऽस्तीति तद्वानेव धर्मी संशयविशेषलक्षणेऽस्त्वित्यर्थः । तस्येति । साक्षात्कारित्वमत्र चाक्षुषत्वोपलक्षणं शब्दलिङ्गादेरसंशायकतया साक्षात्कारित्वव्याप्यत्वे जातिविशेषस्य दोषाभावात् । ननु जात्यात्मकसामान्याभावेऽपि उपाधिरूपसामान्यं यथा घटानिरूप्योऽघटाभावत्वादिवत्स्यादित्यत आह अवच्छेदकेति ।

न्यायलीलावतीप्रकाशविवृतिः

नोक्तदोष इति भावः । चाक्षुषत्वोमेव लक्ष्यतावच्छेदकमिति

---

(१) त्वभावात् इति भा० पु. पाठः ।

पाधिसामान्यम् । तथापि समानधर्मादिदर्शनं कथं हेतुतया व्यवतिष्ठेतेति चेत्, सत्यम् । किन्तु कोटिद्वयविज्ञप्तिरस्य कारणम् । सा च स्मृतेर्वाक्याद्वा । स्मृतिश्च समाधर्मदर्शनादन्यतो वेति

न्यायलीलावतीकण्ठाभरणम्

ध्येऽवच्छेदसामान्याभावो हेतुरिति न साध्याविशिष्टत्वम्, उपाधिरव्यवच्छेदको यदवच्छेदेन वर्त्तते तन्नास्तीति वाऽर्थः । नन्वन्वयविशेषगम्यं साधारणधर्मदर्शनानामननुगमात् संशयकारणत्वं न स्याद्यदि कार्य्ये जातिविशेषो न स्यादित्याह तथापीति । कोटिस्मरणं च विशेषादर्शनं च संशयकारणं, तच्चानुगतमेव, साधारणधर्म्मदर्शनादि तु तत्रोपक्षीणमिति नाननुगम इत्याह सत्यमिति । ननु तृणादयो विशेषा

न्यायलीलावतीप्रकाशः

भावो घटाभावस्तथात्र निरूपको नास्तीत्यर्थः । नन्वत्रोपाध्यभावे साध्येऽवच्छेदकाभावादिति साध्याविशिष्टो हेतुः परम्परासम्बद्धस्यैवावच्छेदकत्वात् तस्यैवोपाधिपदार्थत्वात् । अत्राहुः । उपाधिपदेनात्र प्रवृत्तिनिमित्तरूपो विशेषो विवक्षितः, तथाच तस्यावच्छेदकविशेषस्याभावे साध्येऽवच्छेदकसामान्याभावो हेतुः । ननु यदि संशयेऽवान्तरविशेषो नास्ति तदा व्यभिचारात् सामानधर्मादिदर्शनस्य तत्र कारणतापि न स्यादिति कारणविशेषव्यङ्ग्यो जातिविशेषः संशये मन्तव्य इत्याह तथापीति । साधारणधर्मदर्शनं न संशयहेतुः तस्य कोटिस्मरण एवोपक्षयात्, अत एव क्वचिददृष्टादपि कोटिसमस्मरणे संशय इत्याह किन्त्विति । अस्य संशयस्येत्यर्थः । असाधारणधर्मोऽनध्यवसायमात्रजनकोऽत्र दर्शने संशयहेतुरेव न भवतीति भावः । यद्यपि स्मृतिरपि ज्ञप्तिरेव तथापि ज्ञप्तिसामान्ये तद्विशेषस्य हेतुत्वमभिप्रेत्याह सा चेति । अन्यतो वेति । न्यायदर्शनाभिप्रायेणोक्तम्, असाधारणधर्मस्यात्र दर्शनेऽनध्यवसायमात्रजनकत्वात् । परम्परयेत्यन्वयव्यतिरेकानुविधानमपि समानधर्मदर्शनस्य समर्थितम् ।

न्यायलीलावतीप्रकाशविवृतिः

पलक्षणं चाक्षुषत्वाद्युपलक्षणमित्यर्थः । इतोपि संशयत्रैविध्यमयुक्तमित्याह असाधारणधर्म इति । हेतुद्वयमभिप्रेत्य उपचर्य, तथाच सुवर्णेन धनीतिवदौपचारिकः प्रयोग इत्यर्थः । असाधारणेति । विप्रतिपत्तिस्तु

परम्परया व्यवस्थितिः। न च विशेषा विशेषे व्यवतिष्ठन्ते। तस्यैव प्रतिक्षिप्तत्वात् कर्तृकार्यवत्। एककोट्यवलम्बि जाग्रतो मिथ्याज्ञानं विपर्ययः(१)। निद्राभिभूतज्ञानं स्वप्नः। किमिति-

न्यायलीलावतीकण्ठाभरणम्

यथा वह्निविशेषे व्यवतिष्ठन्ते तथा प्रकृतेऽपि स्यादित्यत आह नचेति। तत्राननुगतानां समानधर्मत्वादीनां कारणत्वमेव नास्ति तेन विशेषकल्पनापीत्याह तस्यैवेति। कर्तृकार्यवदिति। यथा कार्यत्वावच्छेदेनैव कर्तृजन्यत्वं तथा संशयत्वावच्छेदेनैव समानधर्मदर्शनजत्वं नतु विशेषकल्पनेत्यर्थः। असाधारणधर्मविप्रतिपत्त्योः संशयकारणत्वानभ्युपगमादिति भावः। एकेति। संशयस्वप्नज्ञानयोर्व्यवच्छेदाय विशेषणद्वयम्। निरिन्द्रियप्रदेशे मनसोऽवस्थानं निद्रा। तदनेन स्वप्नत्वं जातिमुपलक्षयति सा चाध्यक्षैव। किमिति। किमितिविशेषानुल्लिखि-

न्यायलीलावतीप्रकाशः

न च यत्रकोटिद्वये साक्षात्क्रियमाणे एव धर्म्यन्तरे समानधर्मदर्शनात्संशयस्तत्र समानधर्मदर्शनस्य न कोटिस्मारकत्वमिति पृथगेव तत्संशयकारणं स्यादिति वाच्यम्। तत्रापि विशेषादर्शनकोटिद्वयोपस्थित्योरेव संशयकारणत्वात्,क्वचिददृष्टादपि कोटिस्मरणे संशयदर्शनादुक्तप्रकारबहिर्भावापत्तेश्च। कर्तृकार्यवदिति। यथा कार्यत्वात्सकर्तृकत्वानुमाने कर्तृकार्ये घटादौ विशेष उपाधिरूपः प्रतिक्षिप्तस्तथा संशयेपीत्यर्थः। निद्रेति। अनुभवसिद्धज्ञानगतजातिविशेषोपलक्षणमिदम्। किमितीति। यद्यपि यथाश्रुतं नाविद्यात्वे प्रयोजकं तथाप्यनुल्लिखित-

न्यायलीलावतीप्रकाशविवृतिः

वाक्यपदेनैवोक्तेति भावः। वस्तुतो मूलेऽपि वाक्यादिति न्यायदर्शनाभिप्रायकविप्रतिपत्तिरपि वैशेषिकानां न संशयहेतुरिति प्रागावेदितत्वात्। तत्रापि-विशेषादर्शनेऽपि। न च तस्मिन्सत्यपि धर्मिनिर्धर्मिकत्वेन समानधर्मवद्धर्मिज्ञानस्य संशयकारणत्वमिति वाच्यम्। समानधर्मदर्शनस्य कोट्यनिश्चय एवोपक्षयात् कोट्यनिश्चयस्यैव नियामकत्वाददृष्टजन्यकोटिस्मृतिस्थले व्यभिचारेण समानदर्शनस्याकारणत्वादिति भावः। निद्रेतिलक्षणं कार्यतावच्छेदकजात्यपरिचये दुर्ज्ञेयमित्यत आह अनुभवसिद्धेति। अनुल्लिखितेति। विशेषतोऽनुल्लि-

(१) भ्रमइति भा. पु. पाठः।

वस्तुमात्रालोचनमनध्यवसायः ।

सत्यज्ञानं विद्या । तच्च स्मृत्यनुभवभेदि । तत्रान्त्यस्य प्रमात्वम् । सत्योऽनुभवः प्रमा । सत्यत्वं न ज्ञानजातिः, साक्षात्कारित्वेन परापरभावानुपपत्तेः । नच विषय[धर्म]भेदः, सर्वसाधारण्यात् । न ज्ञानवदुपाधिः, तदभावात् । न(च) वस्तुस्वरू-

न्यायलीलावतीकण्ठाभरणम्

तनानाकोटिकं ज्ञानमित्यर्थः ।

सत्यज्ञानमिति । विशेष्यावृत्त्यप्रकारकं ज्ञानं, व्यधिकरणप्रकारानवच्छिन्नं ज्ञानं वेत्यर्थः । तच्चेति । सत्यज्ञानमित्यर्थः । सत्योऽनुभव इति । यथार्थोऽनुभव इत्यर्थः । सत्यत्वमिति । प्रमात्वमित्यर्थः । साक्षात्त्वस्य व्यापकत्वेऽनुमितिः प्रमा न स्यात्, व्याप्यत्वे च भ्रमः प्रमा स्यादित्यर्थः । न च जातिरव्याप्यवृत्तिर्येन एकमेव ज्ञानं प्रमाऽप्रमा वा भवेदिति भावः । ननु विषयगतं सत्यत्वं धर्मो न उपाधिः स्यात्तत्र च परापरभावाभावो न दोषायेत्यत आह न चेति । सर्वसाधारण्यादिति । तर्हि चैत्रज्ञानसत्यत्वं मैत्रेणापि गृह्येत विषयगतस्य धर्मस्य साधारण्यादिति प्रसङ्गपरं, भ्रमसाधारण्यापत्तिर्वा । ननु यथाऽज्ञातो ज्ञानघटितोऽपि घट-विषयक उपाधिरसाधारणस्तथा विषयगतोऽप्यसाधारण एव कश्चिद्धर्मः सत्यत्वं येन स्वतःप्रामाण्यं स्यादित्यत आह न च ज्ञानवदिति । तदभावादिति । विषये तादृशधर्मानुभवादित्यर्थः । पूर्वदोषं विस्मृत्य शङ्कते नचेति । ज्ञाने यत् सत्यत्वं तद्

न्यायलीलावतीप्रकाशः

नानाप्रकारकविरुद्धकोट्युल्लेखि ज्ञानमित्यत्र तात्पर्यम् ।

परापरेति । संशयादीनां धर्म्यंशेऽपि प्रमात्वाभावापत्तेः, जातेर्व्याप्यवृत्तित्वेनांशे तदवृत्तेरित्यपि मन्तव्यम् । न विषयेति । विषयस्य सत्यत्वं धर्मस्तद्विषयकत्वात् ज्ञानमपि सत्यमिति न, धर्मस्यापि तद्विषयत्वेन सत्यत्वप्रसङ्गादित्यर्थः । न ज्ञानवदिति । यथा ज्ञातो घट इति व्यवहारे ज्ञानमन्यधर्म एव घटेऽप्युपाधिस्तथात्र न सत्यत्व-

न्यायलीलावतीप्रकाशविवृतिः

खितनानाकोट्यवगाहिज्ञानं संशय इत्यर्थः ।

परापरभावानुपपत्तेरिति मूलम् । समानाधिकरणजात्योः परस्परात्य-

पम् , स्वतःप्रामाण्यापत्तेः । अनन्यात्मत्वमन्यतादात्म्यनिषेध इति चेत् । न । नारजतमिति ज्ञप्तेः स्वतःप्रामाण्यापत्तेः । घटोऽयमिति ज्ञानादेः सत्यविषयतानुपपत्तेरसङ्गतमिति चेत् । न, परानात्म-

---

न्यायलीलावतीकण्ठाभरणम्

यदि विषयस्वरूपमेव तदा विषयस्वरूपग्राहकेण ज्ञानेन स्वस्य सत्यत्वं ज्ञातमेवेति स्वतःप्रामाण्यापत्तिरित्यर्थः । ननु नार्थस्वरूपं सत्यत्वं येन स्वतःप्रामाण्यं स्यात् , किन्तु अनन्यात्मकत्वं विषयधर्म्मः, न च सोऽनेन न गृह्यते येन स्वतःप्रामाण्यं स्यादित्याशङ्कते अनन्येति । तदनन्यं विवृणोति अन्यतादात्म्यनिषेध इति । एवं सत्यनन्यात्मकत्वग्राहिणो नारजतमिति ज्ञानस्य स्वतःप्रामाण्यं स्यादिति परिहरति नारजतमितीति । किञ्चान्यतादात्म्याविषयकं ज्ञानं प्रमा न स्यादित्याह घटोऽयमिति । असङ्गतमिति । सत्योऽनुभवः प्रमेति लक्षणमसङ्गतमित्यन्वयः । परानात्मकतयेति । परो विशेषादन्यो रजतादिस्तदनात्मकतयेत्यर्थः । तथाच विशेषादन्यत्र रजतादितदात्मतया शुक्त्यादेर्ज्ञानं भ्रमः

न्यायलीलावतीप्रकाशः

मित्यर्थः । तदभावात्—सत्यत्वस्यान्यधर्मस्याभावादित्यर्थः । स्वत इति । स्वतःप्रामाण्यं गृह्येतेत्यर्थः । अनन्यात्मत्वविवरणमन्यतादात्म्यनिषेधः । तदेव सत्यत्वमतो न स्वतःप्रामाण्यापत्तिः विषयस्वरूपावगाहिना ज्ञानेन तदग्रहादित्यर्थः । नारजतमितीति । तया विषयेऽन्यतादात्म्यनिषेधस्यावगाहनादित्यर्थः । घटोयमितीति । तस्यान्यतादात्म्यनिषेधाविषयत्वादित्यर्थः । असङ्गतं, सत्योऽनुभवः प्रमेति लक्षणमिति शेषः । परानात्मकतयेति । परात्मकत्वं परनिष्ठान्योन्याभावाप्रतियोगिता विषयस्य सा यत्र ज्ञाने न भासते तत्प्रमेत्यर्थः । न चैवं स्वतःप्रामाण्यापत्तिः, यदि हि प्रकाशमाना परानात्मकतोपाधिः स्यात् तदा स्वप्रकाशतापत्तिः, नचैवं स्वरूपसत्या एव तस्या उपाधिभा-

न्यायलीलावतीप्रकाशविवृतिः

न्ताभावसामानाधिकरण्यानुपपत्तेरित्यर्थः । परनिष्ठेति । पराभेदो विशेष्यभिन्नाभेद इति यावदित्यर्थः । परनिष्ठेति । एवञ्च स्वतःप्रामाण्यापत्तिर्नेति पराभेदाविषयत्वाभावस्य स्वरूपसत एव ज्ञानवृत्तेः प्रामाण्यशरीरत्वादित्याह नचैवमिति । नन्वेवं परानात्मकतयेति प्रकारवा-

कतयाऽनुभवस्य तादृशत्वात् । न च स्वतःप्रामाण्यापत्तिः, परात्मतानुभवसन्देहात् । न च सावधारणेन घट एवेत्यनेना-

---

न्यायलीलावतीकण्ठाभरणम्

तद्वन्यज्ञानं प्रमेति भावः । परानात्मकत्वमनुभवस्य प्रकार एव विव-क्षित इति भ्रान्तस्य शङ्कामपनयति नचेति । परात्मतया अनुभवात् भिन्नोऽयमनुभवो नवेति सन्देहसत्त्वात् कथं स्वतस्त्वमित्यर्थः । ननु घट एवायमित्यनुभवस्य नायमघट इत्याकारपर्य्यवसन्नस्यानुव्यव-सायेन प्रामाण्यग्रहे स्वतस्त्वं स्यादेवेत्यत आह नचेति । संशयान्यथा नुपपत्त्यैव तत्रापि प्रामाण्यनिश्चय इत्यर्थः । शङ्कितभ्रमबीजमाशंक्य

न्यायलालीवतीप्रकाशः

वात् । न च परानात्मकतयेति तृतीया प्रकारे, किन्तूपलक्षणे, तथा-च परात्मकतयोपलक्षितस्य वस्तुतोऽनुभवः प्रमा । न च घटपटा-विति समूहालम्बने घटादन्यः पटस्तदात्मतया पटस्य भासनाद्भ्र-मत्वापत्तिः, यत्र हि ज्ञाने परात्मना परस्य विशेषणं भासते स भ्रमो, न च समूहालम्बने पटात्मता घटस्य विशेषणं भासते पटात्मतया घटो ज्ञात इत्यनुव्यवसायाभावात् । वस्तुतो यत्र यदस्ति तत्र तस्य ज्ञानं प्रमेत्युक्तमिति न समूहालम्बनस्य भ्रमत्वमिति भावः। परात्मतेति । किमयं परात्मतया लक्षितो न वेति सन्देहादित्यर्थः । ननु यत्र घट एवायं नाघट इत्यनुभवस्तत्र घटस्य परानात्मकतया भासनात् स्वतः-

न्यायलीलावतीप्रकाशविवृतिः

चितृतीयानुपपत्तिरित्यत आह नच परेति । परानात्मकतयेति । परानात्म-कता च ज्ञानवृत्तिरेव परम्परया वस्तुलक्षणमतो न पूर्वविरोध इत्य-वधेयम् । यत्किञ्चिद्विशेष्यभिन्नादभेदः समूहालम्बनेऽपि भासत एवे-त्यभिप्रायेण शङ्कते न च घटपटाविति । तद्भिन्नाभेदविषयकत्वाभावः तदंशे न प्रामाण्यमित्यभिप्रायेण परिहरति यत्र हि ज्ञान इति । विशेषणं प्रतियोगित्वादिसम्बन्धनिरूपकं वैशिष्ट्यमिति यावत् । उक्तलक्षणं सं-सर्गारोपेऽतिव्याप्तमित्यरुचेराह वस्तुत इति । यत्र विशेष्ये यादृशं वैशि-ष्ट्यं तत्र तद्विषयकमित्यर्थः किमयमिति । स्वभिन्नाभेदविशिष्टोऽनुभ-वविषयोऽन्यादृशो वेति संशयाकारो द्रष्टव्यः । ननु यत्रेति । तत्र घट-

तिप्रसक्तिः। निश्चयानुपपत्तेः। न च परात्मताप्रतिषेधवत्तयाऽनुभवः सत्यत्वम्। घटोऽयमित्यव्याप्तेः। किन्तु परात्मतया-(१)नुपलम्भः। अत एव च प्रामाण्यनिश्चये तदव्यवस्थितिः तथा च तन्निश्चय इति निरस्तम्। प्रवृत्तिसामर्थ्यादेव तन्निश्चायकत्वात्। तत्साधकतमं च प्रमाणम्।

---

न्यायलीलावतीकण्ठाभरणम्

निराकरोति नचेति। यदि प्रमायाः परानात्मकत्वं प्रकारः स्यात् तदा यत्र घटोऽयमित्यादौ स न प्रकारस्तत्र प्रमा न स्यादित्यर्थः। किन्तु परात्मतयाऽनुपलम्भ इति। पर्युदासनञा परात्मतोपलम्भादन्य उपलम्भ इत्यर्थः। अत एवेति। यत एव परात्मत्वं वस्तुधर्ममभ्युपेत्य तत्प्रकारकं ज्ञानं प्रमेति नाचष्ट इत्यर्थः। तत्साधकतममिति। प्र-

न्यायलीलावतीप्रकाशः

प्रामाण्यापत्तिरित्यत आह नचेति। प्रथमतरुनाद्यज्ञानसामग्र्यभावादित्यर्थः। अव्याप्तिं परिहरति नचेति। किन्त्विति। वस्तुगत्या यः परात्मा तस्यानुपलम्भ इत्यर्थः। यथाश्रुते दोषस्योक्तत्वात्। ननु ज्ञानस्य प्रामाण्यनिश्चयादुक्तरूपतत्त्वविषयत्वनिश्चयस्तन्निश्चये च प्रामाण्यनिश्चय इत्यन्योन्याश्रय इत्यत आह अत एवेति। तत्साधकतममिति। कार्याव्यभिचारिव्यापारवत्त्वं तमबर्थः। यद्यपि व्यापाराद्यक्षणे चिरस्थिरत्वगिन्द्रियसंयोगे च सति फलाभावादिदमसिद्धं, तथापि कार्यसामग्रीव्याप्यव्यापारवत्त्वमर्थः। आद्यक्षणे व्यासङ्गे च फलाभावात्र

न्यायलीलावतीप्रकाशविवृतिः

भिन्नभिन्नत्वस्य विषयनिष्ठस्यानुव्यवसायेन ग्रहणान्नानुभवे घटभिन्नाभेदविषयत्वसन्देह इत्यर्थः। प्रथमत इति। उत्तरकालीनसंशयानुरोधेन स्वातन्त्र्येण घटभिन्नभिन्नत्वं विषयनिष्ठं नानुव्यवसायग्राह्यमिति कल्प्यत इति भावः। दोषस्योक्तत्वादिति।· परानात्मकतया नानुभवस्येत्यादिमूलव्याख्यावसरेऽनुगत्येति शेषः। आद्यक्षण इति। कारणस्य कार्यपूर्ववर्त्तित्वनियमादिति भावः। चिरेति। व्यासङ्गात्फलाजनके इति शेषः। आशङ्कितदोषपरिहारायाह आद्यक्षण इति। तथा च य-

---

(१) त्मताऽनुपलंभ—इति मा० पु० पाठः।

न्यायलीलावतीकण्ठाभरणम्

साधकतमत्वं प्रमारूपफलाव्यभिचारिव्यापारवत्वं, तच्च सामग्री-व्याप्यव्यापारवत्वं, तेन चिरस्थिरेन्द्रियसन्निकर्षे फलाभावे नासिद्धिः ।

परामृष्यमाणस्येश्वरस्य श्रोत्रस्य च शब्दप्रागभावसाक्षात्कारकरणत्वमिति चायोगव्यवच्छेदेन सम्बन्धिकरणमित्यभिप्रेतम् ।

न्यायलीलावतीप्रकाशः

सामग्री । न च हस्ताद्यव्याप्तिः, फलाव्यवहितपूर्वक्षणवर्तिज्यालनादिव्यापारवत्त्वस्य हस्ते भावात् । अनुमितौ तु लिङ्गपरामर्शजनकव्याप्तिस्मृतिः करणं, परामर्शस्तद्व्यापारः, व्यापारत्वं च तज्जजनकत्वे सति तज्जन्यत्वं, शब्दतद्ध्वंसप्रत्यक्षयोः शब्द एव श्रोत्रव्यापारः, शब्दप्रागभावप्रत्यक्षे तु कर्णशष्कुलीसंयोगो व्यापारः।

ननूक्तलक्षणाच्चेश्वरस्य स्वज्ञानं प्रति करणत्वमित्याप्तप्रामाण्यादित्यादौ शास्त्रे कथं तस्य प्रमाणत्वव्यवहार इत्याशङ्क्याह

न्यायलीलावतीप्रकाशविवृतिः

स्यापि व्यापारस्याद्यक्षणे दैवात्सामग्री नास्ति तत्राप्युत्तरकालं सामग्र्यस्त्येवेति स्वाधिकरणकाले सामग्र्यावश्यकत्वरूपा सामग्रीव्याप्तिस्तत्रापि व्यापारे, एवं चिरस्थायित्वगिन्द्रियसंयोगेऽपीति, एवं चाद्यक्षणे व्यासङ्गे च न परं सामग्री तदव्यवधाने फलाभावादुत्तरकालं चास्त्येव सेत्यक्षरार्थः । न च यत्रोत्तरकालमपि दैवान्न सामग्री तदव्याप्तिः, फलोपहितस्यैव लक्ष्यतया दोषाभावात् । केचित्तु प्रतिबन्धकसत्त्वे परं न सामग्री, तथा च प्रतिबन्धकभावातिरिक्तकारणवर्गव्याप्तव्यापारत्वमेव लक्षणं, व्याप्तिश्च स्वाधिकरणकालावच्छेदेनावश्यकत्वमेवेति भाव इत्याहुः । फलाव्यवहितेति । न च स व्यापारः कर्त्रादेरपीत्यतिव्याप्तिरिति वाच्यम् । तेन रूपेण कारणव्यवहारस्य तत्रेष्टत्वादिति भावः। ननु व्यापारवत्वं करणलक्षणं साक्षात्कारकारण श्रोत्रेऽव्याप्तं इन्द्रियान्तरस्य हि सन्निकर्षो व्यापारः न चात्र तथा समवायात्मकसन्निकर्षस्याभूत आह शब्दतद्ध्वंसेति । न च ध्वंससाक्षात्कारे शब्दो न व्यापारः प्रतियोगिध्वंसयोरेकत्राजनकत्वात् इति वाच्यम् । एकनियमस्याप्रयोजकत्वात् । घटतदत्यन्ताभावयोः समूहालम्बनजनकत्ववत् प्रतियोगिध्वंसयोरेकत्र जनकत्वसम्भवात् । के

अन्ये त्वीश्वरप्रमाणत्वसङ्ग्रहार्थं कारकाकारकसाधारणं तदयोगव्यवच्छेदं निमित्तमङ्गीकुर्वते। अनाद्यबाध्यप्रमाणशब्दवाच्यता तूपेक्षणीया। प्रमिते(१)रपि तत्प्रवेशापत्तेः। आयाममाने

न्यायलीलावतीकण्ठाभरणम्

मास्त्वेमाचार्य्यसम्मतेत्याह(?) अन्ये त्विति। प्रमितेरपीति। प्रमाणभावव्युत्पत्तिमाश्रित्येति भावः। आयामेति। प्रादेशद्वयमित्यस्य प्रमाणं परिकल्पितं 'प्रमाणे द्वयसज्'इत्यादौ परिमाणेऽपि तत्पदप्रयोगादित्यर्थः।

न्यायलीलावतीप्रकाशः

अन्ये त्विति। यद्यप्येतदिन्द्रियादावपि नास्ति उत्पत्तिकाले प्रमितेरयोगादित्यव्याप्तिरीश्वरप्रमापरम्परासम्बन्धः कालादावपीत्यतिव्याप्तिश्च, तथापि स्वात्यन्ताभावासमानाधिकरणो यः प्रमितेः स्वकारणेन सम्बन्धः तद्वत्त्वमेव करणत्वम्, अस्मदाद्यात्मना स्वकारणेन यः प्रमितेः समवायसम्बन्धः स एवेश्वरेणापीति तस्यापि प्रमाणत्वम्, कालादौ च स नास्तीति नातिव्याप्तिः। इन्द्रियादिषु तु स्वात्यन्ताभावसामानाधिकरण्यप्रमितिसम्बन्धव्यतिरेकात्। प्रमितेरपीति। भावव्युत्पन्न(२)प्रमाणपदवाच्यत्वस्यापि तत्र सत्त्वादित्यर्थः। आयामेति। "प्र·

न्यायलीलावतीप्रकाशविवृतिः

चित्तु शब्दनाशक एव शब्दः पूर्वशब्दध्वंससाक्षात्कारव्यापारः तस्य ध्वंसद्वारा जनकत्वसम्भवादित्याहुः। तदयुक्तम्। तस्य ध्वंसेनान्यथासिद्धतया तत्साक्षात्कारजनकत्वे मानाभावादन्यथा मुद्गरपातादेरपि घटध्वंसप्रत्यक्षजनकतापत्तेरिति। वस्तुतः कर्णशष्कुलीसंयोगः श्रोत्रमनःसंयोगो वा सर्वत्र श्रोत्रजव्यापार इति रहस्यम्।

परम्परासम्बन्ध इत्युपलक्षणम्, विषयविषयिभावोऽपि द्रष्टव्यः। तथापीति। अत्राद्यं स्वपदं सम्बन्धपरं द्वितीयं प्रमापरं, तेनेन्द्रियादौ सम्बन्धान्तरावच्छिन्नप्रमात्यन्ताभावमादाय नातिव्याप्तिः। स एवेति। समवायस्यैकत्वादिति भावः। कालादौ च यद्यपि कारणत्वं समवायश्च काले वर्त्तत एव तथापि विशिष्टस्तत्र नास्ति तत्र तदत्यन्ताभावस्यापि विद्यमानत्वादित्याशयः। इन्द्रियादिष्विति। तत्र कारणतालक्षणसम्ब·

(१) प्रतीतेरिति मा० पु० पाठः, (२) करणव्युत्पन्नेति वि० संमतं पाठान्तरम्।

चातिप्रसक्तेः । वाच्यतयाऽयोगव्यवच्छेदोपलक्षणत्वे तु धन्धनापत्तेः । प्रमेयादौ च कथं साधकतमत्वाभावावधारणम् स्वप्रमायां परप्रमायां च निश्चेतुमशक्यत्वात् ।

---

### न्यायलीलावतीकण्ठाभरणम्

यत्र प्रमाणपदवाच्यत्वस्यायोगव्यवच्छेदस्तत् प्रमाणं प्रमितौ माने च तदयोगोऽपि भावव्युत्पत्तिमजानतामित्याशङ्क्याह वाच्यतयेति । तत्राप्ययोगव्यवच्छेद एव प्रमाणपदवाच्यताया इति तद्यावर्त्तनं धन्धनमित्यर्थः। स्वप्रमायामिति । अस्यां प्रमायां प्रमेयं न करणमिति स्वपरप्रमयोर्ज्ञातुमशक्यमित्यर्थः । स्वप्रमा प्रमेयप्रमा तदन्यप्रमा वेति विकल्पार्थ इति केचित् ।

### न्यायलीलावतीप्रकाशः

माणे व्यसज्जद्ग्रन्मात्रच" इत्यादौ तस्यापि प्रमाणपदवाच्यत्वादित्यर्थः। धन्धनेति । तस्य साधारणत्वादित्यर्थः । स्वप्रमायामिति । स्वप्रमायां साधकतमत्वमिन्द्रियस्यापि नास्तीत्यव्याप्तिः, परप्रमासाधकतमत्वं प्रमेयस्याप्यस्ति व्यापारबाहुल्यस्यैव तमबर्थत्वादित्यर्थः ।

### न्यायलीलावतीप्रकाशविवृतिः

न्धस्य स्वात्यन्ताभावासामानाधिकरण्यादित्यर्थः । यद्यपि विषयादावपि कारणतालक्षणसम्बन्धसत्त्वादतिव्याप्तिस्तेन रूपेण कारणव्यवहारस्तत्रेष्ट एवोक्तमतानालम्बने तु कालादिवारणमप्ययुक्तं, तथापि स्वकारणंनेत्यस्य स्ववृत्त्यनुभवत्वसाक्षाद्व्याप्यजात्याश्रयो यावज्जन्यं तत्कारणेनेत्यर्थः, न च विषयस्तथा तस्य लौकिकसाक्षात्कारमात्रकारणत्वात् । न च तथापि शरीरादावतिव्याप्तिः । शरीरेण जानीते इत्यादिप्रयोगदर्शनेन तस्य सङ्ग्राह्यत्वादिति । करणव्युत्पन्नेति । करणव्युत्पन्नप्रमाणशब्दवाच्यत्वविवक्षायामपि ईश्वरप्रमायामतिव्याप्तेरित्यर्थः । तत्रापि व्यापारसम्भवादिति भावः । भावव्युत्पन्नेति तु पाठः सुगम एव । तस्य साधारणत्वादिति । प्रमाणशब्दवाच्यत्वायोगव्यवच्छेदरूपलक्षणंऽपि पूर्वोक्तप्रसङ्ग एवेति भावः । केचित्तु अयोगव्यवच्छेदोपलक्षणत्व इति मूलस्य प्रमायोगव्यवच्छेदोपलक्षणेत्यर्थ इति सत्त्वात्तस्य साधारणत्वात् कालादावतिप्रसक्तेरित्यर्थ इति व्याचक्षते । स्वप्रमायामिति । स्वनिष्ठप्रमायामित्यर्थः । परप्रमेति । परनिष्ठप्रमा-

नैवम् । उक्तोत्तरत्वात् । लिङ्गस्य चास्मन्मतेऽकरणत्वात् । तच्चाऽध्यक्षमनुमानं च । साक्षात्कारिप्रमासाधकतममध्यक्षम् । तत्सविकल्पकादिभेदेन भिन्न(१)मित्युक्तम् । अनुमानं

न्यायलीलावतीकण्ठाभरणम्

उक्तोत्तरत्वादिति । इन्द्रियलिङ्गशब्दा नामयोगव्यवच्छेदेन सम्बन्धो न तु प्रमेयस्यापीति स्फुटमेवेति भावः । नन्वलिङ्गस्य धूमादेर्नायोगव्यवच्छेदेनानुमित्या सम्बन्ध इति लिङ्गं करणं स्यादित्यत आह—लिङ्गस्येति(२) । स्वरूपसदिति शेषः । प्रमाणं लक्षयित्वा विभजते तच्चेति । साक्षात्करोमीत्यनुभवात् साक्षात्कारित्वं जातिः, सा चेश्वरप्रत्यक्षे धर्मिग्राहकमानसिद्धा । अविकल्पादीति । तदिति यदि साक्षात्कारिमात्रं

न्यायलीलावतीप्रकाशः

उक्तेति । अयोगव्यवच्छेदस्तमवर्थो न व्यापारबाहुल्यमिति न प्रमेयेतिव्याप्तिरित्यर्थः । नन्वेवमनुमितेः लिङ्गं करणं न स्यादित्यत आह लिङ्गस्य चेति । लिङ्गपरामर्शोऽनुमितिकरणं न लिङ्गं तत्र चोक्तनिमित्तमस्त्येवेत्यर्थः । साक्षात्कारीति । साक्षात्कारित्वं च साक्षात्करोमीत्यनुगतधीगम्यं सामान्यं चाक्षुषत्वादिव्यङ्ग्यम्, ईश्वरे च धर्मिग्राहकमानगम्यम्, न त्विन्द्रियजन्यत्वं साक्षात्कारिकारणस्यैवेन्द्रियतयाऽन्योन्याश्रयादीश्वरप्रत्यक्षाव्याप्तेश्च । अनुमानमनुमितेः करणमनुमितित्वं

न्यायलीलावतीप्रकाशविवृतिः

साधकतमत्वं प्रमेयस्यापि विषयरूपस्येत्यर्थः । यद्वा स्वप्रमायामित्यस्य स्वगोचरप्रमायामित्यर्थः । परगोचरप्रमाजनकत्वं प्रमेयस्यापि कालादेरित्यर्थः ।

अयोगेति । यद्यपि सर्वदा अयोगव्यवच्छेदो नेन्द्रियेऽपि क्वचिदयोगव्यवच्छेदः प्रत्ययेऽपि, तथापि स्वाधिकरणकालावच्छेदेन फलावश्यकत्वमेवायोगव्यवच्छेदः इन्द्रियसन्निकर्ष एव कारणमिति भावः । ननु स्मृत्यजनकज्ञानकारणमनःसंयोगाश्रयत्वमिन्द्रियत्वमिति नान्योन्याश्रय इत्यत आह ईश्वरेति । सामान्यलक्षणं विना न विशेषलक्षणावसर इत्यतः सामान्यलक्षणं पूरयति अनुमानमिति ।

(१) तच्चाविकल्पादिभेदाभिन्नमिति मा० पु० पाठः मिश्रसंमतश्च ।
(२) एतन्मतेनाम लीलावत्यां लिङ्गस्यास्म—णम्-इति पाठो द्रष्टव्यः ।

स्वार्थं परार्थं च । स्वार्थं व्याप्तिपक्षधर्मतासंवेदनम् । अनुमित्यौपयिकसमस्तरूपोपेतवस्तुवाचकं वाक्यं परार्थम् । वर्णपदा

---

न्यायलीलावतीकण्ठाभरणम्

परामृष्यते तदाऽविकल्पकं सविकल्पकं चेति साक्षात्कारकृतमपर्यन्तस्य तच्छब्देन परामर्शेऽविकल्पकादीत्यादिपदेनेन्द्रियसन्निकर्षयोरुपसंग्रहः । तत्र सविकल्पकं प्रत्यविकल्पकं तत्र चेन्द्रियामित्यर्थः । अनुमितीति । अनुमितिचरमकारणलिङ्गपरामर्षप्रयोजकशाब्दजनकवाक्यमित्यर्थः । समस्तरूपोपेतलिङ्गप्रतिपादकं वाक्यमिति वाऽर्थः । वस्तुवाचकमिति । लिङ्गप्रतिपादकमित्यर्थः । ननु न्यायः कथमनुमानं तस्यानुमित्यकरणत्वात् शब्दस्यानुमान एवान्तर्भावादिति चेत् । न,

न्यायलीलावतीप्रकाशः

च जातिविशेष इति सामान्यलक्षणमित्याभिप्रेत्य तत्र विभागमाह स्वार्थमिति । व्याप्तीति । पक्षधर्मस्य व्याप्तिविशिष्टज्ञानमित्यर्थः । अनुमितीति । अनुमितिचरमकारणीभूतलिङ्गपरामर्षप्रयोजकशाब्दज्ञानजनकं वाक्यं न्यायः, स एव परार्थानुमानमित्यर्थः । तथाहि प्रतिज्ञादिपञ्चवाक्यैरेकवाक्यतया स्वार्थविशिष्टज्ञानं जन्यते, तेन च विशिष्टवैशिष्ट्यावगाहि मानान्तरमुत्थाप्यते, तेन च चरमः परामर्ष उत्पाद्यत इति न्यायजन्यशाब्दज्ञानस्य लिङ्गपरामर्षप्रयोजकता—वह्निव्याप्यवानयमिति वाक्यस्य लिङ्गपरामर्षप्रयोजकता, नतु तत्प्रयोजकशाब्दज्ञानप्रयोजकतेति न तत्रातिव्याप्तिः । एतेन वाक्यस्यानुमित्यजनकत्वात् कथमनुमानविशेषता । यदि च शब्दस्यानुमान एवान्तर्भावस्तदा घटमानयेत्याद्यपि वाक्यं परार्थानुमानं स्यात् । अथ परामर्षजनकतया लिङ्गस्यानुमानता परामर्षस्याव्यापारतया अनुमित्यकरणत्वात् वाक्यमपि तथेति तदप्यनुमानम्, तर्हीन्द्रियस्याप्यनुमानतापत्तिरित्यपास्तम् । वर्णेति । यया आकाङ्क्षया प्रतिज्ञादयः प्रयुज्यन्ते साऽऽकाङ्क्षा

न्यायलीलावतीप्रकाशविवृतिः

यद्यप्यनुमानं ज्ञानं न वाक्यविशेषात्मकम् , तथापि तादृशवाक्यप्रयोज्यपरामर्ष एव परार्थानुमानं, परत्वं च वाक्यप्रयोक्त्रपेक्षया । एतेनेति । न्यायप्रयोज्यपरामर्षपरपदार्थानुमानमिति तात्पर्यस्थलेत्यर्थः । परार्थानुमानं स्यादेति । वक्तृभिन्ननिष्ठपरामर्षजनकत्वाविशेषादिति भा·

तिरेकिण एकैकाकांक्षाविच्छेदकास्तदेकदेशा अवयवाः । पक्षवचनं प्रतिज्ञा । विशिष्टविभक्त्यन्तं लिङ्गवचनं हेतुः । दृष्टान्तवचनमु-

न्यायलीलावतीकण्ठाभरणम्

घटमानयेत्यादिवाक्यानामपि परार्थानुमानत्वापत्तेः । मैवम् । लिङ्गपरामर्शोऽनुमानं तत्प्रयोजकतया न्यायोऽपि अनुमानसञ्ज्ञितिपरप्रयोगात् । एकैकाकांक्षेति । पक्षसत्त्वसपक्षसत्त्वाद्याकाङ्क्षाविच्छेदात् हेत्वाकाङ्क्षाव्याप्त्याद्याकाङ्क्षाविच्छेदिका इति वार्थः । वस्तुपदयोरपि परम्परया तदस्तीति तत्रातिव्याप्तिः स्यादत उक्तं वर्णपदातिरेकेण इति । आकांक्षाविच्छेदकत्वं चावयवानां स्वस्वार्थप्रतिपादनद्वारा यद्यपि न्यायेऽप्येतदस्ति, तथाप्यनुमितिचरमकारणलिङ्गपरामर्षप्रयोजकशाब्दजनकवाक्यत्वमवयवत्वम्, प्रतिज्ञादिभिः प्रत्येकं स्वस्वार्थविशिष्टज्ञाने जनिते ततः पक्षसत्त्वं सपक्षसत्त्वं विपक्षासत्त्वमबाधितोऽसत्प्रतिपक्षश्चेति विश्वस्यार्थे स्वयं मनसा परिच्छिनत्ति, एतदेव विशिष्टवैशिष्ट्यावगाहि मानमुच्यते, ततो वह्निव्याप्यधूमवानयमिति पक्षविशेष्यकश्चरमलिङ्गपरामर्ष उत्पद्यते इति भावः । पक्षवचनमिति । न च पक्ष इति पदेऽतिव्याप्तिः, हेत्वाविषयत्वे सति साध्यविषयन्यायावयवत्वस्य उद्देश्यानुमित्यन्यूनानतिरिक्तविषयकन्यायावयवत्वस्य वा विवक्षितत्वात् । विशिष्टेति । पञ्चम्यन्तन्यायावयवत्वस्य साध्यविशेष्यकन्यायावयवत्वस्य वा विवक्षितत्वात् । दृष्टान्तेति । अन्वयव्यतिरेकान्यतरव्याप्त्युपदर्शकन्यायाव-

न्यायलीलावतीप्रकाशः

निश्चयजननद्वारा तैर्निराक्रियते इति तन्निश्चयजनकत्वमवयवत्वमित्यर्थः । तद्वर्णपदयोरप्यस्तीत्यत उक्तं वर्णपदेति । यद्यप्याकाङ्क्षाविच्छेदकत्वं न्यायस्याप्यस्ति तत्तदाकाङ्क्षाया अननुगतत्वात् तद्विच्छेदकत्वं चाननुगतम्, तथाप्यनुमितिचरमकारणलिङ्गपरामर्षप्रयोजकशाब्दज्ञानजनकशाब्दज्ञानजनकं वाक्यमवयवः, अत एव वह्निव्याप्यवानयमिति वाक्यावयवे नातिव्याप्तिः तदवयवेन परामर्षजनकस्य जननात् । पक्षेति । यद्यप्येतत् पक्षशब्दे निगमने चातिव्यापकम्, तथाप्यवयवविभागावसरे निरुक्तं प्रतिज्ञालक्षणं द्रष्टव्यम् । विशिष्टेति । हेतु-

न्यायलीलावतीप्रकाशविवृतिः

यः । तथेति । परामर्षजनकत्वमित्यर्थः तन्निश्चयेति । तत्तदाकाङ्क्षानिश्च-

दाहरणम् । तस्य साध्ये उपसंहारः उपनयः । पुनः पक्षवचनं निगमनम् । वादादिकमन्यत्र । सुखादिपञ्चकस्य स्वस्वसामान्ययोगः । पतनासमवायिनिदानं गुरुत्वम् । द्रवत्वादीनां त्रयाणां

---

न्यायलीलावतीकण्ठाभरणम्

यवत्वं साध्यप्रतियोगिकसाधनानिष्ठव्याप्त्युपदर्शकन्यायावयवत्वमन्वय्युदाहरणं, साधनाभावप्रतियोगिकसाध्याभावनिष्ठव्याप्त्युपदर्शकन्यायावयवत्वं व्यतिरेकोदाहरणत्वम् , तेन दृष्टान्तपदे नातिव्याप्तिः । दृष्टान्तवचनस्य सामयिकत्वेन तद्धीनोदाहरणे च नातिव्याप्तिः । तस्येति । हेतोरित्यर्थः । चरमलिङ्गपरामर्शान्यूनानतिरिक्तविषयकज्ञानजनकन्यायावयवत्वमुपनयत्वमित्यर्थः । पुनरिति । उपसंहृतहेतुप्रयुक्तत्वेन पक्षे साध्यवैशिष्ट्योपदर्शकन्यायावयवत्वं निगमनत्वम् । वादादिविलक्षणप्रणयने हेतुमाह—वादादिकमिति । समानतन्त्रमेव तद्ग्राह्यमित्यर्थः । सुखदुःखेच्छाद्वेषप्रयत्नानां सुखत्वादिकमेव लक्षणमित्याह—सुखादीति । द्रवत्वादीनामिति । द्रवत्वस्नेहसंस्काराणामि-

न्यायलीलावतीप्रकाशः

त्वप्रतिपादकेत्यर्थः । यथाश्रुतं घटात् रूपमित्यत्रातिव्याप्तमिति पूर्वनिरुक्तमेव हेतुलक्षणं ग्राह्यम् । एवमुदाहरणलक्षणं दृष्टान्तपदे न्यायं विना दृष्टान्ताभिधाने चातिव्याप्तमिति तदप्युक्तमेव ग्राह्यम् । तस्येति । साध्यव्याप्यसाध्याभावव्यापकाभावप्रतियोगिनोरन्यतरस्येत्यर्थः । तल्लक्षणमपि प्रागेव निरुक्तम् । पुनरिति । येन रूपेण प्रतिज्ञागतस्य साध्यभागस्य पूर्वमुपस्थितिस्तेनैव रूपेण तस्य पुनर्वचनमित्यर्थः । यथाश्रुतस्य स्वरूपासिद्धेः,तस्मादनित्य इत्यत्र निगमने पक्षस्य पुनरभिधानात् । वादादिकमिति । अन्यत्र न्यायनये व्युत्पादितमिति शेषः ।

न्यायलीलावतीप्रकाशविवृतिः

चकनिश्चयेत्यर्थः । व्यतिरेकिसाधारण्यार्थमाह साध्यव्याप्येति । तस्मादनित्य इति । यद्यप्यनित्य इति विशेषणं विशेष्यं विनाऽनन्वितमिति विशेष्यवचनमावश्यकं, तथाप्युपनयस्थेनैवायमितिपदेनान्वयसम्भवान्न तद्वचनमपीति कथकसम्प्रदाय इति भावः । यथाश्रुतं सुखेति

स्वस्त्वसामान्ययोगः । विधिभावनाहेतुक आत्मविशेषगुणो धर्मः । निषिद्धभावनाहेतुकश्चाधर्मः । श्रोत्रग्राह्योऽर्थः शब्दः । शास्त्र एव चैवमादि सुप्रसिद्धमित्यास्ताम् ॥

इति श्रीन्यायलीलावत्यां वैधर्म्यपरिच्छेदः समाप्तः ॥

---

न्यायलीलावतीकण्ठाभरणम्

त्यर्थः । विधिभावनेति । विहितयागादिगोचरः प्रयत्नो विधिभावना, एवं निषिद्धकलञ्जभक्षणादिगोचरः प्रयत्नो निषिद्धभावना, सुखासाधारणकारणत्वं धर्म्मत्वं, दुःखासाधारणात्मगुणत्वमधर्म्मत्वम् । श्रोत्रेति । श्रोत्रग्राह्यत्वं शब्दत्वादावतिव्याप्तमत अर्थ इति । वैशेषिकसमयेनार्थपदवाच्य इत्यर्थः । न चान्त्यशब्दाव्याप्तिः, श्रोत्रमात्रग्राह्यजातिमत्त्वस्य विवक्षितत्वात् । वैधर्म्यान्तरानभिधाने हेतुमाह शास्त्र एवेति । कणाहरदस्ये वादिविनोदे च लक्षणान्युक्तान्यतोऽत्रास्माभिरनुक्तानि ।

न्यायलीलावतीप्रकाशः

विधिभावनेति । गुणत्वव्याप्यातीन्द्रियजातिमत् सुखसाधनं धर्मः । एतदेव सुखपदस्थले दुःखपदप्रक्षेपेणाधर्मलक्षणम् । श्रोत्रेति । श्रोत्रमात्रग्राह्यजातिमानित्यर्थः । अतो न सत्तागुणत्वयोरतिव्याप्तिः, अन्त्यशब्दे च नाव्याप्तिः । उक्तवैधर्म्याणामनुपादाने हेतुमाह शास्त्र एवेति ॥

न्यायलालीवतीप्रकाशविवृतिः

व्याप्तमित्यन्यथा व्याचष्ट गुणत्वेति । अत्र मनस्यतिव्याप्तिवारणाय गुणत्वव्याप्येति, गुणत्वसमानाधिकरणेत्यर्थः । शब्दातिव्याप्तिवारणायातीन्द्रियेति । अन्यतरत्वमादाय मनस्येवातिव्याप्तिरिति जातिपदम् । भावनायामतिव्याप्तिरिति सुखसाधनमिति । न च सुखसाधनीभूतगुरुत्वेऽतिव्याप्तिस्तदन्यत्वेनापि विशेषणात्, लीलावतीकारमते तु तस्य त्वगिन्द्रियग्राह्यत्वादतीन्द्रियपदेनैव निरासः । एतदेवेति । अत्रापि गुरुत्ववारणं पूर्ववदेव । श्रोत्रमात्रेति । सत्तामादायातिव्याप्तिवारणाय मात्रपदं ग्राह्यान्तं च जातिविशेषणमन्यथाऽन्त्यशब्दाव्याप्तेस्तथाचासिद्धत्वशङ्कायोग्यमपि न भवतीति भावः ।

साधर्म्यस्यान्वयिहेतुत्वेनात्मतत्त्वावबोधकत्वात्तत्परिच्छेदोऽयमारभ्यते। षण्णामस्तित्वम्। किं तत्? अस्तिशब्द(१)वाच्यत्वमिति चेन्न। अभावेऽपि तुल्यत्वात्। भावत्वे सतीति चेन्न।

---

न्यायलीलावतीकण्ठाभरणम्

साधर्म्येति। इच्छा द्रव्याश्रिता गुणत्वादिति चतुर्विंशतेर्गुणानां गुणत्वं साधर्म्यमात्मसाधकम्, एवं वाक्यगतं वाक्यत्वं साधर्म्यं वेदपौरुषेयत्वसाधकम्, कार्य्यत्वं च क्षित्यादिसकर्तृकत्वसाधकम्। वैधर्म्यमपि कतिपयापेक्षया साधर्म्यं तदपि चात्मसाधकं, साधर्म्यान्तरस्य प्रसङ्गात् निरूपणपरम्परात्मसाधकतया वेति द्रष्टव्यम्। तत्र षण्णामस्तित्वमभिधेयत्वं चेति भाष्यमाक्षिपति किन्तदिति। यदपि पदार्थां अस्तिपदवाच्या इति तत्पदवाच्यत्वमेवास्तित्वमित्याह अभावेऽपीति। अभावोऽस्तीति प्रयोगदर्शनादिति भावः। यद ( नैतदभाववैधर्म्यमपि तु षण्णां साधर्म्यमन्यथा

न्यायलीलावतीप्रकाशः

आत्मतत्त्वस्येति। यद्यप्यात्मविषयकानुमानस्यैव साधर्म्यस्यात्मतत्त्वज्ञानोपयोगित्वं न सर्वस्य, तथापि साक्षात्परम्परया च सर्वेषामेव तथात्वम्। अस्तिशब्देति। नन्वस्तिपदवाच्यत्वमस्तित्वस्य नार्थः त्वप्रत्ययस्य प्रवृत्तिनिमित्तवाचकत्वात्, अस्तिशब्दवाच्यत्वस्य नाऽस्तिशब्दप्रवृत्तिनिमित्तत्वात्। अत्राहुः। यद्यस्तिपदेनास्तिपदवाच्यत्वं लक्षणयोच्यते तदास्य पक्षस्य सम्भवः। अभावेऽपीति। भूतले घटाभावोस्तीत्यनुभवादित्यर्थः। यद्यपि षण्णामिदं साधर्म्यं न त्वभावापेक्षया वैधर्म्यम् अन्यथाऽभिधेयत्वज्ञेयत्वयोरप्यस्य दोषस्यापत्तेः, षण्णामस्तित्वाऽभिधेयत्वज्ञेयत्वानीति त्रयाणां तुल्यवत्साधर्म्यरूपत्वेनाऽभिधानात्, तथाप्यभिधेयत्वज्ञेयत्वास्याम-

न्यायलीलावतीप्रकाशविवृतिः

सम्भव इति। प्रकृतिजन्य प्रतीतिप्रकारस्यैव त्वप्रत्ययवाच्यत्वादन्यथा दण्डत्वाद्यवगतेरितिभावः। भूतल इति। अस्तीत्येवमाकारकस्याभिलापस्यानुभवादित्यर्थः। तथापीति। तथाचाभिधेय-

---

(१) अस्तीति शब्देति मा० पु० पाठः।

तस्याप्यसिद्धेः। भावोऽयमितिबुद्धिविषयत्वं तदिति चेन्न। तस्याप्यनुगतस्यासिद्धेः(१), ज्ञातो भाव इत्यप्रत्ययाच्च। अभावव्यावृत्तत्वमस्तित्वमिति चेन्न। स्वरूपस्य व्यावृत्तत्वात्। तदभावयोगित्वस्य परस्पराभावरूपताऽनुवृत्त्यात्। एतेन विरोधित्वमपा-

न्यायलीलावतीकण्ठाभरणम्

अभिधेयत्वज्ञेयत्वाभ्यां सामानाधिकरण्यं न स्यात्, तथापि तयोरभाववैधर्म्यपरत्वेन व्याख्येयत्वादिति भावः। तस्यापीति। भावत्वस्यापीत्यर्थः। ज्ञात इति। यदि ज्ञानघटितं भावत्वं तदा ज्ञातो भाव इति सह प्रयोगो न स्यादित्यर्थः। स्वरूपस्येति। अभावव्यावृत्तत्वं यदि भावानां प्रत्येकं स्वरूपमेव तदाऽननुगम इत्यर्थः। व्यावृत्तत्वमननुगतत्वम्। तदभावेति। अभावाभावयोगित्वं यदि भावत्वं तदा भाववृत्तिरभावः स्यान्न तु भाव एव, तथाच भावाभावयोः परस्पराभावरूपता व्याहन्येतेत्यर्थः। एतेनेति। विरोधित्वस्य स्वरूपत्वेऽननुगमोऽभावाभावत्वे च परस्पराभावरूपताव्याघात इत्यर्थः। किञ्च भावत्वमपि

न्यायलीलावतिप्रकाशः

स्तित्वाभावात्समानाधिकरणाभिधानविषयत्वज्ञानविषयत्वयोरत्र विवक्षेति मन्तव्यम्। भावत्वमात्रमेवाभावव्यावृत्तं साधर्म्यमिति व्यर्थविशेष्यत्वमिति दूषणे सत्येवाह तस्यापीति। तस्यापीति। ज्ञानार्थयोः स्वरूपातिरिक्तसम्बन्धाभावात्तयोश्चाननुगतत्वादित्यर्थः। बुद्धिविषयत्वान्तर्भावेण भावत्वे भावत्वग्रहे बुद्धिविषयत्वग्रहनियमात् सहप्रयोगः पृथक्धर्मद्वयानुभवश्च न स्यादित्याह ज्ञात इति। अभावव्यावृत्तत्वं घटादेः स्वरूपमननुगतमभावाभावस्य भावानतिरेकादित्याह स्वरूपस्येति। व्यावृत्तत्वादननुगतत्वादित्यर्थः। यदि चाभावाभावयोगित्वं भावत्वं तदा भावाभावाभ्यामतिरिक्तमभावाभाववत्त्वमुक्तं स्यात्, तथाच मिथोविरहरूपत्वं तयोर्व्याहन्येतेत्याह तदभावेति।

न्यायलीलावतीप्रकाशविवृतिः

त्वज्ञेयत्वयोरप्यभावव्यावृत्तयोरेवात्र विवक्षेत्यस्तित्वेऽपि तद्व्यावृत्तिरावश्यकीति भावः। भावत्वमात्रमेवेत्यादिफक्किका द्वितीयस्य तस्यापीति मूलस्याभासः। अभावाभावस्येति। अभावान्यो-

(१) स्याभावाच्च-प्रा० पु० पाठः।

स्तम् । अन्योन्याश्रयात्, तादात्म्याभावे तदभावाच्च । अन्य-
तायाः स्वरूपानतिरेकात् । अभावत्वस्य चानिरुक्तेः । नास्तित्व-
बुद्धि(१)वेद्यत्वं तदिति चेत् । न । तस्या(अ)नुगतानिमित्तं विना

न्यायलीलावतीकण्ठाभरणम्

स्वाभावविरोधित्वं वाच्यं, तच्च तादात्म्याभावे विरोधिनिरूपके ना-
स्ति तेन समं भावस्य सामानाधिकरण्यादित्याह तादात्म्येति । यद्वा यदि
तादात्म्याभावे भावविरोधित्वं भवेत्तदा तत्प्रतियोगिनः सकल-
स्वाभावविरोधित्वं भवेत्तदेव तु नास्तीत्यर्थः । अभावान्यत्वमपि न
भावत्वम्, अननुगमादित्याह अन्यताया इति । नन्वभावत्वावच्छिन्न-
प्रतियोगिकाऽन्योन्याभाववत्त्वमेव भावत्वं, तथाच नाननुगम इत्यत
आह अभावत्वस्य चेति । यद्वा अभावविरोधित्वमप्यभावनिरूप्यं तदेव दुर्व-
चमित्यर्थः । यद्वा भावविरोधित्वं यद्यभावत्वं तदाऽन्यो-
न्याश्रय. स्यात् प्रकारान्तरेणैवाभावत्वं निर्वाच्यमित्यत आह अभा-
वत्वस्य चेति । अभावत्वं न दुर्वचमित्याह नास्तीति । विषयविशेषमन्त-
रेण बुद्धिविशेषोऽपि दुर्निरूप एवेत्याह नेति । नास्तीतिबुद्धिवेद्यत्वे-

न्यायलीलावतीप्रकाशः

विरोधित्वस्याप्यनुगतस्य निर्वक्तुमशक्यत्वेनाभावविरोधित्वं भाव-
त्वमिति नेत्यर्थः । अभावविरोधित्वं यदि यत्किञ्चिदभावविरोधित्वं
तत्राह अन्योन्येति । अभावनिरूपणाधीनतद्विरोधित्वरूपभावस्य प्र-
तियोगिदेशसमानकालतया न तेन यावदभावविरोधो निरूप्यत
इत्यर्थः । ननु चाभावान्यतामात्रं भावत्वं न तु विरोधित्वे सतीत्यत
आह अन्यताया इति । अभावादन्येषां घटादिस्वरूपाणामननुगमादनुगत-
भावव्यवहारानुपपत्तिरित्यर्थः । ननु न भावविरोधित्वमभावत्वं येना-
न्योन्याश्रयः स्यात्, किन्त्वन्यथा निर्वाच्यमत आह अभावत्वस्य चेति ।
तदितीति । अभावत्वमित्यर्थः । तस्या इति । बुद्धेरपि विशेषो विषयाधीन

न्यायलीलावतीप्रकाशविवृतिः

स्याभावस्याधिकरणात्मकत्वादित्यर्थः । यदि चेति । यद्यभावान्यो-
न्याभावो भिन्नः स्वीकार्यस्तदा घटाभावान्योन्याभावोपि भिन्न इति
भावाभावयोः परस्परविरहरूपताभङ्ग इत्यर्थः । तदान्योन्याभाव इति(१) ।

(१) नास्तीतिबुद्धि-मा० पाठः

असिद्धेः, ज्ञातत्वेनानुभवाच्च । नापि पारतन्त्र्येण निरूप्यत्वम् । सम्बन्धस्याभावत्वापत्तेः । नापि निषेध्यनिरूप्यत्वम् । अभाव-प्रतिपक्षस्य निषेध्यस्याभावनिरुक्तिं विनाऽनिरुक्तेः । स्वरूपस स्वस्य षष्ठीप्रथमाभ्यां विवेकानुपपत्तेः । सति(१)बुद्धि-

---

न्यायलीलावतीकण्ठाभरणम्

दभावत्वं तदा ज्ञातत्वेनैवानुभूयेतेत्याह ज्ञातत्वेनेति । ज्ञातोऽभाव इति सहप्रयोगो न स्यादिति वार्थः । सम्बन्धस्येति । संयोगस्य समवायस्य चेत्यर्थः । ज्ञानस्य चेत्यपि द्रष्टव्यम् । अन्योन्याश्रयमाह अभावेति । स्वरूपसत्त्वमेवास्तित्वमित्याशंक्याह स्वरूपेति । स्वरूपस्य सत्त्वं सत्तायोगित्वमिति षष्ठी, स्वरूपमेव सत्त्वमिति प्रथमा वा ? आद्ये सामान्यादावव्याप्तिः, अन्त्येऽननुगम इति नाभावादिदमपि विवेचकम् । प्रथमपक्षेऽप्यभावेऽतिव्याप्तिरित्यपि द्रष्टव्यम् । सदितिबुद्धिवेद्यत्वं

न्यायलीलावतीप्रकाशः

इत्यन्योन्याश्रयः, घटो नास्तीतिबुद्धिविषयत्वं घटेऽप्यस्तीत्यतिव्याप्तिश्चेत्यपि द्रष्टव्यम् । उक्तैवाभिप्रायेणाह ज्ञातत्वेनेति । स्वरूपसत्त्वं भावत्वमिति पूर्वं दूषितेऽपि दूषणान्तरमाह स्वरूपेति । स्वरूपस्य सत्त्वं सत्तायोगित्वमिति षष्ठी, स्वरूपमेव सत्त्वमिति प्रथमा वा ? आद्ये सामान्यादीनां सत्तायोगित्वाभावादव्याप्तेः, विवेकानुपपत्तिरभावाद्भेदानुपपत्तिः, अन्त्ये चाभावेऽपि गतत्वात्ततो भावानां व्यावृत्तधर्मो न स्यादित्यर्थः । यद्वा यदि भावत्वं स्वरूपमेव तदा घटस्य भावत्वमिति षष्ठीप्रथमे न स्यातामित्यर्थः । ननु सदितिधीवेद्यत्वं भावत्वमित्यत आह सदितीति । सत्ताजातिमत्त्वस्य विवक्षितत्वे सामान्याद्यव्याप्तिरिति स्वरूपसत्त्वं वाच्यं तच्चाभावेऽप्यस्तीत्यर्थः । ननु सत्ताजाति

न्यायलीलावतीप्रकाशविवृतिः

योजयति यत्किञ्चिदिति । यावदभावविरोध इति । भावस्य यावताऽभावेन विरोधस्तेनापि निरूप्यो न सोऽत्र वक्ष्यमाणदोषालम्बकतया विकल्प्य योजयति... सहप्रयोगानुपपत्त्यादिनेत्यर्थः । अभावाद्भेदानुपपत्तिरिति । सत्ताजातियोगित्वं भावत्वमिति तदभावात् सामान्यास्तीति योजना । उक्तैवेति ।

---

(१) सदिति-प्रकाशकृतां मतोऽत्र पाठो बोध्यः ।

वेद्यताया अभावेऽपि सत्वात् । तस्य भावविरुद्धस्वभावत्वाद- नारोप इति चेत् । न । समवायेऽप्यनारोपापत्तेः । तस्य स्वतो- ऽपि भावत्वमिति चेन्न । स्वरूपस्याभावेऽपि तुल्यत्वात्(१) । सत्तासामान्यविरहस्योभय(त्र)समत्वात् । एतेनाभिधेयत्वादयो निरस्ताः ।

ज्ञेयत्वं च न ज्ञानसम्बन्धः, तत्रैव तदभावात् । नापि

न्यायलीलावतीकण्ठाभरणम्

यदि तदा अभावातिव्याप्तिरित्यत आह तस्येति । अभिधेयत्वादय इति मूलग्रन्थाभिप्रायस्तु धर्मत्वधर्मित्वविशेषणत्वविशेष्यत्वादय इत्यादिपदग्राह्याः, अत एव बहुवचनोपपत्तिरपि, अन्यथा ज्ञेयत्वमात्रसङ्ग्रहे बहुवचनं नोपपद्येत ज्ञेयत्वस्य स्वातन्त्र्येणैवाग्रे दूष्यत्वाच्चेति ।

तत्रैवेति । ज्ञेयत्वे ज्ञेयत्ववृत्तावात्माश्रयापत्तेरित्यर्थः । यद्वा (तज्) ज्ञान- एव तज्ज्ञानसम्बन्धाभावाज् ज्ञानान्तरसम्बन्धे चानवस्थेति भावः ।

न्यायलीलावतीप्रकाशः

सत्तया प्रतीयमानत्वमेव सत्वं सामान्यादावारोपरूपा तत्प्रतीतिरस्तीति नाव्याप्तिः, अभावे त्वारोपरूपापि सा नास्ति तस्य सद्विरुद्धस्वभावत्वादित्याह तस्येति । तथासति समवायेऽपि तदारोपो न स्यात् अभावस्येव तस्यापि सत्ताविरोधित्वादित्याह समवायेऽपीति । स्वरूपस्येति । स्वरूपातिरिक्तं भावत्वं दुर्वचमिति भावः । एतेनेति । अभावस्याप्यभिधेयादित्वेन षण्णामेव तत्साधर्म्यमित्यनुपपन्नमित्यर्थः । यद्यपि मूलग्रन्थे ज्ञेयत्वमात्रस्यादिपदग्राह्यत्वाद्बहुवचनग्राह्यं नास्ति, तथापि तत्रानुक्तस्याप्येवंविधसाधर्म्यस्य बहुवचनेनोपसङ्ग्रहः ।

तत्रैवेति । ज्ञान एव ज्ञानसम्बन्धाभावात्तस्य भेदाधिष्ठानत्वादि-

न्यायलीलावतीप्रकाशविवृतिः

देरभावत्वापत्तिरित्यर्थः । यद्यपि मूलग्रन्थे इति । षण्णामस्तित्वाभिधेयत्वज्ञेयत्वानीति भाष्यग्रन्थस्य ज्ञेयत्वमात्रस्यात्रादिपदग्राह्यत्वेन तृतीयाभावादभिधेयत्वादय इति बहुवचनं विरुद्धमिति शङ्कार्थः ।

---

(१) सत्त्वात्—प्रा० पु० पाठः ।

ज्ञानावभासेऽवश्यज्ञेयत्वम्। उत्तरप्रश्नसाधारण्यात्। नापि तद्वुज्ञेयः स्वभावभेदः। तस्य परस्परव्यावृत्तत्वेनैव स्वीकारात्।

नाप्याश्रितत्वमन्यसमवायित्वम्, अन्यतन्त्रतया वोपलब्धिस्तद्योग्यता वा। समवायशब्दयोस्तन्निरुक्तिप्रतिषेधात्। येन

---

न्यायलीलावतीकण्ठाभरणम्

उत्तरप्रश्नेति। तर्हि ज्ञेयत्वमेव ज्ञेयत्वमित्युक्तं स्यात् तच्चाद्याप्यनिरुक्तमेवेत्यर्थः। नापीति। ज्ञानोज्ञेयो विशेष्यनिष्ठविषयतालक्षणः स्वभावविशेषोऽपि न ज्ञेयत्वमित्यर्थः। तस्येति। प्रतिविशेष्यं तस्य व्यावृत्तत्वेनाननुगमादित्यर्थः। ज्ञातताविशेषो वा भट्टाभिमत इत्यर्थः। दोषस्तुल्य एव।

'आश्रितत्वं चान्यत्र नित्यद्रव्येभ्य' इति मूलोक्तं साधर्म्यमेव न ज्ञातमित्याह येन चेति। अस्तित्वाभिधेयत्वज्ञेयत्वाद्यव्येवं प्रतिपक्षे तुल्यमिति भावः। द्रव्यत्वादीनां त्रयाणामपि सत्तासम्बन्धसामान्यविशेषवत्त्वं स्वसमयार्थशब्दाभिधेयत्वं धर्म्माधर्म्मक-

न्यायलीलावतीप्रकाशः

त्यर्थः। उत्तरेति। यथा प्रश्नवाक्ये ज्ञेयपदमज्ञानार्थं तथोत्तरवाक्येपीति न तेनैव तन्निर्वचनमित्यर्थः। तदुज्ञेयः—ज्ञेयत्वव्यवहारोज्ञेय इत्यर्थः। तस्येति। तत्तत्स्वभावविशेषस्याननुगमादनुगतव्यवहारो न स्यादित्यर्थः। वस्तुतो व्यवहारेऽपि विशेषो व्यवहर्त्तव्याधीन एवेत्यन्योन्याश्रय इति भावः।

'आश्रितत्वं चान्यत्र नित्यद्रव्येभ्य' इत्याक्षिपति नापीति। समवायेति। समवायस्यासमवेतत्वाच्छब्दस्याश्रितत्वेनाप्रतीतेः, अत एव (१)योग्यताया अभावः कदाचित्तयोरतथाभावादित्यर्थः। साधर्म्यपदस्यार्थं दूषयति येन चेति। येन धर्मेण ज्ञेयत्वादिना स-

न्यायलीलावतीप्रकाशविवृतिः

आश्रितत्वेनेति। अन्यतन्त्रतयाऽन्यविशेषणत्वेनानुपलब्धेरित्यर्थः। तद्योग्यताया इति। स्वतन्त्रतया उपलब्धियोग्यताया इत्यर्थः। अतथाभावात्-शब्दाकाशयोर्विशेषणविशेष्यत्वप्रत्ययाभावादित्यर्थः।

---

(१) तद्योग्यताया—इति विवृतिकारसम्मतः पाठोऽत्र द्रष्टव्यः।

च यत्समानं तयोरेव समानता किं तेन अन्येन वा ? नाद्यः । स्वा- त्मन्यवृत्तेः । नेतरोऽनवस्थितेः । एतेनैव(१) षण्णामिति व्याघातः । धर्माधर्महेतुत्वञ्च जातेरप्यन्वयव्यतिरेकात् । न च व्य-

---

न्यायलीलावतीकण्ठाभरणम्

र्तृत्वं चेति साधर्म्यमाक्षिपति धर्मेति । गान्धर्वादित्यत्र व्यक्तेर्जातेश्च धर्मकर्तृत्वं सममेवेत्यतिव्याप्तिरित्यर्थः । ननु व्यक्तेरवच्छेदकत्वं

न्यायलीलावतीप्रकाशः

धर्मो धर्मी तयोर्धर्मधर्मिणोर्यदि न ज्ञेयत्वं तदा केवलान्वयित्वव्या- घात इति तयोरपि साधर्म्यमेषितव्यं, तथाच किन्तेनैव ज्ञेयत्वेन तदन्येन वेत्यर्थः । स्वात्मनीति । सधर्मणो भावः साधर्म्यमिति विशिष्ट स्ववृत्तावंशत आत्माश्रय इत्यर्थः । अनवस्थितेरिति । तत्रापि धर्मान्तरेण सधर्मत्वादित्यर्थः । एतच्च योग्यतया केवलान्वयिसाधर्म्यपरम् , अ न्येषां स्वात्मन्यवृत्तेः । एतेनैवेति । साधर्म्यपदार्थखण्डनेनैवेत्यर्थः । ज्ञेयत्वादेर्निःप्रतियोगिकत्वेनाभावात्मकत्वाद्भावत्वनियमे तत्रैव तद- वृत्तेश्च षड्बहिर्भावसिद्धेरिति भावः ।

द्रव्यादीनां त्रयाणामेवादृष्टजनकत्वमित्याक्षिपति धर्माधर्म-

न्यायलीलावतीप्रकाशविवृतिः

तयोर्धर्मधर्मिणोरिति । धर्मो ज्ञेयत्वम्, धर्मी ज्ञेयत्वविशिष्टः । साधर्म्यं ज्ञे- यत्वरूपं तदन्येन वा ज्ञेयत्वेनेत्यर्थः । अंशत इति । ज्ञेयत्वविशिष्टज्ञेयत्व- वृत्तेरिति भावः । ज्ञेयत्वे तद्रूपतया शुद्धात्माश्रयोऽपि द्रष्टव्यः । तत्रापि धर्मा- न्तरेणेति । यद्यपि ज्ञेयत्वान्तरं तद्विशिष्टेऽपि तस्य वृत्तावेवात्माश्रय इति ज्ञेयत्वान्तरं केवलान्वयि वाच्यमेव तत्रापीत्यर्थः । ननु साधर्म्यमात्रे नेदं दूषणं स्वविशिष्टे स्वस्मिन्वा स्ववृत्त्यभावेऽपि क्षत्यभावादत आह एतच्चेति । इयं च व्याख्या केवलान्वयिसाधर्म्यस्य सन्निहितत्वात्तथा- क्षेपपरत्वमेव मूलस्येत्यभिप्रायेण प्रकाशकृता कृता । वस्तुतः साधर्म्यं समानधर्मणो भाव इति यत्किञ्चिदेव साधर्म्यं तद्धर्मविशिष्टे धर्मा- न्तरविशिष्टे वा ? आद्ये आत्माश्रयः, द्वितीयेऽधिकरणतावच्छेदकीभूत धर्मद्वयापि साधर्म्यतया तदनुरोधेनापि धर्मान्तरस्वीकारेऽनवस्थि- तिरिति मूलार्थ इति प्रतिभाति । ज्ञेयत्वादेरिति । भावरूपं यदेव साधर्म्यं

(१) एवकारो नास्ति मा० पुस्तके ।

कत्वावच्छेदेन कृतार्थता, विपरीतापत्तेः। न च व्यक्तिग्राशस्त्याभिधानाद्व्यक्तिरित्येतदेव प्राप्तम्, जातेरप्यभिधानात्।

सामान्यादेश्च सत्तायोगित्वान्न सामान्यत्वम्(१)। सामान्ये च सामान्यत्वम्। नित्यत्वे सति अनेकसमवेतत्वं तदिति चेन्न। द्रव्येऽपि गुणवत्त्वसत्त्वाद्द्रव्यत्वापलापात्। मनसि च न मन-

---

न्यायलीलावतीकण्ठाभरणम्

जातेर्नतु धर्महेतुत्वमित्यत आह नचेति। जातिरेव धर्महेतुर्व्यक्तिस्तत्रावच्छेदिकेत्येव किं न स्यादित्यर्थः। नतु घटोऽग्निदाने फलाधिक्यश्रवणात् व्यक्तिरेव तन्त्रमित्यत आह नचेति। तत्रापि जातिभानावश्यकतया नेदमपि नियामकमित्यर्थः।

सामान्यादीनां त्रयाणामसामान्यविशेषवत्त्वं यत् साधर्म्यमुक्तं तदाक्षिपति सामान्यादेश्चेति। किञ्च सामान्यमिदं सामान्यमिदमित्यनुगतप्रत्ययानुरोधात् सामान्यमपि सामान्ये जातिरस्तीत्याह सामान्ये चेति। सामान्यत्वं न जातिः किन्तूपाधिसामान्यमित्यत आह नित्यत्वे सतीति। तर्हि द्रव्यत्वमपि जातिर्न स्यात् गुणवत्त्वेनैवाऽन्यथासिद्धेरित्याह द्रव्येऽपीति। पृथिव्युदकदहनपवनमनसामनेकत्वापरजातिमत्त्वे इत्याक्षिपति मनसि चेति। यद्वा उपाधिना अन्यथासिद्धिश्चे-

न्यायलीलावतीप्रकाशः

कर्तृत्वं चेति। जातिविशिष्टस्य द्रव्यादेरदृष्टजनकत्वश्रवणाद्विशिष्टजनकत्वे च विशेषकतया व्यक्तेरपि तथात्वापत्तेरित्यर्थः। जातेरपीति। विशिष्टाभिधाने विशेषणस्याप्यभिधानादित्यर्थः। सामान्यादेरिति। सवि-

जात्यादित्रयस्यासामान्यवत्त्वमित्याक्षिपति सामान्यादेरिति। सविति प्रतीतेरविशेषादित्यर्थः। सामान्ये चेति। इदं सामान्यमिदं सामान्यमित्यनुगतप्रतीतेरविशेषादित्यर्थः। नित्यत्वे सतीति। उपाधिभिरेव प्रतीतेरन्यथासिद्धत्वादित्यर्थः। उपाधिसत्त्वेन जातेर्निराकरणे दोषान्तरमाह मनसि चेति। न च वेगवत्त्वमित्यत्र मनसीत्यनुषज्यते। अदृष्टेति। अदृष्टवदात्मसंयोगस्य दहनादौ क्रियाजनकत्वावधारणादित्यर्थः।

(१) नासामान्यवत्त्वमिति पाठोऽप्युचितः किन्तु पुस्तकद्वयेऽप्येवोलम्भादयमेव मुद्रितः कथंचिद्योजनीयः।

स्त्वं, सुखाद्युपलब्धीन्द्रियत्वेनैवान्यथासिद्धेः । न च वेगवत्त्वम्, अदृष्टसम्बन्धेनैव क्रियोपपत्तेः । (अन्यथा स्पर्शस्याप्यनुमानापत्तेः(१) । ) परत्वापरत्वे च द्रव्यत्वान्नित्ये गगनादावपि । भूतत्वं च गुणत्ववत्सामान्यम् । न च व्यञ्जकाभावः, बाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्तायास्तत्त्वात् । न चैवं मूर्तत्वसिद्धौ जातिसङ्करापत्तौ तुल्ययोगक्षेमयोर्द्वयोरप्यभावः । गुणत्वस्यापलापापत्तेः ।

---

न्यायलीलावतीकण्ठाभरणम्

तत्राह नचेति । क्षितिजलज्योतिरनिलमनसां क्रियावत्त्वमूर्तत्वपरापरत्ववेगवत्त्वादीत्यत्र मनसि वेगवत्त्वं साधर्म्यमाक्षिपति न च वेगवत्त्वमिति । मनसीत्यनुषज्यते । अन्यथा मूर्तत्वेन मनसि स्पर्शवत्त्वमपि स्यादित्याह अन्यथेति । परत्वापरत्वस्यातिव्यापकत्वमाह परत्वेति । यद्यपि संयुक्तसंयोगाल्पीयस्त्वभूयस्त्वबुद्धिर्दैशिकयोर्बहुतरतपनपरिस्पन्दान्तरितजन्मत्वबुद्धिश्च कालिकयोः परत्वापरत्वयोर्जनिका, तथाच पवनादौ तदसम्भवः, तथापि परिमाणवत्त्वात्तदापादनं यथाकथञ्चित् इति द्रष्टव्यम् । पृथिव्यादीनां पञ्चानां भूतत्वेन्द्रियप्रकृतित्वबाह्यैकैकेन्द्रियग्राह्यविशेषगुणवत्त्वानीति यदुक्तं तत्राह भूतत्वमिति । सामान्यमिति । जातिरित्यर्थः । गुणत्वस्येति । संयोगासमवायिकारणतया

न्यायलीलावतीप्रकाशः

अन्यथेति । स्पर्शसमानाधिकरणस्यैव वेगस्यान्यत्र क्रियाजनकत्वावधारणात् स्पर्शोऽपि मनसि सिध्येदिति भावः । परत्वेति । अन्यथा परिमाणाद्यपि तत्र न सिध्येदिति भावः । ग्राह्येति । ग्राह्यजातीयविशेषगुणवत्ताया इत्यर्थः । मूर्तत्वेति । क्रियावत्त्वस्यावच्छिन्नपरिमाणवत्त्वस्य वा तद्व्यञ्जकस्य सत्त्वादित्यर्थः । गुणत्वस्येति । मूर्तत्वं विना भूतत्वमाकाशे भूतत्वं च विना मूर्तत्वं मनसीति परस्परात्यन्ताभावसमाना-

न्यायलीलावतीप्रकाशविवृतिः

तद्यदि षडन्तर्गतं तदात्माश्रयभयेन तत्रैव तद्वृत्तेः षण्णामिदं साधर्म्यमिति व्याघात इति भावः ।

---

(१) ( ) चिह्नान्तर्गतः पाठो मा० पु० नास्ति ।

न चाकाशं न द्रव्यत्वातिरिक्तापरसामान्यसम्बन्धि, एकत्वात् दिगादिवदिति वाच्यम्। व्यावर्त्यद्रव्यत्ववत्तासिद्धौ बाधात्; अन्यथा तु तद्व्यवच्छेदवैयर्थ्यात्। अव्यवच्छेदे द्रव्यत्वासिद्धौ सिद्धान्त(१)विरोधात्।

दिक्कालयोश्च न सर्वनिमित्तकारणत्वम्, उपाधेरेवान्वयव्यतिरेकित्वात्, तदवच्छेदकत्वस्य गगनादिसाम्यात्। सुखा-

---

न्यायलीलावतीकण्ठाभरणम्

कर्म्मणि संयोगे च या जातिस्तया परापरभावानुपपत्त्या गुणत्वमपि न सिध्येत, तां जातिं विना गुणत्वं गुणादौ सा च गुणत्वं विना कर्म्मणि संयोगे च द्वयोः साङ्कर्य्यमित्यर्थः। भूतत्वस्य जातित्वे बाधकं मन्वानः शङ्कते नचेति। व्यावर्त्येति। द्रव्यत्ववत् विभुत्वमपि प्रमाणसिद्धमाकाशे तथाच तदभावसाधने बाध इत्यर्थः। अन्यथा त्विति। द्रव्यत्वासिद्धावि-त्यर्थः। अव्यवच्छेद इति। द्रव्यत्वातिरिक्तेति विशेषणादान इत्यर्थः।

दिक्कालयोः पञ्चगुणत्वं सर्वोत्पत्तिमन्निमित्तकारणत्वं चेति साधर्म्यमाक्षिपति दिक्कालयोरिति। उपाधेरेवेति। नित्यविभुतया न तयोरन्वयव्यतिरेकाविति तदुपाधिवर्त्तमानत्वप्राचीत्वादीनामेव ताविति तेषामेव कारणत्वमित्यर्थः। ननु तदुपाधेरवच्छेदकतया तयोरेव कारणत्वं पर्य्यवस्येदित्यत आह तदवच्छेदकत्वस्येति। तथाच गगनस्यापि

न्यायलीलावतीप्रकाशः

धिकरणजात्योरेकत्र पृथिव्यादौ सङ्करः स्यादिति विनिगमकाभावादु-भयोरप्युपाधित्वमिति यदि, तदा संयोगासमवायिकारणत्वेन कर्मसं-योगवृत्त्येकजातिसिद्धौ गुणत्वेन परापरभावाऽनुपपत्त्या विनिगमका-भावद्गुणत्वमपि न सिद्ध्येदित्यर्थः।

उपाधेरेवेति। अन्वयव्यतिरेकगम्यं हि कारणत्वं दिक्कालयोश्च विभुत्वनित्यत्वाभ्यां न दैशिकः सामयिकश्चाभाव इति न तयोः का-रणत्वं, किन्तु तदवच्छेदकानामुपाधीनामेव तदित्यर्थः। नन्ववच्छेदका-न्वयव्यतिरेकाभ्यामेवावच्छेद्यस्य कारणत्वं ग्राहिष्यते, न चातिप्रसङ्गो-

---

(१) अव्यवच्छेदभेदे सिद्धान्तेति प्रा० पु० पाठः।

दिष्वात्मादिबन्दीग्रहस्यात्यन्ताभावव्यतिरेकमुपादायैवोन्मोच-
नात् । सामग्रीकादाचित्कत्वस्य पूर्वपूर्वसामग्र्यनुविधानात् । आ-

---

न्यायलीलावतीकण्ठाभरणम्

कारणत्वादित्यर्थः । ननु नित्यविभुतया चेन्नान्वयव्यतिरेकौ तदा सु-
-खादिकं प्रति नात्मनोऽपि कारणत्वं स्यादित्याह सुखादिष्विति । आत्मै-
वात्यन्ताभावव्यतिरेकस्तथाच धर्म्मिग्राहकमानसिद्धमेव सुखादिकं
प्रत्यात्मनः कारणत्वमिति न तदवच्छेदेन शरीरादिनाऽन्यथासिद्धि-
रिति भावः । दिक्कालयोस्तु धर्म्मिग्राहकमानेन परत्वापरत्वेऽपि
सर्वोत्पत्तिनिमित्तकारणत्वमिति भावः । आत्मभिन्ने न सुखादिकं कि-
न्त्वात्मनीति समवायिकारणता अन्योऽन्याभावरूपव्यतिरेकगम्यैव ।
नन्वेवं सुखादीनां कादाचित्कत्वं प्रादेशिकत्वं च भज्येत आत्मनो
नित्यविभुत्वादित्यत आह सामग्रीति । सामग्रीकादाचित्कत्वादेव सु
खादीनां कादाचित्कत्वमित्यर्थः । सामग्रीकादाचित्कत्वमपीतरसाम-

न्यायलीलावतीप्रकाशः

ऽवच्छेद्यावच्छेदकभावस्य नियामकत्वादित्यत आह तदवच्छेदकत्वस्येति ।
तथासति गगनाद्यवच्छेदकदण्डान्वयव्यतिरेकाभ्यां अवच्छेद्यस्य ग-
गनस्य कारणत्वापत्तेरित्यर्थः। नन्वेवमात्मनोऽपि ज्ञानादावकारणता-
यामुपाधेरेव शरीरादेः कारणत्वं स्यादत आह आत्मादीति । अत्यन्ताभाव
व्यतिरेको धर्मिस्वरूपम्, तथाच धर्मिग्राहकमानेनैवात्मनो ज्ञानकार-
णत्वमित्यर्थः । वस्तुतस्तु समवायिकारणत्वं न संसर्गाभावात्मकव्य-
तिरेकगम्यं निमित्तकारणसाधारण्यात्, किन्त्वन्योन्याभावात्मक-
व्यतिरेकगम्यं, स चात्र सुलभ एवेति तत्त्वम् । ननु ज्ञानादावात्मनः
कारणत्वे कादाचित्कत्वं न स्यात्, न च सामग्रीकादाचित्कत्वात्त-
था, तस्या अपि कादाचित्कत्वेऽनुयोगतावदवस्थ्यादित्यत आह
सामग्रीति । सामग्र्यधीनं कार्यं, तस्याश्च कादाचित्कत्वं सामग्री-

न्यायलीलावतीप्रकाशविवृतिः

परमाण्वादावतिव्याप्तिभयादाह प्राग्नेति । तथाच धर्मिग्राहकेति ।
दिक्कालयोः परत्वापरत्वकारणतया सिद्धेर्न धर्मिग्राहकमानसिद्धं
सर्वकारणत्वमिति भावः । ननु अन्वयव्यतिरेकाभावेऽपि चे-

धारत्वस्य सम्बन्धभेदत्वेनाऽन्यथासिद्धत्वात् , निमित्तताप्रवेशे तु तद्भेदकमानाभावेन व्यवहारानुपपत्तेः । आधारत्वात्तदनुमानस्याऽन्यथासिद्धिशङ्कादूषितत्वात् । पटादौ च पीठाद्याधारत्वे नि-

---

न्यायलीलावतीकण्ठाभरणम्

श्रीकादाचित्कत्वाधीनेति प्रामाणिकीयमनवस्थेति भावः। नन्विहेदानीं जात इति दिक्कालयोरधिकरणत्वं गृह्यतेऽधिकरणं च कारकमेवेत्यत आह आधारत्वस्येति । निमित्ततेति । आधारत्वस्य निमित्तकारणतागर्भत्वे मानाभावादित्यर्थः। नन्वाधारत्वादेर्निमित्तत्वं तयोरर्थसाम्यत इत्यत आह आधारत्वादिति । सम्बन्धितामात्रेणैवाधारत्वसिद्धौ निमित्ततायाअतन्त्रत्वादित्यर्थः । व्यभिचारमप्याह पटादाविति । आधारत्वमप्युपाधीनामेव न तु तयोरपीति भावः । नवानां परिमाणवत्त्वं संख्यावत्त्वं च साधर्म्यमाक्षिपति गगनादौ चेति । हस्तवितस्त्याद्यवच्छेद-

न्यायलीलावतीप्रकाशः

कादाचित्कत्वात , न चानवस्था अनादित्वादित्यर्थः । नन्विहेदानीं जात इत्याधारत्वं दिक्कालयोः प्रतीयते, तच्च कारणत्वगर्भमत आह आधारत्वस्येति । निमित्ततेति । दिक्कालवृत्त्याधारताया निमित्तविशेषत्वे मानाभावात् सर्वनिमित्तताव्यवहारानुपपत्तेरित्यर्थः । नन्विह तन्तुषु पट इत्याधारस्य निमित्तत्वाद्दिक्कालयोरपि तथात्वमनुमेयमित्यत आह आधारत्वादिति । विपक्षे बाधकाभावात्साध्यं विनापि पक्षे हेतुसम्भवादित्यर्थः । अनैकान्तिकत्वमाह पटादाविति । पक्षातिरिक्ते साध्यं विना हेतोः सत्त्वादित्यर्थः । वस्तुत उपाधीनामेवाधारत्वं प्रती-

न्यायलीलावतीप्रकाशविवृतिः

दात्मनः कारणत्वं तदा बाधकाभावादिहेदानीं जात इति प्रतीतेस्तयोः कारणत्वं सिद्ध्येदेवेत्यरुचेराह वस्तुतस्त्विति । सर्वनिमित्तेति । निमित्तताघटितसर्वाधारताव्यवहारानुपपत्तेरित्यर्थः । पक्षे हेतुसम्भवादिति । उपाधिवदप्रयोजकत्वेनाप्यभिहितस्य व्यभिचारसंशयस्य पक्षीयस्यादोषत्वादिति भावः । अनैकान्तिकत्वं—निश्चितानैकान्तिकत्वम्, अत एवाह पक्षातिरिक्त इति । आधारत्वप्रतीतेरपि न कारणत्वमित्युक्तमधुना तु प्रतीतिरेव तादृशी नेत्याह वस्तुत इति।

मित्तनिमित्तिभावाभावात् । गगनादौ च न महत्त्वम् , अवच्छे-
दोपहितव्यक्तिव्यङ्ग्यत्वात्परिमाणत्वस्य, गगनमपरिमितमिति व्य-
वहाराच्च । न चैकत्वम् , स्वरूपाभेदेनाप्युपपत्तेः । न च संस्का-
रत्वम् , मानाभावात् । गोशब्दवाच्यनानाजातीयवस्तुवदनुगत-
प्रत्ययासिद्धेः, अभिधानस्यापि तथैवोपपत्तेः, अन्यथा तत्रा-
प्यनुमानापत्तेः । न च तत्र व्यवस्थापकाभावोऽत्र तूत्पादकस-

---

न्यायलीलावतीकण्ठाभरणम्

व्यङ्ग्यत्वात् परिमाणत्वजातेरित्यर्थः । द्रव्यत्वाच्च न तदनुमानमप्रयो-
जकत्वादिति भावः । न चैकत्वमिति । गगनादावित्यनुषज्यते ।
वेगस्थितिस्थापकभावनासु संस्कारत्वं न जातिरित्याह नचेति । जा-
तिरिति शेषः । गोशब्दवाच्येषु यथा नानुगतप्रत्ययस्तथात्रापीत्यर्थः ।
संस्कारशब्दप्रयोगस्त्रिषु कथमित्यत आह अभिधानस्येति । अभिधानत-
स्त्रे यद्येकजातीयत्वं तदा वागादिष्वपि गोत्वमेवं स्यादित्याह—अन्य-
थेति । ननु कर्मवता जनितो वेगः कर्मवदेव शरीरं जनयति
यद्देशसंयुक्तेन तदन्तशृङ्गशाखादिना जनितः स्थितिस्थापकस्तद्दे-
शसंयोगवन्तमेव तं करोति ज्ञानवता आत्मना जनिता भावना ताद-
शमेवात्मानं जनयत्युत्पादसजातीयावस्थोत्पादकत्वमिह यथा व्य-
वस्थापकं न तथा वागादिष्वपि गोत्वस्येत्यत आह नचेति । तर्हि

न्यायलीलावतीप्रकाशः

यते न दिक्कालयोः । गगनादाविति । न च द्रव्यत्वेन परिमाणानुमानं,
विपक्षे बाधकाभावादिति भावः । न चैकत्वमित्यत्र गगनादावित्यनुष-
ज्यते । स्वरूपाभेदेनेति । अत एव गुणादावप्येकत्वव्यवहार इति भावः ।
वेगादिषु संस्कारत्वं जातिरिति दूषयति नचेति । गोशब्देति । गोशब्द-
वाच्येषु गवादिषु यथाऽनुगतप्रत्ययाभावः तद्वदत्रापीति भावः ।
अभिधानस्येति । वेगादिषु संस्कारपदप्रयोगस्य नानार्थत्वेनाप्युपपत्तेरि-
त्यर्थः । उत्पादकेति । यदवस्थेन धर्मिणा वेगादयो जन्यन्ते तदवस्थमेव
धर्मिणं ते जनयन्ति, तद्यथा कर्मवता जनितो वेगः कर्मवन्तमेव धर्मिणं

जातीयावस्थोत्पादकत्वमिति वाच्यम्। शब्देऽपि तत्सत्त्वात्। न चायं नियमोऽपि(१), ज्ञाने तदभावात्। विषयप्रवणत्वमिति चेन्न। इच्छादावपि तत्सत्त्वात्। स्वाभाविकमिति चेत्। न। स्मृतावभावात्(२)।

---

न्यायलीलावतीकण्ठाभरणम्

शब्दमादाय सा जातिः सिध्येदित्याह शब्देऽपीति। न चायमिति। जातौ व्यवस्थापकनियमोऽपि नास्तीत्यर्थः। व्यभिचारमाह ज्ञान इति। व्यवस्थापकमन्तरेणैव ज्ञानत्वजात्यभ्युपगमादित्यर्थः। तत्रापि व्यवस्थापकमस्त्येवेति न व्यभिचार इत्याह विषयप्रवणत्व इति। एवंसति इच्छापि ज्ञानं स्यादित्याह इच्छादावपीति। इच्छादौ ज्ञानोपाधिकत्वं विषयप्रवणत्वं न तु स्वाभाविकं तादृशं च विवक्षितमिति शङ्कते स्वाभाविकमिति। तर्हि स्मृतिरपि ज्ञानं न स्यात् स्मृतेः पूर्वानुभवोपाधिकविषयप्रवणत्वादित्याह—स्मृताविति। अपरव्याख्यानमन्यत्।

न्यायलीलावतीप्रकाशः

शब्दवताकाशेनेति। तथाचोक्तनियामकबलेन संस्कारत्वस्य सर्वसाधारण्यापत्तिरित्यर्थः। अनुभववताधर्मिणेति। न च ज्ञानत्वमादाय साजात्यमस्त्येवेति वाच्यम्। प्रमेयत्वादिकमादाय सर्वत्र तस्य वक्तुं सुकरत्वादिति भावः। तादृशीति। विषयप्रवणज्ञानरूपधर्मवताजनितेच्छा वि-

न्यायलीलावतीप्रकाशविवृतिः

जनयति, विशिष्टज्ञानवता जनितः संस्कारः स्मृत्यात्मकविशिष्टज्ञानवन्तमेवात्मानं जनयति, तद्देशसंयुक्तेन जनितः स्थितिस्थापकः पुनस्तद्देशविशिष्टमेव धर्मिणं जनयतीत्यर्थः। शब्देपीति। शब्दवता आकाशेन जनितः शब्दः पुनः शब्दवन्तमेवाकाशं कुरुत इत्यर्थः। न चायमिति। संस्कारे उत्पादकसजातीयावस्थोत्पादकत्वनियमो ज्ञाने इति अनुभववता धर्मिणा जनिता भावना, न च साऽनुभववन्तमेव करुत इत्यर्थः। विषयेति। विषयनिरूप्यधर्मवता जनिता भावना तादृशस्मृतिमन्तं कुरुत इत्यर्थः। इच्छादावपीति। तादृशेन जनितेच्छापि तादृशीति तत्साधारणी सा जातिः स्यादित्यर्थः। स्वाभाविकमिति।

---

(१) अपिशब्दो नास्ति मा० पुस्तके।
(२) स्मृतेरप्यभावात् इति प्रकाशसंमतोऽप पाठो द्रष्टव्यः।

अदृष्टत्वं च संस्कारत्ववत् । धर्माधर्मौ नोभयवृत्तिसामान्यव-न्तौ विरोधिगुणत्वात् सुखदुःखवदिति चेन्न । सत्तागुणत्वादि-सत्त्वे बाधात् । उभयमात्रवृत्तिसामान्यनिषेधे च गन्धेन व्यभि-चारात् । शब्दादौ चैकत्वम् । न च गुणत्वात्तद्बाधः, अध्यक्ष-स्यानन्यथासिद्धेः द्रव्ये द्रव्यवत् । अत एव नानवस्थितिः, अ-

---

न्यायलीलावतीकण्ठाभरणम्

अदृष्टत्वं च जातिः स्यादिति शेषः । उभयवृत्तीति । उभयवृत्तिजा-तिमन्तावित्यर्थः । गन्धेनेति । सौरभासौरभमात्रवृत्तिगन्धत्वजातिमता गन्धेनेत्यर्थः । एकत्वसंख्यां शब्दादावापादयति शब्दादाविति । ननु गु-णत्वात्तत्र संख्याविरहः साधनीय इत्यत आह नचेति । अनन्यथासि-द्धप्रत्यक्षादनुमानमेव बाधितमित्याह अध्यक्षस्येति । किञ्च यथा द्रव्ये द्रव्यं तथा गुणे गुणः स्यात्, अन्यथा न द्रव्यवत् द्रव्यत्वादिवद् गगनवदित्यपि स्यात् प्रत्यक्षमुभयत्र समानमिति भावः । ननु गुणे गुणाङ्गीकारे तत्र तत्रापीत्यनवस्था स्यादित्यत आह अत एवेति । द्र-व्यदृष्टान्तादेवेत्यर्थः । रूपादीनामेव विशेषगुणत्वमित्यतिव्याप्त्या

न्यायलीलावतीप्रकाशः

इच्छायां तु कारणज्ञानोपाधिकं तदित्यर्थः । स्मृतेरिति । स्मृतेरपि विषयप्रवणत्वं न स्वाभाविकमिति तत्राप्युक्तं निमित्तं नेति तद्धेतौ भावनायामपि जातिर्न स्यादित्यर्थः ।

अदृष्टत्वं चेति । सामान्यं स्वीकर्त्तव्यं तुल्ययुक्तिकयेति शेषः । गन्धे-नेति । सुरभ्यसुरभिगन्धमात्रवृत्तिगन्धत्वाक्रान्तेन सुरभ्यसुरभिगन्धे-नेत्यर्थः । धर्माधर्मोभयमात्रवृत्तिसामान्यनिषेधे साध्ये चाप्रसिद्धवि-शेषणत्वमिति भावः । शब्दादाविति । द्रव्यवदेकत्वप्रतीत्यविशेषादित्य-

न्यायलीलावतीप्रकाशविवृतिः

षयप्रवणप्रयत्नवज्ज्ञानिकेति तत्साधारणी जातिः स्यादित्यर्थः । इच्छा-यान्त्विति । यद्यपि स्वजनकस्वजन्ययोः सादृश्यं प्रकृतमिति प्रयत्न-स्येति युज्यते, तथापीच्छायास्तथात्वे यत्नस्यापि तथात्वमित्यभिस-न्धायैतदुक्तम् । न स्वाभाविकमिति । जनकीभूतज्ञानोपाधिकत्वादि-ति भावः ।

वस्थितिदर्शनात् । परत्वापरत्वगुरुत्ववेगनैमित्तिकद्रवत्वादीनां च रूपरसगन्धस्पर्शस्वाभाविकद्रवत्ववत् किं न विशेषगुणत्वम् । परामृष्यमाणलिङ्गवत् सुखमपि सुखं जनयतु । स्पर्शश्च शीतः क-ष्णस्य कारणम् । असमवायिकारणत्वं चादृष्टस्य सुखदुःखे प्रति, समस्तात्मविशेषगुणोत्पत्तावसामर्थ्येऽपि विशेषव्यवस्थितिसम्भ-

---

न्यायलीलावतीकण्ठाभरणम्

आक्षिपति परत्वेति । विशेषगुणेषु व्यावर्त्तकलक्षणाभावादित्यर्थः । सु-खस्य सजातीयारम्भकत्वमाक्षिपति सुखमपीति । पुत्रसुखज्ञानाद् यद्यपि पितरि सुखं तथापि ज्ञायमानात् सुखादेव तत् स्यादित्यर्थः । उ-ष्णेतरस्पर्शस्य सजातीयमात्रारम्भकत्वमाक्षिपति स्पर्शश्चेति । अदृष्टं निमित्तकारणमात्रमित्याक्षिपति असमवायीति । कार्य्यैकार्थसमवायात् सुखदुःखे प्रति तयोरसमवायिकारणत्वं स्यात् । प्रत्यासत्त्यविशेषेऽपि यथा ज्ञानादिकं प्रति नासाधारणनिमित्तकारणत्वं तथाऽसमवायिका रणत्वमपि न स्यादित्याह समस्तेति ।

न्यायलीलावतीप्रकाशः

र्थः । अतएवेति । अनवस्थायां च प्रमाणाभावो मूलमित्यर्थः । परत्वेति । परत्वादिव्यावृत्तविशेषगुणलक्षणाभावादित्यर्थः । सुखं न सजाती-यारम्भकमित्याक्षिपति सुखमपीति । ज्ञायमानमिति शेषः । अदृष्टं स-र्वोत्पत्तिमन्निमित्तकारणमित्याक्षिपति असमवायीति । समवायिकारणप्र-त्यासन्नमसमवायिकारणं तथाभूतं चादृष्टमिति भावः । नन्वेवमशे-षगुणापेक्षया तस्य तथात्वापत्तिरत आह समस्तेति । प्रत्यासत्त्यविशे-

न्यायलीलावतीप्रकाशविवृतिः

सत्तागुणत्वादिसत्त्व इति मूलम् । सत्तागुणत्वे ये आदी व्यापके रू-परत्वाद्यपेक्षयेत्यर्थः । अन्यथादिपदसङ्ग्राह्याभावात् । अनवस्थायां चेति । तथाच गुणे गुणानवस्थानं न दोषाय प्रयोगिकत्वादिति भावः । अदृष्टं सर्वोत्पत्तीति । निमित्तकारणताया असमवायिकारणान्यत्वघटितत्वादि-ति भावः । नन्वेवमशेषेति । समवायिकारणप्रत्यासत्त्यविशेषे पूर्ववत्त्वे-दृष्टव्यक्तीनां सर्वान्प्रत्यसमवायिकारणत्वापत्तिरित्यर्थः । प्रत्या-सत्त्यविशेषेपीति । सत्यां कारणतायामसमवायिकारणत्वं तस्यां

द्वान्निमित्ततावदिति सर्वं समाकुलमिति चेत् ।

नैवम् । सत्तासम्बन्धबुद्धि(१)स्तावन्नाभाव इत्यध्यक्षसिद्धम् । न चेयमनारोपिता, समवाये तदभावात्, तथा चैवंविधारो-

---

न्यायलीलावतीकण्ठाभरणम्

अस्तित्वमुपपादयति सत्तेति । नचेयमिति । अनारोपितत्वेन न विशेषणीया किन्तु बुद्धिमात्रमभिमतमित्यर्थः । अनारो-पितत्वेऽनिष्टमाह समवाय इति । सामान्यविशेषयोः सत्तासमाना-धिकरण्यादपि तद्बुद्धिसम्भवात् समवायमात्रग्रहणम्; उपल

न्यायलीलावतीप्रकाशः

क्षेऽपि असमवायिकरणत्वे स्वभाव एव नियामक इत्यर्थः ।

सत्तासम्बन्धेति । ननु सत्तासम्बन्धबुद्धेः परकीयायाः स्वबुद्धे-रप्यतीतानागताया अभावे अभावग्रहे योग्यानुपलम्भो नास्ति, न च वर्त्तमाना स्वकीया या तादृशी बुद्धिस्तदभावो विवक्षितः, भावेऽपि क्वचित्तदभावात् सर्वस्य भावस्य सर्वै-रज्ञानात् । नैवम्, तत्रैव सद्बुद्धिर्यद्विषयत्वेन साऽनुव्यवसीयते अभावविषयत्वेन च सा नानुव्यवसीयत इत्यर्थात् । इयं— सत्तासम्बन्धबुद्धिः । समवाय इत्युपलक्षणम्, सामान्यविशेष-योरपीति द्रष्टव्यम् । तदभावात्—अनारोपितसत्तासम्बन्धबुद्ध्यभा-

न्यायलीलावतीप्रकाशविवृतिः

च स्वभाव एव नियामक इत्यर्थः ।

अभावविषयत्वेन चेति । यद्यपि परकीया बुद्धिरभावविषयत्वेन परे-णानुव्यवसीयत इत्यपि नाध्यक्षसिद्धं, स्वीया बुद्धिश्च किञ्चिद्भा-वविषयत्वेनापि नानुव्यवसीयत इत्यव्याप्तिः, तथापि स न प्रमेय इत्यादिसामान्यप्रकारकबुद्धिर्यथा सकलभावविषयत्वेनानुव्यवसीय-ते न तथा भावादिसमतया तस्य बुद्धिस्वरूपत्वादित्याशयः । ए-वञ्च यद्यपि सत्तासम्बन्धबुद्धिविषयत्वमिति यथाश्रुतमूलमेव सम्यक्, तथापि तत्रैव प्रमाणत्वेनानुव्यवसायपर्यन्तमुक्तम् । न चेयमनारोपि-तेति मूलम् । अनारोपितरूपा प्रकृते न विवक्षितेत्यर्थः । अनारोपिते-

---

(१) बुद्धिविषयत्वं तावदिति विवृतिकारानुमतः पाठोऽत्र द्रष्टव्यः ।

पस्याभावो विरोध्येव, न यत्रैतादृशसंवेदनं(१) तत्रैवान्वय-

न्यायलीलावतीकण्ठाभरणम्

क्षणतया वा। कथं विरोधीत्यत आह न यत्रेति। विरोधाभावे तदु-

न्यायलीलावतीप्रकाशः

वात्। एतावता यत्सिद्धं तदाह तथाचेति। न यत्रेति। यत्राभावे एता-
दृशं सत्तासम्बन्धविषयकं सम्वेदनं नास्ति सोऽभावः सत्तासम्बन्ध-
धीविरोध्येव। अन्वयेति। ननु भावनिष्ठारोपेऽभावनिष्ठानारोपे वा अनु-
गतभावत्वाभावत्वधर्मग्रहं विना अन्वयव्यतिरेकयोः कथमवगमः।
नैवम्। तृणारणिमणिन्यायेन व्यक्तावन्वयव्यतिरेकग्रहसम्भवात्। तेन
सत्तासम्बन्धज्ञानविरोधिप्रकारशून्यत्वं भावत्वम्, यन्निष्ठतया यस्मिन्
धर्मे भासमाने यन्निष्ठा सत्ताप्रकारिका विषयता न भवति स सत्ता-
भानविरोधी प्रकारः। यद्वा सत्ताविशेष्यत्वं भावत्वम्, यथात्मनि ज्ञानं
समवायेन विशेषणं विषये च स्वरूपेण, तथा द्रव्यादित्रिके समवायेन
सत्ता विशेषणं सामान्यादौ स्वरूपेण सत्प्रत्ययस्योभयत्र तुल्यत्वात्,
सामान्यादौ सत्तासमवाये बाधकादिति सम्प्रदायविदः। समवायवृ-
त्तिरेव भावत्वम्, सा द्रव्यादित्रिके आधारतारूपा सामान्यविशेषयोः
प्रतियोगित्वरूपा समवाये च स्वरूपमेव। नचैवमननुगमः, वृत्तीनां
भेदेपि समवायस्यैकत्वात्। यद्यपि यथाकथञ्चिदभावेऽपि समवाय-

न्यायलीलावतीप्रकाशविवृतिः

ति। अनारोपितसत्तासम्बन्धबुद्धीत्यर्थः। विरोधित्वं सत्ताविरहव्या-
प्यत्वेन ज्ञायमानस्य वा विवक्षितं, स्वरूपेणैव वा ज्ञायमानस्य?
आद्ये सामान्यादावतिव्याप्तिरन्त्येऽसम्भवः, तमः सदितिप्रतीति-
दशायामपि प्रागभावादिज्ञानसत्त्वादित्यरुचेराह सत्तेति। परम्परा-
सम्बन्धविषयत्वेन भ्रमत्वेन वा सामान्यादौ सत्प्रत्ययस्योपप-
त्तेर्न स्वरूपसम्बन्धे समानमन्यथा तमः सदितिप्रतीत्यभावेऽपि
सत्तायाः स्वरूपसम्बन्धकल्पनेऽतिप्रसङ्गादवस्थ्यादित्यरुचिमाविः-
ष्करोति सम्प्रदायविद इति। आधारत्वप्रतियोगित्वाभेदात्मकान्यतमसं-
म्बन्धेनेति शेषः। अत्रापि सम्बन्धानामन्यान्यत्वेनानुगमे द्रव्यादिना-

(१) यत्रैवं संवेदनमिति प्रा० पु० पाठः।

व्यतिरेकसिद्धेः। तथा चैतदेव साधर्म्यं सैव च बुद्धिस्तदालम्बनसंवेदिका, विरोधात्। न च बुद्ध्यन्तरेण व्यवस्था,

---

न्यायलीलावतीकण्ठाभरणम्

बुद्धेरभावप्रसङ्गात्। एतदेवेति। सत्तासम्बन्धाद् विषयत्वं सत्ताप्रकारकज्ञानविषयत्वम्, सत्ताबुद्धिविरोधिप्रकारानवच्छिन्नत्वं वा भावत्वं तदेवास्तित्वमित्यर्थः। यद्वा सत्ताविशेष्यत्वं भावत्वं समवाय एवानुगतभावत्वं, स च द्रव्यादित्रये आधेयतया सामान्यविशेषयोः प्रतियोगितया। ननु न सा बुद्धिः स्वस्य गोचरयति बुद्ध्यन्तरेण च तद्ग्रहेऽनवस्थेति कथं तमादायैतत्साधर्म्यं स्यादित्यत आह नचेति। प्रमेयं वाच्यमितिव्याप्तिग्रहे यथा सामान्यलक्षणया स्वस्यापि वाच्यत्वं

न्यायलीलावतीप्रकाशः

सम्बन्धोऽस्ति. तथाप्युक्तक्रमेण नियमः। यद्वा द्रव्यादिषडन्यतमत्वं भावत्वम्। यद्वा स्वभावभेद एव भावत्वम्, स च वैधर्म्यभेदः, वैधर्म्यं चाभावावृत्तिर्द्रव्यत्वघटत्वादिधर्म इति वयम्। साधर्म्यमिति। षण्णामिति शेषः। नन्वस्तीतिबुद्धिः स्वस्यापि अस्तीतिबुद्धिविषयत्वं न गोचरयति अनवस्थापत्तेः, तथाच तस्याः बुद्धेः कथमेतत्साधर्म्यमित्याह सैव चेति। यथा प्रमेयत्ववाच्यत्वव्याप्तिग्राहकं प्रमाणं स्वस्यापि प्रमेयत्ववाच्यत्वे गृह्णाति, तथाऽस्तीतिबुद्धिविषयत्वग्राहकं सामान्येऽपि

न्यायलीलावतीप्रकाशविवृतिः

मेव तथाऽनुगमोऽस्तित्वस्यरुचेस्तथैव सिद्धान्तयति यद्वा द्रव्यादीति। द्रव्यादिषडन्योन्याभावभिन्नत्वमेव भावत्वमित्यर्थः। अन्योन्याभावात्मकवैधर्म्यविशेषोपदानेऽपरितुष्यन् सामान्यत एवाह यद्वा स्वभावभेद एवेति। तथाचाभावावृत्तिधर्मवत्त्वमेव भावत्वम्, अभावत्वं च द्रव्यादिषडन्यत्वमेव, वैधर्म्याणां चाभावावृत्तित्वमेवानुगमकमिति भावः। वयं तु प्रागभावत्वादिकं स्वरूपेणैव सत्ताभानविरोधि, न च तमः सदिति प्रत्ययानुपपत्तिः, दोषप्राबल्येन ज्ञानमवधूयापि प्रमोत्पत्तेरत एवान्यत्र प्रागभावादिज्ञाने न सत्ताज्ञानमिति सत्ताभानविरोधितावच्छेदकरूपवत्त्वमेव भावत्वमिति प्रागुक्तमेव सम्यगिति पश्यामः। अस्तीतिबुद्धिरिति। अस्तीतिबुद्धिविषयकत्वग्राहकं प्रमाण-

सर्वासामस्मदादिभिरवेदनात् । योग्यतायाः व्यावृत्तरूपानति-
रेकादिति चेत् । न । प्रमेयत्ववाच्यत्वानियमसम्वेदनवत्
सामान्येनास्यापि स्फुरणात् । ज्ञेयत्वे च ज्ञानजातीयं तावेदकम् ।
तेन यदुपहितं तदपि तादृगेव, अन्यथा तत्रानुगतवेदनानुपपत्तेः ।
स च सम्बन्धं विनेत्यनुवृत्तिव्यावृत्त्योस्तुल्यम् । ज्ञेयोऽयमिति

---

न्यायलीलावतीकण्ठाभरणम्

प्रमेयत्वं परिच्छिनत्ति तथा घटादौ सद्बुद्धिविषयत्वं परिच्छिनत्ति
प्रमाणं तस्या अपि बुद्धेस्तत्परिच्छिनत्ति सामान्यलक्षणया च स्व
प्रकाशमिष्यत एवेत्याह प्रमेयत्वेति । ज्ञेयत्वमपि परम्परासम्बद्धं ज्ञा-
नत्वमेवानुगतमित्याह ज्ञेयत्व इति । तेनेति । ज्ञानजातीयेन यदुपहितं
तदपि तादृगेवानुगतमित्यर्थः । तथाच विषयत्वानुगमकृतो न दोष
इति भावः । अनुगतवेदनेति । ज्ञातोऽयं ज्ञातोऽयमित्यनुगतवेदनानुपप-
त्तेरित्यर्थः । ननु विषयेषु सम्बन्धं विना ज्ञानत्वमुपाधिः कथं स्या
दित्यत आह स चेति । ज्ञानत्वलक्षण उपाधिः सम्बन्धं समवायं विना-
पि विषयेषु परम्परासम्बन्धेन दाण्डिषु दण्डत्ववदनुगतं सत् यत्रानु-
भवस्मृतिसंशयविपर्य्ययादिषु तदनुवृत्तिर्यत्र च घटापटादिषु तस्य
व्यावृत्तिस्तत्र तुल्यमेव साधर्म्यमित्यर्थः । अपरव्याख्यानमन्यत् । यद्वा
यथा सद्बुद्धिविषयत्वं भावत्वमेवास्तित्वम्,तथा ज्ञेयत्वमपि ज्ञेयोऽय-
मितिबुद्धिविषयत्वमेवेत्याह ज्ञेयोऽयमिति । अत्रापि सामान्यतस्तत्रास्या

न्यायलीलावतीप्रकाशः

तथात्वं विषयीकरोतीत्याह प्रमेयत्वेति । अतएव ज्ञेयत्वे साधर्म्यं तत्रै-
व तदभावादिति दूषणमपास्तम् । भावत्वाभावासामानाधिकरण-
ज्ञानविषयत्वं ज्ञेयत्वमभावव्यावृत्तं कथमनुगतमुपधायकज्ञानव्यक्ती-
नामननुगमादित्यत्र समाधानमाह ज्ञेयत्वे चेति । तेन-ज्ञानत्वविशिष्ट-
ज्ञानजातीयेन, तादृगेव-अनुगतमेव,परम्परासम्बद्धज्ञानत्वेनैवानुगम
इत्यर्थः । अन्यथेति । ज्ञातोऽयं ज्ञातोऽयमित्यनुगतवेदनानुपपत्तेरित्यर्थः।
स चेति । स च ज्ञानलक्षण उपाधिः व्यावृत्तावभावे विशिष्टव्यवहारे ज्ञा

न्यायलीलावतीप्रकाशविवृतिः

मित्यर्थः । क्वचित्पाठ एव तथा । स चेति । सत्तालक्षण उपाधिर-

बुद्धिवेद्यत्वं वा । एतेनाश्रितत्वं व्याख्यातम् । येन च यत्समा-
नमिति च प्रमाणलक्षणवद्वाचकः शब्द इतिवच्चोपपद्यते ।

---

न्यायलीलावतीकण्ठाभरणम्

अपि बुद्धेर्ज्ञेयत्वमिति न स्वप्रकाशानवस्थेति भावः। एवमभिधेय-
त्वमप्युपपाद्यमित्युपेक्षितवान् । एतेनेति । ज्ञानवत् समवायस्यापि
स्वरूपसम्बन्धेनैवाश्रितत्वमिति नाव्याप्तिरित्यर्थः । यद्वा इह तन्तुषु
पटसमवाय इति धीर्न तथा नित्यद्रव्येष्वपीति भावः । समवेतसम-
वायाद्यन्यतरत्वमाश्रितत्वमिति तु तत्त्वम् । आश्रितत्वेऽपि आश्रितत्वं
साधर्म्यमुपपादयितुमाह येनेति । प्रमाणलक्षणवदिति । यथा प्रमाणेषु

न्यायलीलावतीप्रकाशः

नाभावादिरूपे यथा तथाऽत्रापीत्यर्थः । अथवा न ज्ञानत्वेनैवानुगमः,
किन्तु अयं पदार्थो ज्ञात इति ज्ञानविशेषणैवानुगम इत्याह ज्ञेयेय-
मिति । न च ज्ञानाविशेषाप्रतिसन्धाने ज्ञेयत्वव्यवहारानुपपत्तिः, सा-
मान्येनापि रूपेण ज्ञानविशेषप्रतिसन्धानात् ज्ञेयत्वतुल्ययोगत्वाच्चा-
भिधेयत्वं न पृथक् समाहितम् । एतेनेति । ज्ञानवत्समवायस्यापि स्व-
भावप्रत्यासन्नत्वेनेत्यर्थः । तथा च भावत्वे सति संयोगाभिन्नप्रत्या-
सत्त्या(१) आधेयत्वमाश्रितत्वमित्यर्थः। साधर्म्यपदार्थदूषणं समाधत्ते
येन चेति । यथा विवादपदं प्रमाणं यथार्थानुभवकरणत्वादिति प्रमा-
णमात्मनोऽपि प्रमाणत्वं बोधयति, यथा च वाचकः शब्द इति शब्दः
स्वस्यापि वाचकत्वमाचष्टे तथा तेनैव धर्मेण विशिष्टे स धर्मो वर्त्तते,

न्यायलीलावतीप्रकाशविवृतिः

तिरिक्तसम्बन्धं विनैव यथा ज्ञानाभावज्ञानसादृश्यादिरूपे व्यावृत्त-
व्यवहारे प्रयोजकस्तथा साधर्म्यव्यवहारे प्रकृतेऽपीत्यर्थः । ज्ञेयेयमि-
ति । ज्ञेयत्वप्रकारकबुद्धिरेवानुगामिकेत्यर्थः । वस्तुत ईश्वरबुद्धिरेव
तथेति द्रष्टव्यम् । ज्ञेयत्वतुल्येति । भावत्वाभावसमानाधिकरणाभिधानं
सम्बन्धित्वं षण्णामनुगतं तदिति भावः । तथाच भावत्वे सतीति । स्वरूप-
सम्बन्धेनाधेयेऽभावेऽतिव्याप्तिरिति सत्यन्तम् । नित्यद्रव्येऽतिव्या-
प्तिरिति संयोगान्यवृत्त्येति । न च कालाधेये आकाशेऽतिव्याप्तिरसा-
धारण्येनेति वृत्तिविशेषणात् । तेनैव धर्मेण विशिष्ट इति । प्रामाणिकत्वाद-

(१) संयोगान्यवृत्त्येत्यत्र विवृतिकृत्संमतः पाठो बोध्यः ।

धर्मादिहेतुत्वं च व्यक्तेरेव। तस्या एव सफलदेशकालस्वभावनियमोपपादकत्वात्। ताश्च विप्रकीर्णदेशकालतया नान्वयव्यतिरेकग्राहकप्रत्यक्षविषय(१)मापद्यन्त इति जातिरपि हेतुफल-

---

न्यायलीलावतीकण्ठाभरणम्

लक्षणस्वरूपं प्रामाण्यं स्वमनन्तर्भाव्य वर्त्तते तथा प्रमाणकरणत्वस्यापि लक्षणस्य व्यतिरेकिलिङ्गतया प्रमाकरणत्वात्। वाचकः शब्द इति। स्वस्यापि शब्दो वाचकत्वं विधत्ते तथा प्रकृतेऽपीत्यर्थः। एवं षण्णां साधर्म्यान्तरं तदपि स्वमनन्तर्भाव्य उपपादनीयं प्रमाणबलात् स्वस्मिन्नपि स्ववृत्त्यभ्युपगमात्।

द्रव्यादीनां त्रयाणां धर्माधर्मकर्तृकत्वं साधर्म्यमुपपादयति धर्मादीति। फलेन दोहनादिना देशकालाभ्यां चावच्छिन्नाभ्यां व्यक्तेरेव स्वप्रतिबन्धात् गां दद्यादित्यादौ व्यक्तेरेव कर्मजनकत्वम्। तर्हि जातीनां कथमुपयोग इत्यत आह ताश्चेति। व्यक्तय इत्यर्थः। अवच्छेदकतामात्रे-

न्यायलीलावतीप्रकाशः

तादृशश्चात्माश्रय इष्यत एवेत्यर्थः।

सफलेति। क्वचिद्देशे काले च कार्यमित्यत्र नियामकत्वं न जातीनां तासां सार्वदिकत्वात्सार्वत्रिकत्वादिति व्यक्तेरेव तथात्वाददृष्टनिमित्तत्वमिति भावः। तत्किं सर्वथानुपयोगिन्येव कार्ये जातिर्नेत्याह ताश्चेति। एतच्च यत्रान्वयव्यतिरेकाभ्यां कारणत्वं गृह्यते तत्परं, नतु सर्वत्र यागादेः स्वर्गजनकत्वानुपपत्त्या व्यापारत्वेनापूर्वकल्पनात् नान्वयव्यतिरेकाभ्यामिति विशेषात्। ननु जातेर्भावनाविषयत्वेन यद्यपि अदृष्टं प्रति नोपयोगः, तथापि भावनाविषयतावच्छेदकत्वेनोपयोग।

न्यायलीलावतीप्रकाशविवृतिः

यमात्माश्रयो न दोषायेति भावः। न च योऽपि व्यतिरेकी धर्मः सोऽपि यदि समानधर्मविशिष्टे वर्त्तेत तदा साधर्म्यपदवाच्यः स्यात्तथाचानवस्थितिरिति प्राग्व्याख्यातमूलानुसारेण दोष एवमपह्नुत एवेति वाच्यम्। तद्धर्मोपलक्षितवृत्त्यैव साधर्म्यपदवाच्यत्वादित्यर्थः। इतिविशेषादिति। अन्वयव्यतिरेकावच्छेदकत्वं जातेर्न यागादौ

---

(१) प्रत्यक्षलक्ष्यभावमा-प्रा० पु० पाठः।

भावनिश्चयार्थमुपादीयते । न च जातेरपि हेतुः, तस्याः स्वतोऽन्वयव्यतिरेकाभावात्, व्यक्त्युपादानेनाऽन्यथासिद्धेः । जातित्वं

---

न्यायलीलावतीकण्ठाभरणम्

ण जातीनामुपयोग इत्यर्थः । अन्वयव्यतिरेकाभावादिति । यद्यपि नान्वयव्यतिरेकगम्यं धर्मस्य करणत्वं कल्प्यते, तथापि यत्रान्वयव्यतिरेकगम्यं कारणत्वं तत्परमिति तर्हि । सामान्यादित्रयाणां नित्यसामान्यत्वमुपपादयितुमाह जातित्वञ्चेति । पूर्वमनाशङ्कितमपि जातित्वं श-

न्यायलीलावतीप्रकाशः

स्यादित्यत आह न चेति । ज्ञानावच्छेदकत्वेन विषयस्य कारणत्वं न सिध्यति तस्य ज्ञान एवोपक्षयादित्यर्थः । अदृष्टजनकत्वं श्रुत्येकगम्यं, सा चासिद्धस्य क्रियमाणस्येष्टसाधनत्वं सिद्धस्य तु व्यापारभागित्वेन तथात्वं बोधयति, क्वचित्प्रसक्तस्य निवृत्तिं तथात्वेन बोधयति जातिर्न स्वरूपतः कार्यानित्यत्वात्, नापि व्यापारभागितया जन्यधर्मानाश्रयत्वात्, न च जातेर्नित्यतया निवृत्तिरिति न तस्या अदृष्टजनकत्वमिति भावः । जातित्वं चेति । यद्यपि जातित्वं न पूर्वं शङ्कितं किन्तु सत्तायाः सामान्यवृत्तित्वं, न च सामान्यत्वं जातिः स्यादित्यत्र शङ्कितेऽयं परीहारः, न च सामान्यत्वमित्यनेन पौनरुक्त्यप्रसङ्गात् । तथापि सत्तावत्त्वं सत्ताभिन्नजातिमत एवेति नियमात् सामान्यस्य सत्तावत्त्वं तदैव स्याद्यदि सत्ताभिन्नसामान्यवत्त्वं

न्यायलीलावतीप्रकाशविवृतिः

कारणतावच्छेदकत्वं तत्राप्यन्यथानियमनिरूपणानुपपत्तेरिति ध्येयम् । ज्ञानावच्छेदकत्वेनेति । यद्यपि भावनाविषयतावच्छेदकत्वं प्रागाशङ्कितं, तथापि ज्ञानावच्छेदकत्वमपि तस्यास्तीति तदप्युक्तम् । ननु विशिष्टकारणताग्राहकं प्रमाणं विशेषणस्यापि कारणतां गृह्णातीत्यनुशयादाह अदृष्टजनकत्वमिति । जातेर्व्यक्तिपरिचयार्थमुपादानान्न श्रुतिर्जातिविशिष्टस्य कारणतां बोधयतीति भावः । यथा सत्प्रत्ययः सत्तायां भ्रान्तस्तथा सत्तादिषु जातित्वप्रत्ययः स्यादिति न सत्ताविरोधिजातित्वजातिसिद्धिरित्येवं यद्यपि सुगमं मूलं, तथाप्यात्माश्रयभयेन सत्तानङ्गीकारेऽपि जातित्वाङ्गीकारो बाधकाभावेन स्या-

च यदि परमेव सत्तायाः, तदा द्रव्यादेरपि जातिता। अपरं चेन्न सत्तायामाश्रितत्वम्, न हि तस्या अपरं तत्रैव समवेयात्। विरोधित्वे च सत्प्रत्ययवज्जातिप्रत्ययस्यान्यथासिद्धेः। न च

---

न्यायलीलावतीकण्ठाभरणम्

ङ्कितुमुचितमिति निरस्यति यदीति। यदि यत्र सत्ता तत्र जातित्वमिति तदा द्रव्यादिरपि जातिः स्यात् जातित्वाश्रयत्वात्, अथ यत्र जातित्वं तत्र सत्ता तदा सत्तायां जातित्वं न वर्त्तेत, नहि व्याप्या जातिर्व्यापिकायां जातौ वर्त्तते तथाऽदर्शनात्। यत्र प्रमेयत्वं तत्राभिधेयत्वमित्यादौ यद्यपि व्याप्यं व्यापके वर्त्तमानं दृष्टमेव, तथापि जातावियं व्याप्तिर्नोपाधावपीति, अत एवोक्तं—तत्रैव समवेयादिति। अपि च यत्र जातित्वं तत्र सत्तेति सत्तायामेव व्यभिचारः, नहि सा स्याद्या सत्ता सत्तायामात्माश्रयानवस्थयोः प्रसङ्गात्। ननु परापरभावाभावेऽपि गोत्वाश्वत्ववद्विरुद्ध एव सत्ताजातित्वे जाती स्यातामित्यत आह विरोधित्व इति। यथा सत्तायां सत्प्रत्ययो न सत्ताकृत-

न्यायलीलावतीप्रकाशः

स्यात्, सामान्ये च जातित्वं परं सामान्यं सम्भाव्यते इति, तदेतद् दूषितम् अपरं चेदिति। यत्र परं तत्रैवापरं वर्त्तते न च सत्तायां सत्तावत्त्वम्, अतः कथं तत्र सत्ताव्याप्यजातिर्वर्त्ततेत्यर्थः। ननु जातित्वं सत्ताविरोधीति न तया जातित्वस्य परापरभाव इत्यत आह विरोधित्व इति। यथा सत्तायां सत्प्रत्ययः प्रमाणबाधाद् भ्रान्तः तथा सत्तायां जातिप्रत्ययोऽपि भ्रान्तः स्यादित्यर्थः। यद्यपि विरुद्धत्वे जातित्वं न स्वसत्तानिर्वाहकं, तथापि सत्ताविरहेऽपि जातित्वसामान्येनैव जातेर्निःसामान्यत्वं विरुद्धमित्यभिप्रेत्य शङ्कितम्। यद्यपि जातित्व-

न्यायलीलावतीप्रकाशविवृतिः

दिति तत्रापरितुष्यन् प्रकारान्तरेण व्याचष्टे यथा सत्तायामिति। यद्यपि सत्तायां प्रत्ययस्य भ्रान्तत्वे आपादकाभावः, तथापि यदपि जातित्वमङ्गीकार्यं तत्रापि जातित्वप्रत्यय आत्माश्रयत्वभयेन भ्रान्तः स्याद् त्वन्मते, मम तु जातित्वमुपाधिरेवेति न तत्र जातित्वप्रत्ययो येन भ्रान्तः स्यादिति भावः। एवञ्च सत्तापदं तथा सत्तायामित्यत्र जातित्वपरम्। तथापि सत्तेति। तथाच स्वतन्त्रेयमाशङ्का न तु पूर्वशङ्कानुरुद्धेति भावः। जातिसामान्येन जातित्वसामान्येनेत्यर्थः। क्वचित्पाठ एव तथा। यद्यपि जातित्वेति। यद्यपि पूर्वं सत्ताजातिनिराकरणप्रसङ्गेन

सामान्यत्वम्, स्वात्मन्यवृत्तेः। तत्रापि सामान्यान्तरपरिकल्पनेऽनवस्थितिः। न च सामान्यत्वद्वयम्, परापरभावानुपपत्तेः। विरोधित्वे साधारणधीध्वनिजनकत्वानुपपत्तेः।

मनस्त्वं च, मूर्तत्वे सति इन्द्रियत्वेनासाधारणजातिमत्त्वा-

---

न्यायलीलावतीकण्ठाभरणम्

स्तथा जातिप्रत्ययोऽपि नित्यत्वे सति अनेकवृत्तित्वसामान्योपाधिक एव स्यात् किं जातित्वस्य जातित्वकल्पनयेत्यर्थः। अपव्याख्यातमन्यत्। उपाधिसामान्यमन्तर्भाव्य जातौ सामान्यं जातिशङ्कितं निराचष्टे नचेति। ननु परस्परवृत्तिसामान्यद्वयनिबन्धनमेव सामान्यत्वस्य सामान्यत्वं स्यादित्याह नचेति। द्वयोः सामान्ययोः परस्परां पपत्तेः विधिविरोधिहेतुसामान्याकारानुगतधीः शब्दः साधारणो न स्यात् एकेनैव सामान्येन तदुपपत्तौ द्वितीयवैयर्थ्यादिति भावः।

मनसि अवान्तरजातिमत्त्वं साधयति मनस्त्वञ्चेति। मनो द्रव्यत्वावान्तरजातिमत् मूर्त्तत्वे सतीन्द्रियत्वात् चक्षुर्वदित्यर्थः। किञ्च सु-

न्यायलीलावतीप्रकाशः

सामान्यं निराकृतमेव, तथापि जात्युपाधिरूपोभयसामान्यसाधारणीं जातिं निराकर्तुमाह न च सामान्यत्वमिति। नन्वेकस्य सामान्यत्वस्य स्वात्मन्यवृत्तावप्यपरस्य सामान्यत्वस्य तत्र वृत्तौ नोक्तदोष इत्यत आह नचेति। विरोधित्व इति। परस्परावृत्तित्वे सतीत्यर्थः।

मनस्त्वं चेति। सत्ताद्रव्यत्वाभ्यामर्थान्तरवारणायासाधारणेत्युक्तम्, मनोमात्रवृत्तीत्यर्थः। नन्वत्र साधनावच्छिन्नसाध्यव्यापको विशेष-

न्यायलीलावतीप्रकाशविवृतिः

जातित्वनिराकरणमधुना तु स्वातन्त्र्येणेत्येवमप्यपौनरुक्त्यम्, तथाप्यर्थभेदद्वारापि तन्निराकरणं भवत्येवेति तथैवोक्तम्। नचेतीति। द्वितीयं सामान्यत्वं न प्रथमसामान्यत्वमात्रवृत्त्येकतापत्तेरिति; सत्तादावपि वर्त्तेत तथा च द्वितीयं सामान्यत्वं न द्वितीयसामान्यत्वे प्रथमसामान्यत्वं वा प्रथमसामान्यत्वे द्वितीयप्रथमयोस्तु प्रथमद्वितीयवृत्तिरूपैवान्यथा सामान्यव्यवहारापत्तेरनवस्थापत्तेश्चेति सत्तायां तयोः संकरः स्यादिति भावः।

असाधारण्यं स्पष्टयति मनोमात्रवृत्तीति। एतच्च पक्षधर्मताबललभ्यं रूपं न तु व्यापकतावच्छेदकप्रविष्टमप्रसिद्धेः।

मनसः(१), कथमन्यथा सुखाद्युपलब्धिसाधकतमत्वम् एकैकशो व्यभिचारात् । अणुत्वात्मसंयोगिताकारस्यासाधकतमसाधारण्यात् । कर्णशष्कुलीवद्विशिष्टादृष्टोपगृहीतस्येति चेन्न । अनेकत्वे सत्यसाधारणसाक्षात्कारिप्रमाकारणतया(२)ऽवान्तरजातिमत्तायानियमात् । वेगश्चाशुसंचारभेदस्य वेगहेतुत्वेन प्रतिबन्धावधारणात् ।

---

न्यायलीलावतीकण्ठाभरणम्

खाद्युपलब्धिकारणतावच्छेदकतयापि तत्कल्पनीयमित्याह अन्यथेति । तदणुत्वेनात्मसंयोगित्वेन वाऽवच्छिद्यतां किं मनस्त्वेनेत्यत आह एकैकश इति । पार्थिवादिपरमाणुषु घटपटादिषु च तदतिप्रसक्तं न सुखोपलब्धिकारणतावच्छेदकमित्यर्थः । विशिष्टादृष्टोपगृहीतयोस्तयोरेवावच्छेदकत्वं स्यात् किं मनस्त्वेनेति शङ्कते कर्णेति । सुखसाक्षात्कारकारणतावच्छेदकत्वेन मनस्त्वकल्पनमावश्यकम् । न च शब्दसाक्षात्कारकारणतावच्छेदकतया श्रोत्रत्वमपि जातिः स्यादिति वाच्यम् । तस्य पुरुषभेदेऽप्येकत्वात्, अत एवोक्तमनेकत्वे सतीति । वेगश्चे-

न्यायलीलावतीप्रकाशः

गुणवत्त्वमुपाधिरित्यत आह कथमिति । विपक्षे बाधकात् साधनस्य साध्यव्याप्यत्वेन तद्व्यापकतयोपाधेः साध्याव्यापकत्वादित्यर्थः । ननु सुखाद्युपलब्धिसाधकतमत्वावच्छेदकमणुत्वे सत्यात्मसंयोगित्वमेव स्यादित्यत आह अणुत्वेति । विशिष्टेति । विशिष्टादृष्टोपगृहीतत्वमेव तदवच्छेदकं स्यादित्यर्थः । अनेकत्वे सतीति श्रोत्रव्यावर्त्तनार्थम् ।

न्यायलीलावतीप्रकाशविवृतिः

प्रत्यक्षजनकतावच्छेदकजातित्वं च व्यापकतावच्छेदकमत एव मूले तदनुसारेणैव विपक्षबाधकमुक्तम् । एवञ्च मूले हेतौ श्रोत्रपरमाण्वोर्व्यावर्त्तनाय विशेषणद्वयमिति मन्तव्यम् । उद्भूतत्वमादाय प्रत्यक्षजनकतावच्छेदकजातिमत्त्वं गुणेऽपि रूपादाविति साध्याव्यापकत्वभयादाह साधनावच्छिन्नेति । मनो द्रव्यत्वापरजातिमदिति साध्ये श्रोत्रे व्यभिचार इति सत्यन्तमित्याह अनेकत्वे सतीति । अनेकत्वं स्वसमानाधिकरणस्वान्योन्याभावप्रतियोगिवृत्तिद्रव्यविभाजकधर्मवत्त्वम् । मूलेऽसाधारणप्रमेत्यादेः प्रत्यक्षमात्रवृत्तिकार्यता-

---

(१) जातिमत्त्वं, मनसः मु० पु० पाठः । (२) प्रमासाक्षात्कारकारणतयेति प्रा० पु० पाठः ।

पवनवत् । अन्यथा कर्मापि नानुमीयेत, अदृष्टविशेषादेव संयोगविभागोपपत्तेः ।

स्पर्शस्तु तत्कार्यजातीये उद्भूतस्पर्शतया व्याप्तः । स च निवर्तमानः तमादायैव निवर्तते । ततो रूपरसगन्धादयोऽणूनां कार्यैकलिङ्गगम्याः सन्त(१)स्तल्लिङ्गानुपलब्धेरेवासन्तोऽवधार्यन्ते।

---

न्यायलीलावतीकण्ठाभरणम्

ति । मनसीति शेषः । अदृष्टवदात्मसंयोगेनान्यथासिद्धौ कर्मापि न स्यादित्याह अन्यथेति ।

मनसि स्पर्शोऽपि स्यादिति परिहरति स्पर्श इति । मनो यदि परमाणुत्वे सति स्पर्शवत् स्यादुद्भूतस्पर्शवत्कार्यजनकं स्यात्, मनस्त्वं यदि स्पर्शसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातिः स्यात उद्भूतस्पर्शसमानाधिकरणा स्यात् इति वा तर्कोऽत्र बाधकः । कार्यरूपत्वादिकमेव हि कारणरूपादौ मानमित्याह तत इति । मनो यदि स्थूलद्रव्यमारभेत तदा ज्ञानयौगपद्यं स्यादित्येकदेशिमतं दूषयति

न्यायलीलावतीप्रकाशः

वेगश्चेति । यथा पवने अदृष्टजन्यक्रियाविलक्षणक्रियाजनकत्वेन वेगसिद्धिः तत्र वेगस्य हेतुत्वावधारणात् तथा मनस्यपीत्यर्थः ।

अन्यथा स्पर्शस्याप्यनुमानापत्तेरित्यत्र बाधकमाह स्पर्शस्त्विति । मनसः स्पर्शवत्त्वे स्पर्शवतश्च परमाणोरारम्भकत्वादारब्धस्योद्भूतस्पर्शस्योपलम्भलक्षणप्रतिकूलतर्कप्रतीघातान्न तत्र स्पर्शानुमानमित्यर्थः । ननु कार्यनिष्ठस्पर्शो न कारणस्पर्शव्यापकः, किन्तु व्याप्यः, न च व्याप्यनिवृत्त्या व्यापकनिवृत्तिः । मैवम् । स्पर्शसमानाधिकरणद्रव्यत्वसाक्षाद्व्याप्यजातेरवयवियोग्यस्पर्शसामानाधिकरण्यव्याप्यत्वमिति विवक्षितत्वात् । मनसः स्पर्शवत्त्वे कार्यद्रव्यारम्भकत्वात् कार्यद्रव्यस्य कारणसजातीयत्वनियमेन मनस्त्वे युगपज्ज्ञानोत्प-

न्यायलीलावतीप्रकाशविवृतिः

प्रतियोगिककारणतावच्छेदकावच्छिन्नत्वमर्थ इत्यवधेयम् । अदृष्टजन्येति । अस्थूलत्वेन गमनक्रियेत्यर्थः ।

स्पर्शसामानाधिकरण्येति । प्रभास्वादौ व्यभिचार इति साक्षात्पदम् । अवयविपदं स्थूलतरावयविपरम् । योग्यपदं च उद्भूतपरम्,

---

(१) सन्त इति नास्ति मा० पु० ।

न च मनसः तदारम्भे स्थवीयस्तया युगपन्नानाज्ञानोत्पत्तिरिति वाच्यम्। अवयविन इन्द्रियभावाभावात्। न च परत्वादिकं व्योम्नि, परबुद्धिव्यपदेशस्यावच्छिन्न एव(१) सम्भवात् पृथक्त्ववत्। न च नित्यमहत्त्ववदपरिमितेऽपि परिमाणव्यवहारादत्रापि परापरव्यवहार इति वाच्यम्। महद्बुद्धिवेद्यस्य परिमाणत्वात्। अस्य चावान्तरावच्छेदाप्रतिभासेऽपि(२) भूगोलकमहत्त्ववत्परिमाणोपपत्तेः, अन्येभ्योऽपि महानिति बोधोपपत्तेः। प्रकृते त्ववधिविरहाद्व्यपदेशानुपपत्त्या परबोधस्यापि तत्तुल्यविषयस्यानुपपत्तेः। न च भूतत्वम्, अर्थत्ववदुपाधिसामान्यबोधेनैवोप-

---

न्यायलीलावतीकण्ठाभरणम्

अवयविन इति। गगनादौ परत्वापरत्वे शङ्कते निराचष्टे न चेति। मूर्त्तमेवावधिं कृत्वा मूर्त्तेष्वेव दैशिकयोः परत्वापरत्वयोरुत्पादनियमान्न ते गगनादावित्यर्थः। यथा मूर्त्तत्वं तिरस्कृत्य परिमितव्यवहारस्तथा परापरव्यवहारोऽपि स्यादित्याह नित्येति। महदाकाशमिति बुद्ध्या परिमाणमेव विषयी क्रियते यथ मूर्त्तमविषयीकृत्यापि भूगोलकबुद्ध्या परिमाणमेव विषयी क्रियते यथ मूर्त्तमविषयीकृत्यापि भूगोलक इत्याह महदिति। परापरव्यवहारस्त्ववधिमन्तरेण न सम्भवति तदसत्त्वाह प्रकृतेऽपीति। यथा समानविषयस्तत्त्वेऽपि न गगनादौ भवतीत्याह प्रकृतेऽपीति। यथा समान्यवत्यनुपदस्विभावा तथा बाह्येन्द्रियग्राह्यजातीयविशेषगुणवत्त्व-

न्यायलीलावतीप्रकाशः

स्तिः स्यादिति कस्यचिन्मतमपनयति न च मनस इति। अवयविनो मनोजन्यस्येत्यर्थः। मनोग्राहकमानाल्लाघवसहकृतादिरवयवस्यैव मनस्त्वसिद्धेरिति भावः। कालकृते परत्वापरत्वे जन्यनियते व्योम्नि न सम्भवत इति दिक्कालयोर्बाधकमाह न च परत्वादिकमिति। यत्रावधिना सह संयोगो न भवति तत्रैव दिक्कृतं परत्वं वर्त्तते, अत्र चावधेरपि व्योमसंयोगित्वान्न तथेत्यर्थः। अवधिनिरूप्यत्वमात्रे दृष्टान्तमाह पृथक्त्ववदिति। यद्वा व्यतिरेकदृष्टान्तोऽयम्, पृथक्त्वं चान्योन्याभावप्रतियोग्येवावधिरिति पृथक्त्वं यथा व्योम्नि तथा न परत्वमित्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

तेन नेष्टापादनशङ्का। सामान्यतो व्यभिचारमाह मनोजन्य-

---

(१) सावच्छिन्नेवेति मा० पु० पाठः। (२) चावच्छेदाप्रतिभासेपीति मा० पु० पाठः।

पत्तेः। न च तत्र गुणत्वापलापः, तत्र विशेषस्योक्तत्वात् । यदि त्वसत्यपि विशेषमानेऽन्यथासिद्धसम्वेदनं सामान्यमास्थीयते ततो भूतत्वमूर्तत्वप्रसक्तौ जातिसङ्करापत्तिरिति बोद्धव्यम् ।

किंशुककुसुमादिकार्यस्य वसन्तादिकालविशेषप्रसूतत्वे निश्चिते अन्येषामपि कार्याणां कार्यत्वेन स्वरूपपूर्वकालजन्यत्वानुमानात् । एवं कुङ्कुमादेर्देशविशेषजन्यत्वेनान्यत्रापि देशविशेषजन्यत्वानुमानात् । देशकालव्यवहारविषयाणामुपाधीनां कार्य-

---

न्यायलीलावतीकण्ठाभरणम्

निबन्धना भूतत्वपरिभाषापीति भूतत्वं न सामान्यमित्याह नच भूतत्वमिति । जातिविशेषः । विशेषस्येति । संयोगाविभागोभयकारणातिरिक्ते या सामान्यसमानाधिकरणता सा जात्यवच्छिन्नेति विशेषस्येत्यर्थः।

दिक्कालयोः सर्वोत्पत्तिमन्निमित्तकारणत्वमुपपादयितुमाह किंशुकेति । किंशुकस्य कुंकुमस्य च कालविशेषदेशविशेषजन्यता अन्वयव्यतिरेकगम्यैवातस्तदुभयदृष्टान्तेनान्यत्रापि कार्य्यं तदुभयजन्यत्वमनुमेयमित्यर्थः। ननूक्तमुपाधीनामेवान्वयव्यतिरेकौ यदि तदा दिक्कालौ न स्यातां, तदा कार्य्याणि न स्युरिति तर्कितस्य व्यतिरेकाधीनः कारणत्वग्रह इत्यर्थः। ननु तर्कितोपि व्यतिरेकोऽतिप्रसञ्जक-

न्यायलीलावतीप्रकाशः

अपरिमितेपीति । अवच्छिन्नपरिमाणशून्येपीत्यर्थः। न च भूतत्वमिति । सामान्यमिति शेषः। अर्थत्ववदिति। द्रव्यादित्रये यथार्थत्वं न जातिरित्यर्थः। उपाधीति। बाह्यैकेन्द्रियग्राह्यजातीयविशेषगुणवत्त्वेनेत्यर्थः। विशेषस्येति । गुणत्वसाधकस्येत्यर्थः। जातौ बाधके सत्येवोपाधित्वमिति स्थिते जातिबाधकमाह यदि त्विति ।

किंशुकेति । यद्विशेषे यद्विशेषः प्रयोजकः तत्सामान्ये तत्सामान्यप्र-

न्यायलीलावतीप्रकाशविवृतिः

स्येति । यथार्थत्वं न जातिरिति । सत्ताभिन्नेति शेषः। एकैकपदविशेषपदाभ्यां विकल्पेनान्वये उपाधिद्वये तात्पर्यम्। परमाण्वादिसङ्ग्रहाय जातीयपदम्। ननु कारणत्वमात्रमेव साध्यमतो न बाधः साधर्म्यमपि तदेव इत्यरुचेराह ईश्वरत्वं चेति। दिक्कालाधिकरणकमिति। (१)अधिकरण

(१) एतत्प्रतीकद्वयदर्शनादत्र प्रकाशपाठः कश्चिद्भ्रष्ट इति ध्येयम् ।

मात्रनिमित्तत्वमेव दिक्कालयोः सर्वनिमित्तत्वम्। दिक्कालौ च सर्वकार्यनिमित्तं विभुत्वे सत्यनित्यविशेषगुणरहितत्वादीश्वरवत्। कारणत्वं च स्वव्यतिरेकाध्यारोपे कार्यव्यतिरेकप्रसञ्जयोग्यस्वभावत्वम्। दिक्कालौ च सर्वोत्पत्तिमतां निमित्तं तत्पूर्ववर्तित्वे सति तदुत्पत्त्यधिकरणत्वेन व्यवह्रियमाणत्वात् पटतन्तुवत्। गगने च महत्त्वम् अणुपरिमाणवदवच्छेदाभावेऽपि परिमाणत्वव्य-

---

न्यायलीलावतीकण्ठाभरणम्

त्वान्न कारणत्वनिर्वाहक इत्यनुशयेनाह दिक्कालौ चेति। वने सिंहनाद उत्पन्न इति व्यवहारात् सिंहनादं प्रति वनमपि कारणं स्यादित्यत उक्तं तत्पूर्ववर्तित्वे सतीति। कार्यनियतपूर्ववर्तित्वे सतीत्यर्थः। नन्वेवं साध्याविशेषः, अनन्यथासिद्धत्वोपरागेण साध्यत्वात् साधने च तदनुप्रवेशात्। एवं सत्यात्मनोऽपि कारणत्वं स्यादत उक्तं तदुत्पत्त्यधिकरणत्वेन व्यवह्रियमाणत्वात्। न ह्याकाशे आत्मनि वा घटो जात इति व्यवहारोऽस्ति यथेहेदानीं जात इति, तथा च एतदनुशयेन व्याख्यानान्तरमुत्तानतायै। एतेन गेहे गोष्ठे जात इत्यादिप्रत्ययबलात् तेषां कारणत्वमपास्तम्, नियमांशाभावात्। गगनादौ च न महत्त्वमिति यदुक्तं तत्राह गगने चेति। परममहत्परिमाणस्याप्युपपत्त्या परिमाण

न्यायलीलावतीप्रकाशः

योजकत्वनियमादिति भावः। दिक्कालौ चेति। नन्ववच्छेदकपक्षत्वे बाधः, अवच्छेद्यपक्षत्वे च दिक्कालसमवेतकार्यवदिति विवक्षितत्वात्(?)। ननु दिक्कालयोर्नित्यत्वेन व्यतिरेकाप्रसिद्धेः कथं कारणत्वं ग्राह्यमित्यत आह कारणत्वमिति। परमार्थिकस्य व्यतिरेकस्याप्रसिद्धावन्यत्र प्रसिद्धं व्यतिरेकमारोप्य कारणत्वं ग्राह्यं व्यतिरेकज्ञानमात्रस्य तद्ग्राहकत्वादित्यर्थः। तत्पूर्ववर्तित्वे सतीति। नन्वेतत्पीठोपरिजातघटादावनैकान्तिकम्, अथ पूर्वत्वं नियतत्वमभिप्रेतम्, तर्हि निमित्तत्वमपि तदेवेति साध्याविशिष्ट्यम्। मैवम्, दिक्कालसमवेताभिन्नकार्यं दिक्कालजन्यं कार्यत्वात्सम्प्रतिपन्नवदित्यर्थात्। अणुपरिमाणवदिति। यथाऽणुपरिमाणे हस्तवितस्त्याद्यवच्छेदो नास्ति परिमाणव्यञ्जकत्वं चास्ति

न्यायलीलावतीप्रकाशविवृतिः

पदस्य च कारकविशेषार्थत्वं प्रसिद्धमेवेति भावः। दिक्कालसमवेतताद्भिन्नकार्यमिति। यद्यपीदृशाभिप्रायेण कल्पने पूर्वानुमानाभेदः, तथापि त-

ञ्जकत्वात्। एकत्वं च संख्यापरिमाणयोः समानदेशत्वनियमात्।

संस्कारत्वं च स्वकारणसजातीयकार्यजनकत्वम्, असति

---

न्यायलीलावतीकण्ठाभरणम्

त्वजातिव्यञ्जकत्वादित्यर्थः। न च गगनादावेकत्वमिति यदुक्तं, तत्राह एकत्वं चेति। गगनादाविति शेषः। परिमाणवत्त्वेनैव संख्यावत्त्वानुमानादित्यर्थः।

संस्कारत्वं चेति। जातिरिति शेषः। स्वकारणसजातीयेति। कर्म्मणा जनितौ वेगस्थितिस्थापकौ कर्म्म जनयतः, विशिष्टज्ञानेन जनिता भा·

न्यायलीलावतीप्रकाशः

तथात्रापीत्यर्थः। व्यञ्जकत्वात्परिमाणत्वस्येति शेषः। न च परिमाणमेव तत्र नास्ति, द्रव्यत्वेनानुमानात्। न च विपक्षे बाधकाभावः, द्रव्यत्वस्य सर्वपरिमितवृत्तिअपरिमितावृत्तिजातित्वव्याघातापत्तेः। समानदेशत्वेति। निरुपाधिसहचारदर्शनाच्च तद्ग्रह इति भावः।

संस्कारत्वं साधयति स्वकारणेति। स्वकारणसजातीयकार्यजनकत्वमसति बाधके सामान्यनियतं येन रूपेण विशिष्टज्ञानत्वकर्मत्वादिना स्वात्मानं प्रति कारणत्वन्तज्जातीयकार्यजनकत्वस्यानुगमं विनाऽनुपपत्तेरित्यर्थः। यद्यपि स्थितिस्थापकस्य स्पर्शादिवत्कारणगुणक्रमेणोत्पन्नत्वान्न कर्मजन्यत्वं, तथापि भावनावेगयोस्तादृशजाति·

न्यायलीलावतीप्रकाशविवृतिः

त्राधिकरणत्वमत्र तु कारणत्वमात्रं साध्यमिति भेदः। परिमाणव्यञ्जकत्वमिति। परिमाणत्वव्यञ्जकत्वमित्यर्थः। क्वचित्पाठ एव तथा। द्रव्यत्वस्य सर्वपरिमितेति। यद्यप्येवंस्वभावत्वेऽपि द्रव्यत्वस्य विपक्षबाधकाभाव एव, तथापि महत्त्वत्वमपकर्षानधिकरणवृत्ति परिमाणत्वसाक्षाद्व्याप्यजातित्वादिति तत्सिद्धिः। न चाणुत्वमप्यसिद्धमिति दृष्टान्तासिद्धिः, कारणगुणक्रमोत्पन्नावयविगुणवृत्तिगुणत्वसाक्षाद्व्याप्यजातेः परमाणुगुणवृत्तितानियमेन तत्सिद्धेः। कश्चिद्गुणः परमाणौ वर्त्तते कश्चिन्नेत्यत्र कारणगुणप्रकर्षोत्पन्नावयविगुणजातीयत्वस्यानुगतस्य प्रयोजकत्वात्। न चैवमपि द्व्यणुकपरिमाणे मानाभावः, जन्यपरिमाणं प्रत्यवयवित्वेन च लाघवेन हेतुत्वादिति दिक्।

येन रूपेणेति। स्वजनकतावच्छेदकविशिष्टज्ञानत्वाधारस्मृतिजनकत्वभावनायाः स्वजनकतावच्छेदकधर्मत्वाधारोत्तरकर्मजनकत्वं

बाधके सामान्यनिष्ठम् सदृशकार्यस्य तथैवोपलब्धेः, अन्यथा कार्यसादृश्यस्याकस्मिकत्वप्रसङ्गात्। स्वभावादिति चेत्। न, व्यावर्तकस्य स्वभावस्य तथात्वे(१) सदृशात्कार्यात्सदृशकारणानुमानविलयापत्तेः। अनुगतत्वे च सामान्यं सादृश्यं संस्कारत्वम्। बीजशब्दादौ च परापरभावानुपपत्तिरेव बाधिका।

---

न्यायलीलावतीकण्ठाभरणम्

वना विशिष्टज्ञानमेव जनयतीत्यर्थः। अन्यथेति। स्वजनकजातीयकार्यजनकत्वं संस्कारत्वावच्छेदेन चेत्तदा तेन तदनुमानं स्यात्, न च शब्देऽप्येवम्, आद्यशब्दे तदभावात्. वेगस्थितिस्थापकभावनानां चाद्यानामपि तादृशत्वात, तदुक्तं-'नोदनादाद्यमिषोः कर्म तत्कर्मकारिताच्च संस्कारात् उत्तरमुत्तरं च'ति। अन्तिमानां तु यत्र तादृशत्वं तत्प्रतिबन्धाद् विनाशाद्वा, बीजाङ्कुरादौ च न साक्षात् किन्तु परम्परयेति, न च तत्साधारण्यमपीति भावः। यद्वा एकवृत्तिस्वविजातीयसमानाधिकरणकारणसजातीयकार्य्यसाक्षाज्जनकत्वं विवक्षितं, तेन संयोगजनकयोर्द्रव्यकर्म्मणोः संयोगजनकत्वे ईश्वरेच्छाजन्यस्य ज्ञानस्यास्मदादीच्छाजनकत्वे चाङ्कुरादौ च नातिप्रसङ्गः। स्वभावादिति। वस्तुत एव कश्चित् स्वभावो येन जनकजातीयजनकत्वं तत्र च जातिरतन्त्रमित्यर्थः। सदृशादिति। वेगादौ साजात्यमन्तरेण तज्जनकसाजात्यानुमानमन्यथा न स्यादित्यर्थः। शब्दादाविति।

न्यायलीलावतीप्रकाशः

सिद्धौ तत्रापि कर्मासमवायिकारणैकवृत्तिगुणत्वेन सा जातिरनुमेया, तथाच संस्कारत्वेन वेगस्थितिस्थापकयोरेकजातीयत्वसिद्धौ संस्कारजातीयस्य कारणसजातीयकार्यजनकत्वं स्थितिस्थापकस्य नियत एव। बीजशब्दादाविति। यद्यपि बीजजन्यं बीजं बीजजनकं च,

न्यायलीलावतीप्रकाशविवृतिः

च वेगत्वस्येति तदुभयसाधारणजातिसिद्धिरित्यर्थः। तत्रापि कर्मेति। गुरुत्वद्रवत्वाभिन्नत्वेनाप्यत्र विशेषणम्, वेगवृत्तिगुणत्वव्याप्यजातिमत्वं साध्यम्, वेगो दृष्टान्तः। वेगस्थितिस्थापकयोरिति। फलानुपहितभावनायामिव फलानुपहितस्थितिस्थापके·

---

(१) व्यावृत्तस्य तथात्वे इति मा० पु० पाठः।

तद्वदत्रापि जातिभेदोऽपि स्यादिति चेत् । न । असति बाधके

---

### न्यायलीलावतीकण्ठाभरणम्

शब्दमादाय तज्जात्यभ्युपगमे संस्कारत्वं विना शब्दत्वमाद्यशब्दे शब्दत्वं विना संस्कारत्वं वेगादौ दृष्टं मध्यशब्दे संकीर्य्येतेत्यर्थः। तद्वदत्रापीति । यथा कर्मज्ञानसाधारणा नैका जातिस्तथा वेगभावनासाधारण्यमपि न स्यादित्यर्थः । यथा वा बीजशब्दादिसाधारणा नैका जातिस्तथा संस्कारत्वमपि न स्यादित्यर्थः । शब्दबीजसाधारणजातौ परापरभावानुपपत्तिर्बाधिका प्रकृते तु न तथेत्यत आह असतीति ।

### न्यायलीलावतीप्रकाशः

शब्दः शब्दजन्यः शब्दजनकश्च, तथापि बीजे द्रव्यत्वेन संकरापत्तिः, शब्दे च शब्दत्वेन तथा आद्यशब्दे तदभावात् । वस्तुतो बीजं यत्र काण्डजन्यं न बीजजन्यं नापि बीजजनकमङ्कुरस्यैव बीजजन्यत्वात्, एवं ज्ञानमीश्वरेच्छाजन्यमस्मदादीच्छाजनकम्, तथापीश्वरज्ञाने न स्तीति तत्र ज्ञानत्वेन संकरापत्तिः । ननु धर्माधर्मावीश्वरप्रयत्नजन्यौ अस्मदादिप्रयत्नजनकाविति तत्साधारणी सा जातिः स्यात् । न वा कारणसजातीयकार्यजनकत्वं तज्जातिनियम्यं तज्जात्यभावेऽपि बीजशब्दयोस्तत्त्वात् । अत्राहुः एकवृत्तिस्वविजातीयसमानाधिकरणकारणसजातीयकार्यसाक्षाज्जनकत्वं तज्जातिव्यवस्थापकम् । संयोगजनकत्वे संयोगजन्यत्वेऽपि न द्रव्ये कर्मणि च संस्कारत्वमिति तद्व्यावृत्त्यर्थमेकवृत्तीति । लिङ्गज्ञानं व्याप्तिज्ञानवत्युत्पन्नं लिङ्गज्ञानवन्तमात्मानं जनयतीति तद्व्यावृत्त्यर्थं स्वविजातीयेति । तद्वदत्रेति । यथा कारणजातीयजनकत्वं बीजशब्दादौ, न चैका जातिरस्ति, तथात्रापि स्यादित्यर्थः । असतीति । तत्र तु बाधकमुक्तमिति शेषः ।

### न्यायलीलावतीप्रकाशविवृतिः

ऽपि स्वरूपयोग्यतावच्छेदकजातौ बाधकाभावः । भावनायां फलानुपधाननियता जातिर्नास्ति स्थितिस्थापके त्वस्तीति भावः । आद्यशब्द इति । अन्त्यस्वशब्दे स्वरूपयोग्यतासम्बन्धादाद्येत्युक्तम् । अङ्कुरस्यैवेति । एवकारेण बीजे बीजजन्यताव्यवच्छेदः । ननु साधारणकारणविवक्षया नोक्तदोष इत्यरुचेराह न वा कारणेति । बीजशब्दयोरिति । बीजस्य बीजजन्यत्वजनकत्वाभ्युपगमेनेदम् । एकवृत्तीति । एकवृत्ति स्वविजातीयं यत्समानाधिकरणं कारणं तज्जातीयका-

कारणैकजातीयत्वेन कार्यसादृश्यप्रतिबन्धात् । न च कारणैकजातीयत्वात्कार्यैकजातीयतापत्तिः । संयोगविभागयोरेकजातीयतापत्तेः । यस्य यद्विजातीयावस्थासमवेत उत्पन्नः तस्य तदवस्था-

---

न्यायलीलावतीकण्ठाभरणम्

ननु वेगादीनां चेदेकजात्यं तदा तज्जन्यज्ञानयोरप्यैकजात्यं स्यादित्यत आह नचेति । अन्यथा कर्म्मजन्यतया संयोगविभागयोरप्यैकजात्यं स्यादित्यर्थः। यस्येति सप्तम्यर्थे षष्ठी, तेन वेगजातीयारम्भाच्छरीरादेः कर्म्मारम्भात्तद्विशिष्टे उत्पन्नो वेगो विजातीयारम्भमेव शरं कर्म्मवन्तमेव जनयतीत्यर्थः। कर्म्म यद्यपि संयोगवत्युत्पद्य संयोगवन्तं जन-

न्यायलीलावतीप्रकाशः

यस्येति । धर्मिणः । यद्विजातीयेति । कर्म च यद्यपि संयोगवत्युत्पद्यते संयोगवन्तमेव जनयति, तथापि तस्य गुणपदेन व्यावृत्तिः। कारणसजातीयावस्था च न प्राक्कालीना विवक्षिता किन्तूत्प-

न्यायलीलावतीप्रकाशविवृतिः

र्यजनकत्वमित्यर्थः । अत्र प्रथमविशेषणद्वयप्रयोजनमाकर एव व्यक्तम् । अस्मदादिज्ञानमीश्वरेच्छाजन्यमस्मदादीच्छाजनकं चेति तद्वारणाय समानाधिकरणपदम् । धर्माधर्मयोरप्यनेनैव वारणम्, बीजशब्दवारणं च स्वविजातीयपदेनैव । ज्ञानेनेच्छा तया च प्रयत्न इति तद्वारणाय सजातीयेति । ज्ञानेनेच्छा तया चादृष्टद्वारा ज्ञानं जन्यत इतीच्छावारणाय साक्षादिति । इदं च कारणेऽपि विशेषणमन्यथाऽदृष्टजन्येऽदृष्टसाक्षाज्जनके च यागेऽतिप्रसक्तेः । जनकत्वं च विषयतातिरिक्तरूपेण विवक्षितमन्यथा ज्ञानजन्यायां स्वविषयकज्ञानजनकेच्छायामतिप्रसक्तेः। यथोक्ते व्यभिचारो नास्त्येवेत्यप्रयोजकत्वपरतया व्याचष्टे यथा कारणेति । विजातीयावस्थेति मूलम् । वायुविजातीयावस्थेत्यर्थः। ननु स्थितिस्थापकस्य कारणगुणपूर्वकत्वादाश्रयोत्पत्त्यनन्तरमेवोत्पत्तेः संयोगस्य तत्पूर्वकालता नास्तीत्यत आह कारणसजातीयावस्थेति । कारणजन्यजातीयावस्थेत्यर्थः । किन्तूत्पत्तिकालीनेति । यद्यपि कर्मजः संयोगो न स्थितिस्थापकोत्पत्तिकालेऽपि, तथापि संयोगजएव तथा भविष्यति । वस्तुतः स्वकार्यजननकाले यदवस्थं कारणं तस्य तादवस्थ्यापादकगुणत्वमित्यर्थोऽतो नोक्तदोषः । अत्र चोपाधिरेव संस्कारत्वमिति मतं सम्यक्, अन्यथा स्थितिस्थापकाव्याप्तेः ।

पादकगुणत्वं वा संस्कारत्वमुपाधिसामान्यम् । यथा चैकजातीयावच्छिन्नाना(१)मेकगुणत्वेन सूत्रकर्तृव्यवहारविषयत्वं तथैकोपाधिसामान्यवतामपीति । ज्ञानत्वे चेच्छादिव्यावृत्तस्वभावस्य(२)

---

न्यायलीलावतीकण्ठाभरणम्

यति तथापि गुणपदेन तद्व्यवच्छेदः, भव्यशब्दस्तु स्वाविजातीयघाति नोत्पन्नः किन्तु स्वजातीयशब्दवत्येवेति न तत्सङ्ग्रहः । ननु संस्कारत्वमुपाधिश्चेत्तदा कथं तेन रूपेण विभाग इत्यत आह यथेति । सूत्रकर्तुरेतादृशं जातिवैचित्र्यमभिमतमित्यर्थः। जातौ न व्यवस्थापकनियमो ज्ञाने तदसत्त्वादिति यदुक्तं तत्राह ज्ञानत्व इति । तत्रापि स्वाभाविकविषयप्रवणत्वमेव व्यवस्थापकम्, इच्छादौ तु ज्ञानौपाधिकं तत्, स्मृतावपि न पूर्व्वानुभवौपाधिकं तस्य चिरातीतत्वात्, उपाधिर्हि सन्निहितो भवति स्फटिके जवाकुसुमादिवत् । प्रयत्नेन यद्यपि ज्ञानं किंचिद्व्यवहितं, तथापीच्छाद्वारोपाधिसम्भवेन सुलभत्वात्, किञ्च इच्छादौ विष-

न्यायलीलावतीप्रकाशः

त्रिकालीना, तेन स्थितिस्थापकस्य कर्माजन्यत्वेऽपि यत्संयोगवति स्थितिस्थापकोत्पत्तिः तत्संयोगवत्त्वमेव कर्मद्वारा कृत्योत्पादयति, ज्ञाने तदभावादित्यत्राह ज्ञानत्वे चेति । इच्छादौ च तज्जनक(३) ज्ञानविषयोपाधिकत्वेनैव सविषयकत्वव्यवहारोपपत्तेः स्वाभाविकविषयप्रवणत्वाभावादित्यर्थः । न च वैपरीत्यमपि सुवचं, सविषयकत्वे हि नात्मधर्मत्वं नियामकमदृष्टेऽतिव्याप्तेः, किन्तु ज्ञानत्वमेव, इच्छादौ च तदौपाधिकं, नतु वैपरीत्यं, ज्ञाने तदसम्भवात् उपाधित्वेनाभिमतानामिच्छादीनामग्रेतनत्वात् उपेक्षाज्ञाने तदसम्भवाच्च । ननु किं ज्ञान

न्यायलीलावतीप्रकाशविवृतिः

न च स्वरूपयोग्यतां तत्राप्यस्त्येवेत्युक्तमिति वाच्यम् । तथासति गुरुत्वेऽपि स्वरूपयोग्यताप्रसङ्गे तत्साधारणजात्यापत्तेः । न च गुरुत्वादिभिन्नत्वविशिष्टमेव तज्जातिनियामकम् । तादृशधर्मस्य जातिनियामकत्वेऽतिप्रसङ्गादित्यवधेयम् । इच्छादेर्जनकेति । तथाच सविषयत्वं धर्ममादाय ज्ञानजन्यत्वेन प्रयत्नजनकत्वेन च या तत्रातिप्रसक्तिरापादिता सा न प्रयत्नस्य निर्विषयत्वादिति भावः । ननु किमिति । ज्ञान-

---

(१) एकजात्यवच्छिन्नानामिति भा० पु० पाठः । (२) स्वरूपस्येति भा० पु० पाठः ।

(३) इच्छादेर्जनकेति विवृतिसंमतः पाठो बोध्यः ।

### न्यायलीलावतीकण्ठाभरणम्

येन समं ज्ञानमेव सम्बन्धः, ज्ञानस्य तु सतस्तदीयता यन्निबन्धना स्वभावभेदो विषयित्वमिति । विवक्षितमिति । व्यवस्थापकमिति शेषः ।' संस्कारत्वतुल्यन्यायतया शङ्कितमदृष्टत्वस्य जातित्वं परिहरति न

### न्यायलीलावतीप्रकाशः

विषयतैव तज्जन्येच्छाविषयता, किंवा तद्विषयज्ञानजन्यत्वमेवेच्छायास्तद्विषयत्वम् ? नाद्यः, ज्ञाननाशे सति इच्छाया निर्विषयतापत्तेः । नान्त्यः, ज्ञानानवगमेऽप्यवगम्यमानत्वात्, जनकज्ञानस्यानियतविषयत्वेऽपि इच्छायां नियतविषयत्वाच्च । अत्राहुः—यथा घटादिना स्वसम्बन्धे समवायस्याभेदेनैव सम्बन्धरूपत्वं रूपादिसम्बन्धे च तद्भेदेन, तथा ज्ञानस्यापि घटादिना स्वसम्बन्धे सम्बन्धरूपत्वमभेदेन इच्छादिसम्बन्धरूपत्वं तु भेदेन, तथाप्ययं पौर्वापर्यसम्बन्धोऽनुगतधर्मगर्भो, न च घटेच्छात्वादिकं सामान्यमस्ति । घटगोचरेच्छात्वे नैव तत्त्वेऽन्योन्याश्रय इति चेत् । न, नहीच्छाकारणत्वमेव ज्ञानस्येच्छासम्बन्धरूपत्वं, किन्तु ज्ञानस्वरूपमेव तथा, नियामको हि जन्यजनकभावः । न चैवं जनकज्ञानापगमे सन्नपि प्रयत्नो निर्विषयः स्यात्, तथा च प्रवृत्त्यनियमः स्यादिति वाच्यम् । तथापि तं करोमि नतु वेद्मीत्यनुभवेन ज्ञानापगमात् । ज्ञानान्तरं तत्रोत्पद्यत इति चेत्तुल्यम् । तथापि प्रयत्नजनकं ज्ञानं नास्ति, तच्च सम्बन्धरूपमिति चेन्न ।

### न्यायलीलावतीप्रकाशविवृतिः

स्यैव सविषयत्वमिच्छासविषयत्वव्यवहारप्रयोजकं परम्परासम्बन्धेन, सविषयज्ञानस्य जन्यत्वमेव साक्षात्सम्बन्धेन वा तथेति विकल्पार्थः । इच्छायाः सविषयकत्वानभ्युपगमेन यथाश्रुतेऽसङ्गतेः । ज्ञाननाश इति । ज्ञानात्मिकैव ज्ञानविषयतेति तन्नाशकाले इच्छायाः सविषयकत्वव्यवहारानुपपत्तेरित्यर्थः । अनियतविषयत्वेपीति । ज्ञानस्य सिद्धासिद्धविषयत्वेऽपीच्छायाः सिद्धविषयत्वानियमादिति । यथा घटादिनेति । न चैवमिच्छायाः स्वाभाविकमेव सविषयत्वमिति वाच्यम् । जनकीभूतज्ञानरूपोपाधिकत्वेन भावनायामिव सविषयत्वव्यवहारस्य सोपाधिकत्वात् । ननु जनकीभूतज्ञानत्वेन सम्बन्धता जनकता च घटेच्छात्वजात्यवच्छिन्नं प्रति वा घटविषयकेच्छात्वरूपोपाध्यवच्छिन्नं प्रति वा न सम्भवत्येवेत्याशङ्कते तथाप्ययमिति । नियामिका जनकता, सम्बन्धत्वं च तत्तज्ज्ञानव्यक्तेरिव विषय इवेच्छायामपीति परिहरति नहीच्छेति ।

विषयप्रवणत्वमपेक्षित(१)मिति । न चादृष्टत्वम् । बुद्धेरुपाधिनै·

---

न्यायलीलावतीकण्ठाभरणम्

चादृष्टत्वमिति । बुद्धेरिति । अदृष्टकारणानुगतबुद्धेरित्यर्थः । उपाधिनैवेति । सुखदुःखान्यतरसाधारणकारणमात्रवृत्त्यतीन्द्रियजातिमत्त्वस्यात्मवृ· त्त्यतीन्द्रियगुणत्वसाक्षाद्व्याप्यजातिमत्त्वस्य वोपाधेस्तन्निबन्धनत्वादि· त्यर्थः । एकः शब्द इति प्रतीत्यनुरोधात् शब्देऽप्यापादितां संख्यां

न्यायलीलावतीप्रकाशः

यद्विषयत्वेन तस्य कारणता तद्विषयज्ञानमात्रस्यैव स्वरूपसम्बन्ध· रूपत्वात् । बुद्धेरिति । धर्माधर्मयोरदृष्टाकारबुद्धेः प्रत्यक्षात्मविशेष· गुणावृत्तितदीयगुणमात्रवृत्तिगुणत्वसाक्षाद्व्याप्यजातिमद्विशेषगुणत्वे· नोपाधिनोपपत्तेरित्यर्थः । धर्मोऽधर्मवृत्तिसत्तागुणत्वान्यजातिरहि· तोऽधर्मान्यत्वात् पटवदिति च विरोधिमानं बाधकमिति भावः ।

न्यायलीलावतीप्रकाशविवृतिः

एतेनेच्छायाः सिद्धविषयत्वशङ्कापि निरस्ता, तज्ज्ञानव्यक्तेस्तत्रैवेच्छा· सम्बन्धरूपत्वात् । तथापि तं करोमीति लाघवेन विषयतया ज्ञान· रूपत्वेन त्वयापि स्वाभाविकसविषयत्ववादिनैतत्समर्थनीयं तं करोमि न तु तं वेद्मीति व्यवहारकाले ज्ञानापगमादित्यर्थः । यद्विषयत्वेनेति । स्वरूपयोग्यतामात्रं नियामकं तच्चोत्तरकालीनेप्यस्त्येवेति भावः । इदं चाभ्युपेत्य वस्तुतोऽतीतमेव ज्ञानं तत्सम्बन्धः । न चोभयसम्बन्धि· समकालस्यैव सम्बन्धत्वं, प्रागभावप्रतियोगिनोः सम्बन्धे व्यभिचा· रादिति रहस्यम् । केचित्तु इच्छाप्रयत्नयोस्तावेव विषयौ भावनायां तु ज्ञानत्वमादायैव कारणसजातीयेत्यादि नेयम्, मूलकृता तु ज्ञान त्वजात्यनङ्गीकर्तृमतेनाभ्युपगमवादरीत्या विषयत्वमपेक्षितमित्युक्त· मिति वदन्ति । तदयुक्तम् । अतिप्रसङ्गादेर्निराकृतत्वेन लाघवेन ज्ञान· स्यैव विषयतात्वौचित्यात् । प्रत्यक्षात्मविशेषेति । अत एव रूपादावति· व्याप्तिवारणाय तदीयगुणमात्रवृत्तीति । ज्ञानादावतिप्रसक्तेर्वारणाय वृत्तीत्यन्तम् । तत्राप्यप्रसिद्धिवारणाय प्रत्यक्षेति . आत्मपदविशेषपदगु· णपदानां प्रतियोगित्वविशेषणत्वेनैवावैयर्थ्यम् । विशेषपदं च तथासति संयोगादावतिप्रसक्तिवारणाय । संस्कारत्वं च न जातिरिति मतेनैव वि· शेषपदघटितलक्षणं बोध्यम् । क्वचित्तदीयगुणमात्रवृत्तीति शून्यः पाठः ।

---

१) मभिमतमिति प्रा० पु० विवक्षितमिति च मिथ्राभिमतः पाठः ।

वाऽन्यथासिद्धेः। शब्दादौ चैकत्वं तत्प्रतिबद्धसंयोगादिप्रसक्तावनित्यसावयवद्रव्यत्वेन(१) कुड्यादिगमनप्रतिघातापत्तौ भ्रान्तत्वाद्बुद्धेः। एवमन्यत्रापि गुणानामगुणत्वनियमावधारणं प्रतिकूलतर्कैरुन्नेयम्। विशेषगुणत्वं च शास्त्रीयां रूढिमाश्रित्य

---

न्यायलीलावतीकण्ठाभरणम्

निराकरोति शब्दादौ चेति। यद्यपि परमाणुरपि प्रतिहन्यत एव, तथापि प्रतीघातोपलम्भार्थमुक्तं सावयवत्वेनेति। बुद्धेरिति। एकः शब्द इति बुद्धेरित्यर्थः। एवमिति। रूपादीनामपि परेण गुणवत्त्व आपादिते संयोगविभागध्रौव्येण द्रव्यत्वमापाद्य दोष उन्नेय इत्यर्थः। विशेषगुणत्वमिति। रूपादीनां शब्दान्तानां षोडशानां विशेषार्थव्यवच्छेदाय प्रभवन्त्यमीति योगपुरस्कारेण सूत्रकृता रूढिः परिभाषा कृता न तु परत्वादीनामित्यर्थः। ज्ञायमानं पुत्रसुखमेव पितृसुखजनकं परामृश्यमाणलिङ्गवदतो न सुखस्य विजातीयमात्रजनकत्वमिति यदुक्तं

न्यायलीलावतीप्रकाशः

विशेषगुणत्वमिति। स्वाश्रयसमानाधिकरणद्रव्यविभाजकोपाध्यत्यन्ताभावसमानाधिकरणगुणावृत्तिगुणत्वव्याप्यजातिमति विशेषगुणपदं रूढमिति रूढ्या योगनियमान्नान्यत्र तत्प्रयुज्यत इत्यर्थः। सुखं स-

न्यायलीलावतीप्रकाशविवृतिः

तत्राप्यात्मगुणवृत्तित्वं पूरणीयम। स्वाश्रयेति। स्वं विशेषगुणताप्रयोजिका जातिर्गन्धत्वादिस्तस्य य आश्रयो गन्धादिस्तत्समानाधिकरणद्रव्यविभाजकोपाधिः पृथिवीत्वादिस्तदत्यन्ताभावसमानाधिकरणो यो गुणस्तत्र न वर्त्तते या जातिस्तद्वत्त्वमित्यर्थः। अत्र सङ्ख्यात्वमादाय तदाश्रयेऽतिव्याप्तिरित्यवृत्तीत्यन्तं जातिविशेषणम्। एवञ्च रूपत्वादेर्नीलत्वादिकमादाय विशेषगुणत्वम्, वायुस्पर्शेऽपि पाकविरोध्यनुष्णाशीतत्वव्याप्यजातिमादाय, एवं जलांशेऽप्यूह्यम्। गुणत्वव्याप्यपदं तु घटत्वादिकमादायातिव्याप्तिवारणाय सामानाधिकरण्यमात्रपरम्। यद्यप्येवमपि कठिनसंयोगवत्त्वमग्निसंयोगनाश्यतावच्छेदकघृतादिद्रव्यत्वबृत्तिजातिविशेषं तदनाश्यतावच्छेदकसुवर्णद्रवत्ववृत्तिजातिविशेषं चादाय तत्र तत्रातिव्याप्तिस्तथापि संयोगनैमित्तिकद्रवत्वा-

---

(१) सावयवत्वेनेति पु० पु० सिं० अभिमतः पाठः।

पङ्कजादिपदवत्तदुपाधिभिर्नियतमित्यदोषः। लिङ्गे च परामर्शस्यैव जनकता समारोप्य(१) व्यवह्रियते।

शीतस्पर्शप्रबुद्धश्चाध्यात्मिको वायुसंयोगः कम्पनिदानम्। अत एव 'कुम्भिते पवने तदभावः, शीतयोनिता चानिलस्ये'ति चरकाचार्योपदेशोऽपि। उभयासमवायित्वे(२) कल्प-

---

न्यायलीलावतीकण्ठाभरणम्

तत्र दृष्टान्तं दूषयति लिङ्गे चेति। अतीतानागतलिङ्गस्थले परामर्षस्यैव कारणत्वं न तु लिङ्गस्यापीत्यर्थः। ज्ञानद्वारा च सुखस्य पितुर्ज्ञाना-जनकत्वात् अतीन्द्रियत्वेन तद्गोचरज्ञाने मनसोऽसामर्थ्यादिति भावः।

शीतस्पर्शस्य विजातीयकम्पारम्भकत्वं व्यवस्थितं तत्राह शीतस्पर्शेति। सुखदुःखे प्रत्यदृष्टस्यासमवायिकारणत्वं स्यादितियदाऽऽ-शङ्कितं तत्राह उभयत्रेति। अदृष्टस्यात्ममनोयोगस्य च सुखदुःखे प्रति

न्यायलीलावतीप्रकाशः

जातीयजनकमित्यत्र दृष्टान्तं दूषयति लिङ्गे चेति। अतीतानागतलिङ्गज्ञा-नादनुमित्युत्पत्तेर्लिङ्गपरामर्शः कारणं नतु परामृश्यमाणं लिङ्गम्, एवं सुखमपि न सत्तामात्रेण सुखहेतुर्ज्ञानापेक्षणे तु तेनैवान्यथासिद्धिः। न च तज्ज्ञानं तस्य व्यापार इति नान्यथासिद्धिः, अनागतस्य तस्य व्यापारत्वायोगात्, तथाच पुत्रादिसुखाविषयत्वेन ज्ञानस्य सुखज-नकत्वं नतु विषयस्यापि तस्य कारणतावच्छेदकमात्रत्वात्। एतेन चन्दनादिजन्यसुखं प्रति विषयस्येव पुत्रादिसुखस्य पित्रादिसुखजन-कत्वं स्यादित्यपास्तम्। पुत्रादिसुखस्य पित्राद्यतीन्द्रियत्वात्, वैष-यिकसुखस्य चेन्द्रियार्थसन्निकर्षजन्यत्वात्।

शीतः स्पर्शो विजातीयस्यापि जनक इति दूषयति शीतेति। उद्भूतस्पर्शवद्वेगवत्संयोगस्य कम्पकारित्वादित्यर्थः। शीतस्पर्-शस्य वायुस्पर्शोद्बोधकत्वे मानमाह शीतयोनितेति। उभयेति।

न्यायलीलावतीप्रकाशविवृतिः

न्यत्वमपि गुणाविशेषणम्। गुणवृत्तिपदं च यद्यस्ति तदोक्तविशेषण सूचकमेव।

शब्दे परमेश्वरज्ञानादौ च व्यभिचारमालोक्य जातिगर्भ-

---

(१) परामर्शजनकताऽऽरोप्येति प्र० पु० पाठः।

(२) उभयत्रासमवायित्व इति मिश्रसंमतः पाठः।

नागौरवात् । व्यापकमनोयोगस्यैव तादृशत्वेऽसमवायिकारणल-क्षणेऽदृष्टेतरत्वस्यापेक्षितत्वात् । असमवायिकारणमिति च तन्त्र-

---

न्यायलीलावतीकण्ठाभरणम्

असमवायिकल्पनायां गौरवम् । न चादृष्टमेव तथास्त्विति वाच्यम् । विभुविशेषगुणवत्त्वेन मूर्त्तसंयोगस्यैव असमवायिकल्पनाभ्रौव्यादि-त्यर्थः । तर्हि कार्य्यैकार्थसमवेतकारणत्वं यद्यसमवायिकारणलक्षणं विभुकार्य्येषु तददृष्टेऽतिव्याप्तं स्यादत उक्तम् अदृष्टेतरत्वस्येति । उक्त-मिलितपुरस्कारेण विभाषेयं नहि निमित्ते सत्येव व्यवहारः स्यात्,

न्यायलीलावतीप्रकाशः

आत्ममनःसंयोगोऽदृष्टं चेत्युभयम् , सुखादीनां शब्दवद्विभुवि-शेषगुणत्वेन मूर्त्तसंयोगासमवायिकारणकवृत्तिगुणत्वव्याप्यजाति-मत्त्वसिद्धौ मनःसंयोगस्यैवासमवायिकारणस्य सत्त्वात् तदसम-वायिकारणकल्पकमानाभाव इत्यर्थः । ननु सुखं प्रत्यदृष्टस्य कार-णताऽस्ति, सा चैकार्थसमवेतसुखं प्रत्येवेति तस्यासमवायिका-रणत्वे प्रमाणसिद्धे किं कल्पनागौरवेणेत्यत आह असमवायिकारणलक्ष-ण इति । कार्यैकार्थसमवायकारणैकार्थसमवायान्यतरप्रत्यासत्त्या आ-त्मविशेषगुणव्यतिरिक्तं, यद्वा कार्यकारणभावनिरूपकधर्मनिरूपितका-रणताश्रयोऽसमवायिकारणम्, आत्मविशेषगुणानामसमवायिकारण-त्वव्यवहाराभावादित्यर्थः । यद्वा असमवायिकरणमिति परीक्षकाणां परिभाषा न लौकिकीयं संज्ञा भावतान्निमित्ते सत्यपि यत्र तेषां ना-भिप्रायस्तत्र न वर्त्तते इत्यत आह असमवायिकारणमिति चेति । सत्यपि

न्यायलीलावतीप्रकाशविवृतिः

साध्यमाह मूर्त्तसंयोगासमवायीति । कार्यैकार्थेति । यन्निरूपितसमवा-यिकारणत्वं तत्कार्ये कारणं च तस्यैव समवायकारणमेतदुभयान्य-तरैकार्थसमवायाश्रयत्वे सति कारणत्वम् । तावन्मात्रं चादृष्टज्ञानादा-विच्छादिकारणे गतमित्यात्मविशेषगुणव्यतिरिक्तमिति विशेषणम् । कार्यकारणभावेति । कार्यकारणभावनिरूपको धर्मस्तदुभयमेव तन्निरूपिता तदेकार्थसमवायावच्छिन्ना या कारणता तदाश्रयत्वमित्यर्थः । न ह्यदृष्टस्यात्मविशेषगुणानां वा तथा कारणत्वम्, तत्रासमवायिकारण-व्यवहाराभावेन तथा कारणतायां मानाभावादिति भावः । न लौकिकीय-मिति । न सर्वलोकसिद्धान्तेश्वरसङ्केतविषय इति यावदित्यर्थः । औ-

परिभाषा। सा च सत्यपि निमित्ते क्वचिदद्दृष्टादौ न प्रवर्तते, तान्त्रिकाणामव्यवहारारात्, सत्यपि गङ्गासामीप्ये घोषादन्यत्रं गङ्गोपचारवत्। कर्मणि च पूर्वसंयोगादेरन्यथासिद्धसंनिधित्वेनाहेतुत्वात्। स्यादेतत् यद्यन्वयी हेतुः स्यात्, न चैवम्, अनुपाधित्वस्याप्रतिबन्धत्वात्, अन्यथाऽनैकान्तिके सोपाधित्वो-

---

न्यायलीलावतीकण्ठाभरणम्

अन्यथा प्रवाहसामीप्यनिबन्धन उपचारो यथा तीरे तथा घोषेऽपि स्यादित्यर्थः। ननु कर्म्मणि पूर्वसंयोगेऽप्युक्तलक्षणबलादसमवायिकारणत्वं स्यादित्यत आह कर्म्मणीति। कारणत्वे सति कार्य्यैकार्थसमवेतकारणत्वमसमवायिकारणत्वं प्रकृते तु कारणत्वमेव नास्तीत्यर्थः। स्यादेतदिति। साधर्म्यव्यवस्थापनं स्याद्यद्यन्वयी हेतुः स्यादित्यर्थः। अन्वयी—केवलान्वयी। पञ्चरूपसम्पन्नो हि हेतुरित्युच्यते केवलान्वयिनि च विपक्षव्यावृत्तेरभावान्न हेतुत्वमित्यर्थः। नन्वनौपाधिकः सम्बन्धो व्याप्तिः, स च केवलान्वयिन्यस्त्येव व्याप्तपक्षधर्म्मत्वमेव च लिङ्गत्वं न तु पञ्चरूपोपपन्नत्वमित्यत आह नचेति। अन्यथेति। व्याप्तिविघटनं हि साक्षाद्दोषस्तदुन्नायकत्वमितरेषामतोऽनैकान्तिकेऽपि स्फुटं व्याप्तिविघटनतयोपाधिरेव उद्भाव्येत न त्वनैकान्तिकत्वमित्यर्थः। तर्हि व्यभिचारित एव

न्यायलीलावतीप्रकाशः

निमित्ते व्यवहाराभाव इत्येतावन्मात्रे दृष्टान्तमाह सत्यपीति। तीरघोषयोः प्रवाहसामीप्याविशेषेऽपि गङ्गाशब्दस्तीरे लक्षणया प्रयुज्यते न घोषे इत्यर्थः। ननु कर्मणो यथा नोदनाभिघातावसमवायिकारणे एवं पूर्वस्थितस्थिरसंयोगोऽपि तथा स्यादित्यत आह कर्मणीति। स्यादेतदिति। एतदन्वयिहेतुत्वेन साधर्म्यव्युत्पादनं तदा स्याद्यद्यन्वयी हेतुः स्यादित्यर्थः। नचैवमिति। पंचरूपसम्पत्तेरनुमानाङ्गत्वात् केवलान्वयिनि च विपक्षव्यावृत्तिवैकल्यात्, अन्यथा रूपान्तरविकलस्यापि गमकतापत्तेरित्यर्थः। नन्वनौपाधिकः सम्बन्धोऽनुमानाङ्गं, स चास्त्येवेत्यत आह अनुपाधित्वस्येति। विवृततात्पर्यमेतद-

न्यायलीलावतीप्रकाशविवृतिः

पचारिकत्वं प्रकृते नास्तीत्यत आह एतावन्मात्र इति। आभिप्रायिकं पदमभिप्रायवशादेव प्रवर्त्तते व्यवहारार्थं चेदं लक्षणं न तु स्वकृत-

द्भावनापत्तेः, साध्याभावव्यावृत्त्या तु साध्यसम्बन्धित्वस्य प्रती-
त्यप्रतीतिभ्यां व्याघातात्। नैवम्। अयोगव्यवच्छेदस्य(१)नियमा-
र्थत्वात्। तथापि काल्पनिकाविपक्षाव्यतिरेक इति चेन्न। अवि-

न्यायलीलावतीकण्ठाभरणम्

सम्बन्धो व्याप्तिस्तत्रापि स्यादित्यत आह—साध्येति। साध्यस्याभावो
यत्र स विपक्षस्ततो व्यावृत्त्या व्यभिचाराभावः स्यात्, तत्र साध्या-
भावो यदि प्रसिद्धस्तदा केवलान्वयित्वव्याघातोऽसिद्धश्चेत्तदा ततो
व्यावृत्तिर्दुर्ग्रहेत्यर्थः। साध्यायोगेति। यद्यपि साध्यायोगोऽप्यसिद्धः, सा-
ध्यायोगव्यवच्छेदश्च साध्य एव, न च सा व्याप्तिरतिप्रसक्तत्वात्,
तथापि साधनवन्निष्ठाभावाप्रतियोगिसाध्यकत्वं व्याप्तिस्तत्राप्यस्त्ये
वेति भावः। ननु शशविषाणादौ प्रमेयत्वादिव्यतिरेको वाच्य एवेति
कुतः केवलान्वयित्वमित्याह तथापीति। यदि विपक्षो भवेत्तदा तत्र

न्यायलीलावतीप्रकाशः

धस्तात्। साध्याभावव्यावृत्त्येति। अत्र च न सोपाधित्वोद्भावनापत्तिः, सा-
ध्याभाववद्वृत्तित्वस्यैव कारणव्यतिरेकरूपस्यानैकान्तिकत्वस्यैव सा-
क्षाद्दूषणत्वादिति भावः। प्रतीतीति। यदि साध्यव्यतिरेकः प्रतीतः क्व
केवलान्वयित्वम्? न चेत् कथं साध्याभाववदवृत्तित्वमित्यर्थः। अयो-
गव्यवच्छेदस्येति। ननु केवलान्वयिसाध्ये साध्यायोगस्याप्रतीतेः कस्य
व्यवच्छेदः साधनवति स्यात्, किञ्च अयोगव्यवच्छेदो योगः, स
चानैकान्तिकत्वादिसाधारणः, न वा केवलान्वयिनि संशयः—प्रमेय-
त्वमत्र वर्त्तते नवेति, संशयश्च न प्रमेयविशेष्यकः, किन्तु प्रमेयत्व-
विशेष्यकः विशेषणविशेष्यभेदेन वस्तुनो भेदात्। अत्राहुः। साधन-
वन्निष्ठात्यन्ताभावाप्रतियोगित्वमत्र विवक्षितम्, संशयश्च य एव सा-
ध्यसिद्धिविरोधी स एवानुमानाङ्गमावश्यकत्वाल्लाघवाच्च। ननु
समानविषयत्वमपि तन्त्रम्, प्रमेयत्वं घटेऽस्ति नवेति संशयश्च घटः

न्यायलीलावतीप्रकाशविवृतिः

लक्षणानुरोधेन व्यवहारकल्पनमिति ग्रन्थकृतात्पर्यम्। अधस्तादिति।
व्याप्तिनिरूपणावसर इति भावः। विशेषणविशेष्यभेदेनेति। साध्यसिद्धिविरो-
धीति। साध्यनिश्चयप्रवर्त्तनीय इत्यर्थः। न तु समानविषयत्वमपीति। न स-

(१) साध्यायोगव्यवच्छेदस्येति मिश्रसम्मतोऽत्र पाठो द्रष्टव्यः।

द्यमानविपक्षत्वस्यान्वयित्वात् । न च विपक्षस्य ततो हेतुव्यतिरे-कस्य वा कल्पितत्वे विपक्षत्वं सम्भवति । एवमपि च विशेषो वाच्य इत्यादावन्वयित्वव्यवस्थितेः । व्यतिरेकाभिधाने व्या-

---

न्यायलीलावतीकण्ठाभरणम्

व्यतिरेको निरूप्येत स एव तु नास्तीत्याह अविद्यमानेति । ननूक्तं क-ल्पनोपनीतो विपक्षोऽस्त्येवेत्यत आह—नचेति । काल्पनिकरूपस्वरूप-स्येतरतन्त्रत्वात्, काल्पनिकी विकल्पप्रतिपत्तिरपि स्यात् कल्पनायाः सर्वत्र सुलभत्वात् अवस्तुनः सर्वविधिनिषेधव्यवहाराभाजनत्वात् । एवमपि चेति । प्रतीताधिकरणत्वं प्रतीतिप्रतियोगिकत्वमात्रमपि व्यति-

न्यायलीलावतीप्रकाशः

प्रमेय इति साध्यधीविरोधी भवत्येव, व्यतिरेकश्च विपक्षवृत्तित्वश-ङ्कानिवृत्तिद्वारा व्यतिरेकव्याप्तावुपयुज्यते अत्र तु विपक्षाभावेन श-ङ्कैव नोदेतीति केवलान्वयिनि व्यतिरेकाभावेऽप्यनुमितिरप्रत्यूहा । अविद्यमानेति । ननु साध्याभाववत्त्वं विपक्षत्वम्, तत्र यत्किञ्चित्साध्या-भाववत्त्वं केवलान्वयिन्यपि, प्रकृतसाध्याभाववत्त्वाभिधाने च सिद्ध-सिद्धिव्याघातः । न चात्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वं, तस्य भावरूपत्वेऽत्यन्ताभावप्रतियोगित्वनियमात्, अभावरूपत्वे च प्रतियो-ग्येवात्यन्ताभावस्तस्येत्यर्थं इति चेत् । अत्राहुः । वृत्तिमदत्यन्ताभावा-प्रतियोगित्वं केवलान्वयित्वं, तच्च प्रमेयत्वादिकमेव, तस्य च प्रमावि-षयत्वयोरननुगमेऽपि प्रमात्वमेवं परंपरासम्बन्धाद्घटादौ प्रमेयत्व-मनुगतं प्रमाजातीयविषयत्वं वा । यद्वा आकाशात्यन्ताभावस्तथा, त-स्य च प्रतियोगिरूपात्यन्ताभावप्रतियोगित्वेऽपि वृत्तिमत्त्वाभावात्, आकाशस्यावृत्तित्वात् । व्यतिरेकेति । अभिधानेऽनभिधाने च विपक्षत्व-

न्यायलीलावतीप्रकाशविवृतिः

मानविशेष्यकत्वमपीत्यर्थः । व्यतिरेकश्चेति । साध्याभाववति हेतुव्य-तिरेकज्ञानमित्यर्थः । व्यतिरेकव्याप्ताविति । सत्यां व्यतिरेकव्याप्ता-वन्वयव्याप्तावुपयुज्यत इत्यर्थः । अन्यथा सहभावज्ञानतयैव कारण-त्वे विशेषविरोधिवैयर्थ्यापत्तेः । वृत्तिमदिति । आकाशात्यन्ताभावस-ङ्ग्रहाय प्रथमविशेषणम् । स्वाविरोधिवृत्तित्वं च तदर्थोऽन्यथा संयो-गाभावसङ्ग्रहे तत्साध्यस्य तुरीयतापत्तेरिति भावः । परम्परासम्ब-न्धावगाहित्वे लोहितः स्फटिक इति वत् प्रमा घट इति प्रतीतिः स्या-

घातापत्तेः ॥

इति श्रीन्यायलीलावत्यां साधर्म्यपरिच्छेदः ।

रूपरूपिणां गुणतद्वतामन्येषां च समयोत्तरापरभावेनोत्पादानुपलब्धावेककालव्यवस्थितौ सूक्ष्मसमयभेदाकल्पनान्न हेतुफलभावः । अहेतुफलभावो(१)ऽहेतुकसदातनभाववदसदातनो-

---

न्यायलीलावतीकण्ठाभरणम्

रेकनिरूपणे तन्त्रं न तु प्रमितप्रतियोगिकत्वं, तथापि विशेषो वाच्य इत्यादौ वाच्यत्वव्यतिरेको यत्र निरूप्यस्तस्य वाच्यत्वावाच्यत्वयोर्व्याघात इत्यर्थः । न नु धर्म्मत्वात्तस्यापि व्यतिरेकः साध्यः, तर्हि धर्म्मत्वस्य कुतो व्यतिरेको, तदेव केवलान्वयि, केवलान्वयित्वं चात्यन्तात्यन्ताभावाप्रतियोगित्वमिति ।

प्रक्रियाप्रकरणारम्भप्रयोजनमाह रूपरूपिणामिति । धर्म्मधर्म्मिणामित्यर्थः । गुणतद्वतामित्यादिगोवृषन्यायेन । अन्येषामिति । द्रव्यकर्म्मणामित्यर्थः । पौर्वापर्य्यग्रहः कार्य्यकारणभावग्रहहेतुः, स चेन्नास्ति तदा कार्य्यकारणभावोऽपि दुर्ग्रहः । समयोत्तरापरेति । यद्यपि तन्तुपटादीनां न समयसौक्ष्म्यम्, यत्र तदस्ति तत् कार्य्यं समवायिकरणं विने-

न्यायलीलावतीप्रकाशः

व्याघातादित्यर्थः । न च वाच्यत्वं कुतोऽपि व्यावृत्तं धर्मत्वादिति वाच्यम् । व्यावृत्तत्वस्याव्यावृत्तत्वे व्यावृत्तत्वमेव केवलान्वयि, व्यावृत्तत्वे च यत एव व्यावृत्तत्वं व्यावृत्तं तदेव केवलान्वयीति धर्मत्वस्यानैकान्तिकत्वादप्रयोजकत्वाच्च ॥

रूपरूपिणां धर्मिणामित्यर्थः । गुणतद्वतामिति गोवृषन्यायमाश्रित्योक्तम् , अन्येषां द्रव्यकर्मणामित्यर्थः । तन्तुपटयोः संयोगसंयोगिनोः पटस्पन्दयोश्च यद्यपि चिरेणोत्पादान्न समयसौक्ष्म्यं, तथापि यत्र तदस्ति तत्र समवायिकारणं विनोत्पादसिद्धौ ततोऽन्यत्रापि तदनुमेयं समवायिकारणाभावे किं प्रत्यासन्नमसमवायि स्यात्तदसत्त्वे च

न्यायलीलावतीप्रकाशविवृतिः

वित्यरुचेराह प्रमाजातीयेति । यद्वेति । इदं च न पूर्वास्वरसे, किन्तु तदुहरणीयमिदं वेति विकल्पे ॥

---

(१) भावः, अहेतुकसदातनभाववदिति मा० पु० पाठः ।

ऽपि भावस्तथेत्यात्मादितत्त्वान्यवस्थितौ न निःश्रेयसप्राप्तिरिति तत्प्रक्रियापरिच्छेदोऽयमारभ्यते ।

तत्र द्रव्यप्रक्रिया तावदणुभ्यां(१) द्व्यणुकं ततस्त्र्यणुकम् । तदसिद्धं द्व्यणुकासिद्धेरिति चेत् । न । त्र्यणुकं कार्यद्रव्येणैवारभ्यते महत्त्वात् घटादिवदिति मानात्, न चेदेवं महत्त्वं न स्यात्, अणुपरिमाणस्यानारम्भकत्वात् । अणुसंख्यैवाऽऽरभतां महत्त्वं द्वित्वमिव द्व्यणुकमिति चेत् । न, तथासति घटेऽपि परमाणुसंघातारब्धत्वप्रसङ्गे भग्नस्य सहसाऽदृश्यत्वापत्तेः । द्व्यणुकेनापि त्र्यणुकारम्भे घटे तुल्यः प्रसङ्गः इति न, अस्ति विपक्षे बाधकम्-

---

न्यायलीलावतीकण्ठाभरणम्

ति तत्रासमवायिकारणनिमित्तकारणयोरप्यभावेऽहेतुकतायामन्यत्रापि तथेत्यर्थः । तथेतीति । अहेतुक एवेत्यर्थः ।

तदसिद्धमिति । आनन्त्यमिदमसिद्धमित्यर्थः । कार्य्यद्रव्येणैवेति । न तु परमाणुनैवेत्यर्थः । महत्त्वादिति । कार्य्यमहत्त्वाश्रयत्वादित्यर्थः । महत्त्वं न स्यादिति । त्रसरेणोरिति शेषः । अणुसंख्येति । परमाणुगतं बहुत्वमित्यर्थः । द्वित्वमिव द्व्यणुकमिति । परिमाणमिति शेषः । तथासतीति । महतोऽपि परमाणुभिरारम्भे सतीत्यर्थः । तुल्यः प्रसङ्ग इति । भग्नस्य सहसाऽ-

न्यायलीलावतीप्रकाशः

निमित्तकारणमपि किमुपकुर्यादिति भावः । आत्मादीति । कार्यकारणभावाभावे ज्ञानादिसमवायिकारणत्वेनात्मासिद्धेरित्यर्थः । तत्परिच्छेदो हेतुफलभावनिश्चयपरिच्छेद इत्यर्थः ।

ततस्त्र्यणुकमित्यर्थः । कार्यद्रव्येणैवेत्येवकारोऽकार्यद्रव्यमात्रव्यावृत्तिपरः, अवयवसंयोगादेरपि तद्धेतुत्वात् । महत्त्वादिति । कार्यमहत्त्वादित्यर्थः तच्चाक्षुषद्रव्यत्वात् सिद्धम् । अणुपरिमाणेति । प्रचयस्य तत्राभावादिति शेषः । अणुसंख्येति । परमाणुवृत्तिबहुत्वमित्यर्थः । तथासतीति । घटावयवानां परमाणुत्वादित्यर्थः । द्व्यणुकेनेति । यथा परमाणुभिस्त्र्यणुकारम्भे घटोऽपि तैरेवारभ्येतेत्युक्तः प्रसङ्गः तथा द्व्यणुकेनापि तदा-

न्यायलीलावतीप्रकाशविवृतिः

परममहति व्यभिचार इति विशिनष्टि कार्येमहत्त्वादिति । आरम्भक-

---

(१) अणुभ्यामिति मा० पु० पाठः ।

आरम्भकसंख्याप्रकर्षतारतम्यं क्वचिद्विश्रान्तं तारतम्यत्वात्, न चैकं वस्तु द्रव्यारम्भकमिति द्वितीयारम्भकत्वाद्द्व्यणुकसिद्धिः । न चैवं कदाचित्त्र्यणुकं परमाणूपादानकम्, त्र्यणुकोपादानकस्य तदुपादानकत्वानुपपत्तेः, 'न हि तन्तूपादानकस्य पटस्य कदाचिदंशूपादानकत्वं सिद्ध्यती'ति किरणावलीकारः । तत्र द्वितीयारम्भकत्वेऽप्यणुद्वयारम्भकत्वस्यासिद्धेः, द्वितन्तुकेन सिद्धसाधनात्, जलावयविनस्तदवयवानां च जलजातीयजन्यतोपल-

---

न्यायलीलावतीकण्ठाभरणम्

दृश्यत्वप्रसङ्ग इत्यर्थः । नचैकमिति । एकेनैवावयवेन न द्रव्यारम्भः तत्र संयोगस्यासमवायिकारणस्यानुत्पत्तेरित्यर्थः । एकतन्तुकस्तु पटो न भवत्येवेति भावः । अनियमारम्भमाशंक्य तन्तुपटादौ नियमारम्भदर्शनान्निरस्यति नचैवमिति । एतावता अवयवद्वयारम्भः परं सिध्यति न तु परमाणुभ्यामारम्भ इति कथं द्व्यणुकसिद्धिरित्याह तत्रेति । व्यभिचारमाह जलावयविन इति । एकजातीयेन चेदवयवावयविनावारभ्येते

न्यायलीलावतीप्रकाशः

रम्भे घटस्यापि तैरारम्भादुक्तः प्रसङ्गः स्यादित्यर्थः । आरम्भकेति । आरम्भकसङ्ख्यात्वं सजातीयनिरूपितोत्कर्षापकर्षोभयानाश्रयवृत्ति उत्कृष्टवृत्तिपरिमाणारम्भकवृत्तिसामान्यत्वात् महत्त्ववदित्यर्थः । अतो न गुरुत्वतारतम्येनानैकान्तिकम् । एवं—क्वचित् त्र्यणुकोपादानकत्वे सतीत्यर्थः । व्यभिचारमाह जलावयविन इति । नन्वेवमप्येकजातीयेनाव-

न्यायलीलावतीप्रकाशविवृतिः

संख्यात्वमिति । परिमाणाऽसमवायिकारणीभूतसङ्ख्यात्वमित्यर्थः । न तु समवायिकारणवृत्तिसंख्यात्वमित्यर्थे द्व्यणुकत्रयेऽपि त्र्यणुकारम्भे त्रित्वसत्त्वेन सिद्धसाधनादिति केचित् । तन्न, तथासति द्वितन्तुकेन सिद्धसाधनादिति मूलविरोधात्, तस्मादसमवायिकारणतापर्याप्त्यधिकरणतावच्छेदकसंख्यात्वमित्यर्थो द्रष्टव्यस्तेन न पूर्वापरदोषः सजातीयेति । यद्यपि संख्यापरिमाणसाधारणावनुगतावुत्कर्षापकर्षौ नस्तः, तथाप्युत्कर्षादिशब्दवाच्यत्वेनैवानुगतयोस्तयोः साध्यत्वेऽ, सामान्यं च स्वेन धर्मेण विवक्षितम्, स्वपदं च समभिव्याहृतपरम् । अत्रानुत्कर्षानाश्रयत्वमादायैव त्र्यणुकपरिमाणमादाय द्व्यणुकः स्व-

म्भाच । निरुपाधिसम्बन्धबलेन द्व्यणुकस्य कार्यद्रव्योपादानक-त्वसिद्धिरस्त्विति चेत् । न । महदुपादानकत्वस्यापि सिद्धिप्र-संगात् । तत्र य उपाधिः स इहापि भविष्यतीति । बाधेन

---

न्यायलीलावतीकण्ठाभरणम्

तदाऽवयवावयविभ्यामेकजातीयमारभ्यत इत्यर्थः। महत्कार्य्यं का-र्य्यद्रव्यारभ्यमेवेति व्याप्तिबलाद् द्व्यणुकासिद्धिरिति शङ्कते निरुपाधी-ति । महत्कार्य्यं महदारभ्यमेवेत्यपि व्याप्तिरेवेति द्व्यणुकसिद्धिरेवेति परिहरति नेति । बाधेनाऽत्रेति । महत् महदुपादानकमेवेत्यत्र पक्षेतरत्व-

न्यायलीलावतीप्रकाशः

यवावयविनौ जन्येते इत्यनेनैकजातीयमवयवावयविभ्यां न जन्यत इत्य-त्र व्यभिचारो नोद्भावितः। अत्राहुः—एकजातीयेन यद्यवयवावयविनौ जन्येते तदाऽवयवारम्भकेणावयविजातीयमारभ्यत इत्यपि सिध्य-तीति भवति व्यभिचारः। ननु विपक्षबाधकाभावेऽपि निरुपाधिस-हचारदर्शनव्यभिचारादर्शनाभ्यां व्याप्तिर्गृह्यत इत्याह. निरुपाधीति। अतिप्रसङ्गान्न ततो व्याप्तिग्रह इत्याह महदिति । नहि बाधेनैवोपाधि-

न्यायलीलावतीप्रकाशविवृतिः

स्थः। यद्यप्यपकर्षपदं व्यर्थं, तथापि विशिष्टाभावत्वेनाव्यर्थता । क्वचि-दपकर्षपदशून्यः पाठः। हेतौ च परिमाणारम्भके प्रचयाख्यसंयोगे स-र्वोत्कृष्टे सर्वापकृष्टे च विद्यमाने असाधारणधर्मे स्वनिरूपितोत्कर्षापक-र्षयोरप्रसिद्ध्या साध्याग्रहेण व्याप्तिग्रह इत्युत्कृष्टापकृष्टत्वं विशेषणम्। न च परिमाणारम्भकवृत्तित्वविशेषणं व्यर्थमिति वाच्यम्। अवयविगुरु-त्वादौ व्यभिचारवारकत्वात्, सर्वापकृष्टावयविगुरुत्वे मानाभावात्, स-माहारगुरुत्वस्यैव तुलादिपरिच्छेद्यत्वात्, अवयविगुरुत्वस्य सर्वस्य तु-ल्यरूपत्वात्, उत्कर्षापकर्षयोश्च परमाणुगुरुत्वापेक्षया तत्रापि सम्भवा-त्, सुवर्णतूलकयोर्गुरुत्वविशेषानुभवात्। वस्तुत उत्कृष्टापकृष्टपरिमा-णं तदारम्भकवृत्ति सामान्यत्वादिति हेतुः। परिमाणे उत्कृष्टेत्यादि-विशेषणान्न प्रचयाख्यसंयोगवृत्तिजातिविशेषे व्यभिचारः। अत एव गुरुत्वतारतम्यविशेषेऽपि न व्यभिचारः, परिमाणारम्भकत्वघटितहे-तोस्तत्राभावात्। आरम्भकत्वं च समवायिकारणत्वमतो न द्रव्यवृत्ति-जातावप्रसिद्धिनिबन्धनव्याप्तिग्रहाभावाद्दोष इति संक्षेपः। द्व्यणुकोपादा-

---

( ३ ) तुल्यतापसङ्गः इति नास्ति विपक्षे बाधकम् इति मु० प्र० पाठः।

तत्र(१) साध्येतरत्वमुपाधिरवधार्यत इति चेत्। न, अबाधेऽपि तत्प्रसङ्गात्। तथा सत्यनुमानोच्छेदप्रसङ्ग इति चेत्। अस्तु तर्हि महदुपादानकत्वं कार्यद्रव्योपादानकत्वं प्रत्युपाधिः, तत्कुतो द्व्यणुकसिद्धिरिति।

अत्रोच्यते। कार्यद्रव्योपादानत्वं प्रति महद्द्रव्योपादानकत्वस्योपाधित्वनिर्णयहेतोस्तर्कस्याभावात्। परिमाणत्वावान्तरसामान्यस्य महत्त्वाद्यवान्तरसामान्यव्यतिरिक्तस्य

---

न्यायलीलावतीकण्ठाभरणम्

मुपाधिरित्यर्थः। यत्र कार्य्यद्रव्योपादानत्वं घटादौ तत्र महदुपादानत्वमित्याह अस्तु तर्हीति।

साध्यव्यापकताग्राहकस्तर्कः प्रकृते नास्तीत्याह—कार्य्यद्रव्येति। द्व्यणुकसिद्धौ व्याप्त्यन्तरमुपष्टम्भकमाह परिमाणेति। परिमाणत्वव्याप्यजातेः कार्य्याकार्य्यवृत्तित्वध्रौव्यामित्यणुत्वमपि कार्य्याकार्य्यवृत्ति स्वीकर्त्तव्यमित्यर्थः। परममहत्त्वे व्यभिचारवारणायाह महत्त्वाद्यवान्तरेति। परमाणुत्वं न जातिरिति भावः। तत्प्रतिबन्धकस्योपाधेरित्यर्थः। कार्य्यद्रव्योपादानकत्वे साध्ये महत्त्वोपादानकत्वं

न्यायलीलावतीप्रकाशः

रुध्यीयत इत्यभिप्रेत्याह अबाधेपीति।

उपाधित्वेति। नहि सहचारदर्शनव्यभिचारदर्शनाभ्यामेवोपाधेः साध्यव्यापकत्वं गृह्यते पक्षेतरत्वोपाधिनाऽनुमानमात्रोच्छेदापत्तेः, बाधोन्नीतपक्षेतरत्वे चानुकूलतर्कोऽस्त्येवेति साध्यव्यापकत्वनिश्चय इत्यर्थः। न केवलमनुकूलतर्काभावः प्रतिकूलतर्कोऽप्यत्र इत्याह परिमाणत्वेति। परिमाणत्वावान्तरसामान्यं महत्त्वाद्यवान्तरेति। तथा विभुत्वादि न च कार्याकार्यवृत्तीत्यत उक्तं

न्यायलीलावतीप्रकाशविवृतिः

परममहत्त्वमित्यर्थः। नकत्वे सतीत्यनन्तरमपीति शेषः। विभुत्वमिति। नचैवमप्यादिपदं क्वचिद्वितस्याादित्वमिति पाठः। स तु सुगम एव। व्यभिचारवारकत्वात्, आमूले व्यर्थम्, परमाणुपरिमाणमात्रवृत्तिजातौ तदव्याप्यत्वस्याप्रिमादिपददाने च परिमाणत्वव्याप्यत्वस्य लाभेन

---

(१) बाधेनात्रेति भिन्नसम्मतः पाठः।

कार्याकार्यव्यक्तिवृत्तित्वस्योपलब्धेर्महत्त्ववत्तत्प्रतिबन्धकस्य च प्र-

---

न्यायलीलावतीकण्ठाभरणम्

यद्युपाधिः स्यात्तदाऽणुत्वस्य जातेः कार्याकार्यवृत्तित्वं यत् सुदृ-ढप्रमाणावधृतं तन्न स्यादिति प्रतिकूलतर्कपराघात इत्यर्थः । तथाच

न्यायलीलावतीप्रकाशः

त्वाणुत्वसामान्यं कार्याकार्यवृत्ति परिमाणत्वसाक्षाद्व्याप्यजातित्वात् महत्त्ववदिति कार्याणुत्वाश्रयत्वेन द्व्यणुकसिद्धिरित्यर्थः । तत्प्रतिबन्धक-स्य चेति । परिमाणत्वसाक्षाद्व्याप्यं सामान्यं कार्याकार्यवृत्तीति व्याप्ति-रणुत्वसामान्यस्य कार्याकार्यवृत्तितायां स्यादिति महत्त्वोपाधौ प्रति-कूलतर्कस्तदाहृतिबलेन तत्प्रतिबन्धकस्य कार्यमहतः कार्योपादान-त्वव्याप्तिप्रतिबन्धकस्योपाधेर्महदुपादानकत्वरूपस्य निरासादि-त्यर्थः । न च कार्याकार्यवृत्तित्वे साध्ये महदवयवारब्धसमवेतवृत्ति-त्वमुपाधिः, ज्ञानत्वजातावेव साध्याव्यापकत्वात् । न च साधनाव-च्छिन्नसाध्यव्यापकत्वं, व्यर्थविशेषणत्वात् । ननु द्व्यणुकं न कार्यमा-त्रद्रव्योपादानकं परमाणुनापि तज्जननात्, न चेदमसिद्धम्, आरब्धा-ऽऽरम्भत इति पक्षानाश्रयणात् । न च तत्र मानाभावः, एकतन्तुकपट स्याव्यक्षसिद्धत्वात्, तत्र यद्यंशुसंयोगः कारणं न स्यात् तदा एक स्मिन् तन्तौ संयोगाभावेनासमवायिकारणाभावात् स नोत्पद्येत, न च तत्र तन्तुरेव नष्टः, स एवायं तन्तुरिति प्रत्यभिज्ञानात्, अत एवा-

न्यायलीलावतीप्रकाशविवृतिः

वलेन लाभात् परमाणुपरिमाणवृत्तिपरिमाणत्वसाक्षाद्व्याप्यजातित्वे-नैव च पक्षतेति न पक्षविकल्पावकाशः । महदवयवारब्धेति । जातित्व पक्षधर्मावच्छिन्नसाध्यव्यापकोऽयमुपाधिरन्यथा परमाणुद्व्यणुकसंयोगे साध्याव्यापकत्वात् । व्यर्थविशेषणत्वादिति । महत्पदार्थान्तर्भावेन व्या-पकत्वाग्रहात् तत्परित्यागे च साधनव्यापकत्वादिति भावः । आर-ब्धारम्भकवादस्य प्रकृतसङ्गतत्वमाविष्करोति ननु द्व्यणुकमिति । न च तन्तुरेवेति । तथाचांशव एव नष्टास्तन्तव एव पटारम्भका इति नारब्धा रम्भकवादसिद्धिरित्यर्थः । अत एवेति । यत एवारब्धारम्भन्ते अत एव महापटसत्त्वदशायामवान्तरावयवश्रृङ्खलादेरपि धीः सङ्गच्छते, अन्यथा पटस्य तन्तुजन्यत्वनियमेन साऽनुपपन्नेति भावः । यदि च तत्राश्रृङ्खलादिधीर्न प्रमाणं तदा प्रत्यक्षमात्रप्रमाणकोऽवयवी क्वापि न

तिकूलतर्काहतिबलेनैव उपाधेरपि निरासात्, अन्यथेन्द्रियादे-रप्यसिद्धिप्रसङ्गात्, कार्यस्य तेजसो द्रव्योपादानत्वानियमात्। कृत्स्नैकतन्तुस्वभावस्य पटस्य स एवायं क्षण इति प्रत्यभि-

---

न्यायलीलावतीकण्ठाभरणम्

पक्षे एव द्व्यणुके साध्याव्यापकत्वमुपाधेरिति भावः। अन्यथेति। कार्यं तेजो द्रव्योपादानकमेव कार्या च पृथिवी द्रव्योपादानिकैवेत्यादिनियमदर्शनादिन्द्रियमपि न सिध्येदित्यर्थः। इदानीमारभ्यारम्भकवादमाश्रयं निराकरोति कृत्स्नैकेति। कृत्स्न एक एवतन्तुस्वभावो यः पटस्तस्यांशुकतन्तुभ्यामारम्भो वाच्यः, अन्यथाऽसमवायिकरणसंयोगानुपपत्तेः, नहि स एव तन्तुस्तेनैव तन्तुना संयुज्यते। न च समवायिकारणेनापि कथं संयुज्यतामिति वाच्यम्। अवच्छेदभेदेन तथासम्भवात्। न च तत्र तन्तुर्नष्ट एव तथाचांशुभिरेव पटारम्भ इति वाच्यम्, स एवाऽयं तन्तुरिति प्रत्यभिज्ञानात्। न च तन्तु पटयोः कथमंशौ वृत्तिरिति वाच्यम्। न्यूनदेशेन तन्तुना पटसामानाधिकरण्यसम्भवादिति शङ्काभागः। यावति देशे तन्तुस्तावति

न्यायलीलावतीप्रकाशः

न्तरावयविद्वयादिधीरपि सङ्गच्छते, अन्यथाऽवयविमात्रोच्छेदात्, न चैकत्रावयविद्वयविरोधः, युगपदनेकतन्तुसंयोगे द्वितन्तुकाद्यनेकपटसामग्रीसत्त्वात्। न च परस्परसामग्रीप्रतिबन्धः कल्प्यः महापटोत्पत्तावपि तत्कल्पनापत्तेरित्यभिप्रेत्याह कृत्स्नैकेति। कृत्स्नेन समग्रेण महता एकेन तन्तुना जनिते पट इत्यर्थः। अखलपदं तन्तुपरम्, न्यूनाविरिक्तदेशत्वेऽप्यन्यत्रविरोधाभावे स्वदेशे मूर्त्तयोः समानदेशत्वे विरोधः स्यादेव। यदि च पटस्तन्तुसमानदेशः स्यात् मूर्त्तो न स्यात्। न चान्यूनानतिरिक्तदेशत्वमुपाधिः, अंशुरूपादौ साध्याव्यापकत्वात्,

न्यायलीलावतीप्रकाशविवृतिः

सिध्येदित्याह अन्यथेति। युगपदनेकेति। तथाचानेकपटोत्पत्तेः सामग्रीप्रमाणकत्वान्न विरोधस्तत्र प्रमाणाभावमूलत्वादिति भावः। महापटोत्पत्ताविति। तत्रापि खण्डपटसामग्र्या प्रतिबन्धकतापत्तेरिति भावः। प्रकृतसङ्गत्यर्थमाह अखलपदमिति। यदि चेति। अत्रापादके तन्तुसमानकालीनत्वं तन्तुभिन्नत्वं चेति विशेषणमतो नोत्तरकालीनद्रव्यान्तरेण तन्तौ व्यभिचारः। न चान्यूनेति। तत्त्वन्यूनेत्यर्थः। अंशुरूपादाविति।

ज्ञानादारभ्याप्यारभन्ते । न च मूर्तानां समानदेशताव्याघातः; अन्यूनानतिरिक्तदेशस्य तथात्वादिति चेत् । न । अन्यून एव

---

न्यायलीलावतीकण्ठाभरणम्

देशे पटवृत्तिं विरुन्ध्यादेव, तथाच कथमारभ्यारम्भकत्वम् ? यदि

न्यायलीलावतीप्रकाशः

द्रव्यस्य स्वाश्रये द्रव्योत्पत्तिप्रतिबन्धकत्वाच्च, अन्यथा चतुस्तन्तुकादिकाल एव चतुस्तन्तुकान्तरोत्पत्तिप्रसङ्गः, नच प्रागभावाभावान्नोत्पत्तिः, तैरेव विभक्तैः पुनरारम्भदर्शनात्, एकतन्तुकाङ्गीकारे त्ववच्छेदकान्तरेण तन्त्वंशुसंयोगस्यासमवायिकरणत्वं भवति, भवति ह्यङ्गुली शिरसि शरीरसंयुक्तेत्यनुभवः । यद्वा अंश्ववयवसंयोग एवासमवायिकरणम् । न चैवं पटस्यांशुवृत्तितापत्तिः, नहि यावदसमवायिकारणस्याधिकरणं तावत्कार्यस्यापि गुणादौ व्यभिचारात् । न च द्रव्यमिति विशेषणमंश्ववधिकरणत्वापादने तत्समवेतासमवेतत्वस्योपाधित्वादित्यभिप्रेत्याह अन्यून एवेति । ननु चान्यूनेऽप्यनतिरेकमादाय

न्यायलीलावतीप्रकाशविवृतिः

रूपस्यैकांशुमात्रवृत्तित्वात्तन्तोश्चांशुद्वयवृत्तित्वात्तत्रोपाध्यभावादिति भावः । द्रव्यस्येति । तथा प्रतिबन्धकताया न्यूनातिरिक्तदेशकत्वस्य गौरवेणाप्रवेशादिति भावः । अन्यथा चतुस्तन्तुकेति । यद्यपि सहोत्पत्तिप्रसङ्गेन प्रतिबध्यप्रतिबन्धकभावो गतिर्विनिगमकाभावात्तथा चाद्यप्रादिकमेव प्रतिबन्धकं, तथापि द्वितीयादिक्षणे यत्र चतुस्तन्तुकान्तरोत्पत्तिस्तत्र दृष्टस्य पटस्यैव प्रतिबन्धकत्वं न त्वदृष्टस्य गौरवादिति भावः । ननु तत्रावयवसंयोग एवाऽवयविन्युपचर्यते न त्ववयवावयविनोः संयोगस्तस्याप्राप्तिपूर्वकत्वनियमादित्यरुचेराह यद्वा अंश्ववयवेति । अंश्ववयवतन्तुसंयोग इत्यर्थः । स च नानुपपन्नस्तयोरप्राप्तत्वादिति भावः । नचैवमिति । इयं च शङ्का प्रथमकल्पाभिप्रायेण, द्वितीयकल्पे तु अंशुपदं तदवयवपरम् । यद्वा अंशुरूपं यदवयवद्वयं तत्संयोग एवासमवायिकारणं तत्रापि कारणैकार्थप्रत्यासत्तिसत्त्वादिति पूर्वफक्किकार्थः । एवञ्च उभयपक्षसाधारण एवायमाक्षेपः । नहि यावदिति शङ्काया उभयपक्षसाधारण्येऽपि यावदिति विशेषणं प्रथमकल्पाभिप्रायेण, अग्रिमकल्पञ्च तद्व्यतिरेकेणैव साधुः, अत एवोभयसाधारणो गुणादौ व्यभिचार इति ध्येयम् । तत्समवेता-

विरोधापत्तेः। संयोगे चातिप्रसङ्गात् इति द्व्यणुकादिक्रमेणा-ऽन्त्यावयविपर्यन्तमारम्भ इति द्व्यणुकसिद्धिः।

कथं पुनः पक्वघटेऽपि कारणगुणपूर्वकता रूपादीनाम्? असंभवद्विरुद्धधर्मसंसर्गो हि घटः प्रत्यभिज्ञायते, उपरिस्थितानामपाताच्च, तद्देशत्वतत्संख्यत्वतत्परिमाणत्वोपलब्धेश्च। अन्तः-

---

न्यायलीलावतीकण्ठाभरणम्

च न्यूनाधिकदेशयोः समानदेशविरोधो न स्यात्तदा शरीरदेशेऽपि घटो वर्तेत संयोगवृत्त्येत्याह संयोगे चेति।

इदानीं पाकजप्रक्रियां प्रस्तौति कथमिति। प्रयोजनमत्रापि आत्मतत्त्वज्ञानमेव कथञ्चिदन्वेष्टव्यम्-सत्यवयविनि रूपादीनामुत्पादविनाशसिद्धावात्मन्यपि ज्ञानाद्युत्पादविनाशाविति, ज्ञानं चैतन्यम्। अवयविरूपाद्यग्निसंयोगासमवायिकारणकं न वा, अग्निसंयोगासमवायिका-

न्यायलीलावतीप्रकाशः

विरोधः, अत्र तु न तथेत्याह संयोगे चेति। तथासति शरावसंयुक्तेनापि घटः संयुज्येतेत्यर्थः।

सम्प्रति किं पार्थिवरूपादीनामेव पाकजत्वं किंवा परमाणुवृत्तीनामेव तेषां पाकजत्वं न त्ववयववृत्तीनामिति विचारः। अवयविरूपादिकं तेजःसंयोगासमवायिकरणकं नवेति संशयः। प्रयोजनं त्वाश्रये सत्येव रूपाद्युत्पादनाशसिद्धौ धर्मधर्मिभेदे रूपादेः समवायिकारणजन्यत्वस्थितौ बुद्ध्यादेरपि तज्जन्यत्वस्थितावात्मासिद्धिः। अत्र पूर्वपक्षमाह कथमिति। आमपक्वावयविनोरभेदसाधकं प्रत्यक्षमाह असम्भवदिति। अनुमानमप्याह उपरीति। मूर्त्तानामिति शेषः। ननु स्थूलस्य घटादेरन्तःपाकानुपपत्त्या परमाणूनां पाकः स्यादित्यत आह अन्तःपाकस्येति। द्रव्यविरोधीति। न द्व्युकहेतोर्द्रव्यारम्भकसंयोगविरो-

न्यायलीलावतीप्रकाशविवृतिः

समवेतत्वस्येति। द्रव्यत्वपक्षधर्मावच्छिन्नसाध्यव्यापकस्येति शेषोऽतो न सत्त्वादौ साध्याव्यापकत्वम्, अन्तरावयविधीस्तु बाधकेन भ्रान्तेति भावः। तथासतीति। समवायेनैकत्र द्वयोर्मूर्त्तयोरविरोधे संयोगेनापि तथा स्यादिति शरीरावच्छिन्ने घटो वर्त्ततेत्यर्थः।

अवयविरूपत्वादिकमिति। अत्र व्यक्तिपक्षतायामंशतो बाध इति जातिपक्षता। द्रव्यारम्भकसंयोगविरोधीति। न क्रियाहेतुरित्येव प्रकृते

पाकस्यापि सच्छिद्रत्वादवयविनां स्फटिकान्तरिन्द्रियप्रवेशवत् घटे बहिःशैत्यवेदनवदुपपत्तेः। न च स्पर्शवद्वेगवद्द्रव्याभिघातादद्रव्यनाशः, द्रव्यविरोधिकर्मोत्पत्तौ मानाभावात्। कर्मत्वस्य च नभोभागविभागेनापि करकम्पे तत्परमाणुकम्पवदुपपत्तेः। न च संयोगमात्रं तद्धेतुः। पवनसंमुखधृतघटपटादेरपि नाशापत्तेः। कर्म-

---

न्यायलीलावतीकण्ठाभरणम्

रणकत्वं घटरूपादिवृत्तिर्नवेति विप्रतिपत्तिः। पीलुपाकपक्षे हि घटादेर्नाशो वाच्यः, स च कथं भवेत् यावता स एवायं घट इति प्रत्यभिज्ञा घटोपरिधृतानां शरावादीनामपि, ततः पूर्वदेश एव घटादीनां सत्त्वम्, सैव च संख्या, तावदेव च परिमाणं नोपपद्येत, परमाणुपर्यन्तं भङ्गविपर्यासासम्भवात् सर्वावयवावच्छेदेन पिठरोऽपि पाकमुपपादयति। ननु तावताधःसन्तापनेनावश्यं तत्र द्रव्यमेव लक्ष्यतीत्याह नचेति। नोदनाभिघाताभ्यां द्रव्यारम्भकसंयोगविरोधिविभागजनकमेव कर्मोत्पद्यत इत्यत्र मानाभावादित्यर्थः; ननु विभागं चेन्न जनयिष्यति तदा कर्मत्वव्याघात इत्यत आह कर्मत्वस्येति। न ह्यारम्भकसंयोगविरोधिविभागजनकत्वमेव कर्मस्वभावो, दृश्यते हि केवले परमाणावपि कर्मेत्यर्थः। परमाणुषु कर्माभ्युपगम्येदमुक्तमिदानीं स्पर्शवद्वेगवद्द्रव्यसंयोगेऽपि पिठरारम्भकपरमाणुषु कर्मैव नोत्पद्यत इत्याह नचेति। पुनः कर्माभ्युपगम्य विशिष्टकर्मोत्पादेऽनिष्टमाह— पवनेति। कर्मण एवेति। द्रव्यारम्भकसंयोगविरोधिविभागजनकस्येत्यर्थः। कारणरूपादिकं विनापि कार्ये रूपाद्युत्पत्तिमाश्रयनाशं विना-

न्यायलीलावतीप्रकाशः

धिविभागजनकत्वंनियम इत्यर्थः। कर्म चोत्पन्नं विभागजनने निरपेक्षमित्यन्यथोपपन्नमित्याह कर्मत्वस्य चेति। एवं परमाणौ कर्मोत्पत्तिमभ्युपेत्योक्तम्, इदानीं तत्र कर्मैव नोत्पद्यत इत्याह नचेति। स्पर्शवद्वेगवत्संयोगमात्रं न द्रव्यारम्भकसंयोगविभागजनकक्रियाजनकमित्यर्थः। न चाश्रयनाशं विना कथं पूर्वरूपादिनाशः कथं वा कारणरूपा-

न्यायलीलावतीप्रकाशविवृतिः

विवक्षितमन्यथा पूर्वकल्पभेदानुपपत्तेः। द्रव्यारम्भकेत्यादि तु परस्य क्रियामात्र एव तथात्वाभ्युपगमेन स्वरूपनिर्देशपरम्।

ण एवोत्पत्त्यसिद्धेः । नियतहेतुकुलालादिव्यतिरेकेऽपि जन्मवत्त्वस्यापि संभावितत्वात् । न चैवं द्व्यणुकनाशसिद्धिः, मानाभावात् । रूपं चाश्रयनाशादेव विनश्यति, कार्यरूपत्वात् नष्टघटरूपवदि(१)त्यस्यापि प्रत्ययस्य प्रत्यभिज्ञाननिर्दलितत्वात्, विपक्षे बाधकाभावाच्च पाकजा एवैति इति युक्तमिति चेत् । न ।

सूचीसंभेदनिर्दलितावयवारब्धपरम्परानष्टघटे घटान्तरोदयवत्

---

न्यायलीलावतीकण्ठाभरणम्

पि तुल्यन्यायतयोपपादयन्नाह नियतेति । पैलुकमते क्षणादिव्यतिरेकेणैव घटाद्युत्पत्तिवदेतत् स्यादित्यर्थः । पिठरनाशेऽपि द्व्यणुकादिकं नश्यतीत्यत्र न मानं, तथाच पीलुपाकपक्षोऽनुपपन्न एवेत्याह नचैवमिति । नन्ववयविरूपमाश्रयनाशमात्रनाश्यमिति कथमग्निसंयोगान्नाशः स्यादित्याशंक्याह—रूपमिति । स एवायं घट इति प्रत्यभिज्ञानाऽन्यथानुपपत्त्या व्याप्तेरेवानभ्युपगमादित्यर्थः । पाकजा एवैत इति । पिठररूपादय इत्यर्थः ।

पिठरपाकसाधकानां हेतूनामनैकान्तिकत्वमाह—सूचीति । सूच्यग्रव्यतिभेदेन यत्र द्व्यणुकभेदमात्रेण स्थूलावयविपर्य्यन्तं नाशः तत्र घटान्तरोत्पत्तिस्त्वया वाच्या, तथा च तत्रैव प्रत्यभिज्ञायमानत्वादयो हेतवोऽवयविस्थैर्य्यसाधका व्यभिचारिण इत्यर्थः ।

न्यायलीलावतीप्रकाशः

दिकं विना कार्यरूपाद्युत्पत्तिस्तयोस्तत्कारणकत्वादित्यत आह नियतेति । यथा परमाणुपाकपक्षे स्वहेतुकुलालादिव्यापारादिकं विना घटाद्युत्पत्तिस्तथावयविपाकपक्षेऽपि क्लृप्तहेतुं विनैव तयोरुत्पत्तिः संभाव्यत इत्यर्थः । नचैवमिति । एवमभिघातादेर्द्रव्यनाशकत्वेऽपि द्व्यणुकनाशे मानाभावः, स्थूलद्रव्यनाशेऽपि तदुपपत्तेरिति द्व्यणुकरूपादीनामेव न कारणगुणपूर्वकत्वनियम इत्यर्थः ।

उपरिस्थितानामित्यनुमानमनैकान्तिकयन्नाह सूचीति । प्रत्यभि-

न्यायलीलावतीप्रकाशविवृतिः

स्थूलद्रव्यनाशेऽपीति । अभिघातस्य सूक्ष्मनाशकत्वादित्यर्थः । एवञ्च सिद्धमवयविरूपं पाकजमिति भावः ।

---

(१) अत्र न दृष्ट घटवदिति मा०पु०पाठः प्रामादिको भाति ।

सर्वस्योपपत्तेः। विरुद्धधर्माध्यासस्यापि(१) काठिन्याकाठिन्यस्य द-र्शनात्। न च स्पर्शभेदोऽसावन्य एव जायत इति वाच्यम्। चक्षु-षापि तत्प्रतीतेस्ततः संयोगभेद एवायम्, स च प्राक्तनो ना-स्त्यनुपलब्धेः। तन्नाशाय च क्रियैव दहनस्य कल्पनीया, दृष्ट-त्वात्। स्पर्शवद्वेगवत्पवनसंवलनबलेन च पिठरोदरकुहरसंचारि-जलतण्डुलोन्मथनविक्लेदकारिणि ज्वलज्ज्वलनज्वालाकलापे का संभावना पिठरावयवानां, तथा तन्मध्यपतितत्र्यणुकस्यापि का जीवितव्यवस्थितिरित्यनुमानमप्युदयमासादयति। तथाप्येक

न्यायलीलावतीकण्ठाभरणम्

किञ्च प्रत्यभिज्ञापि विरुद्धधर्माध्यासदर्शनादप्रमाणमित्याह—विरुद्धे-ति। ननु काठिन्यं स्पर्शभेद एव अग्निसंयोगाद् घटे जायते इत्यत आह नचेति। संयोगभेद इति। अवयवसन्तानविशेष इत्यर्थः। ननु सोऽप्यासीदेवेत्यत आह स चेति। पूर्वसन्तानादिलक्षण एवायमित्य-र्थः। ननु पूर्वव्यूहनाशः कथमित्यत आह तन्नाशाय चेति। ननूक्तं द्र-व्यारम्भकसंयोगनाशकविभागजनिका क्रिया नाग्निसंयोगमात्रजन्ये-त्यत आह स्पर्शवदिति। यादृशेनाग्निसंयोगेन पिठरान्तर्वर्त्तितण्डुलादी-नामप्यूर्ध्वगमने विभेदस्तादृशेन पूर्वसंयोगद्रव्यारम्भकसंयोगना-शः कथं न स्यादित्यर्थः। अनुमानमपीति। स्पर्शवद्वेगवत्प्रबलपव-नाभिहततादृशज्वालाकलापाभिघातोऽभिहन्यमानपार्थिवावयवा-रम्भकसंयोगनाशकविभागक्रियाजनकः विशिष्टाभिघातत्वात् ज्वल-द्वह्निमध्यवर्त्तिपटादिप्रतियोगिकवह्न्यभिघातवदित्यनुमानवादित्यर्थः। यद्वा विवादपदमवयविरूपादि आश्रयनाशकनाश्यमवयविरूपादित्वात्

न्यायलीलावतीप्रकाशः

ज्ञाने विशेषणासिद्धिमाह विरुद्धधर्मेति। ननु काठिन्यं स्पर्शविशेषः स चैकस्मिन्नेवावयविनि पाकज एवेत्यत आह—नच स्पर्शेति। काठिन्यात्मकसंयोग एवावयवानां द्रव्यारम्भकस्तथाच तद्भेदे असमवायिकारणनाशादवश्यं पूर्वद्रव्यनाश इत्यर्थः। तन्नाशा-येति। द्रव्यारम्भकसंयोगनाशायेत्यर्थः। अनुमानमपीति। रूप-माश्रयनाशादेव नश्यतीत्यनुमानमपीत्यर्थः। युक्तञ्चैतत् कार्या-

(१) धर्मस्यापी.ति मा०पु०पाठः।

एव संयोगः किमिति नोदननाशहेतुः ? कल्पनालाघवात्। पूर्व-ध्वंससहकारिणा तज्जनने युगपदुत्पादस्यानुपपत्तेः, अन्त्य-स्योपान्त्यनाश्यत्वाच्च, संस्कारस्यानुभवध्वंसिनः स्मृतिरूप-

न्यायलीलावतीकण्ठाभरणम्

जलावयविरूपादिवत्। यद्वा विवादपदं पार्थिवावयवरूपादि कारणरू-पादिपूर्व्वमवयविरूपादित्वात् जलावयविरूपादिवदित्यनुमानमित्य-र्थः। पुनरन्यस्मादग्निसंयोगात् रक्तादीनामिति मूलमाक्षिपति तथा-पीति। एक एव ह्यग्निसंयोग उत्पादको विनाशकस्तदा उत्पादविना-शयौगपद्यं स्यादित्यत आह पूर्व्वेति। ध्वंसे प्रतियोग्यपि कारणमिति कथं स्यादित्यर्थः। यद्वा पूर्वनाशाग्निमरूपाद्युत्पादयौगपद्यमाशंक्याह पूर्व्वध्वंसेति। पूर्वरूपे सत्येव कथं रूपान्तरोत्पत्तिरित्याशंक्याह पूर्वध्वंसे-ति। ननु एक एवाग्निसंयोगो रूपाद्युत्पाद्य नाशयिष्यतीति न युक्त-मत आह अन्त्यस्येति। उपान्त्यशब्दोऽन्त्यं शब्दमुत्पाद्यैव नाशयतीति दृष्टचरमेवैतदित्यर्थः। व्यक्त्यभेदेनोत्पादकत्वं नाशकत्वं च एकस्येति दर्शयित्वा व्यक्तिभेदेन दर्शयति संस्कारस्येति। यथा संस्कारः पूर्वज्ञानं

न्यायलीलावतीप्रकाशः

स्तराविरुद्धेनैव परमाणुनाऽग्निसंयोगो रूपादीनां नाशक इति केवले परमाणुपाके दृष्टत्वात् अन्यत्रापि तदनुमानात्, या-दृशोऽग्निसंयोगो रूपादेरुत्पादकस्तादृश एव नाशक इत्येकपर-माणुपाके दृष्टत्वाच्च, सर्वदेशाग्निसंयोगश्च तथा, न च परमा-ण्वन्तरसंयुक्ते परमाणौ तादृशोऽग्निसंयोगः सम्भवति मूर्त्तानां समा-नदेशताविरोधात्। तस्मादण्वन्तरसंयोगे नष्टे द्व्यणुकप्रध्वंससमस-मयो योऽग्निसंयोगस्तस्माद्रूपादिध्वंसः पुनरन्यस्मादग्निसंयोगात् पाकजा जायन्त इति मूलग्रन्थमाक्षिपति तथापीति। नन्वेवं पूर्वरूपना-शाग्रिमतदुत्पादयोर्यौगपद्यापत्तिरित्यत आह पूर्वेति। रूपादिमति रूपान्तरानुत्पत्तेः पूर्वेषां रूपादीनां प्रतिबन्धकत्वेन पूर्वरूपादिध्वंसो-ऽग्रिमतदुत्पत्तिहेतुरिति नोक्तदोषः। एतदेवैकस्यैवोत्पादकत्वं विनाश-कत्वमिति दृष्टान्तेन द्रढयति अन्त्यस्येति। यथाप्युपान्त्यशब्दजन्योऽन्त्यः

न्यायलीलावतीप्रकाशविवृतिः

न च परमाण्वन्तरसंयुक्त इति। न च निबिडयोरेव तथा विरोध इति वाच्यम्। परमाणोर्निबिडत्वात् स्वच्छयोरेव तथा विरोधाभावा-दिति भावः। फलप्रयुक्तं मत्वाह असमभिसन्धिरिति। एतत्पाककालिकेति।

ज्ञानजननदर्शनाच्च । 'एवमेव किन्त्वन्यताव्यवहार उपचारादि'ति व्योमाचार्याः । निवर्तकजनकदहनयोर्भेदेन वेति तत्रैव कालग- णना ग्राह्या ।

---

न्यायलीलावतीकण्ठाभरणम्

नाशयत्युत्तरमुत्पादयति तथा प्रकृतेऽपि स्यादित्यर्थः । उपचारादिति । निवर्त्तकत्वजनकत्वलक्षणोपाधिकृतो भेदः, एकत्रैवाग्निसंयोगे उप- चर्य्य मूले तथाभिधानमित्यर्थः । स्वमतमाह—निवर्त्तकेति । यद्दहनसं- योगेन पूर्वरूपादिकं नष्टं तदन्यदहनसंयोगेन रक्ताद्युत्पत्तिर्वाच्या ते- जसो वेगातिशयेन तावत्कालमेकत्रानवस्थानादित्यर्थः । रूपादिध्वं- सको नाग्निसंयोगो रूपाद्युत्पादकः रूपादिनाशकाग्निसंयोगत्वात् सिन्दूरादौ प्रथमाग्निसंयोगवदिति, नहि तेनैव तत्र रक्तसारजननं चि- रेणैतदुत्पत्तेः। किञ्च उत्पादविनाशकत्वं विनाशोत्पादकत्वं वा तेजः- संयोगस्य शीलं भवेत् ? आद्ये, घटादीनां नीरूपत्वप्रसङ्गः । द्वितीये महाप्रलयेऽपि रूपादिस्थितिप्रसङ्ग इति भावः । तत्रैवेति । विभागज

न्यायलीलावतीप्रकाशः

शब्दस्तन्नाश्यश्च, तथापि ध्वंसे प्रतियोगिनोऽपि हेतुत्वान्नोत्पत्ति- विनाशयौगपद्यमित्यर्थः । निवर्त्तकेति । अयमभिसन्धिः—परमाणौ रक्तं रूपमेतत्प्राक्कालिकरूपध्वंसकाग्निसंयोगभिन्नाग्निसंयोगजन्यं पार्थि- वपरमाणुरूपत्वात् उत्तररूपवत् । एवं पूर्वरूपेष्वपि साध्यम् । यद्वा पर- माणुरूपनाशो न रूपजनकाग्निसंयोगजन्यः रूपनाशत्वात् अवयवि- रूपनाशवत्। नचेदमप्रयोजकम्, एकस्याग्निसंयोगस्य परमाणुरूपना- शकस्योत्पादकत्वासम्भवात् , एकरूपनिरूपितप्रतियोगिनो जन्यत्व- विनाश्यत्वयोरेकरूपावच्छेद्यत्वाभावात् , भावे वा परमाणुरूपत्वेन विनाश्यत्वे जन्यत्वे चाग्निसंयोगत्वेन जनकत्वे नाशकत्वे चासमवायि- कारणस्य कार्यसमानकालीनत्वेन जनितमपि रूपमग्निसंयोगेन विन- श्येतेति कारणाभावात् घटादेर्नीरूपत्वप्रसङ्गः । परमाणुरूपत्वेन जन्य- ता स्वाजन्यरूपत्वेन नाश्यतेति चेत् । जन्यपदेन यदि जन्यतावच्छे-

न्यायलीलावतीप्रकाशविवृतिः

अग्निसंयोगजन्यत्वे साध्ये सिद्धसाधनमिति रूपध्वंसकाग्निभिन्नत्वं सं- योगविशेषणम्, तथापि न दृष्टान्ते साध्यनिश्चय इत्येतत्प्राक्कालिकेति ,रूपविशेषणम् । न च पूर्वरूपे व्यभिचार इत्यभिप्रेत्य साध्यं साधयति एवमिति । जन्यपदेनेति । स्वाजन्येत्यत्र, तेनेति शेषः। यद्यपि स्वजन्यतोप-

ननु द्व्यणुकनाशानन्तरं कथं त्र्यणुकनाशः ? तस्य स्वासमवायिकारणनाशनाश्यत्वादिति चेन्न । समवायिकारणनाशेऽपि क्वचिन्नाशात् । तत्र सर्वत्रासमवायिकारणनाशपूर्वकत्वमुन्नीयत इति

न्यायलीलावतीकण्ठाभरणम्

विभागानभ्युपगमपक्षे दशक्षणा एकादशक्षणा वा प्रक्रिया आरम्भकसंयोगनाशद्रव्यनाशान्यतरापेक्षया रूपमिति मतभेदमाश्रित्य, तदनभ्युपगमपक्षे तु नवक्षणा । परमाण्वन्तराग्निसंयोगचिन्तायां पञ्चषट्सप्ताष्टक्षणगणना ग्राह्येत्यर्थः ।

आपाकनिक्षिप्तघटादीनामग्निसंयोगेनाभिघातात्मना युगपदेव सकलावयवधर्मोत्पत्तावसमवायिकारणनाशादेव घटादिद्व्यणुकपर्य्यन्तं यद्यपि नाशः सम्भाव्यते, तथापि सूचीव्यतिभेदस्थलानुरोधेन परि·

न्यायलीलावतीप्रकाशः

दकरूपवत्त्वं, तदा तदभावस्य परमाणुरूपे न प्रसिद्धिः। अथ स्वरूपविशेषस्तदाऽननुगमेनोपस्थितिरशक्या । ननु रूपादिनाशकोत्पादकाग्निसंयोगभेदे कदाचिदुपान्त्याग्निसंयोगोत्पादितरूपे अन्त्याग्निसंयोगेन च नाशिते नीरूपोऽपि घट उत्पद्येत । न च रूपादिनाशक एवोपान्त्याग्निसंयोगो भवतीति नियामकमस्ति, नाशकस्योत्पादकत्वे तु नायं दोषः। मैवम्। अव्यवहितोत्तरक्षणभाविरूपप्रागभावसहितस्यैव तस्य पूर्वरूपनाशकत्वादिति ।

द्व्यणुकनाशकात् त्र्यणुकनाशे पूर्वप्रक्रियायाः सिद्धिरिति मतमास्कन्दति द्व्यणुकनाशेति । यत्र कपालद्वयसंयोगाद्घटनाशः तत्र तथा कल्पनादित्यर्थः। क्वचिदिति । यत्र कपालनाशोत्तरं तत्संयोगनाश इत्यर्थः। ननु

न्यायलीलावतीप्रकाशविवृतिः

हितेत्यर्थे जन्यपदस्य नोक्तदोषावकाशस्तथापि तत्तदग्निसंयोगरूपत्वेन नाश्यता तत्तदग्निसंयोगत्वेन नाशकतेत्येवं गौरवम् ,रूपत्वेनैव नाश्यता रूपजनकाग्निसंयोगत्वेन च नाशकतेत्येवं लाघवमतो न रूपनाशरूपोत्पादकत्वमिति तात्पर्यम् । नीरूपोपि घट उत्पद्येतेति । उक्तक्रमेण कपालरूपनाशे उत्पन्नोऽपि घटो नीरूपः स्यादित्यर्थः । एतच्चावयविपाकपक्षे, परमाणुपाकपक्षे तूक्तक्रमेण परमाणोर्नीरूपत्वे तत्परम्परारब्धं घटादि नीरूपं स्यादित्यर्थः। अव्यवहितेति । फलमेव तथा कल्पनायां मानम्, एकस्यैव नाशकत्वमुत्पादकत्वं चेति निरस्तमेवेति भावः । पूर्वप्रक्रियाया इति । अवयव्यम्बष्टब्धपरमाणावेव पाक इति प्रक्रियायाः

चेन्न । विपक्षे बाधकाभावात् । अनियतहेतुकतापत्तिरिति चेन्न । गुणनाशस्याश्रयनाशविरोधिभ्यां नाशवदस्याप्युपपत्तेः, अन्यथा द्वित्वस्याप्याश्रयनाशनाश्यतानियमापत्तेः । शिष्टं शास्त्रे ॥

इति पाकजम् ॥

---

न्यायलीलावतीकण्ठाभरणम्

इति नेति । अनियतेति । द्रव्यनाशपूर्वकमेव कार्य्यं न नश्यति, क्वचिदसमवायिनाशः क्वचिच्च समवायिनाशः कारणमित्यनियम इत्यर्थः । दृष्टान्तेनानियतहेतुकत्वमुपपादयति गुणनाशस्येति । निमित्तकारणेतरगुणनाशत्वं द्रव्यनाशं प्रति कारणतावच्छेदकम्, यद्वा विद्यमानाश्रयवद्द्रव्यनाशं प्रत्यसमवायिकारणनाशस्तदन्यद्रव्यनाशं प्रति समवायिकारणनाश इति नानियतहेतुकत्वमिति भावः। अन्यथेति । यदि दृष्टानु-

न्यायलीलावतीप्रकाशः

द्रव्यनाशे समवाय्यसमवायिनाशयोः कारणत्वेऽननुगमः, अभावे चावान्तरजातेरभावादित्यसमवायिकारणनाश एवानुगतकारणं कल्प्यते, यत्रापि समवायिकारणनाशः तत्रासमवायिकरणनाशस्यावश्यकत्वादित्यभिसन्धायाह तत्रेति । विपक्ष इति । समवायिकारणनाशस्यापि कार्यद्रव्यनाशं प्रति हेतुत्वसम्भवादित्यर्थः । आक्षेप्ता स्वाभिसन्धिमुद्घाटयति अनियतेति । नानियतहेतुकत्वं विद्यमानाश्रयकद्रव्यनाशेऽसमवायिकारणनाशो हेतुः, एवं सासमवायिकारणकद्रव्यनाशे प्रतियोग्याश्रयद्रव्यनाशः कारणमित्यभिप्रेत्याह गुणनाशस्येति । यदि च दृष्टानुसारिण्येव कल्पना, तदा रूपादिनाशं प्रत्याश्रयनाशस्य कारणत्वावधारणात् द्वित्वादिनाशेऽपि तदेव कारणं कल्प्येतेत्याह अन्यथेति ॥

न्यायलीलावतीप्रकाशविवृतिः

इत्यर्थः । विद्यमानाश्रयकेति । अव्यवहितप्राक्कालाविद्यमानाश्रयकद्रव्यनाशेऽसमवायिनाश एवमव्यवहितप्राक्कालाविद्यमानासमवायिकद्रव्यनाशे समवायिनाशो हेतुरित्यर्थः। उभयनाशोत्तरभावितत्तद्द्रव्यनाशव्यक्तौ च तदुभयनाशो हेतुरनुगत एवेति भावः । वस्तुतः समवायिकारणनाशोत्तरभाविद्रव्यनाशे समवायिनाश एवमसमवायिनाशोत्तरद्रव्यनाशे चासमवायिनाश एवमुभयनाशजन्येप्युभयकार्यतावच्छेदकसत्वादुभयजन्यत्वमविकलम्। एवं तु गुणकर्मादिनाशस्थले सम-

गुणस्य निमित्तनाशानाश्यत्वात्, अन्यथातिप्रसङ्गात्, साध्ये-तरत्वस्य च बाधैकगम्यत्वात्, पूर्वमप्यत्रास्थितिसिद्धौ समानदेशता-

---

न्यायलीलावतीकण्ठाभरणम्

द्वारेणैव व्यवस्था तदा रूपादावाश्रयनाशनाश्यत्वं ज्ञानशब्दादौ वि-रोधिगुणनाश्यत्वं दृष्टमिति द्वित्वादावपि तथा कल्प्यतेत्यर्थः। वि-स्तरानभिधाने हेतुमाह—शिष्टं शास्त्र इति ।

द्वित्वाद्युत्पत्तिप्रक्रियामाक्षिपति गुणस्येति। द्वित्वादिकं न निमि-त्तनाशनाश्यं गुणत्वात् रूपादिवत्, ज्ञानादिवद्वेत्यर्थः । अन्य-थेति। रूपादीनामप्यदृष्टनाशनाश्यतापत्तेरित्यर्थः। न च द्वित्वादीतर-त्वमत्रोपाधिरित्याह साध्येतरत्वस्येति । निमित्तनाशनाश्यं चेन्न द्वित्वा-दि तदाश्रयनाशनाश्यस्वाच्यमुभयथापि पूर्वं द्वित्वादीनामवस्थाने, तथाचापेक्षाबुद्धिर्व्यञ्जिका वाच्या। न च समानदेशानां समानेन्द्रि-यग्राह्याणां च न प्रतिनियतव्यञ्जकव्यङ्ग्यत्वमिति व्यञ्जिकाप्यपेक्षाबु-द्धिर्न स्यादिति वाच्यम्। एकत्वैकपृथक्त्वयोरस्य नियमस्य त्वया-

न्यायलीलावतीप्रकाशः

द्वित्वादि अपेक्षाबुद्धिनाशनाश्यमित्याक्षिपति गुणस्येति । रूपादौ तथा दर्शनात् द्वित्वादावपि गुणत्वेन तदनुमानमित्यर्थः। अन्यथेति। अग्निसंयोगनाशे पार्थिवरूपादिनाशापत्तेरित्यर्थः। न च द्वित्वाद्यन्य-त्वं तत्र प्रयोजकमित्याह साध्येति। तथा द्वित्वादेरपेक्षाबुद्ध्यजन्यत्वे ततः पूर्वमपि तत्सिद्धावपेक्षाबुद्धेस्तद्व्यञ्जकत्वं, न च समानेन्द्रियग्रा-

न्यायलीलावतीप्रकाशविवृतिः

वायिनाशस्य हेतुत्वं कल्प्यमानं लाघवात्समवायिनाशोत्तरभाविसम-वेतनाशत्वावच्छिन्नं प्रत्येव कल्प्यते। एतेन समवायिकारणनाशस्य द्रव्यनाशकत्वे मानमेव नास्ति तेनासमवायिकारणनाशेनैव द्रव्यनाशादिति दूषणमलग्नकम् । न च द्व्यणुकनाशेऽसमवायिका-रणनाशस्य हेतुत्वे लाघवाद्द्रव्यनाशत्वमेव कार्यतावच्छेदकमिति न समवायिनाशव्यवधानेन द्रव्यनाशः विशेषसामग्रीविरहादिति वाच्यम्। असमवायिकारणत्वं हि प्रकृते समवायिनिरूपितकारण-ताश्रयत्वमात्रमेव प्रविष्टं लाघवादिति तदाश्रयनाशयत्वस्य समवा-यिनाशेऽपि विद्यमानत्वात्। न चैवमित एव सामञ्जस्ये किं सामान्य सामग्रीकल्पनेनेति वाच्यम्। गुणकर्मनाशादावनुगमानुरोधेन तस्याः कल्पनीयत्वादिति ब्रूमः।

दिधर्मवतोरप्येकत्वैकपृथक्त्वयोर्नियतव्यञ्जकव्यङ्ग्यत्ववद्द्वित्वमप्य-पेक्षाबुद्धिव्यङ्ग्यमिति प्रक्रियाया असिद्धिरिति चेन्न । हेतोर्व्यति-रेकग्रहे तेनैव बाधात्, अन्यथा व्यतिरेकासिद्धेः । अत एव हुता-शनवन्दीग्रहादे[illegible]जन्यं द्वित्वमिति स्थिते(१) न हि द्रव्यधी-

---

न्यायलीलावतीकण्ठाभरणम्

भ्युपगमात् तत्रापि परस्पराव्यभिचारिव्यञ्जकव्यङ्ग्यमिति कल्पना-मात्रमित्याह पूर्वमपीति । हेतोरपीति । उक्तानुमानयोर्निमित्तनाशनाश्यो न गुण इति व्यतिरेकव्याप्तिर्वाच्या, निमित्तनाशनाश्यत्वं च द्रव्ये कर्मणि चासिद्धमिति गुण एव वाच्यं तथाच बाध इत्यर्थः । अत एव तदुभ्नीतः पक्षेतर उपाधिरिति भावः । अन्यथेति । यदि द्वित्वादौ सन् वाच्य इत्यर्थः। केवलान्वयि चानुमानं त्वया नेष्यत एवेति भावः। नन्विन्धननाशनाश्ये हुताश एव व्यतिरेकप्रसिद्धिः स्यादत आह— अत एवेति । हुताशस्यान्यत्रक्लृप्तसमवाय्यसमवाय्यन्यतरनाशादेव नाशादित्यर्थः। बन्दीग्रहादिति । द्वित्वे यथा, न निमित्तनाशनाश्यत्वं त-

न्यायलीलावतीप्रकाशः

थयोः समानदेशयोः प्रतिनियतव्यञ्जकव्यङ्ग्यत्वानुपपत्तिः, तथा-विधयोरेवैकत्वैकपृथक्त्वयोः प्रतिनियतव्यञ्जकव्यङ्ग्यत्वादित्याह पूर्व-मपीति । गुणत्वेन निमित्तनाशनाश्यत्वे साध्ये निमित्तनाशनाश्य-त्वात् गुणत्वरूपो व्यतिरेको वाच्यः, निमित्तनाशनाश्यत्वञ्च द्रव्य-कर्मणोर्न दृष्टमिति गुण एव तद्वाच्यं, तथाच बाध इत्याह हेतोरिति । अन्यथेति । तथाचान्वयव्यतिरेकित्वव्याघातः, केवलान्वयी च हेतु-स्त्वया न स्वीक्रियते इत्यर्थः । ननु निमित्तनाशनाश्ये वह्नौ हेतुव्यति-रेको ग्राह्य इत्यत आह अत एवेति । तत्राप्यन्यत्रक्लृप्तसमवाय्यसमवा-यिकारणनाशस्यैव नाशकत्वात् द्वित्वादिनाश(२)वद्वह्निनाशोऽपि न निमित्तनाशजन्य इत्यपेक्षाबुद्धिकारणकं द्वित्वादीत्यर्थः । द्रव्यधीरिति ।

न्यायलीलावतीप्रकाशविवृतिः

व्यञ्जकत्वानुपपत्तिरिति । तथा च द्वित्वद्विपृथक्त्वयोस्तत्त्वानुपपत्तिरिति भावः । तथाच बाध इति । गुणान्तरेऽपि निमित्तनाशनाश्यत्वासम्भवात् द्वित्व एव तद्वाच्यमतो बाध इति भावः । द्वित्वादिनाश इव इति तन्मते दृष्टान्तः । व्यतिरेकदृष्टान्तो वा । अपेक्षाबुद्धिकारणकं द्वित्वादीति । यद्यपि

---

(१) व्यवस्थितं इति मा०पु० पाठः ।
(२) द्वित्वादिनाश इवेति विवृत्यभिमतः पाठोऽत्र बोध्यः ।

रपेक्षार्थाः, दूरादुभयद्रव्यावभासेऽप्येकत्वानवभासे तत्र द्वित्वा-
नुत्पादात्(१)। नाप्यविकल्पकैकसंख्यामतिः, संख्यायाः सविक-

न्यायलीलावतीकण्ठाभरणम्

था कृताशेऽपि न स्यादित्यर्थः। अपेक्षाबुद्धेर्निमित्तस्य नाशाच्चेत्
द्वित्वादिनाशस्तदा जनिकाप्यपेक्षाबुद्धिर्द्वित्वादीनामिति स्थिते सति
किंविषया सेति विचार्यते इत्याह अपेक्षामतीति। नहि द्रव्यधीरिति। एक-
त्वालम्बनेत्यर्थः। नानैकत्वनिर्विकल्पकमपि न द्वित्वादिजनक-
नकमित्याह नापीति। शतसंख्याद्युत्पादे सविकल्पजन्यत्वावधार-
णात् प्रत्यक्षस्थले सन्देहे आनुमानिकापेक्षाबुद्धौ तथावधारणात्।

न्यायलीलावतीप्रकाशः

नानैकत्वगोचरापि धीर्न निर्विकल्पकरूपेत्याह नापीति। यद्यप्येतत्प्र-
त्यक्षस्थले परस्यासिद्धम्, तथापि यत्रानुमानिक्यपेक्षाबुद्धिर्द्वित्वादिज-
निका तद्दृष्टान्तेनाऽन्यत्रापि सविकल्पकापेक्षाबुद्धिजन्यत्वं साध्यमिति
भावः। ननु द्वित्वगुणगोचरनिर्विकल्पकजन्यसंस्कारसहितमिन्द्रि-
यं 'द्वे द्रव्ये' इति विशिष्टज्ञानं जनयिष्यति प्रत्यभिज्ञाने, तत्रापि संस्कार-
सचिवस्य तस्य (तत्र) सामर्थ्यमस्तीति न तद्भ्रान्तं स्वकालीनस्यैव

न्यायलीलावतीप्रकाशविवृतिः

उक्तानुमानस्योक्तक्रमेण दूषणेऽपि अपेक्षाबुद्धिनाशो न द्वित्वनाशकः
समवाय्यसमवायिनाशगुणान्यत्वात् नाशान्तरवदित्यनुमानमविक-
लमेव, तथाप्यन्वयव्यतिरेकाभ्यामेवापेक्षाबुद्धेः कारणत्वम्। न च
व्यञ्जकतया तदन्यथासिद्धिः। दण्डादेरपि तथात्वापत्तेः, सत्कार्य
वादापत्तेश्च। नचैवमपि तन्नाशस्य द्वित्वनाशकत्वे मानाभावः।
द्वित्वस्य स्थायित्वे एकत्वबुद्धयाद्यनवस्थायामपि प्रत्ययापत्ते
स्तज्ज्ञानव्यञ्जकत्वस्य च निरासान्नाशस्वीकारे परिशेषेणा-
पेक्षाबुद्धिनाशस्य नाशकत्वस्वीकारादिति दिक्। तथापि यत्रेति।
न चेदमप्रयोजकम्, एकत्वगोचरज्ञानत्वेनैव जनकत्वादिति वाच्यम्।
दूराद्भेदाग्रहेऽपि धर्मिणो द्वित्वप्रत्ययापत्तेः परस्परविभेदाविशिष्टैक-
त्वज्ञानस्य कारणत्वात्। न चैवमप्येकत्वप्रकारकत्वं नापेक्षणीयमिति
वाच्यम्। भेदग्रहार्थमेवाधिकरणतावच्छेदकत्वेन तदपेक्षणादिति।
स्वकालीनस्यैवेति। यद्यप्यपेक्षाबुद्धेः क्षणत्रयावस्थानस्वीकारेऽपि द्वित्व

(१) से द्वित्वानुत्पादनात् मा० पु० पाठः।

त्पकापेक्षाबीजन्यत्वनियमात् शतसंख्यावत्, किन्त्वेकैकत्वविशिष्टद्रव्यधीः(१)। अविकल्पकज्ञानं च न संस्कारजनकं, तद्विष-

---

न्यायलीलावतीकण्ठाभरणम्

एकत्वविशिष्टधीरिति। नानेकत्वसमूहालम्बनमित्यर्थः। अनेनैव द्वित्वोत्पत्तौ द्रव्यविशिष्टज्ञानस्यानपेक्षणात् नानैकत्वसमूहालम्बनमेवापेक्षाबुद्धिस्ततो द्वित्वोत्पत्तिस्ततो द्वित्वत्वसामान्यज्ञानं ततो द्वित्वगुणज्ञानं ततो द्वे द्रव्ये इति विशिष्टज्ञानम्।अत्र च विशिष्टज्ञानसमकालं द्वित्वगुणस्य नाश इति मूले प्रक्रियोक्ता, तत्र यद्येकत्र गुणविषयैवापेक्षाबुद्ध्या द्वित्वं जन्येत तज्जनितसंस्कारेण द्वित्वगुणज्ञानकाल एव द्वित्वनाशात्तज्ज्ञानं भ्रान्तं स्यादित्यापादनमयुक्तं स्यादत आह—अविकल्पकज्ञानं चेति। द्रव्याविषयकमेकत्वगुणज्ञानमित्यर्थः। तदुक्तं मूले-'समूहालम्बनमेव संस्कारकारणं नालोचनमि'ति, तत्रालोचनपदेनानेकत्वसमूहालम्बनस्यैवोक्तत्वात्। ननु तदपि विशिष्टज्ञानत्वात् संस्कारजनकं स्यादेवेत्यत आह तद्विषयेति। केवलयोरेकत्वगुणयोः स्मरणाभावादित्यर्थः। ननु माभूत् स्मरणं तथापि तेन सं-

न्यायलीलावतीप्रकाशः

द्वित्वस्य ग्रहादित्यत आह अविकल्पकेति। स्मृतेर्विशिष्टविषयत्वनियमादित्यर्थः। ननु स्मृत्यभावेऽपि निर्विकल्पकस्य ज्ञानत्वात्संस्कारजन

न्यायलीलावतीप्रकाशविवृतिः

गुणगोचरनिर्विकल्पकेन संस्कारोत्पत्तिसमय एव नाशादिदमयुक्तम्, तथापि स्वकालीनत्वेन स्वाव्यवहितप्राक्कालत्वमेवात्रोक्तं प्रत्यक्षे विषयस्य कारणतायास्तावतापि निर्वाहात् वर्तमानत्वग्रहस्य च स्थूलोदाधिमादायापि सम्भवादिति भावः। नचैवमपि 'द्वे द्रव्ये' इति ज्ञानमसिद्धमेव विशेषणतावच्छेदकप्रकारकज्ञानाभावादिति वाच्यम्। विशेष्ये विशेषणमिति न्यायेनापि तत्सम्भवात्। नचैवं निर्विकल्पकस्य संस्काराजनकत्वे तत्कालोत्पन्नविशिष्टज्ञानमादायाप्यसङ्गतिरिति कथं पूर्वपक्षावकाश इति वाच्यम्। अनुव्यवसायातिरिक्तस्थले सामान्ययोगजभिन्नस्य संस्कारस्यैव प्रत्यासत्तित्वमित्यभिमानेन पूर्वपक्षकरणमत, सिद्धान्ते च तदभिमानखण्डन एव निर्भरत्वादिति। अविकल्पकेतीति। न चात्र मानाभावः। घटविशेष्यकघटत्वप्रकारकज्ञा

---

(१) एकत्वविशिष्टधीरिति मिश्रसंमतोऽत्र पाठः।

यत्स्मरणाभावात्, तदेकगम्यत्वाच्च। तस्य च ज्ञानत्वेन संस्कारानु-
मानस्य तु पटुत्वादशुपाधिमादायान्यथासिद्धेः। 'द्वे द्रव्ये' इति
ज्ञानसमकालं द्वित्वनाशे तज्ज्ञानं भ्रान्तं स्यादिति नापेक्षाबुद्धि-
नाशनाश्यं द्वित्वमिति चेन्न।' ज्ञानस्य तत्समये द्वित्वविशिष्टमि-

---

न्यायलीलावतीकण्ठाभरणम्

स्कारो जन्यतामित्यत आह तदेकगम्यत्वादिति। संस्कारस्येति शेषः।
ननु ज्ञानत्वाद्विशिष्टज्ञानत्वाद्वा अपेक्षाबुद्धेरपि संस्कारजनकत्वमनु-
मास्यत इत्यत आह तस्य चेति। अनेकविशेषणविशिष्टविषयत्वं पटु-
त्वं, जिज्ञासोत्तरत्वमादरः, विशेषदर्शनानन्तर्यमादिपदग्राह्यं, प्रकृते च
तदेकमपि नास्तीत्यर्थः। ननु तत्समकालं द्वित्वनाशोऽस्तु तेन किं
स्यादत आह ज्ञानसमकालमिति। तथाचापेक्षाबुद्धिव्यङ्ग्यमेव द्वित्वमित्या-
यातमिति भावः। ननु द्वित्वगुणगोचरनिर्विकल्पकजन्यसंस्कारसहित-
मिन्द्रियं 'द्वे द्रव्ये' इति विशिष्टज्ञानं जनयिष्यति, न च तद् भ्रान्तं,
स्वकालीनस्यैव द्वित्वस्य ग्रहादित्याभासेनाविकल्पकज्ञानं चेति फ-
क्किकायामाहुः प्राञ्चः। ज्ञानस्येति। नहीदानीं द्वे द्रव्ये' इति विशिष्टज्ञानं
येन भ्रमः स्यात्, किन्तु 'द्वे द्रव्ये' इति मात्रम्, 'इदानीं द्वे द्रव्ये' इति
विशिष्टज्ञानं पाकरक्ते 'इदानीं श्यामोऽयमि'ति ज्ञानवद् भ्रम एवेत्यर्थः।
ननु भवेदेवं यदि विशिष्टज्ञानं विशेषणज्ञानजन्यं भवेत्, किन्तु विशे-

न्यायलीलावतीप्रकाशः

कत्वमनुमास्यत इत्यत आह ज्ञानत्वेनेति। विशेष्यगतभूयोधर्मग्राहकत्वं
पटुत्वं, जिज्ञासापरम्पराजनकत्वं चादरप्रत्ययत्वम्, आदिपदादन्य-
स्यापि संस्काराधायकविशिष्टज्ञानस्य संग्रहः। द्वित्वनाश इति। द्वित्व-
स्य निमित्तापेक्षाबुद्धिनाशनाश्यत्वव्यवस्थापनात् विशेषणाभावे वि-
शिष्टज्ञानस्य भ्रमत्वादित्यर्थः। ज्ञानस्येति। 'द्वे द्रव्ये' इति विशिष्टज्ञानं स्व-
समयवर्त्तिवैशिष्ट्यं न विषयीकरोति किन्तु वैशिष्ट्यमात्रम्, तच्चाव्यव-
हितपूर्वक्षणे तत्रास्त्येव, 'इदानीं द्वे द्रव्ये' इति धीश्च स्थूलकालोपाधि-
मादायेत्यर्थः। ननु विशिष्टज्ञानं न विशेषणज्ञानजन्यं विशेषणविशेष्य-

न्यायलीलावतीप्रकाशविवृतिः

नेन विपरीतस्मृत्यापत्तेः समानप्रकारकत्वेन जनकत्वाभ्युपगमात्
दृष्टे सम्भवत्यदृष्टकल्पनानुपपत्तेरिति। द्वे द्रव्ये इति। अत्रापेक्षाबुद्ध्युत्पत्त्यन-
न्तरं द्वित्वं तन्निर्विकल्पकं ततो द्वित्वत्वविशिष्टद्वित्वत्वज्ञानमपेक्षा-

त्यस्यानवग्राहित्वात् , पूर्वापरोदासीनद्वित्वविशिष्टत्वस्य सत्त्वात् । विशेषणज्ञानपूर्वकता तूत्तरत्र विशिष्टज्ञानस्य व्यवस्थापयिष्यते। अतीतगोचरद्वित्वाद्युत्पत्तौ का वार्ता ? न काचित् । कथं तर्हि तद्व्यवहारः ? यथा गुणादाविति ब्रूमः । उपादानाभावस्यैव बाधकत्वात् । एतेनाऽनागतव्यवहारोऽप्युक्तः ॥ इति संख्या ॥

त्र्यणुकपरिमाणं संख्याजन्यं परिमाणप्रचयानपेक्षत्वे सति परिमाणत्वात् सर्वसिद्ध(१)संख्याजन्यपरिमाणवत् । परिमाणज-

---

न्यायलीलावतीकण्ठाभरणम्

षणविशेष्योभयसन्निकर्षाधीनं, विशेषणसन्निकर्षश्च प्रकृते नास्तीत्यत आह विशेषणेति । 'शतं पिपीलिकानां मया हतमि'त्यादावतीतेऽपि सं-ख्योत्पत्तिरिति कन्दलीकारमतमाशङ्कन्दति अतीतगोचरेति । समवायिकारणमतीतं न भवत्यतस्तत्र संख्यारोप इत्यर्थः ।

ननु परमाणुपरिमाणं परिमाणद्वयमिति द्व्यणुकपरिमाणं तज्जनकं मास्तु, द्व्यणुकपरिमाणं तु त्रसरेणुपरिमाणजनकमस्तु बाधकाभावादित्याशंक्याह त्र्यणुकपरिमाणमिति । संख्याजन्यमिति । बहुत्वसंख्याजन्यमित्यर्थः । सर्वेति । बहुभिरारब्धे यत्र महत्त्वोत्कर्षस्तत्र परिमा

न्यायलीलावतीप्रकाशः

विषयकैकज्ञानस्य विशिष्टज्ञानतया तयोः समानकालीनत्वात् , तथा च द्वित्वविशिष्टद्रव्यज्ञानकाले द्वित्वस्य सत्त्वाच्च तस्य भ्रान्तत्वमत आह विशेषणेति ।

त्र्यणुकपरिमाणं जन्यजन्यवृत्ति परिमाणत्वादिति सिध्यते सत्याह त्र्यणुकेति । परिमाणत्वात् जन्यपरिमाणत्वादित्यर्थः । सर्ववादीति । ननु यत्र समानसङ्ख्यपरिमाणैः परिमाणारम्भस्तत्र सङ्ख्यायाः परिमाणस्याप्यारम्भकत्वनियमात् दृष्टान्तासिद्धिः, तथाप्यवयवावित्तया-

न्यायलीलावतीप्रकाशविवृतिः

बुद्धेर्नाश इत्येक कालः, द्वित्वविशिष्टद्रव्यज्ञानं तद्विनाश इत्येकः, पूर्ववर्त्तितया कारणताया अबाधनादिति सिद्धान्तसंक्षेपः ।

तथाप्यवयवेति । यद्यपि तत्रापि परिमाणस्य जनकत्वमन्यथा न्यूनपरिमाणावयवचतुष्कारब्धेऽपि परिमाणप्रकर्षापत्तेरिति प्रागुक्तताद-

---

(१) सर्ववादिसिद्धेति प्रकाशकृदभिमतः पाठोऽत्र बोध्यः ।

न्यमेवैतत् स्यादिति चेन्न। परिमाणस्य विजातीयात्म(१)प्रतियोगिप्रकर्षजननविरोधात् , अन्यथा महतामपि क्वचिदणुपरिमाणारम्भकतापत्तेः(२)। ह्रस्वत्वस्य चामहद्वृत्तित्वेन महत्त्वानारम्भकत्वात् अणुत्ववत् , अन्यथाऽत्रापि तत्त्वतापत्तेः(३)। संख्यापि तर्हि नारम्भिका, तस्याः स्वाश्रयप्रकृष्टपरिमाणजनकत्वनियमादिति चेत्। न, परिमाणासमवायिकारणस्य स्वाश्रयप्रकृष्टप-

न्यायलीलावतीकण्ठाभरणम्

णवदित्यर्थः। ननु द्व्यणुकत्रयवर्त्तिपरिमाणैरेव तदारभ्यतामित्याह परिमाणजन्यमिति। अणुत्वस्य महत्त्वारम्भकत्वविरोधान्नैवमित्याह परिमाणस्येति। ह्रस्वत्वपरिमाणस्य अनभ्युपगमेऽपि तस्य जनकत्वमाशंक्याह ह्रस्वत्वस्येति। महत्त्वासमानाधिकरणपरिमाणत्वेनाणुत्ववत् ह्रस्वत्वस्यापि द्व्यणुकवृत्तेरनारम्भकत्वादित्यर्थः। महत्त्वासमानाधिकरणा संख्यापि कथं महत्त्वमारभताम् , आरम्भे वा त्रसरेणौ प्रकृष्टमहत्त्वमेवारभेतेत्याह संख्यापीति। तर्हि परमाणुवृत्तिद्वित्वसंख्यया द्व्यणुकेऽप्यन्तमहत्त्वमारभ्येतेति द्व्यणुकोच्छेदः स्यादित्याह परिमाणेति। तर्हि द्व्य-

न्यायलीलावतीप्रकाशः

त्र्यणुकमहत्त्वापेक्षया अवयवचतुष्टयारब्धमहत्त्वस्य दृष्टान्तता। परिमाणस्येति। परिमाणं परिमाणत्वव्याप्यजात्या सजातीयमेवारभत इति व्याप्तेर्द्व्यणुकपरिमाणेन त्र्यणुकमहत्त्वं स्वविजातीयं प्रकृष्टं न जन्यत इत्यर्थः। ननु नेयं व्याप्तिः ह्रस्वत्वेन महत्त्वारम्भात् इत्यत आह ह्रस्वत्वस्येति। अमहद्वृत्तित्वेनेति। अमहद्वृत्तिपरिमाणत्वेनेत्यर्थः। अतो न त्र्यणुकमहत्त्वापत्तिरित्यर्थः। तस्या इति। समानपरिमाणत्रितयारब्धे संख्यायाः स्वसमानाधिकरणपरिमाणापेक्षयाऽधिकपरिमाणजननदर्शनादित्यर्थः। क्वचित्तथात्वेऽपि न नियम इत्याह परिमाणासमवायीति। यदीदृशी व्याप्तिः स्यात तदा द्व्यणुकेन त्र्यणुकं महन्न जन्येत किन्त्वणुतममेव जन्यमिति न तज्जनकद्व्यणुकसिद्धिरित्यर्थः। नाप्यणुत्वं कार्याकार्यवृत्तीति प्रागुक्तानुमानात द्व्यणुकसिद्धिः, अणुत्रयारब्ध-

न्यायलीलावतीप्रकाशविवृतिः

वस्थ्यं, तथापि परिमाणप्रचयमात्राजन्यत्वं हेतौ विवक्षितमेवं च स-

(१) विजातीयस्यात्मेति प्रा० पु० पाठः (२) द्रव्यारम्भकत्वापत्तेरिति प्रा० पु० पाठः।

(३) तथापत्तेरिति प्रा० पु० पाठः।

रिमाणजनकत्वनियमे द्व्यणुकोच्छेदापत्तेः। संख्यापरिमाणयोरु-भयोरपि तुल्यत्वे परिमाणानारम्भकत्वे हेत्वभाव इति चेत्। न, बहुत्वस्य महत्त्वारम्भे क्लृप्तशक्तिकत्वात्, अणुत्वस्य च परिमाणं प्रति उपाध्यन्तरानपेक्षेण(१) स्वरूपेणादृष्टशक्तिकत्वात्।

---

न्यायलीलावतीकण्ठाभरणम्

णुकपरिमाणमेव विजातीयमपि महत्त्वं जनयतु, महत्त्वासमानाधिकर-णसंख्याया अपि महत्त्वजनकत्वमत्रैव त्वयापि कल्पनीयमित्याशङ्कते संख्येति। बहुभिरारब्धे महत्त्वोत्कर्षदर्शनात् बहुत्वं महत्त्वं प्रत्यस-मवायिकारणं क्लृप्तं नाणुत्वमिति परिहरति बहुत्वस्येति। ननु यद्यणु-त्वमात्रं न परिमाणकारणं क्लृप्तं, तथापि बहुत्वसमानाधिकरणजन्या-णुत्वेन महत्त्वं प्रति कारणत्वमिहैव कल्प्यतामित्यत आह उपाध्यन्त-रेति। बहुत्वं चेदुपाधिस्तदा तदेव कारणमस्तु किमणुत्वेनेत्यर्थः। ननु तथापि किं बहुत्वेन त्रीण्येकान्येव त्रसरेणौ महत्त्वं जनयन्त्वि-

न्यायलीलावतीप्रकाशः

त्रसरेणोरप्यणुत्वेन सिद्धसाधनादिति भावः। सङ्ख्यापरिमाणयोरिति। यथा ऽणुपरिमाणस्य महत्त्वजनकत्वं न दृष्टं तथाऽणुसङ्ख्याया अपि जन-कत्वे वा न विनिगमकमित्यर्थः। तत्र विनिगमकमाह बहुत्वस्येति। नन्व-णुत्वसमानाधिकरणबहुत्वस्यापि कारणत्वमन्यत्र न दृष्टं, यदि च ब-हुत्वमात्रस्य तद्दृष्टम्, अणुत्वस्याऽपि परममहत्परिमाणातिरिक्तप-रिमाणस्य दृष्टमिति तुल्यम्। मैवम्। त्र्यणुकमहत्त्वं हि नपरिमाणजन्यं सङ्ख्याप्रचयाजन्यमहत्त्वं प्रत्यवयवमहत्त्वेन कारणत्वात्, नत्ववयवप-रिमाणत्वेन परमाणुपरिमाणात् द्व्यणुके महत्त्वापत्तेः, नापि जन्याव-यवपरिमाणत्वेन गौरवात्, नापि जन्याणुत्वेन तथाऽदर्शनात्, म-हत्त्वविशेषस्यानियतहेतुकतापत्तेश्च, महत्त्वान्तरजातिकल्पने च गौ-रवात्, बहुत्वकल्पनस्य च प्रामाणिकत्वात्, किन्त्ववयवबहुत्वं तज्ज-

न्यायलीलावतीप्रकाशविवृतिः

मानसङ्ख्यापरिमाणारब्धस्यापि दृष्टान्ततेति ध्येयम्। अणुत्वस्यापीति। द्व्यणुकवृत्तिपरिमाणस्य परमाणुपरिमाणजन्यत्वे महत्त्वापत्तेरित्यर्थः। यद्वा अणुत्वस्य महत्त्वजनकपरिमाणत्वेन महत्त्वापत्तेरित्यर्थः। बहु-

---

(१) नपेक्षस्येति प्रा० पु० पाठः।

न च नानैकत्वं जनकम्, एकहेतुकत्वोपपत्तौ नानाहेतुकत्वे कल्पनागौरवात् ॥

ननु संख्यापरिमाणादीनां न तावत्परिमाणं प्रति हेतुत्वम्, परिमाणमात्रेऽन्योन्यं व्यभिचारात्। नापि तद्व्यक्तिभेदं प्रति, आनन्त्यव्यभिचाराभ्यां दूषितत्वात्। अतोऽवान्तरजातिस्वीकारे विरुद्धयोः समावेशानुपपत्तेः। दृश्यते चोभयहेतुकत्वं यथा स-

---

न्यायलीलावतीकण्ठाभरणम्

स्यत आह नचेति। किञ्च त्रसरेणौ तदवयवबहुत्वं वा महत्त्वमारभ्यता-मणुत्वमेव वेत्यत्र लाघवमपि बहुत्वे प्रमाणसहकारि, किञ्च त्रसरेणु-परिमाणं नाणुपरिमाणजन्यं परमाणुत्वादित्यपि द्रष्टव्यम्।

चतुर्विधमपि जन्यपरिमाणं संख्यापरिमाणप्रचयजन्यमिति मूल-माक्षिपति नन्विति। परिमाणत्वावच्छेदेन कारणतायां परस्परं व्य-भिचारान्न कारणताग्रह इत्यर्थः। ननु प्रत्येकजन्ये परिमाणेऽपि वैजात्यमेव कल्पनीयमिति न व्यभिचार इति यदि, तदा द्वाभ्यामा-रब्धे तदुभयजातिसाङ्कर्यमित्याह अत इति। ननु द्वाभ्यामारम्भ एव नास्तीत्यत आह दृश्यते चेति। समपरिमाणावयवद्वयारब्धापेक्षयाऽ-

न्यायलीलावतीप्रकाशः

नकं परिमाणप्रचयाजन्यमहत्त्वे अवयवबहुत्वेन कारणत्वकल्पनात्। त्र्यणुकपरिमाणासमवायिकारणताग्राहकं प्रमाणं बहुत्वमेव विषयी-करोति नाणुपरिमाणं तस्य प्रत्येकनिष्ठतया नानात्वेन गौरवादि-त्यर्थः। एवं द्व्यणुकपरिमाणं नाणुपरिमाणजन्यं परिमाणत्वादित्यपि द्रष्टव्यम्। तथापि नानैकत्वमेव परिमाणजनकमस्त्वित्यत आह नानेति।

विरुद्धयोरिति। सङ्ख्यापरिमाणाभ्यामुभाभ्यामारब्धे परिमाणे परस्प-रान्यताभावसमानाधिकरणयोः सङ्ख्यापरिमाणप्रयोज्यजात्योः सङ्कर-स्यादित्यर्थः। न च तयोरसिद्धिरित्याह दृश्यते चेति। विलक्षणकार-णव्यङ्ग्या उभयारब्धपरिमाणे विलक्षणैव जातिर्नतु प्रत्येककारणप्र-

न्यायलीलावतीप्रकाशविवृतिः

त्वकल्पनस्येति। बहुत्वे महत्त्वकारणताकल्पनस्येत्यर्थः। परिमाणप्रचयाज-न्येति। भावमात्रेत्यर्थः। एवमिति। उक्तविपक्षबाधके सतीत्यर्थः।

मपरिमाणोभयारब्धादुत्कर्षवतस्त्रिभिरारब्धस्य परिहीनपरिमाण-त्रितयारब्धादुत्कर्षस्योपलम्भात्। मैवम्। एकैकारम्भमहत्त्वावान्तर-जातेरन्यदेवं महत्त्वोत्कर्षरूपं सामान्यं प्रत्यसमवायिकारणसमु-च्चयस्य हेतुत्वात्। प्रचये च नास्ति कारणत्वम्, तूलाद्यवयवि-नामनारम्भकत्वात्, एकादिप्रत्ययस्य(१) पलालपुञ्जवदुपपत्तेः। मैवम्। घनद्रव्यस्य स्वाश्रयद्रव्यारम्भे पलालादावेकदेशाकर्षणेन

---

न्यायलीलावतीकण्ठाभरणम्

समपरिमाणद्वयारब्धे तावदुत्कर्षः प्रतीयते स्वल्पपरिमाणत्रितयार-ब्धापेक्षयाऽप्युत्कर्षः प्रतीयते, तत्र महत्वं बहुत्वं च द्वयमपि कार-णमित्यर्थः। एकैकेति। यथा प्रत्येकारब्धेऽपीति न समावेश इत्यर्थः। हेतुत्वादिति। प्रयोजकत्वादित्यर्थः। तूलादीति। तूलादिपिण्डानां पलाला-दिजालवन्नावयवित्वमित्यर्थः। धारणाकर्षणेऽवयविलक्षणं तूलरूपि-ण्डे दृश्यते न तु पलालजालेऽपीति तत्रानारम्भकत्वप्रत्ययोऽत्र भ्रान्त इत्याह—घनद्रव्यस्येति। ननु धारणाकर्षणे चेदवयविलक्षणन्तदा

न्यायलीलावतीप्रकाशः

योऽयेति नोक्तदोष इत्याह एकैकेति। असमवायिकारणसङ्ख्यापरि-माणे तयोः समुच्चय इत्यर्थः। तूलेति। न च समवायिकारणं विना-ऽसमवायिमात्रात्परिमाणोत्पत्तिरित्यर्थः। एकस्तूलकपिण्ड इत्यनु-भवस्त्वन्यथोपपन्न इत्याह एकेति। परिमाणस्य यावदाश्रयमनुवृत्तेः पूर्वद्रव्याविनाशे परिमाणवति च परिमाणान्तरानुत्पत्तेः न तूलकादौ प्रचयस्य परिमाणारम्भकत्वमित्यपि द्रष्टव्यम्। घनद्रव्यस्येति। पूर्व-द्रव्यनाशे च स्पर्शवद्द्रव्याभिघातो हेतुः। यद्यपि घनद्रव्याकर्षणे हस्तसंयुक्तावयवान्तरकर्म न वेगान्नाभिघाताच्च तस्य स्वविमुख-कर्मजनकत्वनियमात्, न च नोदनात्, तस्य कर्मवद्द्रव्यसंयोगरूप-त्वात्, न चात्र कर्मवता हस्तेन भागान्तरस्य संयोगोऽस्ति, तथापि कर्मवदवयवसंयोग एव नोदनं तद्धेतुः, इयं युक्तिः कर्षणप्रसङ्गरू-पेत्यर्थः॥

न्यायलीलावतीप्रकाशविवृतिः

हस्तसंयुक्तावयवान्तरेति। हस्तसंयुक्तावयवान्तरं तत्कर्मेत्यर्थः।

---

(१) प्रचयस्येति मा० पु० पाठः।

समुदायाकर्षणप्रसङ्गात् , अनारम्भे भ्रान्तत्वात्तूलकादौ बाधकाभावात् । घनाघनसाधारणीयं युक्तिः किं न बाधिकेति चेत् । न । तोयाद्यवयविविच्छेदापत्तेरित्यास्ताम् ॥ इति परिमाणम् ॥

ननु द्वित्वद्विपृथक्त्वयोरपेक्षाबुद्धिः किं युगपदुत्पद्यते क्रमेण वा ? नाद्यः । ज्ञानयौगपद्यनिषेधात् । द्वितीये तु द्वित्वापेक्षाबुद्धेरुत्पादे तदनन्तरं च द्विपृथक्त्वापेक्षाबुद्ध्या द्वित्वजनकापेक्षाबुद्धिनाशे द्विपृथक्त्वद्वित्वसामान्यज्ञानयोरुत्पादेऽपेक्षाबुद्धिनाशात् द्वित्वनाशे द्वित्वस्य विशेषणस्याभावात्कथं तदुत्तरकालं द्वित्वविशिष्टपृथक्त्वप्रत्ययः । न च द्विपृथक्त्वं नामापरं सामान्यमस्ति । अथ पूर्वं द्विपृथक्त्वजनकापेक्षाबुद्ध्युत्पादः, तथासति द्विपृथक्त्वस्यैव नाशात् द्वित्वविशिष्टप्रत्ययो न स्यादिति चेन्न । उभयैकत्वैकपृथ-

---

न्यायलीलावतीकण्ठाभरणम्

यत्र तन्नास्ति तद्घनमघनं वा नावयवीत्येव किं न स्यादित्याह--घनाघेनेति । तर्हि तल्लक्षणाभावात् तोयमवयवि न स्यात् नहि तत्र धारणाकर्षणे इत्याह—तोयेति ।

ननु द्विपृथक्त्वे द्वाविमौ पृथगिति धीर्मानं, सा चानुपलब्धेस्याह—नचेति । द्वावेकत्वे द्वे च पृथक्त्वे एकयैव समूहालम्बनधिया यदा गृह्येते तदा द्वित्वपृथक्त्वे द्वेऽपि उत्पद्येते इत्याह उभयैकत्वेति ।

न्यायलीलावतीप्रकाशः

द्विपृथक्त्वं व्यासज्यवृत्ति गुणान्तरमस्तीति, तत्रेमौ द्वौ पृथगिति धीर्मानं सा च न सम्भवतीत्याह नन्विति । ननु द्विपृथक्त्ववृत्ति पृथक्त्वत्वजातिव्याप्यं सामान्यमस्ति तत एव द्वित्वाभावेऽपि द्वौ पृथगिति धीः स्यादित्यत आह नचेति । व्यासज्यवृत्तिगुणान्तरपक्षेऽपि तत्र तादृशसामान्यानभ्युपगमादित्यर्थः । न चैवमेकपृथक्त्वस्यापेक्षाबुद्धिं विनाप्युत्पत्तेः क्व तस्याः कारणत्वमिति वाच्यम् । अननुगतस्यापि जन्यतावच्छेदकत्वात् तस्य व्याप्यत्वरूपत्वात् । उभये-

न्यायलीलावतीप्रकाशविवृतिः

अननुगतस्यापीति । अवान्तरजातिस्वीकारपक्षेऽपि सकलसाधारण-

स्तत्रसमुदायालम्बिज्ञानादुभयोत्पत्तौ सर्वस्योपपत्तेः ॥ इति पृथक्त्वम् ॥

उभयकर्मजस्तु संयोगो न भिन्नः, एकत्वेनाध्यवसायात् उभयदीपजबुद्धिवत्। अत एव नैकस्यान्यथासिद्धिः, सामान्येन हेतुत्वावधारणात्। अजस्तु न संयोगोऽप्राप्तप्राप्तेरेव तदात्म-

---

न्यायलीलावतीकण्ठाभरणम्

ननु संयोगत्रैविध्यमनुपपन्नमजसंयोगसत्त्वादित्यत आह— अजस्त्विति। अप्राप्तिपूर्विका प्राप्तिः संयोगस्तादृशस्तु नाज इत्यर्थः।

न्यायलीलावतीप्रकाशः

ति। नानैकत्वनानापृथक्त्वगोचरा समूहालम्बनरूपा एकैवापेक्षाबुद्धिरुभयजनिकेति न ज्ञानयौगपद्यमित्यर्थः॥

ननूभयवृत्तिकर्मभ्यां सम्भूयैकः संयोगो न जन्यते कर्मणोर्मिथोनैरपेक्ष्येण तज्जनकत्वात्, तथाच तत्र संयोगद्वयमुत्पद्यत इति नोभयकर्मज एकः संयोगोऽत आह उभयेति। नन्वेकमेव कर्म संयोगजनकं न तु कर्मान्तरस्य सहकारित्वमत आह अत एवेति। सामान्येनेति। कर्मत्वेनैव संयोगजनकत्वात् विनिगन्तुमशक्यत्वाच्चेत्यर्थः। तथापि न द्विविधः संयोगः, आत्मा आकाशसंयुक्तः द्रव्यत्वादित्यजन्यस्यापि तस्य सिद्धेरित्यत आह अजस्त्विति। अप्राप्तप्राप्तेरिति। प्रागभावप्रतियोगिन्याः प्राप्तेरित्यर्थः। ननु लाघवात् प्राप्तिरेव संयोगो न

न्यायलीलावतीप्रकाशविवृतिः

स्यानुगतस्याभावादिति भावः। वस्तुतो व्यासज्यवृत्ति पृथक्त्वमेव जन्यतावच्छेदकमित्यवधेयम्। नानैकत्वेति। इदं च समवायिसौकर्यात्। वस्तुतो द्विपृथक्त्वमेवावान्तरसामान्यं द्वे पृथगित्यनुगतप्रत्ययानुरोधात्। न च द्वित्वसामानाधिकरण्येनैव तदुपपत्तिः। साक्षात्सम्बद्धधर्मेणैवोपपत्तेरिति भावः।

कर्मत्वेनैवेति। यद्यप्येवमप्युभयकर्मजसंयोगगतवैजात्ये मानाभावात्त्रिविधत्वं संयोगस्य भग्नमेव, तथाप्येककर्मजन्यापेक्षयोभयकर्मजन्येनानुभवादुभयकर्मत्वेनापि कारणता मन्तव्येति भावः। उपाधिविशेष एवोभयकर्मजत्वादिर्विभाजक इत्यन्ये। द्रव्यत्वादिति। नचैवं विभागस्यापि तत एवानुमाने परस्परविरुद्धसंयोगविभागद्वयस्वीकारापत्तिः। विभागकालनाशसमानकालेषूत्पन्नद्रव्ये कर्म विनैव

कत्वात् । अजस्य तु संयोगस्यायुतसिद्धसम्बन्धानिष्ठत्वेन समवायाच्छेदानुपपत्तेः । अवयवावयविभावाभाव एव युतसिद्धिरिति चेन्न । गुणादेरसमवायित्वापत्तेः । तेषां स्वातन्त्र्येणाश्रयान्तरासमवायित्वमयुतसिद्धिरिति चेन्न । तुल्यत्वात् ॥ इति संयोगः ॥

ननु संयोगाभाव एव विभाग(१)व्यवहारोऽस्तु । मैवम् ।

---

न्यायलीलावतीकण्ठाभरणम्

प्रत्युत नित्या प्राप्तिः समवाय एवायं स्यादित्याह—अजस्य त्विति । नन्वयुतसिद्धयोः सम्बन्धः संयोग एव स्यात् तयोरवयवावयविभावाभावादित्यत आह—गुणादेरिति । ननु पृथगाश्रयाश्रितत्वं युतसिद्धिर्घटपटयोरिव, गुणगुणिनोरवयवावयविनोश्च न पृथगाश्रयीभूतत्वमित्ययुतसिद्धिरेवेत्याशङ्कते तेषामिति । गुणगुणिनोरपि पृथगाश्रयाश्रितत्वमस्त्येव यतो गुणस्य गुणी गुणिनस्तु स्वावयवा इत्यत आह—स्वातन्त्र्येणेति । परस्परपरीहारेणेत्यर्थः । नहि गुणिनं विहाय गुणस्याश्रय इति भावः । तुल्यत्वादिति । इयमयुतसिद्धिर्विभुनोरप्याश्रयाभावादेवेत्यर्थः ।

पल्लवस्तु प्रक्रियायामिति यदुक्तं तत्राह नन्विति । संयोगध्वंसे समानाधिकरणसंयोगासमानकालीने विभागव्यवहारोपपत्तौ किं

न्यायलीलावतीप्रकाशः

त्वधिकमित्यत आह अजस्य त्विति । आश्रयान्तरासमवायित्वं द्वित्वादौ नास्तीत्यत उक्तं स्वातन्त्र्येणेति । तत्परित्यागेनाश्रयान्तरप्राप्तिः स्वातन्त्र्यम् । तुल्यत्वादिति । आकाशात्मनोरप्याश्रयाभावादेवाश्रयान्तरासमवायादयुतसिद्धिप्रसङ्ग इत्यर्थः ॥

संयोगाभाव इति । संयोगध्वंस इत्यर्थः । स च संयोगासमानकालीनः संयोगत्वावच्छिन्नसामान्याभावो वा विवक्षितः, तेन संयुज्य

न्यायलीलावतीप्रकाशविवृतिः

विनष्टे व्यभिचारेण द्रव्यत्वस्याकाशविभागासाधकत्वात् । न च नित्यद्रव्यत्वेन तत्सिद्धिरप्रयोजकत्वादिति भावः ।

स च संयोगेति । तदुभयप्रतियोगिकसंयोगेत्यर्थः । एवमग्रेऽपि । सा-

---

(१) वे विभागेति भा० पु० पाठः ।

संयोगविनाशानुपपत्तेः, विभागस्य संयोगविनाशहेतुत्वात् । क-मैव तज्जनकमस्तु अन्वयव्यतिरेकाभ्यां विभागवदिति चेन्न । कर्मणोऽविरोधित्वेन व्यधिकरणस्य च तन्नाशकत्वायोगात्, तथाच स्वीयस्वीयकर्मजन्यानामङ्गुलीतरुसंयोगादीनां(१) केवलेनाङ्गुली-स्पन्देनानाशप्रसङ्गात् । न च संयोगनाशात्तन्नाश इति वाच्यम् । कर्मजसंयोगे संयोगस्याकारणत्वात्, अकारणनाशस्याकार्यनाशेऽ-सामर्थ्यात् । व्यधिकरणमपि कर्मैव नाशकमस्तु, न चातिप्र-सङ्गः, स्वाश्रयाश्रितपरम्परासंयोगस्यैव नाशकत्वात् । न, विरो-धिनः समानाधिकरणस्यैव नाशकत्वमिति असति बाधके सङ्को-चानुपपत्तेः । एवञ्च कारणनाशस्यैव कार्यनाशकत्वमित्यत्र

न्यायलीलावतीकण्ठाभरणम्

विभागेनेत्यर्थः । संयोगविनाशेति । सत्याश्रये समानाधिकरणविरोधि-गुणस्य गुणनाशकत्वात् विभागाभावे संयोगनाशो न स्यादित्यर्थः । तज्जनकमिति । संयोगध्वंसजनकमित्यर्थः । अविरोधित्वेनेति । विरोधित्वे वा उत्पन्नमात्रमेव कर्म्म संयोगं नाशयेदिति भावः । व्यधिकरणस्य चेति । यत्र स्वस्वकर्म्मणाऽङ्गुलितरुहस्ततरुभुजतरुशरीरतरुसंयोगा उत्पन्ना अङ्गुलीमात्रकर्म्मणा चाङ्गुलितरुविभागो जनितस्तत्र विभागपरम्परा संयोगपरम्परां नाशयतीत्यभ्युपेयं कर्म्मणोऽनभ्युपेयत्वात्. अन्यथा तत्संयोगनाशानुपपत्तेरित्यर्थः । एतदेवाह तथाचेति । संयोगनाशादिति । अङ्गुलितरुसंयोगनाशाद्धस्ततरुसंयोगनाश इत्यर्थः । कर्मजत्वादयं यदि संयोगः संयोगजः स्यादित्याह कर्म्मजेति ।

न्यायलीलावतीप्रकाशः

विभक्ते पुनः संयोगवति न प्रसङ्गः । संयोगनाशेति । सत्याश्रये गुणस्य गुणनाशकत्वात्तदभावे संयोगनाशो न भवेत् । अविरोधित्वेन व्यधिकरण-स्येति । नाशकत्वे वा यत्र क्वचिदुत्पन्नेन कर्मणा सर्वत्र संयो-गनाशापत्तिरित्यर्थः । एवञ्चेति । उक्तनाशकापेक्षया कारणनाशस्य

न्यायलीलावतीप्रकाशविवृतिः

मान्याभावश्चायं चरमप्रतियोगिजन्य एवेत्यवधेयम् । गुणस्येति । स्थायिन इति शेषस्तेन न द्वित्वादौ व्यभिचारः । उक्तनाशकेति । नाशस्य यत्र

(१) तरुसंयोगकसंयोगादीनामिति मा० पु० पाठः ।

बाधकाभावात् आश्रयाश्रितसंयोगमात्रनाशनाश्यः संयोगः स्यादिति निरस्तम् ॥

स्फुटद्वेणुशब्दाच्च विभागोऽवगम्यते । स हि न वंशदलद्वयसंयोगनाशापेक्षवंशदलाकाशसंयोगजन्मा, संयोगजस्य शब्दस्य संयोगानिमित्तकारणतोपलम्भात् भेरीसंयोगजस्य शब्दस्य दण्डसंयोगनिमित्ततावत् । अभिघातजः स्यादिति चेत् । न । भिन्नदिङ्मुखगतिदलयोस्तदभावात् । वायोः स्यादिति चेन्न । तस्य स्पर्शादिलिङ्गकस्य तदनुपलम्भेनैवासत्त्वावधारणात्(१), अन्यथा सर्वत्रातीन्द्रियवायुसंयोगकारणताया अनिवारणमिति सिद्धस्तावद्विभागः । स च विभागजः, यथा वंशदलपाटनानन्तरं

न्यायलीलावतीकण्ठाभरणम्

प्रमाणान्तरेण विभागं साधयति स्फुटदिति । परिशेषमाह सहीति । वंशदलाकाशसंयोगः पूर्वमप्यासीदत उक्तं दलद्वयसंयोगनाशापेक्षेति । दलाभिघातो निमित्तकारणं स्यादतो न नियमभङ्ग इत्याह—अभिघातज इति । वायुदलाभिघातनिमित्तकः स्यादित्याह—वायोरिति । अभिघातज इत्यनुषज्यते । अन्यथेति । भेर्याकाशसंयोगजेऽपि शब्दे भेरीवायुसंयोगो निमित्तकारणं न तु भेरीदण्डसंयोग इत्यपि स्यादित्यर्थः । स चेति । दलाकाशविभाग इत्यर्थः । शब्दासमवायि-

न्यायलीलावतीप्रकाशः

लघुत्वाच्चेत्यपि द्रष्टव्यम् । त्रयोविंशतिगुणासमवायिकारणकत्वशून्यः स्फुटद्वे-

स्फुटदिति । त्रयोविंशतिगुणासमवायिकारणक इत्यर्थः । अत्र पक्षविशेणुजन्यः शब्दो गुणासमवायिकारणक इत्यर्थः । अत्र पक्षविशेषणासिद्धिं निराकरोति स हीति । वंशदलाकाशसंयोगोऽसमवायिकरणं निमित्तकारणं तु द्रव्यान्तरेणाभिघातः स्यादित्याह अभिघातज इति । वायोरिति । अभिघातज इत्यनुषज्यते । स चेति । शब्दास-

न्यायलीलावतीप्रकाशविवृतिः

नाशकत्वं तत्र कारणनाशत्वेनैव समवायिनाशादौ तथा कल्पनादिति भावः ।

स चेत्यनेन विभागमात्रपरामर्शे विवादाभावः कारणकारणाविभागजविभागस्य सर्वैः स्वीकारादतो विशेषपरतामाह शब्दासमवा-

(१) नैवासत्त्वादिति प्रा० पु० पाठः ।

क्रियया वंशदलयो(१)र्विभागः, ततश्च नभोभागविभागः(२) ॥

ननु क्रमकल्पनेयमनुपपन्ना, अबाधितस्य यौगपद्यस्य वेदनात्। या विभागद्वयजनिकाक्रिया सा द्रव्याविरोधिविभागजनिकेति बाधकमस्तीति चेन्न। विपरीतापत्तेः(३)। या विभागद्वयजनिका सा

---

न्यायलीलावतीकण्ठाभरणम्

कारणत्वे तस्यैव प्रस्तुतत्वात्।

या विभागद्वयेति। अवयवविभागजनिका सती या क्रिया अवयवाकाशविभागजनिका सा द्रव्यारम्भकसंयोगाविरोधिनं विभागं जनयतीति कमलक्रियायां दृष्टं तद्वदत्रापि द्रव्याविरोधिनं विभागं जनयेदित्यर्थः। वैपरीत्यापत्तेरिति। कर्म्मजत्वेनाभिमतः कमलदलाकाशविभागो विभागजः स्यात् विभागजत्वेनाभिमतो वंशदलाकाशविभागः कर्म्मजः स्यादिति विपरीतमेव किन्न स्यादित्यर्थः। तदेव स्फुटयति येति। वंशदलकर्म्म यदि द्रव्यारम्भकसंयोगाविरोधिनं दलाकाशविभागं जनयेत् तदा द्रव्यारम्भकसंयोगाविरोधिनं दलद्वयविभागं न जनयेत् कमलदलविभागे तथा दर्शनात्, जनयति विरोधिनं विभागम्; तस्मान्नाविरोधिविभागजनकमिति दलाकाशविभागो विभागज एवे-

न्यायलीलावतीप्रकाशः

मवायिकारणं दलाकाशविभागो विभागासमवायिकारणक इत्यर्थः।

विभागद्वयेति। या क्रिया अवयवान्तराद्विभागजनिका सती आकाशदेशादपि विभागं जनयति सा द्रव्यारम्भकसंयोगाविरोधिनमेव विभागं जनयतीति कमलदलक्रियायां दर्शनादित्यर्थः। विपरीतापत्तेरिति। कमलदलाकाशविभागः कर्मजो विभागजः स्फुटद्वेणुदलाकाशविभागश्च विभागजोऽपि कर्मजः स्याद्विपक्षे बाधकाभावेन व्याप्तौ विनिगमकाभावादित्यर्थः। तदेव स्फुटयति या विभागेति। न च मूर्त्तद्वयसंयुक्ते मूर्त्ते कर्मोत्पत्तावेकं कर्म विरोधिविभागद्वयजनकमिति वा-

न्यायलीलावतीप्रकाशविवृतिः

यिकारणमिति।

उभयतन्तुसंयुक्तैकस्य तन्तोः कर्मणा यत्र तन्तुद्वयविभागस्तत्रोक्तनियमव्यभिचारमाशङ्क्यान्यथा नियममाह या क्रियाऽवयवान्तरा-

---

(१) दलक्रियानन्तरं वंशदलयोरिति मा० पु० पाठः।

(२) आकाशविभाग इति मा० पु० पाठः। (३) वैपरीत्यापत्तेरिति मा० पु० पाठः।

विरोधिविभागजनिकेति कमलदलोन्मीलनादौ विभागजविभा-
गोत्पत्तौ विपरीतापत्तेः। यदविरोधिविभागजनकं न तद्विरोधिवि-
भागजनकं यथा पञ्चशाखशाखाकर्म, इयमप्यविरोधिविभागजनि-
का यदि स्यात् विरोधिनं न जनयेदविशेषादिति तत्सिद्धिरिति
चेन्न। नियमासिद्धेः। व्यभिचारानुपलम्भात् तत्सिद्धिरिति
चेन्न। कर्मावान्तरजातिभेदस्योपाधित्वात्, व्यभिचारानुपलम्भे-
ऽप्यप्रयोजकत्वात्।

मैवम्। कर्मावान्तरवैचित्र्यस्यानुपलब्धेः। विरोधिवि-

---

न्यायलीलावतीकण्ठाभरणम्

त्याह यदीविरोधीति। अत्र विपक्षबाधकाभावमाह नेति। किञ्चित् कर्मजा-
तीयं विरोध्यविरोधिविभागजनकं किञ्चिच्चाविरोधिविभागमात्रजनकं
स्यादित्याह कर्मावान्तरेति।

उपाधेरनुपलम्भादव्यासिरेवेत्याह यदविरोधिविभागजनकं न
तद्विरोधिविभागजनकमिति व्याप्तौ विरोधिविभागजनककर्मगत-
जातिभेदाभाव उपाधिरित्याशङ्कते विरोधीति। सहकारिविशेषाधीनं
कर्मणो विरोधिविभागजनकत्वं न तु वैजात्यं किञ्चिदिहास्ति

न्यायलीलावतीप्रकाशः

ध्यम्। यद्धि मूर्त्तेनामूर्त्तेन च विभागजनकं तदेव(१) विरोधिविभाग-
जनकमिति विवक्षितत्वात्। तत्सिद्धिरिति। यद्यप्यविरोधिविभागमा-
त्रजनकत्वेनान्यथासिद्धेरेवमपि शब्दजनकदलाकाशविभागस्य वि-
भागजत्वं न सिध्यति, तथापि विभागजविभागसिद्धिमभ्युपेत्यै-
तदुक्तम्॥

विरोधिविभागेति। विपर्ययानुमाने चायमुपाधि न च तत्र दृष्टा-

न्यायलीलावतीप्रकाशविवृतिः

दिति। तदेव परमित्यनेन समनियमो विवक्षितः। यद्यप्यविरोधि-
विभागेति। वंशदलकर्म दलविभागमेव जनयतु, दलद्वयविभागश्च
विभागज इत्येतावताप्युक्तनियमोपपत्तौ शब्दसमवायिकारणवि-
भागस्य विभागजत्वं न सिद्धमित्यर्थः। तथापीति। जन्यभूतवि-
भागजाश्रयकारणद्वयपूर्वको विभागस्तथापि सिद्ध एवेत्यर्थः। विप-
र्ययानुमान इति। यद्ययं विरोधिविभागजनकः स्यादविरोधिविभाग-

---

(१) तदेव परमिति अत्र विवृतिकाराभिमतः पाठो द्रष्टव्यः।

भागार्जनानुकूलकर्मवैचित्र्यनिवृत्तिरुपाधिरिति चेन्न । नोदन-जन्यविशेषस्य व्यतिरेकेऽप्यभिघातात् विरोधिविभागदर्शनात् । एवमभिघातव्यतिरेकेऽपि नोदनात् उभयसाधारणस्यैकस्या-सिद्धेः । समव्याप्तिकत्वाच्च, अविरोधिविभागजनकस्य वि-रोधिविभागजननानुकूलवैचित्र्यव्यावृत्त्या सर्वत्राव्यभिचारोपल-ब्धेः धूमार्द्रेन्धनवत् साधनाव्यापकत्वाभावात् ।

---

न्यायलीलावतीकण्ठाभरणम्

तन्निवृत्तिरुपाधिना स्यादिति परिहरति नोदनेति । नोदनजन्येऽभि-घातजन्ये वा कर्मणि द्रव्यारम्भकसंयोगविरोधिविभागजनकत्वाव-च्छेदकं वैजात्यमनुपलम्भबाधितमित्याह उभयेति । समेति । तर्कमूलभूत-व्याप्तौ साधनोपाध्योरिति शेषः । तदेवाह--अविरोधीति । तर्केऽविरो-धिविभागजनकत्वस्यापादकस्य विरोधिविभागानुकूलकर्मवैचित्र्यनि-वृत्तिर्व्यापिका व्याप्या च । तथाच साधनव्यापकत्वान्नायमुपाधिरित्य-

न्यायलीलावतीप्रकाशः

त्ताभावः, द्रव्यारम्भकसंयोगविरोधिद्व्यणुकविभागजनकपरमाणुद्व्यणु-कविभागस्य दृष्टान्तत्वात् । तथापि कर्मणा दलाकाशविभाग एव ज-न्यतां तेन च दलद्वयविभागो जन्यतामित्येतावतापि शब्दजनकवि-भागस्य नं विभागजत्वासिद्धिः । मैवम् । अनारम्भकसंयोगविरोधि-विभागस्यारम्भकसंयोगविरोधिविभागजनकत्वात् कमलदलोन्मीलने तथा कल्पनात् । नोदनजन्येति । ननु कर्मणो विभागविशेषजनकतावच्छे-

न्यायलीलावतीप्रकाशविवृतिः

जनको न स्यादित्यस्य यो विपर्ययस्तत्रेत्यर्थः । क्वचित्पाठ एव तथा । यद्यपि मूलोक्ततर्क एवायमुपाधिः सम्भवति, तथापि तर्कमूलकमनु-मानमपि दूषणीयम् । तत्र चोक्ततर्कमूलकानुमानेऽयमुपाधिरसम्भ-व्येवेति तर्कान्तरविपर्ययपरत्वं निरुक्तोपाधेः । यद्यपि प्रकाशोक्ततर्क-विपर्ययौ नाशङ्कितौ मूलकृतेति तत्रोपाध्याशङ्का तस्य न युक्ता, तथापि विरोधिविभागाविरोधिविभागजनकत्वयोर्विरोधाभिधानेना-र्थंगत्या तावप्याशङ्किताविवेति भावः । न च तत्रेति । यद्यप्ययं विरो-धिविभागजनकः स्यादित्यत्र तर्क इत्यर्थः । द्रव्यारम्भकेति । द्व्यणुकार-म्भकसंयोगविरोधी यो द्व्यणुकविभागस्तज्जनको द्व्यणुकान्तरारम्भ-कपरमाणुना द्व्यणुकान्तरस्य विभागस्तस्येत्यर्थः । अनारम्भकसंयोगेति ।

नन्वेवं यद्जनकसंयोगजनकं न तज्जनकसंयोगजनकम्, यथाङ्गुल्याकाशसंयोगजनकं कर्म, एवञ्च तन्तुद्वयसंयोगजनकात्क-

---

न्यायलीलावतीकण्ठाभरणम्

र्थः। साधनस्यादयत्वाभिधानं सम्भवानुरोधात्, तेन यदि द्रव्यार-

न्यायलीलावतीप्रकाशः

म्भकः कर्मण्यवान्तरविशेषोऽवश्यं वाच्यः, अन्यथा सर्वस्मात्कर्मणो द्रव्यारम्भकसंयोगविरोधितदविरोधिनोर्विभागयोरुत्पत्तिः स्याद्, यथा कर्मणः कर्मत्वेन संयोगविभागजनकत्वात्सर्वस्मादेव कर्मणस्त-योरुत्पत्तिः। अत्राहुः। विभागस्य द्रव्यारम्भकसंयोगप्रतिद्वन्द्वित्वे यदवच्छेदेन संयोगोत्पत्तिस्तदवच्छेदेन विभागोत्पाद एव प्रयोजकः, तत्र च सहकारिविशेष एव तन्त्रम्।

न्यायलीलावतीप्रकाशविवृतिः

यद्यप्यनुपदोक्तपरमाणुद्व्यणुकविभागस्य विरोधिविभागजनकत्वं दृष्टमे-व, तथापि द्रव्यानारम्भकनिष्ठस्य संयोगस्य विरोधी यो विभाग-स्तस्य न विभागजनकत्वमिति नियमोऽत्र द्रष्टव्यः॥ केचित्तु परमा-णुद्व्यणुकविभागस्यापि परम्परया द्रव्यारम्भकसंयोगविरोधित्वमे-वेति आरम्भकसंयोगाविरोधिविभागस्येत्येव नियम इत्याहुः। तथा-सति दलाकाशविभागस्यापि तथात्वेन प्रकृतासङ्गतेः। अन्यथा सर्व-स्मादिति। तथाच कमलदलविभागेऽपि द्रव्यनाशः स्यादिति भावः। एवञ्च जातिसङ्करभयेन नोदनजन्यतावच्छेदकजातेरेव नानात्वमु-पेयमित्याभिसन्धिः। विभागस्येति। कर्मणः कर्मत्वेनैवोभयविभागं प्रति स्वरूपयोग्यत्वेऽपि आरम्भकसंयोगाद्यवच्छेदकावच्छिन्नविभागो-त्पादसहकारिवशात्तादृशविभागोत्पत्तौ द्रव्यनाशः, तच्च सहकारि दृष्टमदृष्टं वा, जातिविशेषस्तु विभागे उपलभ्यमानो नास्त्येवारम्भ-कसंयोगनाशलक्षणकार्यत्वमन्यथासिद्धमेवेति भावः। तथाप्यङ्गुल्या-काशेति मूलस्यम्। यद्यप्येवं दलावयवाकाशविभागादेव दलाकाशवि-भागोऽपि स्यादिति दलद्वयविभागजन्यत्वं तस्यासिद्धमेव। न च परमाणुद्वयविभागेन परमाण्वाकाशविभागस्वीकारादेव समीहित-सिद्धिरिति वाच्यम्। तथासति परमाणुद्वयसंयोगजपरमाण्वाका-शसंयोगस्यापि स्वीकारापत्तेः। तथापि यद्जनकेत्यादिन्यासावप्र-योजकत्वमेव दूषणमिति भावः।

भेदस्तन्त्वाकाशसंयोगो न स्यादिति। अस्तु तथाप्यङ्गुल्याकाश-संयोगाच्छरीरसंयोगवत् तन्त्ववयवसंयोगादेव तन्त्वाकाशसंयो-गोपपत्तेः। यत्पुनरुक्तमत्र कैश्चित्—एककर्महेतुत्वे विभागस्य द्रव्यविरोधित्वाविरोधित्वमनुपपन्नं कारणवैचित्र्ये कार्यवैचित्र्य-स्याकस्मिकत्वप्रसङ्गादिति(१)। तन्न। एकस्यैव कर्मणः संयोगवि-भागजनकत्वदर्शनात्। तथा कारणाकारणविभागजन्यविभागः यथाङ्गुलीतरुविभागात् पाणितरुविभागः।

नन्वत्र किं प्रमाणम्। विभक्तबुद्धिरिति चेन्न। तदसिद्धेः, अन्यथा कर्मापि किं नाङ्गुलीकर्मजं स्यादिति भूषणः। तदसङ्ग-

---

न्यायलीलावतीकण्ठाभरणम्

म्भकसंयोगविरोधिविभागजनकं वंशदलकर्म स्यात्तदा द्रव्यारम्भक-संयोगाविरोधिविभागजनकं न स्यादि(?) उपाधिरेवेति सिद्धः कारण-द्वयविभागपूर्वककारणाकारणविभाग इति भावः।

एवं सत्येकस्य कर्मणो द्रव्यजनकद्रव्याजनकसंयोगद्वयजन-कतापि न स्यादित्याह—नन्वेवमिति। अभ्युपगम्याह अस्त्विति। तर्हि तन्त्वाकाशसंयोगो न स्यादेवेत्याह तन्त्ववयवेति। अंशुसंयो-गादेव तन्त्वाकाशसंयोगसम्भवादित्यर्थः। ननु कर्मणि वैचित्र्यमन्त-रेण किञ्चित्कर्म विरोधिनं किञ्चिच्चाविरोधिनं विभागं जनयतीति नियमो न स्यादित्यवश्यं वैचित्र्यमभ्युपेयमित्याह—एककर्मेति। यथा वैचित्र्यमन्तरेणैव संयोगविभागलक्षणविरुद्धकार्यकारित्वं तथा प्र-कृतेऽपि स्यादित्याह एकस्यैवेति। कारणद्वयविभागजं कारणाकारण-विभागं प्रसाध्याभ्युपगमेन संयोगप्रतिबन्दिं निराकृत्य संप्रति कार-णाकारणविभागपूर्वकं कार्याकार्यविभागं साधयति तथेति।

तदसिद्धेरिति। अङ्गुलितरुविभागादयं हस्ततरुविभाग इति प्रत्य-यासिद्धेरित्यर्थः। कर्मापीति। अङ्गुलीकर्मणा हस्तकर्मेत्यपि स्यादि-

न्यायलीलावतीप्रकाशः

अन्यथेति। यदि विभक्तबुद्धिं विनापि विभागस्तदाऽङ्गुलिकर्मणा शरीरकर्मैव जन्यत इति किं न कल्प्यते तज्जनितविभागाच्छरीरतरु-

---

(१) कल्पापत्तेरिति मिश्रसंमतः पाठोऽत्र द्रष्टव्यः।

तम् । यथैकदेशसंयोगविभागाभ्यां देवदत्ते संयुक्तविभक्तबुद्धिः न तथा अङ्गुली(१)कर्मणा देवदत्तश्चलतीति मतिरिति युक्तिसम्भवात् । रथे चलति देवदत्तचलनाप्रतीतिवत् स्यादिति चेत् । न, रथेन गत इति प्रतीतेः सम्भवात्(२)। कर्मणश्च संयोगविभागजनकत्वावधारणनियमात्, सजातीयारम्भकत्वानुपलम्भाच्च । अवयवकर्मैव सर्वत्र विभागारम्भकमस्तु, अन्यथा अवयवसंयोगेऽप्यसंयोगिना विभागेऽप्यविभागिना युतासिद्धिप्रसङ्गात् । मैवम् ।

---

न्यायलीलावतीकण्ठाभरणम्

त्यर्थः । अङ्गुलीतरुविभागानन्तरं हस्ततरुविभागप्रत्ययस्तावत् सर्वसिद्धः स कारणविभागमेव स्वकारणमाक्षिपतीत्याह यथैकदेशेति । यथा संयोगविभागजनकत्वमुभयसिद्धं तथा कर्मजनकत्वं कर्मणो न कस्यचित्सिद्धमित्याह कर्मणश्चेति । अङ्गुलीकर्म शरीरपर्य्यन्तं विभागं जनयति विभागत्वं तस्य कुत इत्यत आह अवयवेति । असम्बसंयोगनाशोत्पत्तेरित्यर्थः ।

न्यायलीलावतीप्रकाशः

यत्प्रमाणगम्यं यत् तदभावस्तदभावं गमयतीति स्थिते सत्याह यथैकदेशेति । चलतीतिप्रतीतेश्च प्रत्यक्षाया अभावेऽपि तत्र कारणाव्यभिचारिकार्येण लिङ्गेनानुमानिकी साऽस्त्येवेत्याह कर्मणश्चेति । सजातीयेति । ननु यत्र नोदनेन कर्म जन्यते तत्र कर्मारम्भकं क्रियावद्द्रव्यसंयोगविशेषस्य नोदनत्वात् । मैवम् । तत्र कर्मणः कर्मासमवायिकारणत्वाभावात्, तस्यैव चात्र निषेध्यत्वात् । युतसिद्धीति । वल्मीकादौ तथा दर्शनादित्यर्थः । नन्वङ्गुलीकर्मैव शरीरतरुविभा-

न्यायलीलावतीप्रकाशविवृतिः ।

यत्प्रमाणगम्यमिति । यदेकप्रमाणगम्यमित्यर्थः । कारणाव्यभिचारिकार्येणेति । यद्यप्येवमङ्गुलीकर्मणोऽङ्गुलिसंयोगानुमाने शरीरसंयोगानुमानं, तथापि प्रत्यक्षस्थले व्याप्तिग्रहे अङ्गुलीसंयोगेनैव तदनुमानमिति भावः । ननु नोदनेति । विशिष्टस्य नुद्यकर्मजनकत्वे नोदनकर्मापि जनकम् कर्मवद्द्रव्यसंयोगरूपत्वान्नोदनस्येति भावः । नोदककर्मणोऽनुद्यकर्मनिमित्तत्वेऽपि न समवायित्वं तदेव चात्र निषेध्यमित्याह तत्र कर्मण इति ।

---

(१) विभक्तप्रत्ययस्तथा नाङ्गुलीति प्रा० पु० पाठः ।

(२) प्रतीतिनियमात् इति प्रा० पु० पाठः ।

न हि तत्संयोगित्वेऽप्यसंयोगित्वं युतसिद्धिः, अपि त्वसम्बद्धयोः सत्त्वम् । न च तन्नित्यसमवायपक्षे सम्भवति । न च कर्मैवारम्भकम् , व्यधिकरणत्वात् ॥ इति विभागः ॥

द्विपृथक्त्ववत् द्विपरत्वमपि किं न स्यादिति चेन्न । उभयवृत्तीनां गुणानां विजातीयपरस्परावधिसापेक्षव्यवहारगोचरत्व-

---

न्यायलीलावतीकण्ठाभरणम्

द्वयोर्द्वयोरपि विद्यमानत्वं युतसिद्धिरतः सावयवावयवि(?),(१)किञ्च व्यधिकरणमङ्गुलीकर्म कथं हस्तादिविभागं जनयेदित्याह नचेति ।

द्वौ पराविति प्रत्ययदर्शनादाह द्विपृथक्त्ववदिति। उभयवृत्तिगुणानामिति। इतरनिरू+पकानामुभयवृत्तीनां +गुणानामित्यर्थः। भवति हि घटेन संयुक्तः पटः पटेन विभक्तो घटो घटाच्च विभक्तः पट इति परस्परावधिको व्यवहारः, द्वित्वादिकं च प्रतियोगिनिरूप्यमेव न +भवतीति भा+वः। द्विपृथक्त्वे यद्यपि पृथक्त्वावच्छेदेन न परस्परावधिकत्वं, तथापि तद्विजातीयं यदेकपृथक्त्वं तद्घटितपरस्परावधिसापेक्षव्य-

न्यायलीलावतीप्रकाशः

गारम्भकं स्यादत आह न चेति। सामानाधिकरण्येनैव तयोः कार्यकारणभावादित्यर्थः ॥

द्विपृथक्त्ववदिति। द्वौ पृथगिति पृथक्त्वस्य द्वित्वेनान्यूनानतिरिक्तवृत्तितयाऽनुभवात् यथा द्विपृथक्त्वं व्यासज्यवृत्ति गुणन्तरं तथा द्वौ पराविन्यनुभवात् द्विपरत्वमङ्गीकार्यमित्यर्थः। उभयवृत्तीनामिति। उभयवृत्तीनां गुणानां स्वेतरविजातीयत्वं गुणत्वसाक्षाद्व्याप्यजात्या भवति यथा संयोगे। यद्यपि द्विपृथक्त्वंप्येकपृथक्त्वजातीयत्वमेव, तथापि तत्र परस्परापेक्षव्यवहारगोचरत्वमस्ति घटात् पटः पृथक् पटाच्च घटः पृथगिति प्रत्ययात्; तथाच यदि द्वित्वसमानाधिकरणेन पृथक्त्वेन द्वौ पृथगिति धीः स्यात् तदा घटात् पटाच्च घटपटौ

न्यायलीलावतीप्रकाशविवृतिः

दृष्टान्तबललभ्यां युक्तिमाह द्वौ पृथगिति। उभयवृत्तीनामितीति। यत्र स्वनिष्ठगुणत्वसाक्षाद्व्याप्यजात्या विजातीयमव्यासज्यवृत्ति गुणान्तरं तत्र व्यासज्यवृत्तेर्गुणस्य स्वीकारः यथा संयोगविभागयोः,

---

(१) मूलादर्शपुस्तकान्तिमपृष्ठद्वयैककोणभागस्यात्यन्तं शीर्णतया(?)पतच्चिह्नस्थलेषु सर्वत्र पाठः स्वयमेव विद्वद्भिर्यथासंगति संयोज्यः, पठनीय स्थलविशेषेऽस्माभिर्यथामति + एतच्चिह्नाङ्कितो योजितस्तस्य युक्तत्वं सुधीभिर्विभावनीयम् ।

नियमात् । अत्र च तद्व्यावृत्तौ द्विपरत्वव्यवहारस्य द्वित्वैकार्थसमवायनिबन्धनत्वात् । अस्तु वा तदपीत्यलं विस्तरेण ॥ इति परत्वापरत्वे ॥

---

न्यायलीलावतीकण्ठाभरणम्

वहारगोचरत्वम्, अत एव तत्र परत्वापरत्वव्यवहारो ननु परापराविति । समदेशस्थयोरपि नाऽन्योन्यावधिकत्वमत एव परत्वाभ्यामेव द्वित्वसमानाधिकरणाभ्यां द्वौ पराविति व्यवहारो द्वौ रूपवन्ताविति वदिति भावः। सूत्रे द्विपरत्वं(?) द्वमिति तदभ्युपगमेऽपि न सिद्धान्तक्षतिरित्याह अस्तुवेति ।

न्यायलीलावतीप्रकाशः

द्वौ पृथगित्यपि धीः स्यात्, अत्र त्वेकपरत्वाभ्यां द्वित्वसमानाधिकरणाभ्यामेव द्वौ पराविति प्रतीत्युपपत्तेरित्यातिरिक्तं गुणान्तरं न कल्प्यते, न हि समानदेशस्थयोः संयुक्तसंयोगे विशेषोऽस्ति, न च तद्व्यतिरेकेण भवतः, अपि च एतौ समानदेशस्थौ पराविति प्रतीत्या अतिरिक्तं द्विपरत्वं न सिद्ध्यति, तावेव हि परत्वावधित्वाश्रयौ भवतः याभ्यामन्तरावर्त्तिनि मध्यत्वं, न चात्र तथा समानदेश-

न्यायलीलावतीप्रकाशविवृतिः

यत्र वा सजातीयस्यैकैकवृत्तेः परस्पराश्रयावधिकव्यवहारजनकत्वं यथा द्विपृथक्त्वादेः, यत्र वा प्रतीत्यनुपपत्तिर्यथा द्वित्वादेः, प्रकृते त्वेकवृत्तिपरत्वस्यापि स्वीकाराच्च प्रथमं, समानदेशस्थयोः परस्परापेक्षपरत्वादसमानदेशस्थयोश्च तथा प्रतीत्यभावाच्च द्वितीयं, द्वित्वसामानाधिकरण्यमात्रेणैव प्रतीत्यनुपपत्तेश्च न तृतीयस्वीकारबीजमस्तीति वस्तुगतिः। एवञ्च प्रथमस्वीकारबीजप्रतिपादनार्थमुभयवृत्तिगुणानामित्यादि, तच्चात्र नास्त्येवेति भावः। तदभावेऽपि द्विपृथक्त्वं स्वीक्रियत एवेति शङ्कां द्विपृथक्त्वेपीत्यादिनोत्थाप्य द्वितीयबीजनिरासार्थं तथापीत्यादि, तृतीयबीजनिरासार्थमत्र त्वेकपरत्वाभ्यामित्यादीति । एवञ्च विजातीयपरत्वेन गुणत्वसाक्षाद्व्याप्यजात्यव्यासज्यवृत्तिविजातीयत्वेन परस्परावधिसापेक्षव्यवहारगोचरत्वेन वा एकवृत्तितज्जातीयगुणयोरुभयवृत्तीनां नियमात् । इदमुपलक्षणं प्रतीत्यनुरोधाच्च अत्र तु तदभावादिति मूलार्थ इति सर्वतात्पर्यम् । नहि समानदेशस्थयोरिति । तथाच संयुक्तसंयोगाविशेषाभावादेव नैकापेक्षयाऽपरत्वोत्पत्तिरिति न तथाप्रतीतिप्रसङ्गस्तत्रेति भावः । समानदेशपरत्वावध्याश्रयाविति । परत्वाश्रयोऽवधित्वाश्रयश्चेति भावः ।

बुद्धिर्न ज्ञाततागम्या । तदभावेऽपि शशविषाणादिविकल्पो-त्पत्तेः । सम्बन्धिद्वयसम्बन्धेषु प्रत्येकं सामान्यालम्बनामिति चेत् । न, तथासत्यवस्तुविषयतानुपपत्तेः । तथासति कथं घटस्य ज्ञानमिति चेन्न । ज्ञाततापि कथमिति तुल्यत्वात् । आधाराधेय-

---

न्यायलीलावतीकण्ठाभरणम्

इदानीं भट्टाभिमतां ज्ञाततां प्रतिक्षिपति बुद्धेरिति। शशविषाणादीत्य-तितानागतोपलक्षणम्, तत्राश्रयाभावे ज्ञातताधीनस्य(?) वाज्ञानानुमानं न स्यादित्यर्थः । नन्वतीतादिस्थले यत्र सम्बन्धिद्वयं नष्टं तत्र तत्स-भावेऽविद्यमान एव ज्ञातताधीनं, यद्वा यत्र ज्ञानं शब्दादेव कः(?) विद्यमाने घटादावतीतेऽपि घटत्वादिसामान्यावलम्बनैव ज्ञात-तेति शङ्कते सम्बन्धिद्वयेति । एवं सत्यन्यत्राहितया ज्ञाततयाऽन्यत्र ज्ञातव्यवहारो न स्यादिति परिहरति नेति । ननु यदि ज्ञातताख्यस-म्बन्धोऽयमस्य ज्ञानेन सह न स्यात्तदा घटस्य ज्ञानमिति कथं स्या-दित्याह तथासतीति। यथा ज्ञाततायाः स्वभाव एव सम्बन्धस्तथा ज्ञान-

न्यायलीलावतीप्रकाशः

स्थयोः परस्परापेक्षया संयुक्तसंयोगबहुत्वाभावेन परत्वानुत्पत्तेश्च ।

ज्ञानमतीन्द्रियत्वादसाधारणकार्यानुमेयमसाधारणं च कार्यं ज्ञा-तताख्यं विषयवृत्तीति मतं निराकरोति बुद्धिरिति । शशविषाणादीति-त्यादिशब्देनातीतादिविषयकसविकल्पकसङ्ग्रहः । शशविषाणादिवि-कल्पानामप्यनुभवोऽस्ति, न च तत्र तल्लिङ्गमिति किमनुमापकं स्या-दित्यर्थः । सम्बन्धीति । शशो विषाणं समवायश्चेति त्रयं भासते तच्च विद्यमानमेवेति तन्निष्ठं तल्लिङ्गमनुमापकमित्यर्थः । तथासतीति । वि-षयस्य सत्त्वात् बाधाभावे भ्रमत्वानुपपत्तेरित्यर्थः । ननु विषयाविष-यिभावान्यथानुपपत्त्या ज्ञानेन विषये धर्मः कश्चिदाधीयत इति कल्प्यत इत्याह तथासतीति । ज्ञाततायामसत्यामित्यर्थः । विषयाभा-वात्तत्रैव फलं नान्यत्रेत्यस्यापि नियमस्यानुपपत्तिरित्याह ज्ञाततापी-

न्यायलीलावतीप्रकाशविवृतिः

स्थयोः परस्परापेक्षयेति । पूर्वमेकापेक्षपरत्वमपरत्वं वा नोत्पद्यत इत्युक्तम-धुना तूभयापेक्षं परत्वं नोभयत्र येन तथाप्रत्ययप्रसङ्ग इत्युच्यत इति न पौनरुक्त्यम् ।

न च तत्र तल्लिङ्गमिति। समवायिकारणाभावेन ज्ञाततानुत्पत्तेरित्यर्थः।

भावादिति चेन्न। तस्यापि नियमानुपपत्तेः। स्वभावादिति चेत्, तुल्यम्। घटो ज्ञात इति चाक्षुषी प्रतीतिरनुपपन्नेति चेन्न। अयं रुष्ट-स्तुष्टो दुःखितो हृष्ट इतिवदुपपत्तेः। फलानाधारत्वे घटं जानामी-ति कर्मत्वानुपपत्तिरिति चेन्न। हानादिव्यवहारजननादेवोप-पत्तेः। तस्यैव कथं तदाधारत्वमिति चेन्न। अभावादेवोपपत्तेः। ज्ञायते च मानसप्रत्यक्षात्। जिज्ञासापेक्षमनोजन्यत्वे वर्तमाना-

---

न्यायलीलावतीकण्ठाभरणम्

स्यापीत्याह+तुल्यमिति। ज्ञाते घटे+ज्ञातताद्युपनीतभानमिति दृष्टान्तेन दर्शयति अयमिति। परसमवेतक्रियाफलशालित्वं कर्म्मत्वं करणव्यापार-विषयत्वं वा कर्म्मत्वं ज्ञानफलज्ञातताभावे+कथं स्यादित्याह+फलेति। हानोपादानादिकमेव फलमुच्यते तदधीनैव कर्म्मतेत्याह हानादीति। उपेक्षणीयेऽपि परम्परासम्बन्धः संस्कार एव फलं, तच्च तत्र नानु-पपन्नमतीतादौ (?)येति भावः। ननु लिङ्गाभावे कथं ज्ञायेतेत्याह ज्ञायते चेति। ननु संयुक्तसमवायेन मनसा ज्ञानग्रहे ज्ञानधाराऽ-निवृत्तिः, जिज्ञासापेक्षया च उभयाग्राह्यस्य नाशे जानामीति वर्त्त-

न्यायलीलावतीप्रकाशः

ति। उपकारस्यापि नियतविषयोत्पादो ज्ञानस्वभावादेवेति यदि तदा तत एव विषयतानियमोऽपीति शङ्कोत्तराभ्यामाह स्वभावादितीति। एतच्चावश्यं वाच्यम्, अन्यथाऽतीतादिविषयत्वानुपपत्तेस्तत्रोपकारा-धानस्याशक्यत्वात्। न च तत्रापि तद्धर्मसामान्याधारं किञ्चित्क-र्त्तव्यम् तेन तस्यैव विषयत्वप्राप्तेः। ननु ज्ञातो घट इत्यनुभवात् प्रत्य-क्षमेव तत्र मानामित्याह घटो ज्ञात इति। ज्ञानविशिष्टताप्रत्यय एवायं न तु तदतिरिक्तविषयः, अन्यथातिप्रसङ्ग इत्याह अयमिति। ननु ज्ञा-नादिक्रिया स्वकर्मणि फलजनिका क्रियात्वात् गमनवत्, अन्यथा घटादेः कर्मत्वं न स्यात् परसमवेतक्रियाफलशालिनः कर्मत्वादि-त्याह फलेति। व्यवहारोत्पत्तेः पूर्वं तस्यापि न नियामकत्वमित्याह तस्यैवेति। हानादिव्यवहारस्यैवेत्यर्थः। नाप्यतीन्द्रियं ज्ञानं येन तद्व्य-वहारानुपपत्त्या तत्कल्पनमित्याह ज्ञायते चेति। ननु यदि योग्यज्ञानं तदा संयुक्तसमवायेन मनःप्रत्यासत्त्या ज्ञानपरम्परैव ज्ञेया न तु विषयान्तरग्रहः स्यात्, ततो योग्यमपि जिज्ञासया ज्ञायत इति म-न्तव्यं, तथा च जिज्ञासाकाले ज्ञानस्यातीतत्वात् वर्त्तमानाभासता

ऽवभासानुपपत्तेः। तदनपेक्षत्वे त्वनवस्थेति चेत्। न, अनुव्यव-
सायप्रतीतिसामग्रीप्रतिबन्धकसुखादिविरहविशिष्टस्यैव ज्ञानमनः-
संनिकर्षस्य प्रतीतिहेतुत्वात्॥ इति बुद्धिः॥

संस्कारश्च वेगात्मा आपतनादेको न भवति, उत्तरसंयो-
गविरोधित्वात् कर्मवत्। न चैतदसिद्धम्, अन्यथाऽनाशप्र-
सङ्गात्। दूरसंयोगस्तद्धेतुरिति चेन्न। अन्तिकेऽपि घनसंयोगेन
नाशात्। सोऽपीति चेन्न। अनियतहेतुकतापत्तेः। संयोगभेद
इति चेत्। न, संयोगिजातिवैचित्र्ययोरनुपपत्तेः।

---

न्यायलीलावतीकण्ठाभरणम्

मानोल्लेखानुपपत्तेरिति शङ्कते जिज्ञासेति। अनुव्यवसायप्रतीतिरि-
त्यत्र षष्ठीसमासेन कर्मधारयेण वा(१)। सुखादिविरहेति। तीव्रसंवे-
गिसुखदुःखाद्यभावविशिष्टस्तत्सामग्र्यभावविशिष्टो वा मनःसन्नि-
कर्षो वा हेतुरित्यर्थः।

इष्वादिकर्मणा जनितो वेगः पतनपर्यन्तमेक एवानुगत इति
मतमास्कन्दति संस्कार इति। न चैतदिति। उत्तरसंयोगनाश्यत्वमित्यर्थः।
सोऽपीति। बन्दिरेव घनसंयोगो दूरसंयोगो(?) नुगमः स्यादित्यर्थः।
संयोगभेदकृतः संयोगद्वाराजातिभेदकृतो वा न संयोगभेदोऽस्ति सं-
स्कारनाशकोऽनुगत इत्याह संयोगीति।

न्यायलीलावतीप्रकाशः

ज्ञानस्य न स्यादित्याह जिज्ञासेति। वस्तुतो ज्ञानस्य जिज्ञासापेक्षाया-
मप्यनवस्थैव, जिज्ञासा हि धर्मिज्ञानपूर्विका तज्ज्ञानमपि जिज्ञासा-
जन्यं सापि ज्ञानजन्यैव। अनुव्यवसायेति। तीव्रसंवेगिमनोग्राह्यगुणा-
न्तराभावो ज्ञानग्रहणकारणमित्यर्थः।

इष्वादावुत्तरसंयोगेनाद्यकर्मनाशे तज्जनितो वेग आपतनमेक
एवोत्तरोत्तरकर्मजनक इति मतमाक्षिपति संस्कारश्चेति। अन्यथेति। य-
द्युत्तरसंयोगनाश्यो न वेगः स्यात् तदा तन्नाशकान्तराभावात् तेन
कर्मपरम्परा जन्येतेत्यर्थः। संयोगीति। संयोगविशेषो न संयोगिकृतो
न वा जातिकृत इत्यर्थः।

न्यायलीलावतीप्रकाशविवृतिः

तीव्रसंवेगीति। फलबलेन सुखादिग्रहसामग्र्या ज्ञानग्रहप्रतिबन्धक-

---

(१) मास्त्विति शेषः।

मैवम्। अबाधितप्रत्यभिज्ञानसिद्धत्वात्, नाशस्य चोभयहेतुकत्वात् आश्रयविरोधिनाशोत्पादहेतुकगुणनाशवत्। न च कर्मणि तथात्वम्, दूरादूरघनाघनोत्तरसंयोगमात्रेण कर्मणो नाशदर्शनात्। न च वेगस्यैकत्वे कर्मसन्तत्यनुपरमः, वेगसन्तानो-

न्यायलीलावतीकण्ठाभरणम्

अबाधितेति। +वेगस्तावत् शरे +प्रथममुत्पन्नस्तेनैव गच्छति शर इत्यबाधितप्रत्यभिज्ञानबलादेक एव तत्र वेगश्च, किञ्च भावनाख्यसंस्कारत्वेन स्थिरत्वानुमानं मन्दतरस मादिव्यवहारस्तु वेगजनककर्मजननिबन्धनः। उभयहेतुकत्वादिति। (स्वस्तिक)घनसंयोगदूरसंयोगहेतुकत्वमित्यर्थः। ननु तथाप्यनियतहेतुकत्वं न समाहितमतो दृष्टान्तमाह आश्रयेति। यथा(?) नोत्पादः गुणनाशकोऽनुगत एव तथा प्रकृतेऽपीत्यर्थः। ननु कर्मापि स्थिरमस्तु कचिद्घनसंयोगः कचिच्च दूरसंयोगोऽनुगत एव तन्नाशकः कल्प्यतामित्यत आह नचेति। कर्मण +उत्तरसंयोगमानाश्यत्वा+न्नैवं एव कल्पनेत्यर्थः। ननु यदि यावदिषुपतनमेक एव वेगोऽभ्युपेयस्तदा पातो न स्यादेव वेगेनोत्तरोत्तरकर्मसन्तानजननसम्भवादित्यत आह नचेति।

न्यायलीलावतिप्रकाशः

अबाधितेति। कार्यसन्तानस्यैकेनैव वेगेनोपपत्तेरनेकत्वेमानाभावाद्वेगत्वव्याप्य(१)जातित्वेन स्थिरवृत्तित्वानुमाना च्चेत्यपि द्रष्टव्यम्। न च प्रत्यभिज्ञानबलात्कर्मणोऽप्यैक्यं सिद्ध्येदिति वाच्यम्। कर्मण एकत्वेन विभागजननेऽनपेक्षतया स्वोत्पत्त्यनन्तरमेव यावदुत्तरदेशविभागोत्पत्त्यापत्तेः। उभयेति। दूरसंयोगो घनसंयोगश्चेत्युभयम्। वेगसन्तानेति। ननु कर्मैव कर्म जनयतु किं वेगेन, नच कर्मसन्तानानुपरमः यथा कश्चिदेव वेगः कर्मजनको न चरमस्तथा कर्मापि किञ्चिदेव कर्मजनकं नान्त्यमित्युपगमात्। अत्राहुः। उत्तर-

न्यायलीलावतीप्रकाशविवृतिः

त्वमिति भावः॥

संस्कारत्वव्याप्येति। विनश्यदवस्थद्रव्योत्पन्नवेगत्वे व्यभिचार इति जातिपदम्। कर्मण एकत्वेनेति। इदमापाततो, वस्तुतो वेगस्य उत्तरसंयोगमात्रनाश्यत्वे उत्तरकर्मोत्पत्तिर्न स्यादसमवायिकारणस्य कार्यसमानकालतानियमादिति द्रष्टव्यम्। यथा कश्चिदेव वेग

(१) संस्कारव्याप्येति विवृतिकृदभिमतः पाठः।

परमवदुपपत्तेः॥ इति संस्कारः॥

इति श्रीमदाचार्यवल्लभकृता न्यायलीलावती समाप्ता॥

---

न्यायलीलावतीकण्ठाभरणम्

+यथा भवन्मते वेगसन्तानोपरम+स्तथाऽस्मन्मते कर्मसन्तानोपरमसम्भवात्, वेगप्रत्यभिज्ञा त्वस्मन्मतेऽधिकेति भावः।

इदमिह लीलावत्यामत्यासङ्गेन विदितभावायाम्।
श्रीशङ्करेण रचितं क+ण्ठाभरणं विराजतां लोके+ ॥(१)

स्वभ्रातुर्जीवनाथस्य व्याख्यामाख्यातवान् यतः।
मत्पिता भवनाथो यान्तामिहालिखमुत्तमाम्।
पित्रा यद् भवनाथेन व्याख्यातं तदिहालिखम्॥
व्याख्यानगुणदे (१)

इतिमहामहोपाध्यायश्रीभवनाथात्मजमहामहोपाध्याय-
श्रीशङ्कररचितं लीलावतीकण्ठाभरणं समाप्तम्॥

न्यायलीलावतीप्रकाशः

कर्म न कर्मजन्यं कर्मत्वात् आद्यकर्मवत्। नचैवमुत्तरकर्म न वेगजन्यं कर्मत्वात् आद्यकर्मवदित्यपि स्यात्, वेगग्राहकमानबाधितत्वात्, सोपपत्तिकस्य वेगेन गच्छतीतिप्रत्यक्षस्यानुपपत्तेः प्रतिकूलतर्कपराहतत्वाच्चेति॥

यस्तर्कतन्त्रशतपत्रसहस्ररश्मिर्गङ्गेश्वरः सुकविकैरवकाननेन्दुः॥
तस्यात्मजोऽतिगहनं कणभक्षशास्त्रं प्राकाशयत्कृतिमुदे बुधवर्धमानः

इति श्रीमहामहोपाध्यायगङ्गेश्वरसुतश्रीमन्महामहोपाध्याय-
श्रीवर्द्धमानकृतलीलावतीप्रकाशः समाप्तिमगात्॥

न्यायलीलावतीप्रकाशविवृतिः

इति। इदं च वेगनानात्वाभ्युपगमेन। उत्तरकर्मेति। यद्यपीदमप्रयोजकं, तथापि नानापुरुषसाधारणैकवृत्तिसजातीयधर्ममात्रस्य प्रतिबन्धकत्वकल्पनात् कर्मणोऽपि कर्मप्रतिबन्धकतया तदसमवायिकारणत्वमिति भावः। वेगेति। कर्मजनकत्वेनैव ततसिद्धेरिति भावः। सोपपत्तिकस्येति। वेगेन गच्छतीति प्रत्यक्षेण वेगैक्यसिद्धेः, कर्मणश्चानेकत्वेन तस्यासमवायिकारणत्वे गौरवपराघाताश्चेति भावः॥

इति महामहोपाध्यायशङ्करभगीरथविरचिता लीलावती-
प्रकाशिका समाप्ता॥

# शुद्धिपत्रम् ।

| अशुद्धिः | शुद्धिः | पृ. | पं. |
|---|---|---|---|
| पुत्रः प्री | पुत्रप्री | १ | ३ |
| पष्ठ्य | षष्ठ्य | ,, | १० |
| षवेत्वं | षेवत्वं | २ | ३१ |
| स्तत् | स्तम् | ५ | १२ |
| न्यदिलक्षण | न्यादिलक्षण | ८ | १ |
| तिभावः | दितिभावः | ,, | ११ |
| तजज्ञानं | तज्ज्ञानं | ,, | ३१ |
| घत्वनेति | घत्वेनेति | १८ | १३ |
| भावदिति | भावत्वदिति | १९ | ११ |
| नीलत्वात्र | नीलरूपवत्त्वात्र | २० | १६ |
| षट्पदार्थाः । विधर्मे | षट्पदार्थविधर्मे | २१ | १ |
| स्तु वैशिष्ठ्ये | स्तु वैशिष्ट्यवैशिष्ट्ये | २४ | २० |
| पुरूप | पुरुष | २५ | २० |
| व्यङ्गत्वात् | व्यङ्ग्यत्वात् | २८ | ८ |
| त्व सिद्धा | त्वे सिद्धा | ,, | ,, |
| तद्ज्ञानं | तज्ज्ञानं | ,, | २० |
| तद्ज्ञाने | तज्ज्ञाने | ,, | ,, |
| सादृयं | सादृश्यं | २५ | ८ |
| षडभवा | षडभाव | ३० | १९ |
| बुद्युत्पत्तौ | बुद्ध्युत्पत्तौ | ३२ | १० |
| पञ्चकं | पञ्चकं | ,, | १६ |
| द्यन्योन्यो | द्यन्योन्या | ,, | २७ |
| नत्वेवं | नन्वेवं | ३५ | २७ |
| विनिमग | विनिगम | ३६ | २३ |
| नीलरूवत्त्व | नीलरूपवत्त्व | ३७ | ६ |
| अनेनदि | अनेन हि | ४० | २४ |
| विनात्यन्योन्या | विनेत्यन्योन्या | ४४ | १६ |
| नन्वेवं | नन्वेवं | ४८ | २८ |
| सम्बन्धवदिति | तत्सम्बन्धेति | ४९ | २ |
| कांशेना | कारिकांशेना | ,, | ९ |
| वैकल्पा | वैकल्या | ५२ | ४ |
| संयाग | संयोग | ,, | ११ |

| अशुद्धिः | शुद्धिः | पृ. | पं. |
|---|---|---|---|
| सामाग्रथ | सामग्रथ | ६६ | ८ |
| नवस्था | मानवस्था | ,, | ९ |
| स्यन्दा | स्प·दा | ६९ | १५ |
| विराधि | विरोधि | ६४ | ५ |
| न्धे नैर | न्घनैर | ६९ | २५ |
| भावस्या | अभावस्या | ७७ | १२ |
| बर्हिभाव | बहिर्भाव | ७८ | ८ |
| भावेन षडेव | भाव न षडेव | ९४ | ४ |
| द्रव्यानीति | द्रव्याणीति | १०७ | ८ |
| रीक्षकानां | रीक्षकाणां | ,, | १२ |
| तत्मात्र | तन्मात्र | १०८ | १५ |
| स्यबेति | स्यैवेति | ,, | ३० |
| मण्यादो | मण्यादौ | ११३ | १३ |
| तेनैविरुध्य | तेनैविरुध्य | ११८ | १९ |
| स्यस्येर्थः | स्येस्यर्थः | १२६ | २३ |
| च्छेन | वच्छेदेन | ,, | २७ |
| पदेनेव | पदेनैव | १३५ | २६ |
| लस्यते | लभ्येत | १३७ | ६ |
| च स्फटिकादा | च न स्फटिकादा | १३८ | ११ |
| नस्युमगमे | नभ्युपगमे | १४३ | ९ |
| स्त्रावयवानां | स्त्रावयवानां | ,, | १८ |
| धांपते | धीयते | १५४ | १३ |
| किं चेति | किं चेति | १६६ | १६ |
| माप | मपि | १६८ | २ |
| नादभूत | नोद्भूत | ,, | ३ |
| तत्याद्य | सेत्याद्य | ,, | २५ |
| तेन ह्यणु | तेन न ह्यणु | ,, | २८ |
| न्द्रियं | न्द्रियं | १६३ | ९ |
| परास्त्वितिभवा | परत्वाभिभवा | १७७ | १७ |
| तुलबन | तुलषण | १७८ | ८ |
| वैधर्म्मा | वैधर्म्या | १९२ | २३ |
| दपादयति | पपादयति | २१२ | १० |

| अशुद्धिः | शुद्धिः | पृ. | पं. |
|---|---|---|---|
| वायुत्वादि | वायुवादि | २०३ | १५ |
| विनिगक्कं | विनिगमकं | २०६ | २२ |
| क्षीव्याप्तिः | ष्माव्याप्तिः | २०८ | २८ |
| मनस्त्वादि | मनस्त्ववादि | २११ | १४ |
| यद्रव्ये | यद्द्रव्ये | २१२ | २५ |
| सिद्धर्थे | सिद्ध्यर्थे | ,, | २६ |
| भूमी | भूमि | २१३ | २६ |
| नत्वाग | नन्वाग | २१४ | १६ |
| च्छेदीति | च्छेदिति | २२३ | १९ |
| ब्राह्मणोपि | ब्राह्मणोऽपि | २२७ | १० |
| साधनेमे | साधनमे | २२६ | २१ |
| रो द्रव्या | रो न द्रव्या | २३८ | २१ |
| वीश्वाधी | वीश्वराधी | २३९ | ४ |
| योगोपपास्थि | योगोपस्थि | २४० | ६ |
| पक्षाता | पक्षता | ,, | ११ |
| कालीश | कालीनश | ,, | १५ |
| याम्तु | यान्तु | ,, | २६ |
| तरमभावः | तरतमभावः | २६२ | ७ |
| ह्यणुकव्य | ह्यणुकस्य | २६३ | १२ |
| यत्सिद्ध | तत्सिद्ध | २७९ | १९ |
| पलणं | पलक्षणं | २८१ | ११ |
| स्पन्दः | स्पन्दाः | २८३ | १४ |
| सुमाधिः | सुपाधिः | २९० | २ |
| धर्म्मणा | धर्माणा | २९२ | ७ |
| तद्धोदति | तद्धादिति | ३०१ | १२ |
| मवच्छेद | मवच्छेद | ३०८ | १२ |
| मागत्योक्तम् | मगत्योक्तम् | ३१० | २५ |
| द्रव्यानि | द्रव्याणि | ३१३ | ९ |
| ,, | ,, | ,, | ११ |
| स्पर्शत्व | स्पर्शवत्त्व | ३२८ | १९ |
| येन | तेन | ,, | २५ |
| भेदसि | भेदासि | ३२० | १३ |

| अशुद्धिः | शुद्धिः | पृ. | पं. |
|---|---|---|---|
| त्वं स्यात् | त्वं न स्यात् | ३३१ | ७ |
| कारण | करण | ३३४ | २२ |
| व्यदृष्ट | व्यदृष्ट | ३३८ | २४ |
| त्मनःसंयो | त्ममनःसंयो | ३३९ | ८ |
| ह्याजज्ञा | ह्याज्ञा | ३४० | ९ |
| नैष इत्याह | नैषदोष इत्याह | ३४८ | १३ |
| स्यात् | स्यात | ३४९ | १ |
| वैशेषि कारणां | वैशेषिकाणां | ३५० | ९ |
| तमांत | तमंति | ३५२ | १२ |
| महद्य | महद्य | ३५९ | १३ |
| गोचरबहुत्व | गोचरं बहुत्व | ३६४ | १ |
| एव तावन्ति | एव न तावन्ति | ३७५ | ८ |
| समन्धा | सम्बन्धा | ,, | ११ |
| सन्बन्ध | सम्बन्ध | ,, | १६ |
| पेक्ष | क्षेप | ४०९ | ८ |
| कोह्युप | कोट्युप | ४२१ | ३ |
| तिपिद्धम | तिषिद्धम् | ४६२ | २१ |
| ह्यभेदपक्षे | ह्याभेदपक्षे | ४६६ | १४ |
| आकाशमु | आकशमु | ४७८ | १३ |
| माण्व चा | माणु चा | ,, | १८ |
| सानव्या | साधनव्या | ४७९ | ३ |
| रेतदूव्याप | रेतद्व्याप | ५०२ | १२ |
| प्रसङ्गत्या | प्रसङ्गासङ्गत्या | ५१३ | २८ |
| ननु | नतु | ५१६ | ८ |
| शङ्कोनि | शङ्कानि | ५१७ | ८ |
| त्यनास्था | त्यनवस्था | ५१८ | ८ |
| यावत्त्वं | यावत्त्व | ५२२ | ५ |
| पमानास्या | पमानस्या | ५३३ | १९ |
| घटनास्तिता | पटनास्तिता | ५६० | ५ |
| पटनास्तिता | घटनास्तिता | ,, | १० |
| विशेष्यस्य | विशेषस्य | ८०६ | १ |
| माश्रयं नि | माश्रयन्नि | ८२७ | ८ |